# श्रीमद्भगवद्गीता ।

आनन्दगिरिकृत टीकासहिता

शाङ्करभाष्यसंवलिता

श्रीधरस्वामिकृत-सुबोधिनी-सहिता च

एवं तदनुसारतः

कान्यकुब्ज श्रीयुक्त पण्डित-जगन्नाथ शुक्ल-विरचित

मनभावनी नाम भाषाटीकाविभूषिता ।

उक्त-श्रीजगन्नाथ-पण्डितैरेव मुद्रयितुमारब्धा ।

तृतीयसंस्करणम् ।

कलकत्ता

आमापुकुर गली २० नम्बर श्रीनवमोहन मुखोपाध्याय के

सरस्वती यन्त्र में छपी ।

## विज्ञापन ।

चार करके देखो कि इस असार संसार मे वेद शास्त्र पुराण इतिहास का सारांशरूप तथा अज्ञान अन्धकार का नाशक अति प्रचण्ड तरुण तर मार्त्तण्ड के समान यह गीताशास्त्र ज्ञानाञ्जन का अनूढ़ा अञ्जनूढ़ा जिस को समर भूमि मे बन्धुबान्धव बधहेतु से अति-व्याकुल अर्जुन के प्रति भगवान् श्रीकृष्णचन्द्रने उपदेश किया था उसी को श्रीनारायण का अवतार श्रीवेदव्यासजी ने महाभारत के भीष्मपर्व मे प्रकाश किया है और उस पर स्वामी श्रीशङ्कराचार्य्यने भाष्य करके तात्पर्य्य खोला फिर भाष्यका भावार्थ आनन्दगिरि ने भी टीकाकर प्रगट किया और श्रीधरस्वामी ने भी गीतापर तिलक किया है परन्तु ये सब तिलक संस्कृत भाषा मे है इस कारण पण्डित जनों को छोड साधारण मनुष्यों के मन मे गीता का तात्पर्य्य अति कम आवता है इस हेतु कान्यकुब्ज ब्राह्मण पण्डित श्रीजगन्नाथ शुक्लने भाष्य औ सब टीकावों का तात्पर्य्य अर्थ तथा साराश लेकर भाषा टीका यथा मति बनाय कर नाम उस का मनभावनी प्रसिद्ध किया है ।

श्रीयुत् बाबू रामचन्द्र गोंद का के धर्मार्थ परामर्श औ उत्साह देने से श्रीयुत् बाबू जुगलकिशोर विलासी राम के उत्साह औ सहायता करने से उक्त पण्डित जगन्नाथ शुक्ल ने संवत् १८४१ मे तीसरीबार छपवाया है जिन महात्मा जनों का इस गीताशास्त्र के लेने की इच्छा होय उन को उक्त बाबू जनों के पास से मिलेगा ठेकाना कलकत्ता बड़ीबजार इति ।

गीता सुगीता कर्त्तव्या किमन्यै. शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्मा द्विनि सृता ॥ १ ॥

अति पावनि है अनपावन की नितहोनित गावन मे मन दीजे ।
तजि दावन पाप परावन जो त्रयताप नशावन ह्वं जिय लीजे ॥
भवरोग दुरावनि ज्ञान बढ़ावनि मुक्ति उपावनि प्रतिदिन पीजे ।
कामिन कैं मन भामिनि ज्यों मनभावनि त्यों मनभावनि कीजे ॥१॥

राधा राधारमण की कीरति की रति जाहि ।
सो देखै मनभावनी तिलक तिलककरि ताहि ॥ २ ॥

# श्रीमद्भगवद्गीता ।

## शाङ्करभाष्यस्य उपक्रमणिका ।

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ १ ॥

आनन्दगिरिकृतटीका ।

श्रियमयि विशिष्टार्थां कृपापीयूषवर्षिणीम् । हेरम्ब देहि प्रत्यूहव्यूहमिवारिणीम् ॥१॥
यच्छ्रीपदपङ्केरुहसम्प्रसूतं निःश्रेयसं विश्वविभागनिष्ठम् ।
साध्येतराभ्यां परिनिष्ठितान्तं तं वासुदेवं सततं नतोऽस्मि ॥ २ ॥
प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः । क्रियते शिष्यशिक्षायै गीताभाष्यविवेचनम् ॥ ३ ॥

कर्मनिष्ठाज्ञाननिष्ठे उपायोपेयभूते निष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान् भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गलाचरणं सम्पादयन् अशेषेतिहासपुराणयोः प्रख्यापितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति नारा-

### भाषा अनुवाद ।

इस संसार में यह सब किसी के इच्छा रहती है कि दुख दूरहोय औ निरन्तर सुख मिलै परन्तु उस को कोई उपाय विना जाने बहुतेरे लोग अनेक अनेक यतनकरि वेदपुराण निहारि हारि वैठे और अपने मनोरथ को न पहुंचे तब परमदयालु भगवान वासुदेव श्रीकृष्णजीने उस को एक अतिउत्तम उपायरूप गीताशास्त्र अर्जुनको उपदेश किया कि जिस मे ज्ञाननिष्ठा और ज्ञाननिष्ठा का कारण रूप जो कर्मनिष्ठा अर्थात् कर्म के द्वारा ज्ञान की प्राप्ति होती है यही दोनो निष्ठा मे प्रवृत्त कहे कहताहुआ जो गीताशास्त्र तिस का तात्पर्य्य कहने के लिये भगवान भाष्यकार शङ्कराचार्य्य सकल इतिहास पुराणों के साथ गीता की एक-

## आनन्दगिरिकृतटीका ।

अथ इति आपो नारा इति प्रोक्ता आपो वै नरसूनवः अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति स्मृतिसिद्धः स्थूलदृशां । नारायणशब्दार्थः सूक्ष्मदर्शिनः पुनराचक्षते नरशब्देन चराचरात्मकं शरीरजातमुच्यते तत्र नित्यसन्निहिताः चिदाभासा जीवा नरा इति निरुच्यते तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति यसन्निहितत्वान्त-र्यामि ब्रह्माणं श्रीनारायणाख्यमतान्नारायणश्चाभिधीयते तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति ननु परस्यात्मनो मायासम्बन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं च वक्तव्यं अन्यथा कूटस्थासङ्गाविषयाद्वितीयस्य तदयोगात् तथा च शुद्धतासिद्धौ कथं यथोक्तापरदेवता शास्त्रादावनुस्मर्यते शुद्धस्य हि तत्त्वस्यानुस्मरणमभीष्टफलवदभीष्टं तत्राह परोऽव्यक्तादिति अव्यक्तमव्याकृतं मायेत्यर्थान्तरं तस्मात् परो व्यतिरिक्तः तेनासंस्पृष्टोऽयमपरः अक्षरात् परतः परः इति श्रुतेः गृहीतः तत्त्वतो मायासम्बन्धाभावेऽपि कल्पनया तदीय-सङ्गतिमङ्गीकृत्यान्तर्यामीत्यादिकमुन्नेयम् यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तथाव्यक्त-साक्षिसिद्धेऽपि कार्यलिङ्गकमनुमानमुपन्यस्यति अण्डमिति अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिधीयते तदव्यक्तात् पूर्वोक्तादुत्पद्यते प्रसिद्धादिश्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिस्तथा च कार्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थः हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्यलिङ्गकमनुमानमस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति अण्डस्येति उक्तस्याण्डस्य हिरण्यगर्भाभिधानीयस्यान्तरिमे भूरादयो लोका विराडात्मका-वर्त्तन्ते कार्यं हि कारणस्यान्तर्भवति तेन हिरण्यगर्भान्तर्भूता भूरादयो लोका विराडा-त्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थः लोकानेव पञ्चीकृतपञ्चमहाभूता-त्मकविराडात्मत्वेन व्युत्पादयति सप्तद्वीपेति सा पृथिवी अभवदिति श्रुतौ विराजो जन्मसङ्कीर्त्तितमित्यङ्गीकारादशेषद्वीपोपेता पृथिवीत्यनेन सर्वलोकात्मको विराडेवोच्यते चशब्देन विराजो हि हिरण्यगर्भे पूर्वोक्ताण्डात्मन्यन्तर्भावस्ततः सम्भवोऽनुकृष्यते पर-मात्मा हि स्वज्ञानद्वारा जगदशेषमुत्पाद्य स्वात्मन्येवान्तर्भाव्याखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः अत्र च नारायणशब्देनाभिधेयमुक्तं नर एव नारा जीवास्त-स्मदयाच्याः तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म तथा च कल्पितस्याधिष्ठानातिरिक्त स्वरूपाभावाद्वाच्यस्य कल्पितत्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वात् ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते तेनार्थाद्विषयविषयिभावः सम्बन्धोऽपि ध्वनितः परोऽव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षोऽपि विवक्षितस्तेन च तत्कामस्याधि-कारो द्योतितः परिशिष्टेन तुशब्देन वस्तुनो वास्तवमद्वितीयत्वमावेदितं तेन च वस्तुद्वारा-परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्मनिष्ठायाश्चावान्तरविषयत्वमित्यर्थादुक्तमित्य-वधेयम् ।

## शाङ्करभाष्यस्य उपक्रमणिका।

स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तं ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास।

### आनन्दगिरिकृतटीका।

ननु नैवं साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते ब्रह्मणाभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन सध्वमं पृथासुतं प्रथितमहिमानं प्रेरयितुं धर्मयोरिहानुद्यमानत्वादतो नास्य शास्त्रस्य निष्ठाद्वयं परापरविषयभावमनुभवितुमलमिति तत्र भगवतो धर्मसंस्थापनस्वाभाव्यप्रौव्याद्धर्मद्वयस्थापनार्थमेव प्रादुर्भावाभ्युपगमाद्भूभारस्य चार्थिकत्वादर्जुनं निमित्तीकृत्याधिकारिणं स्वधर्मप्रवर्त्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति स भगवानित्यादिना धर्मद्वयमर्जुनायोपदिदेशेत्यन्तेन भाष्येण तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्द्धारणात्तथाविधशास्त्राकरवदित्याशङ्क्य मङ्गलाचरणस्योद्देश्यं दर्शयन्नादौ शास्त्रप्रणेतुराप्तनिर्द्धारणार्थं सर्वज्ञत्वादि प्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह स भगवानिति प्रकृतो नारायणाख्योदेवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितो न च तस्यानाप्तत्वमीश्वरानुगृहीतानामाप्तत्वसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं

### भाषा अनुवाद।

वाक्यता अर्थात् कहीं किसी से बिरोध नहीं है यह जनाते हुए ग्रन्थके आरम्भ मे अन्तर्यामी परमेश्वर का प्रतिपादक कहे कहनेवाला एक पुराण का श्लोक मङ्गलाचरण किया है।

उस का अर्थ यह है कि जो अव्यक्त नाम माया जगत् की प्रकृति तिस से स्थावर जङ्गम की शरीर समूह मे अधिष्ठित कहे टिके हुए जो सकल जीव तिन के आश्रयभूत अन्तर्यामी नारायण हैं और उसी माया से अण्डाकार यह ब्रह्माण्ड प्रगट भया है कि जिस ब्रह्माण्ड के भीतर सकल लोक और सातद्वीप समुद्रसमेत यह वसुन्धरा पृथिवी धरीभई है॥ १॥

सोई नारायणने जगत को सिर्जनकरि इस सृष्टि के पालन करने के लिये मरीचि अत्रि आदि दश प्रजापतियों को पहले उत्पन्न किया और

## शाङ्करभाष्यस्य उपक्रमणिका ।

द्विविधो हि वेदोक्तोधर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च तत्रैको जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदय निःश्रेयसहेतुर्यः स धर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिः श्रेयोऽर्थिभिरनुष्ठीयमानो दीर्घेण कालेन अनुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्द्धमाने चाधर्मे जगतः स्थितिं परिपालयिषुः स आदिकर्त्ता नारायणाख्यो विष्णुर्भौमस्य ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः तदधीनत्वाद्वर्णाश्रमभेदानाम् ।

### आनन्दगिरिकृतटीका ।

जगच्च व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावान्नच परस्यैवेश्वरस्य व्यवस्थापकत्व-वैषम्यादिप्रसङ्गात् तत्राह तस्य चेति सृष्टस्य जगतो मर्य्यादाविरहितत्वशङ्किते तदीयां व्यवस्थां कर्त्तुमिच्छन् व्यवस्थापकमालोच्य वक्ष्यमाणलक्षणस्यापि च तत्वेन प्रसिद्धं धर्मं तथाविधधर्म-मधिगम्य सृष्टवानित्यर्थः सृष्टस्य धर्मस्य साध्यत्वभावतया साधयितारमन्तरेणासम्भवात् तस्यैव तदनुष्ठातृत्वानभ्युपगमात् प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात् कुतस्तदीया सृष्टिरित्याशङ्क्याह मरीच्यादीनिति तेषां भगवता सृष्टानां प्रजासृष्टिहेतूनां यागदानादि-प्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमुपपन्नमित्यर्थः चैत्यवन्दनादिभ्यो विशेषार्थं धर्मं विशिनष्टि वेदोक्तमिति ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रतिनियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात् तत्राह ततोऽन्यांश्चेति निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह ज्ञानेति विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो विवेकादि तस्य गमकमित्यर्थः ।

### भाषा अनुवाद ।

उन को वेदविहित प्रवृत्तिलक्षण धर्म की शिक्षा दिया फेर सनकादिकों को उपजाय उन को ज्ञानवैराग्यरूप निवृत्तिलक्षण धर्मका उपदेश किया ।

सोई वैदिक कहे वेदविहित धर्म दो प्रकारका है पहला जगत की स्थिति करनेवाला जिस को प्रवृत्तिलक्षण कहते हैं दूसरा मुक्तिका देनेहार निवृत्तिलक्षण है जिस को ब्राह्मण आदि चारोवरण औ चारो आश्रमी अपने कल्याण के अर्थ अनुष्ठान अर्थात् धारण करते हैं ।

## शाङ्करभाष्यस्य उपक्रमणिका ।

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिवजात इव लोकानुग्रहं

### आनन्दगिरिकृतटीका ।

धर्मं बहुविदां विवाददर्शनाज्जगतः स्थेम्ने कारणीभूतधर्मान्तरमपि द्रष्टव्यमस्तीत्याशङ्क्याह द्विविधोहीति अतिप्रसङ्गाप्रसङ्गव्यावृत्तये प्रकृतं धर्मं लक्षयति प्राणिनामिति प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुः निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुर्निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वं ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तं यद्येवं धर्मो लक्ष्यते तर्हि वर्णित्वमाश्रमित्वञ्चोपेक्ष्य सर्वैरेव पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयाविव्यनुष्ठाननियमासिद्धिरित्याशङ्क्याह ब्राह्मणाद्यैरिति अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्य्यालोचनयानुष्ठानात् नियमसिद्धिरित्यर्थः नित्यनैमित्तिकेषु जावज्जीवमनुष्ठानं काम्येषु कारणांशे रागाधीनाप्रवृत्तिरिति कर्त्तव्यतांशे वैधीतिविभागेऽपि कदाचिदेवानुष्ठानमितिविभागमभिप्रेत्याह दीर्घेणेति अथ यथोक्तं धर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्यादिकर्तुरनेकार्थकलुषितशरीरपरिग्रहासम्भवादन्यस्यैव कस्यचिदनाप्तस्य वैषम्यनैर्घृण्यवतो विग्रहपरिग्रहद्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याप्तप्रणीतत्वं तत्राह अनुष्ठातॄणामिति अथवा यथोक्तं शङ्कायां दीर्घेणेत्यारभ्योत्तरं महता कालेन कृतत्रेतायुगे द्वापरावसाने साधकानां कामक्रोधादिप्रवृत्तेर्कादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च जगतो मर्य्यादाभेदे तदीयां मर्य्यादामात्मनिर्मितां पालयितुमिच्छन् प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामयं मायाशक्तिप्रयुक्तं स्वेच्छाविग्रहं जग्राहेत्यर्थः भौमस्य ब्रह्मणो गुप्त्यै वसुदेवाद्देवकीजनत् इति स्मृतिमनुसृत्य पदद्वयमूहव्याचष्टे भौमस्येति अंशेनेति स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः । किलेत्यस्यार्थं पौराणिकी प्रसिद्धिरीत्यनूद्यते न हि भगवतो व्यतिरिक्तस्येदं जन्मेतियुज्यते बहुविधा-

### भाषा अनुवाद ।

जगत में लोगों की कामनावशते विवेक ज्ञान के नाशक अधर्म की वृद्धिभई तो जगत की स्थिति कहे पालन की इच्छा करिके वही आदि कर्त्ता नारायण ब्राह्मण औ ब्राह्मणके आधीन वेदविहित धर्म की रक्षाके निमित्त देवकी के गर्भ में वसुदेवजीसे अंशरूप हो प्रगटभये ।

शाङ्करभाष्यस्य उपक्रमणिका।

कुर्वन् लक्ष्यते स्वप्रयोजनाभावोऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वय-मर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनु-ष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति। तं धर्मं भगवता यथोपदिष्टं वेद-व्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध।

आनन्दगिरिकृतटीका।

गमविरोधादिति भावः ननु वैदिकधर्मसंरक्षणार्थं भगवतोजन्म यदा यदा हि धर्म-स्येत्यादि दर्शनात् किमिदं ब्राह्मणत्वस्य रक्षणार्थमिति तत्राह ब्राह्मणत्वस्य हीति तथापि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याशङ्क्याह तदधीनत्वादिति ब्राह्मणं हि पुरोधाय क्षत्रादिप्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात् तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनादतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्व-प्रसक्तिरित्याशङ्क्य ज्ञानादिकृतं विशेषमाह सचेति ज्ञानं सम्यगर्थपरिच्छित्तिरैश्वर्यमीश्वरत्वं स्वातन्त्र्यं शक्तिस्तदर्थनिर्वर्त्तनसामर्थ्यं बलं सहायसम्पत्तिः वीर्य्यं पराक्रमवत्त्वन्तेजस्तु प्रागल्भ्यमधृष्यत्वं एते च षड्गुणाः सर्वविषयाः सर्वदा भगवति वर्त्तन्ते तथा च तस्य शरीरादिमत्त्वेऽपि न मदादिसाम्यमित्यर्थः अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्य-शुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतं जन्मादि सम्भवति नहि भूतानामीशिता स्वतन्त्रः स्वात्मनोऽनर्थं स्वयमेव सम्पादयितुमर्हति नचास्यदेहादिपक्षे किमपि फलमुपलभ्यते तत्राह त्रिगुणात्मिकामिति सिद्धवित्तदेहादिगतवैलक्षण्यसिद्धयर्थमिदं विशेषणं तस्या-व्यापकत्वं वक्तुं वैष्णवीमित्युक्तम् ईश्वरपारवश्यन्तस्यादर्शयति स्वामिनि तस्यास्च प्रतिभास-मात्रशरीरत्वमेव न तु वस्तुत्वमित्याह मायामिति तस्या नानाविधकार्य्याकारेण परि-णामित्वं सूचयति मूलप्रकृतिमिति ईश्वरस्य प्रकृत्यधीनत्वं वारयति वशीकृत्येति नित्यत्वं कार्य्याकारविरहितत्वं शुद्धत्वमकारणत्वं बुद्धत्वमजड़त्वमुक्तम् अविद्याकामकर्मपारतन्त्र्य-

भाषा अनुवाद।

सोई भगवान सदा ज्ञान ऐश्वर्य्य शक्ति बल वीर्य्य तेज से सम्पन्न कहे मुक्त अपनी वैष्णवी त्रिगुणमयी माया को अपने वशकरके और आप मुक्त-स्वरूप निज माया के द्वारा देहधारी उत्पन्न भये ऐसे देख पडे थे कि अपने किसी प्रयोजन के बिना भी लोगों पर अनुग्रह प्रकाश किया।

कि जिसमे इस उत्तम धर्म को सब लोग जानिकरि ग्रहण करें क्योंकि

## शाङ्करभाष्यस्य उपक्रमणिका।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्द्धारणार्थं संक्षेपतो विवरणं करिष्यामि।

### आनन्दगिरिकृतटीका।

राहित्यं न च नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां सम्भवन्तीति युक्तमित्याह स्वभाव इति देहपक्षे प्राधान्यं मायाया दर्शयितुं पुनः स्वमायायेत्युक्तं स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमान इति श्रुतिमाश्रित्याह देहवानिति इवकाराभ्यां देहादेरवस्तुत्वेन कल्पितत्वं द्योत्यते धर्मद्वयोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादानं लोकानुग्रहः यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणस्त्वाहमीश्वरः स्वतो दृश्यते तथापि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभाव विपर्य्ययं पर्य्येतीत्यर्थः ननु प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणाञ्चाद्वैतवादे व्यतिरिक्तानामसत्त्वान्न धर्मद्वयमुपदेष्टुमुचितमिति तत्राह स्वप्रयोजनेति कल्पितभेदभाञ्जिभूतान्युपादाय तदनुग्रहेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः अर्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि शोकेति ननु भूतानुग्रहे कर्त्तव्ये किमित्यर्जुनाय धर्मद्वयं भगवतोपदिश्यते तत्राह गुणाधिकैरिति प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्जुनाय उपदिदेशेति सम्बन्धः अथ तथापि सुगतोपदिष्टधर्मवदयमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वाम्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्चमैवमित्याह तं धर्ममिति अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याह सर्वज्ञ इति कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुमिति स्मृतेः सज्जनोपकारकभगवदवतारत्वाच्च व्यासस्य नान्यथा बुद्धिरित्याह भगवानिति गीताशास्त्रस्याप्तप्रणीतत्वमप्याकृत्य

### भाषा अनुवाद।

बड़ों से आचरण किये गये धर्म को सब लोग ग्रहण करेंगे यह बिचार कर श्रीकृष्णजीने संग्रामके बीच शोकसागर मे निमग्न अर्थात् डूबे हुए अर्जुनसे वेदविहित प्रवृत्ति औ निवृत्ति दोनो प्रकारके धर्म उपदेश किये थे सोई भगवतका कहा उपदेश सातसै श्लोक मे. सर्वज्ञ भगवान वेदव्यास यह गीता निबन्ध किया अर्थात् बनाया।

## शाङ्करभाष्यस्य उपक्रमणिका ।

**तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणं तच्च सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति तमर्थमेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तं स हि धर्मसुपर्य्याप्तो**

### आनन्दगिरिकृतटीका ।

व्याख्येयत्वमुपपादितमुपसंहरति तदिदमिति पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमितिमत्वा विशिनष्टि समस्तेति शास्त्राचार्य्यैरेव तदर्थप्रतिपत्तिसम्भवे किमितिव्याख्यानमित्याशङ्क्याह दुर्विज्ञेयार्थमितिपदच्छेदः पदार्थोक्तिर्विग्रहोवाक्ययोजना आक्षेपस्य समाधानव्याख्यानं पञ्चलक्षणमित्यादिक्रमेणास्य शास्त्रस्य पूर्वाचार्य्यैर्व्याख्यातत्वात् किमर्थमिदमारभ्यते गतार्थत्वात् तत्राह तदर्थेति गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्रापेक्षितो न्यायस्याक्षेपसमाधानलक्षणो वृत्तिकारैर्दर्शितस्तत्रापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयासमुच्चयवादिभिर्विरुद्धार्थत्वेन अनेकार्थत्वेन च गृहीतमाजन्म तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः येषां प्राचीने व्याख्याने बुद्धिप्रविष्टा तेषां सम्प्रतितने एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राह विवेकत इति पूर्वव्याख्याने तत्तदर्थनिर्द्धारणार्थोपन्यासः सङ्कीर्णवद्भातीति न तत्र केषाञ्चिन्मनीषा समुन्मिषति प्रकृते त्वसङ्कीर्णतया तत्पदार्थनिर्णयोपयोगिन्यायो विक्रियते तेनात्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः किञ्चानपेक्षिताधिकग्रन्थसद्भावाच्चप्राचीने व्याख्याने श्रोतॄणां प्रवृत्तिरत्र त्वपेक्षितात्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाह संक्षेपत इति ।

ननु अनाप्तप्रणीतत्वाद्यभावेऽपि नेदं शास्त्रव्याख्येयं विषयाद्यनुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह तस्येति प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसि सन्निहितस्य गीताशास्त्रस्य संक्षेपतः संग्रहः सम्पिण्डितत्वमेकवाक्यत्वं तेनेदं परमं फलं यन्निश्चितं श्रेयो निःश्रेयसं कैवल्यं अवान्तरफलन्तु

### भाषा अनुवाद ।

**देखो सकल वेदों के अर्थका सारसंग्रह स्वरूप इस गीता का तात्पर्य्य लोगों को अति दुर्ज्ञेय कहे जानवेयोग नहीं है इसी हेतुसे बहुतेरोंने यद्यपि इस गीता का अर्थप्रकाश किया तौ भी साधारण लोग उस का उलटा सुलटा भाव अर्थ ग्रहण करलेते हैं यह जानि यथावत कहे ठीक ठीक अर्थ निर्धारण करने के लिये हम संक्षेप से विवरण करने मे प्रवृत्त भये हैं।**

## शाङ्करभाष्यस्य उपक्रमणिका।

ब्रह्मणः पदवेदनं इत्यनुताश्च किञ्चाप्यदपि तत्रैवोक्तं नैव धर्मी नचाधर्मी नचैव हि शुभाऽशुभी यः स्यादेकासने लीनस्तूष्णीं किञ्चिदचिन्तयन् ज्ञानं सन्यासलक्षणमिति च इहापि चान्ते उक्तमर्जुनाय सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेति अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स च देवादिस्थानप्राप्तिहेतुरपि सन् ईश्वरार्पण

### आनन्दगिरिकृतटीका।

तत्रतत्रावान्तरवाक्यभेदेन मनोनियमहादि विवक्ष्यते निःश्रेयसञ्च द्विविधं निरतिशय-सुखाविर्भावो निःश्रेयानर्थोच्छित्तिश्च तत्राद्यमुदाहरति परमिति द्वितीयं दर्शयति सहेतु कस्येति संसारोपरमस्यात्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं तच्च साप-मूलकादि व्यवच्छेदार्थविशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तं उक्तं फलं समुच्चिता-देकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रतिपाद्यत्वात्ज्ञानाभिधेयमभिवित्समानः समाधत्ते तच्चेति आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठापीोच्यते प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यते इत्यर्थः ननु शेषिणी निष्ठा कुतो न भवति सन्यासात् कर्मनिष्ठायाः शेषत्वात् तत्राह सर्वेति सन्यासद्वारेणासकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिद्ध्यति शेषत्वञ्च-कर्मणस्तत्र परम्परायत्तमित्यर्थः ननु यज्ञदानतपः कर्मनत्याज्यं कार्यमेवतदिति वाक्य-शेषात् समुच्चितमात्मज्ञानमत्र प्रतिपाद्यते नेत्याह तथेति सर्वकर्मसन्यासपूर्वकमात्मज्ञान-निष्ठारूपं धर्मं निःश्रेयससाधनं प्रयोजनं प्रागुक्तं प्रकाशयति इममेवेति वक्तृभेदाद-भिप्रायभेदाशङ्कां वारयति भगवतैवेति उक्तमनुगीतास्विति सम्बन्धः ब्रह्मणः पदं पूर्वोक्तं निःश्रेयसं तस्य वेदनं ज्ञानमत्र विशिष्टो ज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः यज्ञदानादिवाक्यस्य तु तत्त्वाख्यानावसरे तात्पर्यं वक्ष्यते कर्मत्यागस्य भगवतोऽभिप्रेतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति तत्रैवेति धर्माधर्मापूर्वासंनर्गित्वे हेतुमाह नैवेति

### भाषा अनुवाद।

दुःखरूप इस संसार से उपरतिरूप जो निर्वाण कहे मुक्ति सोई गीताशास्त्र का प्रयोजन है परन्तु सर्वकर्मपरित्यागमूलक ज्ञाननिष्ठारूप निवृत्तिधर्म के अनुष्ठान करने से वह प्रयोजन सिद्ध होता है यह अनुगीता आदि ग्रन्थो मे भगवानने आपही सकल अभिप्राय को प्रमाणरूप प्रगट देखाया है और जो वर्ण आश्रमके विषयमे जगत का स्थितिसाधन कहे

## शाङ्करभाष्यस्य उपक्रमणिका ।

बुद्ध्याऽनुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः शुद्धसत्त्वस्य ज्ञाननिष्ठा योग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते तथाचेममर्थमभिसन्धाय वक्ष्यति ब्रह्मण्याधाय कर्माणि यतचित्ता जितेन्द्रियाः योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये इति इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वञ्च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयन् विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया अत्रच धृतराष्ट्र उवाच धर्मक्षेत्र इत्यादि ।

### आनन्दगिरिकृतटीका ।

क्रियाद्वयसम्बन्धाभावात् तन्निवृत्त्या पूर्वाभ्याससन्दष्टे प्राप्तमर्थमाह यःस्यादिति वागादिबाह्यकरणव्यापारविरहितत्वं तूष्णीमित्युच्यते किञ्चिदचिन्तयन्नित्यन्तःकरणव्यापाराभावोऽभिप्रेतः द्विविधकरणव्यापारविरहितः सन् प्रागुक्तो योऽधिकारी केवलमेकस्मिन् द्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाप्तिभागीस्यात् तस्यासम्प्रज्ञातसमाधिनिष्ठस्य सर्वकर्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः न केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किन्तु प्रकृतेऽपि शास्त्रासमाप्त्यवसरे दर्शितमित्याह इहापीति नन्वत्र निवृत्तिलक्षणधर्मात्मकं सन्न्यासमात्मज्ञानमेव न प्रतिपाद्यते कुरु कर्मैव तस्मात्त्वं इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात् तत्राह अभ्युदयार्थोपीति ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाधिकारे विधानं देवादिस्थानप्राप्तिहेतुत्वेन मोक्षं प्रतिपक्षत्वात् सत्यं तथापि फलाभिलाषमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात् तस्येह वचनमित्याह स च देवादीति फलाभिसन्धिद्वारा कृतः सन्निति शेषः प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह शुद्धेति प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः यदुक्तफलाभिसन्धिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्मबुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति तथाचेति ।

### भाषा अनुवाद ।

सहायक कर्मनिष्ठारूप प्रवृत्तिलक्षण धर्म सोभी इसमे कहीं कहीं कहा है वह यद्यपि देवादि लोक प्राप्तिका हेतु है पर तोभी ईश्वर र्पण बुद्धिके

आनन्दगिरिकृतटीका।

शास्त्रस्य प्रयोजनं ससाधनमुक्तमनूद्य विषयं दर्शयति इममिति दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः सम्बन्धो विषयेण विषयविषयित्वमिति विवक्षितत्वाह विशेषत इति एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति विशिष्टेति सिद्धे व्याख्यानयोग्यत्वे व्याख्यातत्वे फलितमाह यत इति एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्यव्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्यमाह अत्रचेति गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासम्बन्धप्रदर्शनपरे स्थिते सतीति यावत्।

स्वामिकृतटीका।

शेषाशेषमुखव्याख्याचातुर्यन्त्वेकवक्त्रतः। दधानमद्भुतं वन्दे परमानन्दमाधवम्॥ १॥

श्रीमाधवं प्रणम्यो माधवं विश्वेशमादरात्। तद्भक्तियन्त्रितः कुर्वे गीताव्याख्यां सुबोधिनीम्॥ २॥ भाष्यकारमतं सम्यक् तद्व्याख्यातृगिरस्तथा। यथामति समालोक्य गीताव्याख्यां समारभे॥ ३॥ गीताव्याख्यायते यस्याः पाठमात्रात्प्रयत्नतः। सेयं सुबोधिनीटीका सदाध्येया मनीषिभिः॥ ४॥

इह खलु सकललोकहितावतारः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतया निजधर्मपरित्यागपूर्वकपरधर्माभिसन्धिनमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध तत्र च प्रायशः श्रीकृष्णमुखादिनिःसृतानेव श्लोकान् लिखत् कांश्चित् तत्सङ्गतये स्वयञ्च व्यरचयत् यथोक्तं गीतामाहात्म्ये गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः याः स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृतेत्यादि अत्र तावद्धर्मक्षेत्रे इत्यादिना विषीदन्निदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावाय कथा निरूप्यते।

भाषा अनुवाद।

किया हुआ चित्त शुद्धि के साथ ज्ञाननिष्ठाकी योग्यता के द्वारा निर्वाणमुक्ति का साधन होता है यह बात इसी ग्रन्थ मे पीछू से कही जायगी।

इसी भांति निर्वाणमुक्ति का कारणरूप दो प्रकार का धर्म श्री वासुदेव जो पर ब्रह्म परमारथ तत्व सोई विशेषरूप से प्रगट करते कि विशेष प्रयोजन अभिधेय औ सम्बन्ध विशिष्ट कहे सहित इस गीताशास्त्र के अर्थज्ञान से सब पुरुषार्थ सिद्ध होते हैं इस लिये इसका तात्पर्य्य कहने को मै यत्न करता हूं इस विषय मे धृतराष्ट्रने कहा कि हे सञ्जय इत्यादि।

# श्रीमद्भगवद्गीता।

## धृतराष्ट्र उवाच।

**धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय॥ १॥**

### आनन्दगिरिकृतटीका।

तत्रैवमक्षरयोजना धृतराष्ट्र उवाचेति धृतराष्ट्रो हि प्रज्ञाचक्षुर्बाह्यचक्षुरभावाद्वाह्यमर्थं प्रत्यक्षयितुमनीशः सञ्जयासवर्त्तिनं सञ्जयमात्मनो हितोपदेष्टारं पृच्छति धर्मक्षेत्र इति धर्मस्य तद्बुद्धेश्च क्षेत्रे समभिवृद्धिकारणं यदुच्यते कुरुक्षेत्रमिति तत्र समवेताः सङ्गता युयुत्सवो यद्धुकामास्ते च केचिन्मदीयाः दुर्य्योधनप्रभृतयः पाण्डवाश्चापरे युधिष्ठिरादयस्ते च सर्वे युद्धभूमौ सङ्गताः भूत्वा किं अकुर्वत कृतवन्तः॥ १॥

### स्वामिकृतटीका।

धृतराष्ट्र उवाच धर्मक्षेत्र इत्यादि भोः सञ्जय धर्मभूमौ कुरुक्षेत्रे धर्मक्षेत्र इति कुरुक्षेत्रविशेषणम् एषामादिपुरुषः कश्चित् कुरु नामा बभूव तस्य कुरोर्धर्मस्थाने मामकाः मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिताः सन्तः किमकुर्वत किं कृतवन्तः॥ १॥

### भाषा अनुवाद।

नेत्रहीन धृतराष्ट्र युद्ध मे सन्देह करते हुये प्रशंसा वाक्य से धर्मक्षेत्र कुरुक्षेत्र का विशेषण देकर आत्महितकारी सञ्जय से पूछा कि हे सञ्जय धर्मक्षेत्र धर्मभूमि जो कुरुक्षेत्र तहां मेरे पुत्र दुर्य्योधन आदिक और पाण्डुके पुत्र युधिष्ठिरादि सब युद्धकी इच्छा करि इकट्ठे हो क्या करते हैं इस से यह आया कि धृतराष्ट्रके पूर्वपुरुषों मे कोई कुरुनाम राजा थे जिन का यह कुरुक्षेत्र धर्मस्थान है क्या यहां धर्मबुद्धि होय संग्राम छोड़ मेलकर के राज्य का विभाग तो न कर देंयगे यह भीतरी अभिप्राय है और

## सञ्जय उवाच।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।**
**आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥**

आनन्दगिरिकृतटीका।

किमस्मदीयं प्रबलं बलं प्रतिलभ्य धीरदुरूपैर्भीष्मादिभिरधिष्ठितं परेषां भयमाविर्भूत् यद्वा पक्षद्वयहिंसानिमित्ताधर्मभयमासीच्चेन एते युद्धादुपरमेरन्निति एवं पुत्र परवशस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने सञ्जयस्य प्रतिवचनं दृष्ट्वेत्यादि पाण्डवानां भयप्रसङ्गो नास्तीत्येतत् तुशब्देन द्योत्यते प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरति धृष्टैर्व्यूढमधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां संग्रामोद्योगावस्थायामाचार्य्यं द्रोणनामानमात्मनः शिक्षितारं रक्षितारञ्च स्नापयन्नुपसंगम्य तदीयं समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसङ्कुलं वाक्यमुक्तवानित्यर्थः ॥ २ ॥

स्वामिकृतटीका।

सञ्जय उवाच दृष्ट्वेत्यादि पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनयाऽधिष्ठितं दृष्ट्वा द्रोणाचार्य्यसमीपं गत्वा राजा दुर्योधनो वक्ष्यमाणं वचनमुवाच ॥ २ ॥

### भाषा अनुवाद।

रणभूमि मे सैन्यदल देखि सशङ्कित कहै भययुक्त कौन है क्या धीर वीर भीष्मपितामह के साथ मेरी प्रबलसेना को देखि शत्रुवों को भय भई या हिंसा की भय मानि दोनो संग्राम से निवृत्त होजायंगे यह धृतराष्ट्र सञ्जयसे पूछते हैं इस मे मामका अर्थात् मेरे पुत्र जो कुरुक्षेत्र को गये तो अपने पुर्खों के धर्मस्थान पर गये कुछ अन्याय नहीं किया और पाण्डवा कहनेसे जनाया कि पाण्डुपुत्र युधिष्ठिरादि जो सेना साथले कुरुक्षेत्र गये सो अन्याय है क्यों कि एक तो मेरे भाई पाण्डु पाण्डुरोगीथे दूसरे मृगरूप धरि मैथुन करते हुये ऋषिको बान मारा तो उसने शाप दिया कि आजसे तुम जब स्त्रीसङ्ग करोगे तो तुरन्त मरजाओगे फिर पाण्डुके पुत्र कैसेभये इस से ये सब जारज अर्थात् अन्य पुरुषोंसे जनमे

पश्यैतां पाण्डुपुत्त्राणामाचार्य्य महतीं चमूम्।
व्यूढ़ां द्रुपदपुत्त्रेण तव शिष्येण धीमता॥ ३॥

आनन्दगिरिकृतटीका।

तदेव वचनमुदाहरति पश्येति एतामस्मदभ्यासे महापुरुषानपि भवत्प्रमुखानपरिगणय्य भयलेशशून्यामवस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहितामक्षोभ्यां पश्येताचार्य्यं दुर्य्योधनो नियुक्तानियोगद्वारा च तस्मिन् परेषामवज्ञां विज्ञापयत् क्रोधातिरेकमुत्पादयितुकामस्तु परकीयसेनायावैशिष्ट्याभिधानद्वारा परापरपत्तेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्य्यस्य तन्निरसनं सुकरमिति मन्वानः सन्नाह व्यूढ़ामिति राज्ञो द्रुपदस्य पुत्त्रस्तव शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयञ्च शस्त्रास्त्रविद्यासम्पन्नो महामहिमः तेन व्यूहमापाद्याधिष्ठितामिमाञ्चमूं किमिति न प्रतिपद्यसे किमिति वा न सहिष्यसीत्यर्थः॥ २॥

स्वामिकृतटीका।

तदेव वचनमाह पश्यैतामित्यादि नवभिः श्लोकैः पश्येत्यादि हे आचार्य्य! पाण्डवानां महतीं विततां चमूं सेनां पश्य तव शिष्येण द्रुपदपुत्त्रेण धृष्टद्युम्नेन व्यूहरचनयाऽधिष्ठिताम्॥ २॥

भाषा अनुवाद।

हैं तो इनका भाग राज्यमें किस प्रकार हो सक्ता है यह भीतरी अभिप्राय जानो और कोई इस का यहभी अर्थ करते कि धर्मक्षेत्र जो नरदेह तिसमें आत्माके साथ युद्ध करने अर्थात जीतनेको इकट्ठे भये जो इन्द्रीगण औ उनके देवता जिनको तुम अपने जानते पर ये तुमारे शत्रु हैं इस से देखो कि ये तुमारे साथ क्या करते और इनको तुम अपने वुद्धि और वलसे भली भांति जय करो यह धृतराष्ट्र कहे जीवात्मा मन के प्रति नित्य उपदेश देता है॥ १॥

तब सञ्जयने कहा कि हे राजा पाण्डुपुत्र युधिष्ठिरादिका सैन्यदल व्यूहाकार रचना से रचित युद्धके लिये तयार खड़ा देखि राजा दुर्य्योधन द्रोणाचार्य्य के निकट जायकर वक्ष्यमाण यह वात कही इस से यह जनाया कि भय और शङ्का तुमारे ही पुत्र को भई है॥ २॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ॥ ५ ॥

आनन्दगिरिकृतटीका ।

अन्येऽपि प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुप्रेक्षणीयत्वं परपक्षस्य विवक्षयन्नाह अत्रेति तस्यां हि प्रतिपक्षभूतायां सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशलाः भीमार्जुनाभ्यां सर्वसम्प्रतिपन्नवीर्याभ्यां तुल्याः युद्धभूमावुपलभ्यन्ते तेषां युद्धशौण्डीर्यं विशदीकर्तुं विशिनष्टि महेष्वासा इति इषुरस्यते ऽस्मिन्निति व्युत्पत्त्या धनुस्तदुच्यते तच्च महदन्यैरप्रधृष्यं तद्विद्यते येषान्ते राजानस्तथा विवक्षन्ते यानेव परसेनामध्यमध्यासीनान् परपक्षानुरागिणो राज्ञो विज्ञापयति युयुधान इत्यादिना सौभद्रो द्रौपदेयाश्चेत्यन्तेन ॥ ४ ॥

किञ्च धृष्टकेतुरिति स्पष्टम् ॥ ५ ॥

स्वामिकृतटीका ।

अत्रेत्यादि अत्रास्यां चम्वां इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासा धनूंषि महान्त इष्वासा येषान्ते महेष्वासाः भीमार्जुनौ तावदत्रातिप्रसिद्धौ योद्धारौ ताभ्यां समाः शूराः सन्ति तानेव नामभिर्निर्दिशति युयुधान इति युयुधानः सात्यकिः ॥ ४ ॥

किञ्च धृष्टकेतुरिति चेकितानो नाम एको राजा नरपुङ्गवः नरश्रेष्ठः शैव्यः ॥ ५ ॥

भाषा अनुवाद ।

सोई दुर्य्योधनकी कही सब बातें सञ्जय धृतराष्ट्रके प्रति नवश्लोक से कहते हैं कि हे ! आचार्य्य देखिये तो यह युधिष्ठिर का सैन्यदल जिस को आपका शिष्य द्रुपदका पुत्र बुद्धि मान धृष्टद्युम्नने रचा है सो महात्मा आपके सामने बड़े विस्तार मे युद्ध करने को तयार निडर खड़ा है ॥ ३ ॥

और इस सेना के बीच युद्ध करने मे भीम अर्जुनके समान धनुषधारी महाबली और और कितने योद्धा हैं तिनके नाम दुर्य्योधन द्रोणाचार्य्य से कहते हैं कि युयुधान जो सात्यकी और राजा बिराट महारथी द्रुपद राजा ॥ ४ ॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥ ६॥**
**अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम।**
**नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते॥ ७॥**

आनन्दगिरिकृतटीका।

तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षति सर्व एवेति॥ ६॥

यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त सन्धिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्य्याभिप्रायमाशङ्क्य ब्रवीति अस्माकमिति तुशब्देनान्तरुल्लसन्तमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनोद्योतयति ये स्वपक्षे व्यवस्थिताः सर्वेभ्यः समुत्कर्षंजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः यद्यपि

स्वामिकृतटीका।

युधामन्युरिति विक्रान्तो युधामन्युर्नामैकः सौभद्रोऽभिमन्युः द्रौपदेया द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः पुत्राः प्रतिविन्ध्यादयः पञ्च महारथादीनां लक्षणं एकोदशसहस्राणि योधयेद्यस्तु धन्विनां शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः। अमितान् योधयेद्यस्तु सम्प्रोक्तोतिरथस्तु सः रथी चैकेन यो योद्धा तन्न्यूनोर्द्धरथस्तु सः॥ ६॥

## भाषा अनुवाद।

और धृष्टकेतु चेकितान राजा औ बलवान काशीराज औ पुरुजित राजा कुन्तिभोज औ शैव्य ये सब राजा नरश्रेष्ठ औ बलवान् हैं॥ ५॥

पराक्रमी युधामन्यु नाम राजा और बलवान उत्तमौजा नाम एक राजा और सुभद्रा के पुत्र अभिमन्यु औ द्रौपदी के गर्भसे युधिष्ठिरादि पांच से उत्पन्न प्रतिविन्ध्यादि पांच भाई ए सब महारथी वीर हैं महारथी का लक्षणयह है कि अस्त्रशस्त्र मे निपुण हो दशहजार धनुर्धारी योद्धों के साथ अकेला युद्ध कर सके उसी को महारथी कहते हैं और असंख्य योद्धों के साथ युद्ध करने मे जो समर्थ उसे अतिरथी शास्त्र मे कहते और एक योद्धा के साथ जो युद्ध करे सो रथी है उस से भी कम अर्द्धरथी कहा जाता है॥ ६॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः॥ ८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः॥ ९॥

आनन्दगिरिकृतटीका।

त्वमेव त्रैवर्णिकेषु त्रैविद्यवृद्धेषु प्रधानत्वात् प्रतिदिनं प्रभवसि तथापि मदीयसैन्यस्य ये मुख्यास्तानहन्ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टाननुपलक्षयितुं विज्ञापनं करोमि नत्वज्ञातं किञ्चित् तव ज्ञापयामीति मत्वाह द्विजोत्तमेति॥ ७॥

तानेव स्वसेनानिविष्टान् पुरुषवीरेषानात्मीयभयपरिहारार्थं परिगणयति भवानित्यादिना॥ ८॥

द्रोणादिपरिगणनं स्वपरिशिष्टपरिसंख्यार्थत्वं व्यावर्त्तयति अन्येचेति सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह मदर्थे इति। यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति नानेति नानाविधान्यनेकप्रकाराणि शस्त्राण्यायु-

स्वामिकृतटीका।

अस्माकमिति निबोध बुद्धस्व नायका नेतारः संज्ञार्थं सम्यक्ज्ञानार्थमित्यर्थः॥ ७॥

तानेवाह भवानिति द्वाभ्यां भवान् द्रोणाचार्य्यः समितिं संग्रामं जयतीति तथा सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः॥ ८॥

भाषा अनुवाद।

जो प्रबल बलशत्रुवों का सेनादल देखि डरसे बोलते हो तो मेल क्यों न करलो लड़ाई से क्या फल है ऐसा द्रोणाचार्य्य न कहें इस शङ्का से दुर्योधन कहता है कि हे महाराज मेरे पक्ष मे भी जो नायक कहे सेनापति ते सब आपसे छिपे नहीं हैं तौभी उनके नाम केवलआपको स्मरण करानेके लिये मै कहता हूं॥ ७॥

सोई ये दो श्लोक से कहते हैं कि संग्राम मे विजयी आप औ भीष्मपितामह कर्ण कृपाचार्य्य अश्वत्थामा विकर्ण औ सोमदत्त का पुत्र भूरिश्रवा औ जयद्रथ ये सब वीर अपनी ओर हैं॥ ८॥

अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्।
पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्॥ १०॥

आनन्दगिरिकृतटीका।

भानि प्रहरणानि प्रहरणसाधनानि येषान्ते तथा बहुविधास्त्रसम्पत्तावपि तत्प्रयोगे नैपुण्याभावे तदकिञ्चित्करमिति चेन्नेत्याह सर्वे इति॥ ९॥

राजा पुनरपि स्वकीयभयाभावे हेत्वन्तरमाचार्य्यं प्रत्यावेदयति अपर्य्याप्तमिति अस्माकं बलमिदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितं बलं भीष्मेण च प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतोरक्षितं पर्य्याप्तं परेषां पुनस्तदल्पसप्तसङ्ख्याकाक्षौहिणीपरिमितबलं भीमेन च चपलबुद्धिना कुशलताविकलेन परिपालितमपर्य्याप्तमस्माकमभिभवितुमसमर्थमित्यर्थः अथवा तदिदमस्माकं बलं भीष्माधिष्ठितमपर्य्याप्तमपरिमितमक्षय्यमक्षोभ्यमेतेषां पाण्डवानां बलं भीमेनाभिरक्षितं पर्य्याप्तं परिमितं सोढुं शक्यमित्यर्थः अथवा तत् पाण्डवानां बलमपर्य्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं भीष्मोभिरक्षितोऽस्मै परबलनिष्टत्यर्थमिति तदेव तर्थोच्यते इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्य्याप्तं परिभवे समर्थं भीमाभिरक्षितं भीमोदुर्बलहृदयो यस्मादस्मै परबलनिष्टत्यर्थमभिरक्षितः तस्मादस्माकं न किञ्चिदपि भयकारणमस्तीत्यर्थः॥ १०॥

स्वामिकृतटीका॥

मदर्थे मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषान्ते युद्धे विशारदा निपुणाः॥ ९॥

ततः किमत आह अपर्य्याप्तमित्यादि तत्तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमपि अस्माकं बलं सैन्यं अपर्य्याप्तं तैः सह योद्धुम समर्थं भाति इदन्त्वेतेषां पाण्डवानां बलं भीमाभिरक्षितं सैन्यं पर्य्याप्तं समर्थं भाति॥ १०॥

भाषा अनुवाद।

अब कहते हैं कि और और भी धीरवीर शूर जो मेरे अर्थ अपने प्राण परित्याग करने को निश्चय करिराखे हैं और नानाप्रकार के अस्त्र शस्त्र चलाने वाले तथा युद्धविद्यामे विशारद कहे अतिनिपुण ते सब लोग भी इधरही हैं॥ ९॥

इसके अनन्तर दुर्योधन ने जो कहा सोई धृतराष्ट्र से सञ्जय कहते हैं कि ऐसे ऐसे शूरवीरों से भरी पूरी और भीष्मपितामह से रक्षितहूंकेभी

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

आनन्दगिरिकृतटीका ।

स्वकीयं बलस्य भीष्माधिष्ठितत्वेन बहुत्वशङ्का भीष्मस्य प्रधानत्वेन तदनुगुणत्वं द्रोणादीनां प्रार्थयते अयनेष्विति कर्त्तव्यविशेषद्योतनी चशब्दः समरसमारम्भसमये योद्धानां यथा प्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि नियम्यन्ते तान्ययनान्यु-च्यन्ते सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति तेषु सर्वेषु प्रकृष्टं प्रविभागमनपत्याख्याय भवान् अश्वत्थामा कर्णश्चेत्येवमादयोभवन्तः सर्वेवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात् परबलनिष्ठत्वार्थत्वेन तस्यास्माभी-रक्षितत्वादित्यर्थः ॥ ११ ॥

स्वामिकृतटीका ।

तस्माद् भवद्भिरेवं वर्त्तितव्यमित्याह अयनेष्विति अयनेषु व्यूहप्रवेशमार्गेषु यथा भागं विभक्तां स्वां स्वां रणभूमिं अपरित्यज्यावस्थिताः सन्तो भीष्ममेवाभिरक्षन्तु यथान्यै-र्युद्ध्यमानः पृष्ठतः कैश्चि न हन्येत् तथा रक्षन्तु भीष्मबलेनास्माकं जीवनमिति भावः ॥ ११ ॥

भाषा अनुवाद ।

हमारी सेना अपर्य्याप्त कहे पाण्डवों की सेना के साथ युद्धकरने मे असमर्थ सी जानीजाती है और विपक्षी पाण्डवों का अपूर्ण दल आलसी भीमसेन से रक्षित पर्याप्त अर्थात् समरमें समर्थसा देख पड़े है। दुसरा अर्थ दुर्योधन अपने हृदय की निडरता प्रकाश करते हुये द्रोणाचार्य से कह ते हैं कि हमारा ग्यारह अक्षौहिणी सैन्यदल महात्मा बुद्धिमान पितामह जिस की हरतरह से रक्षा करते हैं निसन्देह शत्रुवों का परा भव करने को समर्थ है और इन विचारों की एक तो सात अक्षौहिणी मात्र थोड़ी सेना दूसरे चपलबुद्धि महा गवांर भीमसेन से परिपालित हो कहो हमारा सामना क्या करेगी पराभव करना तो बड़ी दूर है ॥ १० ॥

इस से अब तुम सब लोगों को यही करना उचित है कि शत्रु के सैन्य दल के भीतर प्रवेश करने को क्रम से अलग अलग हो अपनी अपनी रण

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान्॥ १२॥
ततः शङ्खाश्च भेर्य्यश्च पणवानक गोमुखाः।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्॥ १३॥

आनन्दगिरिकृतटीका।

तमेवमाचार्य्यं प्रतिसम्वादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्यासवर्त्ती पितामहस्तद्बुद्धमनुरोधार्थं कृत्यं कृतवानित्याह तस्येति राज्ञो दुर्य्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपरिभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन् भयं तदीयमपनिनीषुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान् किमिति दुर्य्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वात् पितामहत्वाच्चास्य दुर्य्योधनभयापनयनार्थो प्रीत्तिरुचितादुपजीवितया तद्वयत्वाच्च तस्य सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथां सम्भाव्यते दूरादेवारिनिवर्हं प्रति भयजननलक्षणप्रतापत्वादित्यर्थः॥ १२॥

राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्तेरनन्तरं तत्पक्षैस्तैस्तै राजभिः शङ्खादयोवाद्यविशेषा-

स्वामिकृतटीका।

तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवान् तदाह तस्येत्यादि तस्य राज्ञो हर्षं कुर्वन् पितामहो भीष्म उच्चैर्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान्॥ १२॥

भाषा अनुवाद।

भूमि पर खडे होकर भीषमजी की सब रक्षा करो जिस मे और कोई शत्रु की ओर का योधा पीछू से इन को न मारने सके इस को अभिप्राय यह है कि भीषमही के बल से हमारा जीवन है तो उन की रक्षा करनी हम सब को अवश्य है॥ ११॥

तब तो ऐसी ऐसी राजा दुर्योधन की सन्मान की वातैं सुनि भीषमजी ने जो किया सो कहते हैं कि दुर्योधन के सन्तुष्ठ हो ने के कारन कुरु वंश के वृद्ध भीषमपितामह उछल के कुछ आगे वढ़ि सिंहनाद तुल्य गर्जन करि अपने शङ्ख का धुधुंकार शब्द ऊंचे स्वर से वजाया॥ १२॥

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ।**
**माधवः पाण्डवश्चैव दिव्यौ शंखौ प्रदध्मतुः॥ १४॥**
**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।**
**पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः॥ १५॥**

आनन्दगिरिकृतटीका।

झटिति शब्दवन्तः सम्पादिताः स च शङ्खादिप्रयुक्तशब्दस्तुमुलो बहुलं भयं परेषां परिद्योतयन्नासीदित्याह तदिति॥ १३॥

एवं दुर्य्योधनपक्षे प्रवृत्तिमालक्ष्य परिसरवर्त्तिनौ केशवार्जुनौ श्वेतैर्हयैरतिबलपराक्रमैर्युक्ते महत्यप्रधृष्ये रथे व्यवस्थितावप्राकृतौ शङ्खौ पूरितवन्तावित्याह ततः श्वेतैर्हयैरिति॥ १४॥

स्वामिकृतटीका।

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालोक्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह तत इत्यादिना पणवा मर्द्दला आनका गोमुखाश्च वाद्यविशेषाः सहसा तत्क्षणादेवाभ्यहन्यन्त वादिताः स शब्दः शङ्खादिशब्द स्तुमुलो महान् अभूत्॥ १३॥

ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह तत इत्यादि पञ्चभिः स्यन्दने रथे स्थितौ सन्तौ कृष्णार्जुनौ शङ्खौ प्रकर्षेण दध्मतु वादयामासतुः॥ १४॥

भाषा अनुवाद।

भीष्म पितामह को युद्ध मे असो उत्साह देखि सकल सेना के सरदार लोग जिस भांति युद्ध उत्सव मे प्रवृत्त भये सो कहते हैं कि तदनन्तर शङ्ख औ भेरी कहे तूर ही पणव जो मृदङ्ग आनक जो नगारा गोमुख जो वाद्यविशेष तिनको तत्काल एकवारगी जो सभोंने वजाया तो वह शब्द एक वड़ा आश्चर्यभूत अति भयानक धु धु कार भया॥ १३॥

तिस के बादि पाण्डवों की सेना मे युद्ध की तयारी पांच श्लोक से कहते हैं कि इधर तो हंस ऐसे श्वेत वरन चार हय संयुक्त सूर्य्य से प्रकाशमान रथ पर विराज मान श्रीकृष्ण औ अर्जुन ने भी अति उत्तम अपने अपने दोनो शङ्ख धुधुकारे अर्थात् वजाये॥ १४॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते । सौभद्रश्च
महाबाहुः शंखान् दध्मुः पृथक् पृथक् ॥ १८ ॥

आनन्दगिरिकृतटीका ।

शङ्खयोर्दिव्यत्वमेवापादयति पाञ्चजन्यमिति केशवार्जुनयोर्युद्धाभिमुख्यं दृष्ट्वा संहृष्टः सारथ्येन संमररसिको भीमसेनोपि युद्धाभिमुखोऽभूदित्याह पौण्ड्रमिति ॥ १५ ॥

एतेषां द्वयोर्यो प्रवृत्तिं प्रतीत्य परिपालनावकाशमासाद्य राज्ञोयुधिष्ठिरस्यापि प्रवृत्तिं दर्शयति अनन्तेति ज्यायसां भ्रातॄणामनुसरणमावश्यकमिति मत्वा तयोर्यवीयसोर्भ्रात्रो-रपि प्रवृत्तिमाह नकुल इति ॥ १६ ॥

अन्येषामपि तत्प्रवृत्तिमेव राज्ञामेकमत्यं विज्ञापयन् धृतराष्ट्रस्य दुराशां सञ्जयोव्युद-स्यति काश्यश्चेत्यादिना ॥ १७ ॥

स्वामिकृतटीका ।

तदेव विभागेन दर्शयन्नाह पाञ्चजन्यमिति पाञ्चजन्यादीनि नामानि श्रीकृष्णादि शङ्खानां भीमं घोरं कर्म यस्य सः । अनन्तेति नकुलः सुघोषं नाम शङ्खं दध्मौ सहदेवो मणिपुष्पकं नाम ॥ १६ ॥

काश्यश्चेति काश्यः काशीराजः कथम्भूतः परमः श्रेष्ठ इष्वासो धनुर्यस्य सः ॥ १७ ॥

भाषा अनुवाद ।

अब किस ने कौन शङ्ख वजाया सो कहते हैं कि पाञ्चजन्य नामक शंख श्रीभगवान ने श्री अर्जुन ने देवदत्त नाम शङ्ख वजाया फेर भीमकर्म्मा भीमसेन ने भयानक महाशङ्ख पौण्ड्र नाम वजाया ॥ १५ ॥

अनन्त विजय नाम शङ्ख कुन्तीनन्दन युधिष्ठिर ने वजाया और सुघोष नाम शङ्ख नकुल ने औ मणिपुष्प नाम सहदेव ने वजाया ॥ १६ ॥

और धनुर्धारी काशीराज औ शिखण्डी औ धृष्टद्युम्न तथा विराट राजा और युद्ध मे अपराजित जो सात्यकी ॥ १७ ॥

स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीञ्चैव तुमुलोऽभ्यनुनादयन्॥ १९॥
अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः
हृषीकेशं तदा वाक्यमिदमाह महीपते॥ २०॥

आनन्दगिरिकृतटीका।

द्रुपद इति परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं सम्बध्यते॥ १८॥

तैस्तैराजभिः शङ्खानापूरयद्भिरापादितो महान् घोषस्तुमुलोऽतिभैरवो नभश्चान्तरीक्षं पृथिवीञ्च भूवनं लोकत्रयं सर्वमेव विशेषानुक्रमेण नादयन् नादयुक्तं कुर्वन् धार्त्तराष्ट्राणां दुर्य्योधनादीनां हृदयान्यन्तःकरणानि व्यदारयत् विदारितवान् युज्यतेहि तत्प्रेरितशङ्खघोषश्रवणाच्चैलोक्याक्षोभे तमुपश्रृण्वतां तेषां हृदयेषु दोधूयमानत्वं तदाह सघोष इति॥ १९॥

दुर्य्योधनादीनां धार्त्तराष्ट्राणामेवं भयप्राप्तिं प्रदर्श्य पार्थादीनां पाण्डवानां तद्वैपरीत्यमिदानीमुदाहरति अथेत्यादिना भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेपि धैर्य्यमुत्पाद्य व्यवस्थिता नप्रवर्त्तितानेव परान् प्रत्यक्षेणोपलभ्य हनुमन्तं वानरवरं ध्वजलक्षणत्वेनादायावस्थितोऽर्जुनो भगवन्तमाह इतिसम्बन्धः किमाहेत्यपेक्षायामिदं वक्ष्यमाणं हेतुमद्वचन

स्वामिकृतटीका।

द्रुपद इति हे पृथिवीपते धृतराष्ट्र॥ १८॥

सच शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह सघोष इत्यादि धार्त्तराष्ट्राणां त्वदीयानां हृदयादि विदारितवान् किं कुर्वन् नभश्च पृथिवीञ्चाभ्यनुनादयन् प्रतिध्वनिभिरापूरयन्॥ १९॥

भाषा अनुवाद।

और द्रुपद राजा तथा द्रौपदीके पांच पुत्र प्रतिविन्दादि और सुभद्राके पुत्र महाबाहु अभिमन्युजी हे पृथ्वीनाथ राजन् धृतराष्ट्र ये सबके सब भिन्न भिन्न शङ्ख ध्वनि करने लगे॥ १८॥

वही उन सबों को कीहुई शङ्खध्वनि ने आकाश औपृथिवी तल मे व्यापकर हेराजन् प्रतिध्वनिरूप से तुमारे पुत्र औ पक्षपातियों के हृदय को विदीर्ण कर दिया॥ १९॥

## अर्जुन उवाच।

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

### आनन्दगिरिकृतटीका।

माह वाक्यमिति कस्यामवस्थायामिदमुक्तवानिति तत्राह प्रवृत्तइति शस्त्राणामिषु प्रासप्रभृतीनां सम्पातः समुदायस्तस्मिन् प्रवृत्ते योगाभिमुखे सतीति यावत् किंकृत्वा भगवन्तं प्रत्युक्तवानिति तदाह धनुरिति महीपतिशब्देन राजा प्रज्ञाचक्षुः सञ्जयेन संबोध्यते ॥ २० ॥

तदेव गाण्डीवधन्विनोवाक्यमनुक्रामति सेनयोरिति उभयोरपि सेनयोः सन्निहि-तयोर्मध्ये मदीयं रथं स्थापयेत्यर्ज्जुनेन सारथ्ये सर्व्वेश्वरो नियुज्यते किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगं अनुतिष्ठति युक्तं हि भगवतो भक्तपारवश्यं अच्युतेति सम्बोधन तया भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोती त्युच्यते ॥ २१ ॥

मध्ये रथं स्थापयेत्युक्तं तदेव रथस्थापनस्थानं निर्धारयति यावदिति एतान् प्रति-पक्षत्वेन प्रतिष्ठितान् भीष्मद्रोणादीनस्माभिः सार्द्धं योद्धु मपेक्षावतो यावद्गत्वा निरीक्षितुमहं

### स्वामिकृतटीका।

एतस्मिन् समये श्रीकृष्णमर्जुनो विज्ञापयामासेत्याह अथेत्यादि चतुर्भिश्लोकैः अथेति अयानन्तरं महाशब्दानन्तरं व्यवस्थितान् युद्धोद्योगेऽवस्थितान् कपिध्वजोऽर्जुनः ॥ २० ॥
तदेव वाक्यमाह सेनयोरित्यादि ॥ २१ ॥

### भाषा अनुवाद।

इस समय मे अर्जुन ने श्रीकृष्णजी से जो जनाया सो चार श्लोक से सञ्जय प्रकगट करते हैं कि हे महाराज धृतराष्ट्र इस प्रकार शङ्खध्वनि होनेपर भी तुमारे पुत्र लोगों को युद्ध मे उत्साह देखिकर कपिध्वज अर्जुन ने धनुष चढ़ाय उसकाल भगवान श्रीकृष्णजी से जो वात कही सो आगे कहते हैं ॥ २० ॥

श्रीकृष्णजी से अर्जुनने इतनी ही वात कही कि हे अच्युत दोनो दल के वीचमे मेरे रथ को आप खड़ा करो ॥ २१ ॥

## योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
## धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

आनन्दगिरिकृतटीका ।

ममः स्वां तावति प्रदेशे रथस्य स्थापनं कर्त्तव्यमित्यर्थः किञ्च प्रवृत्ते युद्धप्रारम्भे बहवो राजानोऽस्मिन् युद्धभूमावुपलभ्यन्ते तेषां मध्ये कैः सह मया योद्धव्यं न हि कश्चिदपि मम गतिप्रतिहतिरस्तीत्याह कैर्मयेति ॥ २२ ॥

प्रतियोगिनामभावे कथं तत्र युद्धौत्सुक्यं फलवद्भवेदिति तत्राह योत्स्यमानानिति ये केचिदेते राजानो नानादेशेभ्योऽत्र कुरुक्षेत्रे समवेतास्तानाहं योत्स्यमानान् परिगृहीत प्रहरणोपायानतितरां संग्रामसमुत्सुकानुपलभे तेन प्रतियोगिनां बाहुल्यमित्यर्थः तेषामस्माभिः सह पूर्ववैराभावे कथं प्रतियोगित्वं कल्प्यते तत्राह धार्त्तराष्ट्रस्येति धृतराष्ट्रपुत्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमप्रतिपद्यमानस्य युद्धाय संरम्भं कुर्वतो युद्धे युद्धभूमौ स्थित्वा प्रियं कर्त्तुमिच्छवो राजानः समागता दृश्यन्ते तेन तेषामौपाधिक मस्मत् प्रतियोगित्वमुपपन्नमित्यर्थः ॥ २३ ॥

स्वामिकृतटीका ।

ननु त्वं योद्धा नतु युद्धप्रेक्षकस्तत्राह कैर्मयेत्यादि कैः सह मया योद्धव्यं ॥ २२ ॥

योत्स्यमानानिति धार्त्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्त्तुमिच्छन्तो य इह समागता स्तानहं द्रक्ष्यामि यावत् तावदुभयोः सेनयो र्मध्ये मे रथं स्थापयेत्यन्वयः ॥ २३ ॥

### भाषा अनुवाद ।

जो कहो कि क्या तमासगीर हो तुम तो आप योद्धा औ लड़ने वाले हो इस से सेना के मध्य रथ किस लिये खड़ा किया जायगा इस बात पर कहते हैं कि उतनी देर रथ खड़ा करो जबतक हम देखें कि युद्ध की कामना करिके खड़ी भई सेना के बीच किस के साथ लड़ना हमें उचित हैं और किस के साथ नहीं ॥ २२ ॥

दुर्बुद्धि दुर्योधन का मनोरथ सिद्धकरने के अर्थ जो राजालोग इस युद्ध भूमिपर आयकर इकठठे भये हैं उन को जबतक हम देखें तबलों रथ दोनो सेना के मध्य मे स्थापन करो ॥ २३ ॥

## सञ्जय उवाच ।

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**
**भीष्मद्रोणप्रमुखतः सर्वेषाञ्च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥**

### आनन्दगिरिकृतटीका ।

एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात् तं निवर्त्तयिष्यतीति धृतराष्ट्रस्य मनीषां दुदूषयिषुः सञ्जयो राजानं प्रत्युक्तवानित्याह सञ्जय इति भगवतो हि भूभारापहारार्थं प्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेण स्वाभिसन्धिप्रतिलम्भमार्गस्य परोक्ति मनुकृत्य स्वाभिप्रायानुकूलमनुष्ठानमादर्शयति एवमिति ॥ २४ ॥

भीष्मद्रोणादीनामन्येषाञ्च राज्ञामन्तिके रथं स्थापयित्वा भगवान् किं कृतवानिति तदाह उवाचेति एतानभ्यासे वर्त्तमानान् कुरून् कुरुवंशप्रसूतान् भवद्भिः सार्द्धं युद्धार्थं सङ्गतान् पश्य दृष्ट्वा च यैः सहात्र युयुत्सा तवोपावर्त्तते तैः साकं युद्धं कुरु मोक्षस्त्वेतेषां शस्त्रास्त्रशिक्षावतां महोच्चितामुपेक्षोपपद्यते सारथ्ये तु न मनःखेदनीयमित्यर्थः ॥२५॥

### स्वामिकृतटीका

ततः किं वृत्तं इत्यपेक्षायां सञ्जय उवाच एवमुक्त इत्यादि गुडाका निद्रा तस्या ईशेन जितनिद्रेणार्जुनेन एवमुक्तः सन् हे भारत हे धृतराष्ट्र ॥ २४ ॥

भीष्मेति महीक्षितां राज्ञाञ्च प्रमुखतः सम्मुखे रथं स्थापयित्वा हे पार्थ एतान् कुरून् पश्येति श्री भगवानुवाच ॥ २५ ॥

### भाषा अनुवाद ।

तिस के बाद क्या भया यह कहते हुये सञ्जय बोले कि हे महाराज धृतराष्ट्र अर्जुन की यह प्रार्थना सुनि श्रीकृष्ण जीने दोनो सेना के बीच मे उत्तम रथ को लेजायकर खड़ा किया ॥ २४ ॥

भीष्म द्रोण तथा और और राजावों के सामने रथ को खड़ा करि श्रीभगवान ने कहा कि युद्ध करने के हेतु एकट्ठी हुयी यह कुरु वंशी योंकी सेना को देखो और जिन के साथ युद्ध अनुचित जानि मन मलीन

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान्।
आचार्य्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा।
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि॥ २६॥
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान्।
कृपया परया विष्टो विषीदन्निदमब्रवीत्॥ २७॥

आनन्दगिरिकृतटीका।

एवंस्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य संप्रवृत्तेति कथयति अत्रेत्यादिना सप्तम्या भगवदस्यनुज्ञाने समरसमारम्भाय संवृत्ते सतीत्येतदुच्यते सेनयोरुभयोरपि स्थितान् पार्थोऽपश्यदितिसम्बन्धः अथ शब्दस्तथाशब्दपर्यायः श्वशुराः भार्य्याणां जनयितारः सुहृदो मित्राणि कृतपर्म प्रभृतयः॥ २६॥

सेनाद्वये व्यवस्थितान् यथोक्तान् पितृपितामहादीनालोक्य परमकृपापरवशः सन्नर्जुनो भगवन्तं रक्तवानित्याह तानिति विषीदन् यथोक्तानां पित्रादीनां हिंसा संरम्भनिबन्धनं विषादमुपतापं कुर्वन्नित्यर्थः॥ २७॥

स्वामिकृतटीका।

ततः किंवृत्तमित्याह तत्रेत्यादि पितॄन् पितृव्यानित्यर्थः पुत्रान् पौत्रानिति दुर्य्योधनादीनां ये पुत्राः पौत्राश्च तानित्यर्थः सखीन् मित्राणि सुहृदः कृतोपकारांश्चापश्यत्॥ २६॥

ततः किं कृतवानित्याह तानिति सेनयोरुभयोरेनं समीक्ष्य कृपया महत्या विष्टो व्याप्तोविषण्णः सन्निदमर्जुनोऽब्रवीदित्युत्तरस्याद्वश्लोकस्य वाक्यार्थः आविष्टो व्याप्तः॥ २७॥

भाषा अनुवाद।

भया है तिन के साथ युद्ध कर ना ही पड़ेगा क्योंकि संग्राम में शस्त्रधारी राजों के सामने से हट जाना यह उपहांस अर्थात् लोका मे निन्दा होना क्षत्री के योग्य काम नहीं हैं॥ २५॥

तो वहां पर खड़े हुये चचा दादा आचार्य्य मामा भाई भतीजे पौते नाती औ मित्र बन्धु ससुर सुहृदजनों को दोनो तरफ अर्जुन ने देखा॥२६॥

तब सो कुन्तीपुत्र अर्ज्जुन उन सब बंधुवों को लड़ने के लिये संग्राम

## अर्जुन उवाच ।

**दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान् ।**
**सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ॥ २८ ॥**
**वेपथुश्च शरीरेमे रोमहर्षश्च जायते ।**
**गाण्डीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते ॥ २९ ॥**

### आनन्दगिरिकृतटीका ।

तदेवेदं शब्दराच्यं वचनमुदाहरति दृष्ट्वेति आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति सीदन्तीति देवांशस्यैवार्जुनस्यानात्मविदः स्वपरदेहेष्वात्मात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसङ्गदर्शिनः शोकोमहानासीदित्यर्थः ॥ २८ ॥

अङ्गेषु व्यथा मुखे परिशोषश्चेत्युभयं शोकलिङ्गमुक्तं संप्रति वेपथु प्रभृतीनि भीतिलिङ्गान्युपन्यस्यति वेपथुश्चेति रोमहर्षो रोम्णां गात्रेषु पुलकितत्वं ॥ २९ ॥

### स्वामिकृतटीका ।

किमब्रवीदित्यपेक्षायामाह दृष्ट्वेमानित्यादि यावदध्यायसमाप्ति हेकृष्ण योद्धुमिच्छतः पुरतः सम्यगवस्थितान् स्वजनान् बन्धुजनान् दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्य्यन्ते ॥ २८ ॥

किञ्च वेपथुश्चेत्यादि वेपथुः कम्पः रोमहर्षो रोमाञ्चः स्रंसते निपतति परिदह्यते सर्वतः सन्तप्यते ॥ २९ ॥

### भाषा अनुवाद ।

मे खडे देखि परम कृपा से युक्त अति कातर स्वभाव हो विषाद अर्थात् मन मे दुख करते हुये यह वचन बोले ॥ २७ ॥

तो उस समय अर्जुन ने जो कहा सो सञ्जय कहते हैं कि तब अर्जुन कृष्णसे बोले कि हे श्रीकृष्ण युद्ध की इच्छा करि संग्राम भूमि मे खडे हुए इन स्वजन औ बंधुवों को देखि मेरे हाथ पांव ढीले होगये और सारो शरीर मे पसीना होआया और मुख भी सूखता जाता हैं ॥ २८ ॥

और देह कांपती है रोंवां खडे हो हो उठते औ हाथ से गांडीव धन्वा भी गिरा पडता है सर्वाङ्गग की त्वचा खाल जलीसी जाती है ॥ २९ ॥

नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥
नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।
न कांक्षे विजयं कृष्ण नच राज्यं सुखानि च ॥ ३१ ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा।
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ॥ ३२ ॥

आनन्दगिरिकृतटीका।

किञ्चाधैर्य्यमपि संवृत्तमित्याह नचेति मोहोपि महान् भवतीत्याह भ्रमतीवेति विपरीतनिमित्तप्रतीतेरपि मोहोभवतीत्याह निमित्तानीति तानि विपरीतानि निमित्तानि यानि वामनेत्रस्फुरणादीनि ॥ ३० ॥

युद्धे स्वजनहिंसया फलानुपलम्भादपि तस्मादुपरिरंसा जायत इत्याह नचेति प्राप्तानां युयुत्सूनां हिंसया विजयो राज्यं सुखानि च लब्धुं शक्यानीति कुतो युद्धादुपरतिरित्याशङ्क्याह न कांक्ष इति ॥ ३१ ॥

किमिति राज्यादिकं सर्वाकांक्षितत्वात् न कांक्षसे तेन हि पुत्रभ्रात्रादीनां स्वास्थ्यमाधातुं शक्यमित्याशङ्क्याह किमिति राज्यादीनामाकांक्षणे हेतुमाह येषामिति ॥ ३२ ॥

स्वामिकृतटीका।

अपि च नच शक्नोमित्यादि विपरीतानि निमित्तानि अनिष्टसूचकानि शकुनादीनि पश्यामि ॥ ३० ॥

किञ्च नचेत्यादि आहवे युद्धे स्वजनं हत्वा श्रेयः फलं न पश्यामि विजयादिकं फलं किं न पश्यसीति चेत् तत्राह न काङ्क्ष इति ॥ ३१ ॥

एतदेव प्रपञ्चयति किं नो राज्येन इत्यादि सार्द्धद्वयेन ॥ ३२ ॥

भाषा अनुवाद।

और मेरे अब खडे होने की सामर्थ्य भी नहीं रही मेरा मन भ्रमता और निमित्त अर्थात् असगुन उलटे पुलटे देखता हूं बांई आंख और हाथ भी फरक रहे हैं ॥ ३० ॥

और मै कल्यान नहीं देखता हुं कि स्वजन औ बन्धुवों को संग्राम मे मार के हे कृष्ण नहीं चाहिये हमैं विजय और न राज्य तथा सुख की भी इच्छा हम को नहीं हैं ॥ ३१ ॥

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।
आचार्य्याः पितरः पुत्रास्तथैव च पितामहाः॥ ३३॥
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा।
एतान्नहन्तुमिच्छामि घ्नतोऽपि मधुसूदन॥ ३४॥

आनन्दगिरिकृतटीका।

तानेव विशिनष्टि आचार्य्या इति॥ ३३॥

मातुला इति श्यालाः भार्य्याणां भ्रातरो धृष्टद्युम्नप्रभृतयः बध्येष्वपि स्वराज्यपरिपन्थिष्वाततायिषु कृपाबुद्ध्या स्वधर्मात् पूर्वोक्तमोहादिवशात् प्रच्युतिं प्रदर्शयति एतानिति जिघांसन्तं जिघांसीयादिति न्यायादेतेषां हिंसा न दोषायेत्याशङ्क्याह घ्नतोपीति॥३४॥

स्वामिकृतटीका।

इमे इति यदर्थमस्माकं राज्यादिकमपेक्षितन्ते एते प्राणधनादित्यागमङ्गीकृत्य युद्धार्थमवस्थिताः अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः॥ ३३॥

ननु यदि कृपया त्वमेतान्नहंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान् हत्वा राज्यं भुङ्क्ष्वेति तत्राह एतानित्यादिसार्द्धेन घ्नतोऽपि अस्मान्मारयतोऽपि एतान्॥ ३४॥

भाषा अनुवाद।

हे गोबिन्द हमे राज्य ले कर क्या करना है और सुखभोग होसे वा क्या हैं और संसार मे जीने से भी हमे क्याप्रयोजन हैं कि जिन के वास्ते हम राज्य औ भोग तथा सुख की आकांक्षा करते हैं वेई पाण्डव प्राण धन छोड़कर मेरे सामने संग्राम मे खडे हैं और आचार्य्य पितृ पितामह पुत्र पौत्र आदि सकल देख पड़ते हैं॥ ३२॥ ३३॥

जो कहो कि कृपा करिके चाहो तुम उनको छोड़ो पर वे सब संग्राम मे अव तुम्हे मारें होंगे विन मारे किसी तरह न छोड़ेंगे इस से तुम हीं इन सब को संहार करि राज्य भोग क्यों न करो तो सुनो हे मधुसूदन ये लोग चाहे हमे मारें परन्तु मारते हुये भी मामा नाती पोते भाई भतीजे ससुर सम्बन्धी इन को मारने की इच्छा हम नहीं करते हैं॥ ३४॥

**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ।**
**निहत्य धार्त्तराष्ट्रान्नः का प्रीतिःस्याज्जनार्दन ॥ ३५ ॥**
**पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।**
**तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रन् सबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३६ ॥**

आनन्दगिरिकृतटीका ।

पृथिवी प्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिः समीहितेति कैमुतिकन्यायेन दर्शयति अपीति न हि सहृदपि त्रैलोक्यलक्षणं राज्यं लब्धुं स्वजनहिंसायै मनोमदीयं स्पृहयति पृथिवी प्राप्त्यर्थं पुनर्बन्धुबधं न श्रद्धामीति किं वक्तव्यमित्यर्थः दुर्य्योधनादीनां शत्रूणां निग्रहे प्रीतिप्राप्तिसम्भवाद् युद्धं कर्त्तव्यमित्याशङ्काह निहत्येति ॥ ३५ ॥

यदि पुनरमी दुर्य्योधनादयो न निग्टह्येरन् भवन्तस्तर्हि तैर्निग्टहीता दुःखिताः स्युरित्याशङ्काह पापमेवेति यदिमे दुर्य्योधनादयो निर्दोषानेवस्मान् युद्धभूमौ हन्युस्तदैतानग्निदोगरदश्चेत्यादिलक्षणोमेतानाततायिनो निर्दोषस्वजनहिंसाप्रयुक्तं पापं पूर्वमेव पापिनः समाश्रयेदित्यर्थः अथ वा यद्यप्येते भवन्त्वाततायिनस्तथाप्येतानतिशोच्यान् दुर्य्योधनादीन् हिंसित्वा तत्कृतं पापमस्य नेवाश्रयेदतो नास्माभिरेते हन्तव्या इत्यर्थः अथ वा गुरुभ्रातृसुहृत्प्रभृतीनेतान् हत्वा वयमाततायिनः स्यामः ततश्चैतान् हत्वा तत्कृतं पापमाततायिनोऽस्मानेव समाश्रयेदिति युद्धादुपरमणमस्माकं श्रेयस्करमित्यर्थः फलाभावादनर्थसम्भवाच्च परहिंसा न कर्त्तव्या इत्युपसंहरति तस्मादिति किञ्च राज्यसुखमुद्दिश्य युद्ध-

स्वामिकृतटीका ।

अपीति त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपि हन्तुं नेच्छामि किं पुनर्महीमात्र प्राप्तये इत्यर्थः ॥ ३५ ॥

ननु च अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्र दारापहारी च षड़ेते आततायिनः ॥

भाषा अनुवाद ।

**जिन को हम तीन लोक की राज्य सम्पदा के वास्ते भी मार ने की इच्छा नहीं रखते तो हे जनार्दन केवल पृथिवीभर की राज्य के हेतु दुर्य्योधन आदि को नाश करिके हमारी क्या प्रीति अर्थात् कौन वड़ा कार्य्य सिद्ध होगा इस का तात्पर्य्य यह है कि कुटुम्ब को नाश करि हम को संसार का कोई सुख नहीं हैं ॥ ३५ ॥**

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्॥ ३७॥

आनन्दगिरिकृतटीका।

सुपक्रंस्यते न च स्वजनपरिक्षये सुखमुपपद्यते तेन न कर्त्तव्यं युद्धमित्याह स्वजनं हीति॥ ३६॥

कथं तर्हि परेषां कुलक्षये स्वजनहिंसायाञ्च प्रवृत्तिस्तत्राह यद्यपीति लोभोपहत-बुद्धित्वात् तेषां कुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात् प्रवृत्तिविस्रम्भः सम्भवतीत्यर्थः॥ ३७॥

स्वामिकृतटीका।

इति अग्न्यादग्निदाहादिभिः षड्भिर्हेतुभिरेते तावदाततायिनः आततायिनाञ्च-वधो युक्त एव आततायिनमायान्तं हन्यादेवाविचारयन् नाततायिवधे दोषो हन्तुर्भवति कश्चनेति वचनात् तत्राह पापमेवेत्यादि सार्द्धे। आततायिनमायान्तमित्यादिकमर्थशास्त्रं तच्च धर्मशास्त्रात् तु दुर्बलं यथोक्तं याज्ञवल्क्येन स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यव-हारतः अर्थशास्त्रात् तु बलवद्धर्मशास्त्रमिति स्मृतिः इति तस्मादाततायिनामप्येतेषा-माचार्य्यादीनां वधेऽस्माकं पापमेव भवेत् अन्याय्यत्वात् अधर्मत्वाच्चैतद्वधस्य अमुत्र चेह वा न सुखं स्यात् इत्याह स्वजनं हीति॥ ३६॥

भाषा अनुवाद।

जो कहो कि घर मे आग लगावे या विष पिलाय कर मारे अथवा बध कर ने को खड्ग उठावे और धन हरन करे या भूमि छीन ले और स्त्री हरिलेने वाला ये छवो आततायी कहाते हैं इन के मारने मे दोष नहीं है ऐसा शास्त्र अर्थात् नीति मे लिखा है इस बातपर अर्जुन उत्तर देते हैं कि यह आप की अभिप्राय केवल नीति युक्त है परन्तु धर्मशास्त्र की अपेक्षा यह नीतिपक्ष दुर्बल है याज्ञवल्कने कहा है कि नीति औ धर्म का जहां विरोध हो तहां स्मृति मूलक युक्ति वलवती है और अर्थ शास्त्र से धर्मशास्त्र प्रवल है इस मे आततायि स्वरूप आचार्य्य आदिक को नाश करने से हम को अवश्य महा पाप होगा और इन लोगों का बध अयोग्य औ अधर्म तथा लोक परलोक मे अयश औ दुःख का मूल है तो कहो हे माधव हम अपने स्वजनों को विनाश करिके कैसे सुखी होंगे इस से बन्धुसमेत धृतराष्ट्र के पुत्रों को मारने को मेरी सामर्थ नहीं है॥ ३६॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम्।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३८ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥

आनन्दगिरिकृतटीका।

परेषामिवास्माकमपि प्रवृत्तिविम्भ्रमः सम्भवेदिति चेन्नेत्याह कथमिति कुलक्षयेति कुलक्षये मित्रद्रोहे च दोषं प्रपश्यद्भिरस्माभिस्तद्दोषशब्दितं पापं कथं न ज्ञातव्यं तदज्ञाने तत्परिहारासम्भवादतोऽस्मात् पापान्निवृत्त्यर्थं तज्ज्ञानमपेक्षितमिति पापपरिहारार्थिना-मस्माकं न युक्ता युद्धे प्रवृत्तिरित्यर्थः ॥ ३८ ॥

स्वामिकृतटीका।

ननु चैतेषामपि बन्धुवधो दोषे समाने यथैवेते बन्धुवधमङ्गीकृत्यापि युद्धे प्रवर्त्तन्ते तथैव भवानपि प्रवर्त्ततां किमनेन विषादेनेत्याह यद्यपीति द्वाभ्यां राजलोभेनोपहतं भ्रष्टविवेकं चेतो येषान्ते एते दुर्य्योधनादयो यद्यपि दोषं न पश्यन्ति ॥ ३७ ॥

कथमिति तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात् पापान्निवर्त्तितुं न ज्ञेयं निवृत्ता वेव-बुद्धिः कर्त्तव्येत्यर्थः ॥ ३८ ॥

भाषा अनुवाद।

जो कहो कि यह वात तो दोनो ओर समान हैं परन्तु वे लोग इस को न मानि के जैसे युद्ध कर ने को तयार खड़े हैं तैसे तुम भी इन के साथ संग्राम करो इस वात मे षेद करने का क्या प्रयोजन है इस वात पर कहते हैं कि राज्य के लोभ से विचार रहित दुर्य्योधन आदि कुलक्षयकृत दोष औ मित्र द्रोह से जो पातक अशुभ रूप तिस को नही देखते और नही गिनते हैं ॥ ३७ ॥

तौभी हे जनार्दन हम लोग कुलक्षयकृत दोष को जानि बूझ के इस महा पाप से क्यों न शान्त होंय अर्थात् हम को युद्ध से निवृत्त होना ही उचित है ॥ ३८ ॥

# अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
# स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४० ॥
# सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
# पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया: ॥ ४१ ॥

आनन्दगिरिकृतटीका ।

कोऽसौ कुलक्षये दोषो यद्दर्शनाद्युष्माकं युद्धादुपरतिरपेक्ष्यते तत्राह कुलेति कुलस्य हि क्षये कुलसम्बन्धिनश्चिरन्तना धर्मास्तत् तदग्निहोत्रादिक्रियासाध्या नाशमुपयान्ति कर्तुरभावादित्यर्थः धर्मनाशेपि किं स्यादिति चेत् तत्राह धर्मइति कुलप्रयुक्ते धर्मे कुलनाशादेव नष्टे कुलक्षयकरस्य कुलपरिशिष्टमखिलमपि तदीयोऽधर्मोऽभिभवत्यधर्मभूयिष्ठं तस्य कुलं भवतीत्यर्थः ॥ ३९ ॥

कुलक्षयकृतेऽवशिष्टकुलस्याधर्मप्रवणत्वे को दोषः स्यादिति तत्राह अधर्मेति पापप्रचुरे कुले प्रसूतानां स्त्रीणां प्रदुष्टत्वे किं प्रदुष्यति तत्राह स्त्रीष्विति ॥ ४० ॥

वर्णसङ्करस्य दोषपर्य्यवसायितामादर्शयति सङ्कर इति कुलक्षयकराणां दोषान्तरं सञ्चिनोति पतन्तीति कुलक्षयकृतां पितरो निरयगामिनः सम्भवन्तीत्यत्र हेतुमाह लुप्तेति पुत्रादीनां कर्तृणामभावात् लुप्ता पिण्डस्योदकस्य च क्रिया येषान्ते तथा ततश्च प्रेतत्वपराहत्तिकारणाभावान्नरकपतनमेवावश्यकमापद्येतेत्यर्थः ॥ ४१ ॥

स्वामिकृतटीका ।

तमेव दोषं दर्शयति कुलक्षय इत्यादि सनातनाः परम्पराप्राप्ताः उत अपि अवशिष्टं कृत्स्नमपि कुलं अधर्मोऽभिभवति प्राप्नोतीत्यर्थः ॥ ३९ ॥

ततश्च अधर्माभिभवादित्यादि ॥ ४० ॥

एवं सति सङ्कर इत्यादि एषां कुलघ्नानां पितरः पतन्ति हि यस्मात् लुप्ताः पिण्डोदकक्रियाः येषान्ते तथा ॥ ४१ ॥

## भाषा अनुवाद ।

सोई कुलक्षयकृत दोष कहते हैं कि कुलक्षय करने से सनातन जो कुलधर्म सो नष्ट होता है और धर्म की हानि होने से बाकी जो कुल उसे अधर्म ग्रसि लेता है ॥ ३९ ॥

अधर्म के जोर से कुल की कामिनी सब भ्रष्टआचारनी होती हैं और स्त्रियों के दुष्ट आचरन करने से वरनसङ्कर पैदा होते हैं ॥ ४० ॥

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥

आनन्दगिरिकृतटीका।

कुलक्षयकृतामेतैरुदाहृतैर्दोषैः वर्णसङ्करहेतुभिर्जातिप्रयुक्ताश्च धर्माः सर्वे समुत्साद्यन्ते तेन कुलक्षयकारणाद्युद्धादुपरतिरेव श्रेयसीत्याह दोषैरिति ॥ ४२ ॥

किञ्च जातिधर्मेषु कुलधर्मेषु च उत्सन्नेषु तत्तद्धर्मवर्जितानां मनुष्याणामजितेन्द्रियाणां नरकपतनध्रौव्यादनर्थकरमिदमेव हेयमित्याह उत्सन्नेति तथोक्तानां मनुष्याणां नरकपातस्यावश्यकत्वे प्रमाणमाह इत्यनुशुश्रुमेति ॥ ४३ ॥

स्वामिकृतटीका।

उक्तं दोषमुपसंहरति दोषैरित्यादि द्वाभ्याम् उत्साद्यन्ते लुप्यन्ते जातिधर्मा वर्णधर्माः कुलधर्माश्चेति चकारादाश्रमधर्मादयोऽपि गृह्यन्ते ॥ ४२ ॥

उत्सन्नेति उत्सन्नाः कुलधर्माः येषामिति उत्सन्नजातिधर्मादीनामप्युपलक्षणम् अनुशुश्रुम श्रुतवन्तो वयं प्रायश्चित्तमकुर्वाणाः पापेष्वभिरता नराः अपश्चात्तापिनः पापाश्चिरयान् यान्ति दारुणानित्यादि वचनेभ्यः ॥ ४३ ॥

भाषा अनुवाद।

तो फिरि वरनसङ्कर कुलघातियों के कुल को नरक का हेतु हो ते हैं और उस कर्म से कुल नाश कों के पितर पिण्डा पानी से रहित हो नरक मे पड़ ते हैं ॥ ४१ ॥

कुलघातियों के वरनसङ्कर करनेवाले इन सब दोषों से सनातनी जातिधर्म औ कुलधर्म आश्रमधर्म सब उच्छिन्न होजाते हैं इस से कुल नाशकारी युद्ध से निवृत्त होनाही मेरे जान परम कल्याण है ॥ ४२ ॥

और हे जनार्दन जिन मनुष्यों के कुलधर्म औ जातिधर्म उच्छिन्न होगये उन को निरन्तर घोर नरक मे वास करनी होती है यह मैंने पुराण इतिहास और धर्मशास्त्र मे सुना है ॥ ४३ ॥

**अहो वत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्य सुखलोभेन हन्तुं स्वजनमुद्यता: ॥ ४४ ॥**
**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणय: ।**
**धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥**

आनन्दगिरिकृतटीका ।

राज्यप्राप्तिप्रयुक्त सुखोपभोगलब्धतया स्वजनहिंसायां प्रवृत्तिरस्माकं गुणदोषविभाग-विज्ञानवतामतिकष्टेति परिभ्रष्टहृदय: सन्नाह अहोवतेति ॥ ४४ ॥

तदेवं युद्धे विमुख: सन् परपरिभवप्रतीकाररहितोवर्त्तेथास्तर्हि त्वां शस्त्रपरिग्रह-रहितं शत्रव: शस्त्रपाणयो धार्त्तराष्ट्रा निश्चीयुरित्याशङ्क्याह यदीति प्राणत्राणादपि प्रकृष्टो धर्म: प्राणभृतामहिंसेति भाव: ॥ ४५ ॥

स्वामिकृतटीका ।

बन्धुवधाध्यवसायेन सन्तापमान आह अहोबतेत्यादि स्वजनं हन्तुमुद्यता इति यत् एतन्महत् पापं कर्तुमध्यवसायात् कृतवन्तो वयम् अहोबत इत्कष्टमित्यर्थ: ॥ ४४ ॥

एवं सन्तप्त: सन् मृत्युमेवाशंसमान आह यदि मामित्यादि अकृतप्रतीकारं दृष्टा तूष्णीमुपविष्टं मां यदि हनिष्यन्ति तर्हि तद्धननं मम क्षेमतरम् अत्यन्तहितं भवेत् पापा-निष्पत्ते: ॥ ४५ ॥

## भाषा अनुवाद ।

देखो गुण दोष के विशेष ज्ञानवान होके भी जो हम राज्य सुख के लोभ से स्वजन औ बन्धुलोगों को संग्राम मे मारने को तयार होगये कि ऐसे महापापकर्म करने का उद्योग किया हाय हाय यह बड़ा कष्ट और विषाद भया कि बन्धुवों के बध से महापाप छोड और कहो क्या हाथ-लगना है ॥ ४४ ॥

और जो कहो कि युद्ध से विमुख वेहथियार तुम को संग्राम मे धृतराष्ट्र के पुत्र सिफारसा पीटलेंगे तो उन का वह मारना और मेरा मरना मेरे वास्ते कल्याणकारी होगा कि जिस मे पाप का सञ्चार भी नहीं है ॥ ४५ ॥

## सञ्जय उवाच ।

**एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाऽविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सैन्यदर्शनो नाम प्रथमोऽध्यायः ॥ १ ॥**

आनन्दगिरिकृतटीका ।

अथोक्तमर्जुनस्य वृत्तान्तं सञ्जयो धृतराष्ट्रं राजानं प्रतिप्रवेदितवान् तस्यैव प्रवेदनप्रकारं दर्शयति एवमिति प्रदर्शितेन प्रकारेण भगवन्तं प्रतिविज्ञापनं कृत्वा शोकमोहाभ्यां परिभूतमानसः सन्नर्जुनः संख्ये युद्धमध्ये शरेण सहितं गाण्डीवं त्यक्त्वा न योत्स्येऽहमिति ब्रुवन् मध्ये रथस्य सन्न्यासमेव श्रेयस्करं मत्वोपविष्टवानित्यर्थः ॥ ४६ ॥

इति आनन्दगिरिटीकायां प्रथमोऽध्यायः ॥ १ ॥

स्वामिकृतटीका ।

ततः किं वृत्तमित्यपेक्षायां सञ्जय उवा च एवमुक्त्वेत्यादि संख्ये संग्रामे रथोपस्थे रथस्योपरि उपाविशत् उपविवेश शोकेन संविग्नं प्रकम्पितं मानसं चित्तं यस्य स तथा ॥४६॥

इति श्रीधरस्वामिकृतायां प्रथमोऽध्यायः ॥ १ ॥

**भाषा अनुवाद ।**

अर्जुन का वृत्तान्त धृतराष्ट्र से सञ्जय कहतेभये कि हे राजन धृतराष्ट्र फिर ता अर्जुन श्री भगवान से ऐसी बातें कहिकरके और भी शोक सन्ताप से व्याकुल औ पीड़ितमन महाउदास जय की आस से निरास हो हाथ से धन्वा बान को भी त्याग कर रथ के उपर बैठ गये ॥ ४६ ॥

इति श्रीभगवद्गीतायां कान्य कुब्ज जगन्नाथ शुक्ल विरचितायां मनभावनीनाम टीकायां श्रीकृष्णार्जुनसंवादे सैन्यदर्शना नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

### सञ्जय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

आनन्दगिरिकृतटीका ।

अहिंसा परमो धर्मो भिक्षाशनञ्चेत्येवं लक्षणयाबुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यैश्वर्य्यमप्रचलितमवधार्य्यस्वस्थहृदयं धृतराष्ट्रं दृष्ट्वा तस्य दुराशामपनेष्यामीति मनीषया सञ्जयस्तं प्रत्युक्तवानित्याह सञ्जय इति परमेश्वरेण स्मार्य्यमाणोऽपि कृत्याकृत्ये सहसा नार्जुनः सस्मार विपर्य्ययप्रयुक्तस्य शोकस्य दृढ़तरमोहहेतुत्वात् तथापि तं भगवान्नोपेक्षितवानित्याह तं तथेति तं प्रकृतं पार्थं तथा स्वजनमरणप्रसङ्गदर्शनेन कृपया करुणया विष्टमधिष्ठितमश्रुभिः पूर्णे समाकुले चेक्षणे यस्य तम् अश्रुव्याप्ततरत्वाच्च विषीदन्तं शोचन्तमिदं वक्ष्यमाणं वाक्यं सोपपत्तिकं वचनं मधुनामानमसुरं सूदितवानिति मधुसूदनो भगवानुक्तवानतु यथोक्तमर्जुनमुपेक्षितवानित्यर्थः ॥ १ ॥

स्वामिकृतटीका ।

द्वितीये शोकसन्तप्तमर्जुनं ब्रह्मविद्यया । प्रतिबोध्य हरिश्चक्रे स्थितप्रज्ञस्य लक्षणम् ॥
ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच तं तथेति अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तं तथा उक्तप्रकारेण विषीदन्तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच ॥ १ ॥

भाषा अनुवाद ।

अहिंसा परम धर्म है इस से भिक्षा करि निर्वाह करना उचित है सञ्जय के मुख से ऐसी बातें अर्जुन की कही सुनि और युद्ध से विमुख जानि अपने पुत्रों का अचल राज्य मानि मन प्रसन्न स्वस्थ हृदय राजा धृतराष्ट्र को देखि फेरि सञ्जय धृतराष्ट्र की उस दुष्ट आशा को दूर करते हुए

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन॥ २॥
मा क्लैब्यं गच्छ कौन्तेय नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप॥ ३॥

आनन्दगिरिकृतटीका।

किं तद्वाक्यमित्यपेक्षायामाह श्रीभगवानिति कुतो हेतोस्त्वा त्वां सर्वक्षत्रियप्रवरं कश्मलं मलिनं शिष्टगर्हितं युद्धात् पराङ्मुखत्वं विषमे सभयस्थाने समुपस्थितं प्राप्त-मनार्य्यैः शास्त्रार्थमविद्भिर्जुष्टं सेवितमस्वर्ग्यं स्वर्गानर्हं प्रत्यवायकारणमिह चाकीर्त्तिकर-मयशस्करमर्जुननाम्ना प्रख्यातस्य तव नैतत् युक्तमित्यर्थः॥ २॥

पुनरपि भगवानर्जुनं प्रत्याह क्लैब्यमिति क्लैब्यं क्लीवभावमधैर्य्यं मास्मगमः मागाः हे पार्थ पृथातनय न हि त्वयि महेश्वरेणापि कृताहवे प्रख्यातपौरुषे महामहिमन्येतदुप-पद्यते क्षुद्रं क्षुद्रत्वकारणं हृदयदौर्बल्यं मनसो दुर्बलत्वमधैर्य्यं त्यक्त्वोत्तिष्ठ युद्धायोपक्रमं कुरु हे परन्तप परं शत्रुं तापयतीति तथा संबोध्यते॥ ३॥

स्वामिकृतटीका।

तदेव वाक्यमाह कुत इति कुतो हेतोस्त्वा त्वां विषमे सङ्कटे इदं कश्मलमुपस्थितमयं मोहः प्राप्तो यत आर्य्यैरसेवितमस्वर्ग्यमधर्म्यमयशस्करञ्च॥ २॥

भाषा अनुवाद।

यह बोले कि हे राजन् इस प्रकार कृपायुक्त अश्रुधारा पूर्ण लोचन विषाद करते हुये अर्जुन से दुखमोचन श्रीभगवान ब्रह्मविद्या जो ज्ञान तिस से प्रबोध करत यह वचन कहते भये॥ १॥

अर्जुन को कातर देखि यह वचन श्रीकृष्ण बोले कि हे अर्जुन ऐसे अ समय मे लड़ाइ के बीच मूरख कायर शास्त्रहीन मनुष्योंके योग्य जो लो क मे दुर्यश करनेवाला कर्म हैं और अस्वर्ग्य जिस से स्वर्ग जाय और नरक मिले ऐसा कश्मल कहे मोह अर्जुन इस नाम से भूतल मे प्रसिद्ध वीर तुम ऐसे को आयकर प्राप्त हुआ यह बड़ाही आचरज हैं॥ २॥

कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

आनन्दगिरिकृतटीका ।

एवं भगवता प्रतिबोध्यमानोऽपि शोकाभिभूतचेतस्त्वादप्रतिबुध्यमानः सन्नर्जुनः स्वाभिप्रायमेव प्रकृतं भगवन्तं प्रत्युक्तवान् कथमित्यादिना भीष्मं पितामहं द्रोणं द्रोणाचार्य्यं संख्ये रणे हे मधुसूदन इषुभिः यत्र वा चापि योत्स्यामीति वक्तुमनुचितं तत्र कथं बाणैर्योत्स्य इति भावः सायकैस्ते कथं प्रतियोत्स्ये तौ हि पूजार्हौ कुसुमादिभिरर्चनयोग्यौ हे अरिसूदन सर्वानेवारीन् यत्नेन सूदितवानिति भगवानेवं संबोध्यते ॥ ४ ॥

स्वामिकृतटीका

मा क्लैब्यमिति तस्मात् हे पार्थ क्लैव्यं कातर्य्यं मागच्छ न प्राप्नुहि यतस्त्वय्येतन्नोपपद्यते योऽग्यं न भवति क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्य्यं त्यक्त्वा युद्धायोत्तिष्ठ हे परन्तप शत्रुतापन् ॥ ३ ॥

नाहं कातरत्वेन युद्धादुपरतोऽस्मि किन्तु युद्धस्यान्याय्यत्वादधर्मत्वाच्चेत्याह अर्जुन उवाच कथमिति भीष्म द्रोणौ पूजार्हौ पूजायामर्हौ योग्यौ तौ प्रतिकथमहं योत्स्यामि तत्रापीषुभिर्यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र बाणैः कथं योत्स्यामीत्यर्थः हे अरिसूदन शत्रुविमर्दन ॥ ४ ॥

भाषा अनुवाद ।

फेर भी भगवान अर्जुन से कहते हैं कि हे परन्तप शत्रुसंहार करने वाले अर्जुन हे कौन्तेय कुन्तीपुत्र वीरभाव छोड इस क्लीव कहे नपुंसक के भाव को न गहो यह तुमारे योग्य नहीं हैं इस आचरन मे तुमारी शोभा जगत मे कुछ नहीं है इस से इस क्षुद्र कहे तुच्छ हृदयको दुर्व्वलता कहे कादर पन को छोड़ कर उठो और धीरज धरि समैके अनुसार कार्य करो कुन्तीपुत्र सम्बोधन से जनाया कि मातृस्वभाव कन्या को होता पुत्र को पितृस्वभाव ही उचित है और परन्तप कह कर सोचाया कि उठकर शत्रुवों को मार लो तुम अनेक वार संग्राम मे जय प्राय चुके हो ॥ ३ ॥

गुरून् हत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

आनन्दगिरिकृतटीका।

राज्ञां धर्मेऽपि युद्धे गुर्वादिवधे दृष्टिमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते गुरूनिति गुरून् भीष्म द्रोणादीन् आचार्यादींश्चात्र ग्राह्यान् अहिंसित्वा महानुभावान् महामाहात्म्यान् श्रुताध्ययनसम्पन्नान् श्रेयः प्रशस्ततरं युक्तं भोक्तुमभ्यवहर्तुं भैक्ष्यं भिक्षाणां समूहं भिक्षाशनं नृपादीनां निषिद्धमपि इहलोके व्यवहारभूमौ नहि गुर्वादि हिंसया राज्य भोगोऽपेक्ष्यते किञ्च हत्वा गुर्वादीनर्थकामानेव भुञ्जीय नमोक्षमनुभवेयमिहैव भोगो न स्वर्गे अर्थकामानेव विशिनष्टि भोगानिति भुज्यत इति भोगास्तान् रुधिरप्रदिग्धान् लोहित-लिप्तानिवात्यन्तगर्हितानतो भोगान् गुरुवधादिसाध्यान् परित्यज्य भिक्षाशनमेव युक्त-मित्यर्थः ॥ ५ ॥

स्वामिकृतटीका।

तर्हि तानहत्वा तव देहयात्रापि न स्यादिति चेत् तत्राह गुरूनिति गुरून् द्रोणा-चार्यादीनहत्वा परलोकविरुद्धं गुरुवधमकृत्वेह लोके भिक्षान्नमपि भोक्तुं श्रेय उचितं विपक्षे तु न केवलं परत्र दुःखं किन्त्विहैव च नरक दुःखमनुभवेयमित्याह हत्वेति गुरून्

भाषा अनुवाद।

इस प्रकार भगवत से प्रबोध कराये भी गये अर्जुन तौभी शोकग्रस्त अपने मन का मनोरथ प्रकाश करते हुये कृष्ण भगवान से फेर कहने लगे कि हे मधुसूदन पूजा करने के योग्य जो भीषपितामह और द्रोणाचार्य्य तिन से संग्राम मे बाणों से कैसे युद्ध करें औ उनको मारें कि जिन से वचन के द्वारा भी संग्राम करने की बात नहीं कर सकते हैं हे अरिसूदन कहे शत्रुनाशन अभिप्राय यह कि यत्न कहें उपाय से शत्रुनाश करने वाले ॥ ४ ॥

फेर भी अर्जुन कहते हैं कि यद्यपि युद्ध करना राजों का धर्म है तौभी

नचैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषामस्ते
ऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः॥ ६॥

आनन्दगिरिकृतटीका।

क्षत्रियाणां स्वधर्मत्वाद्युद्धमेव श्रेयस्करमित्याशङ्क्याह नचैतदिति एतदपि न जानीमो भैक्ष्ययुद्धयोः कतरं नोऽस्माकं गरीयः श्रेष्ठं किं भैक्ष्यं हिंसाशून्यत्वादुतयुद्धं स्वधर्मत्वा-दिति सन्दिग्धा च जयस्थितिः किं साम्यमेवोभयेषां यद्वा वयं जयेमातिशये न हि यदि वा नोऽस्मान् धार्त्तराष्ट्रा दुर्य्योधनादयो जयेयुः जातोऽपि जयो न फलवान् यतो यान्

स्वामिकृतटीका।

हत्वेहैव रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तान् अर्थकामात्मकान् भोगान् भुञ्जीयाथवीयां यद्वा अर्थकामानिति गुरूणां विशेषणम् अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्त्तेरंस्तस्माद्-तद्वधः प्रसज्यतैवेत्यर्थः तथा च युधिष्ठिरं प्रति भीष्मेणोक्तम् अर्थस्य पुरुषो दासो दास-स्त्वर्थो न कस्यचित् इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैरिति॥ ५॥

भाषा अनुवाद।

लोभ से जीविकाही के अर्थ वे अनर्थ रूप पाप करते हैं और जो कहो कि इन लोगों को विना मारे तुमारी देहयात्रा कहे जीवनवृत्ति भोजन वस्त्र भी न चलेगा तो निर्व्वाह कहो कैसे संसारमे होगा इस वातपर कह ते हैं कि जिस लिये महा अनुभाव महात्मा गुरू लोगों को न मार के भी धमांग कर खाना भी मेरे जान लोक मे श्रेय कहे अति उत्तम कल्यान है और नहीं गुरू आदि वडे लोगों को मारि कर उनके लोहू से लपेटे भोग हम चाहते हैं क्योंकि जो कहो कि परलोक मे जो होगा सो होगा किस ने देखा है तो परलोक ही मे दुःख नही हैं यहां भी दुर्यश औ सन्तापरूप दुःख है और जो कहो कि लोक मे तो सुख मिलेगा तो तुच्छ सुख के हेतु मुक्ति और स्वर्गलोक मे यश कौन ऐसा मूढ़ है जो छोड़ेगा॥ ५॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसम्मूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

आनन्दगिरिकृतटीका ।

बन्धून् हत्वा न जिजीविषामो जीवितुं नेच्छामस्ते एवावस्थिताः प्रमुखे सम्मुखे धार्त्त-राष्ट्रा धृतराष्ट्रस्यापत्यानि तस्माद्भैक्ष्याद्युद्धस्य श्रेष्ठत्वं न सिद्धमित्यर्थः ॥ ६ ॥

समधिगतसंसारदोषजातस्यातितरां निर्विस्स्य मुमुक्षोरुपसन्नस्यात्मोपदेशसंग्रहणेऽधि-कारं सूचयति कार्पण्येति योऽल्पां स्वल्पामपि स्वक्षतिं न क्षमते स कृपणस्तद्विधेत्वा दखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतया कृपणो भवति यो वा एतदक्षरं गार्ग्यविदित्वा स्माल्लोकात् प्रैति स कृपण इति श्रुते तस्य भावः कार्पण्यं दैन्यं तेन दोषेणापहृतो दूषितः स्वभावश्चित्तमस्येति विग्रहः सोऽहं पृच्छाम्यनुयुञ्जे त्वा त्वां धर्मं संमूढचेताः धर्मो धार-

स्वामिकृतटीका ।

किञ्च यद्यधर्ममङ्गीकरिष्यामस्तथापि किमस्माकं जयः पराजयौ वा गरीयान् भवे-दिति न ज्ञायत इत्याह नचैतद्विति द्वयोर्मध्ये नोऽस्माकं कतरत् किन्नाम गरीयोऽधिक-तरं भविष्यतीति न विद्मः तदेव द्वयं दर्शयति यद्वा एतान् वयं जयेम जेष्यामः यदि वा नोऽस्मनेते जयेयुर्जेष्यन्तीति किन्त्वाऽस्माकं जयोऽपि फलतः पराजय एवेत्याह यानिति यानेव हत्वा जीवितुं नेच्छामस्त एवैते सम्मुखेऽवस्थिताः ॥ ६ ॥

भाषा अनुवाद ।

और जो हम अधर्म अङ्गीकार करें तौभी तो हमारी जय या परा जय होगी औ यह भी हम नहीं जानते हैं कि दोनों मे से क्या होगा सोई कहते हैं कि होय तो हम रण मे उन को जीतलें नतुवा वेई सब हमै जीतें परन्तु हमारी जीत होने से भी बिचार कर देखो कि वह हमारी हारही है क्योंकि जिन को नाश करि के हम फिर संसार में प्राण धारण करना नहीं चाहते हैं सोई धृतराष्ट्र के पुत्र सब रणभूमि मे हमारे सामने युद्ध करने के अर्थ तयार खड़े हैं ॥ ६ ॥

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

आनन्दगिरिकृतटीका ।

यतीति परं ब्रह्म तस्मिन् संमूढमविवेकतां गतं चेतो यस्य ममेति तथाहमुक्तः किं पृच्छसि यन्निश्चितमैकान्तिकमनापेक्षिकं श्रेयः स्यान्न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं वा तन्निःश्रेयसं मे मह्यं प्रब्रूहि नापृच्छायाशिष्यायेति निषेधात् न प्रवक्तव्यमिति मावमंस्थाः यतः शिष्यस्तेऽहं भवामि शाध्यनुशाधि मां निःश्रेयसं त्वामहं प्रपन्नोऽस्मि ॥ ७ ॥

स्वामिकृतटीका ।

कार्पण्येत्यादि तस्मादेतान् हत्वा कथं जीविष्याम इति कार्पण्यं दोषः कुलक्षयकृतः ताभ्यामुपहतोऽभिभूतः स्वभावः शौर्यलक्षणो यस्य सोऽहं त्वां पृच्छामि तथा धर्मे संमूढं चेतो यस्य सः युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मोऽधर्मो वेति सन्दिग्धचित्तः सन्नित्यर्थः अतो मे यन्निश्चितं श्रेयः स्यात् तद्ब्रूहि किञ्च तेऽहं शिष्यः शासनार्होऽतस्त्वां प्रपन्नं शरणङ्गतं मां शाधि शिक्षय ॥ ७ ॥

भाषा अनुवाद ।

इन कुटुम्ब के लोगों का बध करिके अपने प्राण हम कैसेकरि राखेंगे इस चिन्ता को कार्पण्य कहते और दोष जो कुलक्षयकृत पाप हैं यही दोनों बातों से हमारी शूरता नष्ट होगई इस से धर्म विचार में हमारी बुद्धि भ्रष्ट हैं कि संग्राम छोड़ भिक्षान्न भोजन करना क्षत्रिय को उचित कि अनुचित इस सन्देह से व्याकुल हो हम आप से पूछते हैं कि जिस से अत्यन्त परम कल्यान हमारा हो सो उपाय आप कृपा करि के कहो क्योंकि हम आप के शिष्य औ शरणागत हैं तो शरणागत पर दया करना महात्मा पुरुषों को उचित है ॥ ७ ॥

## सञ्जय उवाच।

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह॥ ९॥**

आनन्दगिरिकृतटीका।

कुतो निःश्रेयसमवेच्छसि तत्राह नहीति तस्मान्न प्रपश्यामि किं न प्रपश्यसि यमामसुख्यादपनयेत् यच्छोकमुच्छोषणं प्रतपनमिन्द्रियाणां तन्न पश्यामि ननु शत्रून्निहत्य राज्यं प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह अवाप्येति अविद्यमानः सपत्नः शत्रुर्यस्य तदुक्तं राज्यं राज्ञः कर्म प्रजारक्षणप्रशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयकारणं न पश्यामीत्यर्थः तर्हि देवेन्द्रत्वादिप्राप्तौ शोकापनयस्ते भविष्यति नेत्याह सुराणामपीति तेषामाधिपत्यम् अधिपतित्वं स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छेदित्यर्थः॥ ८॥

एवमर्जुनेन स्वाभिप्रायं भगवन्तंप्रति प्रकाशितं सञ्जयो राजानमावेदितवानित्याह सञ्जय इति एवं प्रागुक्तप्रकारेण भगवन्तं प्रत्युक्त्वा परन्तपोऽर्जुनो न योत्स्ये न सम्प्रहरिष्ये अत्यन्तासह्यशोकप्रसङ्गादिति गोविन्दमुक्त्वा तूष्णीमब्रुवन् बभूव किलेत्यर्थः॥ ९॥

स्वामिकृतटीका

त्वमेव विचार्य्य यद्युक्तं तत् कुर्विति चेत् तत्राह न हि प्रपश्यामीति इन्द्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत्कर्म अपनुद्यादपनयेत् तदहं न पश्यामीति यद्यपि भूमौ निष्कण्टकं समृद्धं राज्यं प्राप्स्यामि तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि एवमभीष्टं तत् सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यर्थः॥ ८॥

एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायां सञ्जय उवाच एवमिति॥ ९॥

भाषा अनुवाद।

जो कहो कि तुम क्यों न विचार कर के जो करने योग्य होय सो करो तिस पर कहते हैं कि इन्द्रियों की चैतन्य शक्ति का नाश करने वाला जो यह शोक हम को आयके प्राप्त भया है सो किसी उपायसे दूर होगा यह हम किसी भांति नहीं देखते हैं और यद्यपि हम निष्कण्टक पृथिवीभर का राज्य करें या देवाधिपत्य कहे स्वर्ग को राज्य इन्द्रपद प्राप्त करें तौभी इस शोक सागर के पार जाने की कोई उपाय हम नहीं देखते हैं॥ ८॥

तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः॥ १०॥

श्रीभगवानुवाच।

## शाङ्करभाष्यम्।

दृष्ट्वा तु पाण्डवानीकमित्यारभ्य न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव हेत्येतदन्तः प्राणिनां शोकमोहादिसंसारदुःखबीजभूतदोषोद्भवकारणहेतुप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थस्तथा ह्यर्जुनेन राज्य गुरु पुत्र मित्र सुहृत् स्वजनसम्बन्धिबान्धवेष्वहमेषां ममैते इत्येवं भ्रान्तिप्रत्ययनिमित्त स्नेहविच्छेदादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ कथं भीष्ममहं सङ्ख्ये

## आनन्दगिरिकृतटीका।

तमर्जुनं सेनयोर्वाहिन्योरुभयोर्मध्ये विषीदन्तं विषादं कुर्वन्तमतिदुःखितं शोकमोहाभ्याम् अभिभूतं स्वधर्मात् प्रच्युतप्रायं प्रतीत्य प्रहसन्निवोपहासं कुर्वन्निव तदाश्वासार्थं हे भारत भारतान्वय इत्येवं संबोध्य भगवानिदं प्रश्नोत्तरं निःश्रेयसाधिगमसाधनं वचनमुचिवानित्याह तमुवाचेति॥ १०॥

## स्वामिकृतटीका।

ततः किं वृत्तमित्यत आह तमुवाचेति प्रसन्नमुखः सन्नित्यर्थः॥ १०॥

## भाषा अनुवाद।

इस प्रकार की बातें भगवान से कहकर अर्जुन ने फिर क्या किया सो सञ्जय धृतराष्ट्र से कहते हैं कि निद्रा के विजयी शत्रुनाशक धनंजय अर्जुन श्रीभगवान से कहा कि हे गोविन्द हम युद्ध न करेङ्गे जो होय सो होय इतना यह कहिकर फिर मौन होरहे॥ ९॥

तिस के अनन्तर क्या भया सो कहते हैं कि दोनो सेना के बीच मे विषाद को प्राप्तभये अर्जुन को सम्बोधन करि के भगवान हंसतेहुये वर्त्तमान ये वचन कहने लगें हे भारत अर्थात् धृतराष्ट्र॥ १०॥

## शाङ्करभाष्यम्।

इत्यादिना शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वतएव चात्त्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद् युद्धादुपरराम परधर्मञ्च भिक्षाजीवनादिकं कर्तुं प्रववृते तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्म-परित्यागः प्रतिषिद्धसेवा च स्यात् स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनः कायादीनां प्रवृत्तिः फलाभिसन्धिपूर्विकैव साहङ्कारा च भवति तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखादिप्राप्तिलक्षणः संसारोऽनुपरतो

### आनन्दगिरिकृतटीका।

तदेव वचनमुदाहरति श्रीभगवानिति अतीतसन्दर्भस्येत्थमत्तरोत्थमर्थं विवक्षित्वा तस्मिन्नेव वाक्यविभागमवगमयति दृष्ट्वा त्विति धर्मक्षेत्रे कुरुक्षेत्रे इत्यादिराद्यश्लोकस्ताव देकं वाक्यं शास्त्रस्य कथासम्बन्धपरत्वेन पर्यवसानात् दृष्ट्वेत्यारभ्य यावत् तूष्णीं बभूव-हेति तावदेकं वाक्यम् इत आरभ्य इदं वच इत्येतदन्तो ग्रन्थो भवत्यपर वाक्यमिति विभागः नन्वाद्यश्लोकस्य युक्तमेकवाक्यत्वं प्रकृतशास्त्रस्य महाभारतेऽवतारद्योतितत्वादन्नि-मस्यापि सम्भवत्येकवाक्यत्वमर्जुनाश्वासार्थतया प्रवृत्तत्वादित्याह प्राणिनामिति शोको मानसस्तापो मोहो विवेकाभाव आदिशब्दस्तद्वान्तरभेदार्थः स एव संसारस्य दुःखात्मनो वीजभूतो दोषस्तस्योद्भावे कारणमहङ्कारो ममकारस्तद्धेतुरविद्या च तत्प्रदर्शनार्थत्वेनेति योजना संग्रहीतमर्थं विवृणोति तथा होति राज्यं राज्ञः कर्म परिपालनादि पूजार्हा

### भाषा अनुवाद।

यह ग्रन्थ प्रथम अध्याय के प्रथम श्लोक से लेकर और द्वितीय अध्याय के दशवें श्लोकतक जो तीन वाक्य हैं तिसके मध्य से प्रथम अध्याय के दूसरे श्लोकसे लेके द्वितीय अध्यायके नवयें श्लोक पर्य्यन्त वाक्यकी व्याख्या करनेके योग्य है क्योंकि उसमे प्राणियोंका संसारिक दुःख का कारण भूत शोक मोहादि रूप दोष की उत्पत्ति का हेतु अहङ्कार का कारण रूप अविद्या वर्णनकी गई है और राज्य आदि मे ममता रूप भ्रान्तिका ज्ञाननिमित्तक स्नेह और उसके वियोग से उत्पन्न स्नेह मोह भी दोनो देखाया है अर्जुन अपना क्षत्रिय का जो धर्म युद्धकरना तिस मे आप ही प्रवृत्त होके भी

## शाङ्करभाष्यम्।

भवतीति अतः संसारवीजभूतौ शोकमोहौ तयोश्च सर्वकर्मसन्न्यासपूर्वका-दात्मज्ञानात् नान्यतो निवृत्तिरिति तदुपदिदिक्षुः सर्वलोकानुग्रहार्थम् अर्जुनं निमित्तौ कृत्वाह भगवान् वासुदेवः अशोच्यानित्यादि।

अत्र केचिदाहुः सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव किं तर्ह्यग्निहोत्रादिश्रौतस्मार्त्तकर्मसहितात् ज्ञानात्

## आनन्दगिरिकृतटीका।

गुरवो द्रोणादयः पुत्राः स्वेनोत्पादिताः सौभद्रादयः सम्बन्धान्तरमन्तरेण स्नेहगोचरा गुरुपुत्रप्रभृतयो मित्रशब्देनोच्यन्ते उपकार निरपेक्षतया स्वयमुपकारिणो हृदयानुरागभाजो भगवत् प्रमुखाः सुहृदः स्वजना ज्ञातयो दुर्य्योधनादयः सम्बन्धिनः श्वशुरश्यालप्रभृतयो द्रुपदधृष्टद्युम्नादयः परम्परया पितृपितामहादिष्वनुरागभाजो राजानो बान्धवास्तेषु यथोक्तं प्रत्ययं निमित्ती कृत्य यः स्नेहो यश्चतैः सह विच्छेदो यच्चैतेषामुपघाते पातकं याच-लोकगर्ह्रा सर्वं तन्निमित्तं ययोरात्मानः शोकमोहयोस्तावेतौ संसारवीजभूतौ कथमित्या-दिना दर्शिताविव्यर्थः कथं पुनरनयोः संसारवीजयोरर्जुने सम्भावना उपपद्यते न हि प्रथितमहामहिम्नो विवेकविज्ञानवतः स्वधर्मं प्रवृत्तस्य तस्य शोकमोहावनर्थहेतू सम्भाविता-वित्याशङ्क्य विवेकतिरस्कारेण तयोर्विहिताकरणप्रतिषिद्धाचरणकारणत्वादनर्थाधायकयो-रस्ति तस्मिन् सम्भावनेत्याह शोकमोहाभ्यामिति भिक्षाया जीवनं प्राणधारणमादिशब्दा-दृशेपकर्म सन्न्यासलक्षणं परिव्राज्यमात्माभिध्यानमित्यादि गृह्यते किञ्चार्जुने दृश्यमानौ शोक-

## भाषा अनुवाद।

जिस शोकमोहके द्वारा विवेक रूप ज्ञानसे रहित होकर युद्धसे विरत कहे निवृत्तहो परधर्म भिक्षा मे प्रवृत्त भये थे ठीकहै शोकमोह से संयुक्त प्राणीमात्र बहुधा स्वधर्म छोड़ पर धर्म अङ्गीकार कर लेते हैं जो स्वधर्म मे प्रवृत्त हैं वेभी फलकी कामना से अहङ्कार पूर्वक प्रवृत्त होते हैं।

उस से धर्म अधर्म की प्रवलता के हेतु उत्तम अधम जोनि मे जन्म और सुखदुःख आदि प्राप्तिरूप संसार किसी प्रकार नहीं छूटता इस से शोकमोह ये दोनो संसारके कारण हैं केवल सन्न्यास पूर्वक आत्मज्ञाननिष्ठा विना शोकमोह के निबारन की और उपाय न देखि भगवान वासुदेव

## शाङ्करभाष्यम्।

कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति ज्ञापकत्वाद्दुरस्यार्थस्य अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि कर्मण्येवाधिकारस्ते कुरु कर्मैव तस्मात्त्वमित्यादि हिंसादियुक्तत्वाद्वैदिकं कर्म अधर्मायेतीयमप्याशङ्का न कार्या कथं चात्र कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसादिलक्षणमत्यन्तगर्हि-

### आनन्दगिरिकृतटीका।

मोहौ संसारबीजं शोकमोहत्वादस्मदादिनिष्ठशोकमोहवदित्युपलब्धौ शोकमोहौ प्रत्येकं पक्षीकृत्यानुमातव्यमित्याह तथा चेति शोकमोहादीत्यादिशब्देन मिथ्याभिमानस्नेहगर्हा-दयो गृह्यन्ते स्वभावतश्चित्तदोषसामर्थ्यादित्यर्थः अस्मदादीनामपि स्वधर्मे प्रवृत्तानां विहिताकरणत्वाद्यभावाच्छोकादेः संसारबीजतेति दृष्टान्तस्य साध्यविकलतेतिचेत् तत्राह स्वधर्म इति कामादीनामित्यादिशब्दादविशिष्टानीन्द्रियाण्यादीन्ते फलाभिसन्धिस्तद्विपर्ययेऽभि-लाषः कर्तृत्वभोक्तृत्वाभिमानोऽहङ्कारः प्रागुक्तप्रकारेण वागादिव्यापारे सति किं सिध्यति तत्राह तत्रेति शुभकर्मानुष्ठानेन धर्मोपचयादिष्टं देवादिजन्म ततः सुखप्राप्तिः अशुभ-कर्मानुष्ठानेनाधर्मोपचयादनिष्टं तिर्यगादिजन्म ततो दुःखप्राप्तिः व्यामिश्रकर्मानुष्ठानादु-भाभ्यां धर्माधर्माभ्यां मनुष्यजन्म ततः सुखदुःखे भवतः एवमात्मकः संसारः सन्ततो वर्तत इति इत्यर्थः अर्जुनस्यान्येषाञ्च शोकमोहयोः संसारबीजत्वमुपपादितमुपसंहरति इत्यत इति तदेवं प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्यात्मज्ञानोत्थनिवर्तनीयशोकमोहाख्य-संसारबीजप्रदर्शनपरत्वं दर्शयित्वा वक्ष्यमाणसन्दर्भस्य सहेतुसंसारनिवर्तकसम्यग्ज्ञानोपदेशे तात्पर्यं दर्शयति तयोश्चेति तद्यथोक्तं ज्ञानमुपदिदिक्षुरुपदेष्टुमिच्छन् भगवानाहेति सम्बन्धः सर्वलोकानुग्रहार्थं यथोक्तं ज्ञानं भगवानुपदिदिक्षतीत्ययुक्तम् अर्जुनं प्रत्येवोपदेशादित्याशङ्क्याह

### भाषा अनुवाद।

लोक के उपर अनुग्रह करि अर्ज्जुन को उपलक्ष करिके इस गीता शास्त्र मे सोई वह ज्ञान निष्ठा का उपदेश करते हैं।

इस विषय मे कोई कहते हैं कि सर्व्व कर्म परित्याग करि के केवल आत्मज्ञान से मुक्ति नहीं होती परन्तु श्रुति स्मृति विहित कर्मनिष्ठा के सहित जो तत्त्वज्ञान की निष्ठा उससे कैवल्य प्राप्ति होती है इस मे प्रमाण इसी गीता के दूसरे अध्याय मे ३२। ४७ आदि श्लोकों से कहा है और

## शाङ्करभाष्यम्।

ततरमपि स्वधर्म इति कृत्वा नाधर्माय तदकरणे च ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमेवाप्स्यसीति ब्रुवता यावज्जीवादिश्रुतिचोदितानां स्वकर्मणां

### आनन्दगिरिकृतटीका।

अर्जुनमिति न हि तस्यामवस्थायामर्जुनस्य भगवतो यथोक्तज्ञानमुपदेष्टुमिष्टं किन्तु स्वधर्मानुष्ठानाद् बुद्धिशुद्धुत्तरकालमित्यभिप्रेत्योक्तं निमित्तीकृत्येति।

सर्वकर्मसन्न्यासपूर्वकादात्मज्ञानादेव केवलात् कैवल्यप्राप्तिरिति गीताशास्त्रार्थः स्वाभिप्रेतो व्याख्यातः सम्प्रति दूषितकृतामभिप्रेतं निरसितुमनुवदति तत्रेति निर्द्धारितशास्त्रार्थः सतिसम्भस्या पराम्रुश्यते तेषामुक्तिमेव विष्टस्वस्वादौ सैद्धान्तिकमभ्युपगमं प्रत्यादिशति सर्वकर्मेति वैदिकेन कर्मणा समुच्चयं व्युदसितुं मानपदं स्मार्त्तेन कर्मणा समुच्चयं निरसितुमवधारणम् अभ्याससम्बन्धमनुनीते केवलादिति नैवेत्येवकारः संबध्यते केन तर्हि प्रकारेण ज्ञानं कैवल्यप्राप्तिकारणमित्याशङ्क्याह किं तर्हीति किं तत्र प्रमापकमित्याशङ्क्य इदमेव शास्त्रमित्याह इतिसर्वास्विति यथा प्रयाजानुयाजाद्युपकृतमेव दर्शपूर्णमासादि स्वर्गसाधनं तथा श्रौतस्मार्त्तकर्मोपकृतमेव ब्रह्मज्ञानं कैवल्यं साधयति विमतं सेतिकर्त्तव्यताकमेव स्वफलसाधकं कारणत्वाद्दर्शपौर्णमासादिवत् तदेवं ज्ञानकर्मसमुच्चयपरं शास्त्रमित्यर्थः इतिपदमाङ्करित्यनेन पूर्वेण संबध्यते पौर्वापर्यपर्यालोचनायां शास्त्रस्य समुच्चयपरत्वं न निर्द्धारितमित्याशङ्क्याह ज्ञापकञ्चेति न केवलं ज्ञानं मुक्तिहेतुरपितु समुच्चितमित्यस्यार्थस्य स्वधर्माननुष्ठाने पापप्राप्तिवचनसामर्थ्यलक्षणं लिङ्गं गमकमित्यर्थः शास्त्रस्य समुच्चयपरत्वे

### भाषा अनुवाद।

युद्ध आदि कर्म भी चत्री को अधर्म नहीं होते वलू उनके न करने से दोष है यह भी इसी द्वितीय अध्याय के ३३ श्लोक मे निश्चय करिके कहा है।

तो ऊपर की अभिप्राय अत्यन्त असत् है जिस हेतु ज्ञाननिष्ठा औ कर्मनिष्ठा दोनो पृथक् पृथक् कहा है अर्थात् इसी द्वितीय अध्यायके ११ श्लोक से लेकर ३१ श्लोकतक जो परमार्थतत्त्व का निरूपण कियागया है तद्विषक बुद्धिका नाम सांख्यबुद्धि और सोई बुद्धियुक्त ज्ञानी पुरुषको भी सांख्य कहते हैं और यही सांख्यबुद्धि उत्पन्न होने के पूर्व देहादिसे व्यतिरिक्त कहे भिन्न जो आत्मा उस को कर्तृत्व भोक्तृत्व आदि अपेचा करिके धर्म

## शाङ्करभाष्यम् ।

पश्वादि हिंसालक्षणानाञ्च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति ।

तदसत् ज्ञानकर्मनिष्ठयोर्विभागवचनात् बुद्धिद्वयाश्रययोर्यः एषाऽभिहितेत्या-दिना ग्रन्थेन भगवता यावत् स्वधर्ममपि चावेक्ष्येत्येतदन्तेन ग्रन्थेन यत्

## आनन्दगिरिकृतटीका ।

लिङ्गवद्वाक्यमपि प्रमाणमित्याह कर्मण्येवेति तत्रैव वाक्यान्तरमुदाहरति कुरुकर्मेति ननु न हिंस्यात् सर्वभूतानि इत्यादिना प्रतिषिद्धत्वेन हिंसादेरनर्थहेतुत्वावगमात् तद्युक्तं वैदिकं कर्माधर्मायेति नानुष्ठातुं शक्यते तथा च तस्य सापेक्षज्ञानेन समुच्चयो न सिध्यतीति सांख्यमतमाशङ्क्य परिहरति हिंसादीति आदिशब्दादुच्छिष्टभक्षणं गृह्यते तथोक्ताशङ्का-नः कर्त्तव्येत्याकांक्षापूर्वकं हेतुमाह कथमित्यादिना स्वशब्देन क्षत्रियो विवक्ष्यते युद्धा-करणे क्षत्रियस्य प्रत्यवायश्रवणात् तस्य तं प्रति नित्यत्वेनावश्यकर्त्तव्यत्वं प्रतीतेर्गुर्वादि हिंसायुक्तमतिक्रूरमपि कर्म नाधर्मायेति हेत्वन्तरमाह तदकरणेवेति आचार्यादि हिंसायुक्तमतिक्रूरमपि युद्धं नाधर्मायेति ब्रुवता भगवता श्रौतानां हिंसादियुक्तानामपि कर्मणां दूरतो नाधर्मत्वमिति स्पष्टमुपदिष्टं भवति सामान्यशास्त्रस्य व्यर्थहिंसानिषेधार्थ-त्वात् क्रतुविषये चोदितहिंसायास्तदविषयत्वात् कुतो वैदिककर्मानुष्ठानानुपपत्तिरित्यर्थः ज्ञानकर्मसमुच्चयात् कैवल्यसिद्धिरित्युपसंहर्त्तुमितिशब्दः यत् तावद्ब्रह्मज्ञानं सेतिकर्त्त-व्यताकं स्वफलसाधकं करणत्वादिति अनुमानं तद्दूषयति तदसदिति नहि शुक्तिकादि ज्ञानमज्ञाननिवृत्तौ स्वफले सहकारि किञ्चिदपेक्षते तथाच व्यभिचारादसाधकं करणत्व-मित्यर्थः यत्तु गीताशास्त्रे समुच्चयस्यैव प्रतिपाद्यतेति प्रतिज्ञातं तदपि विभागवचनविरुद्ध-मित्याह ज्ञानेति सांख्यबुद्धिर्योगबुद्धिश्चेति बुद्धिद्वयं तत्र सांख्यबुद्ध्याश्रयां ज्ञाननिष्ठां न

## भाषा अनुवाद ।

अधर्म विचार पूर्वक जो बुद्धि है सोई बुद्धियुक्त कर्मी पुरुषका नाम योगी है इस प्रकार उभय निष्ठा दिखाई हैं उन के बीच सांख्यनाम ज्ञाननिष्ठा औ जोगरूप जो कर्मनिष्ठा ये दोनो भी आगे क्षथक् २ कही जायंगी इसी मे सांख्यबुद्धि का आश्रय ज्ञाननिष्ठा औ योगबुद्धि का आश्रय कर्मनिष्ठा ये दोनो निष्ठा एककाल मे एक पुरुष करके अनुष्ठान करनी किसी प्रकार सम्भव नहीं होता यही शतपथ ब्राह्मण में कहा है जो ज्ञान औ कर्म समु-

## शाङ्करभाष्यम् ।

परमार्थात्मतत्त्वनिरूपणं कृतं तत् सांख्यं तद्विषया बुद्धिरात्मनो जन्मादि षड्विक्रियाभावादकर्त्तात्मेति प्रकरणार्थनिरूपणात् या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति ते सांख्याः एतस्याबुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तस्य कर्त्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योगः तद्विषया बुद्धिर्योगबुद्धिः सा येषां कर्मिणामुचिता भवति ते योगिनः तथाच भगवता विभक्ते द्वे बुद्धी

### आनन्दगिरिकृतटीका ।

व्याख्यातुं सांख्यशब्दार्थमाह अशोच्यानित्यादिना इति अशोच्यानित्यादिना स्वधर्ममपि चावेक्ष्येत्येतदन्तं वाक्यं यावद्भविष्यति तावता ग्रन्थेन यत्परमार्थभूतमात्मतत्त्वं भगवता निरूपितं तद्यथा सम्यक् व्याख्यायते प्रकाश्यते सा वैदिकी सम्यक् बुद्धिः संख्या तया प्रकाश्यत्वेन सम्बन्धि प्रकृतं तत्त्वं सांख्यमित्यर्थः सांख्यशब्दार्थमुक्त्वा तत्प्रकाशिकां बुद्धिं तद्वतश्च सांख्यान् व्याकरोति तद्विषयेति तद्विषयाबुद्धिः सांख्ये बुद्धिरिति सम्बन्धः तामेव प्रकटयति आत्मन इति न जायते म्रियते वेत्यादिप्रकरणार्थनिरूपणद्वारेणात्मनः षड्भावानिति क्रियासम्भवान् कूटस्थो साविति सा बुद्धिरुत्पद्यते सा सांख्यबुद्धिः तत्पराः सन्यासिनः सांख्या इत्यर्थः सम्प्रति योगबुद्ध्याश्रयां कर्मनिष्ठां व्याख्यातुकामो योगशब्दार्थमाह एतस्यादिति यथोक्त बुद्ध्युत्पत्तौ विरोधादेवानुष्ठाना योगात् तस्यास्तन्निवर्त्तकत्वात् पूर्वमेव तदुत्पत्ते-

### स्वामिकृतटीका ।

देहात्मनोरविवेकात् अस्यैवं शोको भवतीति तद्विवेकप्रदर्शनार्थं श्रीभगवानुवाच ।

### भाषा अनुवाद ।

अय कहे दोनो अभि प्रेत होंयतो ये सव विभाग बचन और किसी प्रकार सम्भव नहीं हैं और इस प्रकार अर्जुन को प्रश्न भी ठीक नहीं होती है क्योंकि ज्ञन औ कर्म एककाल एक पुरुष को नितान्त असम्भव यह पूर्व न कहने से अर्जुन किस प्रकार कर्म्म से ज्ञान को श्रेष्ठ जानि के भगवान से मिथ्या आक्षेप करेंगे और सर्व उपदेश मे ज्ञान औ कर्म्म दोनो के मध्य मे जो श्रेय हो सोई हम को कहो इस प्रकार एक विष-

शाङ्करभाष्यम् ।

निर्दिष्टे एषा तेऽभिहिता सांख्ये बुद्धिर्योगेत्विमां शृण्विति तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति पुरा वेदात्मना मया प्रोक्तेति तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्ताञ्च वक्ष्यति कर्मयोगेन योगिनामित्येवं सांख्यबुद्धिं योगबुद्धिञ्चाश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासम्भवं पश्यता यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे

आनन्दगिरिकृतटीका ।

दात्मनश्च देहादिव्यतिरिक्तत्वाद्यपेक्षया धर्माधर्मं निष्कृष्य तेनेश्वराराधनरूपेण कर्मणा पुरुषो मोक्षाय युज्यते योग्यः सम्पद्यते तेन मोक्षसिद्धये परम्परया साधनीभूतप्रागुक्तधर्मानुष्ठानात्मको योग इत्यर्थः अथ योगबुद्धिं विभजन् योगिनो विभजते तद्विषयेति उक्ते बुद्धिद्वये भगवतोऽभिमतं दर्शयति तथाचेति सांख्यबुद्ध्याश्रया ज्ञाननिष्ठेत्येदपि भगवतोऽभिमतमित्याह तयोश्चेति ज्ञानमेव योगो ज्ञानयोगस्तेन हि ब्रह्मणा युज्यते तादात्म्यमापद्यते तेन सन्न्यासिनां निष्ठानिश्चयेन स्थितिस्तात्पर्य्येण परिसमाप्तिस्तां कर्मनिष्ठातो व्यतिरिक्तां निष्ठयोर्मध्ये निष्कृष्य भगवान् वक्ष्यतीति योजना लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मया नघ ज्ञानयोगेन सांख्यामित्येतद्वाक्यमुक्तार्थविषयमर्थतोऽनुवदति योगबुद्ध्याश्रया कर्मनिष्ठेत्यत्रापि भगवदनुमतिमादर्शयति तथाचेति कर्मैव योगस्तेन हि बुद्धिशुद्धिद्वारा मोक्षहेतुज्ञानाय पुमान् युज्यते तेन निष्ठां कर्मिणां ज्ञाननिष्ठातो विलक्षणां

भाषा अनुवाद ।

यक प्रश्नहीं वा कहो किस तरह सम्भव है जो भगवतके उक्त वचन का अर्थ न समझके अर्जुन ऐसी प्रश्न किये होंय तौ भी भगवानके ऐसे प्रतिवचन सम्भव नहीं होते हैं क्षत्री का स्वधर्म्म जो युद्धरूप स्मृति विहित कर्म्म तिसके सहित ज्ञानसम्पादन करना विहित कर्म्म नहीं क्योंकि सो होनेसे श्रीकृष्णके प्रति अर्जुन का इस प्रकार का अनुयोग करना कभी सम्भव होता नहीं इसी से गीताशास्त्र मे लेशमात्र भी श्रौत या स्मार्त्त कर्म्मके सहित ज्ञानके सम्पादन का प्रतिपादन करने को कोई भी समर्थ न होंगे अज्ञान किंवा रागआदि दोष बशतें कर्म्म मे प्रवृत्त

## शाङ्करभाष्यम्।

एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्तीति सर्वकर्मसन्न्यासं विधाय तच्छेषेण किं प्रजया करिष्यामो येषां नायमात्मायं लोक इति तत्रैव च प्राग्दारपरिग्रहात् पुरुषश्चात्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रय-साधनं पुत्रं द्विप्रकारञ्च वित्तं मानुषं दैवञ्च तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्ति साधनं विद्याञ्च दैवं वित्तं देवलोकप्राप्तिसाधनं सोऽकामय-

### आनन्दगिरिकृतटीका।

कर्मयोगेनेत्यादिना वक्ष्यति भगवानिति योजना निष्ठाद्वयं बुद्धिद्वयाश्रयं भगवता विभज्योक्त-मुपसंहरति एवमिति कया पुनरनुपपत्त्या भगवता निष्ठाद्वयं विभज्योक्तमित्याशङ्क्याह ज्ञानकर्मणोरिति कर्म हि कर्तृत्वाद्यनेकत्वबुद्ध्याश्रयं ज्ञानं कर्तृत्वैकत्वबुद्ध्याश्रयं तदुभय-मित्थं विरुद्धसाधनसाध्यत्वान्नैकावस्थस्यैव पुरुषस्य सम्भवत्यतो युक्तमेव तयोर्विभागवचन-मित्यर्थः भगवदुक्तविभागवचनस्य मूलत्वेन श्रुतिमुदाहरति तथेति तत्र ज्ञाननिष्ठा-विषयं वाक्यं पठति एतमेवेति प्रकृतमात्मानं नित्यविज्ञप्तिस्वभावं वेदितुमिच्छन्तः त्रिवि-धेऽपि कर्मफले वैतृष्ण्यभाजः सर्वाणि कर्माणि परित्यज्य ज्ञाननिष्ठाः भवन्तीति पञ्चमल-कारस्वीकारेण सन्न्यासविधिं विवक्षितत्वात् तस्यैव विधेः विशेषेणार्थवादेन किं प्रजयेत्यादिना मोक्षफलं ज्ञानमुक्तमित्यर्थः ननु फलाभावात् प्रजाक्षेपो नोपपद्यते पुत्रेणैतल्लोकजयस्य वाक्यान्तरसिद्धत्वादित्याशङ्क्य विदुषां प्रजा साध्यमनुष्यलोकस्यात्मव्यतिरेकेणाभावादात्मनश्चा-साध्यत्वादाक्षेपो युक्तिमानिति विवक्षितत्वाह येषामिति इति ज्ञानं दर्शितमिति शेषः तस्मिन्नेव ब्राह्मणे कर्मनिष्ठावाक्यं दर्शयति तत्रैवेति प्राकृततत्त्वमतत्त्वदर्शित्वेनाज्ञत्वं स च

## भाषा अनुवाद।

मनुष्यकी यज्ञ दान तपआदिके द्वारा सत्त्व शुद्धिपूर्वक परमार्थ तत्त्वज्ञान होने से परलोक संग्रहके अर्थ जो फेरि कर्म्म में प्रवृत्ति होय तो उस कर्म्म को कर्म्म नहीं कहते हैं सुतरां तिसके सहित ज्ञान का सम्यात्म्य नहीं होता है जैसे भगवान श्रीकृष्णके सकल कर्म्म समुचित नहीं औ जैसे काम्यकर्म्म नहीं हो सकता जिसहेतु उस मे फलाभिसन्धि नहीं है।

तो फेरि जो जनक आदि राजा कर्म्म के द्वारा मुक्त हुए यह वर्णन किया है सो केवल लोकसंग्रहके अर्थमात्र हैं अर्थात् सब कर्म्म का परि-

## शाङ्करभाष्यम्।

अतेति अविद्याकामवतएव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि तेभ्यो व्युत्थाय प्रव्रजन्तीति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितं तदेतद्विभागवचनमनुपपन्नं स्यात् यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः।

नच अर्जुनस्य प्रश्न उपपन्नो भवति ज्यायसी चेत् कर्मणस्ते इत्यादि एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेत् मृषैव ज्यायसी चेत् कर्मणस्ते मता बुद्धिरिति किञ्च यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितमिति कथमुभयोरुपदेशे सत्यन्यतरविषय एव प्रश्नः स्यात् नहि पित्तप्रशमनार्थिनो वैद्येन मधुरं

### आनन्दगिरिकृतटीका।

ब्रह्मचारी सन् गुरुसमीपे यथाविधि वेदमधीत्यार्थज्ञानार्थं धर्मजिज्ञासां कृत्वा तदुत्तरकालं लोकत्रयप्राप्तिसाधनं पुत्रादित्रयं सोकामयत जायामेस्यादित्यादिना कामितवानिति श्रुतमित्यर्थः वित्तं विभजते द्विप्रकारमिति तदेव प्रकारद्वैरूप्यमाह मानुष्यमिति मानुष्यं वित्तं व्याचष्टे कर्मरूपमिति तस्य फलपर्य्यवसायित्वमाह पितृलोकेति दैवं वित्तं विभजते विद्याश्चेति तस्यापि फलनिष्ठत्वमाह देवेति कर्मनिष्ठाविषयत्वेनोदाहृतश्रुतेस्तात्पर्य्यमाह अविद्येति अज्ञस्य कामनाविशिष्टस्यैव कर्माणि सोकामयतेत्यादिना दर्शितानीत्यर्थः ज्ञाननिष्ठाविषयत्वेन दर्शितश्रुतेरपि तात्पर्य्यं दर्शयति तेभ्य इति कर्मसु विरक्तस्यैव सन्न्यासपूर्विका ज्ञान-

### भाषा अनुवाद।

त्याग होने से भी गुण औ गुणी ज्ञानव्रते कर्म्म आभास के साथ उन की मुक्ति भई थी अर्थात् कर्म्म के त्याग मे अधिकार होने से भी कर्म्मत्याग न करिके उस के सहित निर्वाणपद प्राप्तकिया और जो कहो कि जनकादि राजा पूर्व मे तत्त्वज्ञानी नहीं थे तौभी ज्ञानके साधनभूत सकल कर्म्म ईश्वर को अर्पन करने से उन को सत्वशुद्धि अथवा ज्ञान को उत्पत्ति भई थी भगवान इस गीताशास्त्र मे यही प्रतिपादन करिके पीछे से सई

शाङ्करभाष्यम्।

शीतलञ्च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत् पित्तप्रशमनकारणं ब्रूहीति प्रश्नः सम्भवति अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयं मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति न तु पुनः प्रतिवचनमनुरूपं पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं नापि स्मार्त्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नं किञ्च क्षत्रियस्य युद्धं स्मार्त्तं कर्म स्वधर्म इति जानतस्तत् किं कर्मणि घोरे मां नियोजयसीत्युपालम्भोऽनुपपन्नस्तस्मात् गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्त्तेन वा कर्मणात्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः।

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्म अकर्त्तृ चेति तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तिस्तथैव कर्मणि प्रवृत्तस्य यत् प्रवृत्तिरूपं दृश्यते न तत् कर्म येन बुद्धेः समुच्चयः स्यात् यथा भगवतो वासुदेवस्य क्षत्रधर्मं चेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये तद्वत्तत् फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वात्

आनन्दगिरिकृतटीका।

निष्ठा प्रागुदाहृतस्तुत्या दर्शितेत्यर्थः अवस्थाभेदेन ज्ञानकर्मणोर्भिन्नाधिकारत्वस्य श्रुतत्वात् तन्मूलेन भगवतो विभागवचनेन शास्त्रस्य समुच्चयपरत्वप्रतिज्ञातमपबाधितमिति साधितं किञ्च समुच्चयो ज्ञानस्य श्रौतेन स्मार्त्तेन वा कर्मणा विवक्ष्यते यदि प्रथमं तत्राह तदेतदिति।

भाषा अनुवाद।

प्रकार शुद्धसत्व गुण मनुष्य को ज्ञाननिष्ठा निरूपण किया है इस से जो मुक्ति होती और उस मे जो कर्म्म को सहायता को अपेक्षा न करे यही इस गीताशास्त्रका निश्चित अर्थ है यह आगे प्रकरणपायके देखाया जायगा इस प्रकार गीताशास्त्रका तात्पर्य्य अर्थ निर्णय कियागया परन्तु अब धर्म्म मे

शाङ्करभाष्यम्।

विदुषः तत्त्वविन्नाहं करोमीति मन्यते न च तत्फलमभिसन्धत्ते यथा च स्वर्गादि कामार्थिनोऽग्निहोत्रादि कर्मलक्षण धर्मानुष्ठायाऽहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सकामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत् काम्यमग्निहोत्रादि भवति तथा च दर्शयति भगवान् कुर्वन्नपि न करोति न लिप्यते इति अत्र यत्त पूर्वैः पूर्वतरं कृतं कर्मणैव हि संसिद्धिमास्थिता जनकादय इति तत् तु प्रविभज्य विज्ञेयं तत् कथं यदि तावत् पूर्वे जनकादयः तत्त्वविदोऽपि प्रवृत्त कर्माणः स्युस्ते लोकसंग्रहार्थं गुणागुणेषु वर्त्तन्त इति ज्ञानेनैव संसिद्धिमास्थिताः कर्मसन्न्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिता न कर्मसन्न्यासं कृतवन्त इत्येषोऽर्थः अथ नते तत्त्वविद् ईश्वरसमर्पितेन कर्म्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् एतमेवार्थं वक्ष्यति भगवान् सत्त्वशुद्धये कर्म्म कुर्वन्तीति स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवा इत्युक्त्वा सिद्धिप्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति सिद्धिं प्राप्तो यथा ब्रह्मेत्यादिना तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः न कर्म्म समुच्चितादिति निश्चितोऽर्थः यथाचायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः।

तत्रैवन्धर्म्मसंमूढ़चेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्न-

आनन्दगिरिकृतटीका।

समुच्चयेऽभिप्रेते प्रश्नानुपपत्तिं दोषान्तरमाह नचेति तामेवानुपपत्तिं प्रकटयति एकद्रूपेति यदि समुच्चयः शास्त्रार्थो भगवता विवक्षितस्तदा ज्ञानकर्मणोरेकेन पुरुषेणानुष्ठेयत्वमेव तेनोक्तमर्जुनेन श्रुतं तत्कथं तदसम्भवमनुक्तमश्रुतञ्च मिथ्यैव श्रोता भगवत्यारोपयन्नच तदारोपादृते किमिति मां कर्मण्यवातिक्रूरे युद्धलक्षणे नियोजयसि इति प्रश्नोऽवकल्प्यते तथा च प्रश्नालोचनया प्रष्टृ प्रतिवक्त्रोः शास्त्रार्थतया समुच्चयोऽभिप्रेतो न भवतीति प्रतिभातीत्यर्थः किञ्च समुच्चयपक्षे कर्मापेक्षया बुद्धेर्ज्यायस्त्वं भगवता पूर्वमनुक्तमर्जुनेन चाश्रुतं कथमसौ तस्मिन्नारोपयितुमर्हति तत्रत्यानुवादवचनं श्रोतुरनुचितमित्याह बुद्धेश्चेति इतश्च समुच्चयः शास्त्रार्थो न सम्भवत्यन्यथा पञ्चमादावर्जुनस्य प्रश्नानुप-

## शाङ्करभाष्यम् ।

अथार्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान् वासुदेवस्ततः कृपयार्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह ।

### आनन्दगिरिकृतटीका ।

पक्षेरित्याह किञ्चेति ननु सर्वान् प्रत्युक्तोऽपि समुच्चयेनार्जुनं प्रत्युक्तोऽसाविति तदीय प्रश्नोपपत्तिरित्याशङ्क्याह यदीति एतयोः कर्मतत्त्वाभयोरिति यावत् ननु कर्मापेक्षया कर्मत्यागपूर्वकस्य ज्ञानस्य प्राधान्यात् तस्य श्रेयस्त्वात् तद्विषयप्रश्नोपपत्तिरिति चेन्नेत्याह न हीति तथैव समुच्चये पुरुषार्थसाधने भगवता दर्शिते त्वन्यतरगोचरो न प्रश्नो भवतीति शेषः समुच्चये भगवतोक्तेऽपि तदज्ञानादर्जुनस्य प्रश्नोपपत्तिरिति शङ्कते अथेति अज्ञाननिमित्तं प्रश्नमङ्गीकृत्यापि प्रत्याचष्टे तथापीति भगवतो भ्रान्त्यभावेन पूर्वापरानुसन्धानसम्भवादित्यर्थः प्रश्नानुरूपत्वमेव प्रतिवचनस्य प्रकटयति मयेति व्यावर्त्यमंशमादर्शयति नत्विति प्रतिवचनस्य प्रश्नाननुरूपत्वमेव स्पष्टयति पृष्टादिति श्रौतेन कर्मणा समुच्चयो ज्ञानस्येति पक्षं प्रतिक्षिप्य पक्षान्तरं प्रतिक्षिपति नापीति श्रुतिस्मृत्योर्ज्ञानकर्मणोर्विभागवचनमादिशब्दगृहीतं बुद्धेर्ज्यायस्त्वं पञ्चमादौ प्रश्नो भगवत् प्रतिवचनं सर्वमिदं श्रौतेनेव स्मार्त्तेनापि कर्मणा बुद्धेः समुच्चये विरुद्धं स्यादित्यर्थः द्वितीयपक्षासम्भवे हेत्वन्तरमाह किञ्चेति समुच्चयपक्षे प्रश्नप्रतिवचनयोरसम्भवान्नेदं गीताशास्त्रं तत्परमित्युपसंहरति तस्मादिति विशुद्धं ब्रह्मात्मज्ञानं स्वफलसिद्धौ न सहकारि सापेक्षमज्ञाननिवृत्तिफलत्वाद्रज्ज्वादितत्त्वज्ञानवत् अथवा बन्धः सहायानपेक्षेण ज्ञानेन निवर्त्यते अज्ञानात्मकत्वात् रज्जुसर्पादिवदिति भावः ।

ननु कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहमिति वक्ष्यमाणत्वात् कथं गीताशास्त्रे समुच्चयो नास्ति तत्राह यस्त्विति चोदनालक्षणत्वानुसारेण विधितोऽनुष्ठेयस्य कर्मणो धर्मत्वाद्ब्रह्मपरमात्मनस्य तथात्वाभावात् तत्त्वविदश्च वर्णाश्रमाभिमानशून्यस्याधिकारप्रतिपत्त्यभावाद्रागादिप्रवृत्तीनामविद्यालेशतो जायमानां कर्माभासत्वात् कुर्याद्विद्वानित्यादि वाक्येन समुच्चयप्रापकमिति भावः वाशब्दश्चार्थे द्वितीयस्तु विविदिषावाक्यस्य साधनान्तरसंग्रहार्थः सांसारिकं ज्ञानं व्यावर्त्तयति परमार्थेति तदेवाभिनयति एकस्मितप्रवृत्तिरूपमिति रूपग्रहणमाभासत्वप्रदर्शनार्थं कर्माभाससमुच्चयस्तु यादृच्छिकत्वान्न मोक्षं फलयतीति शेषः किञ्च ज्ञानिनो रागादिप्रवृत्तिर्न ज्ञानेन तत्फलेन समुच्चीयते फलाभिसन्धिविकलप्रवृत्तित्वादहङ्कारविधुरप्रवृत्तित्वाद्वा भगवत् प्रवृत्तिवदित्याह यथेति हेतुद्वयस्यासिद्धिमाशङ्क्य परिहरति तत्त्वविदिति कूटस्थं ब्रह्मैवाहमिति मन्वानो विद्वान्

आनन्दगिरिकृतटीका ।

प्रवृत्तिं तत्फलं वा नैव स्वगतत्वेन पश्यति रूपादिवद् दृश्यद्रष्टृधर्मत्वायोगात् किन्तु कार्य्यकारणसङ्घातत्वेनैव प्रवृत्त्यादि प्रतिपद्यते ततस्तत्त्वविदो व्याख्यान भिक्षाटनादौ अहङ्कारस्य तृप्त्यादिफलाभिसन्धेश्चाभासत्वान्नासिद्धं हेतुद्वयमित्यर्थः ननु ज्ञानोदयात् प्रागवस्थायामिवोत्तरकालेऽपि प्रति नियतप्रवृत्त्या दर्शनान्न तत्त्वदर्शी निष्ठप्रवृत्त्यादेराभासत्वमिति तत्राह यथा चेति स्वर्गादिरेव काम्यमानत्वात् कामस्तदर्थिनः स्वर्गादिकामस्याग्निहोत्रादेरपेक्षितस्वर्गादिसाधनस्यानुष्ठानार्थमग्निसाधाय व्यवस्थितस्य तस्मिन्नेव काम्ये कर्मणि प्रवृत्तस्यार्द्धकृते केनापि हेतुना कामे विनष्टे तदेवाग्निहोत्रादि निर्वर्त्तयतो न तत् काम्यं भवति नित्यकाम्यविभागस्य स्वाभाविकत्वाभावात् कामोपबन्धानुपबन्धकृतत्वात् तथा विदुषोऽपि विध्यभिकाराभावाद्रागादिप्रवृत्तीनां कर्माभासतेत्यर्थः विद्वत्प्रवृत्तीनां कर्माभासत्वमित्यत्र भगवदनुमतिमुपन्यस्यति तथा चेति ननु विद्वद्व्यापारेऽपि कर्मशब्दप्रयोगदर्शनात् तद्व्यापारस्य कर्माभासत्वानुपपत्तेः समुच्चयसिद्धिरिति तत्राह यश्चेति ज्ञानकर्मणोः समुच्चित्यैव संसिद्धिहेतुत्वे प्रतिपन्ने कुतो विभज्यार्थज्ञानमिति पृच्छति तत्कथमिति तत्र किं जनकादयोऽपि तत्त्वविदः प्रवृत्तकर्माणः स्युराहो स्विदतत्त्वविद इति विकल्प्य प्रथमं प्रत्याह यदीति तत्त्वविक्त्वे कथं प्रवृत्तकर्मत्वं कर्मणामकिञ्चित् करत्वादित्याशङ्क्याहने लोकेति तेषामन्नप्रयोजनार्थमपि न प्रवृत्तिर्युक्ता सर्वत्राप्युदासीनत्वादित्याशङ्क्याह गुणा इन्द्रियाणां विषयेषु प्रवृत्ति द्वारा तत्त्वविदां प्रवृत्तकर्मत्वेऽपि ज्ञानेनैव तेषां मुक्तिरित्याह ज्ञानेनेति उक्तमेवार्थं संक्षिप्य दर्शयति कर्मेति कर्मण्येत्यादौ बाधितानुवृत्त्या भावो गृह्यते द्वितीयमनुवदति अथेति तत्र वाक्यार्थं कथयति ईश्वरेति विभज्य विशेषत्व वाक्यार्थस्योक्तमुपसंहरति इति व्याख्येयमिति कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमित्युक्तेऽर्थे वाक्यशेषं प्रामाणयति एतमेवेति योगिनः कर्मकुर्वन्तीत्यादि वाक्यमर्थतोऽनुवदति सत्वेति स्वकर्मणा इत्यादौ साक्षादेव मोक्षहेतुत्वं कर्मणां वक्ष्यतीत्याशङ्क्याह स्वकर्मणेति स्वकर्मानुष्ठानादीश्वरप्रसादद्वारा ज्ञाननिष्ठायोग्यता लभ्यते ततो ज्ञाननिष्ठया मुक्तिस्तेन न साक्षात् कर्मणां मुक्तिहेतुतेत्यग्रे स्फुटी भविष्यतीत्यर्थः तत्त्वज्ञानोत्तरकाले कर्मासम्भवे फलितमुपसंहरति तस्मादिति ननु यद्यपि गीताशास्त्रं तत्त्वज्ञानप्रधानमेकं वाक्यं तथापि तन्मध्ये श्रूयमाणं कर्म तदङ्गमङ्गीकर्त्तव्यं प्रकरणप्रामाण्यादिति समुच्चयसिद्धिस्तत्राह यथा चेति अर्थशब्देनात्मज्ञानमेव केवलं कैवल्यहेतुरिति गृह्यते ।

वृत्तिकृतामभिप्रायं प्रत्याख्याय स्वाभिप्रेतः शास्त्रार्थः समर्थितः संप्रत्यशोच्यानित्यस्मात् प्राक्तन ग्रन्थसन्दर्भस्य प्रागुक्तं तात्पर्यार्थमनूद्याशोच्यानित्यादेः स्वधर्ममपि चावेक्ष्येत्येतदन्तस्य समुदायस्य तात्पर्यमाह तत्रेति अत्र हि शास्त्रे त्रीणि काण्डान्यष्टादशसंख्याकानामध्यायानां षट्कत्रितयमुपादाय त्रैविध्यात् तत्र पूर्वं षट्कात्मकं पूर्वकाण्डं त्वं पदार्थ

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

## शाङ्करभाष्यम् ।

अशोच्यानित्यादि न शोच्या अशोच्या भीष्म द्रोणादयः सद्वृत्तत्वात् परमार्थरूपेण च नित्यत्वात् ता न शोच्या नन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे तदेतन्मौढ्यं पाण्डित्यविरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः यस्माद्गतासून् गतप्राणान् मृतान् अगतासून् अगतप्राणान् जीवतश्च न अनुशोचन्ति पण्डिताः आत्मज्ञाः पण्डा आत्मविषया बुद्धिर्येषान्ते हि पण्डिताः पाण्डित्यं निर्विद्येति श्रुतेः परमार्थतस्तु नित्या न शोच्या ननु शोचस्यतो मूढोऽसीत्यभिप्रायः ॥ ११ ॥

## आनन्दगिरिकृतटीका ।

विषयी करोति मध्यमषट्करूपं मध्यमकाण्डं तत्पदार्थं गोचरयति अन्तिमषट्कलक्षणमन्तिमं काण्डं तत्त्वं पदार्थयोरैक्यं वाक्यार्थमधिकरोति तज्ज्ञानसाधनानि तत्र तत्र प्रसङ्गादुपन्यस्यन्ते तज्ज्ञानञ्च नष्टशोकत्वात् तत्त्वज्ञानमेव केवलं कैवल्यसाधनमिति च सर्वत्र विवेकं एवं पूर्वोक्तरीत्या गीताशास्त्रार्थे परिनिश्चिते सतीति यावत् धर्मे संमूढं कर्त्तव्याकर्त्तव्य विवेक विकलं चेतो यस्य तस्य मिथ्याज्ञानवतोऽहङ्कार ममकारवतः शोकाख्यसागरे दुस्तरे प्रविश्य क्लिश्यतो ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानमात्रात् तद्व्यतिरेकेणोद्धरणासिद्धेः तमति भक्तमतिस्निग्धं शोकादुद्धर्त्तुमिच्छन् भगवान् यथोक्तज्ञानार्थं तमवर्जुनमवतारयन् पदार्थपरिशोधने प्रवर्त्तयन्नादौ त्वं पदार्थं शोधयितुमशोच्यानित्यादि वाक्यमाहेति योजना।

यस्याज्ञानं तस्य भ्रमो यस्य भ्रमस्तस्य पदार्थपरिशोधनपूर्वकं सम्यक् ज्ञानं वाक्यादुदेतीति ज्ञानाधिकारित्वमभिप्रेत्याह अशोच्यानित्यादीति यत्तु कैश्चिदात्मा वा अरे द्रष्टव्य इत्याद्यात्मयाथात्म्यदर्शनविधिवाक्यार्थमनेन श्लोकेन व्याचष्टे स्वयं हरिरित्युक्तं तदयुक्तं कर्त्तव्योपयुक्ततैकार्थसमवेतश्रेयःसाधनतायाः पराभिमतनियोगस्य वा विध्यर्थस्यात्माप्रतीयमानस्य कल्पना हेत्वभावात् न च दर्शने पुरुषस्वातन्त्र्यरहिते विधेययागादिविलक्षणे विधिरुपपद्यते तस्यानभूतत्वात् तस्मान्न विधिमधिकरोतीत्यभिप्रेत्य व्याचष्टे न शोच्या इति कथं तेषामशोच्यत्वमित्युक्ते भीष्मादिशब्दवाच्यानां शोच्यत्वं तल्लक्ष्याणां वेति

आनन्दगिरिकृतटीका।

कल्पत्राद्यं दूषयति सदृष्टत्वादिति ये भीष्मादिशब्दैरुच्यन्ते ते श्रुति स्मृत्युदीरिता विगीता-चारयत्त्वादशोच्यतामश्नुवीरन्नित्यर्थः द्वितीयं प्रत्याह परमार्थेति अरजते रजतबुद्धिवद-शोच्येषु शोच्यबुद्धा भ्रान्तोऽसीत्याह तानिति अनुशोचनप्रकारमभिनयन् भ्रान्तिमेव प्रकट-यति ते म्रियन्त इति पुत्त्रभार्यादिप्रयुक्तं सुखमादिशब्देन गृह्यते इत्यनुशोचितवानसीति सम्बन्धः विरुद्धार्थाभिधायित्वेनापि भ्रान्तत्वमर्जुनस्य साधयति त्वं प्रज्ञावतामिति उत्सन्न-कुलधर्माणामित्यादीनि वचनानि किमेतावता फलितमिति तदाह तदेतदिति तन्मौढ्य-मशोच्येषु शोच्यदृष्टित्वमेतत् पाण्डित्यं बुद्धिमतां वचनभाषित्वमिति यावत् अर्जुनस्य पूर्वोक्त भ्रान्तिभाक्त्वे निमित्तमात्माज्ञानमित्याह यस्मादिति ननु स्वच्छबुद्धिभाक्त्वमेव पाण्डित्यं नत्वा-त्मज्ञत्वं हेत्वभावादित्याशङ्क्याह तेहीति पाण्डित्यं पण्डितभावमात्मज्ञानं निर्विद्यनिश्चयेन लब्ध्वा बाल्येन तिष्ठासेदिति बृहदारण्यकश्रुतिमुक्तार्थामुदाहरति पाण्डित्यमिति यथोक्तं पाण्डित्यराहित्यं कथं ममावगतमित्याशङ्क्य कार्यदर्शनादित्याह परमार्थतस्त्विति यस्मादि-त्यस्यापेक्षितं दर्शयति अत इति ॥ ११ ॥

स्वामिकृतटीका।

अशोच्यानित्यादि शोकस्याविषयीभूतानेव बन्धून् नत्व शोचोऽनुशोचितवानसि दुर्वेमान् स्वजनान् कृष्णेत्यादिना तत्व कुतस्त्वा कश्मलमिदं विषमे समुपस्थितमित्यादिना मया बोधितोऽपि पुनस्च प्रज्ञावतां पण्डितानां वादान् शब्दान् कथं भीष्ममहं संख्ये इत्यादीन् केवलं भाषसे न तु पण्डितोऽसि यतः पण्डिता गतासून् गतप्राणान् बन्धून् गतासूंश्च जीवतोऽपि बन्धुहीना एते कथं जीविष्यन्तीति नानुशोचन्ति पण्डिताः विवेकिनः ॥ ११ ॥

भाषा अनुवाद।

व्यग्र मिथ्याभ्रम विशिष्ट कहे युक्त महत् शोकसागर मे डूबे हुए अर्जुन को आत्मज्ञानके विना उद्धार होने को और कोई उपाय न देखि भगवान श्रीकृष्ण अर्जुनके प्रति तत्वज्ञान का उपदेश करते हैं कि प्रथम अध्यायके २८श्लोकसे लेकर तुम जो कुटुम्बके जनों का शोक करते हो सो वे सब तुमारे शोचने के योग्य नहीं हैं और द्वितीय अध्याय के २ श्लोक से लेके हम से प्रबोध कराये अर्थात् समझाये गये तुम जो पण्डितमानी कैसमान ये वचन उच्चारन करते अर्थात् कहते हो कि भीष्म को संग्राम मे कैसे मारें इस से

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम्॥ १२॥**

## शाङ्करभाष्यम्।

कुतस्ते अशोच्याः यतो नित्याः कथं न तु एव जातु कदाचिदहं नासं किन्त्वासमेव अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्यमेवाहमासमित्यभिप्रायः तथा न त्वं नासीः किन्त्वासीरेव तथा नेमे जनाधिपाः नासन् किन्त्वासन्नेव तथा न चैव न भविष्यामः किन्तु भविष्याम एव सर्वे वयमतोऽस्माद्देहविनाशादुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण॥ १२॥

### आनन्दगिरिकृतटीका।

नित्यत्वमशोच्यत्वे कारणमिति सूचितं विवेचयितुं प्रश्नपूर्वकं प्रतिजानीते कुत इत्यादिना नित्यत्वमसिद्धं प्रमाणाभावादिति चोदयति कथमिति आत्मा न जायते प्रागभावशून्यत्वान्नश्वरविपर्ययवदिति परिहरति नत्वेवेति किञ्चात्मा नित्यो भावत्वे सत्यजातत्वादुव्यतिरेके घटवदित्यनुमानान्तरमाह न चैवेति यत्तु कैश्चिदात्मयाथात्म्यं जिज्ञासितं भगवाननुपदिशति नत्वित्यादिना श्लोकचतुष्टयेनेत्यादिष्टं तदसद्विशेषवचने हेत्वभावात् सर्वत्रैवात्मयाथात्म्यप्रतिपादनाविशेषादित्याशयेन पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजनेति त्रितयमपि व्याख्यानाङ्गं प्रतिपादयति नत्वित्यादिना नन्वात्मनो देहोत्पत्तिविनाशयोरुत्पत्तिविनाशप्रसिद्धेरुक्तमनुमानद्वयं प्रसिद्धिविरुद्धतया कालात्ययापदिष्टमिष्टमिति नेत्याह अतीतेष्विति चराचरव्यपाश्रयस्तु स्यादिति न्यायेनात्मनो जन्मविनाशप्रसिद्धेरौपाधिकजन्मविनाशविषयत्वान्निरुपाधिकस्य तस्य जन्मादिराहित्यमिति भावः यद्यपि तवेश्वरस्य जन्मराहित्यं तथापि कथं ममेत्याशङ्क्याह तथेति तथापि भीष्मादीनां कथं जन्मा-

### भाषा अनुवाद।

यह प्रतीति होती है कि तुम यथार्थ पण्डित नहीं हो जिस हेतु बुद्धिमान पण्डित जो हैं वे गतप्राण अगतप्राण अर्थात् मरे और जीवते को नहीं शोचते हैं कि बन्धु विहीन हम कैसे जियेंगे॥ ११॥

## देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
## तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

### शाङ्करभाष्यम्।

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह देहिनः देहोऽस्यास्तीति देही तस्य देहिनो देहवतः आत्मनः अस्मिन् वर्त्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावो मध्यमावस्था

### आनन्दगिरिकृतटीका।

भावस्तत्राह तथा नेम इति द्वितीयमनुमानं प्रपञ्चयन्नुत्तरार्द्धं व्याचष्टे तथेत्यादिना ननु देहोत्पत्तिविनाशयोरात्मनो जन्मनाशाभावेऽपि महासर्गे महाप्रलययोस्तस्याग्निविष्णु-'लिङ्गदृष्टान्तश्रुत्या जन्मविनाशावेष्टव्यावित्याशङ्क्य नात्माश्रुतेरिति न्यायेन परिहरति त्विच्छ-पोति यावद्विकारन्तु विभागो लोकवदिति न्यायेन भिन्नत्वाद्विकारित्वमात्मनामनुमीयेते भिन्नत्वञ्च बहुवचनप्रयोगप्रमितमित्याशङ्क्याह देहेति ॥ १२ ॥

### स्वामिकृतटीका।

अशोच्यत्वे हेतुमाहत्विति यथाथं परमेश्वरो जातु कदाचिल्लीलाविग्रहस्याविर्भावतिरोभावतो नासमिति तु नैवापि त्वासमेवानादित्वात् नच त्वं नासीनाभूरपि त्वासीरेव इमे च जनाधिपा नृपा नासन्निति तुनापि तुस्यास्याम एवेति जन्ममरण शून्यत्वादशोच्य इत्यर्थः ॥ १२ ॥

### भाषा अनुवाद।

भीष्म आदि कै प्रति जो शोच करना अनुचित है इस मे श्रीभगवान कारण कहते हैं कि देखो हम परमेश्वर हमारा शरीर धारण करना केवल लीलाके अर्थ है इस से इस देहके होने जाने वशते हम कभू पूर्वे मे नहीं रहे थे यह सम्भव नहीं होता जिस हेतु हम अनादि और हमारे अंशते उत्पन्न तुम और ये सब राजा लोग भी कभी नहीं रहे थे यह भी सम्भव नहीं है इस से हम सब जैसे पहले थे तैसे अब भी हैं फेरि आगे भी हम सब होंयगे इस से आत्मस्वरूप को जन्म औ मरण का स्वभाव है तो फिरि स्वजन बिनाश कहो शोक का विषय कैसे है नहीं हैं ॥ १२ ॥

## शाङ्करभाष्यम्।

जरावयो हानिर्जीर्णावस्था इत्येताः तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्था नाशेन नाशो द्वितीयावस्थोपजननेनोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयात्तृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तद्वदेव देहादन्यो देहो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः धीरो धीमांस्तत्रैव सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

### आनन्दगिरिकृतटीका।

ननु पूर्वं देहं विहायाऽपूर्वं देहमुपाददानस्य विक्रियावत्त्वेनोत्पत्तिविनाशवत्त्वाद्विभ्रमः समुद्भवेदिति शङ्कते तत्रेति अशोच्यत्वप्रतिज्ञायां नित्यत्वे हेतू कृते सतीति यावत् अवस्थाभेदे सत्यपि वस्तुतोऽविक्रियभावादात्मनो नित्यत्वमुपपन्नमित्युत्तरश्लोकेन दृष्टान्तावष्टम्भेन प्रतिपादयतीत्याह दृष्टान्तमिति न केवलमागमादेवात्मनो नित्यत्वं किन्त्ववस्थान्तरवज्जन्मान्तरे पूर्वसंस्कारानुवृत्तेश्चेत्याह देहिन इति देहवत्त्वं तस्मिन्नहं ममाभिमानभावत्वं तासामिति निर्धारणे षष्ठी आत्मनः श्रुतिस्मृत्युपपत्तिभिर्नित्यत्वज्ञानं धीमानित्यत्र धीर्विवक्ष्यते एवं सतीति तत्त्वतोऽविक्रियाभावान्नित्यत्वे समधिगते सतीत्यर्थः ॥ १२ ॥

### स्वामिकृतटीका।

नन्वीश्वरस्य तव जन्ममरणशून्यत्वं सत्यमेव जीवानान्तु जन्ममरणे प्रसिद्धे तत्राह देहिन इति देहिनो देहाभिमानिनो जीवस्य यथास्मिन् स्थूलदेहे कौमाराद्यवस्थास्तद्देहनिबन्धना एवात्मनः पूर्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात् तथैवैतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धनैव न तु तावतात्मनो नाशो जातमात्रस्य पूर्वसंस्कारेण स्तन्यपानादौ प्रवृत्ति दर्शनात् अतो धीरो धीमांस्तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यत इति ॥ १२ ॥

## भाषा अनुवाद।

जो कहो कि तुम ईश्वर तुमारा जन्म और विनाश न होना सम्भव है परन्तु हमलोग जीव हैं इस से हमारा जन्म मरण प्रसिद्ध है इस विषय में भगवान कहते हैं कि देखो देहाभिमानी जीव को इस स्थूल शरीरों में जैसे कौमार यौवन औ वृद्ध अवस्था प्राप्त होती हैं परन्तु जीव

मात्रा स्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

शाङ्करभाष्यम् ।

यद्यप्यात्मविनाशनिमित्तो मोहो न सम्भवति नित्य आत्मेति विजानतस्तथापि शीतोष्णसुखदुःखप्राप्ति निमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो मोहो दुःखसंयोगादिनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्याह मात्रास्पर्शा इति आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि मात्राणां स्पर्शा शब्दादिभिः संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखञ्च प्रयच्छन्तीति अथवा स्पृश्यन्ते इति स्पर्शा विषयाः शब्दादयः मात्राश्च शीतोष्णसुखदुःखदाः शीतं कदाचित् सुखं कदाचिद् दुःखं तथोष्णमप्यनियतस्वरूपं सुखदुखे पुनर्नियतरूपे यतो न व्यभिचरतोऽतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणं यस्मात्ते मात्राः स्पर्शादयः आगमापायिनः आगमापायशीलाः तस्मादनित्या उत्पत्तिविलयरूपत्वात् अतस्तान् शीतोष्णादींस्तितिक्षस्व प्रसहस्व तेषु हर्षविषादं माकार्षीरित्यर्थः ॥ १४ ॥

आनन्दगिरिकृतटीका ।

आत्मनः श्रुत्यादि प्रमिते नित्यत्वे तदुत्पत्ति विनाशप्रयुक्त शोकमोहाभावेऽपि प्रकारान्तरेण शोकमोहौ स्यातामित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति यद्यीत्यादिना

भाषा अनुवाद ।

स्वरूप को नहीं और यही सब अवस्थों के मध्य मे पूर्व अवस्थाके गये और और अवस्था प्राप्त भये पर भी संस्कारवशते सोऽइ हम हैं यह ज्ञान रहता है तैसेही जीवकी स्थूलदेहनाश होने पर लिङ्गशरीर के द्वारा देहान्तर कहे अन्यदेह की प्राप्ति होनेसे भी आत्माका नाश नहीं होता है देखो तुर्तके भयेहुए बालक को पूर्वसंस्कारवशते जन्म होतेमात्र दूधपीने मे प्रवृत्ति देखपड़ती है इस से स्थूलदेह के जन्म औ नाश भये पर पुरुष भी मूढ़ नहीं होते अर्थात् आत्माका जन्म मरण अङ्गीकार नहीं करते हैं ॥ १३ ॥

आनन्दगिरिकृतटीका ।

शीतोष्णादीनाभ्यां सुखदुःखयोश्च प्राप्तिं निमित्तीकृत्य यो मोहादिर्दृश्यते तस्यान्वय व्यतिरेकाभ्यां दृश्यमानत्वमाश्रित्य लौकिकविशेषणमशोच्यानित्यत्र यो विद्याधिकारी सूचितस्तस्य तितिक्षुः समाहितो भूत्वेति श्रुतेः तितिक्षुत्वं विशेषणमिहोपदिश्यते व्याख्येयं पदमुपादाय करणव्युत्पत्त्या तस्येन्द्रियविषयत्वं दर्शयति मात्रा इत्यादिना षष्ठीसमासं दर्शयन् भावव्युत्पत्त्या स्पर्शशब्दार्थमाह मात्राणामिति तेषामर्थक्रियामादर्शयति ते शीतेति संप्रति शब्दद्वयस्य कर्मव्युत्पत्त्या शब्दादिविषयपरत्वमुपेत्य समासान्तरं दर्शयन् विषयानां कार्यं कथयति अथवेति ननु शीतोष्णप्रवृत्तेः सुखदुःखप्रदत्वस्य सिद्धत्वात् किमिति शीतोष्णयोः सुखदुःखाभ्यां पृथक् ग्रहणमिति तत्राह शीतमिति विषयेभ्यस्तु पृथक् कथनं तदन्तर्भूतयोरेवतयोः सुखदुःखहेत्वोरानुकूल्यप्रातिकूल्ययोरुपलक्षणार्थम् अध्यात्मं हि शीतमुष्णं वानुकूल्यं प्रातिकूल्यं वा सम्पाद्य बाह्या विषयाः सुखादिजनयन्ति ननु विषयेन्द्रियसंयोगस्यात्मनि सदासत्त्वात् तत्प्रयुक्तशीतादेरपि तथात्वात् तन्निमित्तौ हर्षविषादौ तन्निबन्धनावित्याशङ्कोत्तरार्द्धं व्याचष्टे यस्मादित्यादिना अत्र च कौन्तेय भारतेति सम्बोधनाभ्यामुभयकुलशुद्धस्यैव विद्याधिकारित्वमिति एतदेव द्योत्यते ॥ १४ ॥

स्वामिकृतटीका ।

ननु तानहं न शोचामि किन्तु तद्वियोगादिदुःखभावेति चेत् तत्राह मात्रास्पर्शा इति मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयस्तासां स्पर्शाविषयैः सह सम्बन्धास्ते शीतोष्णादिप्रदाभवन्तितेत्वागमापायवत्त्वादनित्या अस्थिरा अतस्तांस्तितिक्षस्व सहस्व यथा जलातपादिसंसर्गास्तत्कालकृताः स्वभावतः शीतोष्णादिप्रयच्छन्ति एवमिष्टसंयोगवियोगा अपि सुखदुःखादिप्रयच्छन्ति तेषाञ्चास्थिरत्वात् सहनं तव धीरस्योचितं नतु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

## भाषा अनुवाद ।

जो कहो कि हम भीष्म आदि के प्रति शोक नहीं करते हैं परन्तु उनके वियोग में हमें दुःखभोग करना होगा इस लिये हम अपने को शोचते हैं तो इस बात पर कहते हैं कि सकल वस्तु जिसके द्वारा परिमान कीजाय ऐसी जो सब इन्द्रियवृत्ति कहे संयोग और उनके द्वारा जो विषयोंका स्पर्शहोना यही शीत उष्णादि द्वारा सुखदुःख देता है किन्तु वे अनित्य हैं इस से उन को सहो जैसे जल घर्म आदि संयोग से काल-

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

### शाङ्करभाष्यम् ।

शीतोष्णादीन् सहतः किं स्यादिति शृणु यंहीति यं हि पुरुषं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताः शीतोष्णादयः स नित्यानित्यस्वरूपदर्शननिष्ठाद्वन्द्वसहिष्णुरमृतत्वाय अमृतभावाय मोक्षायेत्यर्थः कल्पते समर्थो भवति ॥ १५ ॥

### आनन्दगिरिकृतटीका ।

अधिकारिविशेषणं तितिक्षुत्वं केवलस्य तस्य पुमर्थाहेतुत्वादिति शङ्कते शीतेति विवेकवैराग्यादिसहितं तन्मोक्षहेतुज्ञानद्वारा तदर्थमितिपरिहरति ष्टिखिवति तितिक्षमाणस्य विवक्षितं लोभमुपलम्भयति यं हीति हर्षविषादरहितमित्यत्र शमादिसाधनसम्पन्नत्वमुच्यते धीमन्तमिति नित्यानित्यविवेकभागित्वमेतच्चोभयं वैराग्यादेरुपलक्षणं नित्यात्मदर्शनं त्वमर्थज्ञानं साधनचतुष्टयवन्तमधिकारिणमनूद्य त्वं पदार्थज्ञानवतस्तस्य मोक्षौपयिकवाक्यार्थज्ञानयोग्यतामाह सनित्येति ॥ १५ ॥

### स्वामिकृतटीका ।

तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह य हीति एते मात्रास्पर्शा यं न व्यथयन्ति नाभिभवन्ति समे दुःखसुखे यस्य तं स तैरविक्षिप्यमाणो धर्मज्ञानद्वारा मृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥

### भाषा अनुवाद ।

स्वभाव वशते शीत उष्ण होने से सुखदुःखका मूल होता हैं तैसे इष्ट औ अनिष्ट प्राप्त होने से सुखदुःख होता ही है परन्तु वह अनित्य और मिथ्या हैं इस से तुम को उनका सहना उचित है तुमसे धीरपुरुष को उन मे हर्ष विषाद करना बड़ा ही अयोग्य काम है ॥ १४ ॥

किसी हेतु से उपाय अवलम्बन करि शीत उष्णके वारन करने से उन का सहना उचित हैं उस मे बड़ा फल है यह कहते हैं कि हे पुरुष श्रेष्ठ

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

## शाङ्करभाष्यम् ।

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात् नासत इति नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता नहि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु सम्भवति विकारो हि सः विकारश्च व्यभिचरति यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसज्जन्मप्रध्वंसाभ्यां प्रागूर्द्ध्वञ्चानुपलब्धेः कार्य्यस्य घटादेर्मृदादिकारणस्य तत्कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं तदसत्त्वे सर्वाभावप्रसङ्ग इतिचेन्न सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति यद्विषया बुद्धिर्न व्यभिचरति तत्सत् यद्विषया व्यभिचरति तदसत् इति सदसद्विभागे बुद्धि-

### आनन्दगिरिकृतटीका ।

अधिकारिविशेषणेति तितिक्षुत्वं हेत्वन्तरपरत्वेनोत्तरश्लोकमवतारयति इतश्चेति इतः शब्दार्थमेव स्फुटयति यस्मादिति यतः शीतादेः क्लेशादिहेतोरनात्मनो नास्ति वस्तुत्वं वस्तुनश्चात्मनो निर्विकारत्वेनैकरूपत्वम् अतो मुमुक्षोर्विशेषणं तितिक्षुत्वं युक्तमित्याह नेत्यादिना कार्य्यस्यासत्त्वेऽपि कारणस्य सत्त्वेनात्यन्तसत्त्वासिद्धिरित्याशङ्क्य विशिनष्टि सकारणस्येति नासत इत्युपादाय पुनर्नकारानुकर्षणमन्वयार्थं असतः शून्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेधप्रसक्तिरित्याशङ्क्याह न हीति विमतमतात्त्विकमप्रामाणिकत्वात् रज्जुसर्पवत् नहि धर्मिग्राहकस्य प्रत्यक्षादेस्तत्त्वावेदकं प्रामाण्यं कल्प्यते विषयस्य दुर्निरूपत्वादतोऽनिर्वाच्यं द्वैतमित्यर्थः कथं पुनरध्यक्षादिविषयस्य शीतोष्णादिद्वैतस्य दुर्निरूपत्वेनानिर्वाच्यत्वं तत्राह विकारो हीति ततश्च विमतं मिथ्या आगमापायित्वात् सम्प्रतिपन्नवदिति

### भाषा अनुवाद ।

हे अर्जुन जिनधीर पुरुषोंको सुखदुःख समानभाव अर्थात् शीत उष्णादि मे क्लेश नहीं होता सोई विक्षेपरहित पुरुष धर्मज्ञानके द्वारा मोक्षप्राप्तिके अधिकारी होते हैं ॥ १५ ॥

शाङ्करभाष्यम् ।

तन्वे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते सामानाधिकरण्येन नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति तथा च दर्शितं नतु सद्बुद्धिः तस्मात् घटादिबुद्धिविषये सन् व्यभिचारात् सद्बुद्धिविषयोऽव्यभिचारात् पटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीतिचेत् न पटादावपि सद्बुद्धिदर्शनात् विशेषणविषयैवमसद्बुद्धिरपि न विनश्यति अथ तद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यते इतिचेन्न पटादावदर्शनात् सद्बुद्धिरपि नष्टे घटे न दृश्यत इतिचेत् न विशेष्याभावात् सद्बुद्धिः विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यान्नतु पुनः सद्बुद्धिर्विषयाभावात् एकाधिकरणत्वं घटादि विशेष्याभावेन युक्तम् इतिचेत् न सदिदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्या-

आनन्दगिरिकृतटीका ।

फलितमाह विकारस्येति वाचारम्भण श्रुतेः द्वैतमिथ्यात्वे अनुग्राहकत्वं दर्शयितुं चकारः किञ्च कार्यं कारणाद्भिन्नमभिन्नस्येति विकल्प्याद्यं दूषयति यथेति निरूप्यमाणमन्तर्वहि-श्चेति शेषः विमतं कारणान्न तत्त्वतोऽभिद्यते कार्यत्वाद्घटवदित्यर्थः इतोऽपि कारणाद्भेदेन नास्ति कार्यं आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथेति न्यायादित्याह जन्मेति यदि कार्यं कारणादभिन्नं तदा तस्य भेदेनासत्त्वे पूर्वस्मादविशेषः तादात्म्येनावस्थानन्तु न युक्तं तस्यापि कारणव्यतिरेकेणाभावात् कार्यकारणविभागविधुरे वस्तुनि कार्यकारणपरम्पराया विभ्रमत्वादित्यभिप्रेत्याह मृदादिति कार्यकारणविभागहीनं वस्त्वेव नास्तीति मन्वानश्चोदयति तदसत्त्व इति अनुवृत्तव्यावृत्तबुद्धिद्वयदर्शनादनुवृत्ते च व्यावृत्तानां कल्पितं सर्वं भेदकल्पनाधिष्ठानमकार्यकारणं वस्तु सिध्यतीति परिहरति न सर्वत्रेति सम्मति सतो वस्तुत्वे प्रमाणमनुमानमुपन्यस्यति यद्विषयेति यद्व्यावृत्तेष्वनुवृत्तं तत्तदर्थं सत् यथा सर्पधारादिष्वनुगतो रज्ज्वादेरिदमंशः विमतं सत्यमव्यभिचारित्वात् सम्मतिपन्नवदित्यर्थः व्यावृत्तस्य कल्पितत्वे प्रमाणमाह यद्विषयेत्यादिना यद्व्यावृत्तं तन्मिथ्या यथा सर्पधारादि-विमतं मिथ्याव्यभिचारित्वात् सम्मतिपन्नवदित्यर्थं इत्यनुमानद्वयमनुसृत्य सतो कल्पितत्वम् स्थितमिति शेषः ननु नेदमनुमानद्वयमुपपद्यते समस्तद्वैतवैतथ्यवादिनो विभागाभावादप्रमाणादिव्यवहारानुपपत्तेस्तत्राह सदसदिति उक्ते विभागे बुद्धिद्वयाधीने स्थिते कल्पक-

## शाङ्करभाष्यम् ।

सतो न विद्यते भाव इति तथा सतश्च आत्मनः अभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्टः उपलब्धोऽन्तो निर्णयः सत्सदेवासदसदेवेति तु अनयोर्यथोक्तयोस्तत्त्वदर्शिभिः तदिति सर्वनाम सर्वञ्च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषान्ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिस्त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहञ्च शीतोष्णादीनि नियतानि यतरूपाणि द्वन्द्वानि विकारोयमसन्नेव मरीचिजलवन्मिथ्यावभासतेति मनसिव्यवस्य तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥

### आनन्दगिरिकृतटीका ।

मानादिव्यवहारो निर्वहति प्रातिभासिकविभागेन वियोगात् परमार्थस्यैव तद्धेतुत्वे केवलव्यतिरेकाभावादित्यर्थः कुतः सदसद्विभागस्य बुद्धिद्वयाधीनत्वं बुद्धिविभागस्यापि तथा भावात् तत्राह सर्वत्रेति व्यवहारभूमिः सप्तम्यर्थः बुद्धिभागस्यापि कल्पितस्यैव बोध्यविभागप्रतिभासहेतुतेति भावः बुद्धिद्वयमनुरुध्य सदसद्विभागे सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषे द्वे वस्तुनी वस्तुभूते स्यातामिति चेत् तत्राह समानाधिकरण इति पदयोः सामानाधिकरण्यं बुद्ध्योरुपचर्य्यते सोऽयमिति सामानाधिकरण्यवद्घटः सन् इत्यादि सामानाधिकरण्यमेकवस्तुनिष्ठं वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थः नीलमुत्पलमितिवद्धर्मधर्मिविषयतया सामानाधिकरण्यस्य सुवचत्वान्नवस्त्वैक्यविषयत्वमिति चेत्तत्राह न नीलेति नहि सामान्यविशेषयोर्भेदेच तद्भावो भेदाभेदे च तद्भावौ भेदाभेदौ च विरुद्धावतो जातिव्यक्त्योः सामानाधिकरण्यं नीलोत्पलयोरिव नगौणं किन्तु व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थः सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशत्येवमिति तुल्यौ हि तत्रापि विकल्पदोषाविति भावः सामानाधिकरण्यानुपपत्त्या द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषावेव वस्तुनीति पक्षं प्रतिक्षिपति तयोरिति बुद्धिव्यभिचाराद्बोध्यव्यभिचारेऽपि कथं व्यावृत्तानां विशेषाणामवस्तुत्वमित्याशङ्क्याह तथा-घटेति विकारोहि स इत्यादाविति शेषः नचैकं वस्तु सामान्यविशेषात्मकमेकस्य द्वैरूप्यविरोधादित्यभिप्रेत्य सामान्यमेकमेव वस्तु तद्बुद्धेरव्यभिचारात् बोध्यस्यापि सतस्तथात्वादित्याह नत्विति व्यभिचरतीति पूर्वेण सम्बन्धः विशेषाणां व्यभिचारित्वे फलितमुपसंहरति तस्मादिति असत्त्वं कल्पितत्वं तच्छब्दार्थमेव स्फोरयति व्यभिचारादिति मद्-

आनन्दगिरिकृतटीका ।

बुद्धिविषयस्य सतोऽकल्पितत्वे तच्छब्दोपात्तमेव हेतुमाह अव्यभिचारादिति सद्बुद्धि-व्यभिचारद्वारा बोध्यस्यापि व्यभिचारात्तदव्यभिचारित्वहेतोरसिद्धिरिति शङ्कते घटे विनष्ट इति सद्बुद्धेर्घटमात्रबुद्धिवद्घटविषयत्वाभावान्नघटनाशे व्यभिचारोऽस्ति इतिपरिहरति न पटादाविति सद्बुद्धेरघटविषयत्वे निरालम्बत्वा योगात् विषयान्तरं वक्तव्यमित्याशङ्क्याह विशेषणेति सतोऽकल्पितत्वहेतोरव्यभिचारित्वस्यासिद्धिमुद्धृत्य विशेषाणां कल्पितत्वहेतो-र्व्यभिचारित्वस्यासिद्धिं शङ्कते सदिति यथा सद्बुद्धिर्घटे नष्टे पटादौ दृष्टत्वात् अव्यभि-चारिणी अव्यभिचारः सतो दर्शितस्तथा घटबुद्धिरपि घटे नष्टे घटान्तरे दृष्टे व्यभि-चारात् घटे व्यभिचारासिद्धौ विशेषान्तरेष्वपि कल्पितत्वहेतोः व्यभिचारो न सिध्य-तीत्यर्थः घटबुद्धेर्घटान्तरे दृष्टत्वेऽपि पटादावदृष्टत्वेन व्यभिचारात् पटादिविशेषेष्वपि व्यभिचारित्वसिद्धिरित्युत्तरमाह न पटादाविति विशेषाणामेवं व्यभिचारित्वे सतोऽपि तदुपपत्तेरव्यभिचारित्व हेतुसिद्धि तादवस्थ्यमिति शङ्कते सद्बुद्धिरिति घटादिनाशदेशे तदुपरक्ताकारेण सत्त्वाभानेऽपि नासत्त्वं घटाद्यभावाधिष्ठानतया भानादित्याह न विशेष्येति यथा सर्वगता जातिरित्यत्र खण्डमुण्डादि व्यक्त्यभावदेशे गोत्वं व्यञ्जकाभावान्न व्यज्यते न गोत्वाभावात् तथा सत्त्वमपि घटादिनाशे व्यञ्जकाभावान्नभाति न स्वरूपाभावादित्युक्तमेव प्रपञ्चयति सदित्यादिना सप्रतियोगिकविशेषणत्वव्यभिचारेऽपि स्वरूपाव्यभिचाराद्युक्तं सतः सत्यत्वमिति भावः द्वयोः सतोरेव विशेष्यत्वदर्शनात् घट सतोरपि विशेषण विशे-ष्यत्वे द्वयोः सत्त्वध्रौव्यात् घटादिविकल्पितत्वानुमानं सामानाधिकरण्यधीबाधितमिति चोदयति एकेति अनुभवमनुसृत्य बाधितविषयत्वमुक्तानुमानस्य निरस्यति नेत्यादिना घटादेः सति कल्पितत्वानुमानस्य दोषराहित्ये फलितमुपसंहरति तस्मादिति प्रथमपादव्याख्या-नपरिसमाप्ताविति शब्दः ननु नेदं व्याख्यानं भाष्यकाराभिप्रेतं सर्वद्वैतशून्यत्वविवक्षायां शास्त्र तद्भाष्यविरोधात् केनापि पुनर्दुर्विदग्धेन स्वमनीषिकयोत्प्रेक्षितमेतदिति चेत् मैवं किमिदं द्वैतप्रपञ्चस्य शून्यत्वं किन्तुच्छत्वं किं सद्विलक्षणत्वं नाद्योऽनभ्युपगमात् द्वितीयान-भ्युपगमे तु तत्रैव शास्त्रविरोधो भाष्यविरोधश्च सर्वं हि शास्त्रं तद्भाष्यं च द्वैतस्य सत्य-त्वानधिकरणत्वसाधनेनाद्वैतसत्यत्वे पर्यवसितमिति त्रैविद्यवृद्धैस्तत्र तत्र प्रतिष्ठापितं तथाच प्रक्षेपाशङ्का संप्रदायपरिचयाभावादिति द्रष्टव्यम् अनात्मजातस्य कल्पितत्वेना वस्तुत्वप्रतिपादनपरतया प्रथमपादव्याख्याय द्वितीयपादमात्मनः सर्वकल्पनाधिष्ठानस्याकल्पि-तत्वेन वस्तुत्वप्रसाधनपरतया व्याकरोति तथेति नन्वात्मनः सदात्मनो विशेषेषु विनाशिषु तदुपरक्तस्य विनाशः स्यादित्याशङ्क्य विशिष्टनाशेऽपि स्वरूपानाशस्योक्तत्वान्नैवमित्याह सर्वे-त्रेति ननु कदाचिदसदेव पुनः सत्त्वमापद्यते प्रागसतो घटस्य जन्मना सत्त्वाभ्युपगमात् सच्च कदाचिदसत्त्वं प्रतिपद्यते स्थितिकाले सतो घटस्य पुनर्नाशेनासत्त्वाङ्गीकारादेवं सद-

## अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।
## विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति॥ १७॥

आनन्दगिरिकृतटीका।

सतोरव्यवस्थितत्वाविशेषादुभयोरपि हेयत्वमुपादेयत्वं वा तुल्यं स्यादिति तत्राह एवमिति तुशब्दो दृष्टशब्देन सम्बध्यमानो दृष्टिमवधारयति नहि प्रागसतो घटस्य सत्त्वमसत्त्वे स्थिते सत्त्वप्राप्तिविरोधादसत्त्वनिवृत्तिश्च सत्त्वप्राप्त्या चेत् प्राप्तमितरेतराश्रयत्वमन्तरेणैव सत्त्वापत्तिमसत्त्वनिवृत्तावसत्त्वमनवकाशि भवेत् एतेन सतोऽसत्त्वापत्तिरपि प्रतिज्ञातेतिभावः कथं तर्हि सतोऽसत्त्वमसतश्च सत्त्वं प्रतिभाति इत्याशङ्क्य तत् तद्दर्शनाभावादित्याह तत्त्वेति तस्य भावस्तत्वं नच तच्छब्देन परामर्शयोग्यं किञ्चिदस्ति प्रकृतं प्रतिनियतमित्याशङ्क्य व्याचष्टे तदित्यादिना ननु सदसतोरन्यथात्वं केचित् प्रतिपद्यन्ते केचित्तु तयोरुक्तनिर्णयमनुसृत्य तथात्वमेवाभिगच्छन्ति तत्र केषां मतमेषितव्यमिति तत्राह त्वमपीति॥ १६॥

स्वामिकृतटीका।

ननु तथापि शीतोष्णादिकमतिदुःसहं कथं सोढ़व्यम् अत्यन्तं तत्सहने च कदाचिदात्मनो नाशः स्यादित्याशङ्क्य तत्त्वविचारतः सर्वं सोढुं शक्यमित्याशयेनाह नासतो विद्यत इति असतोऽनात्मधर्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता नविद्यते तथा सतः सत्स्वभावस्यात्मनोऽभावो विनाशो न विद्यते एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः कैः तत्त्वदर्शिभिर्वस्तु याथार्थ्यवेदिभिः एवम्भूतविवेकेन सहस्वेत्यर्थः॥ १६॥

### भाषा अनुवाद।

और जो कहो कि तौभी अति दुःसह शीत उष्णादि कैसेकर सहैं और जो बड़ा क्लेश करि सहैं तो कदाचित आत्मा का नाश होसकता हैं यह शङ्काकरि कहते हैं कि विचार से तो वे सहेजाय सकते हैं जैसे अति तुच्छ औ अनात्म धर्म अर्थात् शरीरके धर्म जो शीत उष्ण प्रभृति हैं उनका आत्मा से कुछ सम्बन्ध नहीं है और सत्स्वभाव जो आत्मा उसका कभू विनाश होता नहीं यथार्थ दर्शी तत्वज्ञानी पुरुषोंने इसी प्रकार सत औ असत दोनो पदार्थ को निर्णय किया है इस से विवेक ज्ञानके द्वारा शीत उष्ण आदि को तुम सह्य करो अर्थात् सहो॥ १६॥

शाङ्करभाष्यम् ।

किं पुनस्तत् यत् सदेव सर्वदास्तीत्युच्यते अविनाशीति अविनाशि नविनष्टुं शीलं यस्येति तुशब्दः सतो विशेषणार्थः तद्विद्धि विजानीहि किं येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशमाशेनैव घटादयः विनाशमदर्शनमभावमव्ययस्य न व्येति उपचयापचयौ न याति इत्यव्ययं तस्याव्ययस्य नैतत् सदाख्यं ब्रह्म स्वेन रूपेण व्येति न व्यभिचरति निरवयवत्वाद्देहादिवत् नाप्यात्मीयेनात्मीयाभावात् यथा देवदत्तो धनहान्या व्येति नत्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं कश्चित् कर्तुमर्हति न कश्चित् आत्मानं विनाशयितुं शक्नोति ईश्वरोप्यात्मा हि ब्रह्म स्वात्मनि च क्रियाविरोधात् । १७ ॥

आनन्दगिरिकृतटीका ।

ननु सदिति सामान्यं स्वरूपं वा प्रश्ने तस्य विशेषसापेक्षतया प्रलयदशायामशेषविशेषविनाशे विनाशः स्यान्नचात्मादयो विशेषास्तदापि सन्तीति वाच्यम् आत्मातिरिक्तानां विशेषाणां कार्यत्वाङ्गीकारात् प्रलयावस्थायामनवस्थानादात्मनस्तु सामान्यात्मनो धर्मित्वादुक्तदोषात् द्वितीये तु स्वरूपस्य व्यावृत्तत्वे कल्पितत्वाद्विनाशित्वमनुवृत्तत्वेन तस्यैव सामान्यतया प्रागुक्तदोषानुशक्तिरिति मन्वानश्चोदयति किं पुनरिति सामान्यविशेषभावशून्यमखण्डैकरसं सदेवेत्यादिश्रुतिप्रमितं सर्वविक्रियारहितं वस्तु प्रकृतं सद्विवक्षितमित्युत्तरमाह उच्यत इति आत्मनः सदात्मनो विनाशराहित्यविज्ञाने सर्वजगद्व्यापकत्वं हेतुमाह येनेति आत्मनो विनाशाभावे युक्तिमाह विनाशमिति आत्मनो विनाशमिच्छता स्वतो वा परतो वा नाशस्तस्यैष्टव्यो नाद्य इत्याह अविनाशीति देहादिद्वैतमसदुच्यते ततः सतो विशेषणं स्वतो नाशराहित्यं तस्य द्योतको निपात इत्याह तुशब्द इति आकाङ्क्षापूर्वकं विशेष्यं दर्शयति किमित्यादिना विमतमविनाशि व्यापकत्वादाकाशवत् नहि प्रमितमेवोदाहरणं किन्तु प्रसिद्धमपीति भावः न द्वितीय इत्याह विनाशमिति न खल्वस्य विनाशं कर्तुं कश्चिदर्हतीति सम्बन्धः विनाशस्य सावशेषत्वनिरवशेषत्वाभ्यां द्वैराश्यमाश्रित्य व्याकरोति अदर्शनमिति न कश्चिदस्याभावं कर्तुं शक्नोतीत्यत्र हेतुमाह अव्ययस्येति ब्रह्म हि स्वरूपेण व्येति स्वसम्बन्धिना वेति विकल्पाद्यं दूषयति नैतदिति नहि निरवयवस्य सावयवस्यापचयरूपव्ययः सम्भवतीत्यत्र वैधर्म्यं दृष्टान्तमाह देहादिवदिति द्वितीयं निरस्यति नाप्यीति तदेव व्यतिरेकदृष्टान्तेन स्पष्टयति यथेति द्विविधेऽपि व्ययायोगे फलितमाह

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

## शाङ्करभाष्यम्।

किं पुनस्तदसत् यत् स्वात्मसत्तां व्यभिचरतीत्युच्यते अन्तवन्त इति अन्तो विनाशो विद्यते येषान्ते अन्तवन्तो यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्तस्तथेमे देहाः स्वप्नमायादिवच्चान्तवन्तो नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्यात्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः नित्यस्यानाशिन इति न पुनरुक्तं नित्यस्य द्विविधत्वाल्लोके नाशस्य च यथा देहोभस्मीभूतोऽदर्शनं गतो नष्टउच्यते विद्य-

## आनन्दगिरिकृतटीका।

अत इति किञ्च ब्रह्मपरतो न नश्यत्यात्मत्वाद्घटवदित्याह न कश्चिदिति आत्मत्वहेतोरसिद्धिमुद्धरति आत्मा ह्यीति तदात्म्यश्रुतिरत्रहीति हेतू क्रियते अस्तु तर्हि स्वयमेव ब्रह्म स्वात्मनो नाशकमुद्वन्धनादि दर्शनान्नेत्याह स्वात्मनीति ॥ १७ ॥

सदसतोरनन्तरप्रकृतयोः स्वरूपाव्यभिचारत्वेन परमार्थतया सन्निर्धारितमिदानीमसन्निर्दिधारयिषया पृच्छति किं पुनरिति असदेवेति निर्द्धारितत्वात् प्रश्नस्य निरवकाशत्वमाशङ्क्य शून्यं व्यावर्त्त्य विवक्षितमसन्निर्धारयितुं तस्य सावकाशत्वमाह यत्स्वात्मेति देहाद्य रनात्मवर्गस्य प्रकृतासच्छब्दविषयतेत्याह उच्यत इति तेषां स्वातन्त्र्यं व्युदस्यति नित्येति आकाशादि व्यावृत्त्यर्थं विशिनष्टि शरीरिण इति परिणामनित्यत्वं व्यवच्छिनत्ति अनाशिन इति तस्य प्रत्यक्षाद्यविषयत्वमाह अप्रमेयस्येति देहादेरवस्तुत्वादात्मनश्चैकरूपत्वाद् युद्धे स्वधर्मे प्रवृत्तस्यापि तव न हिंसादिदोषसम्भावनेत्याह तस्मादिति ननु देहादिषु

## भाषा अनुवाद।

अविनाशी सत वस्तु का स्वरूप सामान्य रूप से वर्णन करिके फेरि विशेष रूपसे कहते हैं जो इस अनित्य देह मे साक्षीस्वरूप व्याप्त होकर टिकरहा है वही आत्मा को अविनाशी जानो जिस हेतु उस अव्यय कहे नाशरहित आत्माके विनाश करने को किसी को सामर्थ्य नहीं है ॥१७॥

शाङ्करभाष्यम्।

मानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते तत्रा-नाशिनो नित्यस्येति द्विविधेनापि नाशेनासम्बन्धोऽस्येत्यर्थः अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्माभूदिति नित्यस्यानाशिनो नेत्याह अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः नन्वागमेनात्मा-परिच्छिद्यते प्रत्यक्षादिना च पूर्वं नात्मनः स्वतः सिद्धत्वात् सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति नहि पूर्वमित्थमहमित्यात्मानम् अप्रमाय पश्चात् प्रमेयपरिच्छेदाय प्रवर्त्तते न ह्यात्मानाम कस्यचिदप्रसिद्धो भवति शास्त्रं त्वन्त्यं प्रमाणम् अतद्धर्माध्यारोपणमात्रनिवर्त्तकत्वेन प्रमाण-त्वमात्मनः प्रतिपद्यते नत्वज्ञातार्थज्ञापकत्वेन तथा च श्रुतिः यत्साक्षादपरो-क्षाद् ब्रह्म य आत्मा सर्वान्तर इति यस्मादेवं नित्योऽविक्रियश्च आत्मा तस्मात् युद्धस्व युद्धादुपरमं माकार्षीरित्यर्थः नह्यत्र युद्धकर्त्तव्यता विधीयते युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्तेऽतस्तस्य कर्त्तव्यप्रतिबन्धा-पनयनमात्रं भगवता क्रियते तस्माद् युद्धस्वेत्यनुवादमात्रं न विधिः ॥१८॥

आनन्दगिरिकृतटीका।

सद्बुद्धेरनुवृत्तेस्तस्याविच्छेदाभावात् कथमन्तवत्त्वं तेषामिष्यते तत्राह यथेति तथेमे देहाः सद्बुद्धिभाजोऽपि प्रमाणतो निरूपणायामवसाने विच्छेदादन्तवन्तो भवन्तीति शेषः देह-त्वादिना च जाग्रद्देहादेरन्तवत्त्वं सम्प्रतिपन्नवदनुमातुं शक्यमित्याह स्वप्नेति शरीरादेरन्त-वत्त्वेऽपि प्रवाहरूपेणात्मनस्तत् सम्बन्धस्यानन्तत्वमाशङ्क्याह नित्यस्येति प्रवाहस्य प्रवाहि व्यतिरेकेणानिरूपणाच्च तदात्मना देहाद्यभावे सम्बन्धासिद्धिरित्यभिसन्धायोक्तं विवेकिभि-रिति पदद्वयस्यैकार्थत्वमाशङ्क्य निरस्यति नित्यस्येत्यादिना नित्यत्वस्य द्वैविध्यसिद्ध्यर्थं नाश द्वैविध्यं प्रतिज्ञातं प्रकटयति यथेत्यादिना नाशस्य निरवशेषत्वेन सावशेषत्वेन च सिद्धे द्वैविध्ये फलितमाह तत्रेति विशेषणाभ्यां कूटस्थनित्यत्वमात्मनो विवक्षितमित्यर्थः अन्यतरविशेषणानुपादाने परिणामि नित्यत्वमात्मनः शङ्कितव्यमिष्टापत्तिमाशङ्क्याह अन्य-थेति औपनिषदत्वविशेषणमाश्रित्याप्रमेयत्वमाक्षिपति नन्विति इतश्चात्मनोऽनाप्रमेयत्वमित्याह प्रत्यक्षादिनेति तेन चागमस्यप्रवृत्त्यपेक्षया पूर्वावस्थायामात्मैव परिच्छिद्यते तस्मिन्नेवा-ज्ञानत्वसम्भवादज्ञातज्ञापकं प्रमाणमिति च प्रमाणलक्षणादित्यर्थः एतदप्रमेयमित्यादिश्रुति

आनन्दगिरिकृतटीका ।

मनुष्वत्थ परिहरति नेत्यादिना कथं मानमभपेक्ष्यात्मनः सिद्धत्वमित्याशङ्क्योक्तं विदन्तीति सिद्धे हीति प्रमितोः प्रमेयमिति शेषः तदेव व्यतिरेकमुखेन विशदयति नहीति आत्मनः सर्वलोकप्रसिद्धत्वान्न तस्मिन्प्रमाणमन्वेषणीयमित्याह नह्यात्मेति प्रत्यक्षादेरनात्मविषयत्वात् तत्र चाज्ञातज्ञाततया व्यवहारसम्भवात् तत्प्रामाण्यस्य च व्यावहारिकत्वाद्विशिष्टे तत्प्रवृत्तावपि केवलेतदप्रवृत्तेर्यद्यपि नात्मनि तत्प्रामाण्यं तथापि तद्धितस्तुत्या शास्त्रस्य तत्र प्रवृत्तिरवश्यम्भाविनीत्याशङ्क्याह शास्त्रन्त्विति शास्त्रेण प्रत्यग्भूते ब्रह्मणि प्रतिपादिते प्रमात्रादि विभागस्य व्यावृत्तत्वाद्युक्तमस्यान्तत्वमपौरुषेयतया निर्दोषत्वाच्चागमस्य प्रामाण्यमित्यर्थः तथापि कथमस्य प्रत्यगात्मनि प्रामाण्यं तस्य स्वतः सिद्धत्वेनाविषयत्वाद्ज्ञातज्ञापनार्थयोगादित्याशङ्क्य स्वतो मानमानोऽपि प्रतीचौ मनुष्योऽहं कर्त्ताहमित्यादिना मनुष्यत्वकर्त्तृत्वादीनामतद्धर्माणामध्यारोपणेनात्मनि प्रतीयमानत्वात् तन्मात्र निवर्त्तकत्वेनात्मनो विषयत्वमनापाद्यैव शास्त्रं प्रामाण्यं प्रतिपद्यते सिद्धन्तु निवर्त्तकत्वादिति न्यायादित्याह अतद्धर्मेति घटादाविव स्फुरणातिशयजनकत्वेन किमित्यात्मनि शास्त्रप्रामाण्यं नेष्टमित्याशङ्क्य जड़त्वाजड़त्वाभ्यां विशेषादितिमत्वाह नत्विति ब्रह्मात्मनो रनपेक्षामन्तरेण स्वतः स्फुरणे प्रमाणमाह तथाचेति साक्षादन्यापेक्षामन्तरेणापरोक्षादपरोक्षस्फुरणात्मकं यद्ब्रह्म नच तस्यात्मनोरर्थान्तरत्वेन सर्ववस्तु सारत्वात्तमात्मानं चाचक्षेति योजना अप्रमेयत्वमविनाशित्वप्रतिपाद्य फलितं निगमयति यस्मादिति स्वधर्मनिवृत्तिहेतुनिषेधे तात्पर्यं दर्शयति युद्धादिति आत्मनो नित्यत्वादिस्वरूपमुपपाद्य युद्धकर्त्तव्यत्वविधानात् ज्ञानकर्मसमुच्चयोत्र भातीत्याशङ्क्याह नहीति युद्धस्वेति वचनात् तत्प्रवर्त्तकत्वविधिरस्तीत्याशङ्क्याह युद्ध इति कथंतर्हि कथं भीष्ममहमित्याद्यर्जुनस्य युद्धोपरमपरं वचनमिति शोकेति यदि स्वतो युद्धे प्रवृत्तिः तर्हि भगवद्वचनस्य कागतिरित्याशङ्क्याह तस्येति भगवद्वचनस्य प्रतिबन्धनिवर्त्तकत्वे सत्यर्जुनप्रवृत्तेः स्वाभाविकत्वे फलितमाह तस्मादिति ॥ १८ ॥

स्वामिकृतटीका ।

तत्र सत्स्वभावमविनाशि वस्तु सामान्येनोक्तं विशेषतो दर्शयत्यविनाशित्विति येन सर्वमिदमागमापायधर्मात्मकं देहादि ततं साक्षित्वेन व्याप्तं तत्त्वात्मस्वरूपमविनाशि विनाशशून्यं विद्धि जानीहि तत्र हेतुमाह विनाशमिति ॥ १७ ॥ १८ ॥

## भाषा अनुवाद ।

उत्पत्ति विनाश धर्म विशिष्ट कहे युक्त देहादिकी अनित्यता देखावते हैं

## य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
## उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

### शाङ्करभाष्यम् ।

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्त्तकमित्येतत् पार्थस्य साक्षीभूते ऋचावानिनाय भगवान् यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्ते अहमेव तेषां हन्तेत्येषाबुद्धिर्मृषैव ते कथं य एनमिति य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्त्तारं यश्चैनमन्यो-मन्यते हतं देहहननेन हतोऽहमिति हननक्रियायाः कर्मभूतं तावुभौ न विजानीतो न ज्ञातवन्तौ अविवेकेनात्मानमहं प्रत्ययविषयं हन्ताऽहं हतो-स्म्यहमिति देहहननेन आत्मानं यौ विजानीत स्तावात्मस्वरूपानभिज्ञाविति त्यर्थः यस्मादयमात्मा नहन्ति न हननक्रियाः कर्त्ता भवति नच हन्यते नच कर्म भवतीत्यर्थ अविक्रियत्वात् ॥ १९ ॥

### आनन्दगिरिकृतटीका ।

अविनाशि तु तद्विद्धीत्यत्र पूर्वार्द्धेन तत्पदार्थसमर्थनमुत्तरार्द्धेन निरीश्वरवादस्य परि-णामवादस्य वा निराकरणमात्मनि जन्मादिप्रतिभासस्यौपचारिकत्वप्रदर्श्यमन्तवन्त इत्यादि वचनमिति केचित् अस्तुनामायमपि पन्थाः पूर्वोक्तस्य गीताशास्त्रार्थस्योत्प्रेक्षामात्रमूलत्वं निराकर्तुं मन्त्रद्वयं भगवानामीलवानिति श्लोकद्वयस्य सङ्गतिं दर्शयति शोकमोहादीति तत्र प्रथममन्त्रस्य सङ्गतिमाह यत्त्विति प्रत्यक्षनिबन्धनत्वादस्यास्याबुद्धेर्मृषात्वमयुक्तमित्याक्षिपति

### भाषा अनुवाद ।

कि नित्य अर्थात् सदा एकरूप से स्थित और इसीसे अविनाशी औ अपरि-मेय कहे जानवे जोग नहीं ऐसा जो देही कहे आत्मा है और सुखदुख आदि धर्म विशिष्ट नश्वर विनाशी यह देह है ऐसा तत्त्वज्ञानी कहते हैं इसी से जो स्वरूप से आत्माका विनाश या सुखदुख आदिका सम्बन्ध नहीं है तो मोह जनित कहे प्रगट शोक को परित्याग करिके युद्ध मे प्रवृत्त होउ और अपना क्षत्रीका परम धर्म जो युद्ध सो कभूं छोड़ना नहीं ॥१८॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

### शाङ्करभाष्यम् ।

कथमविक्रियः आत्मेति द्वितीयो मन्त्रः न जायते नोत्पद्यते जनिलक्षणा तु वस्तु विक्रिया नात्मनो विद्यत इत्यर्थः तथा न म्रियते वा तत्र वा

### आनन्दगिरिकृतटीका ।

कथमिति प्रत्यक्षस्याज्ञानप्रसूतत्वेनाभासत्वात् तत्कृताबुद्धिर्नप्रमेति परिहरति य एनमिति हन्ता चेन्मन्यते हन्तुम् इत्याद्याम्रचमर्थतो दर्शयित्वा व्याचष्टे य एनमिति हन्तारं हतञ्चात्मानं मन्यमानस्य कथमज्ञानमित्याशङ्क्याह हन्ताहमिति हन्तृत्वादिज्ञानमज्ञानमित्यत्र हेतुमाह यस्मादिति आत्मनो हननंप्रति कर्तृत्वकर्मत्वयोरभावे हेतुं दर्शयति अविक्रियत्वादिति ॥ १९ ॥

### स्वामिकृतटीका ।

तदेवं भीष्मादि मृत्युनिमित्तः शोको निवारितो यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तम् एतान्न हन्तुमिच्छामीत्यादिना तदपि तद्वदेव निर्निमित्तमित्याह य एनमिति एनमात्मानमात्मनो हननक्रियायां कर्मत्ववत् कर्तृत्वमपि नास्तीत्यर्थः तत्र हेतुर्नायमिति ॥ १९ ॥

### भाषा अनुवाद ।

भगवान की इस बातसे महात्मा भीष्मपितामहादि के मृत्युहेतुक जो अर्जुन को शोक आयके प्राप्तभया था सो दूरभया अब कुटुम्बके बध करनेहारे हम हैं यह दुख प्रथम अध्यायके २४ श्लोक मे कहा है सो उस दुखके उत्पन्न होने मे कोई हेतु नहीं है यह प्रतीति भगवान करावते हैं कि यह आत्मा न किसी से मरता और न किसी को मारता है और जो इस को हन्ता कहै मारनेवाला जानता और इस को हत मानता वे दोनों भी कुछ नहीं जानते हैं ॥ १९ ॥

शाङ्करभाष्यम् ।

शब्दस्यार्थो न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवं यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चाद् भविता अभावं गन्ता न भूयः पुनस्तस्मान्नम्रियते यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके वा शब्दान्न शब्दाच्चायमात्मा भूत्वा वा भविता देहवन्नभूयः पुनस्तस्मान्नजायते यस्मादेवं तस्मादजो यस्मान्न म्रियते तस्मान्नित्यश्च यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीनां विक्रियाणां तदर्थैः स्वशब्दैरेव प्रतिषेधः कर्तव्य इत्यनुक्तानामपि यौवनादि समस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह शाश्वत इत्यादिना शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वतोनापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेनापक्षयः अपक्षयविपरीतावपि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति यो ह्यवयवागमेनोप-

आनन्दगिरिकृतटीका ।

तदेव साधयितुं न जायते म्रियते वा विपश्चिदित्यादि मन्त्रान्तरमवतारयति कथमिति सर्वविक्रियाराहित्यप्रदर्शनेन हेतुं विशदयन् मन्त्रमेव पठति न जायत इति जन्ममरणविक्रियाद्वयप्रतिषेधं साधयति नायमिति अयमात्मा भूत्वा न भविता नचाभूत्वा भूयोऽभवितेति योजना न केवलं विक्रियाद्वयमेवात्र निषिध्यते किन्तु सर्वमेव विक्रियाजातमित्याह अज इति वाच्यमर्थमुक्त्वा विवक्षितमर्थमाह जनिलक्षणेति विकल्पार्थत्वं व्यावर्त्तयति वेति निष्पन्नमर्थं निर्दिशति नेत्यादिना मन्त्रमेवाभिनयति न कदाचिदिति अन्त्यविक्रियाभावे हेतुत्वेन नायमित्यादि व्याचष्टे यस्मादिति उक्तमेव व्यनक्ति योहीति आत्मनि तु भूत्वा पुनरभवनाभावान्नास्ति मृत्युरित्यर्थः आत्मनो जन्माभावेऽपि हेतुरिहैव विवक्षित इत्याह वा शब्दादिति अभूत्वेति छेदः देहवदिति व्यतिरेकोदाहरणम् उक्तमेवार्थं साधयति योहीति जन्माभावे तत्पूर्विकास्तित्वविक्रियापि नात्मनोऽस्तीत्याह यस्मादिति प्राणवियोगादात्मनो मृतेरभावे सावशेषनाशाभाववन्निरवशेषनाशाभावोऽपि सिध्यतीत्याह यस्मादिति ननु जन्मनाशयोर्निषेधे तदन्तर्गतानां विक्रियान्तराणामपि निषेधसिद्धेस्तन्निषेधार्थं न पृथक् यतितव्यमिति तत्राह यद्यपीति स्वशब्दैर्मध्यवर्त्तिविक्रिया

## शाङ्करभाष्यम् ।

क्षीयते सवर्द्धतेऽभिनव इति वाच्यते अयं त्वात्मा निरवयवत्वात् पुरापि नव एवेति न पुराणो न वर्द्धत इत्यर्थः तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे हन्तिरत्र विपरिणामार्थे द्रष्टव्योऽपुनरुक्ततायै न विपरिणमत इत्यर्थः अस्मिन् मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सम्बन्धः ॥ २० ॥

## आनन्दगिरिकृतटीका ।

निषेधवाचकैरिति यावत् आर्थिकेऽपि निषेधे निषेधस्य सिद्धतया शाब्दो निषेधो न पृथगर्थवानित्याशङ्क्याह अनुक्तानामिति नित्य शब्देन शाश्वतशब्दस्य पौनरुक्त्यं परिहरन् व्याकरोति शाश्वत इत्यादिना अपक्षयो हि स्वरूपेण वा स्याद्गुणापचयतो वेति विकल्पक्रमेण दूषयति नेत्यादिना पुराणपदस्यागतार्थत्वं कथयति अपक्षयेति तदेव स्फुटयति योहीति न म्रियते वेत्यनेन चतुर्थपादस्य पौनरुक्त्यमाशङ्क्य व्याचष्टे यथेत्यादिना ननु हिंसार्थो हन्तिः श्रूयते तत्कथं विपरिणामो निषिध्यते तत्राह हन्तिरिति हिंसार्थत्वसम्भवे किमित्यर्थान्तरं हन्तेरिष्यते तत्राह अपुनरुक्ततायै इति हिंसार्थत्वे सति निषेधे न पौनरुक्त्यं स्यात् तन्निषेधार्थं विपरिणामार्थत्वमेष्टव्यमित्यर्थः पूर्वावस्थात्यागेनावस्थान्तरापत्तिर्विपरिणामः तदर्थश्चेदत्र हन्तिरिष्यते तदा निष्पन्नमर्थमाह नेति न जायते इत्यादि मन्त्रार्थमुपसंहरति अस्मिन्निति षण्णां विकाराणामात्मनि प्रतिषेधे फलितमाह सर्वेति आत्मनः सर्वविक्रियाराहित्येऽपि किमायातमित्याशङ्क्याह यस्मादिति ॥ २० ॥

## स्वामिकृतटीका ।

न हन्यत इत्येतदेव षड्भावविकारशून्यत्वेन द्रढयति नेति न जायत इति जन्मप्रतिषेधः न म्रियत इति विनाशप्रतिषेधः वा शब्दौ चार्थे नचायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते किन्तु प्रागेव स्वतः सद्रूप इति जन्मान्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधस्तत्र हेतुः यस्मादजः यो हि जायते स जन्मानन्तरमस्तित्वं भजते नतु यः स्वत एवास्ति स भूयोऽप्यन्यदस्तित्वं भजत इत्यर्थः नित्यः सर्वदैकरूप इति वृद्धिप्रतिषेधः शाश्वतः शश्वद्भव इत्यपक्षयप्रतिषेधः पुराण इति विपरिणामप्रतिषेधः पुरापि नव एव नतु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः यद्वा न भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं

**वेदाविनाशिनं नित्यं य एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम्॥ २१॥**

स्वामिकृतटीका।

यथा भवति तथा न भवितेति वृद्धिप्रतिषेधः अजो नित्य इति चोभयं वृद्ध्याद्यभावे हेतुरिति न पौनरुक्त्यं तदेवं जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीत्येवं यास्कादिभिरुक्ताः षड्भावविकारा निरस्ताः यद्यप्येते विकारा निरस्तास्तं प्रस्तुतं विनाशाभावमुपसंहरति न हन्यते हन्यमाने शरीर इति॥ २०॥

**भाषा अनुवाद।**

आत्माका नाश नहीं यह बात षड़भाव विक्रिया कहे विकार का अभाव कथनके द्वारा दृढ़ करते हैं कि आत्माका जन्म होता नहीं अर्थात् उस का जन्म रूप विकार नहीं और कभी मरता भी नहीं अर्थात् विनाश रूप विकार नहीं और आत्मा उत्पन्न होके विद्यमान है यह भी नहीं अर्थात् वर्तमान रूप विकार नहीं जो जन्मे सोई वर्तमान होता यह तो अजनमा औ पूर्व से सदा विराजमान है इस का फिरि जन्म लेकर विद्यमान होना असम्भव है और यह नित्य सदा एकरूप अर्थात् इस का वृद्धिरूप विकार नहीं है और यह शाश्वत अर्थात् क्षयरहित औ पुराण अर्थात् इसका परिणाम नहीं परिणाम कहते रूपान्तर होने को आत्मा पुरातन होके भी नया सा होता है देखो परिणत होके भी रूपान्तर को प्राप्त नहीं होता हैं ज्योंकात्योंही बना रहता और भी कहते हैं कि पहले नहीं था अब भया और बढ़ता है यह कुछ बात नहीं है इस अर्थ मे भी बुद्धिरूप विकार से रहित होता है इस विषय मे अज औ नित्य ये दोनो शब्दों के रहनेसे और कुछ कहनेका प्रयोजन नहीं है इस प्रकार आत्मका जन्म विद्यमानता बुद्धि परिणाम अपक्षय औ विनाश ये छप्रकार विकारों का अभाव सांख्य शास्त्र मे निर्णय किया है अब जो बाकी है सो कहते हैं कि शरीर हत होनेसे भी आत्मा हत नहीं होता जिस हेतु से वह अविनाशी हैं॥ २०॥

## शाङ्करभाष्यम् ।

नुष्ठेयं भवति नतु तथा न जायत इत्यात्मस्वरूपविषयज्ञानोत्तरकालभावि किञ्चिदनुष्ठेयं भवति किन्तु नाहं कर्त्ता न भोक्तेत्याद्यात्मैकत्वाकर्त्तृत्वादिविषयज्ञानादन्यत् नोत्पद्यत इत्येष विशेष उपपद्यते यः पुनः कर्त्ताहमिति वेत्त्यात्मानं तस्य ममेदं कर्त्तव्यमिति अवश्यम्भाविनी बुद्धिः स्यात् तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि सम्भवन्ति सचाविद्वान् उभौ तौ न विजानीत इति वचनात् विशेषितस्य च विदुषः कर्माक्षेपवचनात् कथं स पुरुष इति तस्माद्विशेषितस्य अविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसन्यास एवाधिकारोऽतएव भगवान्नारायणः सांख्यान् विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति तथा च पुत्रायाह भगवान् व्यासो द्वाविमावथ पन्थानावित्यादि तथा च क्रियापथश्चैव पुरस्तात् पश्चात् सन्यासश्चेत्येतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान् अतत्त्वविदहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते तत्त्ववित्तु नाह-

## आनन्दगिरिकृतटीका ।

शङ्क्याह विदुष इति कर्माण्यविदुषो विहितानीति विशेषमाक्षिपति नन्विति कर्मविधानमविदुषो विदुषश्च विद्याविधानमिति विभागे का हानिरित्याशङ्क्याह विदितेति विद्याया विदितत्वं लब्धत्वं कर्मविधिः अविदुषो विद्याविधिरिति विभागासम्भवे फलितमाह तत्रेति धर्मज्ञानानन्तरमनुष्ठेयस्य भावात् ब्रह्मज्ञानोत्तरकालश्च तदभावात् ब्रह्मज्ञानहीनस्यैव कर्मविधिरिति समाप्ते नानुष्ठेयस्येति विशेषोपपत्तिमेव प्रपञ्चयति अग्निहोत्रादीति ननु देहादिव्यतिरिक्तात्मज्ञानं विना पारलौकिकेषु कर्मसु प्रवृत्तेरनुपपत्तेस्तथाविधज्ञानवता कर्मानुष्ठेयमिति चेत् तत्राह कर्त्ताहमिति आत्मनि कर्त्ता भोक्तेत्येवं विज्ञानवत्त्वेऽपि ब्रह्मज्ञानविहीनत्वेनाविदुषोऽनुष्ठेयं कर्मेत्यर्थः देहादिव्यतिरिक्तात्मज्ञानवद्ब्रह्मज्ञानमपि ज्ञानत्वाविशेषात् कर्मप्रवृत्तावुपकरिष्यतीत्याशङ्क्याह नत्विति अनुष्ठेयविरोधित्वादविक्रियात्मज्ञानस्येति शेषः ननु ब्रह्मात्मैकत्वज्ञानादुत्तरकालमपि कर्त्ताहमित्यादिज्ञानोत्पत्तौ कर्मविधिः सावकाशः स्यादिति नेत्याह नाहमिति कारणाभावादिति शेषः कर्तृत्वादिज्ञानमन्यदित्युक्तम् अनुष्ठानानुष्ठानयोरुक्तविशेषादविदुषोऽनुष्ठानं विदुषो नेत्युपसंहरति इत्येष इति नन्वात्मविदो नचेदनुष्ठेयं किञ्चिदस्ति कथं तर्हि विद्वान् यजेतेत्यादि शास्त्रात्

शाङ्करभाष्यम् ।

करोमीति तथा च सर्वकर्माणि मनसा सन्न्यस्यास्ते इत्यादि तत्र केचित् पण्डितमन्या वदन्ति जन्मादि षड्भावविक्रियारहितोऽविक्रियोऽकर्त्तैको-ऽहमात्मेति न कस्यचित् ज्ञानमुत्पद्यते यस्मिन् सति सर्वकर्मसन्न्यास उप-दिश्यते तन्न न जायत इत्यादि शास्त्रोपदेशानर्थक्यप्रसङ्गात् तथा च शास्त्रो-पदेशसामर्थ्याद्धर्माऽस्तित्वविज्ञानं कर्तृश्च देहादिसम्बन्धिज्ञानञ्चोत्पद्यते तथा च शास्त्रात् तस्यैवात्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नोपपद्यते इति प्रष्टव्यास्ते करणगोचरत्वादितिचेन्न मनसैवानुद्रष्टव्यमिति श्रुतेः

आनन्दगिरिकृतटीका ।

प्रतिकर्माणि विधीयन्ते तत्राह यः प्रागिति आत्मनि कर्तृत्वादिज्ञानापेक्षया कर्मस्वधिकृतत्व-ज्ञाने तथाविधं पुरुषं प्रतिकर्माणि विधीयन्ते सच प्राचीनवचनादविद्वानेवेति निश्ची-यते न खल्वकर्तृत्वादिज्ञानवतस्तद्विपरीतकर्तृत्वादिज्ञानद्वारा कर्मसु प्रवृत्तिरित्यर्थः कर्मासम्भवे ब्रह्मविदो हेत्वन्तरमाह विशेषितश्चेति वेदाविनाशिनमित्यादि नेति शेषः यद्यपि विदुषो नास्ति कर्म तथापि विविदिषोः स्यादित्याशङ्क्याह तस्मादिति विद्यया विरुद्धत्वादिष्य-माणमोक्षप्रतिपक्षत्वाच्च कर्मणामित्यर्थः यद्यपि मुमुक्षोराश्रमकर्माण्यपेक्षितानि तथापि विद्या तत्फलाभ्यामविरुद्धान्येव तान्यभ्युपगतान्यन्यथा विविदिषासन्न्यास विधिविरोधादि-त्यभिप्रेत्योक्तेऽर्थे भगवतोऽनुमतिमाह अतएवेति विदुषो विविदिषोश्च सन्न्यासेऽधिकारो विदुषस्तु कर्मणीति विभागस्येष्टत्वादित्यर्थः अधिकारिभेदेन निष्ठाद्वयं भगवता वेदव्यासे-नापि दर्शितमित्याह तथाचेति अध्ययनविधिना स्वाध्यायपाठे त्रैवर्णिकस्य प्रवृत्त्यनन्तरत्र क्रियामार्गो ज्ञानमार्गश्चेति द्वौमार्गावधिकारिभेदेनावेदितावित्यर्थः आदिशब्दाद् यत्र वेदाः प्रतिष्ठिता इत्यादि गृह्यते उक्तयोर्मार्गयोस्तुल्यतां परिहर्त्तुमुदाहरणान्तरमाह तथेति बुद्धिशुद्धिद्वारा कर्म तत्फलयोर्वैराग्योदयात् पूर्वं कर्ममार्गो विहितो विरक्तस्य पुनः सन्न्यासपूर्वको ज्ञानमार्गो दर्शितः स चेतरस्मादतिशयशालीति श्रुतमित्यर्थः उक्त विभागेन पुनरपि वाक्यशेषानुकूल्यमादर्शयति एनमेवेति अहङ्कारविमूढात्मेत्यस्य व्याख्या-नम् अतत्त्वविदिति तत्त्ववित्त्विति श्लोकमवतार्य्य तात्पर्य्यार्थं संगृह्णाति नाहमिति पूर्वेण क्रियापदेनेतिशब्दः संबध्यते विरक्तमधिकृत्यावाक्यान्तरं पठति तथाचेति आदिशब्दस्त-स्यैव श्लोकस्य शेषसंग्रहार्थः अविक्रियात्मज्ञानात् कर्मसन्न्यासे दर्शिते मीमांसकमतमुत्था-पयति बलेति आत्मनो ज्ञानक्रियाशक्त्याधारत्वेनाक्रियत्वाभावादक्रियात्मज्ञानं सन्न्यास-

## शाङ्करभाष्यम्।

शास्त्राचार्य्योपदेशजनित शमदमादिसंस्कृतं मन आत्मदर्शने करणं तथा च तदधिगमायानुमाने आगमे च सति ज्ञानं नोत्पद्यते इति साहसमात्रमेतत् ज्ञानञ्चोत्पद्यमानं तद्विपरीतमज्ञानम् अवश्यं बाधत इत्यभ्युपगन्तव्यं तच्चाज्ञानं दर्शितं हन्ताहं हतोऽस्मीत्युभौ तौ न विजानीत इत्यत्र चात्मनो हननक्रियायाः कर्तृत्वं कर्मत्वं हेतुकर्तृत्वञ्चाज्ञानकृतं दर्शितं तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः विक्रियावान् हि कर्त्तात्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वञ्च प्रतिषेधयति भगवान् विदुषः कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिनं कथं स पुरुष इत्यादिना क्व पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव ज्ञानयोगेन सांख्यानामिति तथा च सर्वकर्म-

### आनन्दगिरिकृतटीका।

कारणीभूतं न सम्भवतीत्यर्थः यथोक्तज्ञानाभावो विषयाभावाद्वा मानाभावाद्वेति विकल्पमाद्यं दूषयति नेत्यादिना न तावदविक्रियात्माभावो न जायते म्रियते वेत्यादि शास्त्रस्याप्रवाक्यतया प्रमाणस्यान्तरेण कारणमानर्थक्यायोगादित्यर्थः द्वितीयं प्रत्याह यथाचेति पारलौकिककर्मविधिसामर्थ्यसिद्धं विज्ञानमुदाहरति कर्त्तुश्चेति कर्मकाण्डादज्ञाते धर्मादौ विज्ञानोत्पत्तिवत् ज्ञानकाण्डादज्ञाते ब्रह्मात्मनि विज्ञानोत्पत्तिरविरुद्धा प्रमात्वाविशेषादित्यर्थः ज्ञानस्य मनःसंयोगजन्यत्वादात्मनश्च श्रुत्या मनोऽगोचरत्वनिरासाच्चात्मज्ञाने साधनमस्तीति शङ्कते करणेति श्रुतिमाश्रित्य परिहरति न मनसेति तत्त्वमस्यादिवाक्योत्थमनोवृत्त्यैव शास्त्राचार्य्योपदेशमनुसृत्य द्रष्टव्यं तत्त्वमिति श्रूयते स्वरूपेण स्वप्रकाशमपि ब्रह्मात्मवस्तुवाक्योत्थबुद्धिवृत्त्यभिव्यक्तं सविकल्पकव्यवहारावलम्बनं भवतीति मनोगोचरत्वोपचारादसिद्धं करणागोचरत्वमित्यर्थः कथं तर्हि ब्रह्मात्मनो मनोविषयत्वनिषेधश्रुतिरित्याशङ्क्याऽसंस्कृतमनोवृत्त्यविषयत्वेनेति मन्वानः सन्नाह शास्त्रेति सत्यपि श्रुत्यादौ तदनुग्राहकाभावान्नात्माकर्मविक्रियात्मकज्ञानमुत्पत्तुमर्हतीत्याशङ्क्याह तथेति तस्याविक्रियस्यात्मनोऽधिगत्यर्थं विमतो विकारोऽनात्मधर्मो विकारत्वादुभयाभिमतविकारवदित्यनुमाने पूर्वोक्तश्रुतिस्मृतिरूपागमे च सत्येव तस्मिन्नोत्पद्यते ज्ञानमिति वचः साहसमात्रं सत्येव माने मेयं न भातीतिवदित्यर्थः ननु यथोक्तं ज्ञानमुत्पन्नमपि हानायोपदानाय वा न भवतीति कुतोऽस्य फलवत्त्वं तत्राह ज्ञानञ्चेति अवश्यमिति प्रकाशप्रवृत्तेस्तमोनिवृत्तिव्यतिरेकेणानुपपत्तिवदात्मज्ञाननिवृत्ति-

शाङ्करभाष्यम् ।

सन्न्यासं वक्ष्यति सर्वकर्माणि मनसेत्यादिना ननु मनसेति वचनाद्वाचिकानां कायिकानाञ्च सन्न्यास इतिचेत् न सर्वकर्माणीति विशेषितत्वात् मानसानामेव सर्वकर्मणामितिचेन्न मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यारा भावे कर्मानुपपत्तेः शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि मनोव्यापाराणि वर्जयित्वान्यानि सर्वकर्माणि मनसा सन्न्यस्यास्त इतिचेन्न नैव कुर्वन्नकारयन् इति विशेषणात् सर्वकर्मसन्न्यासोऽयं भगवतोक्तमरिष्यतो न जीवत इतिचेन्न नवद्वारे पुरे देही आस्ते इति

आनन्दगिरिकृतटीका ।

मन्तरेणात्मज्ञानोत्पत्तेरनुपपत्तेरित्यर्थः नन्वज्ञानस्य ज्ञानप्रागभावत्वात्तन्निवृत्तिरेव ज्ञानं ननु तन्निवर्त्तकमिति तत्राह तच्चेति कथं पुनर्भगवतापि ज्ञानाभावातिरिक्तमज्ञानं दर्शितमित्याशङ्क्याह अत्र चेति विमतं ज्ञानाभावो न भवत्युपादानत्वान्मृदादिवदिति भावः ननु हननक्रियायाश्च न हिंस्यादिति निषिद्धत्वात् तत्कर्तृत्वात् तत्कर्तृत्वादेरज्ञानकृतत्वेऽपि विहितक्रियाकर्तृत्वादेर्न तथात्वमिति नेत्याह तच्चेति न तावदात्मनि कर्तृत्वादिनित्यत्वम् अमुक्तिप्रसङ्गान्नचानित्यमपि निरुपादानं भावकार्य्यस्योपादाननियमान्नचानात्मा तदुपादानमात्मनि तत्प्रतिमानान्नचात्मैव तदुपादानं कूटस्थस्य तस्याविद्यां विना तदयोगादित्याह अविक्रियत्वादिति कर्तृत्वाभावेऽपि कारयितृत्वं स्यादित्याशङ्क्याह विक्रियावानिति आत्मनि कर्तृत्वादिप्रतिभानस्यानाद्यनिर्वाच्यमज्ञानमुपादानं तन्निवृत्तिश्च तत्त्वज्ञानादित्युक्तमिदानीं कर्तृत्वकारयितृत्वयोरविद्याकृतत्वे भगवतोमतिं दर्शयति तदेतदिति विदुषो यदि कर्माधिकाराभावो भगवतोऽभिमतः तर्हि कुत्र तस्य जीवतोऽधिकारः स्यादिति पृच्छति क्व पुनरिति ज्ञाननिष्ठायामित्युक्तं स्मारयति उक्तमिति तदङ्गभूते सर्वकर्मसन्न्यासे च तस्याधिकारोस्तीत्याह तथेति वक्ष्यमाणे वाक्ये सर्वकर्मसन्न्यासो न प्रतिभाति मानसानामेव कर्मणां विशेषणवशात् त्यागावगमादितिशङ्कते नन्विति विशेषणान्तरमाश्रित्य दूषयति न सर्वेति मनसेति विशेषणान्मानसेष्वेव कर्मसु सर्वशब्दः सङ्कुचितः स्यादिति शङ्कते मानसानामिति सर्वात्मनामनो व्यापारत्यागे व्यापारान्तराणामनुपपत्तेः सर्वकर्मसन्न्यासः सिध्यतीति परिहरति नेत्यादिना मानसेष्वपि कर्मसु सन्न्यासे सङ्कोचान्नयागादिव्यापारानुपपत्तिरिति शङ्कते शास्त्रीयाणामिति अन्यानीत्यशास्त्रीयवाक्कायकर्मकारणान्यशास्त्रीयाणि मानसानि तानि च सर्वाणि कर्माणीत्यर्थः वाक्यशेषमादाय दूषयति नैवेति नहि विवेकबुद्धा सर्वाणि कर्माणि अशास्त्रीयाणि सन्न्यस्य तिष्ठतीति युक्तं नैव कुर्वन्नित्यादि विशेषणस्य विवेकबुद्धेस्य सर्वत्याग-

## शाङ्करभाष्यम् ।

**विशेषणानुपपत्तेः नहि सर्वकर्मसन्न्यासे न सृतस्य तद्देहे आसनं सम्भवत्य कुर्वतोऽकारयतश्च देहे सन्न्यस्येति सम्बन्धो न देहे आस्त इतिचेन्न सर्वात्मनोऽविक्रियत्वावधारणात् आसनक्रियायाश्चाधिकरणापेक्षत्वात् तदनपेक्षत्वाच्च सन्न्यासस्य संपूर्वस्तु न्यासशब्दोऽत्र त्यागार्थो न निक्षेपार्थः तस्माद्गीताशास्त्रे आत्मज्ञानवतः सन्न्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥ २१ ॥**

### आनन्दगिरिकृतटीका ।

हेतोस्तुल्यत्वादित्यर्थः भगवदभिमतसर्वकर्मसन्न्यासस्यावस्थाविशेषे सङ्कोचं दर्शयन्नाशङ्कते मरिष्यत इति सन्न्यासो जीवदवस्थायां[illegible]त्र विवक्षित इत्यत्र लिङ्गं दर्शयन्नुत्तरमाह न नवेति अनुपपत्तिमेव स्फोरयति नहीति अन्वयविशेषव्याख्यानेन लिङ्गासिद्धिं चोदयति अकुर्वन इति विवेकवशाद्विशेषाण्यपि कर्माणि देहे यथोचितं निःक्षिप्याकुर्वन्नकारयंश्च विद्वानवतिष्ठते तथा च देहे कर्माणि सन्न्यस्याकुर्वतोऽकारयतश्च सुखमासनमिति सम्बन्धसम्भवात् विशेषणस्य सति देहे कर्मत्यागविषयत्वाभावाज्जीवतः सर्वकर्मत्यागो नास्तीत्यर्थः अथवा कुर्वत इत्यादि पूर्ववत्तैव सम्बन्धनीयं लिङ्गासिद्धिं चोद्यन्तु देहे सन्न्यस्येत्यारभ्योन्नेयम् आत्मनः सर्वत्राविक्रियत्वनिर्द्धारणाद्देहसम्बन्धमन्तरेण कर्तृत्वकारयितृत्वाप्राप्तेरप्राप्तप्रतिषेधप्रसङ्गपरिहारार्थमन्यदुक्त एव सम्बन्धः साधीयानिति समाधत्ते न सर्वत्रेति श्रुतिषु स्मृतिषु चेत्यर्थः किञ्च सम्बन्धस्याकाङ्क्षा सन्निधियोग्यताधीनत्वाकाङ्क्षावशादस्मदभिमतसम्बन्धसिद्धिरित्याह आसनेति भवदिष्टस्तु सम्बन्धो न सिध्यत्याकाङ्क्षाभावादित्याह तदनपेक्षत्वाच्चेति सन्न्यासशब्दस्य विक्षेपार्थत्वात् तस्य चाधिकरणसापेक्षत्वादस्मदिष्टसम्बन्धसिद्धिरित्याशङ्क्याह संपूर्वस्त्विति अन्यथोपसर्गवैयर्थ्यादित्यर्थः मनसा विवेकविज्ञानेन सर्वकर्माणि परित्यज्यास्ते देहे विद्वानित्यस्यैव सम्बन्धस्य साधुत्वं मत्वोपसंहरति तस्मादिति सर्वव्यापारोपरमात्मनः सर्वकर्मसन्न्यासस्याविक्रियात्मज्ञानां विरोधित्वात् प्रयोजकज्ञानवतो वैधे सन्न्यासेऽधिकारः सम्यग्ज्ञानवतस्त्ववैधे स्वाभाविके फलात्म[illegible]ीति विभागमभ्युपेत्योक्तोऽर्थे वाक्य[illegible]णानुगुण्यं दर्शयति इति तत्र तत्रेति ॥ २१ ॥

### स्वामिकृतटीका ।

अतएव हन्तृत्वाभावोऽपि पूर्वोक्तः सिद्ध इत्याह वेदाविनाशिनमिति नित्यं वृद्धिशून्यम् अव्ययमपक्षयशून्यम् अजम् अविनाशिनञ्च यो वेद स पुरुषः कं हन्ति एवम्भूतस्य

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥

शाङ्करभाष्यम्।

प्रकृतन्तु वक्ष्यामः तत्रात्मनोऽविनाशित्वं प्रतिज्ञातं तत् किमिवेत्युच्यते वासांसीति वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवानि अन्यानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्य न्यानि तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देहात्मा पुरुषवदविक्रिय एवेत्यर्थः ॥ २२ ॥

आनन्दगिरिकृतटीका।

आत्मनोऽविक्रियत्वेन कर्मासम्भवं प्रतिपाद्याविक्रियत्वहेतुसमर्थनार्थमेवोत्तरग्रन्थमव-तारयति प्रकृतं त्विति किं तत्प्रकृतमिति शङ्कमानं प्रत्याह तत्रेति अविनाशित्वमित्युप-

भाषा अनुवाद।

पूर्व श्लोक में आत्मा को षड्विकार से रहित कहा इस से आत्मा हनन क्रिया जो मारना इसका कर्त्ता कहे करनेवाला नहीं है यह बात अच्छी प्रकार से सिद्धभई सोई कहते हैं कि जो कोई इस आत्मा को घटने बढ़ने से रहित तथा जन्महीन औ अविनाशी जानते हैं हेअर्जुन वे किसवास्ते किसी को मारेंगे कारण यह कि अविनाशी आत्मा के बधकी उपाय नहीं है औ वह आप प्रेरणा करिके और किसी से किसी को भी किस लिये घात करावेगा इस से श्रीकृष्णजी को यह अभिप्राय जानीगई कि भीष्म आदिके बध में प्रयोजक रूप दोष हमें कभी हो जो नहीं अर्थात् तुमारे कहने से यह काम हमने किया है ऐसा कहियो नहीं ॥ २१ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
नचैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ २३॥

## शाङ्करभाष्यम्।

कस्मादविक्रिय एवेत्याह नैनं छिन्दन्तीति एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि

### आनन्दगिरिकृतटीका।

लक्षणमविक्रियत्वमित्यर्थः तदेव दृष्टान्तेन स्पष्टयितुमुत्तरश्लोकमुत्थापयति तदित्यादिना आत्मनः स्वतोऽविक्रियाभावेऽपि पुरातनदेहत्यागे नूतनदेहोपादाने च विक्रियावत्त्वध्रौव्या-दविक्रियत्वं सिद्धमिति चेत् तत्राह वासांसीति शरीराणि जीर्णानि वयोहानिं गतानि त्वग्वलीपलितादिसङ्कुलानीत्यर्थः वाससां पुरातनानां परित्यागे नवानाञ्चोपादाने त्यागो-पादानकर्तृभूतलौकिकपुरुषस्यापि अविकारित्वेनैकरूपत्ववदात्मनो देहत्यागोपादानयोरविरुद्ध-मविक्रियत्वमिति वाक्यार्थमाह पुरुषवदिति॥ २२॥

### स्वामिकृतटीका।

वधे साधनाभावात् तथा स्वयं प्रयोजको भूत्वान्येन कं घातयति कथं वा घातयति न कञ्चिदपि कथञ्चिदपीत्यर्थः अनेन ममापि प्रयोजकत्वदोषदृष्टिं माकार्षीरित्युक्तं भवति॥२१॥

नन्वात्मनोऽविनाशेऽपि तदीयशरीरनाशं पर्य्यालोच्य शोचामीति चेत् तत्राह वासांसीति कर्मनिबन्धनानां देहानामवश्यम्भावित्वाज्जीर्णदेहनाशेन शोकावकाश इत्यर्थः॥ २२॥

## भाषा अनुवाद।

जो कहो कि आत्मा अविनाशी है पर तौभी उस की स्थूल इस देह का नाश देखकर हम शोच करते हैं तो देखो जैसे मनुष्य जीर्ण कहे पुराने वस्त्र परित्याग कहे उतारकर और नये कपड़े धारण करते अर्थात् पहिरते हैं तैसे ही आत्मा पूर्व प्राचीन शरीर कहे देह छोड़ कर और नूतन कहे नई देह ग्रहण करता है इस से कर्म के अनुसार देह का अवश्य होनिहार जो जन्म औ नाश तिस से शोच करना बुद्धिमान तुम ऐसों को उचित नहीं है॥ २२॥

अच्छेद्योऽयमदाह्योयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥ २४॥

शाङ्करभाष्यम्।

तथा नैनं दहति पावकोऽग्निरपि न भस्मीकरोति तथा नचैनं क्लेदयन्त्यापोऽपां हि सावयवस्य वस्तुनः आर्द्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि सम्भवति तथा स्नेहवत् द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं त्वात्मानं न शोषयति मारुतोऽपि॥ २३॥

यत एवं तस्मात् अच्छेद्योयमिति यस्मादन्योन्यनाशहेतूनि भूतानि

आनन्दगिरिकृतटीका।

पृथिव्यादिभूतचतुष्टयप्रयुक्ते विक्रियाभावाद्यादात्मनोऽस्तित्वनविक्रियत्वमिति शङ्कते कस्मादिति यतो न भूतान्यात्मानं गोचरयितुमर्हन्त्यतो युक्तमाकाशवत् तस्याविक्रियत्वमित्याह आच्छेत्यादिना॥ २३॥

स्वामिकृतटीका।

कथं हन्तीत्यनेनोक्तं वधसाधनाभावं दर्शयन्नविनाशित्वमात्मनः स्फुटीकरोति नैनमिति आपो न क्लेदयन्ति मृदुकरणेन शिथिलं न कुर्वन्ति॥ २३॥

भाषा अनुवाद।

२१ श्लोकमे कहा है कि जो आत्माके वधका साधनाभाव कहे निरुपाय अर्थात् किसी प्रकार से आत्मा का बध नहीं होसकता हैं यह देखाय करि अब अविनाशी है इस को दृढ़ करते हैं कि सकल अस्त्र शस्त्र इस आत्मा को छेदन नहीं करि सकते औ अग्नि को भी इस के दग्ध करने की समर्थ नहीं है जल इस को आर्द्र कहे गीला नहीं करिसकता और वायु भी इस को सुखाय नही सकती है क्योंकि यह अवयव रहित हैं औ इन सब की सामर्थ्य अवयव सहित मे है अर्थात् भौतिक वस्तु कहे पञ्चभूत निर्मित वस्तु मे इन की सामर्थ्य है॥ २३॥

## शाङ्करभाष्यम् ।

एनम् आत्मानं नाशयितुं नोत्सहन्ते तस्मात् नित्यत्वात् सर्वगतः सर्वगतत्वात् स्थाणुरिवेति स्थिरः स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरन्तनो न कारणात् कुतश्चिन्निष्पन्नोऽनिलवदित्यर्थः न तेषां श्लोकानां पौनरुक्त्यं चोदनीयं यत एकेनैव श्लोकेनात्मनो नित्यत्वमविक्रियत्वं चोक्तं न जायते म्रियते वा इत्यादिना तत्र यदेवाविक्रियं किञ्चिदुच्यते तदेतस्मात् श्लोकार्थान्नातिरिच्यते किञ्चिच्छब्दतः पुनरुक्तं किञ्चिदर्थत इति दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वासुदेवः कथं नु नाम संसारिणाम् असंसारित्वं बुद्धिगोचरतामापन्नं सद्व्यक्तं तत्त्वं संसारनिवृत्तये स्यादिति किञ्च अव्यक्तोऽयमिति अव्यक्तः सर्वकरणाविषय-

## आनन्दगिरिकृतटीका ।

पृथिव्यादिभूतप्रयुक्तच्छेदनाद्यक्रियाऽभावे नित्यत्वाद्यभावं कारणमाह नित्य इति पूर्वार्द्धमुत्तरार्द्धे हेतुत्वेन योजयति यस्मादिति नित्यत्वादीनामन्योऽन्यं हेतुहेतुमद्भावं सूचयति नित्यत्वादिना नच नित्यत्वं परमाणुषु व्यभिचारादसाधकं सर्वगतत्वस्येति वाच्यं तेषामेवाप्रामाणिकत्वेन व्यभिचारानवतारान्नच सर्वगतत्वेऽपि विक्रियाशक्तिमत्त्वमात्मनोऽस्तीति युक्तं विभुत्वेनाभिमते नभसि तदनुपलम्भान्न विक्रियाशक्तिमत्त्वे स्थैर्य्यमास्थातुं शक्यं तथाविधस्य रूपादेरस्थिरत्वदर्शनादित्याशयेनाह स्थिरत्वादिति सतो नित्यत्वेऽपि कारणावष्टम्भादुत्पत्तिरपि सम्भवतीति कुतश्चिरन्तनत्वमित्याशङ्क्याह नकारणादिति आत्मनोऽविक्रियत्वस्य न जायते म्रियते वेत्यादिना साधितत्वात् तस्य पुनरभिधाने पुनरुक्तिरित्याशङ्क्याह न तेषामिति अनाशङ्कनीयस्य चोद्यस्य प्रसङ्गं दर्शयति यत इति अतो वेदाविनाशिनमित्यादौ न शङ्क्यते पौनरुक्त्यमिति शेषः कथं तत्र पौनरुक्त्यशङ्का समुन्मिषति तत्राह तत्रेति वेदाविनाशिनमित्यादि श्लोकः सप्तम्या परामृश्यते श्लोकशब्देन न जायते म्रियते वेत्यादिरुच्यते नन्विह श्लोके जन्ममरणाद्यभावोऽभिलप्यते वेदेत्यादौ पुनरपक्षयाद्यभावो विवक्ष्यते तत्र कथमर्थातिरेकाभावमादाय पौनरुक्त्यं चोद्यते तत्राह किञ्चिदिति कथं तर्हि पौनरुक्त्यं नचोदनीयमिति मन्यसे तत्राह दुर्बोधत्वादिति पुनः पुनर्विधानभेदेन वस्तु निरूपयतो भगवतोऽभिप्रायमाह कथं न्विति त्वं पदार्थपरिशोधनस्य प्रकृतत्वात् तत्रैव हेत्वन्तरमाह किञ्चेति आत्मनो नित्यत्वादिलक्षणस्य तथैव प्रथा किमिति न भवति तत्राह अव्यक्त इति मा तर्हि प्रत्यक्षत्वमभूदनुमेयत्वं तस्य किं न स्यादित्या-

## शाङ्करभाष्यम्।

त्वान्न व्यज्यते इति अव्यक्तोऽयमात्मा अतएवाचिन्त्योऽयं यद्धीन्द्रियगोचरं वस्तु-तच्चिन्ताविषयत्वमापद्यते अयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्योऽतएवाविकार्य्यो यथा क्षीरं दध्यादिना विकारि न तथा अयमात्मा निरवयवत्वाच्चाविक्रियो नहि निरवयवं किञ्चिद्विक्रियात्मकं दृष्टमविक्रियत्वाद्विकार्य्यो-यमात्मोच्यते ॥ २४ ॥

### आनन्दगिरिकृतटीका।

शङ्क्याह अतएवेति तदेव प्रपञ्चयति यद्धीति अतीन्द्रियत्वेऽपि सामान्यतो दृष्टविषयत्वं भविष्यतीत्याशङ्का कूटस्थेनात्मना व्याप्तिलिङ्गाभावान्नैवमित्याह अविकार्य्य इति अविकार्य्यत्वे व्यतिरेकदृष्टान्तमाह यथेति किञ्चात्मा न विक्रियते निरवयवद्रव्यत्वात् घटवदिति व्यतिरेकानुमानमाह निरवयत्वाच्चेति निरवयवत्वेऽपि विक्रियावत्त्वे का क्षतिरित्याशङ्क्याह नहीति सावयवस्यैव विक्रियावत्त्वे निरवयवत्वानुपपत्तिरित्यर्थः यद्धि सावयवं सक्रियं क्षीरादि तद्दध्यादिना विकारमापद्यते नच आत्मनः श्रुतिप्रमितनिरवयवत्वस्य सावयवत्वमतोऽविक्रियत्वात् नायं विकार्य्यो भवितुमर्हमिति फलितमाह अविक्रियत्वादिति ॥ २४ ॥

### स्वामिकृतटीका।

तत्र हेतुमाह अच्छेद्य इति सार्द्धेन निरवयत्वादच्छेद्योऽक्लेद्यश्च अमूर्त्तत्वाददाह्यः द्रवत्वाभावादशोष्य इति इतश्च छेदादियोग्यो न भवति यतो नित्योऽविनाशी सर्वगतः स्थाणुः स्थिरस्वभावो रूपान्तरापत्तिशून्यः अचलः पूर्वरूपापरित्यागी सनातनोऽनादिः अव्यक्तश्चक्षुराद्यविषयः अचिन्त्यो मनसोऽप्यविषयः अविकार्य्यः कर्मेन्द्रियाणामप्यगोचर इत्यर्थः उच्यत इति नित्यत्वादभियुक्तोक्तिं प्रमाणयति ॥ २४ ॥

### भाषा अनुवाद।

इस कारण कि यह आत्मा अस्त्रशस्त्र से छिन्न किंवा आग से दग्ध और जल से आर्द्र और वायु से सूखने भी नहीं सकता है इसी से आत्मा नित्य औ अविनाशी तथा सर्वत्र विद्यमान हैं और स्थिर स्वभाव कहे अचल अनादि है ॥ २४ ॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**
**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥**

### शाङ्करभाष्यम् ।

तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताहमेषां यथैते हन्यन्ते इति ॥ २५ ॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते अथ चैनमिति अथ चेत्यभ्युपगमार्थः एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति वा मन्यसे तथा प्रतितत् तद्विनाशं नित्यं वा मन्यसे मृतं मृतो-

### आनन्दगिरिकृतटीका ।

आत्मयाथात्म्योपदेशमशोच्यानन्वशोचस्त्वमित्युपक्रम्य व्याख्यातमुपसंहरति तस्मादिति अव्यक्तत्वाचिन्त्यत्वाविकार्य्यत्व नित्यत्व सर्वगतत्वादिरूपो यस्मादात्मा निर्द्धारितस्तस्मात् तथैव ज्ञातुमुचितस्तज्ज्ञानस्य फलवत्त्वादित्यर्थः प्रतिषेध्यमनुशोकमेवाभिनयति हन्ताहमिति ॥२५॥

### स्वामिकृतटीका ।

उपसंहरति तस्मादेवमिति तदेवमात्मनो जन्म विनाशाभावाच्छोकः कार्य्य इत्युक्तम् ॥२५॥

### भाषा अनुवाद ।

यह आत्मा अव्यक्त अर्थात् चक्षु आदि कर्मइन्द्रियों का विषय नहीं होता यह कह चुके हैं और अचिन्त्य अर्थात् मन का भी अगम्य ध्यान से बाहर है और अविकारी अर्थात् जन्म नाश अथवा छोटा बड़ा नया पुराना हो किसी रूप मे बदलता नहीं ऐसे ही तत्त्व ज्ञानी लोग कहते हैं इस से जान बूझकर तुम जन्म नाश से शून्य कहे रहित आत्मा के स्वरूप को अच्छी तरह जान बूझकर तुम इस झूठे शोकमोह को परित्याग करो ॥२५॥

## शाङ्करभाष्यम् ।

ऽमृत इति तथापि भाविन्यपि आत्मनि त्वं महाबाहो नैवं शोचितुमर्हसि जन्मवतो नाशो नाशवतो जन्म चेत्येताववश्यम्भाविनाविति ॥ २६ ॥

### आनन्दगिरिकृतटीका ।

आत्मनो नित्यत्वस्य प्रागेव सिद्धत्वादुत्तरश्लोकानुपपत्तिरित्याशङ्क्याह आत्मन इति अनित्यत्वमिच्छतीतिच्छेदः शक्यानां लोकायतानां वा मतमिदमापराद्ध्यते श्रोतुरर्जुनस्य पूर्वोक्तमात्मयाथात्म्यं श्रुत्वापि तस्मिन्निर्द्धारणासिद्धेर्द्वयोर्मतयोरन्यतरमताभ्युपगमः शङ्कितस्तदर्थो निपातद्वयप्रयोग इत्याह अथचेति प्रकृतस्यात्मनो नित्यत्वादिलक्षणस्य पुनः पुनर्जातत्वाभिमानाभावादसम्भावीत्याह लोकेति नित्यजातत्वाभिनिवेशे पौनःपुन्येन मृतत्वाभिनिवेशो व्याहतः स्यादित्याशङ्क्याह तथेति परकीयमतमनुभाषितमभ्युपेत्याहोवत मङ्गल्यार्थं कर्त्तुं व्यवसितावयमित्यादेस्तदीयशोकस्य निरवकाशत्वमित्याह तथापीति एवमर्जुनस्य दृश्यमानमनुशोकप्रकारं दर्शयित्वा तस्य कर्त्तुमशोभ्यत्वे हेतुमाह जन्मवत इति जन्मवतो नाशो नाशवतश्च जन्मेत्येताववश्यंभाविनौ मिथो व्याप्ताविति योजना ॥ २६ ॥

### स्वामिकृतटीका

इदानीं देहेन सहात्मनो जन्म तद्विनाशे च विनाशमङ्गीकृत्यापि शोको न कार्य्य इत्याह अथ चैनमिति अथ यद्यपेनमात्मानं अनित्यं सर्वदा तत्तद्देहे जाते जातं मन्यसे, तथा तत्तद्देहे मृते मृतञ्च मन्यसे पुण्यपापयोस्तत्फलभूतयो अजन्ममरणयोरात्मगामित्वात् तथापि त्वं शोचितुं नार्हसि ॥२६॥

## भाषा अनुवाद ।

औ विचार करि देखो कि जब आत्मा के जन्म तथा नाश का अभाव है तो फेरि आत्मा के अर्थ शोक करना उचित नहीं है यह बात निर्धार कर ठहराई गई अब जो देह के जन्म औ नाश से आत्मा का जन्म नाश है ऐसा अङ्गीकारकरिके मानो तौभी शोच करना अनुचित है यह कहते हैं कि पुण्य औ पाप तथा ततफल सुखदुःख औ जन्म नाश इन का सर्वदा आत्मा के साथ सम्बन्ध रहने से यद्यपि देहके जन्म होने से आत्मा का जन्म और देहके नाश से आत्मा का नाश इस रीति से जन्म नाश को

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥ २७॥

शाङ्करभाष्यम्।

तथा च सति जातस्येति जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्य्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥ २७॥

आनन्दगिरिकृतटीका।

तयोरवश्यकताविले सत्यनुशोकस्याकर्त्तव्यत्वे हेत्वन्तरमाह तथाचेति॥ २७॥

स्वामिकृतटीका।

सम्भाविनि जन्ममरणलक्षणेऽर्थे त्वं विद्वान् शोचितुं योग्यो न भवसि॥ २७॥

भाषा अनुवाद।

नित्यमानो तौ भी जो जन्म नाश अवश्यं भावी अर्थात् निश्चय होनेवाला है टरने का नहीं तौभी फेरि उस के अर्थ तुम को शोचना योग्य नहीं है॥ २६॥

काहे से शोचना योग्य नहीं है इस का हेतु कहते हैं कि जिस लिये जो वस्तु जन्मग्रहण करती है उस के प्रारब्ध कर्म के क्षय होने से निश्चय उस की मृत्यु अर्थात् नाश होता है ऐसे ही मरे का भी पूर्वदेह कृत कर्म बशते फेर अवश्य ही जन्म होता है इसी से एवम्भूत अनिवार्य्य अवश्यम्भावी कहे होनेवाले जन्म औ मरणके विषय मे तुम को शोच करना योग्य होता नहीं क्योंकि तुम विद्वान कहे पण्डित हो पण्डित का अर्थ यह है कि सत् असत् को विवेकिनी कहे विचार करनेवाली बुद्धि को पण्डा कहते हैं सो जिस के होय सो पण्डित है आत्मा से भिन्न जो कुछ सो असत् जाने सत एक आत्मा ही है यह तुम जानो॥ २७॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्त निधनान्येव तत्र का परिदेवना ॥ २८ ॥

शाङ्करभाष्यम् ।

कार्य्यकारणसङ्घातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्त्तुं यत अव्यक्तादीनीति अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्र-मित्रादि कार्य्यकारणसङ्घातात्मकानां तानि अव्यक्तादीनि भूतानि प्रागुत्-पत्तेः उत्पन्नानि च प्राक् मरणात् व्यक्तमध्यान्यव्यक्तनिधनान्येव पुनरव्यक्त-मदर्शनं निधनं मरणं येषां तानि अव्यक्तनिधनानि मरणादूर्द्धमव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थः तथाचोक्तम् अदर्शनादापतितः पुनश्चादर्शनं गतः नासौ तव न तस्य त्वं वृथा का परिदेवनेति तत्र का परिदेवना को वा प्रलापः अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेष्वित्यर्थः ॥ २८ ॥

आनन्दगिरिकृतटीका ।

कुत इत्यतआह जातस्य हीति हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितः मृतस्य च तद्दृष्टकृतेन कर्मणा जन्मापि ध्रुवमेव तस्मादेवमपरिहार्य्येऽर्थे आत्मान-मुद्दिश्यानुशोकस्य कर्त्तुमयोग्यत्वेऽपि भूतसङ्घातात्मकानि भूतान्युद्दिश्य तस्य कर्त्तव्यत्व-माशङ्क्याह कार्य्येति समनन्तरश्लोकस्तत्र हेतुरित्याह यतइति चाक्षुषदर्शनमादत्ति व्यावर्त्त-यति अनुपलब्धिरिति नहि यथोक्ति सङ्घातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः किं तन्मध्यं यदेषां व्यक्तमिष्यते तदाह उत्पन्नानीति उत्पत्तेरूर्द्धं मरणाच्च पूर्वं व्यावहारिकं सत्त्वं मध्यमेषां व्यक्तमिति तथोच्यते जन्मानुसारित्व विलयस्य युक्तमितिमत्वा तात्पर्य्यार्थमाह मरणादिति उक्तेऽर्थे पौराणिकसम्मतिमाह तथाचेति तत्रेत्यस्यार्थमाह अदृष्टेति पूर्वमदृष्टानि सन्ति पुनर्दृष्टानि तान्येव पुनर्नष्टानि तदेवं भ्रान्तिविषयतया घटिकायन्त्रवच्चक्रीभूतेषु भूतेषु शोकनिमित्तस्य प्रलापस्य नाव-काशोऽस्तीत्यर्थः ॥ २८ ॥

स्वामिकृतटीका ।

किञ्च देहादीनां स्वभावं पर्य्यालोच्य तदुपाधिके आत्मनो जन्ममरणे शोको न कार्य्य इत्याह अव्यक्तादीनीति अव्यक्तं प्रधानं तदेवादि उत्पत्तेः पूर्वरूपं येषां तानि अव्यक्ता-

**आश्चर्यवत् पश्यति कश्चिदेन माश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद नचैव कश्चित् ॥२८॥**

## शाङ्करभाष्यम् ।

दुर्विज्ञेयोऽयं प्रकृत आत्मा किंत्वामेवैकम् उपालभेत् साधारणे भ्रान्ति निमित्ते कथं दुर्विज्ञेयमात्मेत्यत आह आश्चर्य्यवदिति आश्चर्य्यवदाश्चर्य्यम् अदृष्टपूर्वमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्य्यवदाश्चर्य्यमिवैनमात्मानं पश्यति कश्चिदाश्चर्य्यवदेनं वदति तथैवचान्य आश्चर्य्यवच्चैनमन्यः शृणोति

### स्वामिकृतटीका

दीनि भूतानि शरीराणि कारणात्मनास्थितानामेवोत्पत्तेः तथा व्यक्तमभिव्यक्तंमध्यं जन्ममरणान्तरालं स्थितिलक्षणं येषां तानि व्यक्तमध्यानि अव्यक्ते निधनं लयो येषां तानीमान्येव-म्भूतान्येव तत्र तेषु का परिदेवना कः शोकनिमित्तो विलापः प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

## भाषा अनुवाद ।

और जो कहो कि देहादि का स्वभाव जो जन्म मरण आदि है तदुपाधिक आत्माका जन्म मरण विचारि करि शोचते हैं तौभी शोच करना न चाहिये इसपर कहते हैं कि अव्यक्तादि अर्थात् अव्यक्त कहे प्राणियों की उत्पत्तिका मूल कारण जो प्रकृति माया सो प्राणियों की उत्पत्ति के पूर्व कारण रूप सब जीवों को अपने भीतर लीन करके अव्यक्त कहे अप्रकट रहती है और व्यक्त मध्य अर्थात् जन्म मरणके मध्यमे सकल प्राणी वर्त्तमान अवस्था मे विराजमान रहते हैं और अव्यक्त निधन अर्थात् अन्त मे स्वकारण जो माया तिस मे सब प्राणी लीन होके रहते इस से हे अर्जुन ऐसे रहनेवाले प्राणीयों की मृत्यु मे किसी तरह शोच करना न चहिये जैसे जगे हुए मनुष्य को स्वप्न मे देखी भई वस्तु के अर्थ शोक करना अयोग्य है तैसे यह भी जानो ॥ २८ ॥

## शाङ्करभाष्यम्।

श्रुत्वा दृष्टोक्त्वाप्यात्मानं वेद नचैव कश्चिदथवा योऽयम् आत्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवत्यतो दुर्बोध आत्मेत्यभिप्रायः॥ २९॥

### आनन्दगिरिकृतटीका।

अर्जुनं प्रत्युपालम्भं दर्शयित्वा प्रकृतस्यात्मनो दुर्विज्ञेयत्वात् तं प्रत्युपालम्भो न सम्भवतीतिमन्वानः सन्नाह दुर्विज्ञेय इति तथाचात्माज्ञाननिमित्तविप्रलम्भस्य साधारणत्वादसाधारणोपालम्भस्य निरवकाशतेत्याह किं त्वामेवेति अहं प्रत्ययवेद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमितिशङ्कते कथमिति विशिष्टस्यात्मनोऽहं प्रत्ययस्य दृष्टत्वेऽपि केवलस्य तदभावादस्ति दुर्विज्ञेयतेति श्लोकमवतारयति आहेति आश्चर्यवदिति आद्येन पादेनात्मविषय दर्शनस्य दुर्लभत्वं दर्शयता द्रष्टुर्दौर्लभ्यमुच्यते द्वितीये नच तद्विषयवदन्यस्य दुर्लभत्वोक्तेस्तदुपदेष्टुस्तथात्वं कथ्यते तृतीयेन तदीयश्रवणस्य दुर्लभत्वद्वारा श्रोतृविरलता विवक्षिता श्रवणदर्शनोक्तीनां भावेपि तद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वं चतुर्थेनाभिमतमिति विभागः आत्मगोचरदर्शनादि दुर्लभत्वद्वारा दुर्बोधत्वमात्मनः साधयति आश्चर्यवदिति सम्प्रत्यात्मनि द्रष्टुर्वक्तुः श्रोतुः साक्षात् कर्तुश्च दुर्लभत्वाभिधानेन तदीयं दुर्बोधत्वं कथयति अथवेति व्याख्यानद्वयेऽपि फलितमाह अत इति॥ २९॥

### स्वामिकृतटीका।

कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति आत्माज्ञानादेवेत्याशयेनात्मनो दुर्ज्ञेयतामाह आश्चर्यवदिति कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत् पश्यति सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानं पश्यन्निव विस्मयेन पश्यति असम्भावनाभिभूतत्वात् तथाश्चर्यवदेवान्योवदति शृणोति चान्यः कश्चित् पुनर्विपरीतभावनाभिभूतः श्रुत्वापि न वेद चशब्दादुक्त्वापि दृष्ट्वापि न सम्यग्वेदेति द्रष्टव्यम्॥ २९॥

## भाषा अनुवाद।

तो फेरि बड़े विद्वान लोग जो शोक करते चलेआते हैं सो केवल आत्मा विषयक अज्ञानताही से होता है इस अभिप्रायमे आत्मा की दुर्ज्ञेयता कहे ज्ञान कठिनता निरूपण करते हैं कि कोई तो शास्त्र आलोचना करिके इस आत्मा को जानि के भी आश्चर्य ऐसा जानते अर्थात् सर्वगत

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

## शाङ्करभाष्यम् ।

अथेदानीं प्रकरणार्थमुपसंहरन् ब्रूते देहीति यस्माद्देही शरीरी नित्यं सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च तत्रावध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात् स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे बध्यमानेऽपि अयं देही न वध्यो यस्मात् तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

### आनन्दगिरिकृतटीका ।

श्लोकान्तरमुत्थापयति अथेति आत्मनो दुर्ज्ञानत्वप्रदर्शनानन्तरमिति यावत् वस्तु वृत्त्यापेक्षया शोकमोहयोरकर्त्तव्यत्वं प्रकरणार्थः देहे बध्यमानेऽपि देहिनो बध्यत्वाभावे फलितमाह यस्मादिति हेतुभागं विभजते सर्वस्येति फलितप्रदर्शनपरं श्लोकार्द्धं व्याचष्टे तस्माद्भीष्मादीनीति ॥ ३० ॥

### स्वामिकृतटीका ।

तदेवमवध्यत्वमात्मनः संक्षेपेणोपदिशन्नशोच्यत्वमुपसंहरति देहीति स्पष्टार्थम् ॥ ३० ॥

## भाषा अनुवाद ।

नित्यज्ञान औ आनन्द स्वरूप आत्मा के अलौकिकत्त्व से असम्भव जो इन्द्रजालिक कौतुक तिस के समान देखि आश्चर्य्य से घवड़ाय कर विस्मय युक्त होते हैं और कोई आश्चर्य के नांई कहते कोई आश्चर्य के तुल्य सुनते और कोई आत्मज्ञानरूप विपरीत कहे उलटी भावना से अभिभूत होके इस आत्मा का तत्त्व सुनि के भी जानि सकते नहीं अर्थात् बहुत देखि सुनिके भी अच्छी तरह से आत्मा का जानना अति कठिन हैं ॥ २९ ॥

इस प्रकार आत्मा का दुर्विज्ञेय स्वभाव अर्थात् बड़े कष्ट से भी उस का जानना कठिन है यह संक्षेप से उपदेश करिके अब शोक न करना

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥**

### शाङ्करभाष्यम्।

इह परमार्थतत्त्वापेक्षायां शोको वा मोहो वा न सम्भवतीत्युक्तं न केवलं परमार्थतत्त्वापेक्षायामेव किन्तु स्वधर्ममिति स्वधर्ममपि स्वो धर्मः क्षत्रियस्य धर्मः युद्धं तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुम् अर्हसि क्षत्रियस्य स्वाभाविकाद्धर्मादात्म स्वाभाव्यादित्यभिप्रायः तच्चयुद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थञ्चेति धर्मादनपेतं परं धर्म्यं तस्मात् धर्मात् युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते हि यस्मात्॥ ३१ ॥

### आनन्दगिरिकृतटीका।

श्लोकान्तरमवतारयन् वृत्तं कीर्त्तयति इहेति पूर्वश्लोकः सम्बन्धार्थः यत्पारमार्थिकं तत्त्वं तदपेक्षायामेव केवलं शोकमोहयोरसम्भवो न भवति किन्तु स्वधर्ममपि चावेक्ष्येति सम्बन्धः स्वकीयं क्षात्रधर्ममनुसन्धाय ततश्चलनं परिहर्त्तव्यमित्यर्थः यद्धिक्षत्रियस्य धर्मादनपेतं श्रेयः साधनं तदेव मयानुवर्त्तितव्यमित्याशङ्क्याह धर्म्यादिति जातिप्रयुक्तं स्वाभाविकं स्वधर्ममेव विशिनष्टि क्षत्रियस्येति पुनर्नकारोपादानमन्वयार्थं प्रचलितुमयोग्यत्वे प्रतियोगिनं दर्शयति स्वाभाविकादिति स्वाभावाविकत्वमशास्त्रीयत्वमिति शङ्कां वारयितुं तात्पर्य्यमाह आत्मेति आत्मनः स्वस्यार्जुनस्य स्वाभाव्यं क्षत्रियस्वभावप्रयुक्तं वर्णाश्रमोचितं कर्म तस्मादित्यर्थः धर्मार्थं प्रजापरिपालनार्थञ्च प्रयतमानस्य युद्धादुपरिरंसा श्रद्धातव्येत्याशङ्क्याह तच्चेति ततोऽपि श्रेयस्करं किञ्चिदनुष्ठातुं युद्धादुपरतिरुचितेत्याशङ्क्याह तस्मादिति तस्माद्युद्धात् प्रचलनमनुचितमिति शेषः ॥ ३१ ॥

### भाषा अनुवाद।

इस विषय मे कहते हैं कि जैसे सब प्राणियों की नस्वर कहे नाश होनेवाली देह मे वर्त्तमान यह देही कहे आत्मा देह नाश होने से भी इस का नाश नहीं होता क्योंकि सो आत्मा नित्य औ अवध्य है इसी से भूत जो प्राणी तिन की देह नाशके अर्थ तुम को शोक करना उचित होता नहीं ॥ ३० ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्॥ ३२॥

शाङ्करभाष्यम्।

कुतश्च तद्युक्तं कर्त्तव्यम् इत्युच्यते यदृच्छयेति यदृच्छया चाप्रार्थितमागतमुपपन्नं स्वर्गद्वारमपावृतमुद्घाटितं ये एतदीदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ किन्न सुखिनस्ते॥ ३२॥

आनन्दगिरिकृतटीका।

युद्धस्य गुर्वाद्यनेकप्राणिहिंसात्मकस्याहिंसा शास्त्रविरोधान्नास्ति कर्त्तव्यतेति शङ्कते कुतश्चेति अग्नीषोमीयहिंसावद्यमपि क्षत्रियस्य विहितत्वादनुष्ठेयं सामान्यशास्त्रतो विशेषशास्त्रस्य बलीयस्त्वादित्याह उच्यत इति तथापि युद्धे प्रवृत्तानामैहिकामुष्मिकस्यापि

स्वामिकृतटीका।

यच्चोक्तमर्जुनेन वेपथुश्च शरीरेमे इत्यादि तदप्ययुक्तमित्याह स्वधर्ममपीति आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि किञ्च स्वधर्ममप्यवेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः यच्चोक्तं नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे इति तत्राह धर्म्यादिति धर्मादनपेतादन्याद्युद्धादन्यत्॥ ३१॥

भाषा अनुवाद।

प्रथम अध्याय के २९ श्लोकमे अर्जुनने कहा है कि हमारी शरीर कांपती और रोम खड़े होतें हाथ से धनुषबाण गिरे पड़ते हैं सो यह भी अयोग्य असभव है जिस हेतु स्वधर्म जो संग्राम तिस मे प्रवृत्त होके भीष्म पितामह आदि के हनन करने से अविनाशी आत्मा का विनाश मानि तुमारा डरना औ कांपना यह युक्ति से सिद्ध होता नहीं और ३१ श्लोकमे कहा है कि ये अपने जनों को नाश करि हम श्रेय कहे कल्यान नहीं देखते उस पर कहते हैं कि धर्म युक्त जो न्याययुद्ध तिस की अपेक्षा अर्थात् उस से बढ़िकर क्षत्रियों को और कौन कल्याण करनेवाला कर्म है अर्थात् कोई भी नहीं॥ ३१॥

## अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
## ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि॥ ३३॥

आनन्दगिरिकृतटीका।

सुखाभावादुपरतिरेव ततो युक्ता प्रतिभातीत्याशङ्क्याह यदृच्छयेति चिरेण चिरतरेण कालेन च यागाद्यनुष्ठायिनः स्वर्गादिभाजो भवन्ति युद्धमानास्तु क्षत्रिया वहिर्मुखता-विहीनाः सहसैव स्वर्गादिसुखभोक्तारस्तेन तव कर्त्तव्यमेव युद्धमिति व्याख्यानेन स्फुट-यति यदृच्छयेत्यादिना इहामुत्र च भावि सुखवतामेव क्षत्रियाणां स्वधर्मभूतयुद्धसिद्धे-स्तादर्थ्येनोत्थानं शोकमोहौ हित्वा कर्त्तव्यमित्यर्थः॥ ३२॥

स्वामिकृतटीका।

किञ्च महति श्रेयसि स्वयमेवोपस्थिते सति कुतो विकम्पसे इत्याह यदृच्छयेति यदृ-च्छया अप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सुभाग्या एव लभन्ते यतोऽनिवारणं स्वर्गद्वारमेवैतत् यद्वा य एवंविधं युद्धं लभन्ते त एव सुखिन इत्यर्थः एतेन स्वजनं हि कथं हत्वा सुखिनः स्याम माधवेति यदुक्तं तन्निरस्तम्॥ ३२॥

### भाषा अनुवाद।

और जो कहो कि गुरु आदि अनेक प्राणियों की हिंसा युद्ध मे होयगी और शास्त्र मे अहिंसा परमधर्म कहा है इस से युद्ध करना अति अनुचित है इसपर कहते हैं कि जैसे वेदविहित जो यज्ञ मे हिंसा सो हिंसा नहीं है तैसे शास्त्र संमत जो क्षत्री का परम धर्म युद्ध तिस मे हिंसा औ पाप की कल्पना वृथा करते हो और परम श्रेयरूप महाफल आप से आय तुम को उपस्थित कहे प्राप्त भया है इस से अब तुम किस कारण कम्पमान होते यह कहते हैं कि हे अर्जुन वेमांगे वेयतन किये आप से प्राप्त परम श्रेय कहे कल्याण का साधन युद्ध जिस से परम कल्याण सिद्ध होय ऐसा युद्ध अति भाग्यवान क्षत्री लोग पावते हैं क्योंकि इस से स्वर्ग का द्वार वेरोंकटोंक खुला रहता है अथवा जो इस प्रकार का युद्ध पावें सोई सुखी हैं इस श्लोक से प्रथम अध्याय का छत्तीसवां श्लोक कहा गया कि किस तरह आत्मीय जनों को नाश करि सुखी होंयगे इस बात का भगवानने उत्तर दिया है॥ ३२॥

# अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
# सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥ ३४ ॥

शाङ्करभाष्यम् ।

एवं कर्तव्यताप्राप्तमपि अथेति अथ त्वमिमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत् ततस्तदकरणात् स्वधर्म्यं कीर्तिञ्च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥ ३३ ॥

न केवलं स्वधर्मकीर्त्तिपरित्यागः अकीर्तिमिति अकीर्तिञ्चापि युद्धे भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालां धर्मात्मा शूर इत्येवमादिभिर्गुणैः सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते सम्भावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

आनन्दगिरिकृतटीका ।

स्वधर्मस्य युद्धस्य अङ्गयाकरणे स्वर्गादि महाफलप्राप्तिं प्रदर्श्य तदकरणे प्रत्यवाय प्राप्तिं प्रदर्शयन्नुत्तरश्लोकगतार्थशब्दार्थं कथयति एवमिति विहितत्वं फलवत्त्वमित्यनेन प्रकारेणेत्यर्थः अन्वयार्थं पुनश्चेदित्यनूद्यते महादेवादीत्यादिशब्देन महेन्द्रादयो गृह्यन्ते ॥३३॥

युद्धाकरणे क्षत्रियस्य प्रत्यवायमामुष्मिकमापाद्य शिष्टगर्हा लक्षणं दीर्घकालभाविनमैहिकमपि प्रत्यवायं प्रतिलम्भयति न केवलमिति युद्धे स्वमरणसन्देहात् तत्परिहारार्थमकीर्त्तिरपि सोढ़व्या स्वात्मसंरक्षणस्य श्रेयस्करत्वादित्याशङ्क्याह धर्मात्मेति मान्यानामकीर्त्तिर्भवति मरणादपि दुःसहेति तात्पर्य्यार्थमाह सम्भावितस्येति ॥ ३४ ॥

स्वामिकृतटीका ।

विपक्षे दोषमाह अथ चेदिति ॥ ३३ ॥

किञ्च अकीर्त्तिमिति अव्ययां शाश्वतीं सम्भावितस्य बहुमतस्य अतिरिच्यतेऽधिका भवति ॥ ३४ ॥

भाषा अनुवाद ।

और जो यह स्वधर्म रूप संग्राम न करोगे तो केवल फलप्राप्ति न होगी यही नहीं है और उलटा प्रत्यवाय कहे अधर्म भी होगा सोई दोष कहते हैं कि जो तुम इस धर्मजनक उपस्थित कहे प्राप्तभये युद्ध करने मे प्रवृत्त न होउगे तो तुम अपने धर्म श्री कीर्तिके त्याग करने से अवश्य पाप के भागी होउगे इस मे सन्देह नहीं हैं ॥ ३३ ॥

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

शाङ्करभाष्यम् ।

किञ्च भयादिति भयात् कर्णादिभ्यो रणात् युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः के मंस्यन्ते इत्याह येषाञ्च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनस्त्वं यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

आनन्दगिरिकृतटीका ।

इतश्च त्वया युद्धं कर्त्तव्यमित्याह किञ्चेति प्राणिषु कृपयानाहं युद्धं करिष्यामीत्याशङ्क्याह भयादिति महारथानेव विशिनष्टि येषाञ्चेति दुर्योधनादिभिस्तवोपहास्यतानिरसनार्थं समरे प्रवृत्तिरवश्यम्भाविनीत्यर्थः ॥ ३५ ॥

स्वामिकृतटीका ।

किञ्च भयादिति येषां बहुगुणत्वेन त्वं पूर्वं संमतो भूत्वा एव भयात् संग्रामान्निवृत्तं त्वां मंस्येरन् ततश्च पूर्वं बहुमतो भूत्वा लाघवं लघुतां यास्यसि ॥ ३५ ॥

भाषा अनुवाद ।

और जो कहो कि स्वधर्म औ कीर्ति जाय तो जाय हम हिंसा न करैंगे तो युद्ध न करने से केवल स्वधर्म औ कीर्तिही का त्याग नहीं हैं और भी है सो कहते है कि युद्ध छोड़ने से लोग तुमारा अयश कहैंगे औ निन्दा करैंगे और वह अयश चिरकाल लों कहे बहुत दिनो तक संसार मे रहैगा और तुम क्षत्रियों के बीच युद्ध करने मे प्रसिद्ध वीर हो देखो जो जिस बात मे ख्यात कहे नामी है औ लोग उस को प्रतिष्ठित बड़ा करि जानते है तो फेरि उस का उसी बात मे अयश यह मरने से भी अधिक है और सब पाप औ दोषों का दादा है इस को अच्छी तरह विचार कर देखो ॥ ३४ ॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाऽहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

शाङ्करभाष्यम् ।

किञ्च अवाच्यवादानिति अवाच्यवादान् अवक्तव्यवादान् च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवः निन्दन्तः कुत्सयन्तस्तव त्वदीयं सामर्थ्यं निवातकवचादि युद्धनिमित्तं तस्मात् ततो निन्दाप्राप्तेर्दुःखाद्दुःखतरं नु किं ततः कष्टतरदुःखं नास्तीत्यर्थः ॥ ३६ ॥

आनन्दगिरिकृतटीका ।

इतश्च त्वं युद्धादुपरमं माकार्षीरित्याह किञ्चेति ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्यनिन्दादि यत्प्राप्तं सोढुं शक्ष्यामीत्याशङ्क्याह तत इति ॥ ३६ ॥

स्वामिकृतटीका ।

किञ्चावाच्यवादानिति अवाच्यान् वादान् वचनानर्हान् शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ॥ ३६ ॥

भाषा अनुवाद ।

भगवान कहते हैं कि अर्जुन तुम को अब युद्ध करना ही उचित है क्योंकि तुम तो यह जानते हो कि प्राणियों के ऊपर कृपा करि हम संग्राम छोड़ते हैं परन्तु महारथी वीर तुम को भयसे युद्धविमुख जानेंगे जो तुम को पूर्व कहे पहिले सकल गुणसंपन्न कहे युक्त जानते थे वे लोग अब तुम को कर्ण आदिक योद्धों के भय से युद्ध से विमुख मानैंगे देखो जिन दुर्योधन आदिकों को तुम बहुमत कहे मान्य रहे उनके निकट अब तुम कैसे लघु कहे हलके होउगे तो इस हंसी के डर से युद्ध करना अवश्य है ॥ ३५ ॥

इस से अब तुम युद्ध से निवृत्त न होउ जो कहो कि भीष्म तथा द्रोण

## हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
## तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

### शाङ्करभाष्यम् ।

युद्धे पुनः क्रियमाणे कर्णादिभिः किं हतो वेति हतो वा प्राप्स्यसि स्वर्गं हतः सन् स्वर्गं प्राप्स्यसि जित्वा कर्णादीन् शूरान् भोक्ष्यसे महीम् उभयथापि तव लाभ एवेत्यभिप्रायः यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः जेष्यामि शत्रून् मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

### आनन्दगिरिकृतटीका ।

तर्हि युद्धे गुर्वादिवधवशान्मध्यस्था निन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयत पाशरज्जुरित्याशङ्क्याह युद्धे पुनरिति जये पराजये च लाभध्रौव्याद् युद्धार्थमुत्थानमावश्यकमित्याह तस्मादिति नहि परिशुद्धकुलस्य क्षत्रियस्य युद्धायोद्युक्तस्य तस्मादपरम साधीया नित्याह कौन्तेयेति जये पराजये चेत्येतदुभयमेत्युच्यते जयादिनियमाभावेऽपि लाभनियमे फलितमाह यत इति कृतनिश्चयत्वमेव विशदयति जेष्यामीति ॥ ३७ ॥

### स्वामिकृतटीका ।

यच्चोक्तं नचैतद्विद्म इति तत्राह हतो वेति पक्षद्वयेऽपि तव लाभ एवेत्यर्थः ॥ ३७ ॥

### भाषा अनुवाद ।

आदि का बध बड़ा कष्ट है तो देखो तुमारे शत्रुगण तुमारी सामर्थ्य की निन्दा करते हुए तुमारे प्रति अनेक अयोग्य दुर्वचन कहेंगे तो इस से और दुख कौन है यह कष्ट से भी महाकष्ट है ॥ ३६ ॥

तो युद्ध करि गुरू आदिके बध से निन्दा और संग्राम छोड़ने से शत्रु निन्दा करेंगे इस दुबिधा चिन्ता के ऊपर कहते है और दूसरे अध्याय के छठयें श्लोकमे जो अर्जुनने कहा कि इन को हम मारें या येई हमे जय करि लेय इस का भी उत्तर श्रीकृष्ण करते हैं कि जय करेंगे या पराजय पावेंगे इस की निश्चय करिके उठो जो कहो कि इस दैव अधीन जय औ पराजय का क्या निश्चय है तो इस युद्ध मे जो तुमारी मृत्यु होयगी तो स्वर्गवास

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

### शाङ्करभाष्यम् ।

तव युद्धं स्वधर्म इत्येवं युध्यमानस्य उपदेशमिमं शृणु सुखदुःखे इति सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावप्यकृत्वे तत् तथा च लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व नैवं युद्धं कुर्वन् पापफलमवाप्स्यसि इत्येष उपदेशः प्रासङ्गिकः ॥ ३८ ॥

### आनन्दगिरिकृतटीका ।

पापभीरुतया युद्धाय निश्चयं कृत्वा नोत्थातुं शक्नोमीत्याशङ्क्याह तवेति युद्धस्य स्वधर्मतया कर्त्तव्यत्वे सतीति यावत् सुहृज्जीवनमरणादिनिमित्तयोः सुखदुःखयोः समताकरणं कथमिति तत्राह रागद्वेषाविति लाभः तत्तु कोषादिप्राप्तिः अलाभस्तद्विपर्य्ययः न्यायेन युद्धेनापरिभूतेन परस्य परिभवो जयस्तद्विपर्य्ययस्त्वजयः तयोः लाभालाभयोर्जया जययोश्च समताकरणं समानमेव रागद्वेषावकृत्वेत्येतद्दर्शयितुं तथेत्युक्तं यथोक्तोपदेशवशात् परमार्थदर्शनप्रकरणे युद्धकर्त्तव्यतोक्तेः समुच्चय परत्वं शास्त्रस्य प्राप्तमित्याशङ्क्याह एष इति क्षत्रियस्य तव धर्मभूतयुद्धकर्तव्यतानुवादप्रसङ्गागतत्वादस्योपदेशस्य मानेन मिथेष समुच्चयः सिध्यतीत्यर्थः ॥ ३८ ॥

### स्वामिकृतटीका ।

यदप्युक्तं पापमेवाश्रयेदस्मानिति तत्राह सुखदुःखे इति सुखदुःखे समे कृत्वा तथा तयोश्च कारणभूतौ लाभालाभावपि तयोरपि कारणभूतौ जयाजयावपि समौ कृत्वा एतेषां समत्वे कारणं हर्षविषादराहित्यं युज्यस्व सन्नद्धो भव सुखदुःखाद्यभिलाषं हित्वा स्वधर्मं बुद्ध्वा युध्यमानः पापं न प्राप्स्यसीत्यर्थः ॥ ३८ ॥

### भाषा अनुवाद ।

पावोगे और जो शत्रुवों को जीतोगे तो पृथिवी का राज्य और भोग करोगे तिस से हे कौन्तेय अर्जुन युद्ध करने को निश्चय करिके उठो तुमारे तो दोनो हाथ लड्डुआ हैं ॥ ३७ ॥

जो कदाचित् वधहेतुक पापही को निश्चय करि उसके डर से युद्ध

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥ ३९॥**

शाङ्करभाष्यम्।

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो नतु तात्पर्य्येण परमार्थदर्शनं त्विह तच्चोक्तमुपसंह्रियते एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्त्तिष्यति श्रोतारश्च विषयविभागेन सुखं ग्रहिष्य-

आनन्दगिरिकृतटीका।

ननु स्वधर्ममपि चावेक्ष्येत्यादिश्लोकैर्न्यायावष्टम्भेण शोकमोहापनयस्य तात्पर्य्येणोक्तत्वात् तस्मिन्नुपसंहर्त्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राह शोकेति स्वधर्ममपीत्यादिभिरतीतश्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग् ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमवतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वयव्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्य्येणोक्त इत्यर्थः किं तर्हि तात्पर्य्येणोक्तं तदाह परमार्थेति नत्वेवाहं जातुनासमित्यादि सप्तम्या दराऽऽत्स्यते उक्तं न जायते म्रियते वा कदाचिन्नेत्यादिनोपपादितमित्यर्थः उपसंहारप्रयोजनमाह शास्त्रेति तस्य वस्तुद्वारा विषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः ननु किमित्यत्र शास्त्रस्य विषयविभागः प्रदर्श्यते उत्तरत्रैव तद्विभागप्रवृत्तिप्रतिपत्त्योः सम्भवादिति तत्राह इहहीति शास्त्रप्रवृत्तेः श्रोतृप्रतिपत्तेश्च सौकर्य्यार्थमादौ विषयविभागसूचनमित्यर्थः उपसंहारस्य फलवत्त्वमेवमुक्त्वा तमेवोपसंहारमव-

भाषा अनुवाद।

मैं निश्चय करिके नहीं उठि सकतें यह कहो तो सुहृद मित्रोंके जीवन और मरण निमित्तक सुख और दुख की समता कहते हैं कि प्रथम सुख तथा लाभ औ हानि जय पराजय इन को समान करि और प्रीति विरोध को भी त्याग करिके तब युद्ध मे प्रवृत्त होउ इस प्रकार से युद्ध करने मे पाप न प्राप्त होयगा अर्थात् न लगेगा॥ ३८॥

शाङ्करभाष्यम्।

स्तौत्यत आह एषा ते इति एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षात् शोकमोहादि संसारहेतुदोषनिवृत्तिकारणं योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहरणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमामनन्तरमेवोच्यमानां बुद्धिं शृणु तां च बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धः तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः॥ ३९ ॥

आनन्दगिरिकृतटीका।

तारयति अतआहेति परमार्थात्मतत्त्वविषयां ज्ञाननिष्ठामुक्तामुपसंहृत्य वक्ष्यमाणां संगच्छति योगे त्विति तामेव बुद्धिं विशिष्टफलवत्त्वेनाभिष्टौति बुद्ध्येति तत्रोपसंहारभागं विभजते एषेत्यादिना बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यावर्त्तयति ज्ञानमिति तस्य सहकारि निरपेक्षस्य विशिष्टफलवत्त्वमाचष्टे साक्षादिति शोकमोहौ रागद्वेषौ कर्तृत्वं भोक्तृत्वमित्यादिरनर्थः संसारस्तस्य हेतुर्दोषः स्वाज्ञानं तस्य निवृत्तौ निरपेक्षं कारणं ज्ञानमज्ञाननिवृत्तौ ज्ञानस्यान्वय व्यतिरेक समधिगतसाधनत्वादित्यर्थः योगे त्विमामित्यादिव्याकुर्वन् योगशब्दस्य प्रकृते चित्तवृत्तिनिरोधविषयत्वं व्यवच्छिनत्ति तत्प्राप्तीति प्रकृतसूत्रप्रयुक्तं ज्ञानं तत्पदेन परामृश्यते ज्ञानोदयोपायमेव प्रकटयति निःसङ्गतयेति फलाभिसन्धि वैधुर्यं निःसङ्गत्वं बुद्धिस्तुतिप्रयोजनमाह प्ररोचनार्थमिति अभिष्टुता हि बुद्धिः श्रद्धातव्या सत्यनुष्ठातारमधिकरोति तेनस्तुतिरर्थवतीत्यर्थः कर्मानुष्ठानविषयबुद्ध्या कर्मबन्धस्य कुतो निवृत्तिर्न हि तत्त्वज्ञानमन्तरेण समूलं कर्म हातुं शक्यमित्याशङ्क्याह ईश्वर इति ॥ ३९ ॥

स्वामिकृतटीका।

उपदिष्टं ज्ञानयोगमुपसंहरंस्तत् साधनं कर्मयोगं प्रस्तौति एषेति सम्यक् ख्यायते प्रकाश्यते वस्तु तत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्यां प्रकाशमानमात्मतत्त्वं सांख्यं तस्मिन् करणीया बुद्धिरेषा तवाभिहिता एवमभिहितायामपि तव चेदात्मतत्त्वमपरोक्षं न भवति तर्ह्यन्तःकरणशुद्धिद्वारात्मतत्त्वापरोक्षार्थं कर्मयोगे त्विमां बुद्धिं शृणु यया बुद्ध्या युक्तः परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः संतत्प्रसादलब्धापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥

नेहाऽभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

## शाङ्करभाष्यम् ।

किञ्चान्यत् नेहाभीति नेह मोक्षमार्गे कर्मयोगे अभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भः तस्य नाशो नास्ति यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः किञ्च नापि चिकित्सावत् प्रत्यवायो विद्यते किन्तु भवति स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयात् जन्ममरणादिलक्षणात् ॥ ४० ॥

### आनन्दगिरिकृतटीका ।

ननु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिञ्चित्करत्वादनेकानर्थकलुषितत्वेन दोषवत्त्वाच्च योगबुद्धिरपि न श्रद्धेयेति तत्राह किञ्चेति अन्यच्च किञ्चिदुच्यते कर्मानुष्ठानस्यावश्यकत्वे तत् कारणमिति यावत् कर्मणा सह समाधेरनुष्ठातुमशक्यत्वादनेकान्तराय सम्भवात् तत्फलस्य दीर्घकालाभ्याससाध्यस्यैकस्मिन् जन्मन्यसम्भवादर्थाद्योगीभ्रंश्येतानर्थे च निपतेदित्याशङ्क्याह नेहेति प्रतीकत्वेनोपात्तस्य नकारस्य पुनरन्वयानुगुणत्वेन नास्तीत्यनुवादः यत्तु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिञ्चित् करत्वमुक्तं तत् दूषयति यथेति कृषिवाणिज्यादेरारम्भस्यानियतफलं सम्भावनामात्रोपनीतत्वान्न तथा कर्मणि वैदिके प्रारम्भस्य फल-

## भाषा अनुवाद ।

पूर्व कथित जो ज्ञानयोग उस को कहि करि अब उस का साधन जो कर्मयोग सो कहते हैं कि वस्तु औ तत्त्व को प्रकाश करनेवाला सांख्यनामक तत्त्वज्ञान तुम से कहा गया अर्थात् तत्त्वज्ञान के विषय मे जो बुद्धि सो मैंने तुम को कहा है इस से जो तुमारे तत्त्वज्ञान का बोध न होय तो फिर चित्तसुद्धिके द्वारा तत्त्वज्ञान उत्पन्न होनेके अर्थ अब यह कर्मयोग अर्थात् कर्मयोग के विषय की बुद्धि हम कहते हैं सो सावधान हो सुनो कि हे अर्जुन जिस से ईश्वरार्पित कर्म के द्वारा चित्त की शुद्धि होकर ईश्वरके प्रसाद से प्रत्यक्ष ज्ञान को प्राप्त करि इस बन्ध. से अनायास अर्थात् सहज मे छूटि जाओगे ॥ ३९ ॥

आनन्दगिरिकृतटीका।

मनियतं युज्यते शास्त्रविरोधादित्यर्थः यत्तूक्तमनेकानर्थकलुषितत्वेन दोषवदनुष्ठानमिति तत्राह किञ्चेति इतोऽपि कर्मानुष्ठानमावश्यकमिति प्रतिज्ञाय हेत्वन्तरमेव स्फुटयति नापीति चिकित्सायां हि क्रियमाणायां व्याध्यतिरेको वा मरणं वा प्रत्यवायोऽपि सम्भाव्यते कर्मपरिपाकस्य दुर्विवेकत्वान्न तथा कर्मानुष्ठाने दोषोऽस्ति विहितत्वादित्यर्थः सम्प्रति कर्मानुष्ठानस्य फलं पृच्छति किंत्विति उत्तरार्द्धं व्याकुर्वन्विवक्षितं फलं कथयति स्वल्पमपीति सम्यग्ज्ञानोत्पादनद्वारेण रक्षणं विवक्षितं सर्वपापप्रसक्तोऽपि ध्यायन्निमिष-च्युतं भूयस्तपस्वी भवति पंक्तिपावन इति स्मृतेरित्यर्थः ॥ ४० ॥

स्वामिकृतटीका।

ननु कृष्यादिवत् कर्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारान्मन्त्राद्यङ्गवैगुण्ये च प्रत्यवाय सम्भवात् कुतः कर्मबन्धप्रहाणं तत्राह नेहेति इह निष्काम कर्मयोगेऽभिक्रमस्य प्रारब्धस्य नाशो निष्फलत्वं नास्ति प्रत्यवायश्च न विद्यते ईश्वरोद्देश्येनैव विघ्नवैगुण्याद्यसम्भ-वात् किञ्चास्य धर्मस्य ईश्वराराधनार्थकर्मयोगस्य स्वल्पमपि कृतं महतो भयात् संसार-लक्षणात् त्रायते रक्षति नतु काम्य कर्मवत् किञ्चिदङ्गवैगुण्यादिना नैष्फल्यमस्येत्यर्थः ॥४०॥

## भाषा अनुवाद।

और जो कहो कि जैसे खेती औ वनिज वैपार आदि कर्मों मे कदाचित् कहे कभूं कभूं विघ्नों की बाहुल्य कहे बहुतायत से फल के हानि की भी सम्भावना है अर्थात् निष्फल परिश्रम भी होता है और मन्त्र अनुष्ठान कहे जप यज्ञ आदिक मे भी विघ्न अथवा अङ्गविकल होने से प्रत्यवाय कहे दोष औ कर्मनिष्फल होता है तैसे ही जो यह कर्म विघ्नों के मारे पूरा न हो उठे तो कैसे कर्म बन्ध की हानि कहे नाश होगा और उलटे दोष लगने का डर है इसवास्ते भगवान कहते हैं कि यह निष्काम कर्मयोग का आरम्भ करने से जो पूरा भी न होउठे तो भी निष्काम कर्म निःफल होता नहीं और इस मे दोष पाप भी नहीं लगता हैं जिस हेतु ईश्वर को उद्देश्य करि अर्थात् ईश्वर के अर्थ किये कर्म मे विघ्न होते ही नहीं और ईश्वराराधनके अर्थ इस धर्मके थोड़े आचरन से भी बड़े भयानक संसार से रक्षा होती है अर्थात् ईश्वरार्पित कर्म रक्षा करता है

व्यवसायात्मिका बुद्धि रेकेह कुरुनन्दन ।
बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

शाङ्करभाष्यम् ।

येऽयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा व्यवसायेति व्यवसायात्मिका निश्चयस्वभावा एकैव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक् प्रमाणजनितत्वादिह श्रेयो मार्गे हे कुरुनन्दन याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपरोऽनुपरतः संसारोऽपि नित्यप्रततो विस्तीर्णो भवति प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते ता बुद्धयो बहुशाखा बह्वः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत् प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानाम् इत्यर्थः ॥ ४१ ॥

आनन्दगिरिकृतटीका ।

ननु बुद्धिद्वयातिरिक्तानि बुद्ध्यन्तराण्यपि कणादादि शास्त्रप्रसिद्धानि विद्यन्ते तथा च कथं बुद्धिद्वयमेव भगवतोपदिष्टमिति तत्राह येयमिति सैवैका प्रमाणभूता बुद्धिरित्याह व्यवसायात्मिकेति बुद्ध्यन्तराण्यविवेकमूलान्यप्रमाणानीत्याह बहुशाखाह्यीति व्यवसायात्मिकाया बुद्धेः श्रेयोमार्गे प्रवृत्ताया विवक्षितं फलमाह इतरेति प्रकृतबुद्धिद्वयापेक्षया इतरा विपरीताश्चाप्रमाणजनिताः स्वकपोलकल्पिता या बुद्धयस्तासां शाखाभेदः संसारहेतुस्तस्य बाधिकेति यावत् तत्र हेतुः सम्यगिति निर्दोषवेदवाक्यसमुत्थत्वादुक्तमुपायोपेयभूतं बुद्धिद्वयं साक्षात् पारम्पर्याभ्यां संसारहेतुबाधकमित्यर्थः उत्तरार्द्धं व्याचष्टे याः पुनरिति प्रकृतबुद्धिद्वयापेक्षयार्थान्तरत्वमितरत्वं तासामनर्थहेतुत्वं दर्शयति यासामिति अप्रमाणिकबुद्धीनां प्रसक्तानुपसक्त्या जायमानानामतीव बुद्धिपरिणामविशेषः शाखा-

भाषा अनुवाद ।

इस से यह काम्यकर्मकी तरह कुछ अङ्ग बिकल होने से भी निष्फल नहीं होता है तात्पर्य्य यह कि ईश्वरार्थ कर्म करने मे जो दोष न लगे और मअत् फल है तो साक्षात् ईश्वरकी आज्ञा करने मे क्या कहना है ॥ ४० ॥

जो कहो कि कणाद आचार्य्यो के मत मे ज्ञान कर्म उपासनारूप

आनन्दगिरिकृतटीका।

भेदास्तेषां प्रचारः प्रवृत्तिः तद्दृष्टादित्येतत् अनन्तत्वं सम्यग्ज्ञानमन्तरेण निवृत्तिविरहितत्वम् अपरत्वं कार्य्यश्चैव सतावस्तुभूतकारणविरहितत्वम् अनुपरतत्वं स्फोरयति नित्येति कथं तर्हि तन्निवृत्त्या पुरुषार्थपरिसमाप्तिस्तत्राह प्रमाणेति अन्वय व्यतिरेकाख्येनानुमानेनागमेन च पदार्थपरिशोधनपरेण परिनिष्पन्ना विवेकात्मिका या बुद्धिस्तां निमित्तीकृत्य समुत्पन्नसम्यग्बोधानुरोधात् प्रकृताविपरीतबुद्धयो व्यावर्त्तन्ते तास्वसंख्यातासु व्यावृत्तासु सतीषु निरालम्बनतया संसारोऽपि स्यादुमशक्रुवन्नुपरतो भवतीत्यर्थः या पुनरित्युपक्रान्ता तत्त्वज्ञानापनोद्या संसाराङ्कुरीभूता विपरीतबुद्धिरनुक्रामति ता बुद्धय इति बुद्धीनां द्वयस्यैव कुतो बहुशाखित्वं तत्राह बहुभेदा इत्येतदिति एकैकां बुद्धिं प्रतिशाखाभेदोऽवान्तरविशेषस्तेन बुद्धीनामसंख्यत्वं प्रख्यातमित्याह प्रतिशाखेति बुद्धीनामानन्त्यप्रसिद्ध प्रद्योतनार्थो हि शब्दः सम्यग्ज्ञानवतां यथोक्त बुद्धिभेदभाक्त्वमप्रसिद्धमित्याशङ्क्य प्रत्याह केषामित्यादिना ॥ ४१ ॥

स्वामिकृतटीका।

कुत इत्यपेक्षायामुभयोर्वैषम्यमाह व्यवसायात्मिकेति इह ईश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैव एकनिष्ठैव बुद्धिर्भवति अव्यवसायिनान्तु ईश्वराराधनवहिर्मुखाणां कामिनां कामानामानन्त्यादनन्तास्तत्रापि कर्मफलगुणफलत्वादि प्रकारभेदाद् बहुशाखाश्च बुद्धयो भवन्ति ईश्वराराधनार्थं हि नित्यं नैमित्तिकञ्च कर्म किञ्चिदङ्गवैगुण्येऽपि न नश्यति यथा शक्नुयात् तथा कुर्य्यादिति हि तद्विधीयते नच वैगुण्यमपीश्वरोद्देश्येनैव वैगुण्योपशमात् नतु तथा काम्यं कर्म अतो महद्वैषम्यमिति भावः ॥ ४१ ॥

भाषा अनुवाद।

अनेक प्रकारकी बुद्धि कही हैं और आप यहां ज्ञानयोगरूप औ कर्म्मरूप दोही प्रकार बुद्धिके कहा सो कैसे सम्भव होय इस अभिप्राय पर उक्त इन दोनो के भी विपरीत कहे उलटा भिन्न प्रकार कहते हैं कि हे कुरुनन्दन अर्जुन यह ईश्वर आराधनरूप कर्मयोग मे व्यवसायात्मिका अर्थात् भगवद्भक्तिके द्वारा अवश्यही उद्धार होगा ऐसी निश्चयात्मिका कहे निश्चयरूप बुद्धिकी निष्ठा एकही है और अव्यवसायी अर्थात् आराधन के बहिर्मुख कामी कहे सकामकर्म करनेवालों की अनन्त वासना से अनेक

**यामिमां पुष्पितां वाचं प्रवदन्त्य विपश्चितः।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥ ४२॥**

## शाङ्करभाष्यम्।

येषां व्यवसायात्मिका बुद्धिर्नास्ति तेषां यामिमामिति यामिमां वक्ष्यमाणां पुष्पितां पुष्पित इववृक्षः शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति के अविपश्चितः अल्पमेधसोऽविवेकिन इत्यर्थः वेद-

## आनन्दगिरिकृतटीका।

यदि सांख्ययोगरूपैकैव प्रमाणभूता बुद्धिस्तर्हि सैव चित्ते किमिति स्थिरा न भवति तत्राह येषामिति तेषामिमां पुष्पितां वाचं प्रवदन्ति तयापहृतचेतसां कामिनां काम-यमाणनिश्चयात्मिका बुद्धिर्न प्रायः स्थिरा भवतीत्याह यामिति इमामित्यध्यवसिष्यमाणत्वेन प्रसिद्धत्वं कर्मकाण्डरूपा या वाचो निवक्ष्यते वक्ष्यमाणत्वं क्रियाविशेषबहुलामित्यादौ द्रष्टव्यं किंशुको हि पुष्पशाली शोभमानोऽनुभूयते न पुनः रूपभोग्यफलभागीलक्ष्यते तथेयमपि कर्मकाण्डात्मिका श्रूयमाणदशायां रमणीया वागुपलभ्यते साध्यसाधनसम्बन्ध-

## भाषा अनुवाद।

प्रकार की बुद्धि होती हैं और उस मे भी कर्मका फल और अश्वमेध राजसूय आदि यज्ञका अङ्ग दिग्विजय की भांति गुण कलादि नाना-प्रकार बहुत शाखा प्रशाखा विशिष्ट बुद्धि उत्पन्न होती हैं परन्तु भगवत् आराधन के अर्थ नित्यकर्म तथा नैमित्तिक कर्म कुछ अङ्गविकल कहे अधूरा भी होने से नष्ट नहीं जाता है यथासाध्य कहे जितना या जैसा अपने से हो सके उतनाही और वैसाही करो यही उस धर्म की विधि है ईश्वरार्पित कर्म विघ्न औ दोष को शान्तकरि देता है इस से उस के करने मे कदाचित् वैगुण्य नहीं होती अर्थात् उस को विगुण नहीं कह सकते हैं और काम्यकर्म तैसा नहीं है इस से दोनो के बीच बड़ा अन्तर है सो तुम एक बुद्धि होके रहो कहा है दुबिधा मे दोनों गए माया मिली न राम॥ ४१॥

## शाङ्करभाष्यम् ।

**वादरता इति वेदवादरताः बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः हे पार्थ नान्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवं वादिनो वदनशीलाः ॥ ४२ ॥**

### आनन्दगिरिकृतटीका ।

प्रतिभानान्नत्वेषां निरतिशयफलभागिनी भवति कर्मानुष्ठानफलस्यानित्यत्वादितिमत्वाह पुष्पितामिति वाक्यत्वेन लक्ष्यते अर्थवत्वप्रतिभानाद्वस्तुतस्तु न वाक्यमर्थाभासत्वादित्याह वाक्यलक्षणामिति प्रवक्तॄणां वेदवाक्यतात्पर्यपरिज्ञानाभावं सूचयति अविपश्चित इति वेदवादो वेदवाक्यानि तानि च बहूनामर्थवादानां फलानां साधनानाञ्च निश्शेषाणां प्रकाशकानि तेषु रतिरासक्तिस्तन्निष्ठत्वं तद्धत्वमपि तेषां विशेषणमित्याह वेदवादेति कर्मकाण्डनिष्ठत्वं फलं कथयति नान्यदिति ईश्वरो वा मोक्षो वा नास्तीत्येवं वदन्तो नास्तिकाः सम्यग्ज्ञानवन्तो न भवन्तीत्यर्थः ॥ ४२ ॥

### स्वामिकृतटीका ।

ननु कामिनोऽपि कष्टान् कामान् विहाय व्यवसायात्मिकामेव बुद्धिं किमिति न कुर्वन्ति तत्राह यामिमामिति यामिमां पुष्पितां विषलतावदापाततो रमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं तेषां तया वाचापहृतचेतसां व्यवसायात्मिका बुद्धिर्न समाधौ विधीयत इति तृतीयेनान्वयः किमिति तथा वदन्ति यतोऽविपश्चितो मूढाः तत्र हेतुर्वेदवादरता इति वेदे ये वादा अर्थवादाः अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति तथा अपाम सोममभृता अभूमेत्याद्याः तेष्वेव रताः प्रीता अतएवातःपरमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वदनशीलाः ॥ ४२ ॥

### भाषा अनुवाद ।

जो कहो कि सांख्य योगरूप बुद्धि एक ही प्रमाणभूत है तो फेरि वही सब के चित्त मे क्यों नहो स्थिर होतो अर्थात् जो सकाम मनुष्य हैं वे भी ये कष्टरूप सकल कामना त्याग करि भगवद्भक्तिही से मुक्त होंयगे ऐसी निश्चयरूप बुद्धि काहे के नहीं करते हैं तिस पर कहते हैं कि विषलता इन्द्रायन की तरह अति सुन्दर यह जो उत्तम स्वर्ग आदि के फलसुनावने वाली श्रुति कहे वेदवाक्य जिस को कामी कहे सकाम

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

## शाङ्करभाष्यम्।

ते च कामात्मेति कामात्मानः कामस्वभावाः कामपरा इत्यर्थः स्वर्गेति स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्म-फलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मणः फलं तत् प्रददातीति जन्म-कर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते क्रियाविशेष बहुलां क्रियाणां

## आनन्दगिरिकृतटीका।

प्रकृतान् प्रवक्तॄनविवेकिनो व्यवसायात्मिका बुद्धिभाक्त्वासम्भवसिद्ध्यै विध्यन्तरेण विशिनष्टि ते चेति तेषां संसारपरिवर्तकत्वप्रदर्शनार्थं प्रस्तुतां वाचमेव विशिनष्टि जन्मेति ननु पुंसः कामस्वभावत्वमयुक्तं चेतनस्येच्छावतस्तदात्मत्वानुपपत्तेरिति तत्राह कामपरा इति तत्परत्वं तत्तत्फलार्थित्वेन तत् तदुपायेषु कर्मस्वेव प्रवृत्ततया कर्मसन्न्यासपूर्व-

## भाषा अनुवाद।

मनुष्य सब कहते सोई स्वर्ग आदि फलश्रुतिरूप वेदवाक्य से विचारशून्य मनुष्यों को अर्थात् उस पर विश्वास करनेवालों को भगवद्भक्ति से निश्चय मुक्त होयगे। ऐसी बुद्धि उत्पन्न नहीं होती है इस श्लोक के आगेवाले तीन श्लोकों के साथ इस श्लोक को अन्वय है जो कहो कि वे मनुष्य ऐसे काहे लिये कहते है तो उन का सिद्धान्त कहते है कि जिस लिये वे सब लोग अति मूढ अज्ञानी है उन के अज्ञान में हेतु कहते है कि वेद के बीच में जो सब वाक्य है सो केवल प्रशंसापरक है अर्थात् चातु-र्मास्ययाजीयों को अक्षय स्वर्ग होता है औ यज्ञ शेष में सोमलता पीकरि अमर होते है इत्यादि जो पलाश पुष्पके समान पुष्पित वेदवाक्य है निर्गन्ध फूल के तुल्य इन्ही वेदवाक्यों से काम्यकर्म में वे लोग निरत है इस से कहते है कि यह वेदोक्त स्वर्ग आदि फल को छोड कर और ईश्वरतत्त्वप्राप्त करनेयोग्य वस्तु कुछ नही है इसी मत को वे कहते है ॥४२॥

## शाङ्करभाष्यम् ।

विशेषाः क्रियाविशेषाः ते बहुला यस्यां वाचि तां स्वर्गपशुपुत्राद्यर्थाः यया वाचा बाहुल्येन प्रकाश्यन्ते भोग्यैश्वर्य्यगतिं प्रति भोगश्च ऐश्वर्य्यञ्च भोगैश्वर्य्ये तयोर्गतिः प्राप्तिः भोगैश्वैर्य्यगतिः तां प्रतिसाधनभूतास्ते क्रियाविशेषाः तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्त्तन्त इत्यभिप्रायः ॥ ४३ ॥

### आनन्दगिरिकृतटीका ।

कात् ज्ञानाद्बहिर्मुखत्वं ननु कर्मनिष्ठानामपि परमपुरुषार्थापेक्षया मोक्षोपाये ज्ञाने भवत्याभिमुख्यमिति नेत्याह स्वर्गेति तत्परत्वं तस्मिन्नेवासक्ततया तदतिरिक्तपुरुषार्थराहित्यनिश्चयवत्त्वम् उच्चावचमध्यमदेहप्रभेदग्रहणं जन्मवाचो यथोक्तं फलप्रदत्वमप्रमाणिकमित्याशङ्क्यानुष्ठानद्वारा तदुपपत्तिरित्याह क्रियेति क्रियाणामनुष्ठानानां यागदानादीनां विशेषादेशकालाधिकारिप्रयुक्ताः सम्प्राह्यानेकाहलक्षणास्ते खल्वस्यां वाचि प्राचुर्येण प्रतिभान्तीत्यर्थः कथं यथोक्तायां वाचि क्रियाविशेषाणां बाहुल्येनावस्थानमित्याशङ्क्य प्रकाश्यत्वेनैतद्विशदयति स्वर्गेति तथापि तेषां मोक्षोपायत्वोपपत्तेस्तन्निष्ठानां मोक्षाभिमुख्यं भविष्यति नेत्याह भोगेति यथोक्तां वाचमभिवदतां पर्य्यवसानं दर्शयति तद्बहुलामिति ॥ ४३ ॥

### स्वामिकृतटीका ।

अतएव कामात्मन इति कामात्मानः कामाकुलितचित्ता अतः स्वर्ग एव परः पुरुषार्थो येषां ते जन्म च तत्र कर्माणि च तत्फलानि च प्रददातीति तया तां भोगैश्वर्य्ययोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रिया विशेषास्ते बहुला यस्यां तां प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥

## भाषा अनुवाद ।

अतएव कामात्मा कहे कर्मबुद्धि स्वर्गादि फलप्राप्तिरूप कामना ही है परम पुरुषार्थ जिन के मत मे ऐसे जो मूढ़ हैं तेई जन्मकर्म तथा स्वर्ग आदि फल देनेवाली जो वेदवाक्य सब हैं और भोग ऐश्वर्य्य प्राप्त होने के अर्थ साधन भूत जो वेदोक्त कहे वेद बिहित अनेक क्रियों की आधिक्य कहे बहु तायत हैं जिन से मूढ़ जन ऐसे वचन बोलते हैं अर्थात् जन्म ही हैं कर्म्म का फल तिस के देनेवाली बाक्यों को कहते हैं ॥ ४३ ॥

**भोगैश्वर्य्य प्रसक्तानां तयाऽपहृत चेतसाम्।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥ ४४॥**

शाङ्करभाष्यम्।

तेषाञ्च भोगेति भोगैश्वर्य्यप्रसक्तानां भोगः कर्त्तव्यमैश्वर्य्यञ्चेति भोगैश्वर्य्ययोरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचा अपहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा या बुद्धिः समाधौ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्व्वमिति समाधिरन्तःकरणं बुद्धिः तस्मिन् समाधौ न विधीयते न स्थितिर्भवतीत्यर्थः॥ ४४॥

आनन्दगिरिकृतटीका।

ननु कर्मकाण्डनिष्ठानां कर्मानुष्ठायिनामपि बुद्धिशुद्धिद्वारेणान्तःकरणे साध्यसाधनभूतबुद्धिस्यसमुदायसम्भवादनो मोक्षो भविष्यति नेत्याह तेषाञ्चेति तदात्मभूतानां तयोरेव भोगैश्वर्य्ययोरात्मकर्त्तव्यत्वेनारोऽपितयोरभिनिविष्टे चेतसि तादात्म्याध्यासवतां वहिर्मुखाणामित्यर्थः तथापि शास्त्रानुसारिण्या विवेकप्रज्ञया व्यवसायात्मिका बुद्धिस्तेषामुदेष्यतीत्याशङ्क्याह तयेति ननु समाधिः सम्प्रज्ञाता सम्प्रज्ञातभेदेन द्विधोच्यते तत्र बुद्धिद्वयविधिरप्रसक्ता सन् कथं निषिध्यते तत्राह समाधौयत इति॥ ४४॥

स्वामिकृतटीका।

ततश्च भोगैश्वर्य्येति भोगैश्वर्य्ययोः प्रसक्तानामभिनिविष्टानां तया पुष्पितया वाचापहृतमाकृष्टं चेतो येषां समाधिश्चित्तैकाग्र्यं परमेश्वराभिमुखत्वमिति यावत् तस्मिन् निश्चयात्मिका बुद्धिर्न विधीयते कर्मकर्त्तरि प्रयोगः सा नोत्पद्यत इत्यर्थः॥ ४४॥

भाषा अनुवाद।

भोग औ ऐश्वर्य्य में आसक्त तथा ऊपर लिखी विषलता के तुल्य सुन्दर वेदवाक्यों से आकृष्ट कहे हरिगया है चित्त जिन का उन को समाधि अर्थात् चित्त की एकाग्रतारूप परमेश्वर में जो एक निष्ठा तिस में निश्चयात्मिका बुद्धि होती नहीं इस से कर्म्मरूप जो बुद्धि उस में कर्तृत्वरूप

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

### शाङ्करभाष्यम्।

ये एव विवेकबुद्धिरहिता तेषां कामात्मनां यत् फलं तदाह त्रैगुण्येति त्रैगुण्यविषया त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषां ते वेदास्त्रैगुण्यविषयास्त्वन्तु निस्त्रैगुण्यो भवार्जुन निष्कामो भवेत्यर्थः निर्द्वन्द्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ ततो निर्गतो निर्द्वन्द्वो भव त्वं नित्यसत्त्वस्थः सत्त्वगुणाश्रितो भव तथा निर्योगक्षेमोऽनुपात्तस्योपार्जनं योग उपात्तस्य रक्षणं क्षेम योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करा इत्यतो निर्योगक्षेमो भवात्मवानप्रमत्तश्च भव एष तवोपदेशः स्वधर्ममनुतिष्ठतः ॥ ४५ ॥

### आनन्दगिरिकृतटीका।

अविवेकिनामपि वेदाभ्यासवतां विवेकबुद्धिरुदेष्यतीत्याशङ्क्याह यएवमिति तर्हि वेदार्थतया कामात्मता प्रशस्तेत्याशङ्क्याह निस्त्रैगुण्य इति भवेति पदं निर्द्वन्द्वादि विशेषणेष्वपि प्रत्येकं संबध्यते त्रयाणां सत्त्वादीनां गुणानां पुण्यपापव्यामिश्रकर्म तत्फलसम्बन्धलक्षणः समाहारस्त्रैगुण्यमित्यङ्गीकृत्य व्याचष्टे संसार इति वेदशब्देनात्र कर्मकाण्डमेव गृह्यते तदभ्यासवतां तदर्थानुष्ठानद्वारा संसारध्रौव्यान्नविवेकावसरोऽस्तीत्यर्थः तर्हि संसारपरिवर्जनार्थं विवेकसिद्धये किं कर्तव्यमित्याशङ्क्याह त्वमिति कथं निस्त्रैगुण्यो भवेति गुणत्रयस्य राहित्यं विधीयते नित्यसत्त्वस्थो भवेति वाक्यशेषविरोधादित्याशङ्क्याह निष्काम इति सप्रतिपक्षत्वं परस्परविरोधित्वं पदार्थौ शीतोष्णादिलक्षणौ निष्कामत्वे द्वन्द्वान्निर्गतत्व शीतोष्णादिसहिष्णुत्वं हेतुमुक्त्वा तत्रापि हेत्वपेक्षायां सदासद्गुणाश्रितत्वं हेतुमाह नित्येति योगक्षेमव्यापृतचेतसो रजस्तमोभ्यामसंस्पृष्टे सत्त्वमात्रे समाश्रितत्वमाशक्यमित्याशङ्क्याह तथेति योगक्षेमयोर्जीवनहेतुतया पुरुषार्थसाधनत्वान्निर्योगक्षेमो भवेति कुतो

### भाषा अनुवाद।

**अहङ्कार अर्थात् हम कर्त्ता हैं इस वासना के मारे उन बिचारों को ऐसी एक निष्ठा निश्चयात्मिका बुद्धि आप उत्पन्न कैसे होय यह कहा ॥ ४४ ॥**

आनन्दगिरिकृतटीका ।

विधिरित्याह योगेति योगक्षेमप्रधानत्वं सर्वस्य स्वाभाविकमिति ततो निर्गमनमशक्य-मित्याह आत्मवानिति अप्रमादो मनसो विषयपारवश्यशून्यत्वं अथ यथोक्तोपदेशस्य मुमुक्षुविषयत्वादर्जुनस्य मुमुक्षुत्वमिह विवक्षितमिति नेत्याह एष इति ॥ ४५ ॥

स्वामिकृतटीका ।

ननु स्वर्गादिकं परमं फलं यदि न भवति तर्हि किमिति वेदैस्तत्साधनतया कर्माणि विधीयन्ते तत्राह त्रैगुण्यविषया इति त्रिगुणात्मकाः सकामा येऽधिकारिणस्तद्विषयाः कर्मफलसम्बन्धप्रतिपादका वेदाः त्वन्तु निस्त्रैगुण्यो निष्कामो भव तत्रोपायमाह निर्द्वन्द्वः सुखदुःखशीतोष्णादि युगलानि द्वन्द्वानि तद्रहितो भव तानि सहस्वेत्यर्थः कथमित्यत आह नित्यसत्त्वस्थः सन् धैर्यमवलम्ब्येत्यर्थः तथा निर्योगक्षेमः अप्राप्तस्वीकारो योगः प्राप्तपालनं क्षेमस्तद्रहितः आत्मवानप्रमत्तः नहि द्वन्द्वाकुलस्य योगक्षेमव्यापृतस्य च प्रमादिनस्त्रैगुण्यातिक्रमः सम्भवतीति ॥ ४५ ॥

भाषा अनुवाद ।

स्वर्ग आदि फल जो परम फल नहीं है तो फेरि वेदोंने किस लिये स्वर्ग आदि फल के साधन नानाप्रकार के कर्मों का विधान किया है तिस पर कहते हैं कि सकाम अधिकारी जनों के अर्थ वेद कर्मफल का प्रतिपादन अर्थात् कहते है परन्तु तुम निष्काम होउ निष्काम होने को उपाय यह है कि निर्द्वन्द्व अर्थात् सुख दुःख शीत उष्ण हानि लाभ जन्म-मरण आदि से रहित होउ अर्थात् ये सब सहो और जो कहो कि कैसे इन को सहे तो कहते है कि धैर्य्य अवलम्बन करिके सहो और अप्राप्त वस्तु के प्राप्ति की इच्छा जो योग है औ प्राप्तभई वस्तु को रक्षा करना क्षेम है इन दूनो को परित्यागकरि सावधान होउ क्योंकि सुखदुःख से आसक्त औ अप्राप्त वस्तु की इच्छा प्राप्त का रक्षण इस से व्याकुलचित्त असावधान जो हैं वे निष्काम कैसे होसकेंगे त्रैगुण्य जो त्रिगुणात्मक संसार सो विषय कहं कथनीय जिनको है ऐसे तो वेद है परन्तु तुम निस्त्रैगुण्य कहे संसारिक भाव सुखदुःखादि से रहित होउ ॥ ४५ ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥ ४६ ॥

## शाङ्करभाष्यम्।

सर्वेषु वेदहोक्तेषु कर्मसु यान्युक्तान्यनन्तानि फलानि तानि नापेक्षन्ते चेत् किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इत्युच्यते शृणु यावानिति यथा लोके कूपतड़ागाद्यनेकस्मिन् उदपाने परिच्छिन्नोदके यावान् यावत् परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतः संप्लुतोदकेऽपि योऽर्थः तावानेव संपद्यते तत्रान्तर्भवतीत्यर्थः एवं तावांस्तावत् परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो यत् कर्मफलं सोऽर्थो ब्राह्मणस्य सन्न्यासिनः परमार्थतत्त्वं विजानतो योऽर्थो यत् विज्ञानफलं सर्वतः संप्लुतोदकस्थानीयं तस्मिंस्तावानेव सम्पद्यते तत्रैवान्तर्भवतीत्यर्थः यथा कृताय-

## आनन्दगिरिकृतटीका।

ईश्वरार्पणधिया नित्यधर्मानुष्ठानेऽपि फलकामनाभावाद्वैफल्यं योगमार्गस्येति मन्वानः शङ्कते सर्वेष्विति कर्ममार्गस्य फलवत्त्वं प्रतिजानीते उच्यत इति किं तत्फलमित्युक्ते तद्विषयं श्लोकमवतारयति शृण्विति यथोदपाने कूपादौ परिच्छिन्नोदके स्नानचमनाद्यर्थो यावानुत्पद्यते स तावानपरिच्छिन्ने सर्वतः संप्लुतोदके समुद्रेऽन्तर्भवति परिच्छिन्नोदकानां परिच्छिन्नोदकांशत्वात् तथा सर्वेषु वेदोक्तेषु कर्मसु यावानर्थोविषयविशेषोपरक्तः सुखविशेषो जायते सतावानात्मविदः स्वरूपभूत सुखेन्तर्भवति परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भावाभ्युपगमादेतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः तथाचापरिच्छिन्नात्मानन्दप्राप्तिपर्यवसायिनो योगस्य मार्गस्य नास्ति वैफल्यमित्याह यावानिति उक्तमर्थमक्षरयोजनया प्रकटयति यथेति उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपादि परिच्छिन्नोदकविषयत्वमुदपानशब्दस्य दर्शयति कूपेति कूपादिगतस्याभिधेयस्य समुद्रेऽन्तर्भावासम्भावात् कथमिदमित्थमित्याशङ्क्यार्थशब्दस्य प्रयोजनविषयत्वं व्युत्पादयति फलमिति यत्फलत्वेन लीयते तत् फलमित्युच्यते तत् कृतं तड़ागादिकृतं स्नानपानादि तथेत्याशङ्क्य तस्यात्लीयसो नार्थोपपत्तेरित्याह प्रयोजनमिति तड़ागादिप्रयुक्तप्रयोजनस्य समुद्रनिमित्तप्रयोजनमात्रत्वमयुक्तमन्यस्यान्यात्मत्वानुपपत्तेरित्याशङ्क्याह तत्रेति घटाकाशादेरिव महाकाशे परिच्छिन्नोदककार्य्यस्यापरिच्छिन्नोदककार्य्यान्त-

## शाङ्करभाष्यम्।

विजितायाधरेया: संयन्त्येव मेनं सर्वं तदभिसमेति यत् किञ्चित् प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेदेति श्रुतेः सर्वं कर्माखिलमिति च वक्ष्यति तस्मात् प्राक् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतड़ागाद्यर्थ-स्थानीयमपि कर्म कर्त्तव्यम् ॥ ४६ ॥

### आनन्दगिरिकृतटीका।

भावः सम्भवति तत्प्राप्तावितरापेक्षाभावादित्यर्थः पूर्वार्द्धं दृष्टान्तभूतमेवं व्याख्याय दार्ष्टा-न्तिकमुत्तरार्द्धं व्याकरोति एवमित्यादिना कर्मसु योऽर्थ इत्युक्तं व्यनक्ति यत् कर्मफलमिति सोऽर्थो विजानतो ब्राह्मणस्य योऽर्थस्तावानेव सम्पद्यत इति सम्बन्धः तदेव स्पष्टयति विज्ञानेति तस्मिन्नन्तर्भवतीतिशेषः कथं कर्मफलं ज्ञानफलेऽन्तर्भवतीत्यत्रप्रमाणमाह सर्व-मिति यत् किमपि प्रजाः साधु कर्म कुर्वन्ति तत् सर्वं स पुरुषोऽभिसमेति प्राप्नोति यः पुरुषस्तद्वेद विजानाति यद्वस्तु सरैक्वो वेद तद्वेद्यमिति श्रुतेरर्थः कर्मफलस्य स गुणज्ञान-फलेऽन्तर्भावः सम्भवतीत्याशङ्क्याह सर्वमिति तर्हि ज्ञाननिष्ठैव कर्त्तव्या तावतैव कर्म-फलस्य लब्धतया कर्मानुष्ठानानपेक्षणादित्याशङ्क्याह तस्मादिति योगमार्गस्य निष्फलत्वा-भावस्तच्छब्दार्थः ॥ ४६ ॥

### स्वामिकृतटीका।

ननु वेदोक्त नानाफलत्यागेन निष्कामतयेश्वराराधनविषया व्यवसायात्मिका बुद्धिः कुबुद्धिरेवेत्याशङ्क्याह यावानिति उदकं पीयते यस्मिंस्तदुदपानं वापी कूप तड़ागादि तस्मिन् स्वल्पोदके एकत्र कृत्स्नार्थस्यासम्भवात् तत्र परिभ्रमणेन विभागशो यावान् स्नान-पानादिरर्थः प्रयोजनं भवति तावान् सर्वोऽप्यर्थः सर्वतः संप्लुतोदके महाह्रदे एकत्रैव यथा भवति एवं यावान् सर्वेषु वेदेषु तत्तत् कर्मफलरूपोऽर्थस्तावान् सर्वोऽपि विजा-नतो व्यवसायात्मिका बुद्धियुक्तस्य ब्राह्मणस्य ब्रह्म निष्ठस्य भवत्येव ब्रह्मानन्दे क्षुद्रानन्दा-न्तर्भावात् एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः ॥ ४६ ॥

### भाषा अनुवाद।

जो कहो कि वेदोक्त कर्म औ बहुत कामना के फल सकल त्याग करि निष्काम ईश्वराराधन के अर्थ जो व्यवसायात्मिका बुद्धि सो कुबुद्धि है

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
माकर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

## शाङ्करभाष्यम् ।

तव च कर्मणीति कर्मण्येवाधिकारो न ज्ञाननिष्ठायां तेन तव तत्र च कर्म कुर्वतो मा फलेऽधिकारोऽस्तु कर्मफलतृष्णा माभूत् कदाचनकस्याञ्चिदप्यवस्थायामित्यर्थः यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तिहेतुः स्याः एवं माकर्मफलहेतुर्भूः यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्त्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत् यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति मा ते तव सङ्गोऽस्त्वकर्मण्य करणे प्रीतिर्माभूत् ॥ ४७ ॥

### आनन्दगिरिकृतटीका ।

तर्हि परम्परया पुरुषार्थसाधनं योगमार्गं परित्यज्य साक्षादेव पुरुषार्थकारणमात्मज्ञानं तदर्थमुपदेष्टव्यं तस्मै हि स्पृहयति मनो मदीयमित्याशङ्क्याह तव चेति तर्हि तत् फलाभिलाषोऽपि स्यादिति नेत्याह माफलेष्विति पूर्वोक्तमेवार्थं प्रपञ्चयति माकर्मेति फलाभिसन्ध्यसम्भवे कर्माकरणमेव श्रेयस्करमित्याशङ्क्याह मा त इति ज्ञानानधिकारिणोऽपि

## भाषा अनुवाद ।

इस शङ्का को निवारन करते हुए कहते हैं कि जिससे जलकापान किया जाय सो उदपान अर्थात् बावड़ी कुआं ताल तिन मे जो अल्प जल होय तो सब काम साधन के अर्थ अर्थात् स्नान पान आदि करने के अर्थ तहां तहां भ्रमण करिके सब काम सिद्ध होयंगे परन्तु संप्लुतोदक कहे एक राजाकुण्ड जिस मे अगाध जल भरा है उस एक ही से सब काम निर्वाह होसकते हैं तैसेही वेदोक्त जो कर्मके फल सोसब भगवद्भक्तियुक्त ब्रह्मपरायण पुरुष को भक्ति ही से मिलते हैं देखो ये स्वर्ग आदि संपूर्ण तुच्छ सुख ब्रह्मानन्द के भीतरही अन्तरभूत हैं इस ब्रह्मानन्द के कणमात्र आनन्द को प्राप्त होके सर्व प्राणी जीते रहते हैं यह श्रुति मे कहा है इससे निश्चयात्मिका जो बुद्धि सोई सुबुद्धि है ॥ ४६ ॥

आनन्दगिरिकृतटीका ।

कर्मत्यागप्रसक्तिं निवारयति कर्मण्येवेति कर्मण्येवेत्यर्थमाह न ज्ञानेति नहि तत्राशुद्ध-यस्यापरिपक्वकषायस्य मुख्योऽधिकारः सिद्धतीत्यर्थः फलैस्तर्हि संबन्धो दुर्वारः स्यादित्याह तत्रेति कर्मण्येवाधिकारे सतीति सप्तम्यर्थः फलेष्वधिकाराभावं स्फोरयति कर्मेति कर्मानुष्ठानात् प्रागूर्द्ध्वं तत्काले चेत्येतत् कदाचनेति विवक्षितमित्याह कस्याञ्चिदिति फलाभिसन्धाने दोषमाह यदेति एवं कर्मफलतृष्णाद्वारेणेत्यर्थः कर्मफलहेतुत्वं विवृणोति यदा होति तर्हि निष्फलक्लेशात्मकं कर्म न कर्त्तव्यमिति शङ्कामनुभाव्य दूषयति यदीत्यादिना अकर्मणि ते सङ्गोमाभूदित्युक्तमेव स्पष्टयति अकरण इति ॥ ४७ ॥

स्वामिकृतटीका ।

तर्हि सर्वाणि कर्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसन्धाय प्रवर्त्तेत किं कर्मणेत्याशङ्क्य तद्वारयन्नाह कर्मण्येवाधिकारस्तत् फलेषु बन्धहेतुषु अधिकारः कामो मास्तु ननु कर्मणि कृते तत्फलं स्यादेव भोजने कृते तृप्तिवदित्याशङ्क्याह मेति माकर्मफलहेतुर्भूः कर्मफलं प्रवृत्तिहेतुर्यस्य स तथाभूतो माभूः काम्यमानस्यैव स्वर्गादेर्नियोज्य विशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः अतएव फलं बन्धकं भविष्यतीति तस्मात् भयादकर्मणि कर्माकरणेऽपि तव सङ्गो निष्ठा मास्तु ॥ ४७ ॥

भाषा अनुवाद ।

जो ऐसा कहते हो कि समस्त कर्म्म का फल परमेश्वर की आराधना करनै हीं सैं होगा तो हम भगवत का आराधन हीं सब छोड़ कर करैं और कर्म्म करने से क्या प्रयोजन है इस शङ्का को निवारन करते हुए सिद्धान्त कहतै हैं कि तत्त्वज्ञान के अर्थी जो तुम सो तुम को कर्म्ममात्र करने का अधिकार है और बन्धन का हेतुभूत कर्म्मके फल की अभिलाष करिके ये अनेक प्रकार की कामना करने मे कभी तुमारा अधिकार नहीं है और जो कहो कि कर्म्म करने से उस का फल अवश्य ही होगा जैसे कि आहार करने से तृप्ति होती है कहते हैं कि सो होय परन्तु उस का पुन्यपाप नहीं लगता जैसे अज्ञान बालक जो नीच का अन्न खाय तो उस का धर्म न जाय क्योंकि धर्म्म नाशके अर्थ नहीं खाया सो तुम फल के अर्थ कर्म्म मे प्रवृत्त न होउ निष्काम कर्म्म करो जो कर्म्मफल की

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥ ४८॥**

## शाङ्करभाष्यम्।

यदि कर्मफलप्रयुक्तेन न कर्त्तव्यं कर्म कथं तर्हि कर्त्तव्यमित्युच्यते योगस्थेति योगस्थः सन् कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनञ्जय फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजज्ञानप्राप्तिलक्षणा सिद्धिः तद्विपर्य्ययजा असिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि कोऽसौ योगो यत्रस्थः कुर्वित्युक्तमिदमेव तत् सिद्ध्यसिद्ध्योः समत्वं योग उच्यते॥ ४८॥

## आनन्दगिरिकृतटीका।

आसक्तिकरणेन युक्ता चेत् तर्हि क्लेशात्मकं कर्म किमुद्दिश्य कर्त्तव्यमित्याशङ्कामनूद्य श्लोकान्तरमवतारयति यदीत्यादिना वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितत्वादनुष्ठेयानीत्याह योगस्थः सन्निति कर्मानुष्ठानस्योद्देश्यं दर्शयति केवलमिति फलान्तरापेक्षामन्तरेणेश्वरार्थं तत्प्रसादनार्थमनुष्ठानमित्यर्थः तर्हि ईश्वरसन्तोषोऽभिलाषगोचरीभूतो भविष्यति नेत्याह तत्रापीति ईश्वरप्रसादनार्थे कर्मानुष्ठाने स्थितेऽपीत्यर्थः सङ्गं त्यक्त्वा कुर्विति पूर्वेण सम्बन्धः आकाङ्क्षितं पूरयित्वा सिद्धिशब्दार्थमाह फलेति तद्विपर्य्ययजा सत्त्वाशुद्धिजन्या ज्ञानाप्राप्तिलक्षणेति यावत् कर्मानुतिष्ठतो योगमुद्दिश्य शेषतया प्रकृतमाकाङ्क्षापूर्वकं प्रकटयति को सावित्यादिना॥ ४८॥

## भाषा अनुवाद।

तृष्णा से कर्म करोगे तो कर्मफल प्राप्ति के हेतु होउगे जब पुरुष फल की इच्छा से कर्म मे प्रवृत्त होता है तब फल औ जन्म दोनो का हेतु होजाता है नीच ऊंच योनिमे जनमि फल भोगता है और जो कर्मफल को न चाहे तो दुखरूप कर्म करने से क्या प्रयोजन है ऐसी मति भी तुम को मति होय अर्थात् न करने मे भी रुचि न होय तात्पर्य्य यह कि सकाम कर्म न करो निष्काम तो अवश्य ही करो॥ ४७॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्ध धनञ्जय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥ ४९॥

शाङ्करभाष्यम्।

यत् पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मोक्तं एतस्मात् कर्मणः दूरेणेति दूरेणातिविप्रकर्षेण अत्यन्तमेव ह्यवरमधमं निकृष्टं कर्मफलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणो जन्ममरणादिहेतुत्वात्

स्वामिकृतटीका।

किं तर्हि योगस्थ इति योगः परमेश्वरैकपरता तत्र स्थितः कर्माणि कुरु तथा सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराश्रयेणैव कुरु तत्फलस्य ज्ञानस्यापि सिद्ध्यसिद्ध्योः समो भूत्वा केवलमीश्वरार्पणेनैव कुरु यत एवम्भूतं समत्वमेव योगउच्यते सद्भिश्चित्तसमाधानरूपत्वात्॥ ४८॥

भाषा अनुवाद।

तो फेरि क्या करना चाहिये सो कहते हैं कि हे धनञ्जय अर्जुन योग कहे ईश्वर मे जो एक निष्ठा उसी मे स्थित होय कर्म्म करो और हमी इस के कर्त्ता हैं ऐसा अभिमान त्याग करि केवल ईश्वरार्पण बुद्धि से कर्म्म करो निष्काम कर्म्म का फलरूप तत्त्वज्ञान की प्राप्ति अप्राप्ति मे समता पूर्वक कहे समचित्त हो केवल ईश्वरार्पण जानि कर्म्म अनुष्ठान करो जिस हेतु ऐसी ही समता को साधुलोग योग कहते हैं क्योंकि इसी मे चित्त स्थिर होता है यह सुबोधिनी का अर्थ है ईश्वरार्पण शब्द का भाव अर्थ यह हैं कि हम अपने हृदय मे टिके अन्तर्यामीरूप परमेश्वर के आधीन हैं यही अन्तर्यामी हमारी बासना के अनुसार शुभ अशुभ जिस कर्म्म मे हम को लगावते उसी को हम उन की प्रेरणा से करते हैं ऐसे विचारसे किये हुए सब कार्मो को भगवत अर्पण कहते हैं सोई पञ्च दशी मे कहा है जानामि धर्म्मं नच मे प्रवृत्तिर्जानाम्यधर्म्मं नच मे निवृत्तिः त्वया हृषीकेश हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥४८॥

शाङ्करभाष्यम्।

हे धनञ्जय यत एवं ततः योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व परमार्थज्ञानशरणो भवेत्यर्थः यतोऽवरं कर्मकुर्वाणाः कृपणाः दीनाः फलहेतवः फलतृष्णा प्रयुक्ताः सन्तः यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपण इति श्रुतेः॥ ४९॥

आनन्दगिरिकृतटीका।

किमिति योगस्थेन तत्त्वज्ञानमुद्दिश्य कर्म कर्त्तव्यं फलाभिलाषेऽपि तदनुष्ठानस्य सुलभत्वादित्याशङ्क्य यथोक्तयोगयुक्तं कर्मस्तुवन्ननन्तरश्लोकमुत्थापयति यत् पुनरिति अवरं कर्मबुद्धिसम्बन्धविरुद्धमिति शेषः बुद्धियुक्तस्य बुद्धियोगाधीनं प्रकर्षं सूचयति बुद्धीति बुद्धिसम्बन्धसम्बन्धाभ्यां कर्मणि प्रकर्षनिःकर्षयोर्भावे कारणीयं नियच्छति बुद्धाविति यत्तु फलेच्छयापि कर्मानुष्ठानं सुकरमिति तत्राह कृपणेति निकृष्टं कर्मैव विशिनष्टि फलार्थिनेति कस्मात् प्रतियोगिनः सकाशादिदं निकृष्टमित्याशङ्क्य प्रतीकमुपादाय व्याचष्टे बुद्धीत्यादिना फलाभिलाषेण क्रियमाणस्य कर्मणो निकृष्टत्वे हेतुमाह जन्मेति समत्वबुद्धियुक्तात् कर्मणः तद्धीनस्य कर्मणो जन्मादिहेतुत्वेन निकृष्टत्वे फलितमाह यत इति योगविषया बुद्धिः समत्वबुद्धिः बुद्धिशब्दस्यार्थान्तरमाह तत्परिपाकेति तच्छब्देन समत्वबुद्धिसमन्वितं कर्म गृह्यते तस्य परिपाकस्तत् फलभूता बुद्धिशुद्धिः शरणशब्दस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह अभयेति सप्तमीमविवक्षित्वा द्वितीयं पक्षं गृहीत्वा वाक्यार्थमाह परमार्थेति तथाविधज्ञानशरणत्वे हेतुमाह यत इति फलहेतुत्वं विवृणोति फलेति तेन परमार्थज्ञानशरणतैव युक्तेति शेषः परमार्थज्ञानबहिर्मुखानां कृपणत्वे श्रुतिं प्रमाणयति यो वा इति अस्थूलादिविशेषणमेतदित्युच्यते॥ ४९॥

स्वामिकृतटीका

काम्यन्तु कर्मातिनिकृष्टमित्याह दूरेणेति बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगो बुद्धि साधनभूतो वा तस्मात् सकाशादन्यत् साधनभूतं काम्यं कर्म दूरेणावरमत्यन्तमपकृष्टं हि यस्मादेवं तस्माद्बुद्धौ ज्ञाने शरणमाश्रयं कर्मयोगमन्विच्छ अनुतिष्ठ यद्वा बुद्धौ शरणं त्रातारमीश्वरमाश्रयेत्यर्थः फलहेतवस्तु सकामाः नराः कृपणा दीनाः यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपण इति श्रुतेः॥ ४९॥

बुद्धियुक्तो जहातीह उभे सुकृत दुष्कृते ।
तस्मात् योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

शाङ्करभाष्यम् ।

समत्वबुद्धियुक्तः सन् स्वधर्ममनुतिष्ठन् यत् फलं प्राप्नोति तच्छृणु बुद्धीति बुद्धियुक्तः समत्वकर्मविषयया बुद्ध्या युक्तो बुद्धियुक्तः स जहाति परित्यजति इहास्मिन् लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतः तस्मात् समत्वबुद्धियोगाय युज्यस्व घटस्व योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत् कौशलं कुशलभावस्तद्धि कौशलं यद्बन्धनस्वभावान्यपि कर्माणि समत्व-बुद्ध्या स्वभावात् निवर्तन्ते तस्मात् समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥

आनन्दगिरिकृतटीका ।

पूर्वोक्त समत्व बुद्धियुक्तस्य स्वधर्मानुष्ठाने प्रवृत्तस्य किं स्यादित्याशङ्क्याह समत्वेति बुद्धियुक्तः स्वधर्माख्यं कर्मानुतिष्ठन्निति शेषः बुद्धियोगस्य फलवत्त्वे फलितमाह तस्मा-दिति पूर्वार्द्धं व्याचष्टे बुद्धीत्यादिना ननु समत्वबुद्धिमात्राच्च पुण्यपापनिवृत्तिर्युक्ता पर-

भाषा अनुवाद ।

जितने काम्यकर्म्म हैं सब को निकृष्ट कहि नकारे कहते हैं कि व्यव-सायात्मिका बुद्धि के द्वारा किये जो कर्म्मयोग उन का नाम बुद्धियोग है और वह ज्ञानसाधन का उपाय है निष्काम बुद्धियोग की अपेक्षा सब काम्यकर्म्म अत्यन्त अपकृष्ट जो काम्यकर्म्म ऐसा तुच्छ ठहरा तो हे धनञ्जय बुद्धिशब्दवाच्य कहे ज्ञान तिस को आश्रय करि निष्काम कर्म्मयोगरूप भक्तियोग का अनुष्ठान करो चिन्तनीय औ पालन करनेवाले ईश्वरही की बुद्धि का आश्रय करो कर्म्मफल के अभिलाषी जो नर सो कृपण औ दीन हैं यह श्रुति में कहा हैं कि हे गार्गि इस अक्षरस्वरूप ब्रह्म को न जानिके जो संसार से लोकान्तरगामी होते हैं वेई कृपण अर्थात् निकृष्ट हैं इस से बुद्धि कहे जो ज्ञान तिस में आश्रय लेउ यह भगवान अर्जुन से कहा ॥४९॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

## शाङ्करभाष्यम् ।

यस्मात् कर्मजमिति कर्मजं फलं त्यक्त्वेति व्यवहितेन सम्बन्धः इष्टानिष्ट

## आनन्दगिरिकृतटीका ।

साम्यबुद्धियुक्तस्य चित्तशुद्धिप्रसिद्धेरिति तत्राह सत्त्वेति उत्तरार्द्धं व्याचष्टे तस्मादिति स्वधर्मानुष्ठाने योगार्थं किमर्थं मनो योजनीयमित्याशङ्क्याह योगोहीति तर्हि कर्मानुष्ठानेन ईश्वरार्पितफलविवेकरनास्था स्वधर्मानुष्ठाने प्राप्तेत्याशङ्क्याह स्वधर्मा- ख्येषु ईश्वरार्पितचेतस्तया कर्मसु वर्त्तमानस्यानुष्ठाननिष्ठस्य या यथोक्ता बुद्धिस्तत्तेषु कौशलमिति योजना कर्मणां बन्धस्वभावत्वात् तदनुष्ठाने बन्धाबद्धः स्यादित्याशङ्क्य कौशल- मेव विशदयति तद्धीति समत्वबुद्धेरेवं फलत्वे स्थिते फलितमुपसंहरति तस्मादिति ॥ ५० ॥

## स्वामिकृतटीका ।

बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह बुद्धियुक्त इति सुकृतं स्वर्गादिप्रापकं दुष्कृतं निरयादि- प्रापकं ते उभे इहैव जन्मनि परमेश्वरप्रसादेन त्यजति तस्मात् तदर्थाय कर्मयोगाय युज्यस्व घटस्व यतः कर्मसु यत् कौशलं बन्धकानामपि तेषामीश्वराराधनेन मोक्षपरत्व- सम्पादकचातुर्य्यं स एव योगः ॥ ५० ॥

## भाषा अनुवाद ।

पूर्व जो कहा कि सुखदुख आदि से समान बुद्धि होकर स्वधर्म्म को करे तो बुद्धियोग युक्त होने से क्या होता है सोई बुद्धियोग की श्रेष्ठता कहते हैं कि सुकृत जो पुण्य स्वर्ग आदि का देनहार औ दुःष्कृत जो पाप नरकबास प्राप्ति करने का साधन इन दोनो को बुद्धियोगयुक्त पुरुष इसी जन्म से भगवत् की कृपा से परित्याग करते हैं तिस से हे अर्जुन तुम बुद्धियोगरूप निष्काम कर्म्म करो जिस से योगकर्म्म के बीच मे कौशल कहे चातुर्य्य है अर्थात् सकल कर्म्म बन्धन होने के कारण हैं तौभी ईश्वर की आराधना से मुक्ति प्राप्ति करना चातुर्य्य है इसी को योग कहते हैं सो तुम बुद्धियोगयुक्त होउ ॥ ५० ॥

## शाङ्करभाष्यम्।

देहप्राप्तिः कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्तो हि यस्मात् फलं त्यक्त्वा परित्यज्य मनीषिणो ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ताः जीवन्त एव जन्मबन्धात् विनिर्मुक्ताः सन्तः पदं परमं विष्णोर्मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः अथवा बुद्धियोगाद्धनञ्जयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः संप्लुतोदकस्थानीया कर्मयोगजा सत्त्वशुद्धिजनिता बुद्धिर्दर्शिता साक्षात् सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥ ५१ ॥

### आनन्दगिरिकृतटीका।

समत्वबुद्धियुक्तस्य सुकृतदुष्कृततत्फलपरित्यागेऽपि कथं मोक्षः स्यादित्याशङ्क्याह यस्मादिति समत्वबुद्धिः यस्मात् कर्मानुष्ठीयमाना दुरितादि त्याजयति तस्मात् परम्परयाऽसौ मुक्तिहेतुरित्यर्थः मनीषिणो हि ज्ञानातिशयवन्तो बुद्धियुक्ताः सन्तः स्वधर्माख्यं कर्मानुतिष्ठन्तस्ततो जातं फलं देहपदन्तो हित्वा जन्मलक्षणाद्बन्धाद्विनिर्मुक्ताः वैष्णवं पदं सर्वसंसारसंस्पर्शशून्यं प्राप्नुवन्तीति श्लोकोक्तमर्थं श्लोकयोजनया दर्शयति कर्मजमित्यादिना इष्टो देहो देवादिलक्षणोऽनिष्टो देहस्तिर्यगादिलक्षणस्तत्प्राप्तिरेव कर्मणो जातं फलं तद्यथोक्तं बुद्धियुक्ता ज्ञानिनो भूत्वा तद्बलादेव परित्यज्य बन्धविनिर्मुक्तिपूर्वकं जीवन्मुक्ताः सन्तो विदेहकैवल्यभाजो भवन्तीत्यर्थः बुद्धियोगादित्यादौ बुद्धिशब्दस्य समत्वबुद्धिरर्थो व्याख्यातः सम्प्रति परम्परया परिहृत्यस्य कृतदुष्कृतप्रहाणहेतुत्वस्य समत्वबुद्धावसिद्धेः बुद्धिशब्दस्य योग्यमर्थान्तरं कथयति अथवेति अनवच्छिन्नवस्तुगोचरत्वेनानवच्छिन्नत्वं तस्याः सूचयन् बुद्ध्यन्तराद्विशेषं दर्शयति सर्वत इति असाधारणं निमित्तं तस्या निर्दिशति कर्मेति यथोक्तबुद्धिशब्दार्थत्वे हेतुमाह साक्षादिति जन्मबन्धविनिर्मोकादिशब्दार्थः ॥ ५१ ॥

### स्वामिकृतटीका।

कर्मणां मोक्षसाधनत्वप्रकारमाह कर्मजमिति कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्म कुर्वाणा मनीषिणो ज्ञानिनो भूत्वा जन्मरूपेण बन्धेन विनिर्मुक्ताः सन्तोऽनामयं सर्वोपद्रवरहितं विष्णोः पदं मोक्षाख्यं गच्छन्ति ॥ ५१ ॥

## भाषा अनुवाद।

सुखदुःख आदि में समता युक्त भी भये और सुकृत दुष्कृत कर्म के फल

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

### शाङ्करभाष्यम्।

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्यत इत्युच्यते यदेति यदा यस्मिन् काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं येनात्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्त्तते तत्ते तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति अतिशुद्धभावमापत्स्यत इत्यर्थः तदा तस्मिन् काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च तदा श्रोतव्यं श्रुतञ्च ते निष्फलं प्रतिपद्यत इत्यभिप्रायः ॥ ५२ ॥

### आनन्दगिरिकृतटीका।

यस्मिन् कर्मणि क्रियमाणे परमार्थलक्षणा बुद्धिरुद्देश्यतया युज्यते तस्मात् कर्मणः सकाशादितरत् कर्म तथाविधोद्देश्यभूतबुद्धिसम्बन्धविधुरमतिशयेन निकृष्यते ततश्च परमार्थबुद्धिमुद्देश्यत्वेनाश्रित्य कर्मानुष्ठातव्यं न परिच्छिन्नफलान्तरमुद्दिश्य तदनुष्ठाने कार्पण्य-प्रसङ्गात् किञ्च परमार्थबुद्धिमुद्देश्यतयाश्रित्य कर्मानुतिष्ठतः करणशुद्धिद्वारा परमार्थदर्शन-सिद्धौ जीवत्येव देहे सुकृतादिहित्वा मोक्षमधिगच्छति तथाच परमार्थदर्शनलक्षणयो-गार्थं मनो धारयितव्यं योगनिष्ठैः परमार्थदर्शनमुद्देश्यतया कर्मस्वनुतिष्ठतो नैपुण्य-मिष्यते यदि च परमार्थदर्शनमुद्दिश्य तद्गुणाः सन्तः समारभेरन् कर्माणि तदा तदनुष्ठान-जनित बुद्धिशुद्धा मनीषिणो भूत्वा कर्मजं फलं परित्यज्य निर्मुक्तबन्धनामुक्तिभाजो भवन्ती-त्येवमस्मिन् पक्षे श्लोकत्रयाक्षराणि व्याख्यातव्यानि यथोक्तबुद्धिप्राप्तकालं प्रश्नपूर्वकं प्रकट-

### भाषा अनुवाद।

को परित्याग किये भी अर्थात् निष्काम कर्म किये से भी फेरि मोक्ष कैसे होगी इस शङ्का पर कर्म्म को मोक्ष की साधनता है यह कहते हैं कि कर्म्म के फल की अभिलाषा छोड़ि करि केवल ईश्वराराधनार्थ कर्म्म करते हुए बुद्धिमान मनुष्य ज्ञानी होके जन्मरूप बन्धन से छूटिकरि सकल उपद्रव से रहित जो विष्णुपद जिस को मोक्ष कहते तिस को सहज मे पावते हैं ॥ ५२ ॥

# श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
# समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥ ५३॥

आनन्दगिरिकृतटीका।

यति योगेति श्रुतं श्रोतव्यं दृष्टं द्रष्टव्यमित्यादौ फलाभिलाषप्रतिबन्धशङ्का बुद्धिरुदेष्य-तीत्याशङ्क्याह यदेति विवेकपरिपाकावस्था कालशब्देनोच्यते कालुष्यस्य दोषपर्य्यवसायित्वं दर्शयन् विशिनष्टि येनेति तदनर्थरूपं कालुष्यं तवेत्यन्वयार्थं पुनर्वचनं बुद्धिशुद्धिफलस्य प्राप्त्या वैराग्यप्राप्तिं दर्शयति तदेति अध्यात्मशास्त्रातिरिक्तं शास्त्रं श्रोतव्यादिशब्देन गृह्यते उक्तं वैराग्यमेव स्फोरयति श्रोतव्यमिति यथोक्तविवेकसिद्धौ सर्वस्मिन्ननात्मविषयेनैष्फल्यं प्रतिभातीत्यर्थः॥ ५२॥

स्वामिकृतटीका।

कदाहं तत् पदं प्राप्स्यामीत्यपेक्षायामाह यदेति द्वाभ्यां मोहो देहादिष्वात्मबुद्धिस्त-द्देव कलिलं गहनं विदुरित्यभिधानकोषस्मृतेः ततश्चायमर्थः एवं परमेश्वराराधने क्रिय-माणे यदा तत्प्रसादेन तव बुद्धिर्देहाभिमानलक्षणं मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति तदा श्रोतव्यस्य श्रुतस्य चार्थस्य निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि तयोरनु-पादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः॥ ५२॥

## भाषा अनुवाद।

जो कहो कि कब हम उस विष्णुपद को पावैंगे तो दो श्लोक से कहते हैं कि मोह जो देहादिक मे आत्मबुद्धि अर्थात् आत्मास्वरूप जो कुछ है सो देह है ऐसा जो दृढ़बिश्वास सोई दुरवगाह अज्ञान गहन बन है सो जब इस पूर्व कथितरूप परमेश्वर की आराधना करने मे भगवत कृपा से तुमारी बुद्धि देह अभिमानरूप मोहमय अगम्यकानन कहे बन के अच्छी तरह से पार होगी अर्थात् देहाभिमान छूटैगा तब विष्णुपद-रूपमुक्ति प्राप्त होगी और जो अर्थ सुना चाहते हो और सुनि चुके हो तिस सब मे वैराग्य उत्पन्न होगी अर्थात् वह सब तुच्छ कहे किसी काम का नहीं है यह जानि सकोगे फेरि और उस बात को न पूछोगे॥ ५२॥

## शाङ्करभाष्यम्।

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामीति चेत् तच्छृणु श्रुतिविप्रतिपन्नेति श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसम्बन्धप्रकाशनश्रुतिभिः श्रवणैर्विप्रतिपन्ना नानात्वप्रतिपन्ना अध्यात्मशास्त्रातिरिक्तस्त्वेत्यर्थः श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलन वर्जिता सती समाधौ समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतदचला तत्रापि विकल्पवर्जितैतद्बुद्धिरन्तःकरणं तदा तस्मिन् काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ ५३ ॥

### आनन्दगिरिकृतटीका।

बुद्धिशुद्धिविवेकवैराग्यसिद्धावपि पूर्वोक्ता बुद्धिप्राप्तिकालो दर्शितो न भवतीति शङ्कते मोहेति प्रागुक्तविवेकादियुक्ता बुद्धेरात्मनि स्थैर्य्यावस्थायां प्रकृतबुद्धिशुद्धिरित्याह तत् श्रृणिवति इष्टं कालविशेषाख्यं वस्तु तच्छब्देन गृह्यते बुद्धेः श्रुतिविप्रतिपन्नत्वं विशदयति अनेकेति नानाश्रुतिविप्रतिपन्नत्वमेव संक्षिपति विक्षिप्तेति उक्तां हेतुद्वयमनूद्य वैराग्यपरिपाकावस्था कालशब्दार्थः नैश्चल्यं विक्षेपराहित्यं अचलत्वं विकल्पशून्यत्वं विक्षेपो विपर्य्ययो विकल्पः संशय इति विवेकः विवेकद्वारा जाता प्रज्ञा प्रागुक्ता बुद्धिः समाधिस्तत्रैव निष्ठा ॥ ५३ ॥

### स्वामिकृतटीका।

ततश्च श्रुतीति श्रुतिभिर्नानालौकिकवैदिकार्थश्रवणैर्विप्रतिपन्ना इतः पूर्वं विक्षिप्ता सती तव बुद्धिर्यदा समाधौ स्थास्यति समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरस्तस्मिन्निश्चला विषयान्तरैरनाकृष्टा अतएवाचला अभ्यासपाटवेन तत्रैव स्थिरा च सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥

## भाषा अनुवाद।

इसी प्रकार लौकिक कहे लोक की वार्त्ता औ वैदिक कहे वेदकी बातैं अनेक प्रकार की श्रवण करते करते पूर्व से विक्षिप्त कहे भ्रमित जो तुमारी बुद्धि सो जब समाधि मे स्थिर होगी अर्थात् अच्छी तरह लगाया

## अर्जुन उवाच स्थितप्रज्ञस्य का भाषा समाधिस्थस्य। केशव स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

### शाङ्करभाष्यम्।

प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया स्थितप्रज्ञस्येति स्थितप्रज्ञस्य स्थिता प्रतिष्ठिताहमस्मि परं ब्रह्मेति प्रज्ञा यस्य सस्थितप्रज्ञस्तस्य स्थितप्रज्ञस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्थस्य समाधौ स्थितस्य केशव स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत किमासीत् व्रजेत् किं किम्भाषणं व्रजनं वा तस्य किं कथमित्यर्थः ॥ ५४ ॥

### आनन्दगिरिकृतटीका।

सन्न्यासिनो ज्ञाननिष्ठा तत्प्राप्तिवचनं प्रश्नबीजं पृच्छतोऽर्जुनस्याभिप्रायमाह लब्धेति लब्धा समाधावात्मनि समाधानेन वा प्रज्ञा परमार्थदर्शनलक्षणा येन तस्येति यावत् ननु तस्य भाषा तत्कार्य्यानुरोधिनी भविष्यति किमित्यसौ विजिज्ञास्यते तत्राह कथमिति ज्ञाननिष्ठस्य लक्षणविवक्षया प्रश्नमवतारयन् तन्निष्ठा साधनबुभुत्सया विशिनष्टि समाधिस्थस्येति तस्यैवार्थक्रियां पृच्छति स्थितधीरिति ॥ ५४ ॥

### स्वामिकृतटीका।

पूर्वश्लोकोक्तस्यात्मतत्त्वज्ञस्य लक्षणं जिज्ञासुरर्जुन उवाच स्थितप्रज्ञस्य का भाषेति स्वाभाविके समाधौ स्थितस्य अतएव स्थिता निश्चला प्रज्ञा बुद्धिर्यस्य तस्य भाषा का भाष्यते अनयेति भाषालक्षणमिति यावत् स केन लक्षणेन स्थितप्रज्ञ उच्यत इत्यर्थः तथा स्थितधीः किं कथं भाषणमासनं व्रजनञ्च कुर्य्यादित्यर्थः ॥ ५४ ॥

### भाषा अनुवाद।

जाय चित्त जिस मे सो समाधि कहे परमेश्वर तिस ईश्वर मे और विषयों को छोड़ि अभ्यास करते करते निपुण होय जब अचलरूप से स्थिर होगी तब तुम योग का फल जो तत्त्वज्ञान सो पावोगे ॥ ५३

पूर्व श्लोक मे कहा जो आत्मतत्त्वज्ञानी का लक्षण सो जानने को

## श्रीभगवानुवाच ।

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५॥**

### शाङ्करभाष्यम् ।

स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति यो ह्यादित एव सन्न्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तो यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्येति प्रजहातीत्यारभ्याध्यायपरिसमाप्तिं पर्य्यन्तं स्थितप्रज्ञलक्षणं साधनञ्चोपदिश्यते सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात् यानि यत्नसाध्यानि साधनानि लक्षणानि भवन्ति तानि श्रीभगवानुवाच प्रजहातीति प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन् काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ

### आनन्दगिरिकृतटीका ।

प्रश्नाक्षराणि व्याख्याय वाक्यार्थमाह स्थितप्रज्ञस्येति प्रतिवचनमवतारयितुं पातनिकां करोति यो हीति हि शब्देन कर्मसन्न्यासकारणीभूतविरागता सम्पत्तिः सूच्यते आदितो ब्रह्मचर्य्यावस्थायामिति यावत् ज्ञानमेव योगो ब्रह्मात्मभावप्रापकत्वात् तस्मिन्निष्ठा परिसमाप्तिस्तस्यामित्यर्थः कर्मैव योगस्तेन कर्माण्यसन्न्यस्य तन्निष्ठायामेव प्रवृत्त इति शेषः ननु तत्कथमेकेन वाक्येनार्थद्वयमुपदिश्यते द्वैधार्थे वाक्यभेदान्नचलक्षणमेव साधनं कृतार्थलक्षणस्य स्वरूपत्वेन फलत्वे साधनत्वानुपपत्तेरिति तत्राह सर्वत्रैवेति यद्यपि प्रकृतार्थस्य ज्ञानिनो ज्ञानलक्षणं तद्रूपेण फलत्वन्नसाधनत्वमविगच्छति तथापि जिज्ञासो-

### भाषा अनुवाद।

इच्छा करि अर्जुन पूछते हैं कि हे केशव अनायासलभ्य समाधि में स्थित जो निश्चल बुद्धि स्थितप्रज्ञपुरुष तिस का क्या लक्षण है कैसे उस को जानैं तात्पर्य्य यह है कि कैसे लक्षण होने से किस आचरण से स्थिरप्रज्ञ होता है सोई पूछते हैं कि ज्ञानी कैसे बोलते बैठते और कैसे चलते फिरते रहते हैं ॥ ५४ ॥

## शाङ्करभाष्यम्।

मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान् सर्वकामपरित्यागे तुष्टिकारणाभावाच्छरीरधारणनिमित्तशेषे च सत्युन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्तेत्यत उच्यते आत्मनि एव प्रत्यगात्मस्वरूप एवात्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्ट परमार्थदर्शनामृतरसलाभेनान्यस्मादलं प्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठितात्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वांस्तदोच्यते त्यक्तपुत्रवित्तलोकैषणः सन्यासी आत्मारामः आत्मक्रीडः स्थितप्रज्ञ इत्यर्थ ॥ ५५ ॥

### आनन्दगिरिकृतटीका।

लक्षणं प्रयत्नसाध्यतया साधनं सम्पद्यते लक्षणत्वात् ज्ञानसामर्थ्यलभ्यमप्रयत्ने न विधीयते विदुषो विधिनिषेधागोचरत्वात्तेन जिज्ञासोः साधनानुष्ठानाय लक्षणानुवादादेतस्मिन्नेव भावनानुष्ठाने तात्पर्यमित्यर्थ उक्तोर्थ भगवद्वाक्यमुत्थापयति यानीति लक्षणानि च ज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानीति शेष स्थितप्रज्ञस्य का भाषेति प्रथमप्रश्नस्योत्तरमाह प्रजहातीति कामत्यागस्य प्रकर्षो वासनाराहित्यं कामानामात्मनिष्ठत्वं कैश्चिदिष्यते तदयुक्तं तेषां मनो निष्ठत्व श्रुतेरित्याशयवानाह मनोगतानिति आत्मन्येवात्मनेत्याद्युत्तरभागनिरस्यशङ्कोद्यमनुवदति सर्वकामेति तर्हि प्रवर्त्तकाभावाद्विदुषः सर्वप्रवृत्त्युपशान्तिरिति नेत्याह शरीरेति उन्मादवानुन्मत्तो विवेकविरहितबुद्धिभ्रमभागी प्रकर्षेण मदमनुभवन् विद्यमानमपि विवेकं निरस्यन् भ्रान्तवद्व्यवहरन् प्रमत्त इति विभाग उत्तरार्द्धमवतार्य व्याकरोति उच्यत इति आत्मन्येवेत्येवकारस्यात्मनेत्यत्रापि सम्बन्धं द्योतयति स्वेनेति बाह्यलाभनिरपेक्षत्वेन तुष्टिमेव स्पष्टयति परमार्थेति स्थितप्रज्ञपदं विभजते स्थितेति प्रज्ञाप्रतिबन्धक सर्वकामविरामावस्था तदेति निर्दिश्यते उक्तमेव प्रपञ्चयति त्यक्तेति आत्मानं जिज्ञासमानो वैराग्यद्वारा सर्वैषणात्यागात्मकं सन्न्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेवासक्तया विषयवैमुख्येन तत् फलभूतां परितुष्टिं तत्रैव प्रतिलभमान स्थितप्रज्ञव्यपदेशभागीत्यर्थ. ॥ ५५ ॥

### स्वामिकृतटीका।

अत्र च यानि साधकस्य ज्ञानसाधनानि तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि अत सिद्धस्य लक्षणानि कथयन्नेवान्तरङ्गानि ज्ञानसाधनान्याह आऽध्यायसमाप्ति तत्र प्रथमप्रश्नस्योत्तरमाह प्रजहातीति द्वाभ्यां मनसि स्थितान् कामान् यदा प्रकर्षेण

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

## शाङ्करभाष्यम् ।

किञ्च दुःखेष्विति दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयमनुद्विग्नमनाः तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनुवर्द्धते स विगतस्पृहः वीतरागभयक्रोधः रागश्च भयञ्च क्रोधश्च वीता विगता रागभयक्रोधा यस्मात् स वीतरागभयक्रोधः स्थितधीः स्थितप्रज्ञो मुनिः सन्न्यासी तदुच्यते ॥ ५६ ॥

### आनन्दगिरिकृतटीका ।

लक्षणभेदानुवादद्वारा विशिष्टिधीरेव कर्त्तव्यान्तरमुपदिशति किञ्चेति ज्वरशिरोरोगादिकृतानि दुःखान्याध्यात्मिकानि आदिशब्देनाधिभौतिकानि व्याघ्रसर्पादिप्रयुक्तान्या-

### स्वामिकृतटीका ।

जहाति त्यागे हेतुमाह आत्मनीति आत्मन्येव स्वस्मिन्येव परमानन्दस्वरूप आत्मना स्वयमेव तुष्ट इत्यात्मारामः सन् यदा क्षुद्रविषयाभिलाषांस्त्यजति तदा तेन लक्षणेन मुनिः स्थितप्रज्ञ उच्यते ॥ ५५ ॥

## भाषा अनुवाद ।

श्रीभगवान बोले कि हे अर्जुन सुनो जिन को साधक लोग ज्ञान-साधन के निमित्त यत्नपूर्वक साधना करते हैं वेई सिद्ध के स्वाभाविक कहे स्वभावसिद्ध लक्षण हैं इस से अब सिद्ध के लक्षण कहने के अनन्तर ज्ञानके साधन अध्याय की समाप्ति पर्य्यन्त कहते हैं तिन मे से प्रथम दो श्लोक से पहिली प्रश्न का उत्तर करते हैं कि हे अर्जुन मुनिजन मनोगत सकल कामना जब अच्छी तरह से त्याग करते हैं कि अपने परम आनन्द-रूप आत्मा मे जो रमे सो आत्माराम अर्थात् आप अपने आत्मसुख मे सन्तुष्ट होते हैं तिस से जब क्षुद्रविषय अभिलाष छोड़ते हैं तब उसी लक्षण से मुनि स्थितप्रज्ञ कहे जाते हैं ॥ ५५ ॥

**यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।**
**नाभिनन्दति नद्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

आनन्दगिरिकृतटीका ।

धिदैविकानि चातिवातवर्षादिनिमित्तानि दुःखानि उच्यन्ते तेषूपलब्धेष्वपि नोद्विग्नं मनो यस्य स तथेति सम्बन्धः नोद्विग्नमित्येतद्व्याचष्टे न प्रक्षुभितमिति दुःखानामुक्तानां प्राप्तौ परिहारासमर्थस्य तदनुभवपरिभावितं दुःखमुद्वेगस्तेन सहितं मनो यस्य न भवति स तथेत्याह दुःखप्राप्ताविति मनो यस्य नोद्विग्नमिति पूर्वेण सम्बन्धः सुखान्यपि दुःखवत् त्रिविधानीति मत्वा तथेत्युक्तं तेषु प्राप्तेषु सत्सु तेभ्यो विगता स्पृहा तृष्णा यस्य स विगतस्पृह इति योजना अज्ञस्य हि प्राप्तानि सुखान्यनुविवर्द्धते तृष्णा विदुषस्तु नैवमित्यभिप्रेत्य दृष्टान्तमाह नाग्निरिवेति यथा हि दाह्यस्येन्धनादेरभ्याधाने वह्निर्विवर्द्धते तथाऽज्ञस्य सुखान्युपगतान्यनुविवर्द्धमानापि तृष्णा विदुषो न तान्यनुविवर्द्धते नहि वह्निरदाह्यमुपगतमपि दग्धुं विवृद्धिमधिगच्छतीति तेन जिज्ञासुना सुखदुःखयोस्तृष्णोद्वेगौ न कर्त्तव्याविव्यर्थः रागादयस्तु तेन कर्त्तव्या न भवन्तीत्याह वीतेति अनुभूताभिनिवेशो विषयेषु रञ्जनात्मकस्तृष्णाभेदो रागः परेणापकृतस्य चात्र नेत्रादिविकारकारणं भयं क्रोधस्तु परवशीकृत्यात्मानं स्वपरापकारप्रवृत्तिहेतुर्बुद्धिवृत्तिविशेषः मनुते इति मुनिरात्मविदित्यङ्गीकृत्याह सन्न्यासीति सुखदुःखादिविषय तृष्णादेरागादेश्चाभावावस्था तदेत्युच्यते ॥ ५६ ॥

स्वामिकृतटीका ।

किञ्च दुःखेष्विति दुःखेषु प्राप्तेष्वपि अनुद्विग्नं अक्षुभितं मनो यस्य सः सुखेषु विगता स्पृहा यस्य सः तत्र हेतुर्वीता अपगता रागभयक्रोधा यस्मात् तत्र रागः प्रीतिः स मुनिः स्थितधीरुच्यते ॥ ५६ ॥

भाषा अनुवाद ।

लक्षण कहने के बहाने से जिज्ञासु अर्जुन को और जो करना चाहिये सो उपदेश करते हैं कि जिन का मन दुख पड़ने मे उद्विग्न अर्थात् न घबड़ाय और सकल सुख की स्पृहा कहि इच्छा न करें सुख-मे समान रहैं सो वीतराग अर्थात् विषयों से प्रीति रहित एवं भय औ क्रोध शून्य स्थितप्रज्ञ कहे स्थिर बुद्धि मुनि कहावते हैं ॥ ५६ ॥

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

## शाङ्करभाष्यम् ।

किञ्च यः सर्वत्रेति यो मुनिः सर्वत्र देहजीवितादिष्वप्यनभिस्नेहः स्नेहवर्जितः तत्तत्प्राप्य शुभाशुभं तत्तच्छुभमशुभं वा लब्ध्वा नाभिनन्दति नद्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यत्यशुभञ्च प्राप्य नद्वेष्टि इत्यर्थः तस्यैवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥ ५७ ॥

### आनन्दगिरिकृतटीका ।

लक्षणभेदानुवादद्वारा विविदिषोरेव कर्त्तव्यान्तरमुपदिशति किञ्चेति विवेकवतो विदुषो विवेकजन्या प्रज्ञा कथं प्रतिष्ठां प्रतिपद्यतामित्याशङ्क्याह यः सर्वत्रेति ननु देहजीवनादौ स्पृहा शुभाशुभप्राप्तौ हर्षविषादौ विदुषो विविदिषोश्चावर्जनीयौ इति प्रज्ञा स्थैर्य्यासिद्धि-स्तत्राह यो मुनिरिति तत्तदिति शोभनवत्त्वेनाशोभनवत्त्वेन वा प्रसिद्धत्वं प्रतिनिर्दिश्यते तदेव विभजते शुभमिति विषयेष्वभिषङ्गाभावः शुभादिप्राप्तौ हर्षाद्यभावश्च प्रज्ञा स्थैर्य्य-कारणमित्याह तस्येति ॥ ५७ ॥

### स्वामिकृतटीका

कथं भाषेतेत्यस्योत्तरमाह स मुनि यः सर्वत्र पुत्रमित्रादिष्वपि अनभिस्नेहः स्नेह-शून्यः अतएवाभितानुष्टस्या तत्तच्छुभमनुकूलं प्राप्य नाभिनन्दति न प्रशंसति अशुभं प्रति-कूलं प्राप्य नद्वेष्टि न निन्दति किन्तु केवलमुदासीन एव भाषते तस्य प्रज्ञा प्रतिष्ठि-तेत्यर्थः ॥ ५७ ॥

## भाषा अनुवाद ।

अर्जुनने पूछा था कि तत्त्वज्ञानी किस प्रकार से बात कहते हैं उस प्रश्न का उत्तर कहते हैं कि समस्तपुत्र मित्र धन धाम आदिक मे जिस को स्नेह कहे प्रीति नहीं है और शुभप्राप्ति होने से सुखी औ अशुभलाभ होने से दुःखित भी न होय है अर्थात् स्तुति औ निन्दा मे रागद्वेष कहे प्रीति बिरोध हीन है केवल उदास के समान अर्थात् उदासीन ऐसे हो बात करते हैं उन्ही की प्रज्ञा प्रतिष्ठित है वेई स्थिर बुद्धि मुनि हैं ॥५७॥

## शाङ्करभाष्यम् ।

किञ्च यदा संहरत इति यदा संहरते सम्यक् उपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानीव सर्वशः यथा कूर्मोभयात् स्वान्यङ्गान्युपसंहरति सर्वतः एवं ज्ञाननिष्ठ इन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥ ५८ ॥

### आनन्दगिरिकृतटीका ।

जिज्ञासोरेव कर्त्तव्यान्तरं सूचयति किञ्चेति इन्द्रियाणां विषयेभ्यो वैमुख्यस्य प्रज्ञास्थैर्यकारणत्वादादौ जिज्ञासुना तदनुष्ठेयमित्याह यदेति मुमुक्षुणा मोक्षहेतुं प्रज्ञां प्रार्थयमानेन सर्वेभ्यो विषयेभ्यः सर्वाणीन्द्रियाणि विमुखानि कर्त्तव्यानीति श्लोकव्याख्यानेन कथयति यदेत्यादिना उपसंहारः स्ववशत्वापादनं तस्य च सम्यक्त्वमति दृढत्वम् अयमिति प्रकृतस्थितप्रज्ञग्रहणं व्यावर्त्तयति ज्ञाननिष्ठायामिति इन्द्रियोपसंहारस्य प्रलयरूपत्वं व्यावर्त्त्य शङ्कोचात्मकत्वं दृष्टान्तेन दर्शयति कूर्म इति दृष्टान्तं व्याकरोति यथेति दार्ष्टान्तिके योजयन् ज्ञाननिष्ठापदं तत्र प्रवर्त्तयति एवमिति इन्द्रियाणां विषयेभ्यो वैमुखकरणं प्रज्ञास्थैर्यहेतुरित्युक्तमुपसंहरति तस्येति ॥ ५८ ॥

### स्वामिकृतटीका ।

किञ्च यदेति यदा चायं योगी इन्द्रियार्थेभ्यः शब्दादिभ्यः सकाशादिन्द्रियाणि संहरते प्रत्याहरति अनायासेन संहारे दृष्टान्तमाह कूर्म इति अङ्गानि करचरणादीनि कूर्मो यथा स्वभावेनैवाकर्षति तद्वत् ॥ ५८ ॥

### भाषा अनुवाद ।

जिज्ञासू को और क्या करना योग्य हैं सो सूचन करावते हैं कि और पूर्वकथित योगी जब इन्द्रियार्थ, जो नानाप्रकार विषय तिन से सर्व इन्द्रियों को अनायास कहे सहज मे लौटारै अर्थात् फिरलेय इस मे दृष्टान्त कहते कि जैसे कूर्म्म कहे कछुआ अपने मुख कर चरण अनायास समेटि लेता तैसेही योगी विषयों से इन्द्रियों को जब बटोर लेसकै तब उस ज्ञानी की बुद्धि स्थिर है ॥ ५८ ॥

**विषया विनिवर्त्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ५९ ॥**

शाङ्करभाष्यम्।

तत्र विषयाननाहरत आतुरस्यापि इन्द्रियाणि निवर्त्तन्ते कूर्माङ्गानीव संक्रियते नतु तद्विषयो रागः स कथं संक्रित इत्युच्यते विषया इति यद्यपि विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाण्यथवा विषया एव निराहारस्य अनाह्रियमाणविषयस्य देहिनः कष्टेन तपसि स्थितस्य मूर्खस्यापि निवर्त्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा रसशब्दो रागे प्रसिद्धः स्वच्छन्दतः स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्शनात् सोऽपि रसो रञ्जनरूपसूक्ष्मोऽस्य यतः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वोपलभ्याहमेव तदिति वर्त्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं सम्पद्यते इत्यर्थः नासतिसम्यग्दर्शने रसस्य उच्छेदस्तस्मात् सम्यग्दर्शनात्मिकायाः स्थैर्य्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥

आनन्दगिरिकृतटीका।

इन्द्रियाणां विषयेभ्यो वैमुख्येऽपि तद्विषयरागानुवृत्तौ कथं प्रज्ञालाभः स्यादिति शङ्कते तत्रेति व्यवहारभूमिः इत्यस्यार्थः विषयाननाहरतस्तदुपभोगविमुखस्येत्यर्थः रागस्त्वेनोप-संह्रियते न तर्हि प्रज्ञालाभः सम्भवति रागस्य तत्परिपन्थित्वादिति मत्वाह स कथमिति रागनिवृत्त्युपायमनुपदिशन्नुत्तरमाह उच्यत इति विषयोपभोगपराङ्मुखस्य कुतो विषय-परावृत्तिस्तत्परावृत्तिर्वा प्रस्तुतेत्याशङ्क्याह यद्यपीति निराहारस्येत्यस्य व्याख्यानमनाह्रियमा-णविषयस्येति यो हि विषयप्रवणो न भवति तस्यात्यान्तिके तपसि क्लेशात्मके अवस्थितस्य विद्याहीनस्यापीन्द्रियाणि विषयेभ्यः सकाशाद्यद्यपि संह्रियन्ते तथापि रागोऽवशिष्यते स च तत्त्वज्ञानादुच्छिद्यत इत्यर्थः रसशब्दस्य माधुर्यादिषड्विधरसविषयत्वं निषेधति रसशब्द इति वृद्धप्रयोगमन्तरेण कथं प्रसिद्धिरित्याशङ्क्याह स्वरसेनेति स्वेच्छयेति यावत् रसिकः स्वेच्छावांश्च वर्त्ती रसज्ञो विवक्षितापेक्षितज्ञातेत्यर्थः कथं तर्हि तस्य निवृत्ति-स्तत्राह सोऽपीति दृष्टिमेवोपलब्धिपर्य्यायां स्फुटयति अहमेवेति रागापगमे सिद्धमर्थमाह निर्बीजमिति नतु सम्यग्ज्ञानमन्तरेण रागो नापगच्छति चेत् तदपगमे रागवतः सम्यग्ज्ञानोदयायोगादितरेतराश्रयतेति नेत्याह नासतीति इन्द्रियाणां विषयपार-

## यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
## इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥ ॥

आनन्दगिरिकृतटीका ।

यद्यं विवेकद्वारा परिहृते स्थूलो रागो व्यावर्त्तते ततश्च सम्यग्ज्ञानोत्पत्त्या सूक्ष्मस्यापि रागस्य सर्वात्मना निवृत्त्युपपत्तेरेतरेतराश्रयतेत्यर्थः प्रज्ञा स्थैर्यस्य सफलत्वे स्थिते फलित-माह तस्मादिति ॥ ५८ ॥

स्वामिकृतटीका ।

ननु नेन्द्रियाणां विषये प्रवृत्तिः स्थितप्रज्ञस्य लक्षणं भवितुमिति जड़ानामातुराणाम्-प्रवासपराणाञ्च विषयेष्वप्रवृत्तेरविशेषात्तत्वाह विषया इति इन्द्रियैर्विषयाणामाहरणं यह-णमाहारः निराहारस्य इन्द्रियैर्विषयग्रहणमकुर्वतो देहिनो देहाभिमानिनोऽज्ञस्य विषयाः प्रायशो विनिवर्त्तन्ते तदनुभवो निवर्त्तत इत्यर्थः किन्तु रसो रागोभिलाषस्तद्वर्जम् अभिलाषश्च न निवर्त्तत इत्यर्थः रसोऽपि रागोऽपि परं परमात्मानं दृष्ट्वास्य स्थितप्रज्ञस्य स्वतो निवर्त्तते नश्यतीत्यर्थः यद्वा निराहारस्य उपवास परस्य विषयाः प्रायशो निवर्त्तन्ते क्षुधासन्तप्तस्य शब्दस्पर्शाद्यपेक्षाभावात् किन्तु रसवर्जं रसापेक्षा तु न निवर्त्तत इत्यर्थः शेषं समानम् ॥५९

भाषा अनुवाद ।

जो कहो कि इन्द्रियों की विषय मे अप्रवृत्ति होना यह स्थितप्रज्ञ का लक्षण न हो सकेगा क्योंकि जड़ आतुर औ उपवास करनेवाले मनुष्यों को इन्द्री भी विषय मे नहीं प्रवृत्त होती है तो इन से औ ज्ञानी से फेरि क्या विशेष कहे अन्तर है इन को भी स्थिरबुद्धि मुनि कहना उचित है तिस पर कहते हैं कि हां आहार न करने से निराहार पुरुष को यद्यपि विषयों का इन्द्रिय द्वारा ज्ञान नहीं होता सत्य है पर तौभी उस को विषयों से अभिलाषा नहीं जाती अर्थात् विषय की वासना मन मे बनी रहती हैं और स्थिरप्रज्ञ पुरुष के परमात्मदर्शनहेतु से विषय की लालसा निवृत्त हो जाती अच्छी तरह से अभिलाष सहित विषय वासना नाश होती है और जड़ आतुर जैसे विषयों के अज्ञ तैसे आत्मा को भी नहीं जानते तो वे स्थिर बुद्धि कैसे हो सकते हैं और रस कहे राग जो प्रीति सो स्थितप्रज्ञा की आपसेआप निवृत्त होती हैं ॥ ५९ ॥

## शाङ्करभाष्यम् ।

सम्यग्दर्शनलक्षणं प्रज्ञास्थैर्य्यं चिकीर्षता आदाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात् तदनवस्थापने दोषमाह यतत इति यततः प्रयत्नं कुर्वतोऽपि हि यस्मात् अपि कौन्तेय पुरुषस्य विपश्चितोमेधाविनोऽपीति व्यवहितेन सम्बन्धः इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्त्याकुलीकुर्वन्त्याकुलीकृत्य च हरन्ति प्रसभं प्रसह्य-प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनो यतस्तस्मात् ॥ ६० ॥

### आनन्दगिरिकृतटीका ।

श्लोकान्तरमवतारयति सम्यग्दर्शनेति मनसः स्ववशत्वादेव प्रज्ञस्थैर्य्यसम्भवे किमर्थ-मिन्द्रियाणां स्ववशत्वापादनमित्याशङ्क्याह ननु विवेकवतो विषयदोषदर्शिनो विषयेभ्यः स्वयमेवेन्द्रियाणि व्यावर्तन्ते किं तत्र प्रज्ञास्थैर्य्यचिकीर्षता कर्त्तव्यमिति तत्राह यततोहीति विषयेषु भूयो दोषदर्शनमेव प्रयत्नः हि शब्दस्य यस्मादर्थस्य समाप्तौ सम्बन्धं दर्शयति अपि शब्दस्य प्रयत्नं कुर्वतोऽपीति सम्बन्धं गृहीत्वा सम्बन्धान्तरमाह पुरुषेति प्रमथनशीलत्वं प्रकटयति विषयेति विक्षोभस्याकुलीकरणस्य फलमाह आकुलीकृत्येति प्रकाशमेवेत्युक्तं विशदयति पश्यत इति विपश्चितो विदुषोऽपि प्रकाशमेव प्रकाशशब्दितविवेकाख्यविज्ञान युक्तमेव मनो हरन्तीन्द्रियाणीति सम्बन्धः हि शब्दार्थमनुद्य तस्मादिन्द्रियाणि स्ववशे स्थाप-यितव्यानीति पूर्वेण सम्बन्धमभिसन्धायाह यतस्तस्मादिति ॥ ६० ॥

### स्वामिकृतटीका ।

इन्द्रियसंयमं विनास्थितप्रज्ञता न सम्भवति अतः साधकावस्थायां तत्र महान् प्रयत्नः कर्तव्य इत्याह यततोऽपीति द्वाभ्यां यततो मोक्षार्थं प्रयतमानस्य विपश्चितो विवे-किनोऽपि मन इन्द्रियाणि प्रसभं बलाद्धरन्ति यतः प्रमाथीनि प्रमथनशीलानि क्षोभका-णीत्यर्थः ॥ ६० ॥

## भाषाअनुवाद ।

इन्द्रियों का संयम किये विना अर्थात् विषयों से रोकने के विना स्थितप्रज्ञ कहे परमात्मा मे अचल बुद्धि होती नहीं इस से प्रथम साधन की अवस्था मे इन्द्रीयों को स्वाधीन करने के अर्थ बड़ा यत्न करना चहिये यह कहते हैं कि हे कौन्तेय कुन्तीनन्दन अर्जुन मोक्ष के हेतु प्रयत्न करते

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

शाङ्करभाष्यम् ।

तानीति तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तं समाहितः सन्न्यासी मत्परोऽयं वासुदेवः सर्वप्रत्यगात्मापरो यस्य स मत्परः नान्योऽहं तस्मादित्यासीतेत्यर्थः एवमासीनस्य यतेर्वशे हि यस्येन्द्रियाणि वर्तन्ते अभ्यासवशात् तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

आनन्दगिरिकृतटीका ।

इन्द्रियाणां स्ववशत्वसम्पादनानन्तरं कर्तव्यमर्थमाह तानीति एवमासीनस्य किं स्यादिति तदा ह्यवशे हीति समाहितस्य विक्षेपविकलस्य कथमासनमित्यपेक्षायामाह मत्पर इति परापरभेदशङ्कामपाकृत्यासनमेव स्फोरयति नान्योऽहमिति उत्तरार्द्धं व्याकरोति एवमिति हि शब्दार्थं स्फुटयति अभ्यासेति परस्मादात्मनो नाहमन्योऽस्मीति प्रागुक्तानुसन्धानस्यादरेण नैरन्तर्यदीर्घकालानुष्ठानसामर्थ्यादित्यर्थः अथवा विषयेषु दोषदर्शनाभ्याससामर्थ्यादिन्द्रियाणि संयतानीत्यर्थः ॥ ६१ ॥

स्वामिकृतटीका ।

यस्मादेवं तस्मात् तानीति युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन्नासीत यस्य वशे वशवर्त्तिनीन्द्रियाणि एतेन च कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन्नासीतेत्युत्तरं भवति ॥ ६१ ॥

भाषा अनुवाद ।

हुए विवे की विचारवान ज्ञानी पुरुष के भी मन को प्रबल प्रमाथी कहे चोभ करनेवाली इन्द्री हरण करलेती हैं ॥ ६० ॥

इन प्रमाथी इन्द्रियों को स्वाधीन करना यह कहिकर फेरि क्या करना उचित है सो कहते हैं कि तो सब इन्द्रियों का संयम करिके युक्त योगी मेरे मे तत्पर हो रहे अर्थात् आत्मा मे निष्ठा करि बैठे यह कहिके ज्ञानी कैसे स्थिति करते इस प्रश्न का उत्तर भगवानने दिया अर्थात् जिस के इन्द्री गण बश हैं उस की प्रज्ञा कहे बुद्धि प्रतिष्ठित है ॥ ६१ ॥

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥६२॥

## शाङ्करभाष्यम् ।

अथेदानीं परा भविष्यत सर्वानर्थमूलमिदमुच्यते ध्यायत इति ध्यायतश्चिन्तयतो विषयान् शब्दादिविषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्ग आसक्तिः प्रीतिः तेषु विषयेषूपजायते उत्पद्यते सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा तस्मात् कामात् कुतश्चित् प्रतिहतात् क्रोधोऽभिजायते ॥ ६२ ॥

### आनन्दगिरिकृतटीका ।

समनन्तरं श्लोकद्वयस्य तात्पर्यमाह अथेति पुरुषार्थोपायोपदेशानन्तर्यमथशब्दार्थं तन्निष्ठस्वराज्यावस्थां दर्शयति इदानीमिति पराभविष्यतो संप्राप्तमनर्थं गमिष्यतो विवेकविज्ञानविहीनस्येति यावत् सर्वानर्थमूलं विषयाभिध्यानं तस्य तथात्वमनुभवसिद्धमिति धत्तुमिदमित्युक्तं विषयेषु विशेषत्वमारोपितरमणी यत्वं प्रीतिरासक्तिरिति साधारणा सक्तिमात्रं रुच्यते तृष्णेत्युद्रिक्ता शक्तिरुक्ता प्रतिबन्धेन प्रणाशेन वा प्रतिहतिः ॥६२॥

### स्वामिकृतटीका ।

बाह्येन्द्रियसंयमाभावे दोषमुक्त्वा मनः संयमाभावे दोषमाह ध्यायतीति द्वाभ्यां गुणबुद्ध्या विषयान् ध्यायतः पुंसस्तेषु सङ्गासक्तिर्भवति आसक्त्या च तेष्वधिकः कामो भवति कामाच्च केनचित् प्रतिहतात् क्रोधो भवति ॥ ६२ ॥

## भाषा अनुवाद ।

बाह्य इन्द्रिय कहे बाहर की इन्द्रियों के न वश रहने में जो दोष सो देखाय अब अवशीभूत जो मन तिस का दोष देखावते हैं कि बुद्धि के द्वारा रूपादिक विषयों को ध्यान करते हुए पुरुष का मन उन विषयों में आसक्त होता अर्थात् विषय सङ्ग होता है और सङ्ग से अधिक अधिक कामना उत्पन्न होती हैं फेरि कामना किसी प्रकार से नष्ट या न होंय तो क्रोध प्रगट होता है अर्थात काम से क्रोध होय है ॥ ६२ ॥

क्रोधाद्भवति संमोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृति भ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥

शाङ्करभाष्यम् ।

क्रोधाद्भवति संमोहः संमोहोऽविवेकः कार्य्याकार्य्यविषयविभ्रमो भवतीति संबध्यते क्रुद्धो हि संमूढ़ः सन् गुरुमप्याक्रोशति संमोहात् स्मृति विभ्रमः शास्त्राचार्य्योपदेशाहितसंस्कारजनितयाः स्मृतेः स्याद्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिस्ततः स्मृतिभ्रंशात्तुबुद्धेर्नाशः कार्य्याकार्य्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते बुद्धिनाशात् प्रणश्यति तावदेव हि पुरुषो यावदन्तःकरणं तदीयं कार्य्याकार्य्यविषयविवेकयोग्यं तदयोग्यत्वेन नष्ट एव पुरुषो भवत्यतः तस्यान्तःकरणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः ॥ ६३ ॥

आनन्दगिरिकृतटीका ।

क्रोधस्य संमोहहेतुमनुभवेन दृढ़यति क्रुद्धोहीति आक्रोशत्यधिचिपति तदयोग्यत्वमपेरर्थः संमोहकार्य्यं कथयति संमोहादिति स्मृतेर्निमित्तनिवेदनद्वारा स्वरूपं निरूपयति शास्त्रेति चणिकत्वादेव तस्याः स्मृतौ नाशसम्भवाच्चसंमोहाधीनत्वं तस्येत्याशङ्क्याह स्मृतीति स्मृतिभ्रंशेऽपि कथं बुद्धिनाशः स्वरूपतः सिध्यति तत्राह कार्य्येति ननु पुरुषस्य नित्यसिद्धस्य बुद्धिनाशेऽपि प्रणाशो न प्रकल्पते तत्राह तावदेवेति कार्य्याकार्य्यविवेचनयोग्यान्तःकरणाभावे सतोऽपि पुरुषस्य करणाभावादपागततत्त्वविवेकयिवक्षया नष्टत्वव्यपदेशः तदेतदाह पुरुषार्थेति ॥ ६२ ॥

स्वामिकृतटीका ।

किञ्च क्रोधादिति क्रोधात् सम्मोहः कार्य्याकार्य्यविवेकाभावः ततः शास्त्राचार्य्योपदिष्टर्थस्मृतेर्विभ्रंशो विचलनं भ्रंशः ततो बुद्धेश्चेतनानाशः इच्छादिभिर्वाभिभवः ततः प्रणश्यति मृततुल्यो भवति ॥ ६२ ॥

भाषा अनुवाद ।

और क्रोध जो है सो मोहका हेतु है इस को दृढ़ करते हुए कहते हैं कि क्रोधसे अर्थात् उसके द्वारा मोह होता है अर्थात् काज अकाजका बिचार

रागद्वेषविमुक्तैस्तु विषयानीन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

## शाङ्करभाष्यम् ।

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानमथेदानीं मोक्षकारणमिदमुच्यते रागद्वेषेति रागद्वेषविमुक्तैः रागश्च द्वेषश्च रागद्वेषौ तत्पुरःसराहीन्द्रियाणां प्रवृत्तिः स्वाभाविकी तत्र यो मुमुक्षुर्भवति स ताभ्यां विमुक्तैः श्रोत्रादिभिरिन्द्रियैर्विषया न वर्जनीयांश्चरन्नुपलभमानः आत्मवश्यैरात्मनो वश्यानि वशीभूतानि तैरात्मवश्यैर्विधेयात्मेच्छातो विधेय आत्मान्तःकरणं यस्य सोऽयं प्रसादमधिगच्छति प्रसादः प्रसन्नता स्वास्थ्यम् ॥ ६४ ॥

## आनन्दगिरिकृतटीका ।

विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोगस्तेन जीवनार्थं भुञ्जानो विषयाननर्थं कथं न प्रतिपद्येत इत्याशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकतात्पर्य्यमाह सर्वानर्थस्येति अनर्थमूलकथनानन्तर्य्यमथशब्दार्थः परिहर्त्तव्ये निर्णीते सति तत्परिहारोपायजिज्ञासां दर्शयति इदानीमिति रागद्वेषपूर्विका प्रवृत्तिरित्यत्रानुभवदर्शनार्थो हि शब्दः शास्त्रीयप्रवृत्ति व्यासेधार्थं स्वाभाविकीत्युक्तं तत्त्वविधिकृतानधिकृत्य प्रयोगो वर्जनीयानशनपानादीन् देहस्थितिहेतूनिति यावत् इन्द्रियाणां विषयेषु प्रवृत्तिश्चेन्नियमानुपपत्त्वा वर्जनीयेष्वपि सा स्यादित्याशङ्क्याह आत्मेति अन्तःकरणाधीनत्वेपीन्द्रियाणां तदनियमात् तेषामपि नियमानुपपत्तिरित्याशङ्क्याह विधेयात्मेति ॥ ६४ ॥

## स्वामिकृतटीका ।

नन्विन्द्रियाणां विषयप्रवणस्वभावानां निरोद्धुमशक्यत्वादयं दोषो दुष्परिहर इति

## भाषा अनुवाद ।

नहीं रहता फेरि संमोह होने से शास्त्र औ आचार्य्य तथा गुरु का दिया जो उपदेश कहे शिक्षा अर्थ सो विचलित अर्थात् भूल जाय है और स्मृति भ्रंस होने से कहे उपदेश भूल जाने से बुद्धि की चेतना चली जाती है अर्थात् बुद्धि नष्ट होती है बुद्धि नाश होने से जड़ के समान होय फेरि वह मनुष्य मुर्दे की तुल्य होकर नष्ट होता है ॥ ६३ ॥

प्रसादे सर्व्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते ॥ ६५ ॥

शाङ्करभाष्यम् ।

प्रसादे सति किं स्यादित्युच्यते प्रसाद इति प्रसादे सर्व्वं दुःखानाम् अध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते किञ्च प्रसन्न चेतसः स्वच्छान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्य्यवतिष्ठते आकाशमिव

स्वामिकृतटीका ।

स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह रागद्वेष इति द्वाभ्यां रागद्वेषरहितैर्विगतदर्पैरिन्द्रियैर्विषयांश्चरन्नुपभुञ्जानोऽपि प्रसादं शान्तिं प्राप्नोति रागद्वेषराहित्यमेवाह आत्मेति आत्मनो मनसो वश्यैरिन्द्रियैर्विधेयो वशवर्त्ती आत्मा मनो यस्येति अनेनैव कथं व्रजेतेत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयान् गच्छतीत्युत्तरमुक्तं भवति ॥ ६४ ॥

भाषा अनुवाद ।

जो कहो कि चिरकाल से विषय मे निमग्न स्वभाव कहे विषय मे आसक्त इन्द्रीगणका विष से रोकना जो असाध्य अति कठिन है तो पूर्व उक्त दोष निवारण कैसे हो सकैगा इस से स्थितप्रज्ञ होना भी असम्भव अति दुर्घट है इस शङ्का पर कहते हैं कि राग कहे प्रीति औ द्वेष जो विरोध तिन से रहित होके अर्थात् इन को छोड़ के औ अभिमान त्याग करिके सब इन्द्रीयों के द्वारा विषयों का भोग करने से भी शान्ति प्राप्ति होती है तो रागद्वेष रहित कैसे होय सो कहते हैं कि मन के आधीन कहे वशीभूत सब इन्द्रिय हैं और इन्द्रिय वशकारी मन को जो मनुष्य अपने वश कर राखै है उस के फेरि और रागद्वेषादि रहते नहीं हैं इस कहने से अर्जुन की चौथी प्रश्न जो है कि स्थितप्रज्ञ कैसे गमन करै है उस का उत्तर दिया कि स्वाधीन इन्द्रियगण राखि के विषयों मे गमन करै अर्थात् इन्द्रीजित् होय विषय भोग करै जिस हेतु आत्मवश इन्द्रिय द्वारा विषय भोग करता हुआ आत्मा सुखी रहता हैं ॥ ६४ ॥

नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना।
नचाभावयतः शान्तिरशान्तस्य कुतः सुखम्॥ ६६॥

## शाङ्करभाष्यम्।

परिसमन्तात् अवतिष्ठते आत्मस्वरूपेणैव निश्चली भवतीत्यर्थः एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषविमुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तं समाचरेदिति वाक्यार्थः॥ ६५॥

सेयं प्रसन्नता स्तूयते नास्तीति नास्ति न विद्यते न भवतीत्यर्थः बुद्धिरात्मस्वरूपविषया अयुक्तस्यासमाहितान्तःकरणस्य नचायुक्तस्येति नचास्य अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः तथा च नास्य भावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिरुपशमो न विद्यते अशान्तस्य कुतः सुखं इन्द्रियाणां हि विषयसेवा तृष्णातो निवृत्तिर्या तत् सुखं न विषयविषया तृष्णा

## आनन्दगिरिकृतटीका।

तथापि नानाविधदुःखाभिभूतत्वाच्च स्वास्थ्यमास्थातुं शक्यमित्याशयेन पृच्छति प्रसाद इति श्लोकार्द्धेनोत्तरमाह उच्यत इति सर्वदुःखहान्या बुद्धिस्वास्थ्येऽपि प्रकृतं प्रज्ञास्थैर्यं कथं सिद्धमित्याशङ्क्याह प्रसन्नेति बुद्धिप्रसादस्यैव फलान्तरमाह किञ्चेति तस्मात् बुद्धिप्रसादार्थं प्रयतितव्यमिति शेषः श्लोकद्वयस्याक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमुपसंहरति एवमिति युक्तः समाहितो विषयपारवश्यशून्यः सन्निति यावत्॥ ६५॥

## स्वामिकृतटीका

प्रसादे सति किं स्यादित्यत आह प्रसाद इति प्रसादे सति सर्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः॥ ६५॥

## भाषाअनुवाद।

इस प्रकार शान्ति प्राप्त होने पर फिरि क्या होता है सो कहते हैं कि शान्ति-लाभ होने से सब दुख नाश हो जाते हैं फेरि इस शान्त चित्त पुरुषके सुन्दर बुद्धि स्थिर होती है॥ ६५॥

## शाङ्करभाष्यम् ।

**दुःखमेव हि सा न तृष्णायां सत्यां सत्यां सुखस्य गन्धमात्रमपि उत्पद्यत इत्यर्थः ॥ ६६ ॥**

आनन्दगिरिकृतटीका ।

किं पुनः सत्त्वशुद्धैव यथोक्ता बुद्धिः सिध्यति नेत्याह सेयमिति असमाहितस्यापि बुद्धिमात्रमुत्पद्यमानं प्रतिभातीत्याशङ्क्य विशिनष्टि आत्मस्वरूपेति नहि विक्षिप्तचित्तस्यात्मस्वरूपविषया बुद्धिरुदेतुमर्हतीत्यत्र हेतुमाह नचेति आत्मज्ञाने शब्दादापाततो जाते स्मृति सन्तानानुकर्षं साक्षात्कारार्थमभिनिवेशो भावनेति चोच्यते नचासौ विक्षिप्तबुद्धेः सिध्यतीति हेत्वर्थं विपश्चित्याह आत्मज्ञानेति भावना द्वारा साक्षात्काराभावेऽपि कात्क्षतिरित्याशङ्क्याह तथेति असमाहितस्य भावनाभावादिति यावत् आत्मन्यापाततोऽज्ञाते श्रवणाद्यावृत्तिरूपां स्मृतिमनातन्वानोऽस्यापरोक्षबुद्ध्यभावेनानर्थनिवृत्तिः सिद्ध्यतीत्याह उपशम इति अनिवृत्तानर्थस्य परमानन्दसागराद्विभक्तस्य संसारवारिधौ निमग्नस्य सुखाविर्भावोनसम्भवतीत्याह अशान्तस्येति तस्यापि विषयसेविनो वैषयिकं सुखं सम्भवतीत्याशङ्क्याह इन्द्रियाणां हीति तृष्णाक्षयस्य शास्त्रप्रसिद्धमानुभविकञ्च सुखत्वमिति वक्तुं हि शब्दः विषयसेवा तृष्णयापि विषयोपभोगद्वारा सुखमुपलब्धमित्याशङ्क्याह दुःखमेवेति तत्रापि हि शब्दोऽनुभवावद्योति तदेव स्पष्टयति नेत्यादिना ॥ ६६ ॥

स्वामिकृतटीका ।

इन्द्रियनिग्रहस्य स्थितप्रज्ञता साधनत्वं व्यतिरेकमुखेनोपपादयति नास्तीति अयुक्तस्यावशीकृतेन्द्रियस्य नास्ति बुद्धिः शास्त्राचार्य्योपदेशाभ्यामात्मविषया बुद्धिः प्रज्ञैव नोत्पद्यते कुतस्तस्याः प्रतिष्ठावार्त्ता इत्यत आह नचेति नचायुक्तस्य भावना ध्यानं भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति सा चायुक्तस्य यतो नास्ति नचाभावयत आत्मध्यानमकुर्वतः शान्तिरात्मनि चित्तोपरमः अशान्तस्य कुतः सुखं मोक्षानन्दः इत्यर्थः ॥ ६६ ॥

## भाषा अनुवाद ।

**इन्द्रियों का निग्रह कहे काबू रखना जो स्थितप्रज्ञ पुरुष का साधन सो विपरीत कहे उलटी रीतिसे कहते हैं कि अवशीकृत इन्द्रिय मनुष्य के शास्त्र औ आचार्य्य के उप देश से आत्म ज्ञान होने के योग्य बुद्धि उत्पन्न नहीं होती है तो स्थितप्रज्ञ होना दूरबात है इहां भावना का अर्थ**

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

शाङ्करभाष्यम् ।

अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते इन्द्रियाणामिति इन्द्रियाणां हि यस्मात् चरतां स्वविषयेषु प्रवर्तमानानां यन्मनोनुविधीयते अनुप्रवर्तते तदिन्द्रियविषयविकल्पनेन प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां नाशयति कथं वायुर्नावमिवाम्भस्युदके जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनो विषयां कल्पनां करोति ॥ ६७ ॥

आनन्दगिरिकृतटीका ।

आकाङ्क्षाद्वारा श्लोकान्तरमुत्थापयति अयुक्तस्येति विक्षिप्तचेतसो भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीति हेत्वन्तरेण साधयति इन्द्रियाणामिति यत्पदोपात्तं मनस्तत्पदेनापि इन्द्रियाणां विषयाः शब्दादयस्तेषां विकल्पनं मिथो विभज्य ग्रहणं तेनेति यावत् दृष्टान्तं व्याकरोति उदकइति यस्मात् तस्मादयुक्तस्य नोत्पद्यते बुद्धिरिति योजना ॥ ६७ ॥

स्वामिकृतटीका ।

नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह इन्द्रियाणामवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयते अवशीकृतं सदिन्द्रियेण सह गच्छति तदेवैकमिमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां हरति विषयविक्षिप्तां करोति किमुव्यक्तव्यं

भाषा अनुवाद ।

ध्यान है सो ध्यान के द्वारा बुद्धि आत्मा मे प्रतिष्ठित कहे स्थित होती है परन्तु जो इन्द्रियगण वश न करि सके उस को यह ध्यान कहां प्राप्त है इसो से वह आत्मा के ध्यान का अनधिकारी है तौ फिरि उस को शान्ति नहीं होती अर्थात् आत्मा मे चित्त युक्त नहीं होता और अशान्त पुरुष को सुख कहे परम आनन्द कहां से हो सकेगा ॥ ६६ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

शाङ्करभाष्यम् ।

यतोहीत्युपन्यस्तस्यार्थस्यानेकविधोपपत्तिमुक्त्वा तच्चार्थमुपपाद्योपसंहरति तस्मादिति इन्द्रियाणां प्रवृत्तौ दोष उपपादितोयस्मात् तस्मात् यतेः यस्य यतेः हे महाबाहो निगृहीतानि सर्वशः सर्वप्रकारैर्मानसादिभेदैरिन्द्रियाणीन्द्रियार्थेभ्यः शब्दादिभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

आनन्दगिरिकृतटीका ।

यततो हीत्यादि श्लोकाभ्यामुक्तस्यैवार्थस्य प्रकृत श्लोकाभ्यामपि कथ्यमानत्वादस्ति पुनरुक्तिरित्याशङ्क्य परिहरति यततो हीत्यादिना ध्यायतो विषयानित्यादीनाम्नुपपत्तिवचनमुक्तेयं तच्छब्दापेक्षितार्थोक्तिद्वारा श्लोकमवतारयति इन्द्रियाणामिति असमाहितेन मनसा यस्मादनुविधीयमानानीन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मादिति योजना ॥६८॥

स्वामिकृतटीका ।

बहूनि प्रज्ञां हरन्तीति यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रामयति तद्वदिति ॥ ६७ ॥

इन्द्रिय संयमस्य स्थितप्रज्ञत्वे साधनत्वं लक्षणत्वञ्चोक्तमुपसंहरति तस्मादिति साधनत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता

भाषा अनुवाद ।

इन्द्री बश किये बिना तत्त्वज्ञान नहीं होता इस का कारण कहते हैं कि अवशीकृत इन्द्रिय विषयाधीन भोगी पुरुष की इन्द्रियों के बीच जब एक इन्द्री के साथ मन धावता है अर्थात् उस के आधीन हो विषयपर चलायमान भया तो फिर वह मन पुरुष की बुद्धि हरि के उस को विषय मे वेक्षिप्त करता है तब सब इन्द्री इकट्ठे हो प्रज्ञा को हरन करती हैं तो और क्या कहैं फेरि बायु जैसे जल मे नाव को इधर उधर न चावती है तैसे यह मन इन्द्रियों के साथ विक्षिप्त हो जहां तहां मारा मारा भ्रमता फिरता इस पुरुष को खराब करदेता है ॥ ६७ ॥

या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ ६९॥

शाङ्करभाष्यम्।

योऽयं लौकिको वैदिकश्च व्यवहारः समुत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य-विद्याथेत्वादविद्या निवृत्तौ निवर्त्ततेऽविद्यायाश्च विद्याविरोधान्निवृत्ति-रित्येतमर्थं स्फुटीकुर्वन्नाह यानिशेति. या निशा रात्रिः सर्वपदार्थानाम विवेककरी तमःस्वभावत्वात् निशा सर्वेषां भूतानां सर्वभूतानां किं तत्पर-मार्थतत्त्वं स्थितप्रज्ञस्य विषयो यथा नक्तञ्चराणामहरेव सदन्येषां निशा• भवति तद्वन्नक्तञ्चरस्थानीयानाम् अज्ञानिनां सर्वभूतानां निशेव निशा पर-

आनन्दगिरिकृतटीका।

आत्मविदः स्थितप्रज्ञस्य सर्वकर्म परित्यागेऽधिकारस्तद्विपरीतस्याज्ञस्य कर्मण्येत्येतस्मि-न्नर्थे समनन्तरश्लोकमवतारयति योऽयमिति अविद्या निवृत्तौ सर्वकर्म निवृत्तिश्चेत् तन्नि-वृत्तिरेव कथमित्याशङ्क्याह अविद्यायाश्चेति स्फुटी कुर्वन् वाह्याभ्यन्तरकरणानां पराक् प्रत्यक् प्रवृत्तिवत् तथाविधे दर्शने च मिथो विरुध्यते परागदर्शनस्यानाद्यात्मावरणा

स्वामिकृतटीका।

ज्ञातव्येत्यर्थः महावाहू इति सम्बोधयन् वैरिनिग्रहे समर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति॥ ६८॥

भाषा अनुवाद।

इन्द्रियों का संयम करना स्थिरप्रज्ञ पुरुष का साधन औ यही उस लक्षण है यह जो पूर्व कहि चुके सोई अब फेरि कहते हैं कि हे महाबाहो अर्जुन जो इन सब इन्द्रियों को विषयों से शान्त राखि सकै उस की प्रज्ञा प्रतिष्ठित होती है महाबाहु सम्बोधन से यह जनाया कि तुम वैरियों के निग्रह करने मे समर्थ हो इस से अवश्य इन्द्रियों को वश करि सकोगे ये इन्द्री पुरुष की परम शत्रु हैं शत्रु को जय करने के विना बड़ी हानि है यह इस का भावार्थ है इस से तुम इन्द्रियगण अपने वश मे करो॥ ६८॥

शाङ्करभाष्यम्।

मार्थतत्त्वागोचरत्वादतद्बुद्धीनां तस्यां परमार्थतत्त्वलक्षणायाम् अज्ञाननिद्रायां प्रबुद्धो जागर्ति संयमी संयमवान् जितेन्द्रियो योगीत्यर्थः यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यते यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेरतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायां विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते नाप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्मेति हि कर्मणि कर्त्ता प्रवर्ततेनाविद्यामात्रमिदं सर्वं निशेवेति यस्य तु पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्यात्मज्ञस्य सर्वकर्मसन्न्यास एवाधिकारो न प्रवृत्तौ तथा च दर्शयिष्यति तद्बुद्धयस्तदात्मान इत्यादिना ज्ञाननिष्ठायामेव तस्या-

आनन्दगिरिकृतटीका।

विद्याकार्यत्वादात्मदर्शनस्य च तन्निवर्त्तकत्वात् तत् तत्त्वात्मदर्शनार्थमिन्द्रियाण्यर्थेभ्यो निग्रहीयादित्याहेति योजना सर्वप्राणिनां निशापदार्थाविवेककरीत्यत्र हेतुमाह तमःस्वभावत्वादिति सर्वप्राणिसाधारणीं प्रसिद्धां निशां दर्शयित्वा तामेव प्रकृतानुगुणत्वेन प्रश्नपूर्वकं विशदयति किं तदित्यादिना स्थितप्रज्ञविषयस्य परमार्थतत्त्वस्य प्रकाशैकस्वभावस्य कथमज्ञानं प्रति निशात्वमित्याशङ्क्याह यथेति तत्र हेतुमाह अगोचरत्वादिति अतद्बुद्धीनां परमार्थतत्त्वातिरिक्ते द्वैतप्रपञ्चे प्रवृत्तबुद्धीनामप्रतिपन्नत्वात् परमार्थतत्त्वं निशेवाविदुषामित्यर्थः तस्यामित्यादि व्याचष्टे तस्यामिति निशापदलक्षितायामवस्थायामिति यावत् योगीति ज्ञानी कथ्यते द्वितीयार्द्धं विभजते यस्यामिति प्रसुप्तानां जागरणं विरुद्धमित्याशङ्क्याह प्रसुप्ता इवेति परमार्थतत्त्वमनुभवतो निवृत्ताविद्यस्य सन्न्यासिनो द्वैतावस्था निशेत्यत्र हेतुमाह अविद्यारूपत्वादिति परमार्थावस्था निशेत्यविदुषां विदुषान्तु द्वैतावस्था तथेति स्थिते फलितमाह अत इति अविद्यावस्थायामेव क्रियाकारकफलभेदप्रतिभानादित्यर्थः विद्योदयेऽपि तत्प्रतिभानाविशेषात् पूर्वमिव कर्माणि विनिवर्तयितव्यानीत्या-शङ्क्याह विद्यायामिति अविद्या निवृत्तौ बाधितानुवृत्त्या विभागभानेऽपि नास्ति कर्मविधिर्विभागाभिनिवेशाभावादित्यर्थः अविद्यावस्थायामेव कर्माणीत्युक्तं व्यक्तीकरोति

## शाङ्करभाष्यम् ।

धिकारः तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्तेरनुपपत्तिरिति चेत् न स्वात्मविषयत्वादात्मविज्ञानस्य नह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता आत्मत्वादेव तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य नह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः सम्भवति प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्त्यं प्रमाणं निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव प्रबोधे लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य तस्मात् नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥ ६८ ॥

### आनन्दगिरिकृतटीका ।

प्रागिति विद्योदयात् पूर्वं बाधकाभावादबाधिता विद्या क्रियादिभेदमापाद्य प्रमाणरूपया बुद्ध्या ग्राह्यतां प्राप्य कर्महेतुर्भवति क्रियादिभेदाभिमानस्य तद्धेतुत्वादित्यर्थः न विद्यावस्थायामित्युक्तं प्रपञ्चयति नाप्रमाणेति उत्पन्नायाञ्च विद्यायां अविद्यायाः निवृत्तत्वात् क्रियादिभेदभानमप्रमाणमिति बुद्धिरुत्पद्यते तया गृह्यमाणा यथोक्तविभागभागिन्यप्यविद्या न कर्महेतुत्वं प्रतिपद्यते बाधितत्वेनाभासतया तद्धेतुत्वायोगादित्यर्थः विद्याविद्याविभागेनोक्तमेव विशेषं विवृणोति प्रमाणभूतेनेति यथोक्तेन वेदेन कामना जीवनादिमतो मम कर्मविहितं तेन मया तत् कर्त्तव्यमिति मन्वानः सन् कर्मण्यज्ञोऽधिक्रियते तं प्रतिसाधनविशेषवादिनो वेदस्य प्रवर्त्तकत्वादित्यर्थः सर्वमेवेदमविद्यामात्रं द्वैतं निशेवेति मन्वानस्तु न प्रवर्त्तते कर्मणीति व्यावर्त्त्यमाह नाविद्येति विदुषो न कर्मण्यधिकारश्चेत्तस्याधिकारस्तर्हि कुत्रेत्याशङ्क्याह यस्येति तस्य आत्मज्ञस्य फलभूतसन्न्यासाधिकारे वाक्यशेषं प्रमाणयति तथाचेति प्रवर्तकं प्रमाणं विधिस्तदभावे कर्मस्विव विदुषो ज्ञाननिष्ठायामपि प्रवृत्तेरनुपपत्तेराश्रयणीयो ज्ञानवतोऽपि विधिरिति शङ्कते तत्रापीति किमात्मज्ञानं विधिमपेक्षते किम्वात्मा नाद्यः तस्य स्वरूपविषयस्य यथा प्रमाणप्रमेयमुत्पत्तेर्विध्यनपेक्षत्वादित्याह नस्वात्मेति नद्वितीय इत्याह नहीति प्रवर्तकप्रमाणशब्दितस्य विधेः साध्यविषयत्वादात्मनश्चासाध्यत्वादिति हेतुमाह आत्मत्वादेवेति आत्मतज्ज्ञानयोर्विध्यनपेक्षत्वेऽपि ज्ञानिनो मानमेय व्यवहारं प्रतिनियमार्थं विध्यपेक्षा स्यादित्याशङ्क्याह तदन्तत्वाच्चेति सर्वेषां प्रमाणानां प्रमाणत्वस्यात्मज्ञानोदयावसानत्वात् तस्मिन्नुत्पन्ने व्यवहारस्य निरवकाशत्वान्नतत्प्रतिनियमाय ज्ञानिनो विधिरित्यर्थः उक्तमेव व्यक्तीकरोति नहीति वस्त्वधिगमवदात्माधिगमेऽपि किमिति यथोक्तो व्यवहारो न भवतीत्याशङ्क्याह प्रमातृत्वं हीति तन्निवृत्तौ कथमद्वैतज्ञानस्य प्रमाण्यमित्याशङ्क्याह निवर्तयदेवेति

आनन्दगिरिकृतटीका ।

निवर्तयदद्वैतज्ञानं स्वयं निवृत्तेर्न प्रमाणमित्यत्र दृष्टान्तमाह स्वप्नेति आत्मज्ञानस्य विध्यनपेक्षत्वे हेत्वन्तरमाह लोके चेति व्यवहारभूमौ हि प्रमाणस्य वस्तु निश्चयफलपर्य्यन्तत्वे सति प्रवर्तकविधिसापेक्षत्वानुपलम्भादद्वैतज्ञानमपि प्रमाणत्वान्नविधिमपेक्षते रज्ज्वादिज्ञानवदित्यर्थः आत्मज्ञानवतस्तन्निष्ठाविधिमन्तरेण ज्ञानमाहात्म्येनैव सिद्धत्वात् तस्य कर्मसन्न्यासेऽधिकारो न कर्मणीत्युपसंहरति तस्मादिति ॥ ६८ ॥

स्वामिकृतटीका ।

ननु न कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निग्रहीतेन्द्रियो लोके दृश्यते अतोऽसम्भावितमिदं लक्षणमित्याशङ्क्याह या निशेति सर्वेषां भूतानां या निशा निशेवनिशा आत्मनिष्ठा अज्ञानध्वान्तावृतमतीनां तस्यां दर्शनादिव्यापाराभावात् तस्यामात्मनिष्ठायां संयमी निग्रहीतेन्द्रियो जागर्ति प्रबुध्यते यस्यान्तु विषयनिष्ठायां भूतानि जाग्रति प्रबुध्यन्ते सा आत्मतत्त्वं पश्यतो मुनेर्निशा तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः एतदुक्तं भवति यथा दिवान्धाश्चलूकादीनां रात्रावेवदर्शनं नतु दिवसे एवं ब्रह्मज्ञस्योन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिर्नतु विषयेषु अतो नासम्भावितमिदं लक्षणमिति ॥६९॥

## भाषा अनुवाद ।

जो सन्देह करो कि निद्रागत कहे सोये हुए मनुष्य के समान देखना सुनना बोलना चलना या परस करना आदि इन्द्रियों के व्यापार से रहित कहे इन्द्रीजित तो कोई भी पुरुष इस संसार मे नहीं देख पड़ता है तो स्थितप्रज्ञ का लक्षण जो कहा सो असम्भव अर्थात् कोई भी स्थिर बुद्धि नहीं हैं इस पर श्रीभगवान कहते हैं कि अज्ञानरूप अन्धकार से आवृत्त कहे घेरे सकल मनुष्यों को आत्मनिष्ठा कहे आत्मज्ञान तत्त्वज्ञानरूप विषय मे दर्शन आदि कोई व्यापार न रहने से जन्तुवों को जो निशा कहे रात्रि अर्थात् दर्शनादि व्यापार शून्य अवस्था तद्रूप आत्मनिष्ठा कहे तत्त्वज्ञान अवस्था रात्रि है जिस मे विषयी विचारों को कुछ नहीं सूझता सोये हुए पुरुषके समान शिथिल अचेत पड़े हैं कोई इन्द्री भी कुछ काम मे नहीं हैं यही आत्मनिष्ठारूप निशा सब जीवों की जानो इस से संयमी कहे इन्द्रीजित् पुरुष जागते हैं अर्थात् तत्त्वज्ञानका अनुभव करते औ

आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामायं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

शाङ्करभाष्यम् ।

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्नत्वसन्न्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह आपूर्य्येति आपूर्य्यमाणमद्भिरचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिर्यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत् तद्वत्

आनन्दगिरिकृतटीका ।

नन्वसन्न्यासिनापि विद्यावता विद्याफलस्य मोक्षस्य लब्धुं शक्यत्वात् किमिति विदुषः सन्न्यासो नियम्यते तत्राह विदुष इति आपातज्ञानवतो विवेकवैराग्यादिविशिष्टस्यैषणाभ्यः सर्वाभ्योऽभ्युत्थितस्य श्रवणादिद्वारा समुत्पन्नसाक्षात्कारवतो मुख्यस्य सन्न्यासिनो मोक्षो नान्यस्य विषयतृष्णा परिभूतस्य इत्येतत् दृष्टान्तेन प्रतिपादयितुमिच्छन् रागद्वेषविमुक्तैस्तु इति श्लोकोक्तमेवार्थं पुनराहेति योजना अद्भिः समुद्रस्य समन्तात् पूर्य्यमाणत्वे

भाषा अनुवाद ।

स्वस्वरूप को देखते आनन्द पावते हैं और जो विषय निष्ठा कहे विषयों का ज्ञान जिस मे सब प्राणी जागते अर्थात् बिषयी जन बिषयों मे बोधयुक्त हो दर्शनादि व्यापार करते स्वप्न की ऐसो संपत मे मगन हैं सोई मुनि जो तत्त्वज्ञानी हैं उन को रात्रि तुल्य है अर्थात् इस बिषय मोहरूप रात्रि मे उन को कुछ नहीं सूझता सोये नरके समान अचेत हैं अर्थात् ब्रह्म मे दृष्टि है औ बिषयों को देखते नहीं सोई कहा कि जो निशा सब भूत कहे प्राणियों की है उस मे मुनि जन जागते औ जो ज्ञानियों की रात्रि उस मे प्राणी सब जागते हैं जैसे उलुआ पक्षी औ चमगादुर छुछुन्दर आदि जीब और जीवो की रात्रि औ उन का दिन है अपना सब व्यापार करते खुसी से रातभर घूमते रहते तैसे ही जानो ॥ ६९ ॥

## शाङ्करभाष्यम् ।

कामा विषयसन्निधावपि सर्वत इच्छाविशेषा यं मुनिं समुद्रमिवापोविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति मोक्षं प्राप्नोति नेतरः कामकामी काम्यन्त इति कामाः विषयास्तान् कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः ॥ ७० ॥

### आनन्दगिरिकृतटीका ।

वृष्टिंह्रासवती नदीयास्थितिरापत्तेरित्याशङ्क्याह अचलेति नहि समुद्रस्योदकात्मकं प्रतिनियतं रूपं कदाचिद्विवर्द्धते ह्रसते वा तेन नदीयास्थितिरेकरूपैवेत्यर्थः तत्तन्नादेयास्वेदापः समुद्रान्तर्गच्छन्ति तर्हि तस्य विक्रियावत्त्वादप्रतिष्ठा स्यादित्याशङ्क्याह स्वात्मस्थमिति इच्छाविशेषाः विषयाणामसन्निधौ विदुषि निर्विकारे प्रविशन्तोऽपि सन्निधाने तस्मिन् प्रविशन्तो विकारमापादयेयुरित्याशङ्क्याह विषयेति प्रवेशं विषदयति सर्वत इति योऽकाम इत्यादि श्रुतेर्विषयविमुखस्य निष्कामस्य मोक्षो न कामकामुकस्येत्याह स शान्तिमिति ॥७०॥

### स्वामिकृतटीका ।

ननु विषयेषु इच्छाभावे कथमसौ तान् भुङ्क्ते इत्यपेक्षायामाह आपूर्यमाणमिति नानानदनदीभिरापूर्यमाणमप्यचलप्रतिष्ठमनतिक्रान्तमर्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति तथा कामाविषयाः यं मुनिमन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्धकर्मभिराक्षिप्ताः सन्तः प्रविशन्ति स शान्तिं कैवल्यं प्राप्नोति नतु कामकामी भोगकामनाशीलः ॥७०॥

## भाषा अनुवाद।

जो कहो कि विषय मे दृष्टि विना फेरि वे ज्ञानी विषयका भोग कैसे करते हैं इस आशय मे कहते हैं कि जैसे नद नदी नारों के जलप्रवाह जोरसे अचल समुद्र मे जाय के प्रवेश करते पर समुद्र की इच्छा नहीं तैसे ही विषय सब अदृष्ट कहे पूर्व कर्म्म के अनुसार भोग की इच्छाहीन मुनि के अन्तःकरण मे अदृष्ट के जोरसे कर्म के द्वारा विषय प्रवेश करते परन्तु तिन के द्वारा हो अर्थात् विषय भोग करते भी वे पुरुष कैवल्य मुक्ति पावते हैं और काम के कामी भोग के कामनाशील कहे विषयस्वभाव कभी नहीं होते हैं ॥ ७० ॥

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहङ्कारः स शान्ति मधिगच्छति ॥ ७१ ॥

शाङ्करभाष्यम्।

यस्मादेवं तस्मात् विहायेति विहाय परित्यज्य कामान् यः सन्न्यासी सर्वानशेषतः कार्त्स्न्येन चरति जीवनमात्र चेष्टाशेषः पर्य्यटतीत्यर्थः निस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निस्पृहः सन् निर्मम इति ममत्ववर्जितः शरीर जीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्य-भिनिवेशवर्जितः निरहङ्कारो विद्यावत्त्वादिनिमित्तात्मसम्भावनारहित इत्यर्थः स एवम्भूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

आनन्दगिरिकृतटीका।

यदि स्वरूपेनापि मनसा समस्ताभिमानं हित्वा कूटस्थं ब्रह्मात्मानं परिभावयता ब्रह्म निर्वाणमप्यते प्राप्तं तर्हि मौख्यादिविडम्बनमेवेत्याशङ्क्याह यस्मादिति शब्दादिविषय-प्रवणस्य तत्तदिच्छाभेदभागिनो न मुक्तिरिति व्यतिरेकस्य सिद्धत्वात् पूर्वोक्तमन्वयं निगम-यितुमनन्तरं वाक्यमित्यर्थः अशेषविषयत्यागे जीवनमपि कथमित्याशङ्क्याह जीवनेति सम्भवद्रागद्वेषादिके देशे निवासं व्यावर्त्त्यर्थं चरतीत्येतद्व्याचष्टे पर्यटतीति विहाय-कामानित्यनेन पुनरुक्तिं परिहरति शरीरेति निस्पृहत्वमुक्त्वा निर्ममत्वात् पुनर्वदन् कथं पुनरुक्तिमार्थिकीं न पश्यसीत्याशङ्क्याह शरीरजीवनेति सत्यहङ्कारे मम कारस्यावश्यकत्वान्नि-रहङ्कारत्वं व्याकरोति विद्यावत्वादीति स शान्तिमाप्नोति इत्युक्तमुपसंहरति स एवम्भूत इति सन्न्यासिनो मोक्षमपेक्ष्यमाणस्य सर्वकामपरित्यागादीनि श्लोकोक्तानि विशेषाणि यत्न-साध्यानि तद् सम्पत्तिफलन्तु कैवल्यमित्यर्थः ॥ ७१ ॥

स्वामिकृतटीका।

यस्मादेवं तस्मात् विहायेति प्राप्तान् कामान् विहाय त्यक्त्वा उपेक्ष्य अप्राप्तेषु च निस्पृहः यतो निरहङ्कारः अतएव तद्भोगसाधनेषु निर्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति प्रारब्धवशेन भोगान् भुङ्क्ते यत्र कुत्रापि गच्छति वा स शान्तिं प्राप्नोति ॥ ७१ ॥

भाषा अनुवाद।

जब ऐसी व्यवस्था है तो जो प्राप्त विषय को त्याग करते या अनादर से ग्रहण करते और अप्राप्त मे इच्छा रहित कहे किसी की अभिलाष

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

शाङ्करभाष्यम् ।

सैषा ज्ञाननिष्ठा स्तूयते एषा ब्राह्मोति एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वकर्मसन्न्यस्य ब्रह्मरूपेणैवावस्थानमित्येतत् हे पार्थ नैनां स्थितिं प्राप्य लब्ध्वा विमुह्यति न मोहं प्राप्नोति स्थित्वास्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽपि अन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति किमु वक्तव्यं ब्रह्मचर्यादेव सन्न्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥

इति श्रीभगवद्गीता भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

आनन्दगिरिकृतटीका ।

तत्र तत्र संक्षेपविस्तराभ्यां प्रदर्शितां ज्ञाननिष्ठाम् अधिकारिप्रवृत्त्यर्थत्वेन स्तोतुमुत्तरश्लोकमवतारयति सैषेति गृहस्थः सन्न्यासीत्युभावपि चेन्मुक्तिभागिनौ किं तर्हि कष्टेन सर्वथैव सन्न्यासिनेत्याशङ्क्य सन्न्यासिव्यतिरिक्तानामन्तरायसम्भवादपेक्षितः सन्न्यासो मुमुक्षोरित्याह एषेति स्थितिमेव व्याचष्टे सर्वमिति न विमुह्यतीति पुनर्नञोनुकर्षणमन्वयार्थं सन्न्यासिनो विमोहाभावेऽपि गृहस्थो धनहान्यादिनिमित्तं प्रायेण विमुह्यति विक्षिप्तः सन् परमार्थविवेकरहितो भवतीत्यर्थः यथोक्ता ब्राह्मी स्थितिः सर्वकर्मसन्न्यासपूर्विका ब्रह्मनिष्ठा तस्यां स्थित्वा तामिमामायुषश्चतुर्थेऽपि भागे कृत्वेत्यर्थः अपि शब्दसूचितं कैमुतिकन्यायमाह किमुवक्तव्यमिति तदेवं तत्त्वं पदार्थौ तदैक्यं वाक्यार्थस्तज्ज्ञानादैकान्तिकी मुक्तिश्च तदुपायश्चेत्येतेषामेकैकत्र श्लोके प्राधान्येन प्रदर्शितमिति निष्ठाद्वयमुपायोपेयभूतमध्यायेन सिद्धम् ॥ ७२ ॥

इति आनन्दगिरिकृतटीकायां द्वितीयोऽध्यायः ॥ २

भाषा अनुवाद ।

नहीं रखते इस से उन के अहङ्कार नहीं है इसी से भोग अभोग साधन मे ममता तथा स्नेह शून्य होकर आत्मा मे दृष्टि राखिकर अदृष्ट वशते बिषय भोग करते हैं और कहीं भी जांय परन्तु शान्ति को प्राप्त होते हैं अर्थात् जो सब कामना छोड़ि बेपरवाह अहं ममताहीन पुरुष भोग करैं या कहीं जांय पर शान्ति तो पावते ही हैं ॥ ७१ ॥

स्वामिकृतटीका।

उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति एषेति ब्राह्मी स्थितिर्ब्रह्मज्ञाने निष्ठा एषा एवंविधा एनां परमेश्वराराधनेन विशुद्धान्तःकरणः पुमान् प्राप्य न मुह्यति पुनः संसारमोहं न प्राप्नोति योऽन्तकाले मृत्युसमयेऽपि अस्यां चणमात्रं स्थित्वा ब्रह्म निर्वाणं ब्रह्मणि लयमृच्छति प्राप्नोति किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः उज्जहाराजुनं भक्तं स कृष्णः शरणं मम ॥ ७२ ॥

इति श्रीधरस्वामिकृतटीकायां द्वितीयोऽध्यायः ॥ २ ॥

भाषा अनुवाद।

पूर्व कही हुई ज्ञाननिष्ठा की प्रसंसा करिके कहते हैं कि हे अर्जुन उक्त ब्रह्मज्ञान की निष्ठा ऐसी हैं इस से भगवत के आराधन से शुद्धचित्त पुरुष यह ब्रह्मनिष्ठा पायकरि और संसार सागर मे मूढ़ नहीं होता है देखो मरती वार भी एक चणभर जो ब्रह्मनिष्ठा मे मन स्थिर करते वे ब्रह्म मे लीन होते हैं तो बालपन से या बहुत दिनों से इस ब्रह्मनिष्ठा को अभ्यास से इस मे मन स्थिर करि अन्त मे मुक्ति मिलैगी इस मे फिरि कुछ सन्देह बाकी है सो हे पार्थ यह ब्राह्मी स्थिति है इस को प्राप्त होय फिरि मोह नहीं पावते अन्तकाल मे भी इसी मे चण भर मन थिर करिके मनुष्य निश्चय ब्रह्म निर्वाण पद पावते हैं ॥ ७२ ॥

इति श्रीभगवद्गीतायाः पण्डित जगन्नाथ सुक्ल विरचितायां मन-
भावनी टीकायां श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम
द्वितीयोऽध्यायः ॥ २ ॥

# श्रीमद्भगवद्गीता।

—o—

## तृतीयाध्यायः।

### अर्जुन उवाच।

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन।
तत् किं कर्मणि घोरे मां नियोजयसि केशव॥ १॥

शाङ्करभाष्यम्

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्य-बुद्धिर्योगबुद्धिश्च तत्र प्रजहाति यदा कामानित्यारभ्याध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां सन्न्यासकर्तव्यतामुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्तैषा ब्राह्मी स्थितिरित्यर्जुनाय च कर्मण्येवाधिकारस्ते मा ते संगोऽस्त्व-कर्मणीति कर्मैव कर्तव्यमुक्तवान् योगबुद्धिमाश्रित्य न तत एव श्रेयः प्राप्ति-मुक्तवान् तदेतदालक्ष्य पर्य्याकुलीभूतबुद्धिरर्जुन उवाच कथं भक्ताय श्रेयो-ऽर्थिने यत् साक्षात् श्रेयः प्राप्तिसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्य्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्या-दिति युक्तः पर्य्याकुलीभावोऽर्जुनस्य तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादि

आनन्दगिरिकृतटीका।

पूर्वोत्तराध्यायोः सम्बन्धं पूर्वस्मिन्नध्याये वृत्तमर्थं संक्षिप्यानुवदति शास्त्रस्येति गीता-शास्त्रप्रारम्भापेक्षितं हेतुफलभूतं बुद्धिद्वयं भगवतोपदिष्टमित्यर्थः प्रष्टुरर्जुनस्याभिप्रायं निर्देष्टुं वृत्तमर्थान्तरं कथयति तत्रेति अध्याययोर्बुद्धिद्वयनिर्धारणे वा सप्तम्यर्थः पार-मार्थिके तत्त्वे तज्ज्ञानं तन्निष्ठानामशेषकामत्यागिनां काममूलानां कर्मणामपि प्रति-(?)तिकर्मवत्त्यागं कर्त्तव्यत्वेन भगवानुक्तवानित्यर्थः तथापि मोक्षसाधने [illegible] रन्यतरस्य विवक्षितत्वबुद्ध्या समनन्तरप्रश्नप्रवृत्तिरित्याशङ्क्याह उक्तेति अर्जुनस्य मनसि

## शाङ्करभाष्यम् ।

प्रश्नापाकरणवाक्यञ्च भगवतो युक्तं यथोक्तं विभागविषये शास्त्रे केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत् प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति यथा चात्मना सम्बन्धग्रन्थे गीतार्थो निरूपितः तत् प्रतिकूलञ्चेह पुनः प्रश्न प्रतिवचनयोरर्थं निरूपयन्ति कथं तत्र सम्बन्धग्रन्थे तावत् सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तः पुनर्विशेषितञ्च यावज्जीवं श्रुति चोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यते इत्येतदेकान्तेनैव प्रतिषिद्धमितीह त्वाश्रमविकल्पं दर्शयता यावज्जीवं श्रुति चोदितानामेव कर्मणां परित्याग उक्तः तत् कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान् श्रोता वा कथं विरुद्धमर्थमवधारयेत् तत्रैतत् स्यात् गृहस्थानामेव श्रौतकर्म परित्यागेन केवलादेव ज्ञानान्मोक्षः प्रति-

## आनन्दगिरिकृतटीका ।

व्याकुलत्वं प्रश्नबीजं दर्शयितुमुक्तमर्थान्तरमनुभाषते अर्जुनाय चेति सांख्यबुद्धिमाश्रित्य कर्मत्यागमुक्त्वा पुनस्तस्यैव कर्त्तव्यत्वं कथं मिथो विरुद्धं ब्रवीतीत्याशङ्क्याह योगेति यथा सांख्यबुद्धिमाश्रितानां सन्न्यासद्वारा तन्निष्ठानां कृतार्थतोक्ता तथा योगबुद्धिमाश्रित्य कर्मकुर्वतोऽपि कृतार्थत्वमुक्तमित्याशङ्क्याह न तत एवेति दूरेण ह्यवरं कर्म बुद्धियोगादिति दर्शनादिति शेषः बुद्धिव्याकुलत्वं प्रश्नबीजं प्रतिलभ्य प्रश्नं करोतीत्याह तदेतदिति साक्षादेव श्रेयःसाधनं ज्ञानमन्येभ्यो दर्शितं तदित्युच्यते तद्विपरीतं कर्म स्वस्यानुष्ठेयत्वेनोक्तमेतदिति निर्दिश्यते भगवदुक्तेऽर्थे संदिह्यमानस्य निर्णयाकाङ्क्षया प्रश्नप्रवृत्तेरस्ति पूर्वोत्तराध्याययोरुत्थाप्योत्थापकलक्षणा सङ्गतिरित्यर्थः अर्जुनस्य प्रश्ननिमित्तं पर्याकुलत्वं प्रश्नपूर्वकं प्रपञ्चयति कथमित्यादिना यद्धि साक्षादेव श्रेयःसाधनं सांख्यशब्दितं परमार्थतत्त्वविषयबुद्धौ निष्ठारूपं तदन्यस्मै श्रेयोऽर्थिने भक्ताय श्रावयित्वा मां पुनरभक्तमश्रेयोऽर्थिनमिव कर्मणि पूर्वोक्तविपरीते कथं भगवान्नियोक्तुमर्हतीति इत्यर्जुनस्य पर्याकुलीभावो युक्त इति सम्बन्धः ज्ञाननिष्ठातो वैपरीत्यं स्फोरयितुं कर्म विशिनष्टि दृष्टेति बुद्धे हि चल कर्मणि दृष्टोऽनेकोऽनर्थो गुरुभ्रातृ हिंसादिस्तेन सक्तस्येन बुद्धिशुद्धि द्वारापि वर्त्तमाने जन्मन्येव फलमित्यनियते मम भक्तस्य श्रेयोऽर्थिनो नियोगो भगवता युक्तो न भवतीति शेषः यथोक्तं निमित्तं प्रश्नस्य युक्तं तदनुगुणत्वात् तस्येति द्योतकमाह तदनुरूपस्येति ज्ञाननिष्ठानां कृतार्थता-कर्मनिष्ठानान्तु न तथेत्युक्ते विभागभागिशास्त्रमित्यत्र लोकेऽस्मि-

शाङ्करभाष्यम् ।

षिध्यते नत्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव कथं सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयात् आश्रमान्तराणाम् अथमतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानात् श्रौतकर्मरहितात् गृहस्थानां मोक्षः प्रतिषिध्यत इति तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यते इत्येतदपि विरुद्धं कथं गृहस्थस्यैव स्मार्तकर्मणा समुच्चितात् ज्ञानान्मोक्षः प्रतिषिध्यते नत्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुं किञ्च यदि मोक्षसाधनत्वेन स्मार्त्तानि कर्मा-

आनन्दगिरिकृतटीका ।

न्नित्यादिवाक्यस्यापि द्योतकत्वं दर्शयति प्रश्नेति साक्षादेव श्रेयःसाधनमन्येभ्यो भगवतोक्तं नतु मह्यमिति मत्वा व्याकुलीभूतः सन् पृच्छतीति स्वाभिप्रायेण सम्बन्धमुक्त्वा वृत्तिकाराभिप्रायं दूषयति केचित्त्विति ज्ञान कर्मणोः समुच्चयमवधारयितुं प्रश्नाङ्गीकारे समुच्चयावधारणेनैव प्रतिवचनमुचितं तथा भगवता प्रतिवचनमुक्तं तथा च प्रश्नस्य समुच्चयविषयत्वावगमात् प्रत्युक्तेश्चासमुच्चयविषयत्वात् तयोर्मिथो विरोधो वृत्तिकारमते स्यादित्यर्थः किञ्च केवलं प्रश्नप्रतिवचनयोरेव परमते परस्परविरोधो न भवत्यपितु परेषां स्वग्रन्थेऽपि पूर्वापरविरोधोऽस्तीत्याह यथा चेति आत्मना वृत्तिकारैरिति यावत् सम्बन्धग्रन्थो गीताशास्त्रारम्भोपोद्घातः इहेति तृतीयाध्यायारम्भं परामृशति तदेव विवृण्वन्नाकाङ्क्षामाह कथमिति पूर्वापरविरोधं स्फोरयितुं सम्बन्धग्रन्थोक्तमर्थमनुवदति तत्रेति परकीया वृत्तिः सप्तम्या समुल्लिख्यते सम्बन्धग्रन्थे तावदयमर्थ उक्त इति सम्बन्धः तमेवार्थं विशदयति सर्वेषामिति सर्वकर्म सन्न्यासपूर्वकज्ञानादेव केवलात् कैवल्यमित्यस्मिन्नर्थे शास्त्रस्य पर्य्यवसानान्न समुच्चयो विवक्षितस्तत्रेत्याशंक्याह पुनरिति उक्तो गीतार्थो वृत्तिकारैरेव कर्मत्यागायोगेन विशेषितत्वान्नाविवक्षितो भवितुमर्हते तथा च श्रौतानि कर्माणि त्यक्त्वा ज्ञानादेव केवलान्मुक्तिर्भवतीत्येतन्मतं नियमेनैव यावज्जीवश्रुतिभिर्विप्रतिषिद्धत्वान्नाभ्युपगन्तुमुचितमित्यर्थः तथापि कथं मिथो विरोधधीरित्याशङ्क्याह इहत्विति प्रथमतो हि सम्बन्धग्रन्थे समुच्चयो गीतार्थः प्रतिपाद्यत्वेन वृत्तिकृता प्रतिज्ञातः श्रौतकर्मपरित्यागस्य श्रुति विरोधादेव न सम्भवतीत्युक्तं तृतीयाध्यायारम्भे पुनः सन्न्यासिनां ज्ञाननिष्ठा कर्मिणां कर्मनिष्ठेत्याश्रमविभागमभिदधता पूर्वप्रतिषिद्धकर्मत्यागाभ्युपगमान्मिथो

शाङ्करभाष्यम् ।

ऊर्द्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापि इष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्द्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चितात् ज्ञानान्मोक्ष इति तत्रैवं सति गृहस्थस्यायासबाहुल्यात् श्रौतं स्मार्तञ्च बहुदुःखरूपं कर्म शिरस्यारोऽपितं स्यात् अथ गृहस्थस्यैवायासबाहुल्यात् तत् कारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौत नित्यानित्यकर्मरहितत्वादिति तदप्यसत् सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसन्न्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो न मुमुक्षोः सर्वकर्मसन्न्यासविधानात् पुत्रैषणाया वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति तस्मात् सन्न्यासमेषां तपसा-

आनन्दगिरिकृतटीका ।

विरोधो दर्शितः स्यादित्यर्थः ननु यथा भगवता प्रतिपादितं तथैव वृत्तिकृता व्याख्यातमिति न तस्यापराधोऽस्तीत्याशङ्क्याह तत् कथमिति नहि इह भगवान् विरुद्धमर्थमभिमन्ते सर्वज्ञस्य परमाप्तस्य विरुद्धार्थवादित्वायोगात् किन्तु तदभिप्रायापरिज्ञानादेव व्याख्यातुर्विरुद्धार्थवादितेत्यर्थः भगवतो विरुद्धार्थवादित्वाभावेऽपि श्रोतुर्विरुद्धार्थप्रतिपत्तिं प्रतीत्य व्याचक्षाणो वृत्तिकारो नापराध्यतीत्याशङ्क्याह श्रुतावेति अर्जुनो हि श्रोतासोऽपि बुद्धिपूर्वकारी भगवदुक्तमेवावधारयन्नविरुद्धमर्थमवधारयितुमर्हति तथा च परस्यैव विरुद्धार्थवादितेत्यर्थः विरोधं परिहरन्नाशङ्कते तत्रेति सम्बन्धग्रन्थे हि वृत्तिकारस्यैतदभिप्रेतं गृहस्थानामेव सतां परिपक्वज्ञानमन्तरेण यावज्जीवश्रुतिचोदिताग्निहोत्रादित्यागेन केवलादेवापातिकादात्मज्ञानान्मोक्षमवेक्षमाणानां यावज्जीवादिशास्त्रैरसौ निषिध्यते नतु स्वरूपेणैव कर्मत्यागो ज्ञानान्मोक्षो वा निषेद्धुमिष्यते तृतीये पुनरध्याये कर्मत्यागिनां गृहस्थेभ्यो व्यतिरिक्तानामेव केवलादात्मज्ञानान्मोक्षो विवक्षते अतो भिन्नविषयत्वान्निषेधाभ्यनुज्ञानयोर्न विरोधाशङ्केत्यर्थः विधान्तरेण विरोधं दर्शयन्नुत्तरमाह एतदपीति विरोधमेवाकाङ्क्षाद्वारा साधयति कथमित्यादिना श्रौतं कर्म गृहस्थानामवश्यमनुष्ठेयमित्यनेनाभिप्रायेण तेषां केवलादात्मज्ञानान्मोक्षो निषिध्यते नतु गृहस्थानां ज्ञानमात्रायत्तं मोक्षं प्रतिषिद्धान्येषां केवलज्ञानाधीनो मोक्षो विवक्ष्यते आश्रमान्तराणामपि स्मार्तेन कर्मणा समुच्चयाभ्युपगमादिति चोदयति अथेति एतत् पदपराम्रष्टं वचनमेवाभिनयति केवलादिति

## शाङ्करभाष्यम्।

मतिरिक्तमाहुः न्यास एवात्यरेचयदिति न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति च ब्रह्मचर्य्यादेव प्रव्रजेदित्याद्याः श्रुतयः त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज येन त्यजसि तं त्यज संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिता इति बृहस्पतिः परमात्मनि यो रक्तोऽपरमात्मनि सर्वैषणा विनिर्मुक्तः स भैक्ष्यं भोक्तुमर्हति कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिन इति शुकानुशासनं इहापि च सर्वकर्माणि मनसा संन्यस्येत्यादि मोक्षस्य कार्य्यत्वान्मुमुक्षोः कर्मानर्थक्यं नित्यानि प्रत्यवायपरिहारार्थानीति चेत् नानासंन्यासिविषयत्वात् प्रत्यवायप्राप्तेर्नह्यग्निकार्य्याद्यकरणात् संन्यासिनः प्रत्यवायः कल्पयितुं शक्यो यथा ब्रह्मचारिणाम् असंन्यासिनामपि न

### आनन्दगिरिकृतटीका।

ननु गृहस्थानां श्रौतकर्मराहित्येऽपि सति स्मार्त्ते कर्मणि कुतो ज्ञानस्य केवलत्वं लभ्यते येन निषेधोक्तिरर्थवती तत्राह प्रकृतवचनमेव सम्यगर्थः प्रधानं हि श्रौतं कर्म तद्राहित्ये सति स्मार्त्तस्य कर्मणः सतोऽप्य सद्भावमभिप्रेत्य ज्ञानस्य केवलत्वमुक्तमिति युक्ता निषेधोक्तिरित्यर्थः गृहस्थानामेव श्रौतकर्मसमुच्चयो नान्येषाम् अन्येषान्तु स्मार्त्तेनेति पक्षपाते हेत्वभावं मन्वानः सन् परिहरति एतदपीति तमेव हेत्वभावं प्रश्नद्वारा विवृणोति कथमित्यादिना गृहस्थानां श्रौत स्मार्त्तकर्म समुच्चितं ज्ञानं मुक्तिहेतुरित्यभ्युपगमात् केवल स्मार्त्तकर्म समुच्चितात् ततो न मुक्तिरिति निषेधो युज्यते ऊर्द्ध्वरेतसान्तु स्मार्त्तकर्ममात्र समुच्चितात् ज्ञानान्मुक्तिरिति विभागे नास्ति हेतुरित्यर्थः पक्षपाते कारणं नास्ति इत्युक्त्वा पक्षपातपरित्यागे कारणमस्तीत्याह किञ्चेति गृहस्थानामपि ब्रह्मज्ञानं स्मार्त्तैरेव कर्मभिः समुच्चितं मोक्षसाधनं ब्रह्मज्ञानत्वादूर्द्ध्वरेतःसु व्यवस्थितब्रह्मज्ञानवदिति पक्षपातत्यागे हेतुं स्फुटयति यदीत्यादिना यदि गृहस्थानां ब्रह्मज्ञानं स्मार्त्तैरेव कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षस्य हेतुरिति विवक्षितं तदा तान् प्रति यावज्जीव श्रुतिर्विरुध्येत यदि स्मार्त्तैरपि कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षसाधनं विवक्षितं तदा सिद्धसाध्यतेति प्रागुक्तमभिप्रेत्य चोदयति अथेति आश्रमान्तराणां तर्हि केवलादेव ज्ञानान्मुक्तिरिति प्रागुक्तविरोधतादवस्थ्यमित्याशङ्क्याह ऊर्द्ध्वरेतसां त्विति यथोक्तविभागे गार्हस्थ्यं क्लेशात्मकं कर्मबाहुल्यात् अनुपादेयमापद्येतेति दूषयति तत्रेति साधनभूयस्त्वमिति न्यायमाश्रित्य शङ्कते

शाङ्करभाष्यम् ।

तावन्नित्यानां कर्मणामभावादेव भावरूपस्योत्पत्तिः कल्पयितुं शक्या कथमसतः सज्जायेतेत्यसतः सज्जन्मासंभवश्रुतेः यदि विहिताकरणादसम्भवाख्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदानर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात् विहितस्य करणयोः दुःखमात्रफलत्वात् तथा च कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं स्यान्नाचैतदिष्टं तस्मान्नसन्न्यासिनां कर्माण्यतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः ज्यायसी चेत् कर्मणस्ते मता बुद्धिरित्यर्जुनस्य प्रश्नानुपपत्तेश्च यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चयेन त्वया एकेनानुष्ठेयमित्युक्तं स्यात् ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत् कर्मणस्ते मता बुद्धिरित्यर्जुनाय चेत् बुद्धिकर्मणी त्वयानुष्ठेये इत्युक्ते याच-

आनन्दगिरिकृतटीका ।

अथेति क्लेशवाहुल्योपेतं श्रौतं स्मार्त्तञ्च बहुकर्म तस्यानुष्ठानात् गृहस्थस्य मोक्षः स्यादेवेत्यर्थः एवकारनिरस्यं दर्शयति नाश्रमान्तराणामिति तेषां नास्ति मुक्तिरित्यत्र यावज्जीवादिश्रुतिविहितावश्यानुष्ठेयकर्मराहित्यं हेतुं सूचयति श्रौतेति शास्त्रविरोधे न्यायस्य निरवकाशत्वमभिप्रेत्य दूषयति तदपीति ऐकाश्रम्यस्मृत्या गार्हस्थ्यस्यैव प्राधान्यादनधिकृतान्धादिविषयं कर्मसन्न्यासविधानमित्याशङ्क्याह ज्ञानाङ्गत्वेनेति न खल्वनधिकृतानामन्धादीनां सन्न्यासः श्रवणाद्यावृत्तिद्वारा ज्ञानाङ्गं भवितुमलं तेषां श्रवणाद्यभ्याससामर्थ्यादतः श्रुत्यादीनां विरोधे नास्ति गार्हस्थ्यस्य प्राधान्यमित्यर्थः तस्य प्राधान्याभावे हेत्वन्तरमाह आश्रमेति ब्रह्मचर्य्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदिवेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वा वनाद्वेति श्रुतौ तस्याश्रमविकल्पमेके ब्रुवते इति यमिच्छेत्तमावसेदित्यादि स्मृतौ चाश्रमाणां समुच्चयेन विकल्पेन चाश्रमान्तरमिच्छन्तं प्रतिविधानान्न गार्हस्थ्यस्य प्रधानत्वमित्यर्थः यदि सर्वेषामाश्रमाणां श्रुतिस्मृतिमूलत्वं तर्हि तत्तदाश्रमविहितकर्मणा ज्ञानेन समुच्चयः सिध्यतीति शङ्कते सिद्धस्तर्हीति यद्यपि ज्ञानोत्पत्तावामकर्मणां साधनत्वं तथापि ज्ञानमुत्पन्नं नैव फले सहकारित्वेन तान्यपेक्षते अन्यथा सन्न्यासविध्यनुपपत्तेरिति दूषयति न मुमुक्षोरिति सन्न्यासविधानमेवानुक्रामति व्युत्थायेत्यादिना एषणाभ्यो वैमुख्येनोत्थानं तत्परित्यागः आश्रमसम्बन्धनन्तरं तत्र विहितकर्मकलापानुष्ठानमपि कर्तव्यमित्याह अथेति प्रागुक्तानां सत्यादीनामल्पफलत्वान्न्यासस्य च ज्ञानद्वारा मोक्षफलत्वादित्याह तस्मादिति अतिरिक्तमशयत्वं महाफलमिति यावत् प्रकृतकर्मभ्यः सकाशान्न्यास एवातिशयवानासीदित्युक्तोऽर्थे वाक्यान्तरं पठति न्यास एवेति लोक-

शाङ्करभाष्यम् ।

कर्मणो ज्यायसी बुद्धिः साम्युक्तैवेति तत् किं कर्मणि घोरे मां नियोजयसि केशवेति उपालम्भो वा प्रश्नो वा नकथञ्चनोपपद्यते नचार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं येन ज्यायसी चेदिति विवेकतः प्रश्नः स्यात् यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधात् युगपदनुष्ठानं न सम्भवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात् ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादिरविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते नचाज्ञाननिमित्तं भगवत्

आनन्दगिरिकृतटीका ।

त्रयहेतुं साधनत्रयं परित्यज्य संसाराद्विरक्ताः सन्न्यासपूर्वकात्मज्ञानादेव साधनान्मोक्ष-मित्याह न कर्मणेति सति वैराग्येनास्ति कर्मापेक्षा तस्यां सामग्र्यां कार्यापेक्षानुपपत्ते-रित्याह ब्रह्मचर्यादेवेति इत्याद्याः सर्वकर्मसन्न्यासविधायिन्यः श्रुतयो भवन्तीति शेषः आत्मानमेव लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्यसंग्रहार्थमादिपदं तत्रैव स्मृतिमुदाहरति त्यजेति धर्माधर्मयोः सत्यानृतयोश्च संसारारम्भकत्वान्मुमुक्षुणा तत्त्यागे प्रयतितव्यमित्यर्थः त्यक्तत्वाभिमानस्यापि तत्त्वतः स्वरूपसम्बन्धाभावात् त्यक्तव्यमित्युपदिष्टमित्याह येनेति स्वानु-भवानुसारेण प्रमात्मनामनुभवस्य संसारस्य दुःखफलत्वमालक्ष्य मोक्षहेतुसम्यग्ज्ञानसिद्धये ब्रह्मचर्यादेव पारिव्राज्यमनुष्ठेयमित्युत्पत्तिविधिरुपन्यस्यति संसारमिति तत्त्वज्ञानस्याङ्गत्वेन ब्रह्मचर्यादेव कर्मसन्न्यासे सामर्थ्यमभिदधानो विनियोगविधिं सूचयति परमिति ज्ञानकर्मणो-रसमुच्चयार्थं फलविभागं कथयति कर्मणेति उक्तं फलविभागमनूद्य ज्ञाननिष्ठानां कर्मसन्न्या-सस्य कर्तव्यत्वमाह तस्मादिति वाक्यशेषेऽपि सर्वकर्मसन्न्यासो विवक्षितोऽस्तीत्याह इहा-पीति ज्ञानार्थिनो मुमुक्षोः सन्न्यासविध्यनुपपत्तिमाविधितं समुच्चयविधिवचनमित्युक्तमिदानीं मोक्षस्वभावालोचनयापि समुच्चयवचनमनुचितमित्याह मोक्षस्य चेति अकुर्वन्विहितं कर्म निन्दितञ्च समाचरन् प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति स्मृतेः मुमुक्षूणामपि प्रत्य-वायनिवृत्तये कर्तव्यं नित्यकर्मेति शङ्कते नित्यानीति यो यस्मिन् कर्मण्यधिकृतस्तस्य तद-करणात् प्रत्यवायो भवति नतु कर्मानधिकारिणः सन्न्यासिनस्तदकरणात् प्रत्यवायः सम्भव-तीति दूषयति नासन्न्यासीति तदेव स्पष्टयति नहीति ब्रह्मचारी साध्ययनाद्यकरणात् प्रत्य-वायः सन्न्यासिनो नास्तीत्यर्थः तत्र व्यतिरेकोदाहरणमाह यदेति अकरणात् प्रत्यवायोत्-पत्तिमभ्युपेत्योक्तं सम्प्रति प्रतिषिद्धकरणादेव प्रत्यवायो नत्वकरणादभावात् भावोत्पत्तेरित्-

शाङ्करभाष्यम् ।

प्रतिवचनं कल्पनीयम् अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः तस्मात् केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसम्भवे कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासम्भवमर्जुनस्यावधारणेन दर्शयिष्यति ज्यायसी चेदिति ज्यायसी श्रेयसी चेद् यदि कर्मणः सकाशात्ते तव मता अभिप्रेता बुद्धिर्ज्ञानं हे जनार्दन यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं

आनन्दगिरिकृतटीका ।

वेदविरुद्धत्वादित्याह न तावदिति ननु नित्यकर्मविधायी वेदस्तदकरणात् प्रत्यवायो भवतीति ब्रवीति तत् कथमकरणात् प्रत्यवायो न भवतीति श्रुतिमाश्रित्योच्यते श्रुत्यन्तरविरोधादिति तत्राह यदीति विहितस्याकरणे सत्यनर्थप्राप्तेर्न नित्यकर्मविधायी वेदोऽनर्थकरत्वेनाप्रमाणमित्याशङ्क्याह विहितस्येति नहि विहितस्य करणे पितृलोकप्राप्तिलक्षणं फलं भवतेष्यते शूलादिना नयनपीडादिदुःखं तु प्रत्यक्षमेवाकरणे च प्रत्यवायोत्पत्तिरुभयथापि पुरुषस्यानर्थकरो वेदोऽप्रमाणमेव स्यादित्यर्थः नन्वभावस्यापि भावोत्पादनसामर्थ्यं वेदः सम्पादयिष्यति तथा च विहिताकरणप्रत्यवायपरिहारो विहितकरणे फलिष्यतीति नेत्याह तथा चेति लोकप्रसिद्धपदार्थशक्त्याश्रयणेन शास्त्रप्रवृत्त्यङ्गीकारादपूर्वशक्त्याधानायोगात् ज्ञापकमेव शास्त्रमित्यर्थः कारकत्वे च तस्याप्रामाण्यमप्रत्याङ्कं स्यादित्याह कारकमिति भवतु शास्त्रस्याप्रामाण्यमित्याशक्यापौरुषेयतया अशेषदोषा नागम्भितत्वान्नैवमित्याह नचेति अनिर्वाच्यान्युपलम्भस्य सम्वेदनमभावज्ञाने कारणमीहितसाधनज्ञानं तु चरणन्यासादिप्रवृत्तिकारणमित्यङ्गीकृत्योपसंहरति तस्मादिति अकरणात् प्रत्यवायोत्पत्त्यसम्भवस्तच्छब्दार्थः सन्न्यासिनां ज्ञाननिष्ठानां कर्मसन्न्यासित्वादेव कर्मासम्भवे फलितमाह अत इति समुच्चयानुपपत्तौ हेत्वन्तरमाह ज्यायसीति प्रश्नानुपपत्तिमेव प्रपञ्चयति यदि हीति समुच्चयोपदेशे प्रश्नैकदेशानुपपत्तेश्च न तदुपदेशोपपत्तिरित्याह अर्जुनायेति कर्मण्येवाधिकारस्तेमाफलेषु कदाचनेति अर्जुनं प्रत्युपदेशात्तं प्रति ज्यायसी बुद्धिर्नोक्तेति युक्तं तत् किमित्याद्युपालम्भवचनमित्याशङ्क्याह नचेति येन कल्पनेन ज्यायसी चेदित्यारभ्य तत् किं कर्मणीत्युपालम्भात्मा प्रश्नः स्यात् तथा न युक्तं कल्पयितुं एषा तेऽभिहिता सांख्ये बुद्धिरिति वचनविरोधादिति योजना कस्मिन् पक्षे तर्हि प्रश्नस्योपपत्तिरित्याशङ्क्याह यदीति भगवदुक्तेऽर्थे प्रष्टुर्विवेकाभावात् प्रश्नः स्यादित्याशङ्क्य पूर्वोक्तमेवाधिकं विवक्षया स्मारयति अविवेकत इति भगवतोऽपि

## शाङ्करभाष्यम् ।

श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तं करणं बुद्धेरनुपपन्नं अर्जुनेन कृतं स्यान्नहि तदेव तस्मात् फलतोऽतिरिक्तं स्यात् तथा च कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करञ्च कर्म कुर्विति मां प्रतिपादयति तत् किन्नुकारणमिति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तच्च नोपपद्यते ॥ १ ॥

### आनन्दगिरिकृतटीका ।

प्रतिवचनमज्ञाननिमित्तं प्रश्नाननुरूपत्वादित्याशङ्क्याधिकं दर्शयति नचेति भगवतः सर्वज्ञत्वप्रसिद्धिविरोधादज्ञानाधीनप्रतिवचनायोगादित्यर्थः इतश्च समुच्चयः शास्त्रार्थो न भवतीत्याह अस्माच्चेति कस्तर्हि शास्त्रार्थो विवक्षितस्तत्राह केवलादिति ज्ञानकर्मणोः समुच्चयानुपपत्तौ कारणान्तरमाह ज्ञानेति वाक्यशेषवशादपि समुच्चयस्याशास्त्रार्थतेत्याह कुरुकर्मैवेति प्राथमिकेन सम्बन्धग्रन्थेन समस्तशास्त्रार्थसंग्राहकेण तद्विवरणात्मनोऽस्य सन्दर्भस्य नास्ति पौनरुक्त्यमिति मत्वा प्रतिपदं व्याख्यातुं प्रश्नैकदेशं समुत्थापयति ज्यायसी चेदिति वेदाश्चेत् प्रमाणमितिवच्चेदित्यस्य निश्चयार्थत्वं व्यावर्तयति यदिति बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यवच्छिनत्ति ज्ञानमिति पूर्वार्द्धस्याक्षरयोजनां कृत्वा समुच्चयाभावे तात्पर्यमाह यदीति इष्टे भगवतेति शेषः एकं ज्ञानं कर्मासमुच्चितमिति यावत् ज्ञानकर्मणोरभीष्टे समुच्चये समुच्चितस्य श्रेयःसाधनस्यैकत्वात् कर्मणः सकाशात् ज्ञानस्य पृथक्करणमयुक्तमित्यर्थः एकमपि साधनं फलतोऽतिरिक्तं किं नस्यादित्याशङ्क्याह नहीति केवलात् कर्मणो ज्ञानस्य केवलस्य फलतोऽतिरिक्तत्वं विवक्षित्वा पृथक्करणं समुच्चयपक्षे प्रत्येकं श्रेयःसाधनत्वानभ्युपगमादिति भावः पूर्वार्द्धस्येवोत्तरार्द्धस्यापि समुच्चयपक्षे तुल्यानुपपत्तिरित्याह तथेति दूरेण ह्यवरं कर्मेत्यत्र कर्मणः सकाशात् बुद्धिः श्रेयस्करी भगवतोक्ता कर्म च बुद्धेः सकाशादश्रेयस्करमुक्तं तथापि तदेव कर्म कर्मण्येवाधिकारस्ते माफलेष्विति स्निग्धं शिष्यं भक्तञ्च मां प्रति कुर्विति भगवान् प्रतिपादयति तत्र कारणानुपलम्भादयुक्तमतिक्रूरे कर्मणि भगवतो मन्नियोजनमिति यदर्जुनो ब्रवीति तच्च समुच्चयपक्षेऽनुपपन्नं स्यादित्यर्थः ॥ १ ॥

### स्वामिकृतटीका ।

एवं तावदशोच्यानन्वशोचस्त्वमित्यादिना प्रथमं मोक्षसाधनत्वेन देहात्मविवेकबुद्धिरुक्ता तदनन्तरमेषा तेऽभिहिता सांख्ये बुद्धिर्योगेत्विमां शृणु इत्यादिना कर्म चोक्तं नच-

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

स्वामिकृतटीका।

तयोर्गुणप्रधानभावः स्पष्टं दर्शितः तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्क्रियत्वनियतेन्द्रियत्वनिरहङ्कारत्वाद्यभिधानादेषा ब्राह्मीस्थितिः पार्थेति सप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्ये बुद्धेः श्रेष्ठत्वं भगवतोऽभिप्रेतं मत्वानोऽर्जुन उवाच ज्यायसी चेदिति कर्मणः सकाशान्मोक्षेऽन्तरङ्गत्वेन बुद्धिर्ज्यायसी अधिकतरा श्रेष्ठा चेत् तव सम्मता तर्हि किमर्थं तस्माद् युध्यस्वेति तस्मादुत्तिष्ठेति च वारं वारं वदन् घोरे हिंसात्मके कर्मणि मां प्रवर्तयसि ॥ १ ॥

भाषा अनुवाद।

गीताशास्त्र में प्रथम प्रवृत्ति औ निवृत्ति की हेतुरूप सांख्य तथा योग ये दो प्रकार की बुद्धि देखावते हुए श्रीजगदीश्वरने अशोच्यानन्वशोचस्त्वं इत्यादि श्लोक से पहिले मुक्तिसाधन के विषय मे देह औ आत्मा का भेद कहा तिस के अनन्तर एषा तेऽभिहिता सांख्ये इत्यादि श्लोक के द्वारा निष्काम कर्म करने को कहा परन्तु तिस से कौन पक्ष मुख्य कहे श्रेष्ठ औ कौन गौण कहे साधारण है यह कुछ भाव कहे भगवत की अभिप्राय जानी नहीं गई और तिस के बीच मे ज्ञानी पुरुष को कर्म रहित होना तथा इन्द्री वश करना औ निरहङ्कार रहना कहिकर एषा ब्राह्मी स्थितिः पार्थ इस श्लोक से प्रसंसा पूर्वक भगवत की कहावत से तत्त्वज्ञान औ निष्काम कर्म योगरूप भक्तियोग इन दोनो के मध्य ज्ञानही की श्रेष्ठता भगवान को अभिमत है यह जानिकर अर्जुन कहते हैं कि हे केशव जो निष्काम कर्म योगरूप भक्तियोग की अपेक्षा शीघ्र मुक्ति का देनेहार तत्त्वज्ञानही श्रेष्ठ आप को अभिमत है तो फिरि किसवास्ते तस्माद्युध्यस्व तस्मादुत्तिष्ठ ये बातें कहि कहि कर हे जनार्दन घोर हिंसारूप कर्म मे हमै प्रवृत्त करते हो जनार्दन संबोधन देने से यह आया कि जन कहे भक्तजन जो मै तिस को अर्दन कहे पीड़ा देनेवाले काहे होते हो यह अर्जुन का तात्पर्य्य है सोई पूछते हैं कि ज्यायसी चेत् कर्मणस्ते मता बुद्धिरिति ॥ १ ॥

## शाङ्करभाष्यम्

अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तः अर्जुनेन चावधारितश्चेत् तत् किं कर्मणि घोरे मां नियोजयसीत्यादि कथं युक्तं वचनं किञ्च व्यामिश्रेणेति व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवान् तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति तेन मम बुद्धिं मोहयसीवेति मम मन्दबुद्धेर्व्यामोहापनयाय हि प्रवृत्तस्त्वन्तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीवेति ममेति त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासम्भवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वा इदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि येन ज्ञानेन कर्मणा वान्यतरेण श्रेयोऽहमाप्नुयाम् इति यदुक्तं तदपि नोपपद्यते यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात् तत् कथं तयोरेकं वदेति एकविषयैवार्जुनस्य शुश्रूषा स्यान्नहि भगवतोक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति येनोभयप्राप्त्यसम्भवमात्मनो मन्यमान एकमेव प्रार्थयेत्॥ २॥

आनन्दगिरिकृतटीका।

यत् तु वृत्तिकारैरुक्तं श्रौतेन स्मार्तेन च कर्मणा समुच्चयो मुमुक्षूणां श्रेयःसाधनमितरेषां स्मार्तेनैवेति भगवतोक्तमर्जुनेन च निर्द्धारितमिति तदेतदनुवदति अथेति। तत्रापि तत् किमित्याद्युपालम्भवचनमनुपपन्नं कर्ममात्रसमुच्चयवादिनो भगवतो नियोजनाभावादिति दूषयति तत् किमिति इतश्च प्रश्नः समुच्चयानुसारी न भवतीत्याह किञ्चेति भगवतो विविक्तार्थवादित्वादयुक्तं व्यामिश्रेणेत्यादिवचनमित्याशङ्क्याह यद्यपीति यदि भगवद्वचनं सङ्कीर्णमिव ते भाति तर्हि तेन त्वदीयबुद्धिव्यामोहनमेव तस्य विवक्षितमिति किमिति मोहयसीवेत्युच्यते तत्राह ममेति ज्ञानकर्मणो मिथो विरोधात् युगपदेकपुरुषाननुष्ठेयतया भिन्नकर्तृके कथ्येते तथा च तयोरन्यतरस्मिन्नेव त्वं नियुक्तो न च ते बुद्धिव्यामोहनमभिमतमिति भगवतो मतमनुवदति त्वमिति तदेकमित्यादिश्लोकार्द्धेनोत्तरमाह तत्रेति उक्तं भागवतमतं सप्तम्या परामृश्यते एकमित्युक्तप्रकारोक्तिः एकमित्युक्तमेव स्पष्टयति बुद्धिमिति निश्चयप्रकारं प्रकटयति इदमिति योग्यत्वं स्पष्टयति बुद्धीति अस्य हि क्षत्रियस्य सतोऽन्तःकरणस्य देहशक्तेः समरसमारम्भावस्थायाश्चेदमेव ज्ञानं कर्म वानुगुणमिति निर्द्धार्य्य ब्रूहि इत्यर्थः निश्चित्यान्यतरोक्तौ तेन मोहः श्रेयोवाप्तिफलमाह येनेति तदेकमित्यादिवाक्यस्याक्षरोत्थमर्थमुक्त्वा समुच्चयस्य भाष्यकारीयत्वमपि तात्पर्यमाह यदि हीति गुणभूतमपि

आनन्दगिरिकृतटीका।

इत्यादिना प्रधानभूतमपि चेति विवक्षितं नतूभयप्राप्त्यसम्भवमात्मनो मन्यमानस्यार्जुनस्या-न्यतरविषयशुश्रूषा भविष्यति नेत्याह नहीति यथोक्तभगवद्वचनाभावे द्वयप्राप्त्यसम्भवबुद्ध्या नान्यतरप्रार्थना सम्भवतीत्याह येनेति नहि तथाविधं भगवद्वचनं भवतेऽष्टं भगवतः समु-च्चयवादित्वाङ्गीकारादतस्तदभावादुक्तबुद्ध्या न युक्तान्यतरप्रार्थनेत्यर्थः ॥ २ ॥

स्वामिकृतटीका।

ननु धर्म्याद्धियुद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यत इत्यादिना कर्मणोऽपि श्रेष्ठत्वमुक्त-मेवेत्याशङ्क्याह व्यामिश्रेणेति क्वचित् कर्मप्रशंसा क्वचित् ज्ञानप्रशंसेत्येवं व्यामिश्रं सन्देहो-त्पादकमिव यद्वाक्यं तेन मे मतिमुभयत्र दोलायितां कुर्वन् मोहयसीव परमकारुणिकस्य तव मोहकत्वं नास्त्येव तथापि भ्रान्त्या ममैवं भाति इतीवशब्देनोक्तम् अत उभयोर्मध्ये यद्भद्रं तदेकं निश्चित्य वदेति यद्वा अहं इदमेव श्रेयः साधनमिति निश्चित्य येनानुष्ठितेन श्रेयो मोक्षमहमाप्नुयां प्राप्स्यामि तदेवैकं निश्चित्य वदेत्यर्थः ॥ २ ॥

भाषा अनुवाद।

हे अनघ निःपाप अर्जुन यह बात कहि चुकाहूं तहां जो मोक्ष के हेतुरूप ज्ञान तथा कर्म्म ये दोनो निष्ठा मै पृथक कहे अलग २ कहे होता या अभी जो तुम से कहा इसो मे पृथक करिके कहा होता तो अलबत्ता दोनो के बीच जो उचित हो सो निश्चय कर कहो यह तुमारा कहना ठीक था परन्तु मैने तो ऐसा कहा नहीं केवल दोनो हीं पक्ष से एक ब्रह्मनिष्ठा ही को कहा क्योंकि गौण औ मुख्य फलदायक कर्म्मयोग औ ज्ञानयोग से भिन्न भिन्न ऐसो एक ज्ञाननिष्ठाही को कहा सो भी अधिकारी के भेद से जैसा अधिकारी हो वैसा आचरण करे और दोनो का अधिकारी एक कैसे होगा जो तुम कहते हो कि दोनो मे से एक कहो सो शुद्ध अन्तःकरण होने से अधिकारी दो प्रकारके हैं इस से दो मत कहे गये हैं सोई दो प्रकार ब्रह्मनिष्ठा मोक्षप्राप्ति की उपाय पूर्व अध्याय मे हमने स्पष्ट कहा है अब उक्त दोनो मत का निर्णय करते हैं कि सांख्य कहे शुद्ध अन्तःकरण ज्ञानमार्ग मे आरूढ़ पुरुष की ज्ञानपरिपाकरूप कारण से ज्ञानयोग के द्वारा आत्मा की निश्चय करनेवाली ध्यान आदि निष्ठा और

## श्रीभगवानुवाच ।

**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

### शाङ्करभाष्यम् ।

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच लोकेऽलोकेऽस्मिन् स्मिन्निति शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थिति-रनुष्ठेयतात्पर्य्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्ति-साधनं वेदार्थसम्प्रदायं आविः कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हि अनघ अपाप तत्र का सा द्विधा निष्ठेत्याह ज्ञानेति तत्र ज्ञानयोगेन ज्ञानमेव योग-स्तेन सांख्यानामात्मानात्मविषयविवेकज्ञानवतां ब्रह्मचर्य्याश्रमादेव कृतसन्न्या-सानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवा-वस्थितानां निष्ठा प्रोक्ता कर्म्मयोगेन कर्म्मैव योगः कर्मयोगस्तेन कर्मयोगेन योगिनां कर्मिणां निष्ठाप्रोक्तेत्यर्थः यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म्म च समुच्चित्यानुष्ठेयं भगवतेऽष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं

### भाषा अनुवाद ।

धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य नविद्यते इत्यादिस्लोकों मे भगवान कर्म्म को प्रधान कहा है इसी शङ्कापर अर्जुन कहते हैं कि कहीं तो कर्म्म की प्रशंसा और कहीं ज्ञान की बड़ाई करते हुए आपकी सन्देह के उत्पन्न करनेवाली इन बातों से हमारी बुद्धि ज्ञान औ कर्म्म इन दोनो पक्ष मे भी ठहरती नहीं अर्थात् ये मिली जुली बातों से मेरी बुद्धि को मोहसा करते आप क्या कहते हो यद्यपि परम करुणामय जो आप तिन के मोह कहां हैं तौभी भ्रान्ति से हम को मोह की ऐसी बातें समझ पड़ती हैं सो ज्ञान औ कर्म्म दोनो के बीच में जो कल्याणकारी होय वही एक पक्ष निश्चय करके हम को कहो या जो हमारा कल्यान इस युद्ध कर्म्म ही से निश्चित किये हो तो इसी को निर्धार करि ठीक ठीक कहो ॥ २ ॥

## शाङ्करभाष्यम् ।

कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात् यदि पुनरर्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्पेत तदा रागद्वेषवानप्रमाणभूतो भगवान् कल्पितः स्यात् तच्चायुक्तं तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ॥ ३ ॥

## आनन्दगिरिकृतटीका ।

समुच्चयविरोधितया प्रश्नं व्याख्याय तद्विरोधित्वेनैव प्रतिवचनमुत्थापयति प्रश्नेति येऽयं व्यवहारभूमिरुपलभ्यते तत्र त्रैवर्णिकाः ज्ञानं कर्म वा शास्त्रीयमनुष्ठानमधिक्रियन्ते तेषां द्विधा स्थितिसमया प्रोक्तेति पूर्वार्द्धं योजयति लोकेऽस्मिन्निति स्थितिमेव व्याकरोति अनुष्ठेयेति पूर्वं प्रवचनप्रसङ्गं प्रदर्शयन् प्रवक्तारं विशिनष्टि सर्गादाविति प्रवचनस्यायथार्थत्वशङ्कां वारयति सर्वज्ञेनेति अर्जुनस्य भगवदुपदेशश्रवणे योग्यत्वं सूचयति अनघेति निर्द्धारणार्थेति तत्रेति सप्तमीज्ञानं परमार्थवस्तुविषयं तदेव योगशब्दितं युज्यते अनेन ब्रह्मणेति व्युत्पत्तेस्तेन निष्ठेत्यनुवर्तते उक्तज्ञानोपायमुपदिदिक्षुः सांख्यशब्दार्थमाह आत्मेति तेषामेव कर्मनिष्ठत्वं व्यावर्तयति ब्रह्मचर्येति तेषां जपादिपारवश्येन श्रवणादिपराङ्मुखत्वं पराकरोति वेदान्तेति उक्तविशेषणवतां मुख्यसन्न्यासित्वेन फलावस्थत्वं दर्शयति परमहंसेति कर्मवर्णाश्रमविहितं धर्माख्यं तदेव युज्यते तेनाभ्युदयेनेति योगस्तेन निष्ठाकर्मिणां प्रोक्तेत्यनुषङ्गं दर्शयन्नाह कर्मैवेत्यादिना एवं प्रतिवचनवाक्यस्यान्येवाक्षराणि व्याख्याय तस्यैव तात्पर्यार्थं कथयति यदि चेति दृष्टस्यापि दुर्बोधत्वमाशङ्क्याह उक्तमिति ज्ञानस्यापि मूलविकलतया विभ्रमत्वमाशङ्क्याह वेदेष्विति तस्याभिप्रायत्वबुद्ध्यान्यथा कथनमित्याशङ्क्याह उपसन्नायेति तथापि तस्मिन्नौदासीन्यादन्यथोक्तिरित्याशङ्क्याह प्रियायेति ब्रवीति च भिन्नपुरुषकर्तृकं निष्ठाद्वयं तेन समुच्चयो भगवदभीष्टः शास्त्रार्थो न भवतीति शेषः नन्वर्जुनस्य प्रेक्षां पूर्वकारित्वाज्ज्ञानकर्मश्रवणानन्तरमुभयनिर्देशानुपपत्त्या समुच्चयानुष्ठानं सम्पत्स्यते तद्व्यतिरिक्तानान्तु ज्ञानकर्मणोर्भिन्नपुरुषानुष्ठेयत्वं श्रुत्वा प्रत्येकं तदनुष्ठानं भविष्यतीति भगवतो मतं कल्पते तस्यार्जुनेऽनुरागातिरेकादितरेषु च तदभावादिति तत्राह यदि पुनरिति अप्रमाणभूतत्वमनाप्तत्वं नच भगवतो रागादिमत्त्वेनानाप्तत्वं युक्तं समं सर्वेषु भूतेषु तिष्ठन्तमित्यादिविरोधादित्याह तच्चेति निष्ठाद्वयस्य भिन्नपुरुषानुष्ठेयत्वनिर्देशफलमुपसंहरति तस्मादिति ॥ ३ ॥

स्वामिकृतटीका ।

अत्रोत्तरं श्रीभगवानुवाच लोकेऽस्मिन्निति अयमर्थः यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानयोगरूपं निष्ठाद्वयमुक्तं स्यात् तर्हि द्वयोर्मध्ये यद्भद्रं स्यात् तदेकं वदेति त्वदीयः प्रश्नः सङ्गच्छते नतु मया तथोक्तं किन्तु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः एकस्या एवतु प्रकारभेदमात्रमधिकारिभेदेनोक्तमिति अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोकेऽधिकारि जने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता प्रकारद्वयमेव निर्दिशति सांख्यानां शुद्धान्तःकरणानां ज्ञानभूमिकामारूढानां ज्ञानपरिपाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता तानि सर्वाणि संयम्य युक्त आसीत् मत्पर इत्यादिना सांख्यभूमिकामारुरुक्षूणान्तु अन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपायभूतं कर्मयोगाधिकारिणां योगिनां कर्मयोगेन निष्ठोक्ता धर्म्याद्धियुद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यत इत्यादिना अतएव तव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेन द्विविधापि निष्ठोक्ता एषा तेऽभिहिता सांख्ये बुद्धिर्योगेत्वि मां शृण्विति ॥ ३ ॥

भाषा अनुवाद ।

अर्जुन की प्रश्न के अनुरूप उत्तर करते हुए श्रीभगवान कहते हैं कि इस लोक मे शास्त्र के अर्थ अनुसार चलनेवाले ब्राह्मण चत्री वैश्य इन तीनि वर्णों के अर्थ दो प्रकार की निष्ठा पूर्वही अर्थात् सृष्टि के प्रथम ही उन का श्रेय साधन कहे मुक्ति का देनहार वेदार्थ सम्प्रदाय प्रगट करते हुए मैने इस रूप ब्रह्म परता कही है यथा तानि सर्वाणि संयम्य युक्त आसीत मत्परः इस श्लोक से और जो ज्ञानमार्ग मे नहीं प्राप्त हैं उन लोगों को चित्तशुद्धि के द्वारा ज्ञानमार्ग पर आरूढ़ होने के अर्थ उस की उपायरूप कर्म्मयोग के अधिकारियों को कर्म्मयोग से निष्ठा अर्थात् ब्रह्मपरता कही गई है यथा धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् चत्रियस्य न विद्यते इत्यादि श्लोकों से कहा है अतएव चित्तशुद्धि दो अवस्थाभेद से दो प्रकार की ब्रह्मपरता कथित भई हैं पर तौभी तुम से प्रकाशकरि कहे खुलसा से कहिदिया कि एषा तेऽभिहिता सांख्ये बुद्धियोगेत्वि मां शृणु इस श्लोक से फिरि भी सन्देह करते हो तो बड़ा आश्चर्य्य है यह अनघ इस सम्बोधन से जनाया भगवान ने ॥ ३ ॥

## न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
## नच सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

### शाङ्करभाष्यम् ।

यदर्जुनेनिक्तं कर्मणो ज्यायस्त्वं बुद्धेः तच्च स्थितमनीराकरणात्तस्याश्च ज्ञाननिष्ठायाः सन्न्यासिनामेवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनाच्च भगवत एवमेवानुमतमिति गम्यते माञ्च बन्धकारणे कर्मण्येव नियोजयसीति विषसमनसम् अर्जुनं कर्मणामनारम्भे इत्येवं मन्वानमालक्ष्याह भगवान् न कर्मणामनारम्भादिति अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं नस्वातन्त्र्येण ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थं दर्शयिष्यन्नाह भगवान् नकर्मणेति न कर्मणामनारम्भादप्रारम्भात् कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरेवानुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः यथा दर्शतल-

### आनन्दगिरिकृतटीका ।

किमिति भगवता बुद्धेर्ज्यायस्त्वं ज्यायसी चेदित्यत्रोक्तमुपेक्षितमिति तत्राह यदर्जुनेनेति किञ्च ज्ञाननिष्ठायां सन्न्यासिनामेवाधिकारो भगवतोऽभिप्रेतोऽन्यथा तदीयविभागवचनविरोधादिति विभागवचनसामर्थ्यसिद्धमर्थमाह तस्याश्चेति तर्हि विभागवचनानुरोधादर्जुनस्यापि सन्न्यासपूर्विकायां ज्ञाननिष्ठायामेवाधिकारो भविष्यति नेत्याह माञ्चेति बुद्धेर्ज्यायस्त्वमुपेत्यापीति चकारार्थः अर्जुनमालक्ष्य भगवानाहेति सम्बन्धः अन्तरेणापि कर्माणि श्रवणादिनिष्ठानायासेन भविष्यतीति परबुद्धिमनुरुध्य विशिनष्टि कर्मेति विभागवचनवशादसमुच्चयश्चेदुभयोरपि ज्ञानकर्मणोः स्वातन्त्र्येण पुरुषार्थहेतुत्वमन्यथा कर्मवत् ज्ञानमपि न स्वातन्त्र्येण पुरुषार्थं साधयेदित्याशङ्क्य सम्बन्धान्तरमाह अथवेति तर्हि ज्ञाननिष्ठापि कर्मनिष्ठावत् निष्ठात्वाविशेषाच्च स्वातन्त्र्येण पुरुषार्थहेतुरिति समुच्चयसिद्धिरित्याशङ्क्याह ज्ञाननिष्ठात्विति नहि रज्ज्वतत्त्वज्ञानमुत्पन्नं फलसिद्धौ सहकारि सापेक्षमालक्ष्यते तथेदमपि चोत्पन्नं मोक्षाय नान्यदपेक्ष्यते तदाह अन्येति यस्य चैतत् कर्मेति श्रुताविव कर्मशब्दस्य

शाङ्करभाष्यम् ।

प्रश्ये पश्यत्यात्मानमात्मनीत्यादि स्मरणादनारम्भादनुष्ठानात् नैष्कर्म्यं निः-कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थान-मिति यावत् पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात् तद्विपर्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुत इति गम्यते कस्मात् पुनः कारणात् कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इत्युच्यते कर्मारम्भ-स्यैव नैष्कर्म्योपायत्वात् नह्युपायमन्तरेणोपेयोत्पत्तिरस्ति कर्मयोगोपायत्वञ्च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात् श्रुतौ तावत् प्रकृतस्यात्मलोकस्य वेद्यस्य वेदनोपायत्वेन तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादित-मिहापि सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये यज्ञोदानं तपश्चैव पावनानि मनीषिणामित्यादि प्रति-पादयिष्यति ननु चाभयं सर्वभूतेभ्योदत्वा नैष्कर्म्यमाचरेदित्यादौ कर्तव्य

आनन्दगिरिकृतटीका ।

क्रियमाणवस्तु विषयत्वमाशङ्क्य व्याचष्टे क्रियाणामिति तास्य नित्यनैमित्तिकत्वेन विभजते यज्ञादीनामिति अस्मिन्नेव जन्मन्यनुष्ठितानां कर्मणां बुद्धिशुद्धिद्वारा ज्ञानकारणत्वे ब्रह्म-चारिणां कुतो ज्ञानोत्पत्तिर्जन्मान्तरकृतानां कर्मणां वा तथात्वे ऽद्यत्यादीनामैहिकानि कर्माणि न ज्ञानहेतवः स्युरित्याशङ्क्यानियमं दर्शयति इहेति नेमानि सत्त्वशुद्धिकारणान्यु-पात्ततदुरितप्रतिबन्धादित्याशङ्क्याह उपात्तेति तर्हि तावतैव कृतार्थानां कुतो ज्ञाननिष्ठा-हेतुत्वं तत्राह तत्कारणत्वेनेति कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वे मानमाह ज्ञानमिति अनारम्भशब्दस्योपक्रमविपरीतविषयत्वं व्यावर्त्तयति अननुष्ठानादिति निष्कर्मणः सन्न्यासिनः कर्मत्यागं नैष्कर्म्यमिति व्याचष्टे नैष्कर्म्यमिति कर्माभावावस्थां व्यवच्छिनत्ति ज्ञानयोगेनेति तस्याः साधनपक्षपातित्वं व्यावर्त्तयति निष्क्रियेति कर्मानुष्ठानोपायलभ्या ज्ञाननिष्ठा स्वतन्त्रा पुमर्थहेतुरिति प्रकृतार्थसमर्थव्यतिरेकवचनस्यान्वये पर्य्यवसानं मत्वा व्याचष्टे कर्मणा-मिति उक्तेऽर्थे हेतुं पृच्छति कस्मादिति जिज्ञासितं हेतुमाह उच्यत इति उपायत्वेऽपि तदभावे कुतो न नैष्कर्म्यसिद्धिरित्याशङ्क्याह नहीति ज्ञानं योगं प्रतिकर्मयोगस्य उपायत्वे श्रुतिस्मृतीप्रमाणयति कर्मयोगेति श्रौतमुपायोपेयत्वप्रतिपादनं प्रकटयति श्रुताविति यत्तु गीताशास्त्रे कर्मयोगस्य ज्ञानयोगं प्रत्युपायत्वोपपादनं तदिदानीमुदाहरति इहापि केति

## शाङ्करभाष्यम् ।

कर्मसन्न्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति लोके च कर्मणामनारम्भान्नैष्कर्म्य-मिति प्रसिद्धतरमतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह नच सन्न्यसनादेवेति नापि सन्न्यसनादेव केवलात् कर्म्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥ ४ ॥

### आनन्दगिरिकृतटीका ।

न कर्मणामित्यादिना पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याख्यातुमाशङ्कयति नन्विति आदिशब्देन शान्तोदान्त उपरतस्तितिक्षुः सन्न्यासयोगाद् यतयः शुद्धसत्त्वा इत्यादि गृह्यते तत्रैव लोकप्रसिद्धिमनुकूलयति लोकेचेति प्रसिद्धतरं यतो यतो निवर्त्तते ततस्ततो विमुच्यते निवर्त्तनाद्धि सर्वतो न वेत्ति दुःखमणुमपीत्यादि दर्शनादिति शेषः लौकिकवैदिकप्रसिद्धिभ्यां सिद्धमर्थमाह अतश्चेति तत्रोत्तरत्वेनोत्तरार्द्धमवतार्य्य व्याकरोति अत आहेत्यादिना एव कारार्थमाह केवलादिति तदेव स्पष्टयति कर्मेति उक्तमेव नञ् मनुकृष्य क्रियापदेन सङ्गतिं दर्शयति न प्राप्नोतीति ॥ ४ ॥

### स्वामिकृतटीका ।

अतः सम्यक् चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्य्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्यानि अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह न कर्मणामिति कर्मणाम् अनारम्भात् अननुष्ठानान्नैष्कर्म्यं ज्ञानं नाश्नुते न प्राप्नोति ननु चैतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति श्रुत्या सन्न्यासस्य मोक्षाङ्गत्वश्रुतेः सन्न्यासादेव मोक्षो भविष्यति किं कर्मभिरित्याशंक्योक्तं नचेति नच चित्तशुद्धिं विनाकृतात् सन्न्यसनादेव ज्ञानशून्यात् सिद्धिं मोक्षं समधिगच्छति प्राप्नोति ॥ ४ ॥

## भाषा अनुवाद ।

इस से यह आया कि संपूर्ण चित्तशुद्धि के द्वारा जब तक ज्ञान उत्पन्न न होय तब तक बर्ण कहे जाति औ आश्रम कहे ब्रह्मचर्य्य गार्हस्थ्यबान प्रस्थ सन्न्यास इन मे विहित जो जो कर्म्म सब करना उचित है नहीं तो चित्तशुद्धि के बिना ज्ञान कैसे हो सकेगा यही भगवान कहते हैं कि कर्म्म किये बिना पुरुष नैष्कर्म्य जो तत्त्वज्ञान सो पावता नहीं जो कहो

नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्य्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥ ५॥

शाङ्करभाष्यम्।

कस्मात् पुनः कारणात् कर्मसन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह नहीति नहि यस्मात् क्षणमपि किञ्चित् कालं जातु कदाचिदपि कश्चित्तिष्ठत्यकर्मकृत् सन् कस्मात् कार्य्यते हि यस्मादवश एव कर्म सर्वप्राणीप्रकृतितो जातैः सत्त्वरजस्तमोऽभिर्गुणैः अज्ञ इति वाक्यशेषो यतो वक्ष्यति गुणैर्यो न विचाल्यत इति सांख्यानां पृथक् करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनां ज्ञानिनान्तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते तथा च व्याख्यातं वेदाविनाशिनमित्यत्र॥ ५॥

आनन्दगिरिकृतटीका।

उक्तोऽर्थे बुभुत्सितं हेतुं वक्तुमुत्तरश्लोकमुत्थापयति कस्मादिति कस्मात् कर्मसन्यासादेव सिद्धिमधिगच्छतीति पूर्वेण सम्बन्धः कदाचित् क्षणमात्रमपि न कश्चिदकर्मकृत्तिष्ठतीत्यत्र हेतुत्वेनोत्तरार्द्धं व्याचष्टे कस्मादिति सर्वशब्दात् ज्ञानवानपि गुणैरवशः सन् कर्म कार्य्यते ततश्च ज्ञानवतः सन्यासवचनमनवकाशं स्यादित्याशङ्क्याह अज्ञ इतीति तमेव वाक्यशेषं वाक्यशेषावष्टम्भेन स्पष्टयति यत इति आत्मज्ञानवतो गुणैरविचाल्यतया गुणातीतत्ववचनादज्ञस्यैव सत्त्वादिगुणैरिच्छाभेदेन कार्य्यकरणसङ्घातं प्रवर्त्तयितुमशक्तस्याजितकार्य्यकरणसङ्घातस्य क्रियासु प्रवर्त्तमानत्वमित्यर्थः ज्ञानयोगेनेत्यादिना उक्तन्यायाच्च वाक्यशेषोपपत्ति-

भाषा अनुवाद।

कि सन्यासी फेरि सर्वकर्म्मपरित्याग करि तत्त्वज्ञान कैसे पावते हैं और वेद की श्रुति कहती हैं कि सन्यास धारन करने ही से मुक्ति मिलती है फेरि कर्म्म करने से क्या प्रयोजन है इस शङ्कापर कहते हैं कि सो नहीं क्योंकि निःकाम कर्म्म करि चित्तशुद्धि किये बिना ज्ञान का अभाव है और ज्ञान केबिना मुक्तिप्राप्ति नहीं होती यह निश्चयहै कुछ सन्यास ही लेने से पुरुष सिद्धि नहीं पाय जाता है यह जानो॥ ४॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

## शाङ्करभाष्यम् ।

यस्त्वनात्मज्ञश्चोदितं कर्म नारभत इति तदसदेवेत्याह कर्मेन्द्रियाणीति कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरन्निन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥ ६ ॥

### आनन्दगिरिकृतटीका ।

रित्याह सांख्यानामिति ज्ञानिनो गुणप्रयुक्तचलनाभावेऽपि स्वाभाविकचलनबलात् कर्मयोगो भविष्यतीत्याशङ्क्याह ज्ञानिनां त्विति प्रत्यगात्मनि स्वारसिकचलनासम्भवे प्रागुक्तं न्यायं स्मारयति तथा चेति ॥ ५ ॥

आत्मज्ञवदनात्मज्ञस्यापि तर्हि कर्माकुर्वतो न प्रत्यवायः शरीरेन्द्रियसङ्घातं नियन्तुमस-

### स्वामिकृतटीका ।

कर्मणाञ्च सन्न्यासस्ते ज्ञानासक्तिमात्रं नतु स्वरूपेण शक्यत्वादित्याह नहि कश्चिदिति कश्चिदपि जातु कस्याञ्चिदप्यवस्थायां क्षणमात्रमपि ज्ञानी अज्ञानी वा अकर्मकृत् कर्माण्य कुर्वाणो न तिष्ठति अत्र हेतुः प्रकृतिजैः स्वभाव प्रभवैरागद्वेषादिभिर्गुणैः सर्वोऽपि जनः कर्म कार्य्यते कर्मणि प्रवर्तते अवशोऽस्वतन्त्रः सन् ॥ ५ ॥

## भाषा अनुवाद ।

कर्म्म सन्न्यास इस का यह अर्थ हैं कि सर्वकर्म्म मे आसक्ति रहित होना मात्र न कि एका एक सब कर्मों का त्याग करना और शरीर रहते कर्म्म का त्याग भी असाध्य है सोई कहते हैं कदाचित कहे किसी अवस्था मे भी क्या ज्ञानी और क्या अज्ञानी दोनो भी क्षणमात्र मानसिक वाचिक कायिक तीन प्रकार कर्म्म किये बिना रह नहीं सकते हैं कारण यह कि प्रकृति जो स्वभाव तिस के प्रभाव से रागद्वेष कहे प्रीति विरोध आदि गुणों मे सब मनुष्य पर तन्त्र कहे परवश पराधीन हो कर्म्म करहते ही हैं ॥ ५ ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥ ७॥**

### शाङ्करभाष्यम्

यस्त्विति यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्यारभतेऽर्जुन कर्मेन्द्रियैर्वाक् पाण्यादिभिः किमारभते इत्याह कर्मयोगमसक्तः सन् फलाभिसन्धिवर्जितः स विशिष्यते इतरस्मान्मिथ्याचारात्॥ ७॥

#### आनन्दगिरिकृतटीका।

मर्यस्य मूर्खस्यापि सन्न्याससम्भवादित्याशङ्क्याह यस्त्विति तस्य चोदिताकरणं तच्छब्देन परामृश्यते तद्वदिति मिथ्याचारत्वादिति भावः मिथ्याचरतामेव वर्णयति कर्मेन्द्रियाणीति॥६॥

अनात्मज्ञस्य चोदितमकुर्वतो जाग्रतो विषयान्तरदर्शनध्रौव्यात् मिथ्याचारस्तेन प्रत्यवायित्वमुक्त्वा विहितमनुतिष्ठतस्तस्यैव फलाभिलाषविकलस्य सदाचारत्वेन वैशिष्ट्यमाचष्टे यस्त्विन्द्रियाणीति विहितमनुष्ठितो मौर्ख्यात् कर्म त्यजतो वैशिष्ट्यमक्षरयोजनया स्पष्टयति यस्तु पुनरिति॥ ७॥

#### स्वामिकृतटीका

अतोऽज्ञकर्मत्यागिनं निन्दति कर्मेन्द्रियाणीति वाक्पाण्यादीनि कर्मेन्द्रियाणि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेन इन्द्रियार्थान् विषयान् स्मरन्नास्तेऽविशुद्धतया मनसा आत्मनि स्थैर्याभावात् स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः॥ ६॥

एतद्विपरीतः कम कर्त्ता तु श्रेष्ठ इत्याह यस्त्विन्द्रियाणीति यस्तु ज्ञानेन्द्रियाणि मनसानियम्य ईश्वरपराणि कृत्वा कर्मेन्द्रियैः कर्मरूपं योगमुपायमारभतेऽनुतिष्ठति असक्तः फलाभिलाषरहितः स विशिष्यते विशिष्टो भवति चित्तशुद्ध्या ज्ञानवान् भवतीत्यर्थः॥ ७॥

### भाषा अनुवाद।

इसी से अज्ञान कर्म त्यागी की निन्दा करते हैं कि जो आत्म स्वरूप को स्थिर न करि के वाक पाणि पाद आदि कर्म इन्द्रियों को वशीभूत अर्थात् काबू करि भगवत के ध्यान के बहाने से मन की अशुद्धता के कारण से इन्द्रीगण का अर्थरूप विषयों का स्मरण मन से करता है सोई मूढ़ मिथ्याचार अर्थात् नास्तिक कपट आचार कहावता है॥ ६॥

अब इस के बिपरीत कहे उलटा कहते अर्थात् कर्मकारी पुरुष को

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

शाङ्करभाष्यम् ।

यत एवमतो नियतं नित्यं शास्त्रोपदिष्टं यो यस्मिन् कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म तत् कुरु त्वं हे अर्जुन यतः कर्मज्यायोऽधिकतरं फलतो हि यस्मादकर्मणोऽकरणादनारम्भात् कथं शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येत् प्रसिद्धिं न गच्छेदकर्मणोऽकरणात् अतो दृष्टः कर्माकर्मणोरर्थविशेषो लोके ॥ ८ ॥

आनन्दगिरिकृतटीका ।

कर्मानुष्ठायिनो वैशिष्ट्यमुपदिष्टमनूद्य तदनुष्ठानमधिकृतेन कर्तव्यमिति निगमयति यत इति उक्तमेव हेतुं भगवदनुमति कथनेन स्फुटयति कर्मेति इतश्च त्वया कर्तव्यं कर्मेत्याह शरीरेति तन्नियतं तत्राधिकृतस्येति सम्बन्धः स्वर्गादिफले दर्शपौर्णमासादावधिकृतस्य तस्य तदपि नित्यं स्यादित्याशङ्क्य विशिनष्टि फलायेति नित्यं कर्मेति नियमेन कर्तव्यमित्यत्र हेतुमाह यत इति हि शब्दोपात्तमुक्तमेव हेतुमनुवदति यस्मादिति करणस्याकरणाज्ज्यायस्त्वं प्रश्नपूर्वकं प्रकटयति कथमित्यादिना सत्येव कर्मणि देहादि चेष्टाद्वारा शरीरं स्थातुं धारयति तदभावे जीवनमेव दुर्लभं भवेदिति फलितमाह अत इति ॥ ८ ॥

स्वामिकृतटीका ।

नियतमिति यस्मादेवं तस्मान्नियतं नित्यं कर्म सन्ध्योपासनादि कुरु हि यस्मादकर्मणः

भाषा अनुवाद ।

श्रेष्ठ कहते हैं कि जो फल की अभिलाष रहित मनुष्य चक्षु श्रोत्र घ्राण आदि ज्ञान इन्द्रियों को मन के द्वारा वशीभूत करिके अर्थात् ईश्वर में तत्पर हो सकल कर्म्म में अपने को अन्तर्यामी भगवान के अधीन जानि कर्म्म इन्द्रियों से कर्म्मरूप योग आरम्भ करते हैं वेई फलाभिलाष रहित चित्तशुद्धि के द्वारा ज्ञानवान होते हैं और कर्म्म दोष रहित हो मुक्ति का लाभ करते हैं ॥ ७ ॥

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

### शाङ्करभाष्यम्।

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यमिति तदप्यसत् कथं यज्ञार्थादिति यज्ञो वै विष्णुरिति श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत् क्रियते तद्यज्ञार्थं कर्म तस्मात् कर्मणोऽन्यत्रान्येन कर्मणा लोकोयमधिकृतः कर्मकृत् कर्मबन्धनः कर्मबन्धनं यस्य सोऽयं कर्मबन्धनो लोको नतु यज्ञार्थादतस्तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय ॥ ९ ॥

### आनन्दगिरिकृतटीका।

कर्मणा बध्यते जन्तुरिति स्मृतेर्बन्धार्थं कर्म तत् न श्रेयोऽर्थिना कर्तव्यमित्याशङ्कामनूद्य दूषयति यच्चेत्यादिना कर्माधिकृतस्य तदकरणमयुक्तमिति प्रतिज्ञातं प्रश्नपूर्वकं विवृणोति कथमित्यादिना फलाभिसन्धिमन्तरेण यज्ञार्थं कर्मकुर्वाणस्य बन्धाभावात् तादर्थ्येन कर्मकर्तव्यमित्याह तदर्थमिति यज्ञार्थं कर्मेत्ययुक्तं नहि कर्मार्थमेव कर्मेत्याशङ्क्य व्याचष्टे यज्ञो वै विष्णुरिति कथं तर्हि कर्मणा बध्यते जन्तुरिति स्मृतिस्तत्राह तस्मादिति ईश्वरार्पणबुद्ध्या कृतस्य कर्मणो बन्धार्थत्वाभावे फलितमाह अत इति ॥ ९ ॥

### स्वामिकृतटीका

सर्वकर्मणोऽकरणात् सकाशात् कर्मकरणं ज्यायोऽभ्यिकर्तेदं अन्यथा अकर्मणः सर्वकर्मशून्यस्य तव शरीरनिर्वाहोऽपि न भवेत् ॥ ८ ॥

### भाषा अनुवाद।

जिस हेतु ऐसी व्यवस्था है इस से तुम कर्म करो सोई कहते हैं कि नियत कहै नित्य कर्म संध्या उपासन आदि कर्म अनुष्ठान करो जिस लिये कर्म न करने से कर्म करना ही भला है नहीं तो सब कर्म छोड़ने से एकबारगी कर्म शून्य अचेतन की भांति रहनेसे हे अर्जुन तुमारी शरीर यात्रा भी कैसे निवहैगी अर्थात् न चलेगी तो इस से झखमार तुम को कर्म कर्नाही पड़ेगा ॥ ८ ॥

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

### शाङ्करभाष्यम् ।

इतश्चाधिकृतेन कर्म कर्तव्यं सहेति सह यज्ञाय यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा पूर्वं सर्गादावुवाचोक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वमेषवो यज्ञः युष्माकमस्तु भवतु इष्टकामधुक् इष्टानभिप्रेतान् कामान् फलविशेषान् दोग्धीतीष्टकामधुक् ॥ १० ॥

### आनन्दगिरिकृतटीका ।

नित्यस्य कर्मणो नैमित्तिकसहितस्याधिकृतेन कर्तव्यत्वे हेत्वन्तरपरत्वेनानन्तरश्लोकमव-तारयति इतश्चेति. कथं पुनरनेन यज्ञेन वृद्धिरस्माभिः शक्या कर्तुमित्याशङ्क्याह एष इति ॥ १० ॥

### स्वामिकृतटीका ।

सांख्यास्तु सर्वमपि कर्मबन्धकत्वान्नकार्यमित्याहुस्तन्निराकुर्वन्नाह यज्ञार्थादिति यज्ञो वै विष्णुरिति श्रुतेः तदाराधनार्थात् कर्मणोऽन्यत्र तदेकं विना लोकोऽयं कर्मबन्धनः कर्म-भिर्बध्यते नत्वीश्वराराधनार्थेन कर्मणा अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन् कर्म सम्यगाचर ॥ ९ ॥

### भाषा अनुवाद ।

सांख्य मतवाले कहते हैं कि बन्धन के कारण भूत कर्म्म हैं इस से संपूर्ण कर्म्म न करना हीं भला है उसी को निर्णय करिके कहते हैं कि यज्ञ शब्द का अर्थ विष्णु है यह श्रुति मे कहा है सो यज्ञ जो विष्णु भग-वान तिन के आराधनार्थ जो कर्म्म तिस को छाड़ि करि और सब कर्म्म अलबत्ता लोगों को संसार बन्धन करते हैं परन्तु ईश्वर आराधनरूप कर्म्म तैसे नहीं हैं इस से विष्णु प्रीत्यर्थ निःकाम मानस होय सब कर्म्म अच्छी तरह से करो क्या डर है कौन्तय सम्बोधन देकर मातृस्वभाव डरने का हेतु भगवानने कहा है ॥ ९ ॥

**देवान् भावयताऽनेन ते देवाभावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

## शाङ्करभाष्यम् ।

कथं देवानिति देवानिन्द्रादीन् भावयत वर्द्धयतानेन यज्ञेन ते देवाभावयन्तु आप्याययन्तु वृष्ट्यादिना वो युष्मानेवं परस्परमन्योन्यं भावयन्तः श्रेयः परमपि मोक्षलक्षणं ज्ञानप्राप्तिं क्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयो वा वाप्स्यथ ॥ ११ ॥

## स्वामिकृतटीका ।

प्रजापति वचनादपि कर्मकर्तैव श्रेष्ट इत्याह सह यज्ञा इति चतुर्भिः यज्ञेन सह वर्त्तन्त इति सह यज्ञा यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वेदमुवाच ब्रह्मा अनेन यज्ञेन प्रसविष्यध्व प्रसवो वृद्धिरुत्तरोत्तरामतिवृद्धिं लभध्वमित्यर्थः तत्र हेतुः एष यज्ञः वो युष्माकमिष्टकामधुक् इष्टान् कामान् दोऽग्धीति तथा अभीष्टभोगप्रदोऽस्तीत्यर्थः अत्र च यज्ञग्रहणमावश्यक कर्मोपलक्षणार्थं काम्यकर्म प्रशंसातु प्रकरणेऽसङ्गतापि सामान्यतोऽकर्मणः कर्मश्रेष्ठमित्येतदर्थमित्यदोषः ॥ १० ॥

## भाषा अनुवाद ।

ब्रह्मा की वाक्य से भी कर्म्म की कर्तव्यता ही श्रेष्ठ आवती है सोई चारि श्लोक से कहते हैं कि यज्ञ के साथ सहयज्ञ अर्थात् यज्ञ के अधिकारी ब्राह्मण आदि सब प्रजों को सृष्टि के आदि मे उत्पन्न करने कैं बादि ब्रह्माने यही बात कही कि इसी यज्ञ के द्वारा तुमारी वृद्धि होय इहां प्रसव शब्द का अर्थ वृद्धि है अर्थात् उत्तर २ वृद्धि होती जाय कारण यह कि यज्ञ तुमारी इष्ट कामना की दाता है इस जगह यज्ञ शब्द नित्य कर्म्म का उपलक्षण है अर्थात् यज्ञ कहने से नित्यकर्म्म भी सब आवते हैं और इहां काम्यकर्म्म की प्रशंसा करना असङ्गत भी है तौभी स्वाभाविक कोई कर्म्म न करने से काम्यकर्म न करना हीं उत्तम है इसी से कहा कि उस काम्यकर्म्म के करने मे कोई दोष नहीं है ॥ १० ॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

शाङ्करभाष्यम् ।

किञ्च इष्टान् भोगानिति इष्टानभिप्रेतान् भोगान् हि वो युष्मभ्यं देवा-दास्यन्तेति वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविता यज्ञैर्वर्द्धितास्तोषिता इत्यर्थः तैर्देवैर्दत्तान् भोगानप्रदायादत्वा आनृण्यमकृत्वेत्यर्थः एभ्यो देवेभ्यो यो भुंक्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवादिस्वापहारीत्यर्थः ॥ १२ ॥

आनन्दगिरिकृतटीका ।

कथं पुनरभीष्टफलविशेषहेतुत्वं यज्ञेऽस्य विज्ञायते नहि दैवताप्रसादादृते स्वर्गादि-रभ्युदयो लभ्यते नापि सम्यग्दर्शनमन्तरेण निःश्रेयससेतुं पारयतीति शङ्कते कथमिति ततःश्लोकेनोत्तरमाह देवानिति मुमुक्षुत्वबुभुक्षुत्वविभागेन श्रेयसि विकल्पः ॥ ११ ॥

इतश्चाधिकृतेन कर्मकर्तव्यमित्याह किञ्चेति कथमस्माभिर्भाविताः सन्तो देवा भावयिष्यन्ति अस्मानिति तदाह इष्टानिति यज्ञानुष्ठानेन पूर्वोक्तरीत्या स्वर्गापवर्गयोर्भावेऽपि कथं स्त्रीपशुपुत्रादिसिद्धिरित्याशङ्क्य पूर्वार्द्धं व्याकरोति इष्टानभिप्रेतानिति पश्वादिभिश्च यज्ञानुष्ठानद्वारा भोगो निवर्तनीयोऽन्यथा प्रत्यवायसङ्गादित्युत्तरार्द्धं व्याचष्टे तैरिति

स्वामिकृतटीका ।

कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह देवानिति अनेन यज्ञेन यूयं देवान् भावयत हविर्भागैः संवर्द्धयत ते च देवा वो युष्मान् संवर्द्धयन्तु वृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण एवमन्योन्यं संवर्द्धयन्तो देवाश्च यूयञ्च परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

भाषा अनुवाद ।

यज्ञ इष्ट कामना की दाता कैसे होयगी सो कहते हैं कि इसी यज्ञके द्वारा तुम सब देवतावों को घृत आहुति देकर बढ़ावो और वे सब देवता भी तुमारी वृद्धि करें अर्थात् जल बरसाय अन्न उपाय तुम को सन्तुष्ट करें इसी तरह तुमारा दोनो का परस्पर कहे एक से एक का उपकार अर्थात् अभीष्ट अर्थ सिद्ध होय ॥ ११ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते तेत्वघं पापा ये पचन्त्यात्मकारणात्॥ १३॥

शाङ्करभाष्यम्।

ये पुनः देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वैः पापैश्चुल्ल्यादि पञ्च शूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैर्ये त्वात्मम्भरयो भुञ्जते ते त्वघं पापं स्वयमपि पापाः ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणादात्महेतोः॥१३॥

आनन्दगिरिकृतटीका।

आन्टरायमकृत्वेत्ययमर्थः देवानामृषीणां पितॄणाञ्च यज्ञेन ब्रह्मचर्येण प्रजया च सन्तोषमनापाद्य स्वकीयं कार्य्यकारणसङ्घातमेव पोष्टुं भुञ्जानस्तस्करो भवतीति॥ १२॥

देवादिभ्यः सम्विभागमकृत्वा भुञ्जानानां प्रत्यवायित्वमुक्त्वा तदन्येषां सर्वदोषराहित्यं दर्शयति ये पुनरिति यज्ञशिष्टाशिनो ये पुनस्ते तादृशाः सन्तः सर्वकिल्बिषैर्मुच्यन्त इति योजना तैर्दत्तानित्यादिनोक्तं निगमयति भुञ्जत इति देवयज्ञादीनित्यादिशब्देन पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञश्चेति चत्वारो यज्ञाः गृह्यन्ते चुल्लीशब्देन पिठरधारणाद्यर्थक्रियां कुर्वतो विन्यासविशेषवन्तस्त्रयोग्रावाणो विवक्ष्यन्ते आदिशब्देन कण्डनी पेषणी-

स्वामिकृतटीका।

एतदेव स्फुटी कुर्वन् कर्माकरणे दोषमाह इष्टानिति यज्ञैर्भाविता देवा वृष्ट्यादिद्वारेण वो युष्मभ्यं भोगान् दास्यन्ते हि अतो देवैर्दत्तानन्नादीन् तेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो भुङ्क्ते सह चौर एव ज्ञेयः॥ १२॥

भाषा अनुवाद।

इस को अच्छी तरह बिचारकरि कहते हैं कि कर्म न करने से दोष होता है देखो यज्ञ से सन्तुष्ट देवता जल वृष्टि करिके तुम सब के अर्थ अन्न आदि नाना प्रकार के भोग देंयगे तो जो पञ्च यज्ञ के द्वारा देवदत्त अर्थात् देवतों की दी हुई अन्नादिवस्तु इन को न देकर आप ही भोग करि लेय सो चोर औ कृतघ्न हैं अग्नि अतिथि गऊ को देना औ बलि वैश्वदेव करना यही पञ्च यज्ञ हैं॥ १२॥

आनन्दगिरिकृतटीका ।

मार्जन्युदककुम्भश्चेत्येते हिंसाहेतवो गृहीतास्तान्येतानि पञ्च प्राणिनां सूनास्थानानि हिंसाकारणानि तत्प्रयुक्तैः सर्वैरपि बुद्धिपूर्वकैर्दुरितैर्मुच्यन्त इति सम्बन्धः प्रमादो विचार-व्यतिरेकेणाबुद्धिपूर्वकमुपनतं पादपातादिकार्थं तेन प्राणिनां हिंसा सम्भाव्यते आदि-शब्देनाशुचि संस्पर्शादि गृहीतं तदुत्थैश्च पापैर्महायज्ञकारिणोमुच्यन्ते उक्तं हि कण्डनं पेषणं चुल्ली उदकुम्भश्च मार्जनं पञ्च सूना गृहस्थस्य पञ्चयज्ञात् प्रणश्यतीति पञ्चसूना गृहस्थस्य चुल्ली पेषण्यवस्कारः कण्डनी चैव कुम्भश्च बध्यते यास्तु वाहयन्निति च अस्याय-मर्थः या यथोक्ताः पञ्च संख्यका गृहस्य सूनास्ता यो वाहयन्नापादयन् वर्त्तते तेन प्राणिनो बुद्धिपूर्वकञ्च बध्यन्ते तत् प्रयुक्तं सर्वमपि पापं महायज्ञानुष्ठानात् प्रणश्यतीति महायज्ञा-नुष्ठानस्तुत्यर्थं तदनुष्ठानविमुखान् निन्दति येत्विति आत्मम्भरित्वमेव स्फोरयति ये पचन्तीति स्वदेहेन्द्रियपोषणार्थमेव पाकं कुर्वतां देवयज्ञादिपराङ्मुखानां पापभूयस्त्वं दर्शयति भुञ्जत इति पाठक्रमस्त्वर्थक्रमादपवाधनीयः ॥ १३ ॥

स्वामिकृतटीका ।

इतश्च यजन्त एव श्रेष्ठानेतर इत्याह यज्ञशिष्टाशिन इति वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्च सूनादिकृतैः सर्वैः किल्विषैर्मुच्यन्ते पञ्च सूनाश्च स्मृतावुक्ताः कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न गच्छति ये त्वात्मनो भोज-नार्थमेव पचन्ति नतु वैश्वदेवाद्यर्थं ते पापादुराचारा अघमेव भुञ्जते ॥ १३ ॥

## भाषा अनुवाद ।

**इस हेतु से यज्ञ करनेवाले मनुष्य श्रेष्ठ हैं और जो देवता अतिथि अग्निगो ग्रास वलि वैश्वदेव ये यज्ञ नहीं करते केवल अपनेवास्ते पाक करके खाते हैं वेई लोभी पापाचारी हैं सोई कहते हैं कि जो देवादिकों को देकर आप भोजन करते उन को पञ्च सूना का पाप नहीं लगता है सूना कहे हत्याके स्थान गृहस्तों के घरमे रोज रोज हत्या होने की पांच जगह हैं घर वहारते झारते चूल्हे मे आगवारते जल के पात्र मे उखली मे कूटते कांड़ते चक्की पीसते अनेक जीवो की हिंसा होती है सो पाप पञ्च यज्ञ न करनेवाले को लगते हैं और वे स्वर्ग मे वास नहीं पावते इस से गृहस्तको प्रतिदि पञ्च यज्ञ अवश्य करना चाहिये ॥१३॥**

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

शाङ्करभाष्यम् ।

इतश्चाधिकृतेन कर्म कर्तव्यं जगच्चक्रप्रवृत्तिहेतुर्हि कर्म कथमित्युच्यते अन्नाद्भवन्तीति अन्नाद्भुक्ताल्लोहितरेतः परिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि पर्जन्याद्वृष्टेरन्नस्य सम्भवः यज्ञाद्भवति पर्जन्यः अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति यज्ञोऽपूर्वं स च यज्ञः कर्म समुद्भवः ऋत्विग् यजमानयोश्च व्यापारः कर्म ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्म समुद्भवः ॥ १४ ॥

आनन्दगिरिकृतटीका ।

देवयज्ञादिकं कर्माधिकृतेन कर्त्तव्यमित्यत्र हेत्वन्तरमितः शब्दोपात्तमेव दर्शयति जगदिति ननु भुक्तमन्नं रेतो लोहितपरिणतिक्रमेण प्रजारूपेण जायते तच्चान्नं वृष्टिसम्भवं प्रत्यक्षदृष्टं तत् कथं कर्मणो जगच्चक्रप्रवर्तकत्वमिति शङ्कते कथमिति पारम्पर्येण कर्मणस्तद्धेतुत्वं साधयति उच्यत इति उक्तेऽर्थे स्मृत्यन्तरं संवादयति अग्नाविति तत्र हि देवताभिध्यानपूर्वकं तदुद्देशेन प्रहिताहुतिरपूर्वतां गता रश्मिद्वारेणादित्यमारुह्य वृष्ट्यात्मना पृथिवीं प्राप्य व्रीहियवाद्यन्नभावमापद्य संस्कृतो भूत्वा शुक्रशोणितरूपेण परिणता प्रजाभावं प्राप्नोतीत्यर्थः यज्ञः कर्मसमुद्भव इत्ययुक्तं स्वस्यैव स्वोद्भवे कारणतायोगादित्याशङ्क्याह ऋत्विगिति द्रव्यदेवतयोः संग्राहकश्चकारः ॥ १४ ॥

स्वामिकृतटीका ।

जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्मकर्तव्यमित्याह अन्नादिति त्रिभिः अन्नाच्छुक्रशोणितरूपेण परिणता भूतान्युत्पद्यन्ते अन्नस्य च सम्भवः पर्जन्याद्वृष्टेः स च पर्जन्यो यज्ञाद्भवति स च यज्ञः कर्मसमुद्भवः कर्मणा यजमानादिव्यापारेण सम्यक् सम्पद्यत इत्यर्थः अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मृतेः ॥ १४ ॥

भाषा अनुवाद ।

संसार चक्र में प्रवृत्त होने का हेतु जो कर्म सो कर्तव्य है यह तीन श्लोक से कहते हैं कि अन्नहीं उदर में जाय कर रसरूप हो शुक्र कहे

**कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

## शाङ्करभाष्यम् ।

तच्च एवम्बिधं कर्म्म कुतो जातमित्याह कर्म्मेति तच्च कर्म्म ब्रह्मोद्भवं ब्रह्म-वेदः स उद्भवो यस्य तत् कर्म्म ब्रह्मोद्भवं विद्धि विजानीहि ब्रह्म पुनर्वेदाख्य-मक्षरसमुद्भवं अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरसमुद्भवं ब्रह्म वेद इत्यर्थः यस्मात् साक्षात्परमात्माख्यादक्षरात् तत् पुरुषनिश्वासवत् समुद्भवं ब्रह्म तस्मात् सर्व्वार्थप्रकाशकत्वात् सर्व्वगतमपि सत् नित्यं सदा यज्ञविधि-प्रधानत्वाद्यज्ञे प्रतिष्ठितम् ॥ १५ ॥

## आनन्दगिरिकृतटीका ।

यदपूर्व्वहेतुत्वेन कर्म्मोक्तं तत् किं चैत्यवन्दनादि किम्वाग्निहोत्रादि इति सन्दिहानं प्रत्याह कर्म्मेति किमिति कर्म्मणो ब्रह्मोद्भवत्वमुच्यते सर्व्वस्य तदुद्भवत्वाविशेषादित्याशङ्क्याह ब्रह्म वेद इति ब्रह्म तर्हि वेदाख्यमनादिनिधनमिति तत्राह ब्रह्म पुनरिति अक्षरात्मनो वेदस्य पुनरक्षरेभ्यः सकाशादेव समुद्भवो न सम्भवतीत्याशङ्क्याह अक्षरमिति ब्रह्मेत्यक्षरमेवोक्तं तत् कथं तस्मादेवोद्भवतीत्याशङ्क्य ब्रह्मशब्दार्थमुक्तमेव स्मरति ब्रह्मवेद इति ननु ब्रह्मशब्दि-तस्य वेदस्यापि पौरुषेयत्वात् प्रामाण्यसन्देहात् कथं तदुक्तमग्निहोत्रादिकं कर्म्मनिर्द्धार-यितुं शक्यते तत्राह यस्मादिति कथं तर्हि तस्य यज्ञे प्रतिष्ठितत्वं सर्व्वगतत्वे विशेषायोगा-दित्याशङ्क्याह सर्व्वगतमपीति ॥ १५ ॥

## भाषा अनुवाद ।

बीज औ शोणित कहे रूधिर होता जिस से भूत कहे प्राणी उत्पन्न होते हैं और सो अन्न मेघ वरसने से होता है और मेघ यज्ञ धूम से होते हैं और वह यज्ञ फेरि यज्ञ करनेवालों के व्यापार से पूरी होती है यही बात श्रुति कहती है कि अग्नि से दोहुई आहुति सूर्य्य लोक मे रहती इसी से सूर्य्य से वृष्टि होती और वृष्टि से अन्न होता फेरि उस अन्न से सब प्रजा जन्म लेती है ॥ १४ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

शाङ्करभाष्यम्।

एवमिति एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायुरघं पापमायु र्जीवनं यस्य सोऽघायुः पापजीवन इति यावत् इन्द्रियाराम इन्द्रियैरारमणमाक्रीडाविषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ स जीवति तस्मादज्ञेनाधिकृतेन कर्तव्यमेवं

स्वामिकृतटीका

तथा कर्मेति तच्च यजमानादिव्यापाररूपकर्म ब्रह्मोद्भवं विद्धि ब्रह्मवेदस्तस्मात् प्रवृत्तं जानीहि तच्च वेदाख्यं ब्रह्म अक्षरात् परब्रह्मणः समुद्भूतं जानीहि अस्य महतो भूतस्य निश्वसितमेतादृग् वेदो यजुर्वेदः सामवेद इति श्रुतेः यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तमभिप्रेतो यज्ञस्तस्मात् सर्वगतमप्यक्षरं ब्रह्म नित्यं सर्वदा यज्ञे प्रतिष्ठितं यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यत इति उद्यमस्था सदा लक्ष्मीरितिवत् यद्वा यस्माजगच्चक्रस्य मूलं कर्म तस्मात् सर्वगतमन्त्रार्थवादैः सर्वेषु भूतार्थाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे तात्पर्येण प्रतिष्ठितम् अतो यज्ञादिकर्म कर्त्तव्यमित्यर्थः ॥ १५ ॥

भाषा अनुवाद।

ऐसे अपूर्व हेतुवों से कर्म की श्रेष्ठता औ कर्तव्यता किस लिये कही औ कर्म क्या वस्तु है सोई विवरन करते हैं कि यज्ञकारी पुरुषों का व्यापाररूप जो कर्म सो ब्रह्म कहे वेद से उत्पन्न भया औ ब्रह्म जो वेद सो अक्षर जो पर ब्रह्म तिस से प्रगट भया है यह जानो और श्रुतिने भी कहा हैं कि पर ब्रह्म की निःश्वास से ऋक् यजुर औ सामवेद प्रगटे हैं इस से सर्वव्यापी पर ब्रह्म सर्वदा यज्ञ मे प्रतीत है अर्थात् यज्ञरूप उपाय से ब्रह्म प्राप्ति होती है जैसे उद्योग करने से लक्ष्मी का लाभ होता है अथवा जगत मे मूलरूप कर्म है इस से मन्त्र और अर्थके द्वारा सब मनुष्यों मे प्राप्त अनादि काल से स्थित जो वेद ब्रह्म सो तात्पर्य्य के द्वारा प्रतिष्ठित है इस हेतु से यज्ञादि कर्म अवश्य कर्तव्य है ॥ १५ ॥

## शाङ्करभाष्यम् ।

**कर्मेति प्रकरणार्थः प्रागात्मज्ञाननिष्ठायोग्यता प्राप्ते स्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेन कर्तव्यमित्येतत् न कर्मणामनारम्भादित्यत आरभ्य शरीरयात्रापि च ते न प्रसिध्येदकर्मण इत्येवमन्तेन प्रतिपाद्य यज्ञार्थात् कर्मणोऽन्यत्रेत्यादिना मोघं पार्थ स जीवतीत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतम् ॥ १६ ॥**

### आनन्दगिरिकृतटीका ।

अधिकृतेनाध्ययनादिद्वारा जगच्चक्रमनुवर्त्तनीयमन्यथेश्वराज्ञातिलङ्घिनस्तस्य प्रत्यवायः स्यादित्याह एवमिति न कर्मणामनारम्भादित्यादिनोक्तमुपसंहरति तस्मादिति जगच्चक्रस्य प्रागुक्तप्रकारेणाननुवर्त्तने वृथा जीवनमघसाधनं यस्मात् तस्माज्जीवता नियतं कर्म कर्तव्यमित्यर्थः यद्यधिकृतेन कर्तव्यमेव कर्म तर्हि किमित्यज्ञेनेति विशिष्यते ज्ञाननिष्ठेनापि तत् कर्तव्यमेवाधिकृतत्वाविशेषादित्याशङ्क्य पूर्वोक्तमनुवदति प्रागिति नहि ज्ञानकर्मणोर्विरोधात् ज्ञाननिष्ठेन कर्म कर्त्तुं शक्यते तथाचानात्मज्ञेनैव चित्तशुद्ध्यादि परम्परया ज्ञानार्थं कर्मानुष्ठेयमिति प्रतिपादितमित्यर्थः तर्हि यज्ञार्थादित्यादि किमर्थं नहि तत्र ज्ञाननिष्ठा प्रतिपाद्यते कर्मनिष्ठात पूर्वमेवोक्तत्वान्नात्र वक्तव्येत्याशङ्क्य उक्तमर्थान्तरमनुवदति प्रतिपाद्येति प्रासङ्गिकमज्ञस्य कर्म कर्तव्यतोक्तिप्रसङ्गागतमिति यावत् बहुकारणमीश्वरप्रसादो देवताप्रीतिश्चेत्यादिदोषसङ्कीर्त्तनं तैर्दत्ता न प्रदायेत्यादि ॥ १६ ॥

### स्वामिकृतटीका ।

यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्मादि चक्रं प्रवर्तितं तस्मात् तदकुर्वतो वृथैव जीवितमित्याह एवमिति परमेश्वरवाक्य भूतादेदाख्य ब्राह्मणः पुरुषार्थां कर्मणि प्रवृत्तिस्ततः कर्म निष्पत्तिस्ततः पर्जन्यस्ततोऽन्नं ततो भूतानि भूतानां पुनस्तथैव कर्म प्रवृत्तिरित्येवं प्रवर्तितं चक्रं यो नानुवर्तयति नानुतिष्ठति अघं पापरूपमायुर्यस्य सः यत इन्द्रियैर्विषयेष्वेवारमति नत्वीश्वराराधनार्थे कर्मणि अतो मोऽघं व्यर्थं स जीवति ॥ १६ ॥

### भाषा अनुवाद ।

**जिस हेतु ईश्वर की प्रेरणा से मनुष्य सकल पुरुषार्थ सिद्ध होने के अर्थ इस संसार चक्र मे आय के उक्त कर्मरूप चक्र मे प्रवृत्त हैं इस से कर्म न करने से मनुष्य का जन्म ही व्यर्थ है यह कहते हैं कि ईश्वर की**

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥ १७ ॥

शाङ्करभाष्यम्।

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्त्तनीयमाहोस्वित् पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामात्मविदो ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थमेव चैतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्य्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषामात्मज्ञाननिष्ठा व्यतिरेकेणान्यकार्य्यमस्ति इत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपादयिषितमाविष्कुर्वन्नाह भगवान् यस्त्विति यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिः आत्मनि

आनन्दगिरिकृतटीका।

दृष्टमर्थमेवं विभज्यानूद्यानन्तरश्लोकमाशङ्क्योत्तरत्वेनावतारयति एवमिति अर्जुनस्य प्रश्नमित्येवमर्थमाशङ्क्याह भगवानिति सम्बन्धः नन्वेषा शङ्का नावकाशमासादयत्यनात्मज्ञेन कर्तव्यं कर्मेति वक्तृणो विशेषितत्वादित्याशङ्क्याह स्वयमेवेति किमर्थं श्रुत्यर्थं स्वयमेव भगवानत्र प्रतिपादयति इत्याशङ्क्याह शास्त्रार्थस्येति गीताशास्त्रस्य स सम्यग्ज्ञानमेव मुक्तिसाधनमर्थो नार्थान्तरमिति विवेकार्थमिह श्रुत्यर्थं संचिक्षिप्सु कीर्त्तयतीत्यर्थः तमेव श्रुत्यर्थं संक्षिपति एतमिति सिद्धश्चेदात्मवेदनमनर्थकं तर्हि व्युत्थानादीत्याशङ्क्यापातिकविज्ञानफलमाह निवृत्तेति ब्राह्मणग्रहणं तेषामेव व्युत्थाने मुख्यमधिकारित्वमिति ज्ञापनार्थं लोकात्मकत्वादेषणानां ताभ्यो व्युत्थानं सर्वेषां स्वाभाविकत्वाद्विविधितमित्याशङ्क्याह मिथ्येति भिक्षार्यं चरन्तीति वचनं व्युत्थानविरुद्धमित्याशङ्क्याह शरीरेति तर्हि तद्वदेव तेषामग्निहोत्राद्यपि कर्तव्यमापद्येतेत्याशङ्क्य व्युत्थायिनामाश्रमधर्मवदग्निहोत्रादेरनुष्ठापकभावान्नैव-

भाषा अनुवाद।

आज्ञारूप वेद से पुरुष यज्ञकर्म्म मे प्रवृत्त होते हैं तिस से मेघ और मेघ से अन्न अन्न से प्राणी और प्राणीयों से फिरि कर्म्म की प्रवृत्ति होती यही चक्र है अतएव जो ईश्वराराधन कर्म्म नहीं करते केवल इन्द्रियों से विषय भोगमात्र करते उन का वृथा जीवन हैं ॥ १६ ॥

## शाङ्करभाष्यम् ।

एव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्यादवेत् आत्मतृप्तश्च आत्मनैव तृप्तो नान्नरसादिना स मानवो मनुष्यः सन्न्यासी आत्मन्येव च सन्तुष्टः सन्तोषो हि बाह्यार्थलाभेन सर्वस्य भवति तमनपेक्ष्यात्मन्येव च सन्तुष्टः सर्वतो विगततृष्ण इत्येतत् य ईदृश आत्मवित्तस्य कार्य्यं करणीयं न विद्यते नास्तीत्यर्थः ॥१७॥

### आनन्दगिरिकृतटीका ।

मित्याह न तेषामिति यथोक्तं स्वत्यर्थमस्मिन् गीताशास्त्रे पौर्वापर्येण पर्यालोच्यमाने प्रतिपादयितुमिष्टं प्रकटी कुर्वन् कर्त्तव्यमेव कर्म जीवतेति नियमे ज्ञानयोगेन सांख्यानामिति चोद्यपरिहारमुपदर्शयति इत्येवमिति आत्मनिष्ठस्य विषयसङ्गराहित्यं तदनात्मज्ञेन जिज्ञासुना कर्त्तव्यमितिमत्वाह यस्तु सांख्य इति किञ्च आत्मज्ञस्य ज्ञानेनात्मनैव परितृप्तत्वादन्नपानादिना साध्या तृप्तिरिष्टा तेन विद्यार्थिना सन्न्यासिनापि नान्नरसादावासक्तिर्युक्ता कर्त्तुमित्याह आत्मतृप्त इति किञ्च आत्मविदः सर्वतो वैतृष्ण्यं दृष्टं तदनात्मविदा विद्यार्थिना कर्तव्यमित्याह आत्मन्येवेति रतितृप्तिसन्तोषाणां मोदप्रमोदानन्दवदवान्तरभेदः अथवा रतिर्विषयासक्तिः तृप्तिर्विषयविशेषसम्पर्कजं सुखं सन्तोषोऽभीष्टविषयमात्रलाभाधीनं सुखसामान्यमितिभेदः नन्वात्मरतेरात्मतृप्तस्यात्मन्येव सन्तुष्टस्यापि किञ्चित् कर्तव्यं सत्कार्ये भविष्यतीति नेत्याह य ईदृश इति ॥ १७ ॥

### स्वामिकृतटीका ।

तदेवं न कर्मणामनारम्भादित्यादिना अज्ञस्यान्तःकरणशुद्ध्यर्थं कर्मयोगमुक्त्वा ज्ञानिनः कर्मानुपयोगमाह यस्त्विति द्वाभ्याम् आत्मन्येव रतिः प्रीतिर्यस्य स ततश्चात्मन्येव तृप्तः स्वानन्दानुभवेन निर्वृतः अत एवात्मन्येव सन्तुष्टो भोगापेक्षारहितो यस्तस्य कर्त्तव्यं कर्म नास्तीति ॥ १७ ॥

## भाषा अनुवाद ।

कर्म्मणामनारम्भादित्यादि श्लोक से अज्ञानी पुरुष के अन्तःकरण शुद्धि के हेतु कर्म्मयोग कहिकर अब ज्ञानी को कर्म्म न करना दो श्लोक से कहते हैं कि जिस को आत्मा मे रति कहे प्रीति औ आत्म आनन्द मे मगन मन तथा आत्मा मे सन्तुष्ट हैं और भोगादि से रहित हैं ऐसे जो तत्त्वज्ञानी पुरुष उन को कोई कर्म्म करना नहीं है और सब को तो करना हीं उचित है ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

शाङ्करभाष्यम् ।

किञ्च नैवेति नैव तस्य परमात्मरतेः कृतेन कर्मणार्थः प्रयोजनमस्ति अस्तु तर्ह्यकृतेन अकरणेन प्रत्यवायाख्योऽनर्थो नाकृतेनेहलोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैवास्ति नचास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तक्रिया साध्यो व्यपाश्रयः व्यपाश्रयणम् आलम्बनं कञ्चिद्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति येन तदर्थाक्रियानुष्ठेया स्यात्त्वम् एतस्मिन् सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्त्तसे ॥ १८ ॥

आनन्दगिरिकृतटीका ।

इतश्चात्मविदो न किञ्चित् कर्त्तव्यमित्याह किञ्चेति अभ्युदयनिःश्रेयसयोरन्यतरत् प्रयोजनं सुकृतेनात्मविदो भविष्यतीत्याशङ्क्याह नैवेति प्रत्यवायनिवृत्तये स्वरूपप्रच्युतिप्रत्याख्यानाय वा कर्मस्यादित्याशङ्क्याह नेत्यादिना ब्रह्मादिषु स्थावरान्तेषु भूतेषु कञ्चिद्भूतविशेषमाश्रित्य कश्चिदर्थो विदुषः साध्यो भविष्यति तदर्थं तेन कर्त्तव्यं कर्मेत्याशङ्क्याह नचेति तत्राद्यं पदमादत्ते नैवेति तं व्याचष्टे तस्येति आत्मविदः स्वर्गाद्यभ्युदयानर्थित्वं निःश्रेयसस्य च प्राप्तत्वात्कृतं कर्मार्थवदित्यर्थः आत्मविदा चेत् कर्म न क्रियते तर्हि तेना कृतेन तस्यानर्थो भविष्यतीति तत् प्रत्याख्यानार्थं तस्य कर्तव्यं कर्मेति शङ्कते तर्हीति द्वितीयपादेनोत्तरमाह नेत्यादिना अतो न तन्निवृत्त्यर्थं कृतमर्थवदिति शेषः द्वितीयं भागं विभजते नचास्येति व्यपाश्रयमाणमालम्बनं नेति सम्बन्धः पदार्थमुक्त्वा वाक्यार्थमाह भूतेषु किञ्चिदिति स विशेषस्याश्रितस्यापि क्रियाद्वारा प्रयोजनप्रसवहेतुत्वमिति तर्हि मयापि यथोक्तं तत्त्वमाश्रित्य त्याज्यमेव कर्मेत्यर्जुनस्य मतमाशङ्क्याह नत्वमिति ॥ १८ ॥

स्वामिकृतटीका ।

तत्र हेतुमाह नैवेति कृतेन कर्मणा तस्यार्थः पुण्यं नैवास्ति नचाकृतेन कश्चनकोऽपि प्रत्यवायोऽस्ति निरहङ्कारत्वेन विधिनिषेधातीतत्वात् तथापि तद्धेषां न प्रियं यदेतन्मनुष्या विदुरिति श्रुतेर्मोक्षे देवकृतविघ्नसम्भवात् तत्परिहारार्थं कर्मभिर्देवाः सेव्या इत्याशङ्क्योक्तं सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदप्यर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः अर्थे मोक्षे

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

शाङ्करभाष्यम् ।

यत एवं तस्मादिति तस्मादसक्तः संसर्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्वन् परमाप्नोति पुरुषः मोक्षमाप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः ॥१८॥

स्वामिकृतटीका ।

आश्रयणीयोऽस्य नास्तीत्यर्थः विघ्नभावस्य श्रुत्यैवोक्तत्वात् तथा च श्रुतिः तस्य ह न देवाश्चना भूत्या ईशते आत्मा ह्येषां सम्भवतीति ह नेत्यव्ययमप्यर्थे देवा अपि तस्यात्मतत्त्वज्ञस्य अभूत्यै ब्रह्मभावप्रतिबन्धाय नेशते न शक्नुवन्तीति श्रुतेरर्थः देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव यदेतद् ब्रह्म मनुष्याविदुस्तद्देवैषां देवानां न प्रियमिति श्रुत्या ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वस्य सूचितत्वात् ॥ १८ ॥

भाषा अनुवाद ।

जो तत्त्वज्ञानी कहे आत्मज्ञानी पुरुष हैं उन को कोई भी कर्म करना नहीं है सोई कहते हैं कि न ज्ञानी को कर्म करने से पुन्य है और कर्म न करने से प्रत्यवाय कहे पाप भी नहीं है क्योंकि ज्ञानी तो निरहङ्कार है इस से उस को किसी कर्म की विधि औ निषेध नहीं है वह सब से अलग है जो कहो कि श्रुति कहती है कि देवतों की इच्छा नहीं है कि मनुष्य ब्रह्म को जाने औ ब्रह्मज्ञानी होय मोक्ष को पावे तो निश्चय है कि मोक्ष होने में देवता विघ्न करेंगे इस वास्ते विघ्न निवारण के अर्थ देवतों की सेवारूप कर्म जरूरही करना पड़ेगा इसपर कहते हैं कि ब्रह्म से लेकर औ अस्थावर पर्य्यन्त किसी की सहायता ज्ञानी को दरकार नहीं है क्योंकि ज्ञानमार्ग में विघ्न का अभाव है अर्थात् विघ्न होते ही नहीं यह श्रुति से कहिचुके हैं इस से आत्मदर्शी को प्राणीमात्र का आश्रय कहे अवलम्ब लेने का कुछ काम नहीं है ॥ १८ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि॥ २०॥**

शाङ्करभाष्यम्।

यस्माच्च कर्मणैवेति कर्मणैव हि तस्मात् पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयो यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थंप्रारब्धकर्मत्वात् कर्मणा सहैव वा सन्न्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः अथाप्राप्तसम्यग्दर्शना जनकादय-

आनन्दगिरिकृतटीका।

सम्यग्ज्ञाननिष्ठत्वाभावे कर्मानुष्ठानमावश्यकमित्याह यत इति तस्मात् ज्ञाननिष्ठाराहित्यादिति यावत् मोक्षमेवापेक्षमाणस्य कथं कर्मणि फलान्तरवति नियोगः स्यादित्याशंक्याह असक्तो हीति॥ १९॥

स्वामिकृतटीका।

यस्मादेवं भूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह तस्मादिति असक्तः फलसङ्गरहितः सन् कार्य्यमवश्यकर्त्तव्यतया विहितं नित्यनैमित्तिकं कर्म सम्यगाचर हि यस्मादसक्तः कर्माचरन् पुरुषः परं मोक्षं चित्तशुद्धिद्वारा प्राप्नोति॥ १९॥

**भाषा अनुवाद।**

**इस से हे अर्जुन ज्ञानी पुरुषही को कर्म कर्तव्य नहीं है और मनुष्य को तो कर्म करनाही उचित है सो तुम कर्म करो यही कहते हैं कि तस्मात् कहे तिससे असक्त हो कर्तव्य कर्म निरन्तर समाचर कहे करो असक्त होय पुरुष कर्म करते हुए पर जो मुक्ति तिसको प्राप्त होते हैं अर्थात् फल की कामनारहित होकर अवश्य कर्म जो नित्य नैमित्तिक हैं सो सब करो जिस हेतु आसक्ति रहित कर्मकारी मनुष्य परम जो मुक्ति उसको चित्तशुद्धि के द्वारा पावता है नित्य कर्म सन्ध्या बन्दनादिक हैं और नैमित्तिक जो निमित्तपायकर कियेजांय जैसे पुत्र जन्म मे जातकर्मादि हैं इस से यह जनाया कि तुम को युद्ध भी नैमित्तिक कर्म करना आवश्यक है॥ १९॥**

शाङ्करभाष्यम् ।

स्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकोऽयं मन्यते पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्यं कृतं कर्म तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्ति निवारणं लोकसंग्रहस्तमेवापि प्रयोजनं सम्पश्यन् कर्तुमर्हसि ॥ २० ॥

आनन्दगिरिकृतटीका ।

यद्यपि जितेन्द्रियोऽपि विवेकी श्रवणादिभिरजस्रं ब्रह्मनिष्ठातुं शक्नोति तथापि क्षत्रियेण त्वया विहितं कर्म न त्याज्यमित्याह यस्माच्चेति तस्मात्त्वमपि कर्म कर्तुमर्हसीति सम्बन्धः इतोऽपि त्वया विहितं कर्म कर्तव्यमित्याह लोकेति पूर्वार्द्धं विभजते कर्मणैवेति कथं जनकादीनां कर्मणा संसिद्धिप्राप्तिरुच्यते कर्मत्यजां हि सम्यग् दर्शनवतां प्रसिद्धा संसिद्धिरिति तत् किं जनकादयोऽपि प्राप्तसम्यग्दर्शनाः स्युः उत अप्राप्तसम्यग्दर्शना भवेयुरिति विकल्प्यात्र प्रथमं प्रत्याह यदीति लोकसंग्रहार्थकर्मणा सहैव संसिद्धिमास्थिता इति सम्बन्धः कर्मणा सहैवेत्येतत् व्याकरोति असन्न्यस्यैव कर्मेति तत्र हेतुमाह प्रारब्धेति जनकादीनां सत्यपि ज्ञानित्वे प्रारब्धकर्मवशात् कर्मापरित्यज्यैव लोकसंग्रहार्थप्रवर्तमानानां ज्ञानमाहात्म्यादुपपन्ना संसिद्धिरित्यर्थः द्वितीयमनूद्य पूर्वार्द्धेनोत्तरमाह अथेत्यादिना द्वितीयार्द्धव्यावर्त्त्यांशङ्कामुत्थापयति अथेति अत्र नाऽकृतार्थेन कृतं कर्मेत्येतावता ज्ञानवता कृतकृत्येन न तत् कर्तव्यमित्युक्तमङ्गीकरोति तथापीति तर्हि मयापि ज्ञानवता कृतार्थेन कर्म न कर्तव्यमित्याशङ्क्यार्जुनस्य कर्तव्यमेव कर्मेत्युत्तरार्द्धव्याख्यानेन कथयति प्रारब्धेति ॥ २० ॥

स्वामिकृतटीका ।

अत्र सदाचारं प्रमाणयति कर्मणैवेति कर्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्रमेवेत्याह लोकसंग्रहमित्यादि लोकस्य संग्रहः स्वधर्मे प्रवर्तनं मया कर्मणि कृते जनः सर्वोऽपि करिष्यति अन्यथा ज्ञानि दृष्टान्तेनाज्ञो निजधर्मं नित्यं कर्म त्यजन् पतेदित्येवं लोकरक्षणमपि तावत् प्रयोजनं पश्यन् कर्म कर्तुमेवार्हसि न त्यक्तुमित्यर्थः ॥ २० ॥

भाषा अनुवाद ।

अब इस विषय मे ज्ञानीयों के किये भये आचरण को प्रमाण देते हैं कि देखो परम ज्ञानी जनक राजा कर्म्म के आचरण करने से शुद्धसत्त्व होकर

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥**

## शाङ्करभाष्यम्।

लोकसंग्रहः किमर्थं उच्यते यद्यदिति यद्यत् कर्म्म आचरति श्रेष्ठः प्रधान स्तत्तदेव कर्माचरति इतरो जन स्तदनुगतः किञ्च श्रेष्ठो यत् प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्त्तते तदेव प्रमाणी करोतीत्यर्थः ॥२१॥

### आनन्दगिरिकृतटीका।

ज्ञानवता कृतार्थेन लोकसंग्रहार्थमपि न प्रवर्तितव्यमित्याशङ्काप्युत्थाप्य परिहरति लोकेत्यादिना श्रुताध्ययनसम्पन्नत्वेनाभिमतो यद्यद्विहितं प्रतिषिद्धं वा कर्मानुतिष्ठति तत्तदेव प्राकृतो जनोऽनुवर्त्तते तेन विद्यावतापि लोकमर्य्यादास्थापनार्थं विहितं कर्त्तव्यमित्यर्थः श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वा प्रतिपत्तावपि दर्शयति किञ्चेति ॥२१॥

### स्वामिकृतटीका।

कर्म करणे लोकसंग्रहो यथा स्यात् तदाह यद्यदिति इतरः प्राकृतोऽपि जनस्तत्तदेवाचरति स श्रेष्ठो जनः कर्म शास्त्रं तन्निवृत्ति शास्त्रं वा यत् प्रमाणं मन्यते तदेव लोकोऽप्यनुसरति ॥ २१ ॥

## भाषा अनुवाद।

अच्छी तरह ज्ञान को प्राप्त भये थे और जो तुम संपूर्ण ज्ञानी अपने को जानो तौभी कर्म्म करनाही श्रेय कहे कल्याण हैं यह कहते हुए कहते हैं कि सब मनुष्यों को कर्म्म प्रवृत्ति के अर्थ आर्थात् हमारे कर्म्म करने से सब लोग कर्म करेंगे नहीं तो ज्ञानी का व्यवहार देखि अज्ञानी लोग भी व्यवहार छोड़ि बैठेंगे इस हेतु से लोक की रक्षा के अर्थ कर्म करना प्रयोजन हैं यह बिचारि के कर्म करना योग्य है सो तुम भूल करि के भी कर्म न त्याग करना ॥ २० ॥

और तुमारे कर्म करने से सब लोगों की कर्म में रुचि होयगी यह कहते हैं कि श्रेष्ठ कहे बड़े लोग निवृत्ति या प्रवृत्ति कर्म जो प्रमाण

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

शाङ्करभाष्यम् ।

यद्यत्र लोकसंग्रह कर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि नेति न मे मम पार्थ नास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किञ्चन किञ्चिदपि कस्मात् अनवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथापि वर्त्त एव च कर्मण्यहम् ॥ २२ ॥

आनन्दगिरिकृतटीका ।

कृतार्थस्यापि लोकसंग्रहार्थं विहितं कर्म कर्तव्यमित्युक्ता तत्रैव भागवतमतमुदाहरणत्वेनोपन्यस्यति यदित्यादिना अप्राप्तस्य प्राप्तये तत्रापि कर्तृत्वसम्भवात् न किञ्चिदपि विद्यते कर्तव्यमिति कथमुक्तमित्याशङ्क्याह नानवाप्तमिति प्रतीकमुपादाय व्याख्यानद्वारा विद्यावतोऽपि कर्म प्रवृत्तिं सम्भावयति नेत्यादिना अन्वयार्थं पुनर्नञोऽनुवादः भगवतो मे नास्ति कर्तव्यमित्येतदाकाङ्क्षाद्वारा स्फोरयति कस्मादित्यादिना प्रयोजनाभावे त्वयापि नानुष्ठेयं कर्मेत्याशंक्य लोकसंग्रहार्थं ममापि कर्मानुष्ठानमिति मत्वाह तथापीति ॥ २२ ॥

स्वामिकृतटीका ।

अत्र चाहमेव दृष्टान्त इत्याह नमे इति त्रिभिः हे पार्थ मे कर्त्तव्यं नास्ति यतस्त्रिष्वपि लोकेष्वनवाप्तमवाप्तम् अवाप्तव्यं प्राप्यं नास्ति तथापि कर्मणि वर्त एव कर्म करोम्येवेत्यर्थः ॥ २२ ॥

भाषा अनुवाद ।

मानते औ करते हैं सोई साधारण मनुष्य भी आचरण करते हैं अर्थात उन के अनुसार ही सब व्यवहार के अनुगामी होते हैं ॥ २१ ॥

इस विषय मे भगवान अपने को दृष्टान्त देकर कहते हैं कि हे पार्थ अर्जुन देखो त्रैलक्य मे भी हम को कर्तव्य कर्म्म कुछ नहीं है तौभी हम कर्म्म करते ही रहते हैं और हम को त्रिभुवन मे अलभ्य तथा किसी वस्तु मे अभिलाषा नहीं है यह जानो ॥ २२ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहम् ।
सङ्करस्य च कर्त्तास्या मुपहन्यामिमाः प्रजाः ॥ २४ ॥

शाङ्करभाष्यम् ।

यदि हि पुनरहं न वर्तेयं जातु कदाचित् कर्मण्यतन्द्रितोऽनलसः सन् मम श्रेष्ठस्य सतो वर्त्ममार्गमनुवर्तन्ते मनुष्याः हे पार्थ सर्वशः सर्वप्रकारैः ॥ २३ ॥

तथाच को दोष इत्याह उत्सीदेयु विनश्येयुरिमे सर्वे लोका लोकस्थिति निमित्तस्य कर्मणोऽभावात् न कुर्य्यां कर्म चेदहं किञ्च सङ्करस्य च कर्त्तास्यां तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तस्तदुपहतिं उपहननं कुर्य्यामित्यर्थः ममेश्वरस्याननुरूपमापद्येत यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति ॥ २४ ॥

आनन्दगिरिकृतटीका ।

लोकसंग्रहोऽपि न ते कर्त्तव्यो विफलत्वादित्याशङ्क्याह यदि हीति ॥ २३ ॥

स्वामिकृतटीका ।

अकरणे लोकस्य नाशं दर्शयति यदि ह्यहमिति जातु कदाचिदतन्द्रितोऽनलसः सन् यदि कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्तन्तेऽनुवर्तेरन्नित्यर्थः ॥ २३ ॥

भाषा अनुवाद ।

तौ फिरि जो हम कर्म न करें तो कर्म्म न करनेसे जो लोगों की हानि होयगी सोई देखावते हैं कि जो सावधान हो कर्म्म मे हम कभी न वर्तमान होंय तो सब लोग हमारीही राह चलेंगे अर्थात् हमारी नाईं करेंगे ॥२३ ॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**

### आनन्दगिरिकृतटीका ।

श्रेवस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेवेत्याशङ्क्य दूषयति तथाचेत्यादिना ईश्व-
रस्य कर्मण्यप्रवृत्तौ तदनुवर्तिनामपि कर्मानुपपत्तिरिति हेतुमाह लोकस्थितीति इतश्चे-
श्वरेण कर्म कर्तव्यमित्याह किञ्चेति यदि कर्म न कुर्यामितिशेषः सङ्करकरणस्य कार्यं
कथयति तेनेति प्रजोपहतिरपि प्राप्यते चेत् किं तया तव स्यादिति तत्राह प्रजाना-
मिति त्वत्समाचरणमनुवर्तिनां सर्वेषां को दोषः स्यादित्यपेक्षायामीश्वरस्य कृतार्थतया
कर्मानुष्ठानाभावे तदनुवर्तिनामपि तदभावादेवस्थितिहेत्वभावात् पृथिव्यादिभूतानां विना-
शप्रसङ्गाद्वर्णाश्रमधर्म व्यवस्थानुपपत्तेश्चाधिकृतानां प्राणभृतां पापोपहतत्वप्रसङ्गात् परानु-
ग्रहार्थप्रवृत्तिरीश्वरस्येत्युक्तं सम्प्रति लोकसंग्रहाय कर्म कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभि-
भवं प्राप्तिं मत्वाह यदि पुनरिति कृतार्थबुद्धित्वे हेतुमाह आत्मविदिति यथायदात्मा-
नमेवंगच्छन् कर्तृत्वाद्यभिमानाभावात् कृतार्थो भवत्येवेत्यर्थः अर्जुनादन्यत्रापि ज्ञानवति
कृतार्थबुद्धित्वकर्तव्यत्वाद्यभिमानहीने तुल्यमित्याह अन्योवेति तस्य तर्हि कर्मानुष्ठानमफ-
लत्वादनवकाशमित्याशङ्क्याह तस्यापीति कर्तव्य इत्यात्मविदापि परानुग्रहाय कर्तव्यमेव
कर्मेत्याहेति शेषः ॥ २४ ॥

### स्वामिकृतटीका ।

ततः किमत आह उत्सीदेयुरिति उत्सीदेयुः धर्मलोपेन नश्येयुः ततश्च यो
वर्णसङ्करो भवेत् तस्याप्यहमेव कर्ता स्यां भवेयम् एवमहमेव प्रजा उपहन्यां मलिनी
कुर्यामिति ॥ २४ ॥

### भाषा अनुवाद ।

तो फेर उस मे जो होगा सो कहते हैं कि जो हम कर्म न करैं तो
धर्म लोप होजायगा और धर्म लोप से प्रजानष्ट होयगी औ बेमर्जाद हो
मरयाद छोड़ जो जिसके मनमानेगा सोई करैगा तो संसारके दुराचारसे
वर्णसङ्कर उपजैंगे फेरि इस अनुचित के कर्त्ता भी हमहीं ठहरे क्योंकि
अपनी प्रजा हमने आप ही नष्ट किया यही होगा ॥ २४ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
योजयेत् सर्व कर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

शाङ्करभाष्यम् ।

सक्ता इति सक्ताः कर्मण्यकर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत कुर्य्याद्विद्वानात्मवित्तथा असक्तः सन् तद्वत् किमर्थं करोति तच्छृणु चिकीर्षुर्यथा कर्तुमिच्छुः लोकसंग्रहम् ॥ २५ ॥

एवं लोकसंग्रहं चिकीर्षोर्ममात्मविदः कर्तव्यमस्त्यन्यस्य वा लोकसंग्रहमुक्त्वा ततस्तस्यात्मविदिदमुपदिश्यते नेति बुद्धेर्भेदो बुद्धिभेदः मया इदं कर्तव्यं भोक्तव्यञ्चास्य कर्मणः फलमिति निश्चयरूपायां बुद्धेर्भेदनं चालनं बुद्धिभेदस्तन्नजनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानाम् आसङ्गवतां किन्तु कुर्य्याज्जोजयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेवाविदुषां कर्मयुक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

आनन्दगिरिकृतटीका ।

दृष्टान्तदार्ष्टान्तिकरूपं श्लोकं व्याकरोति सक्ता इत्यादिना असक्तः सन् कर्तृत्वाभिमानं फलाभिसन्धिं वाऽकुर्वन्निति यावत् ॥ २५ ॥

स्वामिकृतटीका ।

तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म कार्य्यमेवेत्युपसंहरति सक्ता इति कर्मणि सक्ताः अभिनिविष्टाः सन्तो यथाऽज्ञाः कर्माणि कुर्वन्ति असक्तः सन् विद्वानपि तथैव कुर्य्याल्लोकसंग्रहं कर्तुमिच्छुः ॥ २५ ॥

भाषा अनुवाद ।

इस वास्ते आत्मज्ञानी को भी लोगों पर कृपा करि शिक्षा देने के अर्थ कर्म्म करना चाहिये इसी को कहते हैं कि हे भारत अर्जुन कर्म्म में आसक्त होकर जैसे अज्ञानी लोग कर्म्म करते हैं तैसे लोगों के उपदेश की इच्छा करि विद्वान कहे ज्ञानी भी कर्म्म करें तो धर्म्म की मार्ग बनी रहैगी ॥ २५ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ २७॥

शाङ्करभाष्यम् ।

अविद्वान् अज्ञः कथं कर्मसु सज्जते इत्याह प्रकृतेरिति प्रकृतेः प्रकृतिः प्रधानं सत्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्य्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः

आनन्दगिरिकृतटीका ।

इत्तमनूद्योत्तरश्लोकमवतारयति एवमिति कर्तव्यं कर्मेति शेषः पूर्वार्द्धमेवं व्याख्याय उत्तरार्द्धं प्रश्नपूर्वकम् अवतार्य्य व्याचष्टे किन्तु कुर्य्यादिति सर्वकर्माणि कारयेत्तेषु प्रीतिं कुर्वन्निति शेषः कथं कारयेदित्याकाङ्क्षायामाह तदेवेति ॥ २६ ॥

स्वामिकृतटीका ।

ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं नेत्याह न बुद्धिभेदमिति अज्ञात एव कर्मसङ्गिनां कर्मासक्तानाम् कर्तात्मोपदेशेन बुद्धेर्भेदमन्यथा त्वं जनयेत् कर्मणः सकाशाद्बुद्धिविचालनं न कुर्य्यात् अपि तु योजयेत् सेवयेत् अज्ञान कर्माणि कारयेदित्यर्थः कथं युक्तोऽवहितो भूत्वा स्वयमाचरन् सन् बुद्धिविचालने कृते सति कर्मसु अश्रद्धानिवृत्ते ज्ञानस्य चानुत्पत्ते-स्तेषामुभयभ्रंशः स्यादिति भावः ॥ २६ ॥

भाषा अनुवाद ।

तो फेरि सब को तत्त्वज्ञानही का उपदेश करना चहिये ऐसा कहो सो नहीं है यह कहते हैं कि अज्ञ जो कर्म्म मे आसक्त हैं तिन को आत्मा का उपदेश देकर बुद्धि का भेद उत्पन्न कभी न करै अर्थात् कर्म्म से उन को न छुड़ावै वरन उन से और भी कर्म्म करावै तो फेर उन से किस तरह कर्म करावै सो कहते हैं कि आप सावधान हो कर्म का आचरन करता हुआ उन से भी करवावै नहीं तो उन की बुद्धि चल विचल करावने से फेरि कर्म मे उन की श्रद्धा चली जायगी और जो ज्ञान की भी उत्पत्ति न भई तो उन की दोनो राह नष्ट गई बिचारे अज्ञानी उधर के भी न भये और इधर से भी चले गये यही होगा ॥ २६ ॥

तत्त्ववित्तु महाबाहो गुणकर्म विभागयोः।
गुणागुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

शाङ्करभाष्यम्।

सर्वप्रकारैरहङ्कारविमूढात्मा कार्यकरणसङ्घातात्मप्रत्ययोऽहङ्कारस्तेन विविधं नानाविधं मूढ़ः आत्मान्तकरणं यस्य सोऽयं कार्य्यकरणधर्माकार्य्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत् तत् कर्मणामहं कर्तेति मन्यते ॥ २७ ॥

यः पुनर्मन्यते विद्वान् तत्त्वविदिति तत्त्ववित्तु महाबाहो कस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्म्मविभागस्य च तत्त्वविदित्यर्थः

आनन्दगिरिकृतटीका।

अज्ञानां कर्म सङ्गिनामित्युक्तं तेनोत्तरश्लोकस्य सङ्गतिमाह अविद्वानिति कर्तृत्वमात्मनोवास्तवमित्यभ्युपगमाद्विद्वान् कथं कुर्वन्नेव तस्याभावं पश्यतीत्याशङ्क्याह प्रकृतेरिति कर्मस्व विदुषः शक्तिप्रकारं प्रकटयन् व्याकरोति प्रकृतेरित्यादिना प्रधानशब्देन माया शक्तिरुच्यते अविद्ययेत्युभयतः संबध्यते ॥ २७ ॥

स्वामिकृतटीका।

ननु विदुषापि चेत् कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशङ्क्योभयोर्विशेषं दर्शयति प्रकृतेरिति द्वाभ्यां प्रकृतेर्गुणैः प्रकृतिकार्य्यैरिन्द्रियैः सर्वप्रकारेण क्रियमाणानि कर्माणि तान्यहमेव कर्त्ता करोमीति मन्यते तत्र हेतुः अहमिति अहङ्कारेणेन्द्रियादिष्वात्माध्यासेन विमूढ़ बुद्धिः सन् ॥ २७ ॥

भाषा अनुवाद।

जो कहो कि इस प्रकार जो ज्ञानी कर्म करे तो अज्ञानी ज्ञानी के बीच क्या विशेष रहा इसी अभिप्राय पर दो श्लोक से दोनो का अन्तर देखावते हैं कि देखो मूढ़ लोग प्रकृति जो माया सोई इन्द्रियों के द्वारा जो सब कर्म करती है उन कर्मो को हम करते हैं ऐसा मानि लेते हैं मानि लेने का कारण यह है कि अहङ्कार से इन्द्रियों मे आत्मा का अध्यास अर्थात् इन्द्रियों को आत्मा जानि कर उन की बुद्धि मूढ़ होगई है ॥ २७ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९॥

शाङ्करभाष्यम्।

गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति ॥ २८ ॥

ये पुनः प्रकृतेरिति प्रकृतेर्गुणैः सम्यक् मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति तान् कर्मसङ्गिनोऽ-

आनन्दगिरिकृतटीका।

अज्ञस्य कर्मसु सक्तिमुक्त्वा विदुषस्तदभावमभिदधाति यः पुनरिति तत्त्वं याथात्म्यं वेत्त्येति व्युत्पत्त्या तत्त्वविदिति शब्देनात्माद्विशिष्टो निर्दिष्टः प्रश्नपूर्वकं द्वितीयपादमवतार्य व्याचष्टे कस्येत्यादिना गुणानामेव गुणेषु वर्तमानत्वमयुक्तं निर्गुणत्वात् तेषामित्याशङ्क्य विभजते गुणा इति कार्यकरणानामेव विषयेषु प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित् कर्मसु दृढतरं कर्तव्याभिमानं न करोतीत्यर्थः ॥ २८ ॥

स्वामिकृतटीका।

विद्वांस्तु तथा न सज्यत इत्याह तत्त्वविदिति नाहं गुणात्मक इति गुणेभ्यः आत्मनो विभागः नमे कर्माणीति कर्मभ्योऽप्यात्मनो विभागः तयोर्गुणकर्मविभागयोर्यस्तत्त्वं वेत्ति स तु न सज्जते कर्तृत्वाभिनिवेशं न करोति तत्र हेतुः गुणा इति गुणा इन्द्रियाणि गुणेषु विषयेषु वर्त्तन्ते नाहमिति मत्वा ॥ २८ ॥

भाषा अनुवाद।

और ज्ञानी ऐसा नहीं मानते हैं सोई कहते हैं कि तत्त्वज्ञानी तो हम इन्द्रियरूप नहीं हैं ऐसे विचार करि इन्द्रियों से आत्मा को जुदा जानते हैं और हमारे कोई भी कर्म नहीं हैं ऐसे विचार कर कर्मों से अपने को पृथक मानते हैं अर्थात् इस प्रकार इन्द्री औ कर्म्म से पृथक बुद्धि होकर जो तत्व वस्तु सो जानते हैं हे अर्जुन वे फेरि कर्म्म मे आसक्त नहीं होते अर्थात् हम करते हैं यह विचार नहीं करते इस का हेतु यह है कि माया के द्वारा सब इन्द्री विषयों मे प्रवृत्त हैं हम सब से अलग हैं यह उन का भली भाँति जाना है ॥ २८ ॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

शाङ्करभाष्यम् ।

कृत्स्नविदः कर्मफलमात्र दर्शिनो मन्दान् मन्दप्रज्ञान् कृत्स्नविदात्मवित् स्वयं न विचालयेत् बुद्धिभेदकरणमेव चालनं तत्र कुर्यादित्यर्थः ॥ २९ ॥

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमित्युच्यते मयीति मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याहंकर्तेश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या किञ्च निराशीः त्यक्ताशीः निर्ममो मम भावश्च निर्गतो यस्य तव स

आनन्दगिरिकृतटीका ।

विद्वानविद्वानित्युभावपि प्रकृत्य विद्वानविदुषो बुद्धिभेदं कुर्यादित्युपसंहरति ये पुनरिति प्रकृतेर्मायाया गुणैर्देहादिभिर्विकारैः संमूढास्तानेवात्मत्वेन प्रत्यक्षगता ये ते गुणानां तेषामेव देहादीनां कर्मसु व्यापारेषु सज्जन्ते सक्तिं दृढतरामात्मीयबुद्धिं कुर्वन्तीत्याह प्रकृतेरित्यादिना तेषामनात्मविदां स्वयमात्मवित् बुद्धिभेदं नापादयेदित्याह तानित्यादिना ॥२९॥

स्वामिकृतटीका ।

न बुद्धिभेदमित्युपसंहरति प्रकृतेरिति यैः प्रकृतेर्गुणैः सत्त्वादिभिः संमूढाः सन्तो गुणेषु इन्द्रियेषु तत्कर्मसु च सज्जन्ते तानकृत्स्नविदो मन्दमतीन् कृत्स्नवित् सर्वज्ञो न विचालयेत् ॥ २९ ॥

भाषा अनुवाद ।

सो कहते हैं कि प्रकृति जो माया तिस के गुण जो सत्त्व रज तम तिन से सम्यक मूढ़ कहे मोह को प्राप्त जो जन हैं तेई गुणों के कर्म में अर्थात् सात्त्विक राजस तामस त्रिगुण कर्म में आसक्त होयके कर्म का सङ्ग करते हैं तिन असंपूर्ण ज्ञानी मन्दमति मनुष्यों को उस कर्म के आनन्द से मगन मन जनों को कर्म करने से उन को जो कृत्स्नवित कहे संपूर्ण ज्ञानी सो न चलावे अर्थात् उन को कर्म रहित न करे ॥ २९ ॥

## ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
## श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥ ३१॥

### शाङ्करभाष्यम्।

त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसन्तापो विगतशोकः सन्नि-त्यर्थः॥ ३०॥

### आनन्दगिरिकृतटीका।

यद्यपि कर्मण्यज्ञोऽधिक्रियते तथापि मोक्ष्यमाणेन तेन कर्म त्यक्तव्यं मोक्षस्य कर्मा-साध्यत्वान्नतु तेन कर्म कर्तुं शक्यं कर्मणः सापेक्षितविरोधित्वादिति शङ्कते कथमिति श्लोकेनोत्तरमाह उच्यत इति यथोक्ते परस्मिन्नात्मनि सर्वकर्मणां समर्पणे कारणमाह अध्यात्मेति विवेकबुद्धिमेव व्याकरोति अहमिति दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तर-माह किञ्चेति त्यक्ताशीः फलप्रार्थनाहीनः सन्नित्यर्थः निर्ममोऽभूत्वा पुत्रभ्रात्रादिष्विति शेषः नतु युद्धे नियोगो नोपपद्यते पुत्रभ्रात्रादिहिंसात्मनस्तस्य सन्तापहेतोः नियोगविष-मत्वायोगादिति तत्राह विगतेति॥ ३०॥

### स्वामिकृतटीका।

तदेवं तत्त्वविदापि कर्म कर्तव्यं त्वन्तु नाद्यापि तत्त्वविदतः कर्मैव कुर्वित्याह मयीति सर्वाणि कर्माणि मयि सन्न्यस्य समर्प्याध्यात्मचेतसान्तर्याम्योऽहं कर्म करोमीति दृष्ट्या निराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदं कर्मेत्येवं ममता शून्यश्च भूत्वा विगत-ज्वरस्त्यक्तशोकश्च भूत्वा युध्यस्व॥ ३०॥

### भाषा अनुवाद।

सो देखो तत्त्वज्ञानी को भी कर्म करना उचित है और कहते आये हैं और तुम तो अभी ऐसे कुछ तत्त्वज्ञानी भये भी नहीं हो इस से अच्छी तरह कर्म करो कर्म करने मे तो तुमारा अधिकारही है यह भग-वान कहते हैं कि आत्मा मे चित्त दे सब कर्म हमारे मे अर्पण करके अर्थात् हम अन्तर्यामी भगवान के आधीन होय कर्म करते हैं और यह हमारा काम है हम करते हैं इस विचार औ फल की आशा छोड़ कर तथा शोक दूर करि तुम निखटका युद्ध करो यह कहा॥ ३०॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥ ३२॥

## शाङ्करभाष्यम्।

यदेतन्मम मतं कर्म्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा येम इति ये मदीयमिदं मत मनुतिष्ठन्ति अनु ववर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधानाः अनसूयवन्तोऽसूया मयि परमगुरौ वासुदेवेऽकुर्वन्तो मुच्यन्ते तेऽप्येवम्भूताः कर्म्मभिर्धर्माधर्माख्यैः॥ ३१॥

येत्विति येतु तद्विपरीता एतत् मम मतं अभ्यसूयन्तो निन्दन्तो नानुतिष्ठन्ति नानुवर्तन्ते मे मतं सर्वेषु ज्ञानेषु विविधं मूढास्ते सर्वज्ञानविमूढां स्तान् विनष्टान् नाशङ्गतानचेतसोऽविवेकिनः॥ २२॥

### आनन्दगिरिकृतटीका।

प्रकृतं भगवतो मतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतां क्रममुक्तिफलं कथयति यदेतदिति शास्त्राचार्य्योपदिष्टे अदृष्टार्थे विश्वासवत्त्वं श्रद्दधानत्वं गुणेषु दोषाविष्करणमसूया अपि मयोक्तायामुक्तेरमुख्यत्वद्योतनार्थः॥ २१॥

भगवन्मताननुवर्तिनां प्रत्यवायित्वं प्रत्याययति येत्विति तद्विपरीतत्वं भगवन्मतानुवर्तिभ्यो वैपरीत्यं तदेव दर्शयति एतदित्यादिना अभ्यसूयन्तस्तत्वासन्तमपि दोषमुद्भाव-

### स्वामिकृतटीका।

एवं कर्मानुष्ठाने गुणमाह ये मे इति मद्वाक्ये श्रद्धावन्तोऽनसूयन्तो दुःखात्मके कर्मणि प्रवर्त्तयतीति दोषदृष्टिमकुर्वन्तश्च ये मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः कर्म कुर्वाणाः सम्यग्ज्ञानिवत् कर्मभिर्मुच्यते॥ २१॥

## भाषा अनुवाद।

इस प्रकार कर्म करने मे उपकार कहते हैं कि जो इस हमारे मत मे श्रद्धायुक्त होय और असूया रहित अर्थी निन्दा न करिके कि दुखदाई कर्म मे हम को प्रवृत्त करते अर्थात् लगावते हैं ऐसी दोष दृष्टि न करके जो कोई यह मेरा मत अङ्गीकार करके करै सो कर्म के द्वारा क्रम क्रम से ज्ञानी की तरह कर्म से मुक्त होय पर होय॥ २१॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

## शाङ्करभाष्यम् ।

कस्मात् पुनः कारणात् त्वदीयं मतं नानुतिष्ठन्तः परधर्माननुतिष्ठन्ति स्वधर्मं नानुतिष्ठन्ति स्वधर्मञ्च नानुवर्तन्ते तत् प्रतिकूलाः कथं न बिभ्यति तच्छासनातिक्रमदोषात् तत्राह सदृशमिति सदृशमनुरूपं चेष्टते चेष्टां करोति कस्याः स्वस्याः स्वकीयायाः प्रकृतेः प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि चेष्टते किं पुनर्मूर्खस्तस्मात् प्रकृतिं यान्ति अनुगच्छन्ति भूतानि निग्रहः निषेधरूपः किं करिष्यति मम चान्यस्य वा ॥ ३३ ॥

## आनन्दगिरिकृतटीका ।

यत्र इत्यर्थः सर्वज्ञानानि सगुणनिर्गुणविषयाणि प्रमाणप्रमेयप्रयोजनविभागतो विविधत्वम् ॥ ३२ ॥

भगवन्मतानुवर्तनमन्तरेण परधर्मानुष्ठाने स्वधर्मानुष्ठाने च कारणं पृच्छति कस्मादिति भगवत्प्रतिकूलत्वमेव तत्र कारणमित्याशङ्क्याह तत्प्रतिकूला इति राजानुशासनातिक्रमे दोषदर्शनात् भगवदनुशासनातिक्रमेऽपि दोषसम्भवात् तत्प्रतिकूलत्वं भयकारणमि-

## स्वामिकृतटीका ।

विपक्षे दोषमाह ये त्वेतदिति ये तु नानुतिष्ठन्ति तानचेतसो विवेकशून्यान् अतएव सर्वेषु कर्मसु ब्रह्मविषये च यज्ज्ञानं तत्र विमूढान्नष्टान् विद्धि ॥ २२ ॥

## भाषा अनुवाद ।

अब इस के विपरीत अर्थात उलटे आचण मे जो दोष सो कहते हैं कि जो लोग इस तरह कर्म न करैं ते बिचार रहित हैं और कर्म तथा ब्रह्मज्ञान मे भ्रष्ट बिवेक जानो सोई कहते हैं कि जो इस मेरे मत की निन्दा करते हुए इस मत मे नहीं प्रवृत्त होते हैं उन को सकल ज्ञान के मूढात्मा नष्ट बुद्धि जानो ॥ ३२ ॥

## इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
## तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

आनन्दगिरिकृतटीका ।

त्वर्थं उत्तरत्वेन श्लोकमवतारयति सदृशमिति सर्वस्य प्राणिवर्गस्य प्रकृति वशवर्तित्वे कैमुतिकन्यायं सूचयति ज्ञानवानपीति सर्वाण्यपि भूतान्यनिच्छन्त्यपि प्रकृति सदृशीं चेष्टां गच्छन्तीति निगमयति प्रकृतिमिति भूतानां प्रकृतेरधीनत्वेऽपि प्रकृतिर्भगवता नियम्येत्याशङ्क्याह निग्रह इति का पुनरियं प्रकृतिर्यदनुसारिणी भूतानां चेष्टेति पृच्छति प्रकृतिर्नामेति भगवदभिप्रेतां प्रकृतिं प्रकटयति पूर्वेति आदिशब्देन ज्ञानेच्छादि संगृह्यते यथोक्तः संस्कारः स्वसत्तया प्रवर्तकश्चेत् प्रलयेऽपि प्रवृत्तिः स्यादित्याशङ्क्य विशिनष्टि वर्तमानेति सर्वो जन्तुरित्युक्तं विवेकिप्रवृत्तेर् तथात्वादित्यिभिप्र विशेषादिति न्यायमनुसरन्नाह ज्ञानवानिति ज्ञानवतामज्ञानवताञ्च प्रकृत्यधीनत्वाविशेषे फलितमाह तस्मादिति प्रकृतिं यान्ति प्रकृति सदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानि इत्यर्थः प्रकृते भगवता तत् तुल्येन वा केनचित् निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति मम चेति ॥ ३३ ॥

स्वामिकृतटीका ।

ननु तर्हि महाफलत्वादिन्द्रियाणि दृष्टा निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति तत्राह सदृशमिति प्रकृतिः प्राचीनकर्मसंस्काराधीनस्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते किं पुनर्वक्तव्यमज्ञश्चेष्टत इति यस्माद्भूतानि सर्वेऽपि प्राणिनः प्रकृतिं यान्ति अनुवर्तन्ते एवञ्च सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलीयस्त्वादित्यर्थः ॥ ३३ ॥

### भाषा अनुवाद ।

जो कहो कि तौफिरि महाफल के अर्थ इन्द्रियोंको निग्रह करके और कामनाको त्यागि के सभीलोग क्यों नहीं इस तरह स्वधर्म का अनुष्ठान करते तो इस पर कहते हैं कि पूर्व कर्मसंस्कार के आधीन जो स्वभाव तिसके अनुसार गुणदोष के ज्ञानवान भी चेष्टा करते हैं तो फिर अज्ञ बचारे जो स्वभाव अनुरूप चेष्टा करते इसमे और क्या कहना है जब कि स्वभाव बलवान है तब कि और इन्द्रियनिग्रह कोई कर सके है तो स्वभाव के अनुरूप चलनां हीं पड़ता है देखो जो स्वभाव प्रबल है तो इन्द्रिय निग्रह करने से क्या फल होगा ॥ ३३ ॥

## शाङ्करभाष्यम् ।

यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते नच प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते इन्द्रियस्येति इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे शब्दादौ रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे रागद्वेषाववश्यम्भाविनौ तत्रायं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते शास्त्रार्थप्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति यदा तदा स्वधर्मपरित्यागः परधर्मानुष्ठानञ्च भवति यदा पुनः रागद्वेषौ तत् प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशस्तस्मात्तयो रागद्वेषयो र्वशं नागच्छेद्यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयो मार्गस्य विघ्नकर्त्तारौ तस्कराविवेत्यर्थः ॥ ३४ ॥

### आनन्दगिरिकृतटीका ।

सर्वस्य भूतवर्गस्य प्रकृतिवशवर्त्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते यदीति ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसम्भवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह नचेति शङ्कितदोषं श्लोकेन परिहरति इदमित्यादिना वीप्सायाः सर्वकरणगोचरत्वं दर्शयति सर्वेति प्रत्यर्थं रागद्वेषयोरव्यवस्थायां प्राप्तौ प्रत्यादिशति इष्ट इति प्रतिविषयं विभागेन तयोरन्यतरस्यावश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्ता प्रागुक्तं दूषणं कथं समाधेयमित्याशङ्काह तत्रेति यतोरित्याद्यवतारितं भागं विभजते शास्त्रार्थस्येति प्रकृतिवशत्वाद्यन्तोर्नैव नियोज्यत्वमित्याशङ्काह यास्हीति रागद्वेषद्वारा प्रकृतिवशवर्त्तित्वे स्वधर्मत्यागादिदुर्वारमित्युक्तमिदानीं विवेकविज्ञानेन रागादिनिवारणे शास्त्रीय दृष्ट्या प्रकृतिपारवश्यं परिहर्तुं शक्यमित्याह यदेति मिथ्याज्ञाननिबन्धनौ हि रागद्वेषौ तत्प्रतिपक्षत्वं विवेकविज्ञानस्य मिथ्याज्ञानविरोधित्वादवधेयं रागद्वेषयोर्मूलनिवृत्त्या निवृत्तौ प्रतिबन्धध्वंसे कार्य्यसिद्धिमभिसन्धायोक्तं तदेति एवकारस्यान्ययोगव्यवच्छेदकत्वं दर्शयति नेति पूर्वोक्तं नियोगमुपसंहरति तस्मादिति तत्र हेतुमाह यत इति हि शब्दोपात्तो हेत्वर्थत इति प्रकटितः स च पूर्वेण तच्छब्देन सम्बन्धनीयः पुरुषपरिपन्थित्वमेव तयोः सोदाहरणं स्फोटयति श्रेयोमार्गस्येति ॥ ३४ ॥

स्वामिकृतटीका ।

नन्वेवं प्रकृत्यधीनैव चेत् पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेधशास्त्रस्य वैयर्थ्यं प्राप्तमित्याशङ्क्याह इन्द्रियस्येन्द्रियस्येति वीप्सया सर्वेषामिन्द्रियाणां प्रत्येकमित्युक्तम् अर्थे स्वस्वविषये अनुकूले रागः प्रतिकूले द्वेष इत्येवं रागद्वेषौ व्यवस्थितौ अवश्यम्भाविनौ ततश्च तदनुरूपाप्रवृत्तिरिति भूतानां प्रकृतिः तथापि तयोर्वशवर्त्ती 'नभवेदिति शास्त्रेण नियम्यते हि यस्मादस्य मुमुक्षो स्तौ परिपन्थिनौ प्रतिपक्षौ अयम् भावः विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहितं पुरुषमनर्थेऽतिगम्भीरे स्रोतसीव प्रकृतेर्बलात् प्रवर्त्तयति शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ तं प्रवर्त्तयति ततश्च गम्भीरस्रोतः पातात् पूर्वमेव नावमाश्रित इव नानर्थं प्राप्नोति तदेवं स्वाभाविकीं पश्वादि सदृशीं प्रवृत्तिं त्यक्त्वा धर्मे प्रवर्तितव्यमित्युक्तम् ॥ ३४ ॥

भाषा अनुवाद ।

जो बलवान स्वभावही के अनुसार कर्म्ममे सबकी प्रवृत्ति है तौ यह कर्म करना औ यह न करना जो शास्त्र विधि औ निषेध करता है सो व्यर्थ है इस शङ्कापर कहते हैं कि इन्द्रियस्य इन्द्रियस्य दुइवार कहने से हरएक इन्द्रियको अपनी अपनी विषय के अनुकूल वस्तुमे प्रीति औ प्रतिकूल विषय मे वैरक्ति कहे विरक्तता रूप राग देषादि अवश्य होगा सो इसी से रागद्वेष के अनुरूप कर्ममे प्रवृत्ति होना यह यद्यपि सबको स्वभाव सिद्ध है पर तौभी रागद्वेषके वशीभूत होना न चाहिये यही शास्त्रों मे नियमकर राखा है क्योंकि मुमुक्षु पुरुष के वेई विघ्नकारी औ विपक्ष हैं तात्पर्य्य यह कि विषयोंके स्मरण के द्वारा रागद्वेष प्रगट करवाय वह स्वभाव असावधान पुरुषोंको अपने बलसे अति जार धारा प्रवाह की नाई अनर्थमे प्रवृत्त करावता है परन्तु शास्त्र तो उस अनर्थ की प्रवृत्ति के पहिले ही विषयोंमे रागद्वेष का प्रतिबन्धक रूप कहे रोकनेवाला जो भगवत का आराधन तिसमे प्रवृत्ति करवाते हैं इससे देखो कि प्रवाह मे परने के पूर्वही नौका को प्राप्तपुरुषके समान उस अनर्थ से शास्त्र द्वारा मनुष्य बचिजाते हैं इससे स्वाभाविक प्राप्त कर्मत्याग करके धर्म्ममे प्रवृत्त होना अवश्य कर्त्तव्य है तात्पर्य्य यह कि हे अर्जुन तुम स्वभाव से प्राप्त करुणाको छोड़िकर युद्ध करो ॥ ३४ ॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ ३५॥**

### शाङ्करभाष्यम्।

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वाद्-नुष्ठेय एवेति तदसत् श्रेयानिति श्रेयान् प्रशस्यतरः स्वधर्मः स्वकीयधर्मो विगुणोऽपि विगतगुणोऽपि अनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्गुण्येन सम्पादितादपि स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् कस्मात् परधर्मो भयावहः नरकादिलक्षणं भयमावहति यतः॥ ३५॥

### आनन्दगिरिकृतटीका।

रागद्वेषयोः श्रेयो मार्गप्रतिपक्षत्वं प्रकटयितुं परमतोपन्यासद्वारा समनन्तरश्लोकमवतार-यति तत्रेत्यादिना व्यवहारभूमिः सप्तम्यर्थः शास्त्रार्थस्यान्यथा प्रतिपत्तिमेव प्रत्याययति परधर्मोऽपीति स्वधर्माद्विपर्येयः अनुमानं दूषयन्नुत्तरत्वेन श्लोकमुत्थापयति तदसदिति चत-धर्माद्युद्धादुरनुष्ठानात् परिव्राट् धर्मस्य भिक्षाशनादिलक्षणस्य स्वानुष्ठेयतया मयाऽपि कर्त-व्यत्वं प्रतिभियाशङ्क्य व्याचष्टे श्रेयानिति उक्तेऽर्थे प्रश्नपूर्वकं हेतुमाह कस्मादित्यादिना स्वधर्म-मवधूय परधर्ममनुतिष्ठतः स्वधर्मातिक्रमकृतदोषस्य दुष्परिहरत्वात्तत्त्यागः साधीया-नित्यर्थः॥ ३५॥

### स्वामिकृतटीका।

तर्हि स्वधर्मस्य युद्धादेः दुःखरूपस्य यथावत् कर्तुमशक्यत्वात् परधर्मस्य चाहिंसादेः सुकरत्वाद्धर्मत्वाविशेषाच्च तत्र प्रवर्तितुमिच्छन्तं प्रत्याह श्रेयानिति किञ्चिदङ्गहीनोऽपि स्वधर्मः श्रेयान् प्रशस्ततरः स्वनुष्ठितात् सकलाङ्गसंपूर्त्या कृतादपि परधर्मात् सकाशात् तत्र हेतुः स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनं मरणमपि श्रेयः स्वर्गादिप्रापकत्वात् पर-धर्मस्तु परस्य भयावहः निषिद्धत्वेन नरकप्रापकत्वात्॥ ३५॥

### भाषा अनुवाद।

स्वाभाविक प्रवृत्ति त्यागकरि के धर्ममे प्रवृत्त होना अवश्य कर्त्तव्य है किन्तु निजधर्म दुःखदायक युद्ध रूपके करने मे असमर्थ औ परधर्म शुभ करनेवाला अहिंसा रूप ये दोनो भी धर्मपन मे समान हैं तो इन दोनो

## अर्जुन उवाच।

**अथ केन प्रयुक्तोऽयं पापञ्चरति पूरुषः।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥ ३६॥**

### शाङ्करभाष्यम्।

यद्यप्यनर्थमूलं ध्यायतो विषयान् पुंसो रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितं च यदुक्तं तत् संक्षिप्तं निश्चितञ्चेदमेवेति ज्ञातुमिच्छन्नर्जुनउवाच ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्य्यामिति अथेति अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्योऽयं पापं कर्म्म चरत्याचरति पुरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय वृष्णिकुल प्रसूत बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्तः॥ ३६॥

### आनन्दगिरिकृतटीका।

प्रागेवानर्थमूलस्योक्तत्वात् पुनस्तज्जिज्ञासया प्रश्नस्यानुपपत्तिरित्याशङ्क्याह यद्यपीति विक्षिप्तं विविधेषु क्षिप्तं दर्शितमिति यावत् अनवधारितमनेकत्वोक्तत्वादनेकवाक्याविवेककामादिभिर्विकल्पितत्वात्त्याद्यर्थः नन्वनर्थमूलं परिहर्त्तव्यं तत् किमिति ज्ञातुमिष्यते तत्राह ज्ञाते हीति कुर्य्यामिति तज्ज्ञानमर्थवदिति शेषः वाक्यारम्भार्थत्वमथशब्दस्य गृहीत्वा प्रश्नवाक्यं व्याकरोति अथेत्यादिना अनिच्छतोऽपि बलादेव दुश्चरिते प्रेरितत्वे दृष्टान्तमाचष्टे राज्ञेवेति विनियोज्यत्वस्येच्छासापेक्षत्वात् तदभावे तदसिद्धिमाशङ्क्य प्रागुक्तं स्मारयति राज्ञेवेत्युक्त इति॥ ३६॥

### भाषा अनुवाद।

के मध्यमे परधर्म होमे प्रवृत्त होने की इच्छा करते हुये अर्जुन के प्रति भगवान कहते हैं कि साङ्गोपाङ्ग सम्पूर्ण किये हुए पर धर्मको अपेक्षा अङ्गहीन होने से भी स्वधर्म श्रेय कहे सुन्दर है अर्थात् स्वधर्म युद्ध आदिमे प्रवृत्त पुरुषका मरण भी श्रेय कहे श्रेष्ठलाभ है क्योंकि उससे स्वर्गादि प्राप्त होता है परन्तु परधर्म भयदायक अर्थात् निषिद्ध है इससे नरक प्राप्तिका कारण होता है सोई कहा कि स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ ३५॥

## श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

### शाङ्करभाष्यम् ।

शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि भगवानुवाच "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः वैराग्यस्याथ मोक्षस्य षणाम्भग इतीङ्गना" ऐश्वर्यादि षट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्त्तते उत्पत्तिं "प्रलयञ्चैव भूतानामागतिं गतिं वेत्तिविद्यामविद्याञ्चयः स वाच्यो भगवानिति" उत्पत्त्यादि विषयञ्च विज्ञानं यस्य स वासुदेवोवाच्यो भगवानिति काम इति काम एष सर्वलोकवशं कुर्वन् शत्रुर्यन्निमित्ता सर्वानर्थ-

### स्वामिकृतटीका ।

तयोर्न वशमागच्छेदित्युक्तं तदेतदशक्यं मन्वानोऽर्जुन उवाच अथेति वृष्णिवंशेऽवतीर्णो-वार्ष्णेयः हे वार्ष्णेय अनर्थरूपं पापं कर्त्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं चरति कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनात् अन्योऽपि तयोर्मूलभूतः कश्चित् प्रवर्तको भवेदिति सम्भावनायाः प्रश्नः ॥ ३६ ॥

### भाषा अनुवाद ।

तयोर्नवश मागच्छेत् इस श्लोक से कहा कि रागद्वेष के वश न होना फेरि विरोध हेतुक युद्ध को स्वधर्म कहि कर आज्ञा देते हैं इस पर अर्जुन कहते हैं कि वृष्णिवंश मे अवतीर्ण हे वार्ष्णेय हे कृष्ण ! अनर्थ रूप पाप करने मे इच्छा न रहते भी किसी की प्रेरणा से यह पुरुष पाप आचरण करता है काम क्रोधको विचारबलसे रोंक के भी मनुष्यको पापकर्म्म करने मे फेरि प्रवृत्ति देख पड़ती है इससे यह जानि पड़े है कि कोई उसका मूलभूत कारण होगा जो बलकरके करवाता है इस सम्भावना पर सन्देह करते हुए अर्जुन ने प्रश्न किया है कि केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥ ३६ ॥

शाङ्करभाष्यम्।

प्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित् क्रोधत्वेनपरिणमतेऽतः क्रोधोऽप्येष एव रजोगुणसमुद्भवो रजश्च तद्गुणश्च रजोगुणः समुद्भवो यस्य सः कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः कामोद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति तृष्णया ह्यहङ्कारितः इति गुणदुःखिनां रजः कार्य्य-सेवादौ प्रवृत्तान् प्रलापः श्रूयते महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा कामेन प्रेरितो जन्तुः पापं करोति अतो विद्ध्येनं काम-मिह संसारे वैरिणम् ॥ ३७ ॥

आनन्दगिरिकृतटीका।

सम्प्रतिपत्तिवचनं प्रस्तौति दृश्यते इति तस्य वैपरीत्यं स्फोरयति सर्वेति अवस्तुनं किमिति प्रस्तूयते तत्राह यं त्वमिति भगवच्छब्दार्थं निर्द्धारयितुं पौराणिकं वचन-मुदाहरति ऐश्वर्य्यस्येति समग्रस्येत्येतत् प्रत्येकं विशेषणैः संबध्यते अथ शब्दस्तथा शब्दपर्य्यायः समुच्चयार्थः मोक्षशब्देन तदुपायो ज्ञानं विवक्ष्यते उदाहृतवचसस्तात्पर्य्यमाह ऐश्वर्य्या-दीति स वाच्यो भगवानिति सम्बन्धः तत्रैव पौराणिकं वाक्यान्तरं पठति उत्पत्तिमिति भूतानामिति प्रत्येकमुत्पत्त्यादिभिः सम्बध्यते कारणार्थौ चोत्पत्तिप्रलयशब्दौ क्रियामात्रस्य पुरुषान्तरगोचरत्वसम्भवादगतिर्गतिस्तेत्यागामिन्यौ सम्पदापदौ सूच्येते वाक्यन्तरस्यापि तात्पर्य्यमाह उत्पत्त्यादीति वेत्तीत्युक्तः साक्षात्कारो विज्ञानमित्युच्यते समग्रैश्वर्य्यादि-सम्पत्ति समुच्चयार्थश्चकारः उक्तलक्षणो भगवान् किमुक्तवानिति तदाह काम इति कामस्य सर्वलोकशत्रुत्वं विशदयति यन्निमित्तेति तथापि कथं तस्यैव क्रोधत्वं तदाह स एष इति कामक्रोधयोरेव हेयत्वद्योतनार्थं कारणं कथयति रजोगुण इति कारणद्वारा कामादेरेव हेयत्वमुक्त्वा कार्य्यद्वारापि तस्य हेयत्वं सूचयति रजोगुणस्येति कामस्य पुरुषप्रवर्तकत्वमेव न रजोगुणजनकत्वमित्याशङ्क्याह कामो हीति तत्रैवानुभवानुसारिणीं लोकप्रसिद्धिं प्रमाणयति तृष्णया हीति तस्य योग्यायोग्यविभागमन्तरेण बहुविषयत्वं दर्शयति महाशन इति बहुविषयत्वप्रयुक्तं कर्म निर्दिशति अत इति सर्वविषयत्वेऽपि कुतोऽस्य पापत्वमित्याशङ्क्याह कामेनेति कामस्योक्तविशेषणवत्त्वे फलितमाह अत इति ॥ ३७ ॥

स्वामिकृतटीका।

अत्रोत्तरं श्रीभगवानुवाच काम एष क्रोध एष इत्यादि यस्त्वया पृष्टो हेतुरेष काम एव ननु क्रोधोऽपि पूर्वं त्वयोक्त इन्द्रियस्येन्द्रियस्यार्थे इत्यत्र सत्यं नासौ ततः पृथक् किन्तु

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्॥ ३८॥

स्वामिकृतटीका

क्रोधोऽप्येष काम एव हि केनचित् प्रतिहतः क्रोधात्मना परिणमते पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेणैकीकृत्योच्यते रजोगुणात् समुद्भवतीति तथा अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामो न जायत इति सूचितम् एनं काममिह मोक्षमार्गे वैरिणं विद्धि अयञ्च वक्ष्यमाणक्रमेण हन्तव्य एव यतो नासौ दानेन सन्धातुं शक्य इत्याह महाशनो महदशनं यस्य दुष्पूर इत्यर्थः न च साम्ना सन्धातुं शक्यो यतो महापाप्मा अत्युग्रः॥ ३७॥

भाषा अनुवाद।

अर्जुन ने जो पूछा कि इच्छाविना भी किसी की प्रेरणा से पुरुष पापाचार में प्रवृत्त होता है इसी का उत्तर भगवान करते हैं कि सबको अपने वश करनेवाला औ प्राणियोंका परमशत्रु सकल अनर्थ की प्राप्तिकारी यह काम जो कामना सोइ किसी कारण से प्रतिहत भया अर्थात् कामना जो सिद्ध न भई तो वही काम वदलकरा रजोगुणसे है जन्म जिसका ऐसा क्रोध रूप होय पुरुष को अहंकार के वश कराय रजोगुणकी सेवामें डाल देता हैं वह क्रोध फेरि महाशन हैं अर्थात् महत भोजन है जिसका सो ऐसा महापाप्मा कहे पापरूप परमशत्रु है यह तुम जानो तात्पर्य्य यह है कि कामही जीवोंको प्रेरणा देता है परन्तु सतोगुणकी वृद्धिहोने से रजोगुणकी क्षय होती है फेरि रजोगुणका कार्य्य काम काम कहे कामना का जन्म नहीं होता है सो इस मोक्ष मार्गके वैरी कामरूप शत्रु की पूर्व कथित उपाय से नाश करना ही उचित है देखो कामना के अनुरूप भोग मिलने से भी उनका भोग चिरकाल करते भी सन्तोष नहीं होता है इसीसे कहा है कि महद्दशन कहे बड़ा खानवाला काम सो भोग करने से भी पूर्ण नहीं होता है॥ ३७॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

शाङ्करभाष्यम् ।

कथ वशात दृष्टान्तैः प्रत्याययति धूमेनेति धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वा दर्शो मलेन च यथोल्वेन गर्भवेष्टनेन जरायुना आवृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥३८॥

किं पुनस्तदिदं शब्दवाच्यं यत् कामेनावृतमित्युच्यते आवृतमिति आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा ज्ञानी हि जानात्यनेन ग्रहमनर्थे-प्रयुक्तः पूर्वमेवातः दुःखी च भवति नित्यमेव अतोऽसौ ज्ञानिनो नित्य-वैरी नतु मूर्खस्य स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिनो एव नित्यवैरी किं रूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरेण दुःखेन पूरणमस्येति दुःपूरोऽतस्तेनानलेन नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन ॥ ३९ ॥

आनन्दगिरिकृतटीका ।

उत्तरश्लोकमवतारयति कथमिति अनेकदृष्टान्तोपादानं प्रतिपत्तिसौकर्यार्थं सहजस्य धूमस्य प्रकाशात्मकवह्निंप्रति आवरणत्वसिद्ध्यर्थं विशिनष्टि अप्रकाशात्मकेनेति ॥ ३८ ॥

स्वामिकृतटीका ।

कामस्य वैरित्वं दर्शयति धूमेनेति धूमेन सहजेन यथा वह्निराव्रियत आच्छाद्यते यथा चादर्शो मलेन आगन्तुकेन यथा चोल्वेन गर्भवेष्टनचर्मणा गर्भः सर्वतो निरुद्ध आवृतस्तथा प्रकारत्रयेणापि तेन कामेनावृतमिदम् ॥ ३८ ॥

भाषा अनुवाद ।

अब विशेषरूप से कामकी प्रबलता दिखावते हुये भगवान कहते हैं कि जैसे धूमसे आग औ मलसे दर्पण उल्वा जो झिल्ली चमड़ा तिससे गर्भ आवृत कहे लपिटे हैं तैसे ही काम जो कामना तिससे यह ज्ञान भी आवृत कहे घेरा है॥ ३८ ॥

आनन्दगिरिकृतटीका ।

सामान्यतो निर्दिष्टं विशेषतो निर्देष्टुं आकाङ्क्षापूर्वकमनन्तरश्लोकमवतारयति किं पुन-रिति कामस्य ज्ञानं प्रत्यावरणसिद्ध्यर्थं ज्ञानिनो नित्यवैरिणेत्यादि विशेषणं प्रतीकमादाय-व्याचष्टे आवृतमित्यादिना ज्ञानिनां प्रति वैरित्वं कामस्य कथमित्याह ज्ञानीहीति अनर्थ-प्राप्तिमन्तरेण कामस्य प्रसङ्गावस्था पूर्वमेवेत्युच्यते अतः शब्देन कामप्रसक्तिरेव परामृश्यते नित्यमेवेत्युत्पन्त्यवस्था कार्यावस्था च कामस्य कथ्यते ननु सर्वस्यापि कामात्मता न प्रयत्नेति कामो नित्यवैरी भवति ततः कुतो ज्ञानिविशेषणमित्याशङ्क्याह नत्विति अज्ञस्य कामो नित्यवैरीत्येतदुपपादयति सहीति कार्यप्राप्तिप्रागवस्था पूर्वमित्युक्ता अर्थ्यति वैरित्वे सत्यपि कामस्य नित्यवैरित्वाभावे फलितमाह अत इति स्वरूपतो नित्यवैरित्वाविशेषेऽपि ज्ञानाज्ञानाभ्यामवान्तरभेदसिद्धिरित्यर्थः आकाङ्क्षाद्वारा प्रकृतं वैरित्वमेव स्फोरयति किं रूपेणेत्यादिना ॥ ३९ ॥

स्वामिकृतटीका ।

इदं शब्दनिर्दिष्टं दर्शयन् वैरित्वं स्फुटयति आवृतमिति इदं विवेकज्ञानं एतेनावृतम् अज्ञस्य खलु भोगसमये कामःसुखहेतुरेव परिणामे तु वैरित्वं प्रतिपद्यते ज्ञानिनः पुन-स्तत्कालमप्यनर्थानुसन्धानाद् दुःखहेतुरेवेति नित्यवैरिणेत्युक्तं किञ्च विषयैः पूर्यमाणोऽपि यो दुःपूरः अपूर्यमाणस्तु शोकसन्तापहेतुत्वादनलतुल्यः अनेन सर्वान् प्रतिवैरित्वमुक्तम् ॥३९॥

भाषा अनुवाद ।

फेरि भी कामका वैरित्व प्रकाश करते हैं कि विवेक ज्ञान उसी कामसे आवृत होता है यद्यपि अज्ञानी मनुष्यको यह कामभोग समय में सुखका हेतु है पर तौ भी शेष मे वैरभाव प्रगट करता है इसीसे ज्ञानी लोगोंको भोगकाल मे भी अनर्थ हो जानि पड़ता है क्योंकि यह काम दुखका कारण है हे कौन्तेय अर्जुन देखो काम अनेकदिन विषय भोग करते भी सन्तोष नहीं पावता वरन् दिन दिन और इच्छा वढ़ती ही जाती है जैसे आग इन्धनपाय अधिक अधिक वढ़ती परन्तु सन्तुष्ट नहीं होती है और जो कदाचित विषय भोग न मिला या असामर्थ्य निर्बलता से भोग ही नकरसके तो शोक सन्ताप होता है इससे आखिर मे तो दुख छोड़ सुखका लेस भी नहीं है तो प्रथम ही क्यों न छोड़े ॥ ३९ ॥

इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥ ४०॥

शाङ्करभाष्यम्।

किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन निवर्हणं कर्तुं शक्य इति इन्द्रियाणीति इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमुच्यते एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयत्येषकामो ज्ञानमावृत्याच्छाद्य देहिनं शरीरिणम्॥ ४०॥

आनन्दगिरिकृतटीका।

कामस्य निराश्रयस्य कार्य्यकरत्वाभावं मत्वा प्रश्नपूर्वकमाश्रयं दर्शयति किमधिष्ठान इति कामस्य नित्यवैरित्वेन परिज्ञितोऽपि तस्य किमित्यधिष्ठानं ज्ञाप्यते तत्राह ज्ञाते हीति इन्द्रियादीनां कामाधिष्ठानत्वं प्रकटयति एतैरिति नन्वेताभिरिति वक्तव्ये कथमेतैरित्युच्यते तत्राह इन्द्रियादिभिरिति॥ ४०॥

स्वामिकृतटीका।

इदानीं तस्याधिष्ठानं कथयन् जयोपायमाह इन्द्रियाणीति द्वाभ्यां विषयदर्शनश्रवणादिभिः संकल्पेनाध्यवसायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चयत चित्तप्रणिधानेन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति इन्द्रियाणीति इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः सूक्ष्मत्वात् प्रकाशकत्वाच्च अतएव तद्व्यतिरिक्तत्वमत्यर्थादुक्तं भवति इन्द्रियेभ्यश्च संकल्पात्मकं मनः परं तत् प्रवर्तकत्वात् मनसस्तु निश्चयात्मिका बुद्धिः परा निश्चयपूर्वकत्वात् संकल्पस्य यस्तु बुद्धेः साधिष्ठानमुच्यते एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति॥ ४०॥

भाषा अनुवाद।

अब काम के रहने की जगह और इसके जय करने को उपाय दो श्लोक से कहते हैं कि विषयोंका इन्द्रियोंके द्वारा भोग होता है और मनसे सङ्कल्परूप विषय वासना मानसिक कर्म्म तथा बुद्धिसे निश्चय

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

शाङ्करभाष्यम् ।

यत एवं तस्मादिति तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहि परित्यज हि यस्मात् एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्य्यतश्च आत्मादीनामवबोधः वज्ञानं विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशस्तन्नाशनं प्रजहि आत्मनः परित्यजेत्यर्थः ॥ ४१ ॥

आनन्दगिरिकृतटीका ।

तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्तव्यत्वमाह यत इति तस्मादिति इन्द्रियादीनामाश्रयत्वादिति यावत् पूर्वं कामनिरोधात् प्रागवस्थायामित्यर्थः तेषु नियमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत् प्रवृत्तेरितरप्रवृत्ति व्यतिरेकेणाफलत्वादिति भावः पापमूलतया कामस्य तच्छब्दवाच्यत्वमुक्तेयं कामस्य परित्यज्यत्वं वैरित्वं हेतुस्तमेव हेतुं साधयति ज्ञानेति विज्ञानज्ञानशब्दयोरर्थभेदमावेदयति ज्ञानमित्यादिना ॥ ४१ ॥

स्वामिकृतटीका ।

यस्मादेवं तस्मादिति तस्मदादौ विमोहात् पूर्वमेवेन्द्रियाणि मनो बुद्धिञ्च नियम्य पाप्मानं पापरूपमेनं कामं हि स्फुटं प्रजहि घातय यद्वा प्रजहि परित्यज ज्ञानमात्मविषयं विज्ञानं शास्त्रीयं तयोर्नाशनं यद्वा ज्ञानं शास्त्राचार्य्योपदेशजं विज्ञानं निदिध्यासजं तमेव धीरो विज्ञाय प्रज्ञां कुर्वीतेति श्रुतेः ॥ ४१ ॥

**भाषा अनुवाद ।**

होना अर्थात् यह काम अवश्य करेंगे इन सब बातोंसे जाना गया कि मन बुद्धि औ इन्द्री ये कामना के आधार स्थान हैं अर्थात् उत्पत्ति और रहने की जगह हैं सोई काम विवेक ज्ञानको आच्छादन कहे घेरि कै देही जो आत्मा उसको मोहयुक्त कर देता है फेर वह भूलसे काम वश होय खराव होता फिरता है ॥ ४० ॥

तिस कारण से मोह होने के प्रथम हीं ये सब इन्द्री औ मन तथा

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥ ४२ ॥

शाङ्करभाष्यम् ।

इन्द्रियाणि आदौ नियम्य कामं शत्रुं जहि इत्युक्तं तत्र किमाश्रयः कामं जह्यादित्युच्यते इन्द्रियाणीति इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहुः पण्डितास्तथेन्द्रियेभ्यः परं मनः सङ्कल्पात्मकं तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरोऽयं देहिनं इन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं बुद्धेः परतस्तु सः स बुद्धेर्द्रष्टा परमात्मा ॥ ४२ ॥

आनन्दगिरिकृतटीका ।

पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानोऽधिष्ठानत्यागोक्तिमेव स्पष्टीकर्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति इन्द्रियाणीत्यादिना पञ्चेति ज्ञानेन्द्रियवत् कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते किमपेक्षया तेषां परत्वं तत्राह देहमिति तथापि केन प्रकारेण परत्वं तदाह सौक्ष्म्येति आदिशब्देन कारणत्वादि गृह्यते इन्द्रियापेक्षया सूक्ष्मत्वादिना मनसः सङ्कल्पोक्तिपूर्वकं परत्वं कथयति तथेति मनसि दर्शितं न्यायं बुद्धावतिदिशति तथा मनसस्त्विति यो बुद्धेरित्यादि व्याचष्टे तथेत्यादिना आत्मनो यथोक्तविशेषणस्य प्रकृतत्वमाशङ्क्याह यं देहिनमिति ॥ ४२ ॥

स्वामिकृतटीका ।

परतस्तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा तं विमोहयति देहिनमिति देहिशब्दोक्त आत्मा स इति परामृश्यते ॥ ४२ ॥ ॥

भाषा अनुवाद ।

बुद्धिको नियम्य कहे काबूकर वा रोककर पापरूप कामको हे भरतर्षभ अर्जुन अच्छीतरह नाश करो अथवा त्याग करो क्योंकि यह काम आत्मज्ञान और शास्त्रोक्त जो विज्ञान तिन दोनों का नाशक है इसको आत्माका परम वैरी जानो यह भगवानने कहा ॥ ४१ ॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्म
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

### शाङ्करभाष्यम् ।

ततः किं एवमिति एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् संस्तम्भनं कृत्वा स्वेनैवात्मना संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः जह्येनं शत्रुं महाबाहो कामरूपं दुरासदं दुःखेनासदः आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥

इति भाष्ये तृतीयोऽध्यायः ॥ ३ ॥

### आनन्दगिरिकृतटीका ।

इन्द्रियादिसमाधानपूर्वकमात्मज्ञानात् कामजयो भवतीत्युपसंहरति एवमित्यादिना संस्कृतं सम्यो मनःसमाधाने हेतुरिति सूचयति संस्तभ्येति प्रकृतं शत्रुमेव विशिनष्टि कामरूपमिति तस्य दुरासदत्वे हेतुमाह दुर्विज्ञेयेति अनेको विशेषस्तादृशो महाशनत्वादिस्तद्वत्त्वेनोपायभूता कर्मनिष्ठा प्राधान्येनोक्ता उपेयात् तु ज्ञाननिष्ठा गुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥

इति आनन्दगिरिकृतटीकायां तृतीयोऽध्यायः ॥ ३ ॥

### भाषा अनुवाद ।

अब जिससे मनुष्य चित्तको सावधानकरि आत्मामें लगाय इन्द्रियोंको वशकरने सके सोई आत्माका स्वरूप देहादिसे भिन्न देखावते हैं कि देह आदि बाह्यकहे बाहर के स्थूलपदार्थोंसे इन्द्री सूक्ष्म औ पर हैं अर्थात् श्रेष्ठ हैं और इन्द्रियोंसे भी सङ्कल्पात्मक मन इन्द्रियोंको विषयों

स्वामिकृतटीका ॥

उपसंहरति एवमिति बुद्धेरेव विषयेन्द्रियादिजन्याः कामादिविक्रियाः आत्मा तु निर्विकारस्तत्साक्षीत्येव बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवंभूतया निश्चयात्मिकया बुद्ध्या आत्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपिणं शत्रुं जहि मारय दुरासदं दुःखेनासादनीयं दुर्विज्ञेयमित्यर्थः स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः तं कृष्णं परमानन्दं तोषयेत् सर्वकर्मभिः ॥ ४३ ॥

इति श्रीधरस्वामिकृतटीकायां तृतीयोऽध्यायः ॥ ३ ॥

## भाषा अनुवाद ।

मे प्रवृत्ति करावनेवाला पर है अर्थात् सूक्ष्म औ श्रेष्ठ है अथवा इन्द्रियोंसे भिन्न जानो और मनको अपेक्षा निश्चय शक्तिरूप बुद्धिश्रेष्ठ है या भिन्न है क्योंकि मनके सङ्कल्पको यह बुद्धि रोक सकती है और जो बुद्धिसे भी परे अर्थात् श्रेष्ठ किम्वा पृथक् और साक्षीरूप जो सबके अन्तर मे टिका है सोई आत्मा है देखो तिसको यह दुष्टकाम नित्त नित्त मोहयुक्त करता है ॥ ४२ ॥

अब कहते हैं कि विषय औ इन्द्रियोंसे काम आदि विकारयुक्त बुद्धि ही होती है और आत्मा निर्विकार बुद्धिका साक्षीरूप और उससे पृथक है इससे आत्माको श्रेष्ठ जानि और ऐसी निश्चयरूप बुद्धिसे मनको निश्चल करके हे महाबाहो दुखका दरवाजा निवारण करने के योग्य यह कामरूपी दुष्ट दुर्जय शत्रुको जीतो ॥ ४३ ॥

इति पण्डित जगन्नाथ शुक्लविरचितायां मनभावनीटीकायां तृतीयोऽध्यायः ॥ ३ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

शाङ्करभाष्यम् ।

एवमिति एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च ते ऋषयश्च राजर्षयो विदुरिमं योगं स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसम्प्रदायः सम्भूतो हे परन्तप आत्मनो विपक्षभूताः परे उच्यन्ते तान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परन्तपः शत्रुतापन इत्यर्थः ॥ २ ॥

आनन्दगिरिकृतटीका ।

यथोक्ते योगे परम्परागतेः विशिष्टजनसम्मतिमुदाहरति एवमिति तस्य कथं नष्टिः यन्नाशतं तदाह सकालेनेति पूर्वार्द्धं व्याकरोति एवमित्यादिना ऐश्वर्यसमन्वितमर्थ राजत्वं तेषामेव ऋष्यार्थनिरीक्षणसमत्वर्षित्वमित्युक्तेति भगवतोऽर्जुनेन सह संव्यवहारकालो वक्ष्यते परन्तपेति सम्बोधनं विभजते आत्मन इति ॥ २ ॥

श्रीधरकृतटीका ।

एवमिति एवं राजानश्च ते ऋषयश्चेति चान्येऽपि राजर्षयो निमिप्रमुखाः स्वपितादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्ति स अद्यतनानामप्राप्ते कालवशादिह हे परन्तप शत्रुतापन स योगः कालवशादिह लोके नष्टो विच्छिन्नः ॥ २ ॥

भाषा अनुवाद ।

सामवेद के अन्तर्गत जो ब्रह्म प्रतिपादक तत्त्वमसि महावाक्य है तिसके तत्पद औ त्वम्पद के विचार के अर्थ कर्मयोग की प्रसंशा करते हुए गीता शास्त्र की अभिप्राय जो प्रवृत्ति निवृत्ति लक्षण ज्ञानयोग औ कर्मयोग सो दो अध्याय से कहिचुके यह मानते हुए अब वंश कथन से उस कर्मयोग की स्तुति करते हैं कि यही कर्मयोग मैंने पूर्वकाल में सूर्य से कहा था औ सूर्य ने अपने पुत्र श्राद्धदेव मनु से कहा औ मनु ने फिर अपने पुत्र इक्ष्वाकु राजा से कहा था ऐसे परम्परा यह कर्मयोग चला आता था ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

## शाङ्करभाष्यम्।

दुर्बलान् अजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकञ्चापुरुषार्थसम्बन्धिनं स एवायमिति स एवायं मया ते तुभ्यमद्येदानीं योगः प्रोक्तः पुरातनः भक्तोसि मे सखा चासीति रहस्यं हि यस्मादेतदुत्तमं योगं ज्ञानमित्यर्थः ॥ ३ ॥

## आनन्दगिरिकृतटीका।

किमिति वर्त्तमाने काले प्रकृतो योगः सम्प्रदायरहितोभूदित्याशंक्याधिकार्यभावादित्याह दुर्बलानिति तदेव दौर्बल्यम् प्रकृतोपयोगित्वेन व्याकरोति अजितेन्द्रियानिति यद्यपि कामक्रोधादिप्रधानान् पुरुषान् प्राप्य कामक्रोधादिभिरभिभूय मनोयोगो नष्टोविच्छिन्नसम्प्रदायः सञ्जातस्तथापि योगादृते पुरुषार्थो लोकस्य लभ्यते चेत् किमनेन योगोपदेशेनेत्याशंक्य यथोक्तयोगाभावेपरमपुरुषार्थाप्राप्तिरेवेत्याह लोकञ्चेति पूर्वोयोगोविच्छिन्नसम्प्रदायोऽधुना त्वय्ययोगोमद्दर्थमुच्यते भगवतेत्याशंक्याह स एवेति कस्मादन्यस्मै कस्मैचित् पुरातनोयोगोनोक्तोभगवतेत्याशंक्याह भक्तोसीति उक्तमधिकारित्वं प्रतियोगस्य वक्तव्यत्वे हेतुमाह रहस्यं हीति अनादिवेदमूलत्वात् योगस्य पुरातनत्वं भक्तिः शरणबुद्ध्या प्रीतिस्तया युक्तो निजरूपमवेत्य भक्तो विपश्चितः समानवयः स्निग्धः सखेत्युच्यते एवञ्चेति कथं योगोविशेष्यते तत्राह योगमिति ॥ ३ ॥

## स्वामिकृतटीका।

स एवायमिति स एवायं योगोयोगविच्छिन्ने सम्प्रदायेसति पुनश्च मयाते तुभ्यमुक्तः यतस्त्वं मम भक्तोऽसि सखा च अन्यस्मै मया नोच्यते हि यस्मादेतदुत्तमं रहस्यम् ॥ ३ ॥

## भाषा अनुवाद।

इसीप्रकार इस कर्मयोग को परम्परा प्राप्त कहैं एक से दूसरा दूसरे से तीसरे ऐसे राजऋषि लोग जानते चले आते थे पर अब हे परन्तप-अर्थात् तापन अर्जुन वह कर्मयोग बहुतकाल पायकर नष्ट होगया है ॥ २ ॥

सोई कर्मयोग जो परम्परा सम्प्रदाय से संसार मे न रहा अब फेरि हमने तुम से कहा क्योंकि तुम मेरे भक्त हो और मित्र भी हो नहीं तो

## अर्जुन उवाच ।

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

स्वामिकृतटीका

भगवता विप्रतिषिद्धमुक्तमिति माभूत् कस्यचित् बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन् अर्जुन उवाच अपरमिति अपरमर्वाक् वसुदेव गृहे भगवतो जन्म परं पूर्वं सर्गादौ जन्मोत्पत्तिर्विवस्वत आदित्यस्य तत् कथमेतद्विजानीया मविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिमं योगं स एव त्वमिदानीं मह्यं प्रोक्तवानसीति ॥ ४ ॥

आनन्दगिरिकृतटीका ।

भगवति लोकस्यानीश्वरत्वशङ्कां निवर्त्तयितुम् चोद्यमुद्भावयति भगवतेति परिहारार्थंभगवतो मनुष्यवदत्रस्थितस्यानीश्वरत्वमुपेत्य तद्वचने शङ्कितविप्रतिषेधस्येतिशेषः भगवतो निजरूपमुपेत्य वेदं चोद्यं किन्तु लीलाविग्रहं स्फुटीत्वेति वक्तुम् चोद्यमिवेत्युक्तम् एतच्छब्दार्थमेव स्फुटयति यस्त्वमिति ॥ ४ ॥

स्वामिकृतटीका ।

भगवतो विवस्वन्तं प्रति योगोपदेशासम्भवं पश्यन्नर्जुन उवाच अपरमिति अपरं अर्वाचीनं तव जन्म परं प्राक्कालीनं विवस्वतोजन्म तस्मात्तवाधुनातनत्वाच्चिरन्तनाय विवस्वते त्वमादौ योगं प्रोक्तवानित्येवत् कथमहं जानीयां ज्ञातुंशक्नुयाम् ॥ ४ ॥

### भाषा अनुवाद ।

मैने फिर और किसी से इसको नहीं कहा और न कोई मेरा भक्त छोड़ इसके कहने योग्य है ॥ ३ ॥

जब भगवान ने ऐसे कहा कि प्रथम हमने सूर्य्यसे यही कर्म्मयोग कहा था तबतो अर्जुन सन्देह युक्त होय पूछा कि हे महाराज अपरकहे इस समय मे तो आप का जन्म भया है और पर कहे पूर्वकाल मे विवस्वान जो सूर्य तिनका जन्म भया था इससे नवीन जो आप सो प्राचीन

## श्रीभगवानुवाच ।

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥**

### शाङ्करभाष्यम् ।

या वासुदेवे अनीश्वरा सर्वज्ञा शङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच यदर्थो ह्यर्जुनस्य प्रश्नः बहूनीति बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन तान्यहं वेद जाने सर्वाणि न त्वं वेत्थ न जानीषे परन्तप धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वादहं पुनर्नित्यशुद्धबुद्धमुक्तसत्यस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हे परन्तप ॥ ५ ॥

### आनन्दगिरिकृतटीका ।

भगवत्यज्ञानां मनुष्यत्वशङ्कां वारयितुं प्रतिवचनमवतारयति या वासुदेव इति अन्यथा प्रश्ने कथमाशङ्कान्तरं परिहर्तुं भगवद्वचनमित्याशङ्क्य प्रतिवचनयोरेकार्थत्वमाह यदर्थो हीति यस्य शङ्कितस्य विरोधस्य परिहारार्थः तस्य प्रश्नस्तमेव परिहारं वक्तुम् भगवद्वचनमित्यर्थः अतीतानेकजन्मवत्त्वम् ममैव नासाधारणं किन्तु सर्वप्राणिसाधारणमित्याह तवचेति तानि प्रमाणाभावान्नप्रतिभान्तीत्याशंक्याह तानीति ईश्वरस्यानाहतज्ञानत्वादित्यर्थः किमिति तर्हि तानि मम न प्रतीयन्ते तत्राहतज्ञानत्वादित्याह नत्वमिति परान् परिकल्प्य तत्परिभवार्थं प्रवृत्तत्वात् तवज्ञानावरणं विज्ञेयमित्याह परन्तपेति अर्जुनस्य भगवता सहातीतानेक जन्मवत्त्वे तुल्येऽपि ज्ञानवैषम्ये हेतुमाह धर्मेति आदिशब्देन रागलोभादयो गृह्यन्ते ईश्वरस्यातीतानागतवर्त्तमान सर्वार्थविषयज्ञानत्वे हेतुमाह अहमिति ॥ ५ ॥

### भाषा अनुवाद ।

सूर्य्यके प्रति कर्म्मयोग जो कहा यह हम किसतरह से जानैं कि तुमने सूर्य्यसे प्रथम कहा था यह हमै असम्भव ऐसा जानि पड़ै है दूसरा अर्थ यह कि अपर कहे और भी पूर्वकाल मे आपका जन्म भया था कि सूर्य्यही का पर कहे इस समय मे कोई जन्म भया है नहीं तो यह आप का कहना जो असम्भव है सो हम कैसे सत्यकर जानै कि तुमने सूर्य्यसे यह योग कहा है ॥ ४ ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥

शाङ्करभाष्यम् ।

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेपि जन्मेत्युच्यते अजोपीति अजोपि जन्मरहितोऽपि संस्तथा व्ययात्मा अक्षीण ज्ञानशक्ति स्वभावोऽपिसन् तथाभूतानां ब्रह्मादिस्तम्ब पर्य्यन्तानाम् ईश्वरईशनशीलोपिसन् प्रकृतिम् मायां मम वैष्णवीं त्रिगुणात्मिकां यस्यावशे सर्वं जगत् वर्त्तते यया मोहितः सन् स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्टाय वशीकृत्य सम्भवामि देहवानिव भवामि जात इवात्ममायया न परमार्थतो लोकवत् ॥ ६ ॥

आनन्दगिरिकृतटीका ।

ईश्वरस्य कारणाभावात् जन्मैवायुक्तमतीतानेकजन्मवत्वन्तु दूरोत्सारितमिति शङ्कते कथमिति वस्तुतो जन्माभावेऽपि मायावशाज्जन्मसम्भवतीत्युत्तरमाह उच्यत इति पारमार्थिकजन्मायोगे कारणं पूर्वार्द्धेनानूद्य प्रातिभासिकजन्मसम्भवेकारणमाह प्रकृतिमिति प्रकृतिशब्दस्य स्वरूपविषयत्वं प्रत्यादेष्टुमात्ममायेत्युक्तं वस्तुतो जन्माभावे कारणानुवादभागं विवृणोति अजोऽपीत्यादिना प्रातिभासिकजन्मसम्भवे कारणकथनं परमुत्तरार्द्धं विभजते

स्वामिकृतटीका ।

रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरम् श्रीभगवानुवाच बहूनीति तान्यहंवेद वेद्मि शक्तित्वात् त्वन्तु न वेत्थ वेत्सि अविद्यावृतत्वात् ॥ ५ ॥

भाषा अनुवाद ।

तब तो श्रीभगवान बोले कि हे अर्जुन हां मैंने और जन्ममें उपदेश किया था सन्देह न करो हमारे और तुमारे भी बहुत जन्म होयबीते हैं पर उन सबको हम जानते हैं और तुम नहीं जानते हो क्योंकि हमारी ज्ञानशक्ति जाती नहीं बनीरहती है और तुम अविद्या कहे अज्ञान तिससे आवृत कहे घेरे हो इस कारण नहीं जानते ॥ ५ ॥

आनन्दगिरिकृतटीका ।

प्रकृतिमित्यादिना प्रकृतिशब्दस्य स्वरूपशब्दपर्य्यायत्वं वारयति मायामिति तस्याः स्वातन्त्र्यं निराकरोति भगवदधीनत्वमाह ममेति तस्याश्च अधिकरणद्वारेणावच्छिन्नत्वं सूचयति वैष्णवीमिति मायाशब्दस्यापि प्रज्ञानाम सुपाठाद्विज्ञानशक्तिविषयत्वमाशङ्क्याह त्रिगुणात्मिकामिति तस्याः कार्य्यलिङ्गकमनुमानं सूचयति यस्या इति जगतो मायावशवर्तित्वमेव स्फुटयति ययेति यथा लोके कश्चिज्जातो देहवानालक्ष्यते एवमहमपि मायामाश्रित्य तया स्ववशया सम्भवामि तेन मायामयमीश्वरस्य जन्मेत्याह तां प्रकृतिमित्यादिना सम्भवामि इत्युक्तमेव विभजते देहवानिति अस्मदादेरिव तथापि परमार्थिकत्वाभिमानो जन्मादिविषये स्यादित्याशङ्क्य प्रागुक्तस्वरूपपरिज्ञानत्वादीश्वरस्य नैवमित्याह न परमार्थत इति आदृत ज्ञानवतो लोकस्य जन्मादिविषये परमार्थत्वाभिमानः सम्भवतीत्याह लोकवदिति ॥ ६ ॥

स्वामिकृतटीका ।

ननु अनादे स्तव कुतोजन्म अविनाशिनश्च कथं पुनः पुनर्जन्म येन बहूनि मे व्यतीतानीत्युच्यते ईश्वरस्य तव पुण्यपापविहीनस्य कथं वा जीववज्जन्मेत्यत आह अजोऽपीति सत्यमेवं अथापि अजोऽपि जन्मशून्योऽपि सन्नहं तथाऽव्ययात्मापि अनश्वरस्वभावोऽपिसन् तथा ईश्वरोऽपि कर्मपारतन्त्र्यरहितोऽपि सन् स्वमायया सम्भवामि सम्यक् प्रच्युतज्ञानवलवीर्यादिशक्त्यैव भवामि ननु तथापि षोड़शकलात्मकलिङ्गदेहशून्यस्य च तव कुतो जन्म इत्यत उक्तम् स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्जितसत्त्वमूर्त्या स्वेच्छयावतरामीत्यर्थः ॥ ६ ॥

## भाषा अनुवाद ।

जो कहो कि अनादि जो तुम तुमारा जन्म कैसे और अविनाशी हो तुम तुमारा पुनर्जन्महीं वा कैसे सम्भव होय जो कहते होकि बहुत जन्म हमारे व्यतीत भये हैं और भो तुम ईश्वर तुमारे पुन्य औ पाप दोनो भी नहीं तो फेरि जीवके समान तुमारा जन्म कैसे सम्भव होय तिसपर कहते हैं कि हां यह बात तो ठीक है पर हम जन्म राहत और अविनाशी स्वभाव होके भी तथा ईश्वर अर्थात् कर्म्मके वश नहीं भी हैं पर तो भी अपनी मायाके द्वारा स्वइच्छा से प्रगट होते हैं और जो कहो कि तौभी पञ्च ज्ञान इन्द्री औ पञ्च कर्म्म इन्द्री तथा पञ्च प्राण और

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

शाङ्करभाष्यम् ।

तच्च जन्म कदा किमर्थं वेत्युच्यते यदेति यदा यदा हि धर्मस्य ग्लानिर्हानि-र्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदय निश्रेयससाधनस्य अभावो भवति भारत अभ्युत्थानम् समुद्भवोऽधर्मस्य तदा तदात्मानं सृजाम्यहं मायया ॥ ७ ॥

आनन्दगिरिकृतटीका ।

यदीश्वरस्य माया निबन्धनं जन्मेत्युक्तं तस्य प्रश्नपूर्वकं कालं कथयति तच्चेत्यादिना चातुर्वर्ण्ये चातुराश्रम्ये च यथावदनुष्ठीयमाने नास्ति धर्महानिरिति मन्वानो विशिनष्टि वर्णेति वर्णैराश्रमैस्तदाचारैश्च लक्ष्यते ज्ञायते धर्मः तस्येति यावत् धर्महानौ समस्तपुरु-षार्थभङ्गो भवतीत्यभिप्रेत्याह प्राणिनामिति नच यथोक्तं सर्वधर्मस्य हानिं सोढुं शक्तो भवानित्याह भारतेति न केवलं प्राणिनां धर्महानिरेव भगवतो मायाविग्रहस्य परि-ग्रहे हेतुरपि तु तेषामधर्मप्रवृत्तिरपीत्याह अभ्युत्थानमिति यदा यदेति पूर्वेण सम्बन्धः ॥७॥

स्वामिकृतटीका ।

कदासम्भवसीत्यपेक्षयामाह यदा यदेति ग्लानिर्हानिः अभ्युत्थानमाधिक्यम् ॥ ७ ॥

भाषा अनुवाद ।

एक अन्तःकरण ये सोरह कलारूप लिङ्ग शरीर के विना किस तरह तुम्हारा जन्म होना सम्भव हुय इसपर कहते हैं कि हम अपनी शुद्ध सत्त्वात्मक प्रकृति को स्वीकार करि अति जाज्वल्यमान सत्वमूर्त्ति से स्वेच्छाधीन आप से आप अवतार लेते हैं ॥ ६ ॥

तो अपनी इच्छासे कव आप जन्मग्रहण करते हो इस अपेक्षा पर कहते हैं कि हे भारत भरतवंशी अर्जुन जव जव धर्म्मकी ग्लानि अर्थात् हानि होती है और अधर्म्मका अभ्युत्थान कहे वृद्धि होती तव तव हम शरीर धारन करतेहैं ॥ ७ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ ८ ॥

शाङ्करभाष्यम्।

किमर्थं परित्राणायेति परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय च दुष्कृताम् पापकारिणाम् किञ्च धर्मस्य संस्थापनार्थाय सम्यक् स्थापनं तदर्थम् सम्भवामि युगे युगे प्रतियुगम् ॥ ८ ॥

आनन्दगिरिकृतटीका।

यथोक्ते काले कृतकृत्यस्य भगवतो मायाकृते जन्मनि प्रश्नपूर्वकं प्रयोजनमाह किमर्थमित्यादिना यथा साधूनां रक्षणमसाधूनां निग्रहश्च भगवदवतारफलं तथा फलान्तरमपि तस्यास्तीत्याह किञ्चेति धर्मे हि स्थापिते जगदेव स्थापितं भवत्यन्यथा भिन्नमर्यादं जगद्सङ्कटमापद्यतेत्यर्थः ॥ ८ ॥

स्वामिकृतटीका।

किमर्थमित्यपेक्षायामाह परित्राणायेति साधूनां स्वधर्मवर्त्तिनां रक्षणाय दुष्टं कर्म कुर्वन्तीति दुष्कृतस्तेषां वधाय च एवं धर्मं संस्थापनमर्थाय साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुं युगे युगे तत्तदवसरे सम्भवामीत्यर्थः नचैवं दुष्टनिग्रहं कुर्वतोऽपि नैर्घृण्यं शङ्कनीयमथाङ्कः लालने ताड़ने मातुर्नाकारुण्यं यथार्भके तद्वदेव महेशस्य नियन्तुर्गुणदोषयोरिति ॥ ८ ॥

भाषा अनुवाद।

जो कहो कि ऐसे समय में आप क्यों शरीर धारण कर अवतारलेते हो तो कहते हैं कि साधु कहे स्वधर्म्म के करनेवले लोग उनकी रक्षा और दुःकृत कहे अधर्म्मी पापी जनोंके नाशके हेतु मैं जन्म लेता हूं इससे यह आया कि धर्म्मका स्थापन औ साधुका रक्षण दुष्टोंका वधकरिके मैं धर्म्मकी वृद्धि करने को सोई सोई समय में शरीर ग्रहण करता हूं वही कहा कि सम्भवामि युगे युगे जो कोई शङ्का करै कि दुष्टनाश करने से भगवान को निर्दयता आवती है तो ऐसा कभी कहना नहीं देखो माता पिता गुरु ये जो पुत्र शिष्यको शिक्षाके हेतु ताड़न करते हैं तो क्या निर्दई हैं

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

शाङ्करभाष्यम् ।

जन्मेति तत् जन्म मायारूपम् कर्म च साधूनां परित्राणादि मे मम दिव्यम् प्राकृतमैश्वरमेवं यथोक्तम् यो वेत्ति तत्त्वतः तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिम् नैति न प्राप्नोति मामेत्यागच्छति स मुच्यते अर्जुन ॥ ९ ॥

आनन्दगिरिकृतटीका ।

मायामयमीश्वरस्य जन्म नवास्तवं तस्यैव च जगत्परिपालनं कर्म नान्यस्येति जानतः श्रेयोवाप्तिं दर्शयन्विपक्षे प्रत्यवायं सूचयति तज्जन्मेत्यादिना यथोक्तं मायामयं कल्पितमिति यावत् वेदनस्य यथावत्त्वं वेद्यस्य जन्मादेरुक्तरूपानतिवर्त्तित्वं यदि पुनर्भगवतोवास्तवं जन्म- साधुजनपरिपालनादि चान्यस्यैव कर्म क्षत्रियस्येति विवक्ष्यते तदा तत्त्वापरिज्ञानप्रयुक्तो जन्मादिः संसारोदुर्वारः स्यादिति भावः ॥ ९ ॥

स्वामिकृतटीका ।

एवंविधानामीश्वरजन्म कर्मणां ज्ञाने फलमाह जन्मेति स्वेच्छया कृतं मम जन्म कर्म च धर्मपालनरूपं दिव्यमलौकिकं तत्त्वतः परानुग्रहार्थमेवेति यो वेत्ति स देहाभिमानं त्यक्त्वा पुनर्जन्म संसारं नैति न प्राप्नोति किन्तु मामेव प्राप्नोति ॥ ९ ॥

भाषा अनुवाद ।

ऐसे ही ईश्वर भी गुणदोष नियम के अर्थ दण्ड देते हैं परन्तु प्रभुता से नहीं देते॥ ८ ॥

अब अपने जन्म कर्म्म जानने का फल कहते हैं कि हमारे स्वेच्छासे दिव्य कहे अलौकिक आश्चर्य्यरूप जो जो जन्म औ कर्म्म केवल लोकके अनुग्रहार्थ हैं तिनके तत्त्वपूर्वक जानने से लोग देह अभिमान को छोड़ि कर फेरि संसार मे जन्मग्रहण नहीं करते हैं वलु हमारे ही को प्राप्त होते अर्थात् आवागमन से रहित होजाते हैं ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः॥ १०॥**

### शाङ्करभाष्यम्।

नैष मोक्षमार्गमिदानीम् प्रवृत्तः किं तर्हि पूर्वमपि वीतरागभयक्रोधा रागश्च भयञ्च क्रोधश्च रागभयक्रोधाः वीता विगता येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो मामेव च परमेश्वरमुपाश्रिताः केवल ज्ञाननिष्ठा इत्यर्थः बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयम् तत्तपस्तेन ज्ञानतपसा पूताः परां शुद्धिम् गताः सन्तोमद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः इतरतपोनिरपेक्षा ज्ञाननिष्टा इत्यस्य लिङ्गम् ज्ञानतपसेति विशेषणम्॥ १०॥

### आनन्दगिरिकृतटीका।

सम्प्रति प्रस्तुत मोक्षमार्गस्य नूतनत्वेनाव्यवस्थितत्वमाशङ्क्य परिहरति नैषइति मन्मयत्वस्य मद्भाव गमनेना पौनरुक्त्यं दर्शयति ब्रह्मविद इति आत्मनो भिन्नत्वे न वा ब्रह्मणोवेदनं व्यावर्त्तयति ईश्वरेति अभेददर्शनेन समुच्चित्य कर्म्मानुष्ठानं प्रत्याचष्टे मामेवेति तदुपाश्रयत्वमेव विशदयति केवलेति मामुपाश्रिता इति केवलं ज्ञाननिष्ठत्वमुक्त्वा ज्ञानतपसा पूता इति किमर्थं पुनरुच्यते तत्राह इतरेति॥ १०॥

### स्वामिकृतटीका।

कथं जन्म कर्म ज्ञानेत्वत्प्राप्तिः स्यादित्यत आह वीतरागेति अहं शुद्धसत्वावतारैर्धर्म्मपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्तच्चित्तविक्षेपाभावान्मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसादलब्धं यदात्मज्ञानञ्च तपश्च तत्परिपाकहेतुः स्वधर्मः इन्द्वैकवद्भावः तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्य्यमला मद्भावं मत्सायुज्यं प्राप्ता बहवः नत्वधुनैव प्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः तदेवं तान्यहं वेद सर्वाणीत्यादिना विद्याविद्योपाधिभ्यां तत्वं पदार्थावीश्वरजीवौ प्रदर्श्य ईश्वरस्य चाविद्याभावेन नित्यशुद्धत्त्वाज्जीवस्य चेश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य स्वतश्चिद्रूपेण तदैक्यमुक्तमिति द्रष्टव्यम्॥ १०॥

### भाषा अनुवाद।

जो कहो कि ईश्वर के जन्म कर्म जाननेहीं से कैसे ईश्वर प्राप्ति होती है इसपर कहते हैं कि शुद्ध सतोगुण से अवतार लेय हमारे जो परम

ये यथा मां प्रपद्यन्ते तां स्तथैव भजाम्यहम्।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥ ११॥

## शाङ्करभाष्यम्।

तव तर्हि रागद्वेषौ स्तः येन केभ्यश्चिदेवात्मभावं प्रयच्छसि न सर्वेभ्य इत्युच्यते ये यथेति ये यथा येन प्रकारेण येन प्रयोजनेन यत् फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत् फलदानेन भजाम्यहमनुगृह्णाम्यहम् इत्यतः तेषां मोक्षं प्रत्यक्षं प्रत्यनर्थित्वात् तानप्येकस्य मुमुक्षुत्वम् फलार्थित्वञ्च युगपत् सम्भवति अतो ये यत् फलार्थिनः तान् तत् फलप्रदानेन ये यथोक्त कारिणस्तत् फलार्थिनो मुमुक्षवश्च तान् ज्ञानप्रदानेन ये ज्ञानिनः सन्न्यासिनो मुमुक्षवश्च तान् मोक्षप्रदानेन तथा आर्त्तानार्तिहरणेत्येवं यथा येन प्रकारेण मां प्रपद्यन्ते ये तां स्तथैव भजामीत्यर्थः न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा किञ्चिद् भजामि सर्वथापि सर्वावस्थस्य ममेश्वरस्य वर्त्म-मार्गमनुवर्त्तन्तेये मनुष्याः यत् फलार्थितया यस्मिन् कर्मण्यधिकृताः ये प्रयतन्ते ते मनुष्या अत्र उच्यन्ते हे पार्थ सर्वशः सर्वं प्रकारैः॥ ११॥

### आनन्दगिरिकृतटीका।

ईश्वरः सर्वेभ्यो भूतेभ्यो मोक्षं प्रयच्छति चेत् प्रागुक्तविशेषणवैयर्थ्यं यदि तु केभ्यश्चिदेव मोक्षं प्रयच्छेत्तर्हि तस्य रागादिमत्त्वादनीश्वरत्वापत्तिरिति शङ्कते तव तर्हीति ये मुमुक्षवस्तेभ्यो मोक्षमीश्वरो ज्ञानसम्पादनद्वारा प्रयच्छति फलान्तरार्थिभ्यस्तु तत्तदुपायानुष्ठापनेन तत्तदेव ददातीति नास्य रागद्वेषावितिं परिहरति उच्यत इति मुमुक्षूणामीश्वरानुसारित्वेपि फलान्तरार्थिनां कुतस्तदनुसारित्वमित्याशंक्य फलमत उपपत्तेरितिन्यायेन तत्फलस्ये श्वरायत्वात्तदनुवर्त्तित्तमावश्यकमित्याह ममेति भगवद्वचनभागिनां सर्वेषामेव कैवल्यमेकरूपं

### भाषा अनुवाद।

दयालुता के कर्म्म तिनके जानने से सतोगुण के द्वारा सत्त्वशुद्धि होती है फिरि वे लोग संसार से विगत स्नेह औ गतक्रोध निर्भय होय मेरे आश्रित मद्रूप अर्थात् मत्स्वभाव बहुतेरे ज्ञानसे सम्पन्न पवित्र होय मद्भाव को प्राप्त भये हैं अर्थात् मेरे स्वरूप मे लीन होगये हैं॥ १०॥

आनन्दगिरिकृतटीका।

किमिति नानुगृह्णाते तत्राह तेषामिति अभ्युदयनिःश्रेयसार्थित्वं प्रार्थनावैचित्र्यादेकस्यैव किं न स्यादित्याशङ्क्य पर्यायेण तदनुपपत्तिं साधयति न हीति मुमुक्षूणां फलार्थिनाञ्च विभागे स्थिते सत्यनुग्रहविभागं फलितमाह अत इति फलप्रदानेनानुगृह्णामीति सम्बन्धः नित्यनैमित्तिककर्मानुष्ठायिनामेव फलार्थित्वाभावे सति मुमुक्षुत्वे कथन्त्वनुग्रहः स्यादिति तत्राह ये यथोक्तेति ज्ञानप्रदानेन भजामीत्युत्तरत्र सम्बन्धः सन्ति केचित्त्यक्त सर्वकर्माणो-ज्ञानिनो मोक्षमेवापेक्षमाणास्तेष्वनुग्रहप्रकारं प्रकटयति ये ज्ञानिन इति केचिदार्त्ताः सन्तो ज्ञानादिसाधनान्तर रहिता भगवन्तमेवार्त्ति मनुप्रहर्तुमनुवर्तन्ते तेषु भगवतोऽनु-ग्रहविशेषं दर्शयति तथेति पूर्वार्द्धं व्याख्यानमुपसंहरति इत्येवमिति भगवतोऽनुग्रहे निमि-त्तान्तरं निवारयति न पुनरिति फलार्थित्वे मुमुक्षुत्वे च जनतां भगवदनुसरणमावश्यकमि-त्युत्तरार्द्धं विभजते सर्वथामीति सर्वावस्थत्वं तेन तेनात्मना परस्यैवेश्वरस्यावस्थानं मार्गो ज्ञान-कर्मलक्षणः मनुष्यग्रहणादितरेषामीश्वरमार्गानुवर्तित्वमभ्युदासः स्यादित्याशङ्क्याह यत् फलेति सर्वप्रकारैर्मम मार्गमनुवर्तन्ते इति पूर्वेण सम्बन्धः॥ ११॥

स्वामिकृतटीका।

ननु तर्हि किं त्वय्यपि वैषम्यमस्ति यस्मादेवं त्वदेकशरणानामेवात्मभावं ददासि नान्येषां सकामानामित्यत आह ये इति यथा येन प्रकारेण सकामतया निःकामतया वा ये मां भजन्ति तानहं तथैव तदपेक्षितफलदानेन भजामि अनुगृह्णामि न तु सकामानां विहा-येन्द्रादीनेव ये भजन्ते तानहमुपेक्ष इति मन्तव्यं यतः सर्वशः सर्वप्रकारैरिन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्गमनुवर्त्तन्ते इन्द्रादिरूपेणापि ममैव सेव्यत्वात्॥ ११॥

भाषा अनुवाद।

तो तुमारे भी क्या विपरीत भाव कहे स्वपर बुद्धि है जिस हेतु शरणागत को कृपाकरि आत्मस्वभाव देते और दूसरे को नहीं देते हो इसका सिद्धान्त कहते हैं कि हे पार्थ अर्जुन जो मनुष्य जब जिसप्रकार अर्थात् सकाम या निष्कामरूप हमको भजते सेवते हैं उनको वैसे ही फल प्रदान करिके मै भी अनुग्रह करता हुं और कामना करके जो लोग इन्द्र आदि देवतोंका भजन पूजन करते हैं उनका अनादर या त्याग हम नहीं करते कारण यह कि जिस किसी को पूजा या भजन करे वह मेरी ही पूजा होती है क्योंकि सर्व रूपमय मैहीं हुं सो हे पार्थ

## काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
## क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

### शाङ्करभाष्यम् ।

यदि तवेश्वरस्य रागादिदोषाभावः तदा सर्वप्राणिषु अनुजिघृक्षा तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवः सर्वमिति ज्ञाने मुमुक्षवः सन्तः कस्मात्त्वामेव सर्वे न प्रतिपद्यन्ते इति शृणु तत्र कार काङ्क्षन्त इति अभिलषन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यज इहास्मिन् लोके देवता इन्द्राग्न्याद्याः अथ योऽन्यां देवतामुपास्तेऽन्य सावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामितिश्रुतेः तेषां भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मात् मानुषे लोके मनु ष्यलोके हि शास्त्राधिकारः क्षिप्रं हि मानुषे लोके इति विशेषणादन्येष्व कर्मफलसिद्धिं दर्शयति भगवान् मानुषे लोके वर्णाश्रमादि कर्माणी विशेषः तेषाञ्च वर्णाश्रमाद्यधिकारिणां कर्मणा फलसिद्धिः क्षिप्रं भवति कर्मजा कर्मणो जाता ॥ १२ ॥

### आनन्दगिरिकृतटीका ।

अनुग्राह्याणां ज्ञानकर्मानुरोधेन भगवता तेष्वनुग्रहविधानात्तस्य रागद्वेषौ यदि न भवतस्तर्हि तस्य रागाद्यभावादेव सर्वेषु प्राणिष्वनुग्रहेच्छा तुल्या प्राप्ता न च तस्यां सत्यामेव फलस्याल्पीयसः सम्पादने सामर्थ्यं ननु भगवतो महतो मोक्षाख्यस्य फलस्य प्रदानेऽशक्तिरिति युक्तमप्रतिहतज्ञानेच्छा क्रियाशक्तिमतस्तव सर्वफलप्रदानसामर्थ्यात्तथा च यथोक्तानुजिघृक्षायां सत्यां त्वयि च यथोक्तसामर्थ्यवति सति सर्वफलगुफलादभ्युदयात् विमुखा मोक्षमेवापेक्षमाणाः ज्ञानेन त्वामेव किमिति न प्रतिपद्येरन्निति चोदयति यदीति मोक्षापेक्षाभावात्तदुपायभूतज्ञानादपि वैमुख्याद्भगवत्प्राप्त्यभावे हेतुमभिदधानः समाधत्ते शृण्विति कर्मफल-

### भाषा अनुवाद ।

मेरी ही राह में सब मनुष्य वर्तमान हैं पर जैसी जिसकी भावना तैसा तिसको फल मिलता है इससे सकाम लोगोंको कर्म्मानुसार फल लाभ देखायँ और निष्काम तो मेरा रूपही है ॥ ११ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥ १३ ॥

आनन्दगिरिकृतटीका

सिद्धिमिच्छता किमिति मानुषे लोके देवतापूजनमिष्यते तत्राह क्षिप्रं हीति कर्मफलसमभ्यर्थिनां यष्टृयष्टव्यविभागदर्शिनां तद्दर्शने कारणमात्मानानमित्यत्र बृहदारण्यकश्रुतिमुदाहरति अथेति अविद्याप्रकरणोपक्रमार्थमथेत्युक्तं उपायनं भेददर्शनमित्यनूद्य कारणमात्मानानं न तत्रेति दर्शयति नेति यथाश्वादादीनां वहनवहनादिना पशुरुपकरोत्येवमज्ञो-देवादीनां यागादिभिरुपकरोतीत्याह अथेति किमिति ते फलाकाङ्क्षिणोभिन्नदेवताया जिनोज्ञानमार्गं नापेक्षन्ते तत्रोत्तरार्द्धमुत्तरत्वेन योजयति तेषामित्यादिना यस्मात् यथोक्तानामधिकारिणां कर्मप्रयुक्तं फलं लोकविशेषे झटिति सिध्यति तस्मात्तेषां मोक्षमार्गादस्ति वैमुख्यमित्यर्थः। मानुष लोकविशेषणं किमर्थमित्याशङ्क्याह मनुष्यलोके हीति लोकान्तरेषु तर्हि कर्मफलसिद्धिर्नास्तीत्याशङ्क्य क्षिप्रविशेषणस्य तात्पर्यमाह क्षिप्रमिति क्वचित् कर्मफलसिद्धिरविलम्बेन भवत्यन्यत्र तु विलम्बेनेति विभागे को हेतुरित्याशङ्क्य सामग्रीभावाभावाभ्यामित्याह मानुष इति मनुष्यलोके कर्मफलसिद्धेः शैघ्र्याच्चद्भिमुखानां ज्ञानमार्गे वैमुख्यं प्रायिकमित्युपसंहरति तेषामिति ॥ १२ ॥

स्वामिकृतटीका।

तर्हि मोक्षार्थमेव किमिति सर्वे त्वां न भजन्तीत्यत आह काङ्क्षन्त इति कर्मणां सिद्धिं कर्मफलं काङ्क्षन्तः प्रायेणेह मनुष्यलोके इन्द्रादिदेवता एव यजन्ते नतु साक्षात् मामेव हि यस्मात् कर्मजा सिद्धिः कर्मजं फलं शीघ्रं भवति नतु ज्ञानफलं कैवल्यं दुष्प्राप्यत्वात् ज्ञानस्य ॥ १२ ॥

## भाषा अनुवाद।

जो ऐसा कहो कि तो फेरि मोक्ष ही के वास्ते सब लोग भगवत का आराधन क्यों नहीं करते है तिसपर कहते कि मनुष्यलोक मे बहुतेरे लोग कर्मफल की अभिलाषा करि इन्द्र आदि देवतोंकी सेवा करते और साक्षात् हमारी सेवा नहीं करते हैं क्योंकि कर्म से फल शीघ्र प्राप्त होता और मेरी साक्षात् सेवासे ज्ञानका फलरूप जो मुक्ति सो दुःप्राप है वड़े कठिन से चिरकाल मे मिलती है ॥ १२ ॥

## शाङ्करभाष्यम् ।

मानुष एव लोके वर्णाश्रमादि कर्म्माधिकारो नान्येषु लोकेष्विति नियमः किं निमित्त इति अथवा वर्णाश्रमादि प्रविभागोपेता मनुष्या मम वर्त्मानुवर्त्तन्ते सर्वश इत्युक्तं कस्मात् पुनः कारणात् नियमेन तवैव वर्त्मानुवर्त्तन्ते नान्यस्येत्युच्यते चातुर्वर्ण्यमिति चातुर्वर्ण्यं चत्वार एव वर्णाश्चातुर्वर्ण्यं मयेश्वरेण सृष्टमुत्पादितं ब्राह्मणोऽस्य मुखमासीदित्यादि श्रुतेः गुणकर्म्म विभागशः गुण विभागशः कर्म्म विभागशश्च गुणाः सत्त्व रजस्तमांसि तत्र सात्त्विकस्य सत्वप्रधानस्य ब्राह्मणस्य शमोदमस्तप इत्यादीनि कर्म्माणि सत्त्वोपसर्ज्जनरजःप्रधानस्य क्षत्रियस्य शौर्य्यतेजः प्रभृतीनि कर्म्माणि तम उपसर्ज्जनरजः प्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि रज उपसर्ज्जन तमः प्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं गुणकर्म विभागशः चातुर्वर्ण्यं मया सृष्टमित्यर्थः तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु अतो मानुषे लोके इति विशेषणं हन्त तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्म्मणः कर्तृत्वात् तत्फलेषु युज्यसे अतो नत्वं नित्यमुक्तो नित्येश्वर इत्युच्यते यद्यपि मायासंव्यवहारेण तस्य कर्म्मणः कर्त्तारमपि सन्तं तथापिमां परमार्थतो विद्ध्यकर्त्तारमत एवाव्ययमसंसारिणञ्च मां विद्धि ॥ १३ ॥

### आनन्दगिरिकृतटीका ।

मनुष्यलोके चातुर्वर्ण्यं चातुराश्रम्यमित्यनेनद्वारेण कर्माधिकारनियमे कारणं पृच्छति मानुष एवेति आदिशब्देनावस्थाविशेषा विवक्ष्यन्ते प्रकारान्तरेण वृत्तानुवादपूर्वकं चोद्यमुत्थापयति अथवेत्यादिना प्रश्नद्वयं परिहरति उच्यत इति तर्हि तव कर्तृत्व भोक्तृत्व सम्भवादस्मदादि तुल्यत्वेनानीश्वरत्वमित्याशङ्क्याह तस्येति ईश्वरस्य विश्वसृष्टिं विदधानस्य सृष्टि वैषम्य निर्वाहकं कथयति गुणेति गुणविभागेन कर्मविभागस्तेन चातुर्वर्ण्यस्य सृष्टिमेवोपदिष्टां स्पष्टयति तत्रेत्यादिना प्रश्नद्वयं प्रतिविधानं प्रकृतमुपसंहरति तच्चेदमिति मनुष्यलोके परं वर्णाश्रमादिपूर्वके कर्मण्यधिकारस्तत्रैव वर्णादेरीश्वरेण सृष्टत्वान्नलोकान्तरेषु तत्र वर्णाद्यभावादीश्वरस्यैव चातुर्वर्ण्याश्रमादि विभागभागिनोऽधिकारिणोऽनुवर्त्तन्ते तेनैव वर्णादेस्तद्व्यापारस्य च सृष्टत्वात्तदनुवर्त्तनस्य युक्तत्वादित्यर्थः तस्येत्यादि द्वितीयभागापोद्यचोद्यमनुद्रवति हन्तेति यदि चातुर्वर्ण्यादि कर्तृत्वादीश्वरस्य प्रागुक्तो नियमोऽभिमतस्तर्हि तद्विषय सृष्ट्यादेस्तन्निष्ठव्यापारस्य च धर्मादेर्निवर्त्तकत्वात्तत् फलस्य कर्तृत्वभोक्तृत्वयोस्त्वयि प्रसङ्गात्

आनन्दगिरिकृतटीका।

नित्यमुक्तत्वादि तेन स्यादित्यर्थः मायया कर्तृत्वं परमार्थतस्त्वकर्तृत्वमित्यभ्युपगमान्नित्य-मुक्तत्वादि सिध्यतीत्युत्तरमाह उच्यत इति मायाप्रवृत्तेन संव्यवहारेण चातुर्वर्ण्यादेस्तत्-कर्मणश्च यद्यपि कर्त्ताहं तथापि तथाविधं मां परमार्थतोऽकर्त्तारं विद्धीति योजना अक-र्तृत्वादेवाभोक्तृत्वसिद्धिरित्याह अतएवेति ॥ १३ ॥

स्वामिकृतटीका।

ननु केचित् सकामतया प्रवर्त्तन्ते केचिन्निष्कामतयेति कर्म वैचित्र्यं तत्कृतश्च ब्राह्मणादीनामुत्तममध्यमादि वैचित्र्यं कुर्वन्तस्तव कथं वैषम्यं नास्तीत्याशंक्याह चातुर्वर्ण्य-मिति चत्वारो वर्णा एवेति चातुर्वर्ण्यं स्वार्थे ष्यञ्प्रत्ययः अयमर्थः सत्त्वप्रधाना ब्राह्मणा-स्तेषां शमदमादीनि कर्माणि सत्वरजःप्रधाना चत्रियास्तेषां शौर्य्ययुद्धादीनि कर्माणि रजस्तमःप्रधाना वैश्यास्तेषाञ्च कृषिवाणिज्यादीनि कर्माणि तमःप्रधानाः शूद्रास्तेषाञ्च त्रैवर्णिक शुश्रूषादीनि कर्माणीत्येवं गुणानां कर्मणाञ्च विभागैश्चातुर्वर्ण्यं मयैव सृष्टमिति सत्यं तथाप्येवं तस्य कर्त्तारमपि फलतोऽकर्त्तारमेव मां विद्धि तत्र हेतुरव्ययम् आसक्ति-राहित्येन श्रमरहितम् ॥ १३ ॥

## भाषा अनुवाद।

और जो कहो कि चारो वर्णके कर्त्ता भी तुमहीं हो और अनेक प्रकार कर्म्म भी वेदके द्वारा तुम्होने कहा है फेरि उन्हीं कर्मों के करने वाले ब्राह्मण आदि वर्णोंको उत्तम औ अधम कर्म्म भी तुमने कहा तो इस सबके करनेवाले एक तुम ठहरे फेरि किसी को प्रवृत्ति सकाम कर्म्म मे और किसी को निष्काम मे जो होती है तो कहो वैषम्य दोष कहे विषम स्वभाव तुमारा क्यों नही है इन बातोंसे अलबते तुमको पक्षपात दोष भी हो सकता है इसके उपर कहते हैं कि हां चातुर्वर्ण्यक है सतोगुणप्रधान जो ब्राह्मण उनके कर्म्म शम दम उपरति तितिक्षा समाधान श्रद्धा हैं और सत्त्व रज प्रधान जो क्षत्री उनके कर्म्म भूमि रक्षा प्रजापालन युद्ध आदिक हैं और रजोगुण तमोगुण प्रधान जो वैश्य तिनके कर्म्म व्यापार खेती आदिक हैं और तमोगुण प्रधान शूद्रका कर्म्म इन तीनोवर्ण की सेवा है सो यह ठीक है पर जोभी हम इन के कर्त्ता

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।**
**इति मां योऽभिजानाति कर्मभिर्न्न स बध्यते ॥ १४ ॥**

शाङ्करभाष्यम्।

येषान्तु कर्मणां कर्त्तारं मां मन्यसे परमार्थतस्तेषामकर्त्तैवाहं यतः नेति न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेनाहङ्काराभावान्नच तेषां कर्मणां फलेषु मे स्पृहा तृष्णा तेषान्तु संसारिणमहं कर्त्तेत्यभिमानः कर्मसु स्पृहा तत् फलेषु च तान् कर्माणि लिम्पन्तीति युक्तं तदभावान्न मां कर्माणि लिम्पतीत्येवं योऽन्योऽपि मामात्मत्वेनाभिजानाति नाहं कर्त्ता न मे कर्म फले स्पृहेति स कर्मभिर्न बध्यते तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्तीत्यर्थः ॥ १४ ॥

आनन्दगिरिकृतटीका।

ईश्वरस्य कर्तृत्व भोक्तृत्वयोर्वस्तुतोऽभावे कर्म तत्फलसम्बन्धवैधुर्य्यं फलतीत्याह येषान्त्विति कर्म तत्फल संस्पर्श शून्यमीश्वरं मां पश्यतो दर्शनानुरूपं फलं दर्शयति नमामिति तानि कर्माणीति येषां कर्मणामहं कर्त्ता तवाभिमतस्तानीति यावत् देहेन्द्रियाद्यारम्भकत्वेन तेषां कर्मणामीश्वरे संस्पर्शाभावे तस्य तत्कारणावस्थायामहङ्काराभावं हेतुं करोति अहङ्काराभावादिति कर्मफलतृष्णाभावाच्चेश्वरं कर्माणि न लिम्पन्तीत्याह नचेति उक्तमेव प्रपञ्चयति तेषान्त्विति तदभावात् कर्मस्वहं कर्त्तेत्यभिमानस्य तत्फलेषु स्पृहायाश्चाभावादित्यर्थः ईश्वरस्य कर्मनिर्लेपेऽपि ज्ञातुस्तस्य किमायातमित्याशंक्योत्तरार्द्धं व्याचष्टे इत्येवमिति अभिज्ञान प्रकारमभिनयति नाहमिति ज्ञानफलं कथयति सकर्मभिरिति कर्मासम्बन्धं विदुषि विशदयति तस्यापीति ॥ १४ ॥

स्वामिकृतटीका।

तदेव दर्शयन्नाह नमामिति कर्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्वन्ति निरहङ्कारत्वादाप्तकामत्वेन मम कर्मफले स्पृहा भावाच्च मां न लिम्पन्तीति किं वक्तव्यं यतः कर्मलेपराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते मम निर्लेपत्वकारणं निरहङ्कारत्वनिस्पृहत्वादिकं जानतस्तस्याप्यहङ्कारादिशैथिल्यात् ॥ १४ ॥

भाषा अनुवाद।

हैं तौभी अकर्त्ता ही जानो क्योंकि हम अव्यय हमारी आसक्ति इन कर्मोंमे नहीं है ॥ १३ ॥

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

## शाङ्करभाष्यम् ।

नाहं कर्त्ता न मे कर्मफले स्पृहेति एव मिति एवं ज्ञात्वा कृतं कर्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभिः कुरु तेन कर्मैव त्वं न तूष्णीमासनं नापि सन्न्यासः कर्त्तव्यस्तस्मात्त्वं पूर्वैरप्यनुष्ठितत्वाद् यद्यनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसंग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुनातनं कृतं निर्वर्त्तितम् ॥ १५ ॥

## आनन्दगिरिकृतटीका ।

तव कर्म तत्फलसम्बन्धाभावे तथा ज्ञानवतश्च तद्सम्बन्धे ममापि किं कर्मणेत्याशङ्क्य कर्मणि कर्तृत्वाभिमानं तत् फले स्पृहाञ्चाकृत्वा मुमुक्षुवत् त्वया कर्म कर्तव्यमेवेत्याह नाह-मित्यादिना एवमिति नाहं कर्तेत्येवमादि परामृश्यते तेन पूर्वैर्मुमुक्षुभिरनुष्ठितत्वेन हेतु-नेत्यर्थः कर्मैवेत्येवकारार्थमाह नेत्यादिना त्वं शब्दस्य क्रियापदेन सम्बन्धः तस्मादित्युक्तमेव स्फुटयति पूर्वैरिति पूर्वैरिति यदुक्तं किं मम कर्मणेति तत्र त्वमज्ञो वा तत्त्वविद्वान् यद्यज्ञ-स्तदा चित्तशुद्ध्यर्थं कुरु कर्मेत्याह यदीति द्वितीयं प्रत्याह तत्त्वविदिति करु कर्मेति सम्बन्धः पूर्वैर्मूढैराचरितमित्येतावता किमिति विवेकवता मया तत् कर्तव्यमित्याशङ्क्याह जनका-

## भाषाअनुवाद ।

वही कर्मकी आशक्ति देखलाते हुए कहते हैं कि देखो विश्व सिर्जन आदि कर्म हमको नहीं लगते और न कर्म फलकी इच्छा हमे है क्योंकि हम निरहङ्कार कर्म करते और पूर्ण काम हैं इससे कोई विषयके दर्शनादि से हमारी भोग मे इच्छा नहीं होती तो ये कर्म हमें कैसे आशक्त करसकें और क्या कहैं देखो जो मनुष्य हमको कर्म मे निर्लिप्त जानते हैं वे भी कर्म वन्धन मे नही पड़ते कारण यह कि जो हमारे निर्लेपता के हेतु अनहङ्कार औ निस्पृह हैं सो उनके जानकार पुरुष के भी शिथिल होते कहे नाम मात्र को रह जाते और कुछ काम देखने या करने योग्य नहीं रहते हैं न वे उनका कुछ करसकते हैं ॥ १४ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥

शाङ्करभाष्यम् ।

तत्र कर्मचेत् कर्त्तव्यं त्वद्वचनादेव करोम्यहं किं विशेषितेन पूर्वैः पूर्वतरं कृतमित्युच्यते यस्मात् महद्वैषम्यं कर्माकर्मणि कथं किं कर्मेति किं कर्म किञ्चाकर्मेति कवयो मेधाविनोऽपि अत्रास्मिन् कर्मादि विषये मोहिताः मोहं गताः अतस्ते तुभ्यमहं कर्माऽकर्म च प्रवक्ष्यामि यत् ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसे अशुभात् संसारात् न चैवं त्वया मन्तव्यं कर्म नाम देहादिचेष्टा लोकप्रसिद्धमकर्मनाम तदक्रिया तूष्णीमासनं किं तत्र बोद्धव्य मिति ॥ १६ ॥

आनन्दगिरिकृतटीका ।

दिभिरिति ते तदैव संपाद्य कर्म कृतवन्तो न तदिदानीमप्रामाणिकत्वादनुष्ठेयमित्याशङ्क्याह पूर्वतरमिति ॥ १५ ॥

स्वामिकृतटीका ।

ये यथा मामित्यादि चतुर्भिः श्लोकैः प्रासङ्गिक मीश्वरस्य वैषम्यं परिहृत्य पूर्वोक्तमेव कर्मयोगं प्रपञ्चयितुमनुस्मारयति एवमिति अहङ्कारादिराहित्येन कृतं कर्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्वैर्जनकादिभिरपि मुमुक्षुभिःसत्वशुद्धयर्थं पूर्वतरं युगान्तरेष्वपि कृतं तस्मात्त्वमपि कृतं तस्मात्त्वमपि प्रथमं कर्मैव कुरु ॥ १५ ॥

भाषा अनुवाद ।

अब ऐसे चारिश्लोक से प्रसङ्गप्राप्त ईश्वर के वैषम्य दोष को दूर करते हुए पूर्व कथित कर्म्मयोग को विस्तार करि कहते हैं कि अहङ्कार रहित किया हुआ कर्म्म ज्ञानका बाधक नहीं होता है यह जानि करि के पूर्व-काल के मुमुक्षु जनक आदिकोंने किया था इससे तुम भी अभी इस प्रथम अवस्थामे कर्म्म करो जब ज्ञान अवस्था प्राप्त होगी आप ही छूट जांयगे अभी छोड़ने से सतोगुणकी शुद्धि होना दुर्घट है देखो और और युगमें भी लोगोंने प्रथम कर्म्मको किया है यह कर्म्म युग युगान्तर से किया चला आता है ॥ १५ ॥

शाङ्करभाष्यम्।

तत्र कर्म चेत् कर्त्तव्यं त्वद्वचनादेव करोम्यहं किं विशेषितेन पूर्वैः पूर्वतरं कृतमित्युच्यते यस्मान्महद्वैषम्यं कर्माकर्मणि कथं किं कर्मेति किं कर्म किञ्चाकर्मेति कवयोमेधाविनोऽपि अत्रास्मिन् कर्मादिविषये मोहिताः मोहङ्गताः अतस्ते तुभ्यमहं कर्माकर्म च प्रवक्ष्यामि यत् ज्ञात्वा विदित्वा कर्मादिमोक्ष्यसे अशुभात् संसारात् नचैवं त्वया मन्तव्यं कर्म नाम देहादि चेष्टा लोकप्रसिद्धमकर्म नाम तदक्रिया तूष्णीमासनं किं तत्र बोद्धव्यमिति॥ १६॥

आनन्दगिरिकृतटीका।

कर्म विशेषणमाक्षिपति तत्रेति मनुष्यलोकः सप्तम्यर्थः कर्मणि महत् वैषम्यस्य विद्यमानत्वात् तस्य पूर्वैरनुष्ठितत्वेन पूर्वतरत्वेन च विशेषितत्वे तस्मिन् प्रवृत्तिस्तव सुकरेति युक्तं विशेषणमिति परिहरति उच्यत इति कर्मणि देहादिचेष्टारूपे लोकप्रसिद्धे नास्ति वैषम्यमिति शङ्कते कथमिति विज्ञानवतामपि कर्मादिविषये व्यामोहोपपत्तेः सुतरामेव तव तद्विषये व्यामोहसम्भवात्तदपोहार्थमाप्तवाक्यापेक्षणादस्ति कर्मणि वैषम्य मित्युत्तरमाह किं कर्मेति तत्र कर्मत्वताकारानुबन्धेनापि पदच्छेदस्तव्यं कर्मादिप्रवचनस्य प्रयोजनमाह यज्ज्ञात्वेति तत्कर्माकर्मेवेति सम्बन्धः अतो मेधाविनोऽपि यथोक्ते विषये व्यामोहस्य सत्त्वादित्यर्थः कर्मणोऽकर्मणश्च प्रसिद्धत्वात्तद्विषये न किञ्चिद्बोद्धव्यमिति चोद्यमनूद्य निरस्यति न चेति॥ १६॥

स्वामिकृतटीका।

तत्र तत्त्वविद्भिः सह विचार्य्य कर्त्तव्यं न लोकपरम्परामात्रेणेत्याह किं कर्मेति किं कर्म कीदृशं कर्मकरणं किमकर्म कीदृशं कर्माकरणं इत्यस्मिन्नर्थे विवेकिनोऽपि मोहिताः अतो यज्ज्ञात्वा यदनुष्ठायाशुभात् संसारान्मोक्ष्यसे मुक्तो भविष्यसि तत् कर्माकर्म च तुभ्यमहं प्रवक्ष्यामि तच्छृणु॥ १६॥

भाषा अनुवाद।

और देखो तत्त्वज्ञानी के साथ विचार करके कर्म्म करना चाहिये केवल भेड़ियाधसन्त की नाई लोक परम्परा प्राप्त देखकर करना अनुचित जानो यह कहते हैं कि देखो कौन कर्म्म कर्त्तव्य और कौन

**कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः ।**
**अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणोगतिः ॥ १७ ॥**

## शाङ्करभाष्यम् ।

कस्मात् उच्यते कर्म्मण इति कर्म्मणः शास्त्रविहितस्य हि यस्मात् अप्यस्ति बोद्धव्यं बोद्धव्यञ्चास्त्येव विकर्म्मणः प्रतिसिद्धस्य तथा अकर्म्मणश्च तूष्णीम्भावस्य बोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्त्तव्यो यस्मात् गहना विषमा दुर्ज्ञेया कर्म्मण इत्युपलक्षणार्थं कर्मादीनां कर्माकर्म विकर्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥ १७ ॥

### आनन्दगिरिकृतटीका ।

तत्र हेत्वाकाङ्क्षापूर्वकमनन्तरं श्लोकमवतारयति कस्मादिति त्रिष्वपि कर्माकर्मविकर्मसु बोद्धव्यमस्तीति यस्मादध्याहारस्तस्मान्मदीयं प्रवचनमर्थवदिति योजना बोद्धव्यसद्भावे हेतुमाह यस्मादिति त्रितयं प्रकृत्यान्यतमस्य गहनत्व वचनमयुक्तमित्याशङ्क्यान्यतमगहनस्योपलक्षणार्थत्वमुपेत्य विवक्षितमर्थमाह कर्मादीनामिति ॥ १७ ॥

### स्वामिकृतटीका ।

ननु लोकप्रसिद्धमेव कर्मदेहादि व्यापारात्मकं अकर्म च तदव्यापारात्मकम् अतः कथमुच्यते कवयोऽप्यत्र मोहं प्राप्ता इति तत्राह कर्मण इति कर्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति न तु लोकप्रसिद्धमात्रमेव अकर्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति विकर्मणो निषिद्धव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति यतः कर्मणो गतिर्गहना कर्म इत्युपलक्षणार्थं कर्माकर्मविकर्मणां तत्त्वं दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

## भाषा अनुवाद ।

अकर्त्तव्य हैं इस कर्म्म अकर्म्मके विचार मे कवि कहे वड़े वड़े पण्डित भी मोहित होजाते पता नहीं लगता है इससे जिस कर्म्मके करने से इस अशुभ संसार से मुक्त होउगे सो औ अकर्म्म जो अकरणीय कर्म्म ये दोनो हम तुम से कहते हैं सो सावधान हो कर सुनो जिस्को जानि के अशुभ संसार सें छूटकर मुक्त हो जावगे ॥ १६ ॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

शाङ्करभाष्यम्।

किं पुनस्तत्त्वं कर्मादेर्यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातमुच्यते कर्मणीति कर्मणि 'कर्म क्रियत इति व्यापारमात्रं तस्मिन् कर्मणि अकर्म कर्माभावं यः पश्येदकर्मणि च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योर्वस्त्वप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव कर्म यः पश्येत् यः पश्यति स बुद्धिमान् मनुष्येषु स युक्तो योगी च कृत्स्नकर्मकृत्

आनन्दगिरिकृतटीका।

उत्तरश्लोकमाकाङ्क्षापूर्वकमुपादत्ते किं पुनरिति प्रथमपादस्याक्षरोत्थमर्थं कथयति कर्मणीत्यादिना द्वितीयपादस्यापि शब्दप्रकाशितमर्थं निर्दिशति अकर्मणि चेति कर्माभावे यः कर्मपश्यतीति सम्बन्धः प्रवृत्तेरेव कर्मत्वान्निवृत्तेस्तदभावत्वात्तत्र कथं कर्मदर्शनमित्याशङ्क्य द्वयोरपि कारकाधीनत्वेनाविशेषमभिप्रेत्याह कर्तृतन्त्रत्वादिति प्रवृत्ताविव निवृत्तावपि कर्मदर्शनमविरुद्धमिति शेषः ननु निवृत्तेर्वस्त्वधीनत्वात् कारकनिबन्धनाभावान्न तत्र कर्मदर्शनं युज्यते

भाषा अनुवाद।

जो कहा कि मन वचन देहके व्यापार ही तो कर्म हैं और देहादि व्यापार का अभाव ही अकर्म है यही तो लोकमें प्रसिद्ध है फेरि जो आपने कहा कि पण्डित लोग भी कर्म अकर्म के विषय मे मोह को प्राप्त होते सो कैसे इस बातपर कहते हैं कि कर्म तो शास्त्र विहित व्यापार का तत्त्व जानि करके कर्त्तव्य है केवल लोक व्यवहार देखि अवश्य कर्त्तव्य कर्म नहीं है और अकर्म तो सन्यास आश्रम अङ्गीकार करि शास्त्रकी रीतसे कर्मका त्याग करना है पर तत्त्वज्ञानवान हो कर उचित है औ विकर्म जो निषिद्ध कर्म उसका क्या तत्त्व जानना आवश्यक है क्यों कि सब कर्मोंकी गतिका ज्ञान होना कठिन है सोई कहा कि कर्मकी गति गहन कहे बड़ी कठिन सहज से जान वे जोग नहीं है ॥१७॥

## शाङ्करभाष्यम् ।

समस्तकर्म्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी ननु किमिदं विरुद्धमुच्यते कर्म्मण्यकर्म्म यः पश्येदित्यकर्मणि च कर्मेति न हि कर्माकर्मस्यादकर्म वा कर्म तत्र विरुद्धं कथं पश्येत् द्रष्टा नन्वकर्मैव परमार्थतः सत्कर्मवदवभासते मूढ़दृष्टेर्लोकस्य तथा कर्मैवाकर्मवत् तत्र यथाभूतदर्शनार्थमाह भगवान् कर्म्मण्यकर्म्म यः पश्येदित्यादि अतो न विरुद्धं बुद्धिमत्त्वाद्युपपत्तेश्च वोद्धव्यमिति च यथाभूतं दर्शनमुच्यते नच विपरीतज्ञानादशुभान्मोक्षणं स्यात् यत् ज्ञात्वा मोक्ष्यसेऽशुभादितिचोक्तं तस्मात् कर्माकर्म्मणी विपर्य्ययेण गृहीते प्राणिभिस्तद्विपर्य्ययग्रहणनिवृत्त्यर्थं भगवतोवचनं कर्म्मण्यकर्म्म य इत्यादि नचात्र कर्माधिकरणमकर्मास्ति कुण्डे वदराणीव नाप्यकर्माधिकरणं कर्मास्ति कर्माभावत्वादकर्म्मणोऽतो विपरीते गृहीते एव कर्माकर्मणी लौकिकैः यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतं ननु कर्म्म कर्मैव सर्वेषां न

## आनन्दगिरिकृतटीका ।

तत्राह वस्त्विति क्रियाकारकफलव्यवहारस्य सर्वस्या विद्यावस्थाया मेव प्रवृत्तत्वाद्वस्तु संस्पर्शशून्यत्वात् प्रवृत्तिवन्निवृत्तावपि यः कर्म ज्ञाति स मनुष्येषु बुद्धिमानिति सम्बन्धः कर्मण्यकर्म्यकर्मणि च कर्म पश्यतोबुद्धिमत्त्वं युक्तं समस्तकर्म कृतञ्च कथमित्याशङ्क्याह इति स्तूयत इति श्लोकस्य शब्दोत्थेऽर्थे दर्शिते तात्पर्य्यार्थापरिज्ञानान्मिथोऽविरोधं शङ्कते नन्विति कथमिदं विरुद्धमित्याशङ्क्याह कर्मणीति विषयसप्तमी वा स्यादधिकरणसप्तमी वेति विकल्पाद्येऽन्याकारं ज्ञानमन्यावलम्बनमिति स्फुटोविरोधः स्यादित्याह नहीति अन्यस्यान्यात्मतायोगात् कर्माकर्मणोरभेदासम्भवादकर्माकारं कर्मावलम्बनं ज्ञानमयुक्तमित्यर्थः द्वितीयं दूषयति तत्रेति कर्मण्यधिकरणे ततो विरुद्धमकर्म कथमाधेयं द्रष्टाद्रष्टुमीष्टे न हि कर्माकर्मणोर्मिथोविरुद्धयोराधाराधेयभावः सम्भवतीत्यर्थः विषय सप्तमीमुपेत्य सिद्धान्ती परिहरति नन्वकर्मैवेतिलोकस्य मूढ़दृष्टेर्विवेकवर्ज्जितस्य परमार्थतो ब्रह्माकर्माक्रियमेव सत् भ्रान्त्या कर्मसहितं क्रियावदिव प्रतिभातीत्यक्षरार्थः परस्पराध्यासमुपेत्योक्तं तथेति यथा खल्वकर्म ब्रह्म कर्मवदुपलभ्यते तथा कर्म सक्रियमेव द्वैतमक्रिये ब्रह्मण्यधिष्ठाने संसृष्टं तद्वद्भातीत्यक्षरयोजना-कर्माकर्मणोरितरेतराध्यासे सिद्धे सम्यग्दर्शनसिद्ध्यर्थं भगवतोवचनमुचितमित्याह तत्रेति यथा यदिदं रजतमिति प्रतिपन्नं तदिदानीं शुक्तिसकलं पश्येति भ्रमसिद्ध रजतरूप

शाङ्करभाष्यम्।

क्वचित् व्यभिचरति तत्र नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिकेषु नगेषु प्रतिकूलगतिदर्शनात् दूरेषु चक्षुषोऽसन्निकृष्टेषु गच्छत्सु गत्यभावदर्शनादेवमिहाप्यकर्म्मणि अहं करोमीति कर्मदर्शनं विपरीत दर्शनं कर्म्मणि चाकर्मदर्शनं येन तन्निराकरणार्थमुच्यते कर्म्मण्यकर्म्मयः पश्येदित्यादि तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरतिदर्शनाभावितया मोमुह्यमानोलोकः श्रुतमप्यसकृत्तत्त्वं विस्मृत्य मिथ्याप्रसङ्गमवतार्य्यावतार्य्य चोदयतीति पुनः पुनरुत्तरमाह भगवान् दुर्विज्ञेयत्वञ्चालक्ष्य वस्तुनाव्यक्तोयमचिन्त्योयं न जायते म्रियते इत्यादिनात्मनि कर्म्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च तस्मिन्नात्मनि कर्म्माभावे अकर्मणि कर्म्मविपरीतदर्शनमत्यन्तनिरूढं यतः किं कर्म्म किमकर्मेति कवयोऽप्यत्र मोहिता देहाद्याश्रयं कर्मात्मन्यध्यारोप्याहं कर्त्ता ममैतत् कर्म मयास्य कर्म्मणः फलम्भोक्तव्यमिति च तथाहं तूष्णीं भवामि येनाहं निरायासोऽकर्मा सुखीस्यामिति कार्य्यकरणाश्रय व्यापारोपरमं कर्म्मैव तत् कृतञ्च सुखित्वमात्मन्यध्यारोप्य न करोमि किञ्च तूष्णीं सुखमासमित्यभिमन्यते लोकस्तत्रेदं लोकस्य विपरीत दर्शनापनया-

आनन्दगिरिकृतटीका।

विषयानुवादेन तदधिष्ठानं सुक्तिमात्वसंपदिश्यते तथा भ्रमसिद्धकर्माद्यात्मकविषयानुवादेन तदधिष्ठानं कर्मादि रहितं कूटस्थं ब्रह्म भगवता व्यपदिश्यते तथा च भगवद्वचनमविरुद्धमित्याह अत इति इतश्चाध्यारोपितकर्माद्यनुवादपूर्वकं तदधिष्ठानस्य कर्मादिरहितस्य निर्विशेषस्य ब्रह्मणोभगवता बोध्यमानत्वान्न तत्र विरोधाशङ्कावकाशो भवतीत्याह बुद्धिमत्त्वादिति कूटस्थात् ब्रह्मणोन्यस्य सर्वस्य मायामात्रत्वात् अन्यज्ञानाद्बुद्धिमत्त्वयुक्तत्वं सर्वकर्म कृतानामनुपपत्तेरत्र च बुद्धिमानित्यादिना बुद्धिमत्वादिनिर्देशात् ब्रह्मज्ञानादेवतदुपपत्तेः सर्वविक्रियारहितं ब्रह्मज्ञानमेव विवक्षितमित्यर्थः बोधशब्दस्य सम्यग्ज्ञाने प्रसिद्धत्वात् कर्माकर्मविकर्मणां स्वरूपं बोद्धव्यमस्तीतिवदता सम्यग्ज्ञानोपदेशस्य विवक्षितत्वादपि कूटस्थं ब्रह्मात्माभिप्रेतमित्याह बोद्धव्यमिति फलवचनपर्य्यालोचनायामपि कूटस्थं ब्रह्मात्माभिप्रेतं प्रतिभातीत्याह न चेति सम्यग्ज्ञानाधीनंफलमत्र न श्रुतमित्याशङ्क्याह यत् ज्ञात्वेति अध्यारोपापवादार्थं भगवद्वचनमविरुद्धमित्युपपादितमुपसंहरति तस्मादिति तद्विपर्य्ययेत्यत्र

## शाङ्करभाष्यम् ।

याह भगवान् कर्मण्यकर्म यः पश्येदित्यादि अत्र च कर्म कर्मैव सत्कार्य्यं कारणाश्रयं कर्मरहितेऽविक्रिये आत्मनि सर्वैरध्यस्तं यतः पण्डितोऽप्यहं करोमीति मन्यते अत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिः प्रातिलोम्येनातोऽकर्म कर्माभावं यथाभावमिव वृक्षेषु यः पश्येत् अकर्मणि च कार्य्यकरणव्यापारोपरमे कर्मवत् आत्मन्यध्यारोपिते तूष्णीमकुर्वन् सुखमासे इत्यहङ्काराभिसन्धिहेतुत्वात्तस्मिन् अकर्म्मणि च कर्म्म यः पश्येत् य एवं कर्माकर्म्मविभागज्ञः स बुद्धिमान् पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्म्मकृच्च सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः ।

अयं श्लोकोऽन्यथा व्याख्यातः कैश्चित् कथं नित्यानां किल कर्म्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या तेषाञ्चाकरणमकर्म तच्च प्रत्यवायफलत्वात् कर्मोच्यते गौण्यैव वृत्त्या तत्र नित्ये कर्म्मणि अकर्म्म यः पश्येत् फलाभावाद् यथा धेनुरपि गौरगौरुच्यते

### आनन्दगिरिकृतटीका

तच्छब्देन प्राणिनो गृह्यन्ते विषय सप्तमी परिग्रहेण परिहारमभिधायाधिकरणसप्तमीपक्षे दर्शितं दूषणमङ्गीकारेण परिहरति न चेति व्यवहारभूमिरत्रेत्युच्यते योग्यत्वे सत्यनुपलब्धेरित्यर्थः अकर्माधिकरणं कर्म न सम्भवतीत्यत्र हेत्वन्तरमाह कर्माभावत्वादिति न हि तुच्छस्याधिकरणत्वं क्वचिद् दृष्टमिष्टञ्चेत्यर्थः निरूप्यमाणे कर्माकर्मणोरधिकरणाधिकर्त्तव्यभावासम्भवे फलितमाह अतइति शास्त्रपरिचयविरहिणामध्यारोपमुदाहरति यथेति कर्माकर्मणोरारोपितत्वमुक्तमसहमानः शङ्कते नन्विति कर्म कर्मैवेत्यत्राकर्म चाकर्मैवेति द्रष्टव्यं विमतं सत्यमव्यभिचारित्वात् ब्रह्मवदित्यर्थः तत्र कर्म तत्त्वतो नाव्यभिचारि कर्मत्वान्नौस्थस्य तटस्थवृक्षगमनवदित्यव्यभिचारित्वं कर्मण्यसिद्धमिति परिहरति तत्रेति अकर्म च तत्त्वतो नाव्यभिचारि कर्माभावत्वात् दूरप्रदेशे चैत्रमैत्रादिषु गच्छत्स्वेव चक्षुषा सन्निधानविधुरेषु दृश्यमानगत्यभावादित्याह दूर इति दूरत्वादेव विशेषतः सन्निकर्षविरहितेषु तेषु स्वरूपेण चक्षुसन्निकृष्टेषु चक्षुषागत्यभावदर्शनादिति योजना गतिरहितेषु तरुषु गति दर्शनवत् प्रकृते ब्रह्मण्यविक्रिये कर्म दर्शनं सक्रिये च द्वैतप्रपञ्चे चित्रिमत्सु चैत्रादिषु गत्यभावदर्शनवत् कर्माभावस्य विपरीतदर्शनं येन हेतुना सम्भवति तेन तस्य

## शाङ्करभाष्यम्।

क्षीराख्यं फलं न प्रयच्छतीति तद्वत् तथा नित्याकरणे कर्मणिलकर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छतीति नैतत् युक्तं व्याख्यानमेवं ज्ञानादशुभान्मोक्षानुपपत्तेर्यत् ज्ञात्वा मोक्ष्यसेऽशुभादिति भगवतोक्तं वचनं बाध्येत कथं नित्यानामनुष्ठानादशुभात् स्यानाम मोक्षणं नतु तेषां फलाभावज्ञानान्नहि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्म ज्ञानं वा नच भगवतैवेहोक्तं एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तं न ह्यकर्मणि कर्मेति दर्शनं कर्त्तव्यतयेह चोद्यते नित्यस्य तु कर्त्तव्यता मात्रं न चाकरणान्नित्यस्य प्रत्यवायो भवतीतिविज्ञानात् किञ्चित् फलं स्यान्नापि नित्याकरणं ज्ञेयत्वेन चोदितं नापि कर्माकर्मेति मिथ्यादर्श-

### आनन्दगिरिकृतटीका।

विपरीतदर्शनस्य निरसनार्थं भगवद्वचनमिति दार्ष्टान्तिकं निगमयति एवमित्यादिना ननु कर्म तदभावयोरारोऽपितत्वादविक्रियस्य ब्रह्मणो ज्ञानमात्राभिप्रेतं चेदव्यक्तोयमचिन्त्योऽयं न जायते म्रियते वेत्यादिना पौनरुक्त्यं प्राप्तं तत्रैव ब्रह्मात्मनो निर्विकारत्वस्योक्तत्वादिति तत्राह तदेतदिति तदेतदात्मनि शङ्कितं सक्रियत्वमसकृदुक्तं प्रतिवचनमपि निर्विकारात्मवस्त्वपेक्षयात्यन्तविपरीतदर्शनं मिथ्याज्ञानं तेन भावितं तत् संस्कारप्रचयवत्त्वं ततोऽतिशयेन मोहमापाद्यमानो लोकः श्रुतेरपि तत्त्वं विस्मृत्य पुनर्यत् किञ्चित् प्रसङ्गमापाद्य सक्रियत्वमेवात्मनश्चोदयतीति पुनः पुनस्तत्वभूतमुत्तरं भगवानभिधत्ते वस्तुनश्चदुर्विज्ञेयत्वात् पुनःपुनः प्रतिपादनं तत्तद् भ्रमनिराकरणार्थ मुपयुज्यते तथा च नास्ति पुनरुक्तिरित्यर्थः असदुक्तप्रतिवचनमेवानुवदति अव्यक्तोयमिति कर्माभाव उक्त इति सम्बन्धः उक्तस्य न जायते म्रियते वा विपश्चिदित्यादि श्रुतौ प्रकृत

### भाषाअनुवाद।

जो कहा कि कर्म की गति गहन कहि जान वे जोग नहीं है और कहा कि कर्म अकर्म निषिद्ध कर्मका तत्त्व जानिकर कर्म को करे सोई कर्म गति की कठिनाई देखावते हुये वह तत्त्व कहते हैं जिसके यथार्थ ज्ञानमें पण्डितभी मोहित होते और जिसके ज्ञानसे संसारसे छूटि जाते हैं उसको मै कहताहूं तुम सुनो यह प्रतिज्ञा जो करीथी

## शाङ्करभाष्यम्।

नादशुभान्मोक्षणं नच बुद्धिमत्त्वं युक्तता कृत्स्नकर्म्मकृचिदित्यादि च फल मुपपद्यते स्तुतिर्वा मिथ्याज्ञानमेव हि साचादशुभरूपं कुतोऽन्यस्माद शुभान्मोक्षणं नहि तमस्तमसोनिवर्त्तकं भवति ननु कर्म्मणि चाकर्म्म दर्शनं अकर्मणि वा कर्म्म दर्शनं न तत् मिथ्याज्ञानं किं तर्हि गौणं फल-भावाभावनिमित्तं न कर्म्माकर्म्मविज्ञानादपि गौणात् फलस्याश्रवणा-च्चापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषोलभ्यते स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति तत्र-

### आनन्दगिरिकृतटीका।

स्मृतावसङ्कल्पादिन्यायेन च प्रसिद्धत्वमस्तीत्याह स्तुतीति न केवलमुक्तः कर्म्माभावः किन्तु सर्व्वकर्माणि मनसा संन्यस्येत्यादौ वक्ष्यमाणश्चेत्याह वक्ष्यमाणश्चेति ननु कर्मणां देहादि-निर्व्वर्त्तकत्वेन तत् त्रैविध्यात् कूटस्थ स्वभावस्यात्मनोऽसङ्कल्पात्तद्व्यापाररूपस्य कर्मणोऽप्रसिद्ध-त्वात् न तस्मिन् कर्मणि विपरीतस्य कर्मणो दर्शनं सिध्यतीत्याशंक्याह तस्मिन्निति कर्मैव विपरीतं तस्य दर्शनमिति यावत् अहं कर्त्तेत्यात्मसमानाधिकरणस्य व्यापारस्यानुभवात् कर्मभ्रमस्तावदात्मन्यत्यन्तरूढ़ोस्तीत्यर्थः आत्मनि कर्मविभ्रमोस्तीत्यत्र हेतुमाह यत इति आत्मनो निःक्रियत्वे कुतस्तस्मिन् यथोक्तो विभ्रमः सम्भवेदित्या शंक्याह देहेति इदानी मात्मन्यकर्मभ्रममुदाहरति तथेत्यादिना यथानुक्तौ स्वाभाविकमरूप्यत्वं रूप्यत्वमारोपितं तदभावेप्यारोपपचपाती तथात्मनोपि स्वाभाविकमविक्रियत्वं पुनरप्यस्तं तदभावत्वात् कर्माभावोप्यध्यस्त एवेति मन्वानः सर्व्वमुपसंहरति तत्त्वेदमिति आत्मनि कर्मादिविभ्रमे

### भाषा अनुवाद।

सो अब कहते हैं कि भगवत आराधन रूप कर्म जब कि, किसी तरह ज्ञान होने मे बाधा नहीं करता तो वह क्या कर्म है उसको अकर्महीं अर्थात् कर्म संन्यासही जो देखते हैं सोई कहा कि अकर्मे यः पश्येत् और शास्त्र विहित कर्म न करनेसे दोष होता फिर वही न करना ज्ञान का प्रतिवन्धक कहे बाधाका हेतु होता है इससे शास्त्रोक्त कर्म को न करना हीं जोअकर्म उसीको कर्तव्य कर्म जो देखते हैं एई लोग कर्मकारी पुरुषों के मध्यमे बुद्धिमान हैं भगवान उनीकी प्रसंशा करते हैं कि ऐसेही कर्म

शाङ्करभाष्यम् ।

व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किं तत्त्वं व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यान्न चैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु नापि शब्दान्तरेण पुनः पुनरुच्यमानं वैसुख्यं सुबोध्यं स्यादित्येवं वक्तुं युक्तं कर्मण्येवाधिकारस्ते इत्यत्र हि स्फुटतर उक्तोऽर्थो न पुनर्वक्तव्यो भवति सर्वत्र च प्रशस्तं सुबोद्धव्यञ्च कर्त्तव्यमेव न निष्प्रयोजनं बोद्धव्यमित्युच्यते नच मिथ्याज्ञानं बोद्धव्यं भवति तत्प्रत्युपस्थापितञ्चावस्थाभासं नापि नित्यानामकरणादभावात् प्रत्यवायोत्पत्तिर्नासतो विद्यते भाव इति वचनात् कथमसतः सज्जायेतेति

आनन्दगिरिकृतटीका ।

लौकिके सिद्धे सति एवं कर्मणीत्यादिवचनं तत्परिहारार्थं भगवानुक्तवानित्यर्थः सम्प्रत्युक्तेऽर्थे श्लोकाक्षरसमन्वयं दर्शयितुं कर्मणीत्यादि व्याचिख्यासुः भूमिकां करोति यत्चेति व्यवहारभूमौ कार्य्यकारणाभिकरणं कर्म स्वेनैव रूपेण व्यवस्थितं सदात्मन्यविक्रिये-कार्य्यकरणारोपणद्वारेण सर्व्वैरारोपितमित्यत्र हेतुमाह यत इति अविवेकिनान्तु कर्त्तृत्वाभिमानः सुतरामिति वक्तुमपिशब्दः आत्मनि कर्मरहिते कर्मारोपे दृष्टान्तमाह नदीति एवमात्मनि कर्मारोपमुपपाद्य प्रथमपादं व्याचष्टे अत इति आरोपविषयीभूतत्वेन कर्मणि सर्व्वलोकप्रसिद्धे कर्माभावं यः पश्येत् स बुद्धिमानिति सम्बन्धः अकर्मदर्शनस्य यथाभूतत्वं सम्यक्त्वं तत्र दृष्टान्तमाह गच्छत्स्विति द्वितीयपादं व्याकरोति अकर्मणि चेति अध्यारोपमभिनयति तूष्णीमिति अकर्मणि कर्मदर्शने युक्तिमाह अहङ्कारेति पूर्वार्द्धोक्तमनूद्योत्तरार्द्धं विभजते य एवमिति आत्मनि कार्य्यकरणसंघातसमारोपद्वारेण तद्व्यापार-

भाषा अनुवाद ।

अनुष्ठान करते जो ज्ञान योग को प्राप्त होते सोई योगी पुरुष हैं और उनको भगवत आराधन रूप कर्म के अन्तर्भूत कहे अङ्गभूत समस्त कर्म करना आयगया है वही कहा कि स युक्तः कृत्स्न कर्म कृत् इस से यह आया कि ज्ञान मार्गमे जाने की इच्छा जिसको है उसको कर्मयोग अवस्था मे कर्म करना उचित है सोई ३ अध्याय के ४ श्लोक मे कहा कि न कर्मणामनारम्भा न्नैष्कर्म्यं पुरुषो श्नुते और सम्यग्‌ ज्ञान होने से केवि

## शाङ्करभाष्यम् ।

च दर्शितं असतः सज्जन्मप्रतिषेधात् असतः सदुत्पत्तिं ब्रुवता असदेव सद्भवेत् सच्चाप्यसद्भवेदित्युक्तं स्यात् तच्चाप्ययुक्तं सर्वप्रमाणविरोधान्नच निष्फलं विदध्यात् कर्म शास्त्रं दुःखस्य च बुद्धिपूर्वकतया कार्य्यत्वानुपपत्तेः तदकरणे च नरकपाताभ्युपगमे अनर्थायैवोभयथापि करणे अकरणे च शास्त्रं निष्फलं कल्पितं स्यात् स्वाभ्युपगमविरोधश्च नित्यं निष्फलं कर्मेत्यभ्युपगम्यते मोक्षफलायेति ब्रुवतः तस्माद्यथाश्रुत एवार्थः कर्मण्य कर्म इत्यादेस्तथाच व्याख्यातोऽस्माभिः श्लोकः ॥ १८ ॥

### आनन्दगिरिकृतटीका ।

मात्रे कर्मण्यि शुक्तिकायामिव रजतमारोपिते विषये तदभावमकर्मवस्तुतोयोरजताभाववदनुभवति अकर्मणि च संघातव्यापारोपरमे तद्द्वारा स्वात्मन्यहं तूष्णीमासे सुखमित्यारोपिते गोचरे कर्माहङ्कारहेतुकं यस्तत्त्वतोमन्यते सकृत्यदभावविभा हीनशुक्तिमात्रवदात्ममात्रं कर्म तदभाव विभागशून्यं कूटस्थं परमार्थतोवगच्छन् बुद्धिमानित्यादि स्तुतियोग्यताम् गच्छतीत्येवं स्वाभिप्रायेण श्लोकं व्याख्याय अत्र वृत्तिकारव्याख्यामनुत्थापयति अयमिति अन्यथा व्याख्या मेव प्रश्नद्वारा प्रकटयति कथमित्यादिना ईश्वरार्थेनानुष्ठाने फलाभाववचनं व्याहतमिति मत्वाह किन्वेति नित्यानामकर्मत्वमप्रसिद्धमित्याशंक्य फलराहित्यगुणयोगात्तेष्वकर्मत्वव्यवहारः सिध्यतीत्याह गौण्येति नित्यानामकरणं मुख्यवृत्त्यैवाकर्मशब्दवाच्यमित्याह तेषाञ्चेति तत्र कर्मशब्दस्य प्रत्यवायाख्यफलहेतुत्वं गुणयोगात् गौण्यैव वृत्त्या प्रवृत्तिरित्याह तच्चेति पातनिकामेवं कृत्वा श्लोकाक्षराणि व्याचष्टे तत्रेत्यादिना अकर्मणिचेत्यादिव्याकरोति तथेति स बुद्धिमानित्यादि पूर्ववत् परकीयं व्याख्यानं व्युदस्यति नैतदिति नित्यं कर्माकर्म नित्याकरणं कर्मेति ज्ञानात् दुरितनिवृत्त्यनुपपत्तेर्भगवद्वचनं वृत्तिकारमते बाधितं स्यादित्यर्थः धर्मेण पापमपनुदतीति श्रुतेर्नित्यनुष्ठानात् ।

### भाषा अनुवाद ।

कर्मका कुछ आवश्यक नहीं है सोई ३ अध्यायके १७ श्लोक में कहा कि यस्त्वात्मरतिरेवस्या दात्मतृप्तश्च मानव इति ये दोनों बातें इस श्लोक से अच्छी तरह कही गई और जो कर्मेन्द्रियाणि संयम्य यह ३ अध्यायके ६ श्लोक से कहा इन्द्रियों से आत्मा भिन्न है तथा कोई कर्म नहीं कर्ता ऐसे जन दृढ़ समाधि में मग्न जो रहते हैं और अनायास कहे वेमार्गि

आनन्दगिरिकृतटीका।

दुरितनिवर्हणप्रसिद्धेस्तदनुष्ठानस्य फलान्तराभावात् तदकर्मेति ज्ञात्वानुष्ठाने क्रियमाणे कथमशुभक्षयो नेति शङ्कते कथमिति चेतनस्येश्वरज्ञानादिशुद्धिः परमात्मनेति स्मरणात् कर्मणामात्यन्तिकाशुभक्षयाभावेऽप्यङ्गीकृत्य परिहरति नित्यानामिति नित्यानुष्ठानादशुभक्षयेऽपि नास्मिन् प्रकरणे तद्विवक्षितं यत् ज्ञात्वा मोक्ष्यसेऽशुभादिति ज्ञानादशुभक्षयस्य प्रतिज्ञातत्वाच्च तज्ज्ञानफलाभावविषयमेषितव्यमित्याह नन्विति अशुभस्य फलाभावाज्ञानकार्य्यत्वाभावात् न फलाभावज्ञानात्क्षयः सिध्यतीत्यर्थः किञ्चातीन्द्रियोऽर्थः शास्त्रान्निश्चीयते नच नित्यकर्मणां फलाभावज्ञानादशुभनिवृत्तिरित्यत्र शास्त्रमस्तीत्याह नहीति नित्याकरणं कर्मेतिज्ञानमपि नाशुभनिवृत्तिफलत्वेन चोदितमस्तीत्याह नित्यकर्मेति भगवद्वचनमेवात्र प्रमाणमित्याशङ्क्याह नचेति साधारणमेव यत् ज्ञात्वेत्यादि भगवतो वचनं नतु नित्यानां फलाभावं ज्ञात्वेति विशेषविषयमित्यर्थः अशुभमोक्षणासम्भवप्रदर्शनेन कर्मण्यकर्मदर्शननिराकरणन्यायेनाकर्मणि कर्मदर्शनं निराकरोति एतेनेति नामादिषु फलाय ब्रह्मदृष्टिवदकर्मण्यपि फलार्थं कर्मदृष्टिविधानाच्चाशुभमोक्षणानुपपत्तिरित्याशंक्याह नहीति अत्र हि लोके नित्यस्य कर्त्तव्यताभावात् परमते विवक्षितमतश्चाकर्मणि कर्मणि कर्मदर्शनं विधीयते तत् फलायेति कल्पनापरस्य सिद्धान्तविरुद्धेत्याह नित्यस्त्विति परमतेपि नित्यस्य कर्त्तव्यमात्रमत्र लोके न विवक्षितं किन्तु नित्यानुष्ठाने प्रवृत्तिसिद्ध्यर्थं नित्याकरणात् प्रत्यवायो भवतीति ज्ञानमपि कर्त्तव्यत्वेनात्र विवक्षितमेवेत्याशंक्याह नचेति न तावत् प्रवृत्तिरस्य विज्ञानस्य फलं नियोगादेव तदुपपत्तेर्नापि फलान्तरमनुपलम्भादतोऽफलत्वादकरणात् प्रत्यवायो भवतीति ज्ञानं नात्र कर्त्तव्यत्वेन विवक्षितमित्यर्थः किञ्चाकरणे कर्मदृष्टिविधावकरणस्यालम्बनत्वेन प्रधानत्वात् ध्येयत्वं वक्तव्यं तच्च तुच्छत्वादनुपपन्नमित्याह नापीति अकरणस्याऽसतो नामादिवदाश्रयत्वेन दर्शनासम्भवेपि सामानाधिकरण्येनेदं रजतमितिवद्दर्शनं भविष्यतीत्याशंक्याह नापि कर्मेति आदिशब्देन सर्व्वौतुकर्णादि गृह्यते फलवत्त्वं स्तुतिर्वा सम्यग्ज्ञानस्य युक्तं न मिथ्याज्ञानस्यानुपपत्तेरित्यर्थः स्वप्ने मिथ्याज्ञानमपि फलवदुपलब्धमित्याशङ्क्य मिथ्याज्ञानस्याशुभाविरोधित्वाच्च तस्मात् तन्निवृत्तिरित्याह मिथ्याज्ञानमेवेति अशुभादेवाशुभनिवृत्तौ दृष्टान्तेनाह नहीति अविवेकपूर्वकमिदं रजतमिति सदसतोः सामानाधिकरण्यान् मिथ्याज्ञानं युक्तं कर्माकर्मणोस्तद्विवेकेन भासतो सामानाधिकरण्यधीर्न ज्ञानं सिंहदेवदत्तयोरिव गौणं न मिथ्याज्ञानं इति शङ्कते नन्विति कर्माकर्मेति दर्शने फलाभावो मुख्यः अकर्म कर्मेति दर्शने तु फलाभावो मुख्यस्तन्निमित्तमिदं ज्ञानं गौणमित्याह फलेति यथोक्तज्ञानस्य गौणत्वेऽपि प्रामाणिकफलाभावापन्न तद्गौणतोचितेति दूषयति नेत्यादिना कर्माकर्मेति दर्शने फलाभावो मुख्यः अकर्मकर्मेति दर्शने तु फलाभावो मुख्यस्तन्नि-

आनन्दगिरिकृतटीका ।

मिति मिदं ज्ञानं गौणमित्याह फलेति यथोक्तज्ञानस्य गौणत्वेऽपि प्रामाणिकफला-
भावापत्त्या तद्गौणतोचितेति दूषयति नेत्यादिना कर्माकर्मेत्यादि गौणविज्ञानोपन्यासव्या-
जेन नित्यकर्मकर्त्तव्यतया विवक्षितत्वाद्गौणज्ञानस्याफलत्वमदूषणमित्याशङ्क्याह नापीति ज्ञाना-
दशुभमोक्षणस्य श्रुतस्य हानिः श्रुतस्य नित्यानुष्ठानस्य कल्पनेत्यनेन व्यापारगौरवेण न कश्चि-
द्विशेषः सिध्यतीत्यर्थः उक्तमेव प्रपञ्चयति स्वशब्देनेति नरकपातः स्यादतो विधेरेवा-
नुष्ठेयानि तानीति शेषः यथोक्तवाचकशब्दप्रयोगादेवापेक्षितार्थसिद्धिसम्भवे भगवतो
व्याजवचनकल्पनमनुचितमित्याह तत्रेति प्रकृते श्लोके इत्थिकृतं व्याख्यानेन परमाप्तस्यैव
भगवतो विप्रलम्भकत्वमापादितमिति तदीयं व्याख्यानमुपेक्षितव्यमिति फलितमाह तत्रैव-
मिति नित्यकर्मानुष्ठानसिद्ध्यर्थं व्याजरूपमिति भगवद्वचनमनुचितमित्याशङ्क्य स्वशब्देनापी-
त्यादि प्रागुक्तपरिपाट्यापि तदनुष्ठानबोधनसम्भवान्नैवमित्याह नचैतदिति वस्तुशब्देन
नित्यकर्मानुष्ठानमुच्यते यथात्मप्रतिपादनं सुबोधत्वसिद्ध्यर्थं पौनःपुन्येन क्रियते तथा
नित्यानामपि कर्मणामनुष्ठानं कर्मण्यकर्मेत्यादि शब्दान्तरेणोच्यमानं सुबोधं स्यादिति भग-
वतः शब्दान्तरं युक्तमित्याशङ्क्य तस्य नित्यानुष्ठानवाचकत्वाभावान्नैवमित्याह नापीति किञ्च
पूर्वमेव नित्यानुष्ठानस्य स्पष्टमुपदिष्टत्वान्न तस्य सुबोधनार्थं शब्दान्तरमपेक्षितमित्याह कर्मण्येव-
ति कर्माकर्मादिविज्ञानव्याजेन नित्यकर्मानुष्ठानकर्त्तव्यतायां तात्पर्यमित्येतन्निराकृत्य कर्मा-
कर्मादिदर्शनं गौणमिति पक्षे दूषणान्तरमाह सर्वत्र चेति लोके वेदे च यथा प्रशस्तं
देवतादि तत्त्वं यच्च कर्त्तव्यमनुष्ठानार्हमग्निहोत्रादि तदेव बोद्धव्यमित्युच्यते न निष्फलं
काकदन्तादिकमेवमकर्मदर्शनं कर्मणि च कर्मदर्शनं गौणत्वादेवाप्रशस्तमकर्त्तव्यञ्च नात-
स्तद्बोद्धव्यमिति वचनमर्हतीत्यर्थः किञ्च कर्मादिविषयस्याकत्वाद्गौणमपि तद्विषयं ज्ञानं
मिथ्याज्ञानमिति न तस्य बोद्धव्यत्वसिद्धिरित्याह नचेति मिथ्याज्ञानस्य बोद्धव्यत्वाभावेऽपि
तद्विषयस्य बोद्धव्यता सिध्येदित्याशङ्क्य वस्तुभूतत्वान्नैवमित्याह तत्प्रत्युपस्थापितञ्चेति
यत्तु पुनरकरणस्य प्रत्यवायहेतुत्वम् अकरणे गौण्या वृत्त्या कर्मशब्दप्रयोगे निमित्तमिति
तद्दूषयति नापीति अकरणात् प्रत्यवायो भवतीत्यत्र श्रुतिस्मृति विरोधमभिधाय युक्ति
विरोधमभिदधाति असत इति अभावः सद्रूपेण भवनमभवनञ्च निःस्वरूपत्वादनुपपन्नं
निरस्तशङ्कस्तत्त्वस्य किञ्चित् तत्त्वाभ्युपगमे सर्वप्रमाणानामप्रामाण्यप्रसङ्गादित्याह तच्चेति
यत्तु नित्यानां फलराहित्यं तत्राकर्मशब्दप्रयोगे निमित्तमिति तन्निरस्यति नचेति न केवलं
विध्युद्देशे स्वफलाभावादित्यादौ तेषां निष्फलत्वमिति धात्वर्थस्य क्लेशात्मकत्वात् तत्र
श्रुतफलाभावेऽपि विधिरवकाशमासादयेदित्याह दुःखेति दुःखरूपस्यापि धात्वर्थस्य साध्य-
त्वेन काम्यत्वात् तद्विषयो विधिः स्यादिति चेन्नेत्याह दुःखस्य चेति स्वर्गादिफलाभावे-
ऽपि नित्यनैमित्तिकनिमित्तविरयनिवासार्थं दुःखरूपाण्यपि स्यादनुष्ठेयत्वमित्याशङ्क्याह

## यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।
## ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥ १८॥

आनन्दगिरिकृतटीका।

तदकरणे चेति फलान्तराभावेऽपि मोक्षसाधनत्वात् मुमुक्षुणा नित्यानि कर्माणि अनुष्ठेयानि इत्याशङ्क्याह स्वाभ्युपगमेति वृत्तिकारव्याख्यानासम्भवे फलितमुपसंहरति तस्मादिति कोसौ यथा स्तुतोऽर्थः श्लोकस्येत्याशङ्क्याह तथा चेति॥ १८॥

स्वामिकृतटीका।

मनुष्येषु कर्मकुर्वाणेषु स एव बुद्धिमान् व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः तं प्रस्तौति स युक्तो योगी तेन कर्मणा ज्ञानयोगावाप्तेः स एव कृत्स्न कर्म कर्त्ता च सर्वत संप्लुतोदकस्थानीये च तस्मिन् कर्मणि सर्वे कर्मफलानामन्तर्भावात् तदेवमारुरुक्षोः कर्मयोगाधिकारावस्थायां न कर्मणामनारम्भादित्यादिनोक्तः एव कर्मयोगः स्पष्टीकृतस्तत्प्रपञ्चरूपत्वाच्चास्य प्रकरणस्य न पौनरुक्त्यदोषः अनेनैव योगारूढावस्थायां यस्त्वात्मरतिरेव स्यादित्यादिना यः कर्मानुपयोग उक्तस्तस्याप्ययमर्थः प्रपञ्चः कृतोवेदितव्यः तदारुरुक्षोरपि कर्म बन्धकं न भवति तदारूढस्य कुतो बन्धकं स्यादित्यत्रापि श्लोकोयुज्यते यद्वा कर्मणि देहेन्द्रियादिव्यापारे वर्त्तमानेऽप्यात्मनो देहादि व्यतिरेकानुभवेन अकर्म स्वाभाविकं नैष्कर्म्यमेव यः पश्येत् तथा अकर्मणि च ज्ञानरहिते दुःखबुद्ध्या कर्मणां त्यागे कर्म यः पश्येत्तस्य प्रयत्नसाध्यत्वेन मिथ्याचारत्वात् तदुक्तं कर्मेन्द्रियाणि संयम्येत्यादिना य एवं भूतः स तु सर्वेषु मनुष्येषु बुद्धिमान् पण्डितः तत्र हेतुर्यतः कृत्स्नानि सर्वाणि यदृच्छया प्राप्तानि आहारादीनि कर्माणि कुर्वन्नपि स युक्त एव अकर्त्तात्मज्ञानेन समाधिस्थ एवेत्यर्थः अनेनैव ज्ञानिनः स्वभावादापन्नं फलञ्च भक्षणादिकं न दोषाय अन्यस्य तु रागतः कृतं दोषायेति विकर्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम्॥ १८॥

भाषा अनुवाद।

प्राप्त भये अन्नको भोजन करलेते वे सकल कर्म करते भी योगी हैं और उनको विकर्म जो निषिद्ध कर्म मृगमांस भोजनादि दोष भी नहीं लगता क्योंकि उन् हैं उस वस्तुका आग्रह नही हैं परन्तु अज्ञानी को आग्रह औ रुचि है इसीसे मृगमांस खानेसे दोष है इससे निषिद्ध कर्मका तत्त्व कहा यही तत्त्व जानि के सब कर्म मे प्रवृत्त होना मैने कहा है सो तुम ठीक ठीक जानो॥ १८॥

## शाङ्करभाष्यम् ।

तदेतत् कर्मण्यकर्मादि दर्शनं स्तूयते यस्येति यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि समारभ्यन्ते इति समारंभाः कामसङ्कल्पवर्जिताः कामैस्तत्कारणैश्च सङ्कल्पैर्वर्जिताः सुधैव चेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेन चेल्लोकसंग्रहार्थं निवृत्तेनचेत् जीवनमात्रार्थं तं ज्ञानाग्निदग्धकर्माणं कर्मादावकर्मादि दर्शनं ज्ञानं तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि शुभाशुभ लक्षणानि कर्माणि यस्य तमाहुः परमार्थतः पण्डितं बुधाः ब्रह्मविदः ॥ १९ ॥

### आनन्दगिरिकृतटीका ।

कर्मण्यकर्मदर्शनं पूर्वोक्तं स्तोतुमुत्तरश्लोकं प्रस्तौति तदेतदिति यथोक्त दर्शित्वं पूर्वोक्त-दर्शनसम्पन्नत्वं समारम्भशब्दस्य कर्मविषयत्वं न कृत्वा किन्तु व्युत्पत्त्येत्याह समारभ्यन्त इतीति कामसङ्कल्पवर्जितत्वे कथं कर्मणामनुष्ठा.मित्याशंक्याह सुधैवेति उद्देश-फलाभावे तेषामनुष्ठानं याहच्छिकं स्यादित्याशंक्य प्रवृत्तेन निवृत्तेन वा तेषामनुष्ठानं याहच्छिकं स्यादितिविकल्प्य क्रमेण निरस्यति प्रवृत्तेनेत्यादिना ज्ञानाग्नीत्यादि विभजते कर्मादाविति यथोक्त ज्ञानं योग्यमेव दहति नायोग्यमिति विवक्षितत्वात्तस्मिन्नग्निपदं यथोक्तविज्ञानविरहिणामपि वैशेषिकादीनां पण्डितत्वाप्रसिद्धिमाशंक्य तेषां पण्डिता भासत्वं विवक्षित्वा विशिनष्टि परमार्थत इति ॥ १९ ॥

### स्वामिकृतटीका ।

कर्मण्यकर्म यः पश्येदित्यनेन श्लोकार्थापत्तिभ्यां यदुक्तमर्थद्वयं तदेव स्पष्टयति यस्येति पञ्चभिः सम्यगारभ्यन्त इति समारम्भाः कर्माणि काम्यत इति कामः फलं तत्सङ्कल्पेन वर्जिता यस्य भवन्ति तं पण्डितमाहुः अत्र हेतुर्यतस्तैः समारम्भैः शुद्धे चित्ते सति जातेन ज्ञानाग्निना दग्धानि अकर्मतां नीतानि कर्माणि यस्य तं आरूढा वस्थायां तु कामः फलहेतुविषयः तदर्थमिदं कर्त्तव्यमिति कर्त्तव्य विषयः सङ्कल्पस्ताभ्यां वर्जितां शेषं स्पष्टम् ॥ १९ ॥

## भाषा अनुवाद ।

अब कर्मण्यकर्म यः पश्येत् इस श्लोक से श्रुति का तात्पर्य्य अर्थ जो कहा सोई पांच श्लोक से स्पष्ट करके कहते हैं कि जिस के सब समारम्भ

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः॥ २०॥

शाङ्करभाष्यम्।

यस्त्वकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निःकर्मा सन्न्यासी जीवनमात्रार्थचेष्टः सन् कर्माणि न प्रवर्त्तते यद्यपि प्राग्विवेकतः प्रवृत्तः यस्तु प्रारब्धकर्मा सन् उत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात् स कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव स कुतश्चिन्निमित्तात् कर्म-परित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसंग्रहार्थं पूर्ववत् कर्मणि प्रवृत्तोपि नैव किञ्चित् करोति ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्माकर्मैव सम्पद्यत इत्येतदर्थं दर्श-

आनन्दगिरिकृतटीका।

विवेकात् पूर्वं कर्मणि प्रवृत्तावपि सति विवेके तत्र न प्रवृत्तिरित्याशंक्याङ्गीकरोति यस्त्विति विवेकात् पूर्वमभिनिवेशेन प्रवृत्तस्य विवेकानन्तरमभिनिवेशाभावात् प्रवृत्त्य-सम्भवेपि जीवनमात्रबुद्धिस्य प्रवृत्त्याभासः सम्भवतीत्यर्थः सत्यपि विवेके तत् तसाक्षात्कारानुदयात् कर्मणि प्रवृत्तस्य कथं तत्त्यागः स्यादित्याशंक्याह यस्तु प्रारब्धेति व्यवहितेत्यादि समनन्तरश्लोकमवतारयितुम् भूमिकां कृत्वा तदवतारणप्रकारं दर्शयति स कुतश्चिदिति लोकसंग्रहादिनिमित्तं कर्मपरित्यागासम्भवे सति तस्मिन् प्रवृत्तोपि नैव करोति किञ्चिदिति सम्बन्धः कर्मणि प्रवृत्तो न करोति कर्मेति कथमुच्यते तत्राह स्वप्रयोजनाभावादिति

भाषा अनुवाद।

कहे कर्म कामसंकल्प वर्जित अर्थात् कामना रहित हैं उसी को बुध कहे बुद्धिमान लोग पण्डित कहते हैं जिस से कर्म अनुष्ठान के द्वारा शुद्धचित्त होने से प्रगट हुए ज्ञान अग्नि से सकल कर्म दग्ध हो जाते हैं फेरि कर्म बन्धन उस को नहीं होता है और ज्ञान आरूढ़ अवस्था में काम का अर्थ कर्म फल और उस के अर्थ यह कर्म हम को करना उचित है परन्तु ज्ञान आरूढ़ पुरुष इन दोनों से भी रहित है सोई कहा कि जिस के सब समारम्भ कामना रहित होंय सोई पण्डित है॥ १९॥

## शाङ्करभाष्यम् ।

यिस्त्वाह त्यक्त्वेति त्यक्त्वा कर्मस्वभिमानं फलासङ्गञ्च यथोक्तेन ज्ञानेन नित्यतृप्तो निराकाङ्क्षो विषयेष्वित्यर्थः निराश्रय आश्रयरहित आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसाधयिषति दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः तेनैवम्भूतेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासम्भवात् लोकसंग्रह चिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत् कर्मण्यभिप्रवृत्तोऽपि निःक्रियात्मदर्शन सम्पन्नत्वान्नैव किञ्चित् करोति सः ॥ २० ॥

### आनन्दगिरिकृतटीका ।

कथं तर्हि कर्मणि प्रवर्तते तत्राह लोकेति प्रवृत्तेरर्थक्रियाकारित्वाभावं पश्वादिभिश्चाविशेषादितिन्यायेन व्यावर्तयति पूर्ववदिति कथं तर्हि विवेकिनामविवेकिनाञ्च विशेषः स्यादित्याशङ्क्य कर्मादौ सङ्गासङ्गाभ्यामित्याह कर्मणीति उक्तेर्थे समनन्तरश्लोकमवतारयति ज्ञानाग्नीति एतमर्थं दर्शयिष्यन्निमं श्लोकमाहेति योजना यथोक्तं ज्ञानं कूटस्थात्मदर्शनं तेन स्वरूप भूतं सुखं साक्षादनुभूय कर्मणि तत् फलेच सङ्गमपास्य विषयेषु निरपेक्षश्चेष्टते निहानित्याह त्यक्त्वेत्यादि इष्टसाधनमपेक्षस्य कुतो निरपेक्षत्वमित्याशङ्क्य विशिनष्टि निराश्रय इति यदाश्रित्येति यच्छब्देन फलसाधनमुच्यते आश्रयरहितं इत्यस्यार्थं स्पष्टयति दृष्टेति तेन ज्ञानवता पुरुषेणैवम्भूते त्यक्त्वाकर्मफलासङ्गमित्यादिना विशेषितेनेत्यर्थः ततः समाधानात् कर्मणः सकाशादिति यावत् निर्गमासम्भवे हेतुमाह लोकेत्यादिना पूर्ववत् ज्ञानोदयात् प्रागवस्थायामिवेत्यर्थमभिप्रवृत्तोपि लोकदृष्ट्येति शेषः नैव करोति किञ्चिदिति स्वदृष्टेति द्रष्टव्यम् ॥ २० ॥

### स्वामिकृतटीका ।

किञ्च त्यक्त्वेति कर्मणि तत्फले च सक्तिं त्यक्त्वा निजानन्देन तृप्तः अत एव योगक्षेमार्थमाश्रयणीय रहितः एवं भूतोयः स्वाभाविके विहिते वा कर्मणि अभितः प्रवृत्तोऽपि किञ्चिदपि नैव करोति तस्य कर्म अकर्मतामापद्यत इत्यर्थः ॥ २० ॥

### भाषा अनुवाद ।

और सर्व कर्म तथा कर्म के फल मे आसक्ति छोड़ कर नित्य आनन्द रूप आत्मा मे सन्तुष्ट मनुष्य अप्राप्त वस्तु की चेष्टा को प्राप्त की पालन

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

शाङ्करभाष्यम् ।

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भाद् ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये सञ्जातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इत्येतमर्थं दर्शयितुमाह निराशीरिति निराशीर्निर्गताः आशिषो यस्मात् स निराशीः यतचित्तात्मा चित्तमन्तःकरणमात्मा बाह्यः कार्यकरणसङ्घातस्तावुभावपि यतौ संयतौ येन स यतचित्तात्मा त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहो येन स त्यक्तसर्वपरिग्रहः शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं कर्म तत्राप्यभिमानवर्जितं कर्म कुर्वन्नाप्नोति न प्राप्नोति किल्बिषमनिष्टरूपं पापं धर्मञ्च धर्मोऽपि मुमुक्षोरनिष्टरूपत्वात् किल्बिषमेव बन्धापादकत्वात् किञ्च शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतमाहोस्विच्छरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति किञ्चातो यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमित्युच्यते यदा शरीरनिर्वर्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरी-

आनन्दगिरिकृतटीका ।

बाह्य इति द्वयोः संयमने सत्यर्थसिद्धमर्थमाह त्यक्तेति सर्वपरिग्रहपरित्यागे देहस्थितिरपि दुःस्थास्यादित्याशङ्क्याह शरीरमिति मात्रपदेन पौनरुक्त्यादनर्थकं केवलं पदमित्याशङ्क्याह तत्रापीति शरीरं केवलमित्यादौ शरीरपदार्थं स्फुटीकर्त्तुमुभयथा सम्भावनया विकल्पयति शारीरमिति शरीरनिर्वर्त्यं शारीरमित्यस्मिन् पक्षे किं दूषणं शरीरस्थितिमात्रं शारीरमित्यस्मिन् वा पक्षे किं फलमिति पूर्ववादी पृच्छति किञ्चात इति शरीरनिर्वर्त्यं शारीरमित्यस्मिन् पक्षे सिद्धान्ती दूषणमाह उच्यत इति शरीरेण यन्निर्वर्त्यं विहितम्वा प्रथमे विरोधः स्यादित्याह यदेति प्रतिषिद्धाचरणेऽपि नानिष्टप्राप्तिरित्युक्ते प्रतिषेधशास्त्रविरोधः स्यादित्यर्थः द्वितीये विहितकरणे सत्यनिष्टप्राप्त्यभावादप्राप्तप्रतिषेधः स्यादित्याह शास्त्रीयञ्चेति दृष्टप्रयोजनं शारीर्यादिकं कर्मादृष्टप्रयोजनं स्वर्ग-

## शाङ्करभाष्यम् ।

रेण कुर्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत शास्त्रीयञ्च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः शारीरं कर्म कुर्वन्निति विशेषणात् केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्त्यं कर्म्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन्नाप्नोति किल्बिषमित्युक्तं स्यात् तत्रापि वाङ्मनोभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रमनर्थकं स्यात् यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधशास्त्रगम्यं शरीरवाङ्मनोवत्यं अन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करोमीत्यभिमानवर्जितः शरीरादि चेष्टामात्रं लोकदृष्ट्या कुर्वन्नाप्नोति किल्बिषमेवम्भूतस्य पापशब्दवाच्य किल्बिषप्राप्त्यसम्भवात् किल्बिषं संसारं नाप्नोति ज्ञानाग्निदग्ध सर्वकर्मत्वादप्रतिबन्धेन मुच्यत एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः एवं शारीरं केवलं कर्मत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥ २१ ॥

### आनन्दगिरिकृतटीका

साधनं ज्योतिष्टोमादिकं कर्मेतिविभागः शरीरनिर्वर्त्त्यं कर्म शारीरमभिमतमिति पक्षे दूषणान्तरमाह शारीरमिति वाचा मनसा चाकर्मणोऽनुष्ठाने सन्न्यासिनो भवत्येव किल्बिषप्राप्तिरित्याशंक्याह तत्रापीति वाङ्मनोऽभ्यां विहितानुष्ठाने वा प्रतिषिद्धकरणे वा किल्बिषप्राप्तिः सन्न्यासिनः स्यादिति विकल्पाद्ये जपध्यानविधिविरोधः स्यादित्युक्ता द्वितीयं दूषयति प्रतिषिद्धेति शरीर निर्वर्त्त्यं कर्म शारीरमिति पक्षमेवं प्रतिक्षिप्य द्वितीयपक्षे लाभं दर्शयति यदा त्विति अन्यदेह स्थितिप्रयोजनात् कर्मणः सकाशादिति शेषः तत्रापि विदुषः स्वदृष्ट्या न प्रवृत्तिरिति सूचयति लोकेति विद्वानुक्तयारीत्या वर्त्तमानो नाप्नोति किल्बिषमित्यत्र विवक्षितमर्थमाह एवम्भूतेति विधिनिषेधगम्यं कर्म देहस्थितिहेतुव्यतिरिक्तमकुर्वत इत्यर्थः शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमित्यस्योक्तेन प्रकारेण परिग्रहेण शारीरं केवलमितिविशेषणद्वयं निर्दोषं सिध्यतीतिफलितमाह एवमिति ॥ २१ ॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥ २२॥

शाङ्करभाष्यम्।

त्यक्तसर्वपरिग्रहस्य यतेरन्नादेः शरीरस्थितिहेतोः परिग्रहस्याभावात् याचनादिना शरीरस्थितौ कर्त्तव्यतायां प्राप्तायामयाचितमसंक्लृप्तमुपपन्नं यदृच्छयेत्यादिना वचनेनानुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वार-

स्वामिकृतटीका।

किञ्च निराशीरिति निर्गता आशिषः कामना यस्मात् यतं नियतं चित्तमात्मा-शरीरं च यस्य त्यक्ताः सर्वे परिग्रहा येन सः शरीरं शरीरमात्रनिर्वर्त्त्यं कर्तृत्वाभिनिवेश-रहितं कर्म कुर्वन्नपि किल्बिषं बन्धं न प्राप्नोति योगारूढपक्षे शरीरनिर्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कुर्वन्नपि किल्बिषं विहिताकरणनिमित्तदोषं न प्राप्नोति॥ २१॥

भाषा अनुवाद।

इन दोनो से दूर हैं इसी से वे कोई कर्म मे प्रवृत्त होंय पर उन का वह कर्म कर्म नहीं है अर्थात् उन के सब कर्म अकर्मता को प्राप्त हैं सोई कहते हैं कि कर्म के फल औ सङ्ग जो आसक्ति तिसे छोड़ि नित्य सुख रूप आत्मा से तृप्त वेपरवाह हो जो कर्म मे प्रवृत्त भी हैं पर वह कर्म उनका कुछ भी नहीं कर सकता है यह जानो॥ २०॥

विक्षेपकारी कर्म्महीं को तो शास्त्र बन्धन का हेतु कहते हैं और अपने कर्म्म की प्रशंसाकरि जनकादिको दृष्टान्त देखाय प्रथम अवस्थामे अधिकार और ज्ञानप्राप्त भये भी निरहंकार कर्म करने से अदोष कहा इससे सर्वथा कर्म करना प्राप्त होता है इस सन्देह पर कहते हैं कि जो सर्वकामना परित्याग करि निष्काम होय तथा मन इन्द्री शरीर अपने वशीभूत राखि सकल विषय से निवृत्त हैं और शरीर निर्वाहमात्र के अर्थ कर्त्तृत्व अभिमान रहित होय कर्मोंको करते हुए भी वे मनुष्य कर्म बन्धनको नहीं प्राप्त होते हैं अर्थात् कर्मजनित किल्बिष जो पाप सो नहीं लगता है सोई कहा कि निराशीर्यतचितात्मा त्यक्तसर्वपरिग्रहः॥२१॥

शाङ्करभाष्यम् ।

माविष्कुर्वन्नाह यदृच्छेति यदृच्छालाभसन्तुष्टोऽप्रार्थितोऽयत्नतो लाभो यदृच्छालाभस्तेन सन्तुष्टः सञ्जातालंप्रत्ययः द्वन्द्वातीतो द्वन्द्व इह शीतोष्णादिभिः हन्यमानो विषण्णचित्तो द्वन्द्वातीत उच्यते विमत्सरो विगतमत्सरो निर्वैरबुद्धिः समस्तुल्यो यदृच्छया लाभस्यापि सिद्धावसिद्धौ च य एवम्भूतो यतिरन्नादेः शरीरस्थितिहेतोः लाभालाभयोः समोपि हर्षविषादवर्जितः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये नैव किञ्चित् करोम्यहं गुणागुणेषु वर्त्तन्ते इत्येवं सदा सम्परिचक्षाण आत्मकर्तृत्वाभावं पश्यन्नेव किञ्चिद्भिक्षाटनादिकं कर्म्मकरोति लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्म्मणि कर्त्ता भवति भिक्षाटनादिचेष्टास्वपि अकर्तृत्वाद्यनुसन्धानमेव विदुषः स्वानुभवेन तु शास्त्रप्रमाणादिजनितेनाकर्त्तैव स एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्र प्रयोजनं भिक्षाटनादिकं कर्म्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्यनुवाद एवैषः ॥ २२ ॥

आनन्दगिरिकृतटीका ।

पूर्वश्लोकेन सङ्गतिं दर्शयन्नुत्तरश्लोकस्थापयति त्यक्तेति अन्नादेरित्यादिशब्देन पादुकाच्छादनादि गृह्यते याचनादिनेत्यादिपदेन सेवा कृष्याद्युपादीयते भिक्षाटनार्थमुद्योगात् प्राक्काले केनापि योग्येन निवेदितं भैक्ष्यमयाचितम् अभिशस्तं पतितञ्च वर्जयित्वा सङ्कल्पमन्तरेण पञ्चभ्यः सप्तभ्यो वा गृहेभ्यः समानीतं भैक्ष्यमसंक्लृप्तं सिद्धमन्नं भक्तजनैः स्वसमीपमुपानीतमुपपन्नं यदृच्छया स्वकीयप्रयत्नव्यतिरेकेणेति यावत् आदिशब्देन माधुकर्यमसंक्लृप्तं प्राक् प्रणीतमयाचितं तत्कालिकोपपन्नञ्च भैक्षं पञ्चविधं स्मृतमित्यादि गृह्यते आविष्कुर्वन्निदं वाक्यमाहेति योजनीयं परोत्कर्षामर्षपूर्विकास्वस्योत्कर्षाकाङ्क्षाभिगता यस्मादिति व्युत्पत्तिमाश्रित्याविवक्षितमर्थमाह निर्वैरेति संक्षेपतो दर्शितमर्थं विभजयति य एवम्भूत इति तथापि प्रकृतस्य यतेर्भिक्षाटनादौ कर्तृत्वं प्रतिभाति तदभावे भिक्षाटनाद्यभावेन जीवनाभिभावप्रसङ्गादित्याशङ्क्याह लोकेति लौकिकैरविवेकिभिः सह व्यवहारस्य स्नानाचमनभोजनादिलक्षणस्य विदुष्यपि सामान्येन दर्शनात् तदनुसारेण लौकिकैरध्यारोपितकर्तृत्वभोक्तृत्वादिद्वानपि लोकदृष्ट्या भिक्षाटनादौ कर्तृत्वमनुभवतीत्यर्थः

गतसङ्गस्य मुक्तस्य ज्ञानावस्थित चेतसः ।
यज्ञाया ऽचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

शाङ्करभाष्यम् ।

त्यक्त्वा कर्मफलासङ्गं इत्यनेन श्लोकेन यः प्रारब्धकर्मा सन् यदा निःक्रिय ब्रह्मात्मदर्शनसम्पन्नः स्यात् तदास्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात्तदसम्भवे सति पूर्ववत्तस्मिन् कर्मण्यभिप्रवृत्तोपि नैवकिञ्चित् करोति स इति च कर्माभावः प्रदर्शितः यस्यैवं कर्माभावो दर्शितस्तस्यैव गतसङ्गस्येति गतसङ्गस्य सर्वतोनिवृत्तासक्तेर्मुक्तस्य

आनन्दगिरिकृतटीका ।

कथं तर्हि तस्याकर्तृत्वं तत्राह स्वानुभवेनेति यदृच्छेत्यादिपाददूयं व्याख्याय कृत्वापीत्यादि चतुर्थपादं व्याचष्टे स एवमिति भिक्षाटनादिना प्रातिभासिकेन कर्मणा विदुषो बद्धत्वाभावेऽपि कर्मान्तरेण निबद्धत्वं भविष्यतीत्याशङ्क्याह बन्धेति ज्ञानाग्निदग्धत्वादित्येवं शारीरं केवलमित्यादावुक्तस्यायमनुवाद इति योजना यथोक्तस्य कर्मणो युक्त्या महाविरोधाभ्युपगमसूचनार्थोऽपि शब्दः ॥ २२ ॥

स्वामिकृतटीका ।

किञ्च यदृच्छालाभेति अप्रार्थितोपस्थितो लाभो यदृच्छालाभस्तेन सन्तुष्टः द्वन्द्वानि शीतोष्णादीनतीतोऽतिक्रान्तस्तत् सहनशील इत्यर्थः विमत्सरो निर्वैरः यदृच्छालाभस्यापि सिद्धावसिद्धौ च समो हर्षविषादरहितः य एवम्भूतः स पूर्वोत्तरभूमिकयोर्यथा यथविहितं स्वाभाविकं वा कर्म कृत्वा बन्धं न प्राप्नोति ॥ २२ ॥

भाषा अनुवाद ।

और यदृच्छालाभ सन्तुष्ट कहे मांगेविना आप से आप प्राप्त जो यथा लाभ तिससे जो सन्तुष्ट हैं अर्थात् उत्तम अधम अधिक अल्प लाभ से हर्ष विषाद रहित हैं और शीत उष्ण हानि लाभ सुख दुःख वैर प्रीति आदि द्वन्द्व भाव रहित हैं तथा सिद्धि असिद्धि मे समभाव हैं वे पुरुष कर्म करते भी संसार गतिको नहीं प्राप्त होते अर्थात् कर्मबन्धन मे नहीं पड़ते हैं सोई कहा कि यदृच्छा लाभसन्तुष्टो द्वन्द्वातीतो विमत्सर इति ॥२२॥

## शाङ्करभाष्यम्।

निवृत्तधर्म्मादिबन्धनस्य ज्ञानावस्थितचेतसो ज्ञाने एव अवस्थितं चेतो यस्य सोऽयं ज्ञानावस्थितचेतस्तस्य यज्ञाय यज्ञनिर्वृत्यर्थमाचरतो निर्वर्त्तयतः कर्म्म समग्रं सहाग्रेण कर्म्मफलेन वर्त्तते इति समग्रं कर्म्मतत्समग्रं प्रविली-यते विनश्यतीत्यर्थः॥ २३ ॥

### आनन्दगिरिकृतटीका।

गतसङ्गस्येत्यादिश्लोकस्य व्यवहितेन सम्बन्धं वक्तुं वृत्तं कीर्त्तयति त्यक्त्वेति अनेन श्लोकेन नैव किञ्चित् करोति स इत्यत्र कर्माभावप्रदर्शित इति सम्बन्धः कस्य कर्माभाव प्रद-र्शनमित्याशङ्कायामाह प्रारब्धेति यः प्रारब्ध कर्मा सन् योऽवतिष्ठते तस्य कर्माभावः प्रद-र्शितस्तेहिरोधः स्यादित्याशङ्कावस्थाविशेषे तत्प्रदर्शनान्नैवमित्याह यदेति ननु ज्ञानवतः क्रियाकारकफलभावदर्शिनः कर्म परित्यागध्रौव्यात् कर्माभाववचनमप्राप्तप्रतिषेधः स्यादित्या-शङ्काह आत्मन इति लोकसंग्रहादिनिमित्तं प्रागेवोक्तमविद्यावस्थायामिव पूर्ववदित्युक्तम् एवं वृत्तमनूद्योत्तरश्लोकमवतारयति यस्येति यथोक्तस्यापि विद्यावतोमुक्तस्य भगवत् प्रीत्यर्थं कर्मा-नुष्ठानोपलम्भात्ततो बन्धारम्भः सम्भाव्येतेत्याशङ्काह यज्ञायेति धर्माधर्मादीत्यादिशब्देन रागद्वेषादिसंग्रहः तस्य बन्धनत्वं करणव्युत्पत्त्या प्रतिपत्तव्यं यज्ञनिर्वृत्त्यर्थं यज्ञशब्दितस्य भगवतो विष्णोर्नारायणस्य प्रीतिसम्पत्त्यर्थमिति यावत् ज्ञानमेव वाञ्छतो ज्ञानस्य प्रतिबन्धकं कर्म परिशङ्कितं परिहरति कर्मेति समग्रेणेत्यङ्गोक्त्य व्याचष्टे सहेत्यादिना॥ २३ ॥

### स्वामिकृतटीका।

किञ्च गतेति गतसङ्गस्य निःकामस्य रागादिभिर्मुक्तस्य ज्ञानेऽवस्थितं चेतो यस्य यज्ञाय परमेश्वराराधनार्थं कर्म चरतः सतः समग्रं सवासनं कर्म प्रविलीयते अकर्म भाव-मापद्यते आरूढ़ योगपक्षे यज्ञाय यज्ञरक्षणार्थं लोकसंग्रहार्थं कर्म कुर्वत इत्यर्थः॥ २३ ॥

### भाषा अनुवाद।

औरभी कहते हैं कि गत संगस्य कहे जिसका देह गेह औ विषयसे सङ्ग आसक्ति चलीगई औ काम क्रोध से मुक्त कहे छूट गया है औ चित्त ज्ञानरूप परब्रह्म मे स्थित है ऐसे गुणों से युक्त मनुष्यके यज्ञ रक्षार्थ किम्बा लोक शिक्षार्थ या शरीर यत्नार्थ अथवा भगवदाराधनार्थ किये हुये सम्पूर्ण कर्म वासना समेत विलीन हो जाते हैं॥ २३ ॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥ २४॥**

शाङ्करभाष्यम्।

कस्मात् पुनः कारणात् क्रियमाणं कर्म्म स्वकार्य्यारम्भमकुर्वन् समग्रं प्रविलीयत इत्युच्यते यतः ब्रह्मेति ब्रह्मार्पणं येन करणेन प्रकारेण ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति तस्यात्मव्यतिरेकेणाभावं पश्यति यथाशुक्तिकायां रजताभावं पश्यति तदुच्यते ब्रह्मैवार्पणमिति यथायद्रजतं तच्छुक्तिकैवेति ब्रह्मार्पणमित्यसमस्ते पदे यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः ब्रह्महविस्तथा यद्धविर्बुद्ध्या गृह्यमाणं तद्ब्रह्मैवास्य तथा ब्रह्माग्नाविति समस्तं पदमग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा ब्रह्मैव कर्त्तेत्यर्थः यत्तेन हुतं हवनक्रियापि तत् ब्रह्मैव यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव ब्रह्मकर्म्मसमाधिना ब्रह्मैव कर्म्म ब्रह्मकर्म्म तस्मिन् समाधिर्यस्य स ब्रह्मकर्म्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यं लोकसंग्रहचिकीर्षुणापि क्रियमाणं कर्म्म परमार्थतोऽकर्म्म ब्रह्मबुद्ध्युपमृदितत्वात्तदेवं सति निवृत्तकर्म्मणोऽपि सर्वकर्म्मसन्न्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसम्पादनं ज्ञानस्य सुतरामुपपद्यते यदर्पणाद्यधियज्ञे प्रसिद्धं तदस्याध्यात्मब्रह्मैव परमार्थदर्शिन इति अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतोब्रह्मत्वाभिधानमनर्थकं स्यात् तस्माद् ब्रह्मैवेदं सर्वमित्यभिजानतः विदुषः सर्वकर्म्माभावः कारकबुद्ध्यभावाच्च नहि कारकबुद्धिरहितं यज्ञाख्यं कर्म्म दृष्टं सर्वमेवाग्निहोत्रादिकं कर्म्मशब्दसमर्पितदेवता विशेषसम्प्रदानादि कारकबुद्धिमत्कर्त्रभिमानफलाभिसन्धिमच्चदृष्टं नोपमृदितक्रियाकारककर्म्मफलभेदबुद्धिमत्कर्त्तृत्वाभिमानफलाभिसन्धिरहितञ्च इदन्तु ब्रह्मबुद्ध्युपमृदितार्पणादि कारकक्रियाफलभेदबुद्धिमत्कर्म्मातोऽकर्मैव तत् तथाच दर्शितं कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः गुणागुणेषु वर्त्तन्ते नैव किञ्चित् करोमीति युक्तोमन्येत तत्त्वविदित्यादिभिस्तथा च दर्शयन् तत्रतत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति दृष्टा च कामाग्निहोत्रादौ कामोपमर्देन

## शाङ्करभाष्यम् ।

काम्यादग्निहोत्रादिहानिस्तथामतिपूर्वकत्वादीनां एवम्बिधेन कारकात्मनां कर्म्मणां कार्य्यविशेषस्यारब्धत्वं दृष्टं तथेहापि ब्रह्मबुद्ध्यपमृदितार्पणादि कारकक्रियाफलभेदबुद्धेर्वाह्यचेष्टामात्रेण कर्मापिविदुषोऽकर्म्म सम्पद्यतेऽत उक्तं समग्रं प्रविलीयत इति अत्र केचिदाहुर्यद्ब्रह्म तदर्पणादीनि ब्रह्मैव किलार्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म्म करोति तत्र नार्पणादिबुद्धिर्निवर्त्तते किन्त्वर्पणादिषु ब्रह्मबुद्धिराधीयते यथा प्रतिमादौ विष्ण्वादि बुद्धिर्यथाच नामादौ ब्रह्मबुद्धिरेवं सत्यमेवमपि स्याद्यति-ज्ञानयज्ञस्तुत्यर्थं प्रकरणं नस्यात् अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान् यज्ञशब्दितान् क्रियाविशेषानुपन्यस्य श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञ इति ज्ञानं स्तौति अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसम्पादने अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतोब्रह्मत्वाभिधानमनर्थकं स्यात् येत्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवत् ब्रह्मदृष्टिः क्षिप्यते-नामादिष्विव चेतिब्रुवते न तेषां ब्रह्मविद्योक्तेह विवक्षित स्यादर्पणादि विषयत्वात् ज्ञानस्य न च दृष्टिसम्पादनज्ञानेन मोक्षफलं प्राप्यते ब्रह्मैव तेन गन्तव्यमिति चोच्यते विरुद्धञ्च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति प्रकृतविरोधश्च सम्यग्दर्शनञ्च प्रकृतं कर्म्मण्यकर्म्म यः पश्येदित्यत्रान्ते च सम्यग्दर्शनं तस्यैवोपसंहारात् श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप

## आनन्दगिरिकृतटीका ।

नासतं चोद्यते कर्मेति स्तुतिमाश्रित्य शङ्कते कस्मादिति समस्तस्य क्रियाकारकफलात्मकस्य द्वैतस्य ब्रह्ममात्रत्वेन बाधितत्वात् ब्रह्मविदो ब्रह्ममात्रस्य कर्म प्रविलीयते सर्वमिति युक्तमित्याह उच्यत इति ब्रह्मविदो ब्रह्मैव सर्वक्रियाकारकफलजातं द्वैतमित्यत्र हेतुत्वेनानन्तरश्लोकमवतारयति यत इति अर्पणशब्दस्य करणविषयत्वं दर्शयन्नर्पणं ब्रह्मेति पदद्वयपक्षे सामानाधिकरण्यं साधयति येनेति यद्रजतं सा शुक्तिरितिवत् बाधायमिदं सामानाधिकरण्यमित्याह तस्येति तत्र दृष्टान्तमाह यथेति उक्तेऽर्थे पदद्वयमवतारयति तद्वदुच्यत इति उक्तमेवार्थं स्फुटयति यथा यदिति समाससंख्यां व्यावर्त्तयति ब्रह्मेति पदद्वयपक्षे विवक्षितमर्थं कथयति यदर्पणेति ब्रह्म हविरिति पदद्वयमवतार्य्य व्याचष्टे

## शाङ्करभाष्यम् ।

ज्ञानं लब्ध्वा परां शान्तिमित्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रतिमायामिव विष्णुदृष्टिरुच्यत इत्यनुपपन्नं तस्माद् यथाव्याख्यातार्थ एवायं श्लोकः ॥ २४ ॥

### आनन्दगिरिकृतटीका ।

ब्रह्मेत्यादिना यदर्पणबुद्ध्या गृह्यते तद्ब्रह्मविदो ब्रह्मैवेति यथोक्तं तथैवाहोत्याह तथेति अस्येति षष्ठी ब्रह्मविदमधिकरोति पर्ववदसमासमाशङ्क्य व्यावर्त्तयन् पदान्तरमन्तरार्थं व्याकरोति तथेति प्रागुक्तसमासवदिति व्यतिरेकः तत्र विवक्षितमर्थमाह अग्निरपीति ब्रह्मणेतिपदस्याभिमतमर्थमाह ब्रह्मणेति कर्त्राहुयत इति सम्बन्धः कर्त्ता ब्रह्मणः सकाशाद् व्यतिरिक्तो नास्तीत्येतदभिमतमित्याह ब्रह्मैवेति हुतमित्यस्य विवक्षितमर्थमाह यदेनेति ब्रह्मैव तेनेत्यादिभागं विभजते ब्रह्मैवेत्यादिना ब्रह्मकर्मसमाधिनेत्यस्यार्थं व्याकरोति ब्रह्मेति कर्मत्वं ब्रह्मणो ज्ञेयत्वात् प्राप्यत्वाच्च प्रतिपत्तव्यम् एवं ब्रह्मार्पणमित्यस्य श्लोकार्थमुक्त्वा तात्पर्यार्थमाह एवमिति निवृत्तकर्माणं सन्न्यासिनं प्रति यज्ञस्य प्रवृत्तिविरोधमाशङ्क्याह निवृत्तेति यथाकाङ्क्ष यज्ञानुष्ठानासमर्थस्याग्नस्य नष्टुलाज्ञमत्यन्ततद्वत्तया ज्ञानस्य यज्ञत्वसम्पादनं स्तुत्यर्थं सुतरामुपपद्यते तेन स्तुतिलाभात् कल्पनायाः स्वाधीनत्वादित्यर्थः ज्ञानस्य यज्ञत्वसम्पादनमित्यभिनयति यदर्पणादीनि केन प्रमाणेनात्र यज्ञत्वसम्पादनमवगतमित्याशङ्क्य अर्पणादीनां विशेषतो ब्रह्मत्वाभिधानानुपपत्तेरित्याह अन्यथेति ज्ञानस्य यज्ञत्वे सम्पादिते फलितमाह तस्मादिति आत्मैवेदं सर्वमित्यात्मव्यतिरेकेण सर्वंज्ञानजुषं प्रतिपद्यमानस्य कर्माभावे हेत्वन्तरमाह कारकेति कारकबुद्ध्युपलक्षिताभिमानस्याभावेऽपि क्रियेति कर्म नस्यादित्याशङ्क्याह नहीति उक्तमेवान्वयव्यतिरेकाभ्यां द्रढयति सर्वमेवेति इन्द्रायेत्यादिना शब्देन समर्पितो देवताविशेषः सम्प्रदानं कारकमादिशब्दात् अग्न्यादिकारककारकं तद्विषयबुद्धिमत् कर्त्ताऽस्मीत्यभिमानपूर्वकं मोक्षफलकमस्येति फलाभिसन्धिमच्च कर्म दृष्टमिति योजना अन्वयमुक्त्वा व्यतिरेकमाह नेत्यादिना उपमृदिता क्रियादिभेदविषया बुद्धिर्यस्य तत्कर्म तथा कर्तृत्वाभिमानपूर्वको मोक्षे फलमस्येति योऽभिसन्धिस्तेन रहितञ्च न कर्म दृष्टमित्यन्वयः तथापि ब्रह्मविदो भासमानकर्माभावे किमायातमित्याशङ्क्याह इदमिति यदिदं ब्रह्मविदो दृश्यमानं कर्म तद्ब्रह्मणि ब्रह्मेतिबुद्ध्या निराकृतकारकादिभेदविपर्ययबुद्धिमदतस्तत्कर्मैव न भवति तत्त्वज्ञाने सति व्यापकं कारकादिव्यावर्त्तमानं व्याप्यं कर्मापि व्यावर्त्तयति तत्त्वविदः शरीरादि चेष्टा कर्माभावः कर्मव्यापकरहितत्वात् सुषुप्तिचेष्टावदित्यर्थः ज्ञानवतो दृश्यमानं कर्माकर्मैवेत्यत्र भगवदनुमतिमाह तथा चेति ब्रह्मविदो दृष्टं कर्म नास्तीत्युक्तोऽपि तत् कारणानुमर्दात् पुनर्भविष्यतीत्याशङ्क्याह तथा च दर्शयन्निति अविद्यान्वि

आनन्दगिरिकृतटीका ।

विद्वानपि कर्मणि प्रवर्त्तमानो दृश्यते तथापि तस्य कर्माकर्मैवेत्यत्र दृष्टान्तमाह इह्वा चेति विद्वत् कर्मापि कर्मत्वाविशेषादितरकर्मवत् फलारम्भकमित्यपि शङ्का नयुक्तेत्याह तथेति इदं कर्मैव कर्त्तव्यमस्य च फलं भोक्तव्यमिति मतिस्तत् पूर्वकाण्ड तत्पूर्वकाणि च कर्माणि तेषामवान्तरभेदसंग्रहार्थमादिपदं दार्ष्टान्तिकमाह तथेति सप्तम्या विद्वत् प्रकरणं परामृष्टं षष्ठ्यौ समानाधिकरणे उक्तेऽर्थे पूर्ववाक्यमनुकूलयति अत इति ब्रह्मार्पणमन्त्रस्य स्वव्याख्यान मुक्त्वा स्वबुद्धिव्याख्यानमनुवदति अत्रेति प्रसिद्धोद्देशेन अप्रसिद्धविधानस्य न्याय्यत्वाद् प्रसिद्धोद्देशेन प्रसिद्धविधानं कथमित्याशंक्याह ब्रह्मैवेति किलेत्यस्मिन् व्याख्याने सिद्धान्तिनोऽसंप्रतिपत्तिं सूचयति कर्तृकर्मकरणसमप्रदानाधिकरणरूपेण पञ्च विधेन ब्रह्मैव व्यवस्थितं कर्म करोतीत्यङ्गीकारात् तदप्रसिद्धाभावात् तदनुवादेनार्पणादिष्वविरुद्ध-स्तद्दृष्टिविधिरित्यर्थः दृष्टिविधिपक्षे सिद्धान्तादिशेषं दर्शयितितत्रेति अर्पणादिषु कर्त्तव्यां ब्रह्म बुद्धिं दृष्टान्ताभ्यां स्पष्टयति यथेत्यादिना दृष्टिविधाने विधेयदृष्टे मानसक्रियात्वेन सम्यग्ज्ञानत्वाभावात् प्रकरणभङ्गः स्यादित्यभिप्रेत्य परिहरति सत्यमेवमिति विधिस्तित-दृष्टिस्तुतिपरमेव प्रकरणं न ज्ञानस्तुतिपरमित्याशङ्क्य प्रकरण पर्यालोचनया ज्ञानस्तुतिरे-वात्र प्रतिभातीति प्रतिपादयति अत्रत्विति किञ्च ब्रह्मार्पणमन्त्रस्यापि सम्यग्-ज्ञानस्तुतौ सामर्थ्यं प्रतिभातीत्याह अत्रचेति नन्वर्पणादिषु ब्रह्मदृष्टिं कुर्वतामपि ब्रह्मविद्यैवात्र विवक्षितेति पक्षभेदासिद्धिरिति चेत् तत्राह येत्विति यथा ब्रह्मदृष्ट्या नामा-दिकमुपास्यं तथार्पणादिषु ब्रह्मदृष्टिकरणे सत्यर्पणादिकमेव प्राधान्येन ज्ञेयमिति ब्रह्मविद्या यथोक्तेन वाक्येन विवक्षिता न स्यादित्यर्थः किञ्च ब्रह्मैव तेन गन्तव्यमिति ब्रह्म प्राप्तिफलाभि-धानादपि दृष्टिविधानमश्लिष्टमित्याह नचेति नचार्पणाद्यालम्बना दृष्टिर्ब्रह्म प्रापयत्यप्रतीका-लम्बनान्नयतीति न्यायविरोधादिति भावः दृष्टिविधानेऽपि नियोगबलादेव स्वर्गवद्दृष्टो मोक्षो भविष्यतीत्याशंक्याह विरुद्धञ्चेति ज्ञानादेव कैवल्यमुक्त्वा मार्गान्तरापवादिन्या श्रुत्या-विरुद्धं मोक्षस्य अविद्यानिवृत्तिलक्षणस्य दृष्टस्य नैयोगिकत्ववचनमित्यर्थः दृष्टियोगा-न्मोक्षो भवति इत्येतत् करणाविरुद्धञ्चेत्याह प्रकृतेति तदेव प्रपञ्चयति सम्यग्दर्शनञ्चेति अन्ते च सम्यग्दर्शनं प्रकृतमिति सम्बन्धः तत्र हेतुः तस्येवेति सम्यग्ज्ञानेनोपक्रम्यतेनैवो-पसंहारेऽपि मध्ये किञ्चिदन्यदुक्तमिति प्रकरणस्यातद्विषयत्वमित्याशङ्क्याह श्रेयानिति प्रक-रणे सम्यग्ज्ञानविषये सत्युपपन्नोदर्शनविधिरिति फलितमाह तत्रेति ब्रह्मार्पणमन्त्रे परकीयव्याख्यानासम्भवे स्वकीयव्याख्यानं व्यवस्थितमित्युपसंहरति तस्मादिति ॥ २४ ॥

स्वामिकृतटीका ।

तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकत्वाभावादकर्मैव आरूढावस्था-यान्तु अकर्तात्मज्ञानबाधितत्वात् स्वाभाविकमपि कर्म अकर्मैवेति कर्मण्यकर्म यः पश्ये-दित्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः इदानीं कर्मणि तदङ्गेषु च ब्रह्मैवानुस्यूतं पश्यतः

**दैवमेवाऽपरे यज्ञं योगिनः पर्य्युपासते।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति॥ २५॥**

शाङ्करभाष्यम्।

तत्र अधुना सम्यग्दर्शनस्य यज्ञत्वं सम्पाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते दैवमेवेत्यादिना दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो-

स्वामिकृतटीका।

कर्मप्रविलयमाह ब्रह्मार्पणमिति अर्प्यतेऽनेनेत्यर्पणं जुह्वादि तदपि ब्रह्मैव अर्प्यमाणं हविरपि घृतादिकं ब्रह्मैव ब्रह्माग्निस्तस्मिन् ब्रह्मणा कर्त्रा हुतं होमोऽग्निश्च कर्त्ता च क्रिया च ब्रह्मैवेत्यर्थः एवं ब्रह्मण्येव कर्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन ब्रह्मैवगन्तव्यं प्राप्यं न तु फलान्तरमित्यर्थः॥ २४॥

भाषा अनुवाद।

जो यह शङ्का करो कि धर्मशास्त्र तो वेदका अर्थही है औ तिसमे लिखते हैं कि नाऽभुक्तं क्षीयते कर्म अर्थात् विना भोगकिये कर्म क्षीण नही होता कर्मका फल भोगनाहीं पड़ता है तो इस पर कहते हैं कि संपूर्ण क्रिया औ कारक तथा फल रूप जो कुछ दैत है सो सब ब्रह्ममात्र कहे ब्रह्म छोड़ और कुछ नहीं है ऐसे ज्ञानवान ब्रह्मज्ञानी ब्रह्मरूप पुरुषके यावत कर्म विलीन होजाते हैं इसमे कुछ सन्देह नहीं सोई उपनिषद् मे कहा है कि ब्रह्मविदो ब्रह्मैव सर्वक्रिया कारक फलजातं भवति सोई कहते हैं कि ब्रह्मके अर्थ और ब्रह्महीं हवि तथा ब्रह्मरूप अग्निमे ब्रह्महीं ने दिया है इस प्रकार जो जानता है अर्थात् होम अग्नि स्रुवा हवी कर्त्ता क्रिया घृत आदि सब सामग्री और जिसको दिया जाय यह सब जो है सो ब्रह्म व्यतिरेक कहे विना और नहीं है समाधि कहे चित्तवृत्ति ब्रह्म कर्ममे है जिसकी सो अवश्य ब्रह्म को प्राप्त होता है जैसे इन कर्मो की कर्ममे गिनती नहीं तैसेही भगवत आराधन कर्म की भी कर्म मे गणना नहा। है ऐसे कर्म जो हैं सो अकर्म्महो हैं फेरि इनका फलभोगना कहां है और जो फल है तो ब्रह्म या भगवत प्राप्तिरूप हो है और दूसरा कुछ नहीं है॥ २४॥

## शाङ्करभाष्यम् ।

यज्ञस्तमेवापरे यज्ञं योगिनः कर्म्मिणः पर्य्युपासते कुर्वन्तीत्यर्थः॰ ब्रह्माग्नौ सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर इत्यादिवचनोक्तमशनायादि सर्वसंसारधर्म्मवर्जितं नेति नेतीति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते ब्रह्म च तदग्निश्च सहोमादिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन् ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्मा आत्मनामसु यज्ञशब्दस्य पाठात् तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्म्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रतिक्षिपन्ति सोपाधिकस्यात्मनो निरूपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमस्तं कुर्वन्ति ब्रह्मात्मैकत्व दर्शननिष्ठाः सन्न्यासिन इत्यर्थः ॥ २५ ॥

### आनन्दगिरिकृतटीका

ज्ञानस्य यज्ञत्वं सम्पाद्य पूर्वश्लोके स्थिते सत्यधुना तस्यैव ज्ञानस्य स्तुत्यर्थं यज्ञान्तरनिर्देशार्थमुत्तरग्रन्थप्रवृत्तिरित्याह तत्रेति सर्वस्य श्रेयः साधनस्य मुख्यगौणवृत्तिभ्यां यज्ञत्वं दर्शयन् आदौ यज्ञद्वयमादर्शयति दैवमेवेति प्रतीकमादाय दैवयज्ञं व्याचष्टे देवा इति सम्यग्ज्ञानाख्यं यज्ञं विभजते ब्रह्माग्नाविति तत्र ब्रह्मशब्दार्थं श्रुत्यवष्टम्भेन स्पष्टयति सत्यमिति यदजमनन्तविपरीतमपरिच्छिन्नं ब्रह्म तस्य परमानन्दत्वेन परमपुरुषार्थत्वमाह विज्ञानमिति तस्य ज्ञानाधिकरणत्वेन ज्ञानत्वमौपचारिकमित्याशङ्क्याह तत् साक्षादिति जीवब्रह्मविभागे कथमपरिच्छिन्नत्वमित्याशङ्क्य विशिनष्टि य आत्मेति परस्यैवात्मत्वं सर्वस्माद्देहादेरव्याकृतान्तादान्तरत्वेन साधयति सर्वान्तर इति विधिमुखं सर्वमेवोपनिषद्वाक्यं ब्रह्मविषयमादिशब्दार्थः निषेधमुखं ब्रह्मविषयमुपनिषद्वाक्यमशेषमेवार्थतो निबध्नाति अशनायेति ब्रह्मण्यग्निशब्दप्रयोगे निमित्तमाह सहोमेति बुद्ध्याहुततया सर्वस्य वा हेतुत्वादिति द्रष्टव्यं यज्ञशब्दस्यात्मनि त्वं पदार्थे प्रयोगे हेतुमाह आत्मनामस्विति आधाराधेयभावेन वास्तवभेदं ब्रह्मात्मनो व्यावर्त्तयति परमार्थत इति कथं तर्हि होमो नहि तस्यैव तत्र होमः सम्भवतीत्याशङ्क्याह बुद्ध्यादीति उपाधिसंयोगफलं कथयति अध्यस्तेति उपाध्यध्यासद्वारा तद्धर्माध्यासे प्रागमर्थं निर्दिशति आहुतीति इत्थं भूतलक्षणां तृतीयामेव व्याकरोति उक्तेति अशनायादि सर्वसंसारधर्मवर्जितेन निर्विशेषेण स्वरूपेणेति यावत् आत्मनो ब्रह्मणि होममेव प्रकटयति सोपाधिकस्येति पर इत्यस्यार्थं स्फोरयति ब्रह्मेति ॥ २५ ॥

## श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
## शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

शाङ्करभाष्यम् ।

सोऽयं सम्यग्दर्शनलक्षणोयज्ञो दैवयज्ञादिषु यज्ञेषु प्रक्षिप्यते ब्रह्मार्पणमित्यादि श्लोकैः श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परन्तप इत्यादिना-स्तुत्यर्थं श्रोत्रादीनिति श्रोत्रादीन्द्रियाण्यन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमोऽभिद्यत इति वहुवचनं संयमा एवाग्नयस्तेषु जुह्वतीन्द्रियसंयममेव कुर्वन्तीत्यर्थः शब्दादीन् विषयानन्ये इन्द्रियाग्निषु जुह्वति इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६ ॥

स्वामिकृतटीका ।

तदेवं यज्ञत्वेन सम्पादितं सर्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्वयज्ञोपायप्राप्यत्वात् सर्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुमधिकारिभेदेन ज्ञानोपायभूतान् वहून् यज्ञानाह दैवमित्यादिभिरष्टभिः देवा इन्द्रवरुणादय इज्यन्ते यस्मिन् एवकारेणेन्द्रादिषु ब्रह्मवुद्धिराहित्यं दर्शितं तदेवं यज्ञमपरे कर्मयोगिनः पर्य्युपासते श्रद्धयानुतिष्ठन्ति अपरे तु ज्ञानयोगिनो ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायेन ब्रह्मार्पणमित्याद्युक्तप्रकारेण यज्ञमुपजुह्वति यज्ञादि सर्वकर्माणि प्रविलापयन्तीर्थः सोऽयं ज्ञानयज्ञः ॥ २५ ॥

भाषा अनुवाद ।

पूर्वोक्त प्रकार यज्ञरूप से सर्वत्र सम्पादित कहे प्रसिद्ध करके कहा जो ब्रह्मदर्शनरूप ज्ञान सो सकल यज्ञोंका हेतु कहे उसीके वास्ते सव यज्ञ की जाती हैं अतएव श्रेष्ठ है इसीसे अव इस ज्ञान की प्रसंशा करके अधिकारी के भेद से ज्ञान के उत्पत्ति की उपाय रूप सव यज्ञोंको ८ श्लोक से कहते हैं कि वहुतेरे कर्म्मयोगी लोग ब्रह्मवुद्धि रहित हो इन्द्र वरुणादि देवतोंको यज्ञकरिके वड़ी श्रद्धा से पूजते हैं और कितने ज्ञानयोगी ब्रह्म रूप अग्निमे ब्रह्मयज्ञरूप उपाय से यज्ञ आदि सकल कर्म्मरूप ब्रह्ममे ब्रह्मार्पणविधि से अर्पण कहे सव कर्म्म लीन करते हैं सोई ब्रह्मयज्ञ है यह जानो ॥ २५ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

शाङ्करभाष्यम् ।

किञ्च सर्वाणीति सर्वाणीन्द्रियकर्माणि इन्द्रियाणां कर्माणीन्द्रिय कर्माणि तथा प्राणकर्माणि प्राणोवायुराध्यात्मिकस्तत्कर्माण्याकुञ्चन प्रसा-

आनन्दगिरिकृतटीका ।

उक्तस्य ज्ञानयज्ञस्य दैवयज्ञादिषु ब्रह्मार्पणमित्यादिश्लोकैकरूपधिष्ण्यमात्वं दर्शयति सोयमिति उपक्षेप प्रयोजनमाह श्रेयानिति सम्प्रति यज्ञद्वयमुपन्यस्यति श्रोत्रादीनीति बाह्यानां करणानां मनसि संयमस्यैकत्वात् कथं संयमाग्निष्विति बहुवचनमित्याशङ्क्याह प्रतीन्द्रियमिति संयमानां प्रत्याहाराधिकरणत्वेन व्यवस्थितानां मनोरूपाणां होमा धारत्वादग्नित्वं व्यपदिशति संयमा इति विषयेभ्योऽन्तर्बाह्याणीन्द्रियाणि प्रत्याहरन्तीति संयमयज्ञं संक्षिप्य दर्शयति इन्द्रियेति श्रोत्रादीन्द्रियाग्निषु शब्दादिविषयहोमस्य तत्त- दिन्द्रियैस्तत् तद्विषयोपभोगलक्षणस्य सर्वसाधारणत्वमाशङ्क्य प्रतिषिद्धान् वर्जयित्वा रागद्वेषरहितो भूत्वा प्राप्तान् विषयान् भुङ्क्ते तैस्तैरिन्द्रियैरिति विवक्षितं होमं विश- दयति श्रोत्रादिभिरिति ॥ २६ ॥

स्वामिकृतटीका ।

श्रोत्रादीनीति अन्ये नैष्ठिका ब्रह्मचारिणस्तत्तदिन्द्रियसंयमरूपेष्वग्निषु श्रोत्रादीनि जुह्वति प्रविलापयन्ति इन्द्रियाणि निरुध्य संयमप्रधानास्तिष्ठन्तीत्यर्थः इन्द्रियाण्येवाग्नय- स्तेषु शब्दादीनन्ये गृहस्था जुह्वति विषयभोगसमयेऽप्यनासक्ताः सन्तोऽग्नित्वेन भावितेषु इन्द्रियेषु हविष्ट्वेन भावितान् शब्दादीन् प्रक्षिपन्तीत्यर्थः ॥ २६ ॥

भाषा अनुवाद ।

ऐसे ही कितने ब्रह्मचारी लोग इन्द्रियोंका संयम जो विषयों से रोकना सोई अग्निरूप है तिस मे श्रोत्र घ्राण जिह्वा त्वक चक्षु इन ज्ञान इन्द्रियोंको होमकरते अर्थात् इन्द्रियोंको अन्तर्मुख करके संयम से हरते हैं और कितने गृहस्थ जब इन्द्रियरूप अग्निमे हविरूप विषय कहे रूप रस गन्ध स्पर्श शब्द को होम करते हैं तो विषय भोग समैमे भी अना- सक्त होके अग्निरूप इन्द्रियोंके रूप आदि विषयरूप घृत होम करते कहे दग्ध करते अर्थात् निरहङ्कार होकर फल इच्छा रहित होते हैं ॥२६॥

शाङ्करभाष्यम् ।

रणादीनि तानि चापरे आत्मसंयमयोगाग्नौ आत्मनि संयम आत्मसंयमः स एव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानाग्निदीपिते स्नेहेनेव प्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते जुह्वति प्रविलापयन्ति इत्यर्थः ॥ २७ ॥

आनन्दगिरिकृतटीका ।

यज्ञान्तरं कथयति किञ्चेति इन्द्रियाणां कर्म्माणि श्रवण वदनादीनि आत्मनि संयमो धारणा ध्यानसमाधिलक्षणः सर्वमपि व्यापारं निरुध्य आत्मनि चित्तसमाधानं कुर्वन्तीत्याह विवेकेति ॥ २७ ॥

स्वामिकृतटीका ।

किञ्च सर्वाणीति अपरेध्याननिष्ठा बुद्धीन्द्रियाणां श्रोत्रादीनां कर्म्माणि श्रवणदर्शनादीनि कर्म्मेन्द्रियाणां वाक्पाण्यादीनां कर्म्माणि वचनोपादानादीनि प्राणानाञ्च दशानां कर्म्माणि-प्राणस्य वहिर्गमनं अपानस्याधोगमनं व्यानस्य व्यायनाकुञ्चन प्रसारणादीनि समानस्य-सितपीतादीनां समुन्नयनं उदानस्योर्द्धं नयनं. उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः कृकरः क्षुत्करोज्ञेयो देवदत्तोविजृम्भने न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः इत्येवं रूपाणि जुह्वति आत्मनि संयमोध्यानैकाग्र्यं स एव योगः स एवाग्निस्तस्मिन् ज्ञानेन ध्येय विषयेन दीपिते प्रज्वलिते ध्येयं सम्यग्ज्ञात्वा तस्मिन्मनः संयम्य तानि सर्वाणि कर्म्माणि उपरमयन्तीर्थः ॥ २७ ॥

भाषा अनुवाद ।

और बहुतेरे ध्यानी पुरुष श्रोत्रादि ज्ञान इन्द्रियोंके श्रवणादि कर्म्म तथा वाक् आदि कर्म्म इन्द्रियोंके कार्य्य वचनादि और प्राण अपान उदान व्यान समान नाग कूर्म्म कृकल देवदत्त धनञ्जय ये शरीर की दश वायुवोंके कर्म्म जो वहिर्गमनादि हैं सो सब आत्मसंयम योग अग्नि मे होमते हुये लीन करते हैं अर्थात् धेय कहे ध्यानके विषयको ध्यानके द्वारा प्रज्वलित ज्ञान दीप की प्रकाश से वही धेय कहे ध्यान योग्य ब्रह्मको अच्छी तरह जानकर और उसी मे मन को संयम कहे युक्त करिके सकल कर्म्मको दूरकर देते हैं ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे।
स्वाध्याय ज्ञानयज्ञाश्च यतयः संशितव्रताः॥ २८॥

शाङ्करभाष्यम्।

द्रव्येति द्रव्ययज्ञास्तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञा-स्तपोयज्ञा स्तपोयज्ञो येषां तपस्विनां ते तपोयज्ञा योगयज्ञाः प्राणायाम प्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञास्तथाऽपरे स्वाध्यायज्ञान यज्ञाश्च स्वाध्यायो यथाविधि ऋगाद्याभ्यासो यज्ञो येषां ते स्वाध्याय-यज्ञाः ज्ञानयज्ञाः शास्त्रार्थ परिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः स्वाध्याय यज्ञा ज्ञानयज्ञाश्च यतयोयतनशीलाः संशितव्रताः सम्यक् शितानि तनू कृतानि-तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रताः॥ २८॥

आनन्दगिरिकृतटीका।

यज्ञ षट्कमवतारयति द्रव्येतीति तत्र द्रव्ययज्ञान् मुख्यानुपादाय विभजते तीर्थेष्विति तपस्विनां यज्ञबुद्ध्या तपोनुतिष्ठतां नियमवताम् इत्यर्थः प्रत्याहारादीत्यादिशब्देन यमनियमासनध्यानधारणा समाधयो गृह्यन्ते यथाविधि प्राङ्मुखत्व पवित्रपाणित्वाद्यज्ञ-विधिमनतिक्रम्येति यावत् व्रतानां तिक्ष्णीकरणमतिदृढत्वम्॥ २८॥

स्वामकृतटीका।

किञ्च द्रव्ययज्ञा इत्यादि द्रव्यदानमेव यज्ञोयेषां ते द्रव्ययज्ञाः कृच्छ्रचान्द्रायणादितप एव यज्ञोयेषां ते तपोयज्ञाः योगश्चित्तवृत्तिनिरोधलक्षणसमाधिः स एव यज्ञोयेषां ते योगयज्ञाः स्वाध्यायेन वेदेन श्रवणमननादिना यत् तदर्थज्ञानं तदेव यज्ञो येषां ते यद्वा वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधा यतयः प्रयत्नशीलाः सम्यक् -शितं निशितं तीक्ष्णीकृतं व्रतं येषां ते॥ २८॥

भाषा अनुवाद।

और लोक मे कितने पुरुष द्रव्य दानहीं को परम यज्ञ जानि द्रव्य-दानरूप यज्ञ करते और बहुतेरे मनुष्य कृच्छ्रचान्द्रायण तथा द्वादशवार्षिक व्रत आदिक मे चित्त लगाय तपरूप यज्ञ करते हैं फिरि कितने जन योग-शास्त्रोक्त नेती धौती औ प्राणायाम आदि योग करके चित्तवृत्तिके बांध रूप योगयज्ञ मे तत्पर हैं और बहुतेरे वेद शास्त्रके अध्ययन मनन को

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।**
**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ॥ २९ ॥**

### शाङ्करभाष्यम् ।

किञ्च अपान इति अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिं पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः प्राणेऽपानं तथापरे जुह्वति रेचकाख्यञ्च प्राणायामं कुर्वन्तीत्येतत् प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिस्तद्विपर्य्ययेनाधोगमनमपानस्य ते प्राणापानगती एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः किञ्च अपर इति अपरे नियताहारा नियतः परिमितः आहारो येषां ते नियताहाराः सन्तः प्राणान् वायुभेदान् प्राणभेदेष्वेव जुह्वति यस्य यस्य वायोर्जयः क्रियते इतरान् वायुभेदांस्तस्मिन् जुह्वति ते तत्र प्रविष्टा इव भवन्ति ॥ २९ ॥

### आनन्दगिरिकृतटीका ।

प्राणायामाख्यं यज्ञमुदाहरति किञ्चेति प्राणायामपरायणाः सन्तो रेचकं पूरकञ्च कृत्वा कुम्भकं कुर्वन्तीत्याह प्राणेति प्राणापानयोर्गती श्वासप्रश्वासौ निरुध्य किं कुर्वन्तीत्यपेक्षायामाह किञ्चेति प्राणापानगतिनिरोधरूपं कुम्भकं कृत्वा पुनः पुनर्वायुजयं कुर्वन्तीत्यर्थः आहारस्य परिमितत्वं हि तत्रापेक्ष्यत्वोपलक्षणार्थं प्राणानां प्राणेषु होममेव विभजते यस्येति जितेषु वायुभेदेष्वजितानां तेषां होमप्रकारं प्रकटयति ते तत्रेति ॥ २९ ॥

### स्वामिकृतटीका ।

किञ्च अपाने इति अपानेऽधोवृत्तौ प्राणमूर्द्ध्ववृत्तिं पूरकेन जुह्वति पूरककाले प्राणमपानेनैकीकुर्वन्ति तथा कुम्भकेन प्राणापानयोरूर्द्ध्वाधोगती रुद्ध्वा रेचककालेऽपानं प्राणे जुह्वति एवं पूरक कुम्भक रेचकैः प्राणायामपरायणा अपरे इत्यर्थः किञ्च अपरे इति अपरेत्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्य्यमाणेष्विन्द्रियेषु तत्तदिन्द्रिय वृत्तिलयं होमं भावयन्तीत्यर्थः यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथापर इत्यनेन पूरक रेचकयो रावर्त्त्यमानयोर्हंसः सोऽहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमाने अजपामन्त्रे वाच्यं तत्त्वं पदार्थैक्यमङ्गीकारेण भावयन्तीत्यर्थः तदुक्तं योगशास्त्रे सकारेण बहिर्य्याति

स्वाभिकृतटीका ।

ऋकारेण विशेत् पुनः प्राणस्तत्र स एवाहमहं स इति चिन्तयेदिति प्राणापानगतीरुद्धे-त्यनेन श्लोकेन प्राणायाम यज्ञा अपरे कथ्यन्ते यत्रायमर्थः द्वौभागौ पूरयेदन्नैर्जलैरेकं प्रपूरयेत् मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् इत्येवमादिवचनोक्तनियत आहारो येषां ते कुम्भकेन प्राणापानगती रुध्वा प्राणसंयमन परायणाः सन्तः प्राणाति इन्द्रियाणि प्राणेषु जुह्वति कुम्भकेन हि सर्वप्राणा एकी भवन्ति तत्रैव लीयमानेष्विन्द्रियेषु होमं भाव-यन्तीत्यर्थः तदुक्तं योगशास्त्रे यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् वायुवाक्काय-दृष्टीनां स्थिरता च तथा तथेति ॥ २८ ॥

भाषा अनुवाद ।

स्वकर्म्म जानि के तदर्थ ज्ञान हीं को सर्वस्वमानि स्वाध्याय ज्ञानरूप यज्ञ करते हैं परन्तु जो इन्द्रीजित औ व्रत मे तत्पर हैं तेई मनुष्य ये सब यज्ञों कर सकते हैं ॥ २८ ॥

और कितने हठयोगाभ्यासी मनुष्य अपान वायुमे प्राण वायुको पूरक प्राणायामके द्वारा खेंचिकर होम करते हैं अर्थात् पूरकसमे मे प्राण अपान एककर देते हैं और कोई कुम्भक प्राणायाम से प्राण अपान वायुको ऊर्द्ध अधो गमन रोंककर रेचक काल मे अपान वायुको प्राण वायु मे खैचि लेकर होम करते कहै लीनकर देते हैं ऐसे ही पूरक कुम्भक रेचकके द्वारा प्राणायाम मे तत्पर रहते हैं और कोई कोई लोग आहार घटाय इन्द्री शिथिल करके सोई सोई इन्द्रिय वृत्तिका लयरूप होम करते हैं अथवा पूरक रेचक दोनो स्वासा बन्दकर हंस औ सोहं इसको अनुलोम कहे उलट पुलट रूप अजपा मन्त्र के द्वारा तत्त्वमसि महावाक्य से कथित जो तत्पद औ त्वंपद तिनके अर्थके अनुसार ब्रह्म जीवकी एकता अर्थात् सो ब्रह्म हम हैं और हम सो ब्रह्म है ऐसी भावना करते हैं और कोई प्राणायामहीं को यज्ञ कहते अर्थात् उदर के दो भाग अन्नसे पूर्ण करि औ एकभाग पानीसे पूर्णकरि और वायुके सञ्चारार्थ चतुर्थभाग खालीराखि विधिके अनुसार परिमित अहारी जन कुम्भक के द्वारा प्राण अपान की गति रोध-करि प्राण दमन शील हो सब इन्द्रियोंको प्राणवायुमे होम करते हैं

**सर्वेऽप्येते यज्ञविदो यज्ञक्षयितकल्मषाः ।**
**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥ ३० ॥**

### शाङ्करभाष्यम् ।

सर्व इति सर्वेऽप्येते यज्ञविदो यज्ञक्षयितकल्मषाः यज्ञैर्यथोक्तैः क्षयितो नाशितो कल्मषो येषां ते यज्ञक्षयितकल्मषाः एवं यथोक्तान् यज्ञान् निर्वर्त्त्य यज्ञशिष्टामृतभुजो यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टञ्च तदमृतञ्च यज्ञशिष्टामृतं तत् भुञ्जत इति यज्ञशिष्टामृतभुजो यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधि चोदितमन्नममृताख्यं भुञ्जत इति यज्ञशिष्टामृतभुजा-यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत् कालातिक्रमापेक्षयेति शब्द सामर्थ्यात् गम्यते ॥ ३० ॥

### आनन्दगिरिकृतटीका ।

प्रकृतान् यज्ञानुपसंहरति सर्वेऽपीति यथोक्त यज्ञनिर्वर्त्तनानन्तरं क्षीणे कल्मषे किं स्यादित्याशङ्क्याह एवमिति यथोक्तानां मध्ये केनचिदपि यज्ञेन विशेषितस्य पुरुषस्य प्रत्य-वायं दर्शयति नायमिति पादान्तरेण कथं यथोक्तयज्ञानुष्ठायिनामवशिष्टेन कालेन विहितान्नभुजां ब्रह्मप्राप्तिरित्याशङ्क्य मुमुक्षुत्वे सति चित्तशुद्धिद्वारेत्याह मुमुक्षवश्चेदिति तत् किमिदानीं साक्षादेव मोक्षो विवक्षितः तथाच गतिश्रुतिविरोधः स्यादित्याशङ्क्य गतिनिर्देशसामर्थ्यात् क्रममुक्तिरत्राभिप्रेतेत्याह कालातीति ॥ ३० ॥

### स्वामिकृतटीका ।

तदेव मुक्तानां द्वादशानां यज्ञविदां फलमाह सर्वेऽप्येते इति यज्ञान् विन्दन्ति लभन्त इति यज्ञविदो यज्ञज्ञा इति वा यज्ञैः क्षयितं नाशितं कल्मषं यैः यज्ञान् कृत्वावशिष्ट कालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा ते सनातनं नित्यं ब्रह्मज्ञानद्वारेण प्राप्नुवन्ति३०

### भाषा अनुवाद ।

**अर्थात् कुम्भक से सब प्राण एक हो जाते और इन्द्रियगण लयको प्राप्त होता है ॥ २९ ॥**

**एही पूर्वोक्त बारह प्रकारके यज्ञकारीयोंको प्राप्यफल कहते हैं कि ऐसी यज्ञरूप क्रिया जिनकी जाती है और इन यज्ञोंसे जिनके पापक्षय**

नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

शाङ्करभाष्यम्।

नायमिति नायं लोकः सर्वप्राणिसाधारणोऽप्यस्ति यथोक्तानां यज्ञानामेकोपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्य कुतोऽन्यो विशिष्टसाधनसाध्यः कुरुसत्तम ॥ ३१ ॥

एवमिति एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेणावगम्यमानाः ब्रह्मणोमुखे वितता उच्यन्ते

आनन्दगिरिकृतटीका।

तृतीयं पादं व्याचष्टे नायमिति विवक्षितं कैमुतिकन्यायमाह कुत इति साधारणलोकाभावे पुनरसाधारणलोकप्राप्तिर्दूरनिरस्तेत्यर्थः यथोक्तेऽर्थे बुद्धिसमाधानं कुरुकुलप्रधानस्य अर्जुनस्य अनायासलभ्यमिति वक्तुं कुरुसत्तमेत्युक्तम् ॥ २१ ॥

स्वामिकृतटीका।

तदकरणे दोषमाह नायमिति अयमल्पसुखोपि मनुष्यलोको अयज्ञस्य यज्ञानुष्ठानरहितस्य नास्ति कुतोऽन्यो बहुसुखः परलोकः अतो यज्ञाः सर्वथा कर्त्तव्या इत्यर्थः ॥ ३१ ॥

भाषा अनुवाद।

होगये हैं और यज्ञ समाप्तकर पीछे शास्त्र विहित अमृत रूप अन्न भोजन करतेहैं फिर तत्वज्ञान के द्वारा नित्य सत्य ब्रह्म को प्राप्त होते हैं सोई कहा कि सब ये यज्ञवित् यज्ञसे नष्ट कल्मष कहे निष्पाप हो यज्ञशिष्ट अमृतभोगी सनातन ब्रह्मको जाति कहे प्राप्त होते हैं ॥ ३० ॥

अब यज्ञ न करने मे दोष कहते हैं कि देखो यज्ञ न करने वालोंको यह अल्पसुख जो मनुष्य लोक सोई नहीं मिलता है तो परलोक सुख फिर कहां प्राप्त होना है इससे यज्ञको निश्चय करना चाहिये कुरुसत्तम अर्जुन यह कैमुतिक न्याय से देखाया है ॥ ३१ ॥

## शाङ्करभाष्यम्।

तद् यथा वाचि हि प्राणं जुहुम इत्यादय: कर्म्मजान् कायिकवाचिकमानस कर्म्मोद्भवान् विद्धि तान् सर्वाननात्मजान् निर्व्यापारोह्यात्मा अतएवं ज्ञात्वा मोक्ष्यसेऽशुभात् न मद्व्यापारा इमे निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वा-स्मात् सम्यग्दर्शनात् मोक्ष्यसे संसारबन्धनादित्यर्थः॥ ३२॥

### आनन्दगिरिकृततटीका।

उक्तानां यज्ञानां वेदमूलत्वेनोत्प्रेक्षा निबन्धनत्वं निरस्यति एवमिति आत्मव्यापार-साध्यत्वमुक्तकर्मणामाशङ्क्य दूषयति कर्मजानिति आत्मनो निर्व्यापारत्वज्ञाने फलमाह एव-मिति कथं यथोक्तानां यज्ञानां वेदस्य मुखे विस्तीर्णत्वमित्याशङ्क्याह वेदद्वारेणेति आत्मनोऽवगममानत्वमेवोदाहरति तद्यथेति एतद्ध स्मवैतत्पूर्वे विद्वांस आहुतिरित्युपक्रमा-ध्ययनाद्याक्षिप्य हेत्वाकाङ्क्षायामुक्तं वाचिहीति ज्ञानशक्तिमद्विषये क्रियाशक्तिमदुपसंहा-रेण विवक्षितः प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्यय इति वाक्यमादिशब्दार्थः ज्ञान-शक्तिमतां क्रियाशक्तिमताञ्चान्योन्योत्पत्तिप्रलयत्वात्तदभावेनाध्ययनादिसिद्धिरित्यर्थः कर्म-णामात्मव्यापारजन्यत्वाभावे हेतुमाह निर्व्यापारोहीति तस्य च निर्व्यापारत्वं फलवत्त्वाज्-ज्ञातव्यमित्याह अत इति एवं ज्ञानमेव ज्ञापयन् उक्तं व्यनक्ति नेत्यादिना॥ ३२॥

### स्वामिकृतटीका।

ज्ञान यज्ञं स्तोतुमुक्तान् यज्ञानुपसंहरति एवं बहुविधा इति ब्रह्मणो वेदस्य मुखे वितता वेदेन साक्षाद्विहिता इत्यर्थः तथापि तान् सर्वान् वाङ्मनःकायकर्म जनितात्म स्वरूपसंस्पर्शरहितान् विद्धि जानीहि आत्मनः कर्मणोऽगोचरत्वात् एवं ज्ञात्वा ज्ञाननिष्ठः सन् संसाराद्विमुक्तो भविष्यसि॥ ३२॥

## भाषा अनुवाद।

ज्ञान यज्ञकी प्रशंसा करने के अर्थ अब सब यज्ञोंकी चर्चाकरि न्यून अधिक तारतम्य देखावते हुए कहते हैं कि नानाप्रकार की यज्ञों वेदरूप मुखसे प्रत्यक्ष विहित हैं परतो भी मन वचन शरीर के कर्म्मसे उत्पन्न जो यज्ञ हैं सकल आत्मस्वरूप स्पर्शसे रहित जानो अर्थात् उनसे आत्मज्ञान नहीं होता क्योंकि आत्मा कर्म्मोंका अगोचर कहे कर्म्मसे प्राप्य नहीं है इससे तुम ज्ञाननिष्ठ होय संसार से मुक्त होउगे यह जानो॥ ३२॥

**श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

## शाङ्करभाष्यम् ।

ब्रह्मार्पणमित्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं सम्पादितं यज्ञाश्च अनेकविधा उपदिष्टास्तैः सिद्धपुरुषार्थप्रयोजनैर्ज्ञानं स्तूयते कथं श्रेयानिति श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः हे परन्तप द्रव्यमयो हि यज्ञः फलस्यारम्भको न ज्ञानयज्ञः फलस्यारम्भकोऽतः श्रेयान् प्रशस्यतरः कथं यतः सर्वं कर्म समस्तमखिलं अप्रतिबद्धं पार्थ ज्ञाने मोक्षसाधने सर्वतः संप्लुतोदकस्थानीये परिसमाप्यतेऽन्तर्भवतीत्यर्थः यथा कृताय विजितायाधरे याः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किञ्चित् प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेदेति श्रुतेः ॥ ३३ ॥

## आनन्दगिरिकृतटीका ।

कर्मयोगेनेकधाभिहिते सर्वस्य श्रेयःसाधनस्य कर्मात्मकत्वप्रतिपत्त्या केवलं ज्ञानमनाद्रियमाणमर्जुनमालक्ष्य वृत्तानुवादपूर्वकमुत्तरश्लोकस्य तात्पर्यमाह ब्रह्मेत्यादिना सिद्धेति सिद्धं पुरुषार्थभूतं पुरुषापेक्षितलक्षणं प्रयोजनं येषां यज्ञानां तैरनन्तरोपदिष्टैरिति यावत् प्रश्नपूर्वकं स्तुतिप्रकारं प्रकटयति कथमित्यादिना ज्ञानयज्ञस्य द्रव्ययज्ञात् प्रशस्यतरत्वे हेतुमाह श्रेयानिति द्रव्यसाधनसाध्यादित्युपलक्षणं स्वाध्यायादेरपि ततोऽपि ज्ञानयज्ञस्य श्रेयस्त्वाविशेषात् द्रव्यमयादियज्ञेभ्यो ज्ञानयज्ञस्य प्रशस्यतरत्वं प्रपञ्चयति द्रव्यमयो हीति फलस्याभ्युदयस्येत्यर्थः न फलारम्भको न कस्यचित् फलस्योत्पादकः किन्तु नित्यसिद्धस्य मोक्षस्य अभिव्यञ्जक इत्यर्थः तस्य प्रशस्यतरत्वे हेत्वन्तरमाह यत इति समस्तं कर्मेत्यग्निहोत्रादिकमुच्यते अखिलमविद्यमानं खिलं शेषोऽस्येत्यनल्पं महत्तरमिति यावत् सर्वमखिलमिति पदद्वयोपादानमसङ्कोचार्थं सर्वं कर्म ज्ञानेऽन्तर्भवतीत्यत्र छान्दोग्यश्रुतिं प्रमाणयति यथेति चतुरायके हि द्यूते कश्चिदायः चतुरङ्कः सन् कृतशब्देनोच्यते तस्मै विजिताय कृताय तादर्थ्येनाधरेयास्त्र्याद्यङ्काविनस्त्रिद्व्येकाङ्कास्त्रेता द्वापरकलिनामानः संयन्त्यायाः संगच्छन्ति चतुरङ्के कृताये त्रिद्व्येकाङ्कानामन्तर्भावो भवति महासंख्यायामवान्तरसंख्यान्तर्भावावश्यंभावादेवमेनं विद्यावन्तं पुरुषं सर्वं तदाभिमुख्येन समेति संगच्छति किं तत् सर्वं यद्विदुषि पुरुषेऽन्तर्भवति तदाह यत्किञ्चिदिति प्रजाः सर्वा यत् किमपि साधुकर्म कुर्वन्ति तत्सर्वमित्यर्थः एनमभिसमेतीत्युक्तं तमेव विद्यावन्तं पुरुषं विशिनष्टि यस्तदिति

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥ ३४॥

शाङ्करभाष्यम्।

तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यत इत्युच्यते तद्विद्धीति तद्विद्धि विजानीहि येन विधिना प्राप्यत इत्याचार्य्यानभिगम्य प्रणिपातेन प्रकर्षेण नीचैः प्रपतनं प्रणिपातो दीर्घनमस्कारः तेन कथं बन्धः कथं मोक्षः का

आनन्दगिरिकृतटीका।

किं तदित्युक्तं तदेव विशदयति यस्य इति सर्वकोयचर्त्तं वेदतत्त्वं योन्योऽपि जानाति तमेनं सर्वं साधुकर्माभिसमेतीति योजना॥ ३२॥

स्वामिकृतटीका।

ज्ञानयज्ञस्तु श्रेष्ठ इत्याह श्रेयानिति द्रव्यमयाद्नात्मव्यापारजन्याद्दैयादि यज्ञात् ज्ञानयज्ञः श्रेष्ठः यद्यपि ज्ञानस्यापि मनो व्यापाधीनत्वमस्त्येव तथाप्यात्मस्वरूपस्य ज्ञानस्य मनः परिणामे अभिव्यक्तिमात्रं तज्जन्यत्वमिति द्रव्यमयाद्विशेषः श्रेष्ठत्वे हेतुः सर्वं कर्माखिलं फलसहितं ज्ञाने परिसमाप्यते अन्तर्भवतीत्यर्थः सर्वं तदभिसमेति यत्किञ्चित्‌ प्रजाः साधु कुर्वन्तीति श्रुतेः॥ ३२॥

भाषा अनुवाद।

अब ज्ञानयज्ञकी श्रेष्ठता कहते हैं कि जिस लिये आत्म कि अर्थव्यापार रहित हो जो द्रव्यमय देवताके अर्थ यज्ञ है तिससे ज्ञानयज्ञ ही श्रेष्ठ जानो और यद्यपि ज्ञानयज्ञ मानसिक व्यार के अधीन है तथापि आत्माका स्वरूप जो ज्ञान सो केवल मनका परिणाम अर्थात् ब्रह्मरूप होना मात्र है औ ज्ञान कुछ मानस व्यापार से प्रगट नहीं है और ज्ञान की श्रेष्ठता मे हेतु यह कि फलके सहित सर्वकर्म्म तत्त्वज्ञान के अन्तर्भूत है क्योंकि लोगोंके किये हुए सत्कर्म्म ज्ञानके अनुगामी कहे साथ होते हैं यह वेदमे कहा है सोई इस श्लोक से कहा कि श्रेष्ठ है द्रव्य यज्ञसे ज्ञान यज्ञ हे परन्तप और सब कर्म्म हे पार्थ अर्जुन ज्ञानमे परिसमाप्त कहे लीन होते हैं इसीसे ज्ञानयज्ञ श्रेष्ठ है॥ ३३॥

## शाङ्करभाष्यम्।

विद्या का चाविद्येति परिप्रश्नेन सेवया गुरुशुश्रूषयैवमादिना प्रश्रयेण वर्जिता आचार्य्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनो ज्ञानवन्तोपि केचिद्यथावत्तत्त्वदर्शनशीलाश्च न भवन्ति अपरे तु भवन्त्यतो विशिनष्टि तत्त्वदर्शिन इति ये सम्यग्दर्शन इति ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्य्यक्षमं भवति नेतरदिति भगवतो मतम् ॥ ३४ ॥

### आनन्दगिरिकृतटीका।

यद्येवं प्रशस्ततरमिदं ज्ञानं तर्हि केनोपायेन तत्प्राप्तिरिति पृच्छति तदेतदिति ज्ञानप्राप्तौ प्रत्यासन्नमुपायमुपदिशति उच्यत इति तद्विज्ञानं गुरुभ्यो विद्धि गुरवश्च प्रणिपातादिभिरुपायैरावर्जितचेतसो वदिष्यन्तीत्याह तद्विद्धीति उपदेष्टृत्वमुपदेशकर्तृत्वं परोक्षज्ञानमात्रेण न भवतीत्याह उपदेक्ष्यन्तीति तदिति प्रेप्सितं ज्ञानसाधनं गृह्यते येन विधिनेति विशेषदर्शनात् यद्वा येनाचार्य्यावर्जनप्रकारेण तदुपदेशवशादप्रेप्सितं ज्ञानं लभ्यते तथा तज्ज्ञानमाचार्य्येभ्यो लभस्वेत्यर्थः तदेव स्फुटयति आचार्य्यानिति एवमादिनेत्यादिशब्देन शमादयो गृह्यन्ते एवमादिना विद्धीति पूर्वेण सम्बन्धः उत्तरार्द्धं व्याचष्टे प्रश्रयेणेति प्रश्रयो भक्ति श्रद्धापूर्वको निरतिशयोऽवनति विशेषः यथोक्त विशेषणं पूर्वोक्तेन प्रकारेण प्रशस्ततममित्यर्थः विशेषणस्य पौनरुक्ति परिहार्थमर्थभेदं कथयति ज्ञानवन्तोऽपीति ज्ञानिन इत्युक्ता पुनस्तत्त्वदर्शिन इति ब्रुवतो भगवतोऽभिप्रायमाह ये सम्यगिति बहुवचनञ्चैतदाचार्य्य विषयं बहुभ्यः श्रोतव्यं बहुधा चेति सामान्यन्यायाभ्यनुज्ञानार्थं नत्वात्मज्ञानमधिकृत्य आचार्य्यबहुत्वं विवक्षितं तस्य तत्त्वसाक्षात्कारवदाचार्य्यमात्रोपदेशादेवोदयसम्भवात् ॥ ३४ ॥

### स्वामिकृतटीका।

एवंभूतात्मज्ञाने साधनमाह तदिति तज्ज्ञानं विद्धि जानीहि प्रमुक्तीत्यर्थः ज्ञानिनां प्रणिपातेन नमस्कारेण ततः परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्त्तते इति परिप्रश्नेन सेवया गुरुशुश्रूषया च ज्ञानिनः शास्त्रज्ञास्तत्त्वदर्शिनो परोक्षानुभवसम्पन्नाश्च ते तुभ्यं ज्ञानमुपदेशेन सम्पादयिष्यन्ति ॥ ३४ ॥

## भाषाअनुवाद।

जो कहो कि भला जिस ज्ञानकी ऐसी प्रशंसा करते हो सो किस-प्रकार से प्राप्त होय तो ज्ञानके साधन कहे उपाय कहते हैं कि ज्ञानी

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

शाङ्करभाष्यम् ।

तथा च सतीदमपि समर्थं वचनं यदिति यत् ज्ञात्वा यत् ज्ञानं तैरुपदिष्टमधिगम्य प्राप्य पुनर्भूयो मोहमेवं यथेदानीं मोहं गतोऽसि पुनरेवं न यास्यसि हे पाण्डव किञ्च येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्य्यन्तानि द्रक्ष्यसि साक्षादात्मनि प्रत्यगात्मनि मत्संस्थानीमानि भूतानीति अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

आनन्दगिरिकृतटीका ।

विशिष्टैराचार्य्यैरुपदिष्टे ज्ञाने कार्य्यक्षमे प्राप्ते सति समनन्तरवचनमपि यौग्यविषयमर्थवद्भवतीत्याह तथाचेति अतस्तस्मिन् विशिष्टे ज्ञाने त्वदीयमोहापोहहेतौ निष्ठावता भवता भवितव्यमिति शेषः तत्र निष्ठा प्रतिष्ठायै तदेव ज्ञानं पुनर्विशिनष्टि येनेति यज्ज्ञात्वेत्ययुक्तं ज्ञानायोगादित्याशङ्क्य प्राप्त्यर्थत्वमधिपूर्वस्य गमेरङ्गीकृत्य व्याकरोति अधिगम्येति इतस्त्वाचार्य्योपदेशलभ्ये ज्ञाने फलवति प्रतिष्ठावता भवितव्यमित्याह किञ्चेति जीवे चेश्वरे चोभयत्र भूतानां प्रतिष्ठितत्वप्रतिनिर्देशे भेदवादानुमतिः स्यादित्याशङ्क्याह क्षेत्रज्ञेति मूलप्रमाणाभावे कथं तदेकत्वदर्शनं स्यादित्याशङ्क्याह सर्वेति ॥ ३५ ॥

भाषा अनुवाद ।

पुरुषोंके निकट जाय नम्रता से प्रणामकर प्रश्न करे कि किस कारण से हम को यह संसार भया और कैसे निवृत्त होगा और गुरूकी सेवा शुश्रूषा करने से तुमको सो तत्त्वज्ञान मिलैगा और ज्ञानी जो शास्त्रज्ञ तथा तत्त्वदर्शी जो हैं वे तुमको उपदेश देकर तत्त्वज्ञान सम्पन्न कर देंगे सोई कहते कि दण्डवत् तथा प्रश्न औ सेवा करने से तत्त्वदर्शी ज्ञानीलोग तुमको ज्ञान उपदेश करैंगे और जैसे बन्ध औ मोक्ष तथा ज्ञान औ अज्ञान क्या हैं सो कहैंगे ॥ ३४ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥

## शाङ्करभाष्यम् ।

किञ्चैतस्य ज्ञानस्य माहात्म्यं अपीति अपि चेदसि पापिभ्यः पापकृद्भ्यः सर्वेभ्यः सकाशादतिशयेन पापकृत् पापकृत्तमः यद्यसि भवसि सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं ज्ञानप्लवं कृत्वा वृजिनं वृजिनार्णवं पापं सन्तरिष्यसि धर्म्मोऽपि मुमुक्षोः पापमुच्यते ॥ ३६ ॥

## आनन्दगिरिकृतटीका ।

ज्ञानस्य प्रकारान्तरेण प्रशंसां प्रस्तौति किञ्चेति पापकारिभ्यः सर्वेभ्यः सकाशादतिशयेन पापकारित्वमेकस्मिन्नसम्भावितमपि ज्ञानमाहात्म्यप्रसिद्ध्यर्थमङ्गीकृत्य ब्रवीति अपिचेदिति ब्रह्मात्मैक्यज्ञानस्य सर्वपापनिवर्त्तकत्वेन माहात्म्यमिदानीं प्रकटयति सर्वमिति अधर्मे निवृत्तेऽपि धर्मरूपप्रतिबन्धाज्ज्ञानवतोऽपि मोक्षः सम्भवतीत्याशङ्क्याह धर्मोपीति इष्टेत्यध्यात्मशास्त्रं गृह्यते ॥ ३६ ॥

## स्वामिकृतटीका ।

ज्ञानफलमाह यज्ज्ञात्वेति सार्द्धैस्त्रिभिः यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि तत्र हेतुर्येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्या विजृम्भितानि आत्मन्येवाभेदेन द्रक्ष्यसि अथो अनन्तरम् आत्मानं मयि परमात्मन्यभेदेन द्रक्ष्यसीत्यर्थः ॥३५॥

## भाषाअनुवाद ।

अब साढ़े ३ श्लोकसे तत्त्वज्ञान का फल कहते हैं कि तत्त्वज्ञान होनेसे फेरि और बन्धु बधनिमित्त ऐसे मोहको न प्राप्त होउगे कारण यह कि ज्ञान सम्पति होनेसे अपने अज्ञानवशते प्रगट जो पिता पुत्र भाई वन्धु तिनको अपने आत्मासे भिन्न न देखोगे और साक्षात् परमात्मारूप हमसे और अपने आत्मासे अभेद देखोगे सोई कहते कि जिस ज्ञानको जानिके हे पाण्डव फेरि ऐसे मोहको न पावोगे और जिसमे संपूर्ण प्राणीयोंको अपने और मेरे मे देखोगे सो तत्त्वज्ञान महात्माजनों से मिलेगा ॥ ३५ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७ ॥

शाङ्करभाष्यम् ।

ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते यथेति यथा एधांसि काष्ठानि समिद्धः सम्यक् इद्धो दीप्तोऽग्नि र्भस्मसात् भस्मीभावं कुरुते अर्जुन एवं ज्ञानमेव अग्नि र्ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा निर्वीजं करोतीत्यर्थः नहि साक्षादेव ज्ञानाग्निः तानि कर्माण्येन्धनवद् भस्मीकर्त्तुं शक्नोति तस्मात् सम्यक् दर्शनं सर्वकर्मणां निर्वीजत्वे कारणमित्यभिप्रायः सामर्थ्यात् येन कर्म्मणा शरीरमारब्धं तत् प्रवृत्तफलत्वादुपभोगेनैव क्षीयते अतो यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते ॥ ३७ ॥

आनन्दगिरिकृतटीका ।

ज्ञाने सत्यपि धर्माधर्मयोरुपलम्भात् कुतस्तयोस्ततो निवृत्तिरित्याशङ्क्य ज्ञानस्य धर्माधर्मनिवर्त्तकत्वं दृष्टान्तेन दर्शयितुमनन्तर श्लोकमवतारयति ज्ञानमिति योग्यायोग्यविभागेन निवर्तकत्वानिवर्तकत्वविभागमुदाहरति यथेति दृष्टान्तानुरूपं दार्ष्टान्तिकमाचष्टे

स्वामिकृतटीका ।

किञ्च अपिचेदिति सर्वेभ्योऽपि पापकारिभ्यो यद्यप्यतिशयेन पापकारीत्वमसि तथापि सर्वं पापसमुद्रं ज्ञानप्लवेनैव ज्ञानपोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

भाषा अनुवाद ।

और जो सब पापी मनुष्योंसे भी तुम अधिक पापी होउ तौभी पापरूप समुद्र को ज्ञानरूप नौकाके द्वारा अनायास उतरि जावगे तात्पर्य्य यह कि जो तुमने कहा था कि पापमेवाश्रयेदस्मान् अर्थात् कुटुम्ब के मारने से हमै वड़ाही पाप होगा और वन्धु वधरूप वृजिन कहे दुःख सागरके पार कैसे जायंगे सो यह अज्ञान से तुमारी भूल सहज उपाय. आत्मज्ञान से छूट जायगी ऐसे कहिकर श्रीभगवानने ज्ञान का महात्म्य कहा है ॥ ३६ ॥

**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धिः कालेनात्मनि विन्दति ॥ ३८ ॥**

आनन्दगिरिकृतटीका ।

ज्ञानाग्निरिति योग्यविषयेऽपि दाहकत्वमग्नेरप्रतिबन्धापेक्षयेति विवक्षित्वा विशिनष्टि सम्यगिति दार्ष्टान्तिकं व्याचष्टे ज्ञानमेवेति ननु ज्ञानं साक्षादेव कर्मदाहकं किमिति नेष्यते निर्बीजं करोति कर्मेति किमिति व्याख्यानमित्याशङ्क्याह नहीति ज्ञानस्य स्वप्रमेयावरणाज्ञाननिराकरणे सामर्थ्यस्य लोके दृष्टत्वादविक्रियब्रह्मात्मज्ञानमपि तदपि तद्ज्ञानं निवर्तयत् तज्जन्यकर्तृत्वभ्रमं कर्मबीजभूतं निवर्तयति तन्निवृत्तौ च कर्माणि न स्वार्थं पारयन्ति ननु साक्षात् कर्मणां निवर्तकं ज्ञानम् अज्ञानस्यैव निवर्तकमिति व्यासेस्तदनिवृत्तौ तु पुनरपि कर्मोद्भवसम्भवादित्यर्थः ज्ञानस्य साक्षात् कर्मनिवर्तकत्वाभावे फलितमाह तस्मादिति सम्यग्ज्ञानं मूलभूताज्ञाननिवर्तनेन कर्मनिवर्तकमिष्टञ्चेदारब्धफलस्यापि कर्मणो निवृत्तिप्रसङ्गात् ज्ञानोदयसमकालमेव शरीरपातः स्यादित्याशङ्क्याह सामर्थ्यादिति ज्ञानोदयसमसमयमेव देहापोहे तत्त्वदर्शिभिरुपदिष्टं ज्ञानं फलवदिति भगवदभिप्रायस्य बाधितत्वप्रसङ्गादाचार्यलाभान्यथानुपपत्त्या प्रवृत्तफलकर्मसम्पादकमज्ञानलेशं न नाशयति ज्ञानमित्यर्थः कथं तर्हि प्रारब्धफलं कर्म नश्यतीत्याशङ्क्याह येनेति तर्हि कथं ज्ञानाग्निः सर्वकर्माणि भस्मसात् करोतीत्युक्तं तत्राह अत इति ज्ञानादारब्धफलानां कर्मणां निवृत्त्यनुपपत्तेरनारब्धफलानि यानि कर्माणि पूर्वं ज्ञानोदयादस्मिन्नेव जन्मनि कृतानि ज्ञानेन च सह वर्तमानानि प्राचीनेषु चानेकेषु जन्मस्वर्जितानि तानि सर्वाणि ज्ञानं कारणनिवर्तनेन निवर्तयतीत्यर्थः ॥ ३७ ॥

स्वामिकृतटीका ।

समुद्रवत् स्थितस्यैव पापस्य अतिलङ्घनमात्रं न तु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह यथैधांसीति एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा भस्मीभावं नयति तथात्मज्ञानरूपोऽग्निः प्रारब्धकर्मफलव्यतिरिक्तानि सर्वाणि कर्माणि भस्मीकरोतीत्यर्थः ॥३७॥

भाषा अनुवाद ।

जो पूर्वोक्तश्लोक मे कहा कि ज्ञाननौका से पापसमुद्र को उतरि जाओगे सो ठीक है पर पाप तो बना रहा इस सन्देह पर दृष्टान्त देकर कहते हैं कि हे अर्जुन जैसे प्रज्वलित अग्नि काष्ठ समूहको भस्म करदेती है तैसे ही ज्ञान अग्नि भी प्रारब्ध कर्मको छोड़ और सम्पूर्ण सञ्चित आगामी कर्मोंको नाश करती है इसमे कुछ सन्देह न करो ॥ ३७ ॥

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परं शान्तिमचिरेणाऽधिगच्छति ॥ ३९ ॥

शाङ्करभाष्यम्।

यत एवमतः नहीति नहि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते हि यस्मात् तत् ज्ञानं स्वयमेव योग संसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो मुमुक्षुः कालेन महता आत्मनि विन्दति लभत इत्यर्थः ॥ ३८ ॥

आनन्दगिरिकृतटीका।

नन्वन्येनैव परमपरिशुद्धिकरेण केनचिदश्वमेधादिना परमपुरुषार्थसिद्धेरन्यमात्मज्ञानेनेत्याशङ्क्याह यत इति पूर्वोक्तेन प्रकारेण ज्ञानमाहात्म्यं यतः सिद्धमतस्तेन ज्ञानेन तुल्यं परिशुद्धिकरं परमपुरुषार्थोपयिकमिह व्यावहारभूमौ नास्तीत्यर्थः तत् पुनरात्मविषयं ज्ञानं सर्वेषां किमिति झटिति नोत्पद्यते तत्राह तत् ज्ञानं स्वयमिति महता कालेन यथोक्तेन साधनेन योग्यतामापन्नः तद्‌विकृतः स्वयं तदात्मनि ज्ञानं विन्दतीति योजना सर्वेषां झटिति ज्ञानमनुदयो योग्यता वैधुर्य्यादिति भावः ॥ ३८ ॥

स्वामिकृतटीका।

तत्र हेतुमाह नहीति पवित्रं शुद्धिकरं इह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव तर्हि सर्वेऽपि किमिति आत्मज्ञानमेव नाभ्यस्यन्तीत्यत आह तत् स्वयमिति सार्द्धेन तदात्म विषये ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यतां प्राप्तः सन् स्वयमेवानायासेन लभते न तु कर्मयोगं विनेत्यर्थः ॥ ३८ ॥

भाषा अनुवाद।

तिसका कारण यह है कि संसार मे तप दान व्रत यज्ञ आदिके बीच ज्ञानके समान कोई भी चित्त शुद्ध नहीं करते हैं तो फेरि सब मनुष्य क्यों नहीं ज्ञान हीं का अभ्यास करते इस पर डेढ़ श्लोकसे कहते हैं कि बहुत काल कर्म्मयोग करने से शुद्धचित्त होय सहज मे लोग आत्माका तत्त्वज्ञान लाभ करते हैं परन्तु निष्काम कर्म्मयोग रूप जो भक्ति तिसके विना तत्त्वज्ञान नहीं होता है सोई कहा कि नहि ज्ञानेन सदृशं पवित्रमिह विद्यत इति ॥ ३८ ॥

## शाङ्करभाष्यम्

येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते श्रद्धावानिति श्रद्धावान् श्रद्धालुर्लभते ज्ञानं श्रद्धालुत्वेऽपि भवति कश्चित् मन्दप्रस्थानोऽत आह तत्परो गुरूपासनादावभियुक्तो ज्ञानलब्ध्युपाये श्रद्धावान् तत्परो जितेन्द्रियः स्यादित्यत आह संयतेन्द्रियः संयतानि विषयेभ्यो निवर्त्तितानि यस्येन्द्रियाणि स संयतेन्द्रियो योगी य एवम्भूतः श्रद्धावांस्तत्परः संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते प्रणिपातादिस्तु वाह्योऽनैकान्तिकोऽपि भवति मायावित्वादिसम्भवात् नतु तथातु श्रद्धावत्त्वादावित्येकान्ततो ज्ञानलब्ध्युपायः किं पुनर्ज्ञानलाभात् स्यादित्युच्यते ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्तिमुपरतिमचिरेण क्षिप्रमेवाधिगच्छति सम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः॥ ३९॥

### आनन्दगिरिकृतटीका।

कर्मयोगेन समाधियोगेन च सम्यक्सत्त्वस्य ज्ञानोत्पत्तावन्तरङ्गसाधनमुपदिशति येनेति ज्ञानलाभे प्रयोजनमाह ज्ञानमिति न केवलं श्रद्धालुत्वमेव सहायं ज्ञानलाभे हेतुरपि तु तात्पर्य्यमपीत्याह श्रद्धालुत्वेऽपीति मन्दप्रस्थानत्वं तात्पर्यविधुरत्वं नच तस्योपदिष्टमपि ज्ञानमुत्पत्तुमीष्टे तेन तात्पर्यमपि तत्र कारणं भवतीत्याह अत आहेति अभियुक्तो निष्ठावान् उपासनादावित्यादिशब्देन श्रवणादि गृह्यते न केवलं श्रद्धा तात्पर्यञ्चेत्युभयमेव ज्ञानकारणं किन्तु संयतेन्द्रियत्वमपि तदभावे श्रद्धादेरकिञ्चित्करत्वादित्याशयेनाह श्रद्धावानिति उक्तसाधनानां ज्ञानेन सहैकान्तिकत्वमाह य एवम्भूत इति तर्हि हि प्रणिपातेनेत्यादौ प्रागेव प्रणिपातादेर्ज्ञानहेतोरुक्तत्वात् किमितीदानीं हेत्वन्तरमुच्यते तत्राह प्रणिपातादिस्त्विति तद्धि वहिरङ्गमिदं पुनरन्तरङ्गं नच तत्र ज्ञानेन प्रतिनियमो मनस्यन्यथा कृत्वा वहिरन्यथा प्रदर्शनात्मनो मायावित्वस्य सम्भवाद्विप्रलम्भकत्वादेरपि सम्भावनोपनीतत्वादित्यर्थः मायावित्वादेः श्रद्धावत्त्वात् तात्पर्य्यादावपि सम्भवादनैकान्तिकत्वमविशिष्टमित्याशङ्क्याह नत्विति नहि मायया विप्रलम्भेन वा श्रद्धा तात्पर्यसंयमानि योगतो निष्ठातुमर्हन्तीत्यर्थः उत्तरार्द्धं प्रश्नपूर्वकमवतार्य्य व्याकरोति कि पुनरित्यादिना सम्यग्ज्ञानादभ्यासादिसाधनानपेक्षान्मोक्षो भवतीत्यत्र प्रमाणमाह सम्यग्दर्शनादिति शास्त्रशब्देन तमेव विदित्वा ज्ञानादेव तु कैवल्यमित्यादि विवक्षितं न्यायस्तु ज्ञानादज्ञानविहतेस्ते रज्ज्वादौ प्रसिद्धत्वात् आत्मज्ञानादपि निरपेक्षादज्ञानतत्कार्यप्रध्वंसलक्षणो मोक्षः स्यादित्येवं लक्षणम्॥३९॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

### शाङ्करभाष्यम् ।

अत्र संशयो हि न कर्त्तव्यः पापिष्ठो हि संशयः कथमित्युच्यते अज्ञश्चेति अज्ञश्चानात्मज्ञोऽश्रद्दधानश्च संशयात्मा च विनश्यति अज्ञाऽश्रद्दधानौ यद्यपि विनश्यतः तथापि न तथा यथा संशयात्मा सतु पापिष्ठः सर्वेषां कथं नायं साधारणोऽपि लोकोऽस्ति तथा न परलोको न सुखं तत्रापि संशयोपपत्तेः संशयात्मनः संशयचित्तस्य तस्मात् संशयो न कर्त्तव्यः ॥ ४० ॥

### आनन्दगिरिकृतटीका ।

उत्तरश्लोकस्य पातनिकां करोति अत्रेति यथोक्तसाधनवानुपदेशमपेक्ष्याचिरेण ब्रह्म साक्षात् करोति साक्षात् कृत ब्रह्मत्वेऽचिरेणैव मोक्षं प्राप्नोतीत्यर्थोऽर्थः सम्यक्या पराक्रम्यते संशयस्याकर्तव्यत्वे हेतुमाह पापिष्ठोहीति उक्तं हेतुं प्रश्नपूर्वकमुत्तरश्लोकेन साधयति कथमित्यादिना अज्ञादश्रद्दधानाच्च संशयचित्तस्य विशेषमादर्शयति नायमिति द्वितीय-

### स्वामिकृतटीका ।

किञ्च श्रद्धावानिति श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्य बुद्धिमान् तत्परस्तदेकनिष्ठः संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः अतः श्रद्धादिसम्पत्त्या ज्ञानलाभात् प्राक् कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः ज्ञानलाभानन्तरन्तु न तस्य किञ्चित् कर्त्तव्यमित्याह ज्ञानं लब्ध्वातु मोक्षमचिरेण प्राप्नोति ॥ ३९ ॥

### भाषा अनुवाद ।

और भी कहते हैं कि श्रद्धावान् कहे आचार्य तथा गुरूके उपदेश मे विश्वास करि आस्तिक बुद्धि हो तत्पर कहे एक उसी उपदेश मे दत्तचित्त हो और इन्द्रियोंको वश राखिकर वह तत्त्वज्ञान लाभ करैं हैं इसीसे ज्ञानलाभ के पहिले श्रद्धापूर्वक चित्तशुद्धि के अर्थ निष्काम भक्तियोग करना उचित है और ज्ञान होनेपर ज्ञानी को फेरि अन्य कोई कर्म्म करना नहीं है सोई कहते हैं कि तत्त्वज्ञान लाभ के अनन्तर अचिरात् कहे अल्पकाल मे झटपट मोक्षको पावते हैं इसमे सन्देह नहीं ॥ ३९ ॥

## आनन्दगिरिकृतटीका।

भागविभजनार्थं भूमिकां करोति अज्ञेति अज्ञादीनां मध्ये संशयात्मनो यत्पापिष्ठत्वं तत् प्रश्नद्वारा प्रकटयति कथमिति श्लोकद्वयस्य तत्प्रयुक्तसुखस्य चाभावे हेतुमाह तत्रापीति संशयचित्तस्य सर्वत्र संशयप्रवृत्तेर्दुर्निवारत्वादित्यर्थः संशयस्यानर्थमूलत्वे स्थिते फलितमाह तस्मादिति ॥ ४० ॥

## स्वामिकृतटीका।

ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह अज्ञश्चेति अज्ञागुरूपदिष्टार्था-नभिज्ञः कथञ्चिज्ज्ञानेजातेऽपि तत्राश्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिध्येन्नवेति संशयाक्रान्तचित्तश्च विनश्यति स्वार्थात् भ्रश्यति एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति धनार्जनविवाहाद्यसिद्धेः नच परलोको धर्मस्यानिष्पत्तेः न च सुखं संशयेनैव भोगस्याप्यसम्भवात् ॥ ४० ॥

## भाषा अनुवाद।

तत्त्वज्ञान के अधिकारी को कहिकरि अब अनधिकारी जो अज्ञानी तिसका लक्षण कहते हैं कि एक तो शास्त्र औ गुरू तथा आचार्य्य का उपदेश कभी सुना नहीं और जो दैवात् सुना भी तो समझा नहीं और जो कुछ किसी तरह समझा भी तो उस मे श्रद्धा अर्थात् विश्वास न भई और जो कहने सुनने से विश्वास भी आई तो यह अर्थ कहे प्रयोजन हमारा सिद्ध होय कि न होय इस संशय मे पड़गये ऐसे लक्षणोंसे भरे पूरे जो अलक्षणी अज्ञानी लोग हैं उनका मतलब कभी नहीं होता अर्थात् अपने मनोरथ से भ्रष्ट होते उनको नष्ट प्राणी कहते हैं परन्तु ऊपर कहे जो अज्ञानी औ अश्रद्धाहीन तथा संशयग्रस्त इन तीन के मध्यमे संशय से युक्तचित्त मनुष्य अच्छीतरह अपने मनोरथ से भ्रष्ट होता है क्योंकि उसको हरकाम और हरबात मे सन्देह लगी रहती है क्या धन उपार्जन क्या बिवाह क्या दान धर्म्म क्या अपना सुख खाना पहिरना लेना देना आदि सब कामो मे संशय के मारे क्षण भर भी सुख नहीं फेरि औरों को देखि हम कुछ नहीं करते यह चिन्ता जुदी शिरपर चढ़ी रहती है तो फेरि संशय के कारण धर्म्म न होने से स्वर्गादि भी नही मिलता

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

शाङ्करभाष्यम्।

कस्मात् योगेति योगसन्न्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन सन्न्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसन्न्यस्तकर्माणं कथं योगसन्न्यस्तकर्मेत्याह ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन सञ्छिन्नः संशयो यस्य स ज्ञानसञ्छिन्नसंशयः य एवं योगसन्न्यस्तकर्मा तमात्मवन्तमप्रमत्तं गुणचेष्टारूपेण दृष्टानि न कर्माणि निबध्नन्ति अनिष्टादिरूपं फलं नारभन्ते हे धनञ्जय ॥ ४१ ॥

आनन्दगिरिकृतटीका।

यद्यपि संशयः सर्वानर्थहेतुत्वात् कर्त्तव्यो न भवति तथापि निवर्त्तकाभावे तदकरणमशक्यमिति शङ्कते कस्मादिति श्रुतियुक्तिप्रयुक्तमैक्यज्ञानं तन्निवर्त्तकमित्युत्तरमाह ज्ञानेनेति संशयरहितस्यापि कर्माण्यनर्थहेतूनि भवन्तीत्याशङ्क्याह योगेति विषयपरस्य पुंसो योगायोगात् कुतो योगसन्न्यस्तकर्मत्वमित्याशङ्क्याह आत्मवन्तमिति परमार्थदर्शनतः संशयोच्छित्तौ तदुच्छेदकज्ञानमाहात्म्यादेव कर्मणाञ्च निष्टत्तावप्रमत्तस्य प्रातिभासिकानि कर्माणि बन्धहेतवो न भवन्तीत्याह न कर्माणीति कर्मयोगादेव कर्मसन्न्यासस्यानुपपत्तिमाशङ्क्य आद्यं पादं विभजते परमार्थेति तत्र वैधसन्न्यासपक्षे परोक्षं फलं सन्न्यासपक्षेत्वपरोक्षमिति विवेकः यथोक्तज्ञानेन सन्न्यस्तकर्मत्वमेव सति संशये न सिध्यति संशयवतस्तदयोगादिति शङ्कते कथमिति द्वितीयं पादं व्याकुर्वन् परिहरति आहेत्यादिना पाठक्रमादर्थक्रमस्य बलीयस्त्वादादौ द्वितीयं पादं व्याख्याय पश्चादाद्यं पादं व्याचष्टेत्याह एवमिति सर्वमिदं

भाषा अनुवाद।

और संसार मे तो धन नष्टहोनेकी सन्देह कर संसारिक सुखसे हाथ धोय ही वैठे हैं तो उनके लोक परलोकके दोनो सुख चलेगये केवल चिन्ताके चितामे वैठे धीरे धीरे जरि जरायके छारहो माटीमे मिलगये मूर्खता से वृथा जन्म चला गया सोई कहा कि अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति इति इस्से तुम संशय छोड़ो ॥ ४० ॥

तस्मादज्ञान सम्भूतं हृत्स्थं ज्ञानासिनाऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥
इति श्रीभगवद्गीतायां ज्ञानकर्मन्यास योगो नाम
चतुर्थोऽध्यायः ।

शाङ्करभाष्यम् ।

यस्मात् कर्म्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसञ्छिन्नसंशयो न निबध्यते कर्म्मभिर्ज्ञानाग्निदग्धकर्म्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान् विनश्यति तस्मादिति तस्मात् पापिष्ठमज्ञानसम्भूतम् अज्ञानाद्-

आनन्दगिरिकृतटीका ।

प्रमादवतो विषयपरवशस्य न सिध्यतीत्यभिसन्धाय आत्मवन्तं व्याकरोति अप्रमत्तमिति न कर्माणीत्यादि फलोक्तिं व्याचष्टे गुणचेष्टेति अनिष्टादित्यादिशब्देन इष्टमिश्रस्य ग्रहणं ॥४१॥

स्वामिकृतटीका ।

अध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति योगेति द्वाभ्यां योगेन परमेश्वराराधनरूपेण तस्मिन् सन्न्यस्तानि समर्पितानि कर्माणि येन तं पुरुषं कर्माणि सफलैनं निबध्नन्ति ततश्च ज्ञानेनात्मबोधेन सञ्छिन्नः संशयो देहाद्यभिमानलक्षणो यस्य तमात्मवन्तमप्रमादिनं कर्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबध्नन्ति ॥ ४१ ॥

भाषा अनुवाद ।

दूसरे औ तीसरे अध्याय मे कहा जो कर्म्मनिष्ठा औ ज्ञाननिष्ठा सोई दो श्लोक से कहते हैं कि जिस ने भगवत आराधन रूप सब कर्म्म अन्तर्यामी भगवान को अर्पित किया है ऐसा मनुष्य अपने कर्म्मफलसे कभी बद्ध नहीं होता और हम कोई कर्म्म नहीं करते ऐसे बोधसे जिसके देह गेहमे आत्मबुद्धिरूप संशय नष्ट होगई है ऐसे पुरुष के लोक शिक्षार्थ भिक्षापर्यटन आदि स्वभाव से सिद्ध कर्म्म कभी भी ज्ञानके प्रतिबन्धक नहीं होते हैं सोई कहा कि योग जो भगवदाराधन कर्म्म तिससे दिया है कर्म्मोंको सन्यास जिसने और ज्ञान से अच्छीतरह दूर किया है संशय सन्देह जिसने ऐसे आत्मस्वरूप पुरुषको हे धनञ्जय कर्म्मबन्धन नहीं कर सकते हैं तुम भी विचार कर देखो ॥ ४१ ॥

शाङ्करभाष्यम्।

विवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यक् दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिनाऽऽत्मनः स्वस्य आत्मविषयत्वात् संशयस्य नहि परस्य संशयोऽपरेण छेत्तव्यतां प्राप्तो येन स्वस्येति विशेष्यतेऽत आत्मविषयोऽपि स्वस्यैव भवति ज्ञानासिना छित्त्वैनं संशयं तद्विनाशहेतुभूतं योगं सम्यक् दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः उत्तिष्ठ चेदानीं युद्धाय भारतेति ॥ ४२ ॥

इति श्रीशाङ्करभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

आनन्दगिरिकृतटीका।

तस्मादित्यादि समनन्तरश्लोकगतं तत्पदापेक्षितमर्थमाह यस्मादिति सतां कर्मणाम् अदादिषु फलारम्भकत्वोपलम्भात् विदुष्यपि तेषां तद्भावमनपवाधमित्याशङ्क्याह ज्ञानाग्नीति ननु सन्दिहानस्य तत्प्रतिविधानं कर्मयोगानुष्ठानं नापितद्धेतुकज्ञानं तत्रापि संशयावतारा- दित्याशङ्क्याह यस्माच्चेति श्लोकाक्षराणि व्याचष्टे तस्मादित्यादिना पापिष्ठमिति संशयस्य सर्वानर्थ मूलत्वेन त्याज्यत्वं सूच्यते विवेकाग्रहप्रसूतत्वादपि तस्य हेयत्वमविवेकस्यानर्थ करत्वप्रसिद्धेरित्याह अविवेकादिति न च तस्यचैतन्यवदात्मनिष्ठत्वादत्याज्यत्वं शङ्कितव्य मित्याह हृदीति शोकमोहाभ्यामभिभूतस्य पुंसो मनसि प्रादुर्भावतः संशयस्य प्रबलप्रति- बन्धकाभावेनैव प्रध्वंसः सिद्धेदित्याशङ्क्यदित्यादिशङ्क्याह ज्ञानासिनेति स्वाश्रयस्य संशयस्य स्वाश्रयेणैव ज्ञानेन समुच्छेदसम्भवात् किमिति स्वस्येति विशेषणमित्याशङ्क्याह आत्मविषयत्वा- दिति स्वान्यादिविषयः संशयः तद्विषयेण ज्ञानेन देवदत्तनिष्ठेन तन्निष्ठोव्यावर्त्यते प्रकृते- त्वात्म विषयस्तदाश्रयस्य संशयः तथाविधेन ज्ञानेन अपनीयते तेन विशेषणमर्थवदित्यर्थः तदेव प्रपञ्चयति नहीति आत्माश्रयत्वस्य प्रकृते संशये सिद्धत्वेनाविवक्षितत्वात् तद्विषयस्य तद्विषये नैव तस्य तेन निवृत्तिर्विवक्षितेत्युपसंहरति अत इति संशयसमुच्छित्त्यनन्तरं कर्त्तव्य- मुपदिशति छित्त्वैनमिति अग्निहोत्रादिकं कर्म भगवदाज्ञया क्रमेण करिष्यामि युद्धात् पुनरुपरिरंसैवेत्याशङ्क्याह उत्तिष्ठेति भरतान्वये महति क्षत्रियवंशे प्रसूतस्य समुपस्थित समरविमुखत्वमनुचितमिति मन्वानः सन्नाह भारतेति तदनेन योगस्य कृतिमत्वं भगवतो- ऽनीश्वरत्वञ्च निराकृत्य कर्मादावकर्मादिदर्शनादात्मनः सम्यग्ज्ञानात् प्रणिपातादेर्वृद्धि- रङ्गाञ्च श्रद्धादेरद्भुतादर्शनानर्थनिवृत्त्या ब्रह्मभावमभिदधता सर्वस्मादुत्कृष्टे तस्मिन्नसंशया- नस्याधिकाराद्यशेषदोषवन्तं संशयं हित्वोत्तमस्य ज्ञाननिष्ठापरस्य कर्मनिष्ठेति स्थापितम् ॥४२॥

इति आनन्दगिरिकृतटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

स्वामिकृतटीका ।

तस्मादज्ञानेति यस्मादेवं तस्मादात्मनोऽज्ञानेन सम्भूतं हृदि स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा कर्मयोगमातिष्ठ आश्रय तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ हे भारतेति क्षत्रियत्वेन युद्धस्य धर्म्यत्वं दर्शितं पुम्वस्थाभेदेन कर्मज्ञानमयी-द्विधा निष्ठोक्ता येन तं वन्दे शौरिं संशयच्छिदम् ॥ ४२ ॥

इति श्रीधरस्वामिकृतटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

## भाषा अनुवाद ।

जब कि भगवदर्पण रूप ऐसे निष्काम कर्म्मयोग और ज्ञानयोग सब है तौ हे भारत अर्जुन आत्मविषयक अपने अज्ञानसे उत्पन्न औ अन्तःकरण मे टिके जो शोक मोह आदि सब संशय उनको देह आत्माका विवेक कहे विचाररूप ज्ञान खड्गसे काटि कर उठो औ कर्म्मयोग को अनुष्ठान करो और उपस्थित जो युद्ध सो करो श्रीकृष्ण भारत इस सम्बोधन से यह जनाया कि युद्ध क्षत्री का स्वधर्म्म है और तुम श्रेष्ठ भरतवंश मे उत्पन्न हो श्रीधर स्वामी कहते हैं कि पुरुषोंको अवस्था भेदसे कर्म्मनय औ ज्ञानमय ये दो प्रकार की निष्ठा जिसने कहा एसे संशय निवारण भगवान श्रीकृष्ण को मै प्रणाम करता हूं ॥ ४२ ॥

इति श्रीजगन्नाथ शुक्ल विरचितायां मनभावनीटीकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

### अर्जुन उवाच ।

सन्न्यासं कर्म्मणां कृष्ण पुनर्योगञ्च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

शाङ्करभाष्यम् ।

कर्म्मण्यकर्म्म यः पश्येदित्यारभ्य स युक्तः कृत्स्नकर्मकृत् ज्ञानाग्निदग्धकर्माणं शारीरं केवलं कर्म कुर्वन् यदृच्छालाभसन्तुष्टो ब्रह्मार्पणं ब्रह्महविः कर्मजान् विद्धि तान् सर्वान् सर्वं कर्माखिलं पार्थ ज्ञानाग्निः सर्वकर्माणि योगसन्न्यस्तकर्माणमित्यन्तैर्वचनैः सर्वकर्म्मसन्न्यासमवोचद्भगवान् छित्त्वैनं संशयं योगमातिष्ठेत्यनेन वचनेन पुनर्योगञ्च कर्मानुष्ठानलक्षणमनुतिष्ठेत्युक्तवान् तयोरुभयोश्च कर्मानुष्ठानकर्म्मसन्न्यासयोः स्थितिगतिवत् परस्परविरोधादेकेन सह कर्त्तुमशक्यत्वात् कालभेदेन चानुष्ठानविधानाभावादर्थादेतयोरन्यतरकर्त्तव्यतायां प्राप्तौ सत्यां यत् प्रशस्यतरमेतयोः कर्मानुष्ठानकर्मसन्न्यासयोः तत् कर्त्तव्यं नेतरदित्येवं मन्यमानः प्रशस्यतरबुभुत्सया अर्जुनउवाच सन्न्यासं कर्मणां कृष्णेत्यादिना ननु चात्मविदो ज्ञानयोगेन

आनन्दगिरिकृतटीका ।

पूर्वोत्तराध्याययोः सम्बन्धमभिदधानो वृत्तानुवादपूर्वकमर्जुनप्रश्नस्याभिप्रायं प्रदर्शयितुं प्रक्रमते कर्मणीत्यादिना इत्यारभ्य कर्मण्यकर्मदर्शनमुक्त्वा तत्प्रशंसा प्रसारितेत्याह स युक्त इति ज्ञानवन्तं सर्वाणि कर्माणि लोकसंग्रहार्थं कुर्वन्तं ज्ञानलक्षणेनाग्निना दग्धसर्वकर्माणं कर्मप्रयुक्तफलसम्बन्धविधुरं विवेकवन्तो वदन्तीति ज्ञानवतो ज्ञानफलभूतं सन्न्यासं

## शाङ्करभाष्यम् ।

निष्ठां प्रतिपादयिषन् पूर्वोदाहृतैर्वचनैर्भगवान् सर्वकर्मसन्न्यासमवोचन्न-
त्वनात्मज्ञस्यातश्च कर्मानुष्ठानकर्मसन्न्यासयोर्भिन्नपुरुषविषयत्वादन्यतरस्य
प्रशस्यतरत्वबुभुत्सया प्रश्नोऽनुपपन्नः सत्यमेवं त्वदभिप्रायेण प्रश्नो नोपपद्यते
प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नो युज्यत एवेति वदाम कथं पूर्वोदाहृतैर्वचनैर्भग-
वता कर्मसन्न्यासस्य कर्त्तव्यतया विवक्षितत्वात् प्राधान्यमन्तरेण च कर्त्तारं
तस्य कर्त्तव्यत्वासम्भवादनात्मविदपि कर्त्तापत्ते प्राप्तोऽनूद्यत इति न पुन-
रात्मवित्कर्त्तृकत्वमेव सन्न्यासस्य विवक्षितमित्येवं मन्वानस्यार्जुनस्य कर्मा-
नुष्ठानकर्मसन्न्यासयोरविद्वत्पुरुषकर्त्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः
परस्परविरोधादन्यतरस्य कर्त्तव्यत्वे प्राप्ते प्रशस्यतरञ्च कर्त्तव्यं नेतरदिति
प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टु-
रभिप्राय एवमेवेति गम्यते कथं सन्न्यासकर्मयोगौ निःश्रेयसकरौ तयोस्तु कर्म-
सन्न्यासात् कर्मयोगो विशिष्यते इति प्रतिवचनमेतन्निरूप्यं किमनेनात्म-

### आनन्दगिरिकृतटीका ।

विवक्षन् विविदिषोः साधनरूपमपि सन्न्यासं भगवान् विवक्षितवानित्याह ज्ञानाग्नीति
निराशीरित्यारभ्य शरीरस्थितिमात्रकारणं कर्म शरीरस्थितावपि सङ्गरहितः सन् समा-
चरन् धर्माधर्मफलभागी न भवतीत्यपि पूर्वोत्तराभ्यामध्यायाभ्यां द्विविधं सन्न्यासं सूचित-
वानित्याह शारीरमिति यदृच्छेत्यादावपि सन्न्यासं सूचितं तद्धर्मफलायोपदेशादित्याह
यदृच्छेति ज्ञानस्य यज्ञत्वसम्पादनपूर्वकं प्रशंसावचनादपि कर्मसन्न्यासो दर्शितो ज्ञाननिष्ठस्ये-
त्याह ब्रह्मार्पणमिति ज्ञानयज्ञस्तुत्यर्थं विहितान्नानाविधान् यज्ञाननूद्य तेषां देहादि-
व्यापारजन्यत्ववचनेनात्मनो निर्व्यापारत्वविज्ञानफलाभिलाषादपि यथोक्तमात्मानं विवि-
दिषोः सर्वकर्मसन्न्यासेऽधिकारो ध्वनित इत्याह कर्मजानिति समस्तस्यैवाविशेषवर्जितस्य
कर्मणो ज्ञाने पर्य्यवसानाभिधानाच्च जिज्ञासोः सर्वकर्म सन्न्यासं सूचितं इत्याह सर्वमिति
तद्विद्धीत्यादिना ज्ञानप्राप्त्युपायं प्रणिपातादिप्रदर्श्य प्राप्तेन ज्ञानेनातिशयमाहात्म्यवता
सर्वकर्मणां निवृत्तिरेवेति वदता च ज्ञानार्थिनः सन्न्यासेऽधिकारी दर्शितो भवतीत्याह
ज्ञानाग्निरिति ज्ञानेन समुच्छिन्नसंशयं तस्मादेव ज्ञानात् कर्माणि सन्न्यस्य व्यवस्थितमप्र-
मत्तं वशीकृतकार्य्यकरणसङ्घातवन्तं प्रातिभासिकानि कर्माणि न निबध्नन्ति इत्यपि
द्विविधः सन्न्यासो भगवतोक्त इत्याह योगेति कर्माणीत्यारभ्य योगसन्न्यस्तकर्माणमित्यन्तै-
रुदाहृतैर्वचनैरुक्तं सन्न्यासमुपत्वहरति इत्यन्तैरिति तर्हि कर्मसन्न्यासस्यैव जिज्ञासुना

साङ्करभाष्यम् ।

विल्कर्त्तृकयोः सन्यासकर्मयोगयोर्निःश्रेयसकरत्वं प्रयोजनमुक्त्वा तयोरेव कुतश्चिद्विशेषात् कर्मसन्यासात् कर्मयोगस्य विशिष्टत्वमुच्यते आहोस्विदना-त्मविल्कर्त्तृकयोः सन्यासकर्मयोगयोः तदुभयमुच्यत इति किञ्चातो यद्यात्म-वित्कर्तृकयोः कर्मसन्यासकर्मयोगयोर्निःश्रेयसकरत्वं तयोस्तु कर्मसन्यासात् कर्मयोगस्य विशिष्टत्वमुच्यते यद्विवानात्मविल्कर्त्तृकयोः सन्यासकर्मयोगयोस्तदुभयमुच्यत इति अत्रोच्यते आत्मविल्कर्त्तृकयोः सन्यासकर्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्ववचनं तदीयाच्च सन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नं यद्यनात्मविदः कर्मसन्यासः तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः सम्भवेतां तदा तयोर्निःश्रेयसकरत्वोक्तिः कर्मयोगस्य च कर्मसन्यासाद्वि-शिष्टत्वाभिधानमित्येतदुभयमुपपद्येत आत्मविदस्तु सन्यासकर्मयोगयोर-

आनन्दगिरिकृतटीका ।

ज्ञानवता चादरणीयत्वात् कर्मानुष्ठानमनादेयमापन्नमित्याशङ्क्योक्तमर्थान्तरमनुवदति ज्ञेत्वै-नमिति कर्म तत्त्यागयोरुक्तयोरेकेनैव पुरुषेणानुष्ठेयत्वसम्भवान्नविरोधोऽस्तीत्याशङ्क्य युग-पद्वा क्रमेण वानुष्ठानमिति विकल्पत्राद्यं दूषयति उभयश्चेति द्वितीयं प्रत्याह कालभेदे-नेति उक्तयोर्द्वयोरेकेन पुरुषेणानुष्ठेयत्वाऽसम्भवे कथं कर्त्तव्यत्वसिद्धिरित्याशङ्क्याह अर्था-दिति द्वयोरुक्तयोरेकेन युगपत् क्रयाभ्याम् अनुष्ठानानुपपत्तेरित्यर्थः अन्यतरस्य कर्तव्य-त्वेकतरस्येति कुतो निर्णयो द्वयोः सन्निधानाविशेषादित्याशङ्क्याह यत् प्रशस्यतरमिति भगवता कर्मणां सन्यासो योगश्चोक्तो नच तयोः समुच्चित्यानुष्ठानं तेनान्यतरस्य श्रेष्ठ-स्यानुष्ठेयत्वे तद्बुभुत्सया प्रश्नोपपत्तिरित्युपसंहरति इत्येवमिति नायं प्रष्टुरभिप्रायः कर्म-सन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेयत्वस्योक्तत्वादेकस्मिन् पुरुषे प्राप्त्यभावादिति शङ्कते नन्विति चोद्यमङ्गीकृत्य परिहरति सत्यमेवमिति कीदृशस्तर्हि प्रष्टुरभिप्रायो येन प्रश्नप्रवृत्तिरिति पृच्छति कथमिति एकस्मिन् पुरुषे कर्म तत्त्यागयोरस्ति प्राप्तिरिति प्रष्टुरभिप्रायं प्रतिनिर्देष्टुं प्रारभते पूर्वोदाहृतैरिति यथा स्वर्गकामो यजेतेति स्वर्गकामोद्देशेन यागो विधीयते नतु तस्यैवाधिकारो नान्यस्येत्यपि प्रतिपाद्यते वाक्यभेदप्रसङ्गात् तथा नात्मवित् कर्त्ता सन्यासपक्षे प्राप्तोऽनूद्यते नचात्मवित् कर्तृकत्वमेव सन्यासस्य नियम्यते वैराग्यमात्रेणा-त्मस्यापि संन्यासविधिदर्शनात् तस्मात् कर्म तत्त्यागयोरविद्वत्कर्तृकत्वमस्तीति मन्वानस्य अर्जुनस्य प्रश्नः सम्भवतीति भावः भवतु सन्यासस्य कर्त्तव्यत्वविवक्षा तथापि कथमेकस्मिन्

## शाङ्करभाष्यम् ।

सम्भवात्तयोर्निः श्रेयसकरत्वाभिधानं कर्म्मसन्न्यासाच्च कर्म्मयोगो विशिष्यत इति चानुपपन्नमत्राह किमात्मविदः सन्न्यासकर्म्मयोगयोरप्यसम्भव आहोस्विदन्यतरस्यासम्भवः यदा चान्यतरस्यासम्भवस्तदा किं कर्म्मसन्न्यासस्योत कर्म्मयोगस्येत्यसम्भवे कारणञ्च वक्तव्यमिति अत्रोच्यते आत्मविदो निवृत्तमिथ्याज्ञानत्वाद्विपर्य्ययज्ञानमूलस्य कर्मयोगस्यासम्भवः स्यात् जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्यात्मविदः सम्यग्दर्शनेनास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसन्न्यासमुक्ता तद्विपरीतस्य मिथ्याज्ञानमूलककर्तृत्वाभिमानपुरःसरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्येह शास्त्रे तत्र तत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानतत्कार्य्यविरोधादभावः

### आनन्दगिरिकृतटीका ।

पुरुषे तयोरप्राप्तावुक्ताभिप्रायेण प्रश्नवचनं प्रकल्प्यते तत्र अनात्मविदिति आत्मविदो विद्या सामर्थ्यात् कर्मत्यागश्रौव्यवदितरस्यापि सति वैराग्ये तत्त्यागस्यावश्यकत्वात् तत्र कर्त्तासो प्राप्तोत्यनूद्यते तथा च कर्मतत्त्यागयोरेकस्मिन् विदुषि प्राप्त्यव्यक्तत्वादुक्ताभिप्रायेण प्रश्नप्रवृत्तिरविरुद्धेत्यर्थः संन्यासस्यात्मवित्कर्तृकत्वमेवात्र विवक्षितं किं न स्यादित्याशंक्य कर्त्रन्तरपर्युदासः सन्न्यासविधिश्चेत्यर्थभेदे वाक्यभेदप्रसङ्गान्मैवमित्याह न पुनरिति इति शब्दो वाक्यभेदप्रसङ्गहेतुद्योतनार्थः ततः किमित्याशङ्क्य फलितमाह एवमिति कर्मानुष्ठानकर्मसन्न्यासयोरविद्वत् कर्तृकत्वमभ्युपेत्यैवं मन्वानस्यार्जुनस्य प्रशस्यतरविविदिषया प्रश्नो नानुपपन्न इति सम्बन्धः तयोः समुच्चित्यानुष्ठानसम्भवे कथं प्रशस्यतरविविदिषेत्याशङ्क्याह पूर्वोक्तेनेति उभयोश्चेत्यादावुक्तप्रकारेण कर्म तत्त्यागयोर्मिथोविरोधान्न समुच्चित्यानुष्ठानं सावकाशमित्यर्थः भवतु तर्हि यस्य कस्यचिदन्यतरस्यानुष्ठेयत्वमिति कुतो यथोक्ताभिप्रायेण प्रश्नप्रवृत्तिरित्याशङ्क्याह अन्यतरस्येति उभयप्राप्तौ समुच्चयानुपपत्त्याऽन्यतरपरिग्रहे विशेषस्यान्वेष्यत्वादुक्ताभिप्रायेण प्रश्नोपपत्तिरित्यर्थः इतस्याविद्वत् कर्तृकयोः सन्न्यासकर्मयोगयोः कर्तुः श्रेयानिति प्रष्टुरभिप्रायो भातीत्याह प्रतिवचनेति किं तत् प्रतिवचनं कथं वा तन्निरूपणमिति पृच्छति कथमिति तत्र प्रतिवचनं दर्शयति संन्यासेति तन्निरूपणं कथयति एतदिति तदुभयं निःश्रेयसकरत्वं कर्मयोगस्य श्रेष्ठत्वञ्चेत्यर्थः गुणदोषविभागविवेकार्थं पृच्छति किञ्चेति अतोऽस्मिन्नाद्ये पक्षे किं दूषणम् अस्मिन् वा द्वितीये पक्षे किं फलमिति प्रश्नार्थः तत्र सिद्धान्ती प्रथमपक्षे दोषमादर्शयति अत्रेत्यादिना तदेवानुपपन्नत्वं

## शाङ्करभाष्यम् ।

प्रतिपाद्यते यस्मात् तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्य्ययज्ञान-मूलः कर्मयोगो न सम्भवतीति युक्तमुक्तं स्यात् केषु केषु पुनरात्मस्वरूपनिरू-पणप्रदेशेष्वात्मविदः कर्माभावः प्रतिपाद्यत इत्यत्रोच्यते अविनाशि तु तद्विति प्रकृत्य य एनं वेत्ति हन्तारं वेदाविनाशिनं नित्यमित्यादौ तत्र तत्रात्मविदः कर्माभाव उच्यते ननु च कर्मयोगोऽप्यात्मस्वरूपनिरूपणप्रदेशे तत्र तत्र प्रतिपाद्यत एव तद्यथा तस्माद्युद्धस्व भारत स्वधर्ममपि चावेक्ष्य कर्मण्ये-वाधिकारस्ते इत्यादावास्य कथमात्मविदः कर्मयोगस्यासम्भवः स्यादिति अत्रो-च्यते सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् ज्ञानयोगेन सांख्यानामित्य-नेन सांख्यानामात्मतत्त्वविदामनात्मवित्कर्त्तृककर्मयोगनिष्ठातो निष्-क्रियात्मस्वरूपावस्थानलक्षणायाः ज्ञानयोगनिष्ठायाः पृथक्करणात् कृत-कृत्यत्वेनात्मविदः प्रयोजनान्तराभावात् तस्य कार्यं न विद्यत इति कर्त्तव्यान्तराभाववचनाच्च न कर्म्मणामनारम्भात्। सन्यासस्तु महाबाहो

## आनन्दगिरिकृतटीका ।

व्यतिरेकद्वारा विवृणोति यदीत्यादिना निश्श्रेयसकरत्वोक्तिरित्यत्र पारम्पर्य्येणेति द्रष्टव्यं विशिष्टत्वाभिधानमिति प्रतियोगिनोऽसहायत्वादस्य च शुद्धिद्वारा ज्ञानार्थत्वादित्यर्थः आत्मज्ञस्य कर्मसंन्यास कर्मयोगयोरसम्भवेदर्शिते चोदयति अत्राहेति चोदयिता निर्द्धारणार्थं विकल्पयति किमित्यादिना अन्यतरासम्भवेऽपि सन्देहात् प्रश्नोऽवतरतीत्याह यदावेति यस्य कस्यचिद् अन्यतरस्याऽसम्भवो भविष्यतीत्याशंक्य कारणमन्तरेणासम्भवोऽभवन्नतिप्रसङ्गः स्यादिति मन्वानः सन्नाह असम्भव इति आत्मविदः सकारणं कर्मयोगासम्भवं सिद्धान्ती-दर्शयति अत्रेति संग्रहवाक्यं विवृण्वन्नात्मवित्त्वं विवृणोति जन्मादीति तस्य तदुक्तं निवृत्त-मिथ्याज्ञानत्वं तदिदानीं व्यनक्ति सम्यगिति विपर्य्ययज्ञानमूलस्येत्यादिनोक्तं प्रपञ्चयति निष्क्रियेति यथोक्त सन्यासस्तत्त्वा ततो विपरीतस्य कर्मयोगस्याभावः प्रतिपाद्यत इति सम्बन्धः वैपरीत्यं स्फोरयन् कर्मयोगमेव विशिनष्टि मिथ्याज्ञानेति मिथ्या च तदज्ञान-ञ्चेत्यनाद्य निर्वाच्यमज्ञानं तन्मूलोऽहं कर्त्तेत्यात्मनि कर्तृत्वाभिमानस्तज्जन्यस्तस्येति यावत् यथोक्तं सन्यासस्तत्त्वा यथोक्तकर्मयोगस्यासम्भवप्रतिपादने हेतुमाह सम्यग्ज्ञानेति कुत्र तदभावप्रतिपादनं तदाह इहेति उक्तहेतुं कृत्वात्मज्ञस्य कर्मयोगासम्भवं फलितमाह यस्मादिति इह शास्त्रे तत्र तत्रेत्यादानुक्तमेव व्यक्ती कर्तुं पृच्छति केषु केष्विति

शाङ्करभाष्यम् ।

दुःखमाप्तुमयोगतः इत्यादिवचनाच्चात्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात् योगारूढस्य तस्यैव समः कारणमुच्यत इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात् शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमिति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो वारणात् नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्वविदित्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शन-श्रवणादि कर्मस्वात्मयाथात्म्यविदः करोमीति प्रत्ययस्य समाहितचेत-स्तया सदा कर्त्तव्यत्वोपदेशादात्मतत्त्वविदः सम्यग्दर्शनेन विरुद्धो मिथ्या-ज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न सम्भावयितुं शक्यते यस्मात् तस्मादनात्म वित्कर्त्तृकयोरेव सन्न्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्म-सन्न्यासविलक्षणात् पूर्वोक्तात्मवित्कर्त्तृकसर्वकर्मसन्न्यासविलक्षणात् सत्येक-कर्त्तृत्वविज्ञाने कर्मैकदेशविषयत्वात् यमनियमादिसहितत्वेन च दुरनुष्ठेय-त्वात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येवं प्रतिवचन-वाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयते इति स्थितं ज्यायसी

आनन्दगिरिकृतटीका ।

तानेव प्रदेशान् दर्शयति अत्रेति आत्मस्वरूपनिरूपणप्रदेशेषु सन्न्यासप्रतिपादनादात्मविदः सन्न्यासो विवक्षितश्चेत् तर्हि कर्मयोगोऽपि तस्य कस्माच्च भवति प्रकरणाविशेषादिति शङ्कते ननु चेति आत्मविद्याप्रकरणे कर्मयोगप्रतिपादनमुदाहरति तद्यथेति प्रकरणा-दात्मविदोऽपि कर्मयोगस्य सम्भवे फलितमाह अतश्चेति आत्मज्ञानोपायत्वेनापि प्रकरण-पाठसिद्धौ ज्ञानादूर्द्ध्वं न्यायविरुद्धं कर्म कल्पयितुमाशङ्क्यमिति परिहरति अत्रोच्यत इति सम्यग्ज्ञानमिथ्याज्ञानयोस्तत्कार्ययोश्च भ्रमनिवृत्तिभ्रमसद्भावयोर्मिथो विरोधात् कर्तृत्वादिभ्रममूलं कर्म सम्यग्ज्ञानादूर्द्ध्वं न सम्भवतीत्यर्थः आत्मज्ञस्य कर्मयोगासम्भवे हेत्व-न्तरमाह ज्ञानयोगेनेति इतश्चात्मविदो ज्ञानादूर्द्ध्वं कर्मयोगो न युक्तिमानित्याह कृतकृत्य-त्वेनेति ज्ञानवतो नास्ति कर्मेत्यत्र कारणान्तरमाह तस्येति तर्हि ज्ञानवता कर्मयोगस्य हेयत्ववज्जिज्ञासुनापि तस्य त्याज्यत्वं ज्ञानप्राप्त्या तस्यापि पुरुषार्थसिद्धेरित्याशङ्क्य जिज्ञासो-रस्ति कर्मयोगापेक्षा इत्याह न कर्मणामिति स्वरूपोपकार्यङ्गमन्तरेणाङ्गिस्वरूपानिष्पत्ते-र्ज्ञानार्थिना कर्मयोगस्य शुद्ध्यादिद्वारा ज्ञानहेतोरादेयत्वमित्यर्थः तर्हि ज्ञानवतामपि ज्ञानफलोपकारित्वेन कर्मयोगो कथ्यतामित्याशङ्क्याह योगारूढस्येति उत्पन्नसम्यग्ज्ञानस्य

## शाङ्करभाष्यम् ।

चेत् कर्मण्यस्त इत्यत्र ज्ञानकर्मणोः सहासम्भवे यच्छ्रेय एतयो स्तन्मे ब्रूहि इत्येवं पृष्टोऽर्जुनेन भगवान् ज्ञानयोगेन सांख्यानां निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयञ्चकार नच सन्न्यसनादेव केवलात् सिद्धिं समधिगच्छतीति वचनात् ज्ञानसहितस्य तस्य सिद्धिसाधनत्वमिष्टं कर्मयोगस्य च विधानात् ज्ञानरहितस्य सन्न्यासः श्रेयान् किंवा कर्मयोगः श्रेयानित्येतयोर्विशेषबुभुत्सया अर्जुन उवाच सन्न्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां शंससि प्रशंससि कथयसीत्येतत् पुनर्योगञ्च तेषामेवानुष्ठानमवश्यं कर्त्तव्यं शंससि मे कतरत् श्रेय इति संशयः किं कर्मानुष्ठानं श्रेयः किंवा तद्धानमिति प्रशस्यतरञ्चानुष्ठेयमतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसन्न्यासकर्मानुष्ठानयोर्यदनुष्ठानत् श्रेयोऽवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत् सहैकपुरुषानुष्ठेयत्वासम्भवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥ १ ॥

### आनन्दगिरिकृतटीका ।

कर्माभावे शरीरस्थिति हेतोरपि कर्मणोऽसम्भवान्न तस्य शरीरस्थितिस्तदस्थितौ च कुतो जीवन्मुक्तिस्तदभावे च कस्योपदेष्टृत्वम् उपदेशाभावे च कुतो ज्ञानोदयः स्यादित्याशङ्क्याह शरीरमिति विदुषोऽपि शरीरस्थितिरास्थिता चेत् तन्मात्र प्रयुक्तेषु दर्शनश्रवणादिषु कर्तृत्वाभिमानोऽपि तस्य स्यादित्याशङ्क्याह नैवेति तत्त्वविदित्यनेन च समाहितचेतस्तया करोमीति प्रत्ययस्य सदैव कर्त्तव्यत्वोपदेशादिति सम्बन्धः यत्तु विदुषः शरीरस्थितिनिमित्तकर्माभ्यनुज्ञाने तस्मिन् कर्तृत्वाभिमानोऽपि स्यादिति तत्राह शरीरेति आत्मयाथात्म्यविदः तेष्वपि नाहङ्करोमीति प्रत्ययस्य नैव किञ्चित् करोमीत्यादावकर्तृत्वोपदेशान्न कर्तृत्वाभिमानसम्भावनेत्यर्थः यथोक्तोपदेशानुसन्धानाभावे विदुषोऽपि करोमीति स्वाभाविक प्रत्ययद्वारा कर्मयोगः स्यादित्याशङ्क्याह आत्मतत्त्वेति यद्यपि विद्वान् यथोक्तमुपदेशं कदाचिन्नानुसन्धत्ते तथापि तत्त्वविद्याविरोधात् मिथ्याज्ञानं तन्निमित्तं कर्म वा तस्य सम्भावयितुमशक्यमित्यर्थः आत्मवित्कर्तृकयोः सन्न्यासकर्मयोगयोरयोगात् तयोर्निःश्रेयसकरत्वमन्यतरस्य विशिष्टत्वमित्येतदयुक्तमिति सिद्धत्वात् द्वितीयं पक्षमङ्गीकरोति यस्मादित्यादिना तदीयाच्च कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानमिति सम्बन्धः ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते कथं तस्मात् कर्मयोगस्योत्कृष्टत्व वाचोयुक्तिर्युक्तेति तत्राह पूर्वोक्तेति वैलक्षण्यमेव स्फुटयति सत्येवेति

आनन्दगिरिकृतटीका।

स्वाश्रमविहितश्रवणादौ कर्तृत्वविज्ञाने सत्येव पूर्वाश्रमोपात्तकर्मैकदेशविषयसंन्या-सात् कर्मयोगस्य श्रेयस्त्ववचनं नैतादृशं ब्राह्मणस्यास्ति वित्तमित्यादि स्मृतिविरुद्ध-मित्याशंक्याह यमनियमादिति आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवं प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश ॥ दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ व्रतोपवासो मौनञ्च स्नानञ्च नियमा दश इत्युक्तैर्यमनियमैरन्यैः स्वाश्रमधर्मैर्विशिष्टत्वेनानुष्ठातुमशक्य-त्वादुक्तसंन्यासात् कर्मयोगस्य विशिष्टत्वोक्तिर्युक्तेत्यर्थः नहि कश्चिदिति न्यायेन कर्मयोगस्ये-तरापेक्षया सुकरत्वाच्च तस्य विशिष्टत्ववचनं श्लिष्टमित्याह सुकरत्वेन चेति प्रतिवचनवाक्यार्था-लोचनात् सिद्धमर्थमुपसंहरति इत्येवमिति संन्यासकर्मयोगयोर्मिथोविरुद्धयोः सहस्थित्या-नुष्ठातुमशक्ययोरन्यतरस्य कर्त्तव्यत्वे प्रशस्यतरस्य तद्भावातद्भावस्य चानिर्द्धारितत्वात्तन्निर्द्धा-रविषया प्रश्नः स्यादिति प्रश्नवाक्यार्थपर्यालोचनया प्रष्टुरभिप्रायो यथापूर्वमुपदिष्ट स्तथा प्रतिवचनार्थनिरूपणेनापि तस्य निश्चितत्वात् प्रश्नोपपत्तिः सिद्धेत्यर्थः ननु तृतीये यथोक्त-प्रश्नस्य भगवता निर्णीतत्वान्नात्र प्रश्नप्रतिवचनयोः सावकाशत्वमित्याशंक्य विस्तरेणोक्तमेव सम्बन्धं पुनः संक्षेपतो दर्शयति ज्यायसी चेदिति सांख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेन निर्णी-तत्वान्न पुनः प्रश्नयोग्यत्वमित्यर्थः इतोऽपि न तयोः प्रश्नविषयत्वमित्याह नचेति एवकार-विशेषणाज्ज्ञानसहितसंन्यासस्य सिद्धिसाधनत्वं भगवतोऽभिमतं छित्त्वैनं संशयं योगमाति-ष्ठेति च कर्मयोगस्य विधानात्तस्यापि सिद्धिसाधनत्वमिष्टं ततश्च निर्णीतत्वान्न प्रश्नस्तद्विषयः सिद्धतीत्यर्थः केनाभिप्रायेण तर्हि प्रश्नः स्यादित्याशंक्य ज्ञानरहितसन्न्यासात् कर्मयोगस्य प्रशस्यतरत्वमुच्यतेत्याह ज्ञानरहित इति प्रष्टुरभिप्रायमेवं प्रदर्श्य प्रश्नोपपत्तिमुक्त्वा प्रश्नमुत्था-पयति सन्न्यासमिति तर्हि द्वयं त्वयानुष्ठेयमित्याशंक्य तदशक्यत्वात् प्रशस्यतरस्यानुष्ठा-नार्थं तदिदमिति निश्चित्य वक्तव्यमित्याह यच्छ्रेय इति काम्यानां प्रतिषिद्धानाञ्च कर्मणां परित्यागो मयोच्यते न सर्वेषामित्याशङ्क्य कर्मण्यकर्मेत्यादौ विशेषदर्शनान्मैवमित्याह शास्त्रीयाणामिति अस्तु तर्हि शास्त्रीयाशास्त्रीययोरशेषयोरपि कर्मणोस्त्यागो नेत्याह पुनरिति तर्हि कर्मत्यागस्तद्योगश्चेत्युभयमादर्शितव्यमित्याशङ्क्य विरोधान्मैवमित्यभि-प्रेत्याह अत इति द्वयोरेकेनानुष्ठानायोगस्योक्तत्वात् कर्त्तव्यत्वोक्तेश्च संशयो जायते तमेव-संशयं विशदयति किं कर्मेति प्रशस्यतरबुद्ध्या किमर्थेत्याशङ्क्याह प्रशस्यतरञ्चेति तस्यैवानु-ष्ठेयत्वे प्रशंसावकाशत्वमाह अतश्चेति तदेव प्रशस्यतरं विशिनष्टि यदनुष्ठानादिति तदेकम-न्यतरमस्मै ब्रूहीति सम्बन्धः उभयोरुक्तत्वे सति किमित्येकं वक्तव्यमिति नियुज्यते तत्राह सहेति कर्मतत्त्यागयो र्मिथोविरोधादित्यर्थः ॥ १ ॥

स्वामिकृतटीका।

निवार्य्य संशयं जिष्णोः कर्मसंन्यासयोगयोः जितेन्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् ॥ अज्ञानसम्भूतं संशयं ज्ञानासिना छित्त्वा कर्मयोगमातिष्ठेत्युक्तं तत्र पूर्वापरविरोधं मन्वानो-

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥**

स्वामिकृतटीका ।

ऽर्ज्जुनउवाच संन्यासमिति यस्त्वात्मरतिरेव स्यादित्यादिना सर्वं कर्माखिलं पार्थेत्यादिनाच ज्ञानिनः कर्मसंन्यासं कथयसि ज्ञानासिना संशयं छित्वा योगमातिष्ठेति पुनर्योगञ्च कथयसि न च कर्मसंन्यासः कर्मयोगश्चैकस्यैकदैवाऽसम्भवतो विरुद्धस्वरूपत्वात् तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यच्छ्रेयः सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥

भाषा अनुवाद ।

कर्मयोग औ सन्यासयोग मे अर्ज्जुन की संशय निवारन करिके अब जितेन्द्रियों की मोक्षपरता श्रीभगवान श्रीमद्भगवद्गीता के पञ्चये अध्याय मे कहेंगे अज्ञान से उत्पन्न भई जो संशय तिस को ज्ञान खड्ग से छेदन करिके निष्काम कर्मयोग करो यह जो भगवान ने पुनर्वार कर्म करने को कहा तो पूर्वापर कहे आगू पीछू जो कर्मत्याग औ कर्म करने को भगवतकी आज्ञा तिस को विचारते हुये अर्ज्जुन कहते हैं कि हे कृष्ण २ अध्याय के १७ श्लोक मे जो आपने कहा कि यस्त्वात्मरति रेव स्यात् और ४ अध्याय के ३३ श्लोकादि मे कहा कि सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते यह तत्वज्ञानी को सर्व कर्म का त्यागरूप सन्यास ही कहा और ४ अध्याय के ४२ श्लोक मे तस्मादज्ञान सम्भूतं इत्यादि ज्ञानरूप असि से संशय छेदन करिके उठो और युद्ध करो यह कहि के फेरि कर्मयोग की आज्ञा देते हैं परन्तु ये दोनो परस्पर विरुद्ध हैं अर्थात् कर्म का करना और छोडना यह एक पुरुष को एक ही काल मे असम्भव है सो हे कृष्ण सन्यास अथवा कर्मयोग इन दोनो मे जो करने से हम कृतार्थ होंय सो एक प्रकार निश्चय करिके कहो और कभी सन्यास कभू कर्मयोग ये दोनो बातें कहिकहि कर हमे सन्देह मे बारबार न डालो ॥ १ ॥

## शाङ्करभाष्यम्

स्वाभिप्रायमाचक्षाणो निर्णयाय श्रीभगवानुवाच संन्यास इति संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेन उभौ यद्यपि निःश्रेयसकरौ तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात् केवलात् कर्मयोगो विशिष्यते इति कर्मयोगं स्तौति ॥ २ ॥

### आनन्दगिरिकृतटीका।

प्रश्नमेवमुत्थाप्य प्रतिवचनमुत्थापयति स्वाभिप्रायमिति निर्णयाय तद्द्वारेण परस्य संशयनिवृत्त्यर्थमित्यर्थः एवं प्रश्ने प्रवृत्ते कर्मयोगस्य सौकर्य्यमभिप्रेत्य प्रशस्यतरत्वमभिधित्सुर्भगवान् प्रतिवचनं किमुक्तवानित्याशङ्क्याह सन्न्यास इति उभयोरपि तुल्यत्वशङ्कां वारयति तयोस्त्विति कथं तर्हि ज्ञानस्यैव मोक्षोपायत्वं विवक्ष्यते तत्राह ज्ञानोत्पत्तीति तर्हि द्वयोरपि प्रशस्तत्वमप्रशस्तत्वं वा तुल्यत्वमित्याशङ्क्याह उभाविति ज्ञानसहायस्य कर्मसन्न्यासस्य कर्मयोगापेक्षया विशिष्टत्वविवक्षया विशिनष्टि केवलादिति ॥ २ ॥

### स्वामिकृतटीका।

अत्रोत्तरं श्रीभगवानुवाच सन्न्यास इति अयम्भावः नहि वेदान्तवेद्यात्मतत्त्वज्ञं प्रति कर्मयोगमहं ब्रवीमि यतः पूर्वोक्तेन सन्न्यासेन विरोधः स्यात् अपितु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठेति ब्रवीमि कर्मयोगेन शुद्धचित्तस्यात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन सन्न्यासः पूर्वमुक्तः एवञ्च सत्यङ्गप्रधानयोर्विकल्पायोगात् सन्न्यासः कर्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निःश्रेयसं साधयतः तथापि तयोर्मध्ये कर्मसन्न्यासात् सकाशात् कर्मयोगो विशिष्टो भवतीति ॥ २ ॥

### भाषा अनुवाद।

अर्जुन की इस प्रश्नका उत्तर श्रीभगवान कहते हैं कि हे अर्जुन हम वेदान्ती तत्वज्ञानी के प्रति कर्मयोग करना नहीं कहते हैं क्योंकि तत्त्वज्ञानी को कर्म त्यागका उपदेश देने से विरोध पडेगा परन्तु देह आदि में आत्म अभिमानी तुम को जो बन्धु बध निमित्त शोकमोह से उत्पन्न संशय तिसको स्थूल शरीर औ आत्माका विवेकरूप ज्ञान खड्ग से छेदन के अन-

**ज्ञेयः स नित्यः संन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥**

### शाङ्करभाष्यम् ।

कस्मादित्याह ज्ञेयो ज्ञातव्यः स कर्मयोगी नित्यसंन्यासीति यो न द्वेष्टि किञ्चिन्न कांक्षति दुःखसुखे तत्साधने चैवंविधो यः कर्मणि वर्त्तमानोऽपि स नित्यसंन्यासीति ज्ञातव्य इत्यर्थः निर्द्वन्द्वो द्वन्द्ववर्ज्जितो हि यस्मान्महाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥ ३ ॥

### आनन्दगिरिकृतटीका ।

कर्महि बन्धकारणं प्रसिद्धं तत् कथं निःश्रेयसकरं स्यादिति शङ्कते कस्मादिति अकर्तात्मविज्ञानात् प्रागपि सर्वदाऽसौ सन्न्यासी ज्ञेयो यो रागद्वेषौ क्वचिदपि न करोतीत्याह ज्ञेय इत्यादिना यथा अननुष्ठीयमानानि कर्माणि सन्न्यासिनं न निबध्नन्ति कृतानि च वैराग्येन्द्रियसंयमादीनि फलाभिसन्धिरहितानि तथैवानभिसंहितफलानि नित्यनैमित्तिकानि योगिनमपि न निबध्नन्ति निवर्तयन्ति च सञ्चितं दुरितमित्यभिप्रेत्याह निर्द्वन्द्वो हीति कर्मयोगिनो नित्यसन्न्यासित्वज्ञानमन्यथाज्ञानत्वान्मिथ्याज्ञानमित्याशङ्क्याह एवंविध इति कर्मिणोऽपि रागद्वेषाभावेन सन्न्यासित्वं ज्ञातुमुचितमित्यर्थः रागद्वेषरहितस्यानायासेन बन्धप्रध्वंससिद्धेश्च युक्तं तस्य सन्न्यासित्वमित्याह निर्द्वन्द्व इति ॥ ३ ॥

### भाषा अनुवाद ।

न्तर तत्त्वज्ञान उत्पन्न होनेका उपायरूप जो निष्काम कर्मयोग सोई अनुष्ठान करने को कहा है देखो निःकाम कर्मकरने से शुद्धचित्त होके तत्त्वज्ञान उत्पन्न होनेपर ज्ञानके परिपाकार्थ ज्ञाननिष्ठा का अङ्गभूत कर्मके त्यागको मैने कहा है परन्तु ज्ञानमार्गमे आरूढ पुरुषको कर्मका त्याग और अनारूढ पुरुषको जो भगवदाराधन निःकाम कर्मयोग कहा सोई कहतेहैं कि सन्न्यास औकर्मयोग ये दोनो निःश्रेयस कहे मुक्तिके करने वाले हैं परन्तु दोनोके बीच संन्याससे कर्मयोगही अधिकहै जिसहेतु कर्मयोगसे ज्ञान प्राप्त होके तब संन्यास अर्थात् कर्मका त्याग विहित है और पहिलेही त्याग नहीं कहागयाहै ॥ २ ॥

**सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयो विन्दते फलम् ॥ ४ ॥**

शाङ्करभाष्यम्।

ननु सन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तो नतूभयोर्निःश्रेयसकरत्वमेवेति प्राप्त इदमुच्यते सांख्ययोगाविति सांख्ययोगौ पृथक्विरुद्धभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः पण्डितास्तु ज्ञानिन एकं फलमविरुद्धमिच्छन्ति कथमेकमपि सांख्ययोगयोः सम्यगास्थितः सम्यगनुष्ठितवानित्यर्थः उभयोर्विन्दते फलमुभयोस्तदेव हि निःश्रेयसं फलमतो न फले विरोधोऽस्ति ननु संन्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगशब्दयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति नैष दोषः यद्यप्यर्ज्जुनेन संन्यासं कर्मयोगञ्च केवलमभिप्रेत्य प्रश्नः कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतञ्च विशेषं संयोज्य सब्दान्तरवाच्यतया प्रति-

स्वामिकृतटीका।

कुत इत्यपेक्षायां सन्यासित्वेन कर्मयोगिनं स्तुवंस्तस्य श्रेष्ठत्वं दर्शयति ज्ञेय इति रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि योऽनुतिष्ठति स नित्यं कर्मानुष्ठानकालेऽपि सन्यासीत्येव ज्ञेयः तत्र हेतुः निर्द्वन्द्वो रागद्वेषादि द्वन्द्वशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायसेनैव संसारात् प्रमुच्यते ॥ ३ ॥

भाषा अनुवाद।

जो सन्यास से कर्म्मयोग को विशेष कहा सोई अब कर्म्मयोग की प्रसंशा करते हुये कहते हैं कि जो कर्म्म करता हुआ भी न किसी से वैर करता औ न कुछ चाहता है तथा सुख दुःख हानि लाभ द्वन्द्व भावसे रहित है सोई नित्यसन्यासी है और संसार बन्धन से छूट जाता है अथवा सन्यासी के ऐसे आचरण करता हुआ जो रागद्वेष से रहित कर्म्म करताहै सो नित्यसन्यासी कहे निश्चय सन्यासीहै और सन्यासी तो सन्यासी ही है क्योंकि कर्म्मसन्यास श्रेष्ठ है इहां एक सन्यासी पंन्थपर है दूसरा सन्यासपरक जानो ॥ ३ ॥

## शाङ्करभाष्यम् ।

वचनं ददौ सांख्ययोगाविति तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥ ४ ॥

## आनन्दगिरिकृतटीका ।

यदुक्तं सन्न्यासकर्मयोगयोः निःश्रेयसकरत्वं तदाक्षिपति ननु सन्न्यासेति तयोस्तत्त्वेनोत्तरश्लोकमवतारयति इति प्राप्त इति विवेकिनस्तर्हि कथं वदन्तीत्याकाङ्क्षायामाह एकमिति [illegible] सांख्यं सन्न्यासो योगस्तु कर्मयोगस्तावुभावपि पृथगित्यस्यार्थमाह विरुद्धेति शास्त्रार्थविवेकशून्यत्वं बालत्वं उत्तरार्द्धमवतारयितुम्भूमिकां करोति पण्डितास्त्विति ज्ञानिनो योगिनश्चेति शेषः द्वयोरविरुद्धफलत्वमेव प्रश्नपूर्वकं प्रकटयति कथमित्यादिना एकं साधनमनुष्ठितवतो द्वयोरपि फलं भवतीति विरुद्धमित्याशङ्क्याह उभयोरिति सांख्ययोगयोः सन्न्यासकर्मानुष्ठानयोस्तत्त्वज्ञानद्वारा निःश्रेयसफलत्वान्न विरुद्धफलत्वशङ्का इत्यर्थः सांख्ययोगयोरेकफलत्ववचनं प्रकरणाननुगुणमिति शङ्कते नन्विति अप्रकृतमसिद्धमिति परिहरति नैष दोष इति सन्न्यासं कर्मणामित्यादिना सन्न्यासं कर्मयोगञ्चाङ्गीकृत्य प्रश्ने सन्न्यासः कर्मयोगश्चेत्यादिना तथैव प्रतिवचने च कथं सांख्ययोगयोरेकफलत्वमप्रकृतं न भवतीत्युच्यते तत्राह यद्यपीति प्रतिवचनमपि तदनुरूपमेव भगवता निरूपितमिति विशेषानुपपत्तिरित्याशङ्क्याह भगवांस्त्विति तदपरित्यागेनेत्यत्र तत्पदेन पृष्टौ प्रतिनिर्दिष्टौ कर्मसन्न्यासकर्मयोगावुच्येते सांख्ययोगाविति शब्दान्तरवाच्यतया तयोरेव सन्न्यासकर्मयोगयोरत्यागेन स्वाभिप्रेतञ्च विशेषं संयोज्य भगवान् प्रतिवचनं सन्ददाविति योजना यदुक्तं स्वाभिप्रेतञ्च विशेषं संयोज्येति तदेव व्यक्तीकरोति तावेवेति समबुद्धित्वादीत्यादिशब्देन ज्ञानोपायभूतः शमादिरादीयते प्रकृतयोरेव सन्न्यासकर्मयोगयोरुपादाने फलितमाह अत इति सांख्ययोगावित्यादिश्लोकव्याख्यानसमाप्तिरिति शब्दार्थः ॥ ४ ॥

## स्वामिकृतटीका ।

यस्मादेव सङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयोऽतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानामेवोचितः न विवेकिनामित्याह सांख्ययोगाविति सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं सन्न्यासं लक्षयति सन्न्यासकर्मयोगावेकफलौ सन्तौ पृथक् स्वतन्त्राविति बाला अज्ञा एव प्रवदन्ति न तु पण्डिताः तत्र हेतुः अनयोरेकमपि सम्यगास्थित

**यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति ॥ ५ ॥**

## शाङ्करभाष्यम्

एकस्यापि सम्यगनुष्ठानात् कथमुभयोः फलं विन्दत इत्युच्यते यदिति यत् सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माणि आत्मनः फलमनभिसन्धायानुतिष्ठन्ति ये ते योगिनः तैरपि परमार्थज्ञानसन्यासप्राप्तिद्वारेण गम्यत इत्य-

## स्वामिकृतटीका ।

आश्रितवानुभयोः फलमाप्नोति तथाहि कर्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति सन्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोगस्यापि परम्परया यत् फलं कैवल्यं तद्विन्दतीति न पृथक् फलत्वमनयोरित्यर्थः ॥ ४ ॥

## भाषा अनुवाद ।

जिस हेतु संन्यास औ कर्मयोग दोनो प्रधान अङ्गरूप अवस्था भेद मे पाये जाते हैं इस से इन मे कौन श्रेष्ठ है ऐसा पूछना अज्ञानी को तो उचित हो सकता है पर ज्ञानी को तो नहीं यहाँ कहते हैं कि ज्ञाननिष्ठा जो सांख्य औ उसीका अङ्गरूप संन्यास तथा संन्यास से लक्षित कर्मयोग भी सन्यास है इन दोनो का फल एकही है तो भी दोनो भिन्न हैं यह केवल अज्ञानी कहते हैं और पण्डिततो ऐसा नहीं कहते देखो इन मे एक पक्षका आश्रय लेनेवाला पुरुष दोनो के फल को प्राप्त होता है जैसे लोग निःकाम कर्म करते शुद्धचित्त हो तत्त्वज्ञान प्राप्ति के द्वारा उन दोनोका फल जो कैवल्य सो लाभ करते हैं ऐसेही सब कर्म त्यागरूप संन्यास धारन करने वाले लोग भी परम्परा प्राप्त रूप जो कैवल्य मोक्ष सो पाव ते हैं तो अलवता दोनोका फल पृथक् नहीं है सोई कहा कि सांख्य औ योग को बालक कहे अज्ञानी जन भिन्न कहते और पण्डित नहीं कहते हैं एक मे भी अच्छीतरह संस्थित होके फल दोनो का भी पाव ते हैं इस से दोनो एक हैं ॥ ४ ॥

शाङ्करभाष्यम्।

भिप्रायोऽत एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति फलैकत्वात् सम्यक् पश्यतीत्यर्थः ॥ ५ ॥

आनन्दगिरिकृतटीका।

प्रश्नपूर्वकं श्लोकान्तरमवतारयति एकस्मापीति केचिदेव तयोरेकफलत्वं पश्यन्तीत्याशङ्क्य तेषामेव सम्यग्दर्शित्वं नेतरेषामित्याह एकमिति तिष्ठत्यस्माच्च्यवतु पुनरिति व्युत्पत्तिमाश्रित्याह मोक्षाख्यमिति योगशब्दार्थमाह ज्ञानप्राप्तीति ये हि जिज्ञासवः सर्वाणि कर्माणि भगवत्प्रीत्यर्थत्वेन कुर्वन्ति तेषां फलाभिलाषमकृत्वा ज्ञानप्राप्तौ बुद्धिशुद्धिद्वारेणोपायत्वेनानुतिष्ठन्ति तेऽत्र योगा विवक्ष्यन्ते अच्प्रत्ययस्य मत्वर्थित्वं गृहीत्वोक्तं योगिन इति सर्वोऽपि द्वैतप्रपञ्चो न वस्तुभूतो मायाविलासित्वादात्मत्वविक्रियोऽद्वितीयो वस्तु सच्चिदिति प्रयोजकज्ञानं परमार्थज्ञानं तत्पूर्वकसन्न्यासद्वारेण कर्म्मिभिरपि तदेव स्थानं प्राप्यमित्येकफलत्वं सन्न्यासकर्म्मयोरविरुद्धमित्याह तैरपीति फलकत्वे फलितमाह अत इति ॥ ५ ॥

स्वामिकृतटीका।

एतदेव स्फुटयति यत् सांख्यैरिति सांख्यैर्ज्ञाननिष्ठैः सन्न्यासिभिर्यत् स्थानं मोक्षाख्यं प्रकर्षेण साक्षादवाप्यते योगैरिति अर्श आद्यर्श्ञादित्वान्मत्वर्थीयोऽच्प्रत्ययो द्रष्टव्यस्तेन कर्मयोगिभिरपि तदेव ज्ञानद्वारेण गम्यतेऽवाप्यत इत्यर्थः। अतः सांख्यञ्च योगञ्चैकफलत्वेनैकं यः पश्यति स एव सम्यक् पश्यति ॥ ५ ॥

भाषा अनुवाद।

सांख्य औ योग दोनो से एक के सम्यक अनुष्ठान करने से दोनो का फल किस तरह प्राप्त होता है सह सङ्कापर सांख्य औ योग का एक फलत्व प्रकाश करते हुए कहते हैं कि सांख्य कहे ज्ञाननिष्ठ संन्यासी जो मोक्ष पद पावते हैं सोई पद योगशब्दवाच्य कर्म्मयोगी भी ज्ञानके द्वारा प्राप्त होते हैं इससे एक ही फलके हेतु रूप संन्यास औ कर्मयोग को जो एकरूप देखते हैं तेई सम्यक् दर्शी हैं सोई कहा कि जो पद सांख्य लोग पावते हैं सोई योगी पुरुषों को भी मिलता है और सांख्य योग दोनो को जो एक देखते सो देखते हैं वाकी सूरदास हैं अथवा जो कोई विरले ऐसे देखते हैं तो वे नहीं वैसे देखते हैं ॥ ५ ॥

## संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
## योगयुक्तो मुनिर्ब्रह्म न चिरेणाऽधिगच्छति ॥ ६ ॥

### शाङ्करभाष्यम् ।

एवं तर्हि योगात् सन्न्यास एव विशिष्यते कथं तर्हि एवमुक्तं तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते इति शृणु तत्र कारणं त्वया पृष्टं केवलं कर्मसन्न्यासं कर्मयोगञ्चाभिप्रेत्य तयोरन्यतरः कः श्रेयानिति तदनुरूपं प्रतिवचनं मयोक्तं कर्मसन्न्यासात् कर्मयोगो विशिष्यत इति ज्ञानमनपेक्ष्य ज्ञानापेक्षस्तु सन्न्यासः सांख्यमिति ममाभिप्रेतः परमार्थयोगस्तु स एव यस्तु कर्मयोगो वैदिकः स च तादर्थ्याद्योगः सन्न्यास इति चोपचर्यते कथं तादर्थ्यमित्युच्यते सन्न्यास इति सन्न्यासस्तु पारमार्थिको हे महाबाहो दुःखमाप्तुमयोगतः योगेन विना योगयुक्तो वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण तेन युक्तो मुनिर्मननादीश्वररूपस्य मुनिर्ब्रह्मपरमात्मज्ञाननिष्ठालक्षणत्वात् प्रकृतः सन्न्यासो ब्रह्मोच्यते न्यास इति ब्रह्म ब्रह्म हि पर इति श्रुतेः ब्रह्मपरमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेवाधिगच्छति प्राप्नोत्यथोमयोक्तं कर्मयोगोविशिष्यत इति ॥६॥

### आनन्दगिरिकृतटीका ।

यदि यथोक्तज्ञानपूर्वकसन्न्यासद्वारा कर्मणामपि श्रेयोऽवाप्तिरिष्टा तर्हि सन्न्यासस्यैव श्रेयस्त्वप्राप्तमिति चोदयति एवं तर्हीति सन्न्यासस्य श्रेष्ठत्वे कर्मयोगस्य प्रशस्तत्ववचनमनुचितमित्याह कथं तर्हीति पूर्वोक्तमेवाभिप्रायं स्मारयन् परिहरति शृण्विति कर्मयोगस्य विशिष्टत्ववचनं तत्रेति परामृष्टं तदेव कारणं कथयति त्वयेत्यादिना केवलं विद्यारहितमिति यावत् तयोरन्यतरः कः श्रेयानिति इतिशब्दोऽध्याहर्त्तव्यः त्वदीयं प्रश्नमाहृत्य तदनुगुणं प्रतिवचनं ज्ञानमनपेक्ष्य तद्रहितात् केवलादेव सन्न्यासात् योगस्य विशिष्टत्वमिति यथोक्तमित्याह तदनुरूपमिति ज्ञानापेक्षः सन्न्यासस्तर्हि कीदृगित्याशङ्क्याह ज्ञानेति तर्हि कर्मयोगे कथं योगशब्दः सन्न्यासशब्दो वा प्रयुज्यते तत्राह यस्त्विति तादर्थ्यात् परमार्थज्ञानशेषत्वादिति यावत् तदेव तादर्थ्यं प्रश्नपूर्वकं प्रसादयति कथमित्यादिना कर्मानुष्ठानाभावे बुद्धिशुद्ध्यभावात् परमार्थसन्न्यासस्य सम्यग्ज्ञानात्मनो न प्राप्तिरिति व्यतिरेकमुपन्यस्यान्वयमुपन्यस्यति योगेति परमार्थिकः सम्यग्ज्ञानात्मकः सामग्र्यभावे कार्यप्राप्तिरयुक्तेति मत्वाह दुःखमिति योगयुक्तत्वं चाचष्टे वैदिकेनेति ईश्वरस्वरूपस्य सवि-

# योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
# सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

आनन्दगिरिकृतटीका ।

योगस्येति शेषः ब्रह्मेति व्याख्येयं पदमुपादाय व्याचष्टे प्रकृत इति तत्र ब्रह्मशब्दप्रयोगे हेतुमाह परमात्मेति तत्त्वशब्दो गमकविषयः सन्यासे ब्रह्मशब्दप्रयोगे तैत्तिरीयकश्रुतिं प्रमाणयति न्यास इति कथं सन्यासे हिरण्यगर्भवाची ब्रह्मशब्दः प्रयुज्यते द्वयोरपि परत्वाविशेषादित्याह ब्रह्मेति ब्रह्मशब्दस्य सन्यासविषयत्वे फलितं वाक्यार्थमाह ब्रह्मेत्यादिना नद्यः स्रोतांसीव निम्नप्रवणानि कर्मभिरतितरां परिपक्वकषायस्य करणानि सर्वतो व्यावृत्तानि निरस्ताशेषकूटस्य प्रत्यगात्मान्वेषणप्रवणानि भवन्तीति सुकर्मयोगस्य परमार्थसन्यासप्राप्त्युपायत्वे फलितमाह अत इति ॥ ६ ॥

स्वामिकृतटीका ।

यदि कर्मयोगिनोऽप्यन्ततः संन्यासेनैव ज्ञाननिष्ठा तर्हि आदित एव संन्यासः कर्तुं युक्त इति मन्वानं प्रत्याह संन्यासस्त्विति अयोगतः कर्मयोगं विना संन्यासः प्राप्तुं दुःखं दुःखहेतुरशक्य इत्यर्थः चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया असम्भवात् योगयुक्तस्तु शुद्धचित्ततया मुनिः संन्यासी भूत्वा अचिरेण ब्रह्माधिगच्छति अपरोक्षं जानाति अतश्चित्तशुद्धेः प्राक् कर्मयोग एव संन्यासाद्विशिष्यत इति पूर्वोक्तं सिद्धं तदुक्तं वार्त्तिककृद्भिः प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशया इति ॥ ६ ॥

भाषा अनुवाद ।

जो ऐसा है कि योगी लोगोंको भी शेष मे संन्यासही से ज्ञाननिष्ठा होती औ ज्ञानके द्वारा मोक्षपद पावते तो फेर संन्यास से कर्म्मयोग को अधिक क्यों पीछे कहा उचित है कि प्रथमही से संन्यास करे इस संशययुक्त अर्जुन के प्रति भगवान कहते हैं कि प्रथम कर्म्मयोग के किये विना हे महाबाहो अर्जुन संन्यास का अभ्यास करना अतिकठिन औ दुःख का मूल है क्योंकि चित्त शुद्धभये विना ज्ञान होना असम्भव है परन्तु कर्म्मके अनुष्ठान करने वाले मुनिलोग चित्तशुद्धि के द्वारा संन्यासी हो अर्थात् कर्म्म छोड़कर अचिरात् कहे शीघ्र ही ब्रह्मपद को प्राप्त होते हैं या वे ब्रह्मरूप हो जातेहैं इससे चित्तशुद्धि के पहिलेही निष्काम कर्म्म करना ही संन्यास से श्रेष्ठ होता है तुमारी समझही मे फेर है ॥६॥

शाङ्करभाष्यम् ।

यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन योगेति योगेन युक्तो विशुद्धात्मा विशुद्धचित्तो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्व्वभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्य्यन्तानां भूतानामात्मा भूतआत्मा प्रत्यकचेतनो यस्य स सर्व्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः स तत्रैव वर्त्तमानो लोकसंग्रहाय कर्म्म कुर्व्वन्नपि न लिप्यते योगयुक्तो न कर्म्मभिर्बध्यत इत्यर्थः ॥ ७ ॥

आनन्दगिरिकृतटीका ।

ननु पारिव्राज्यं परिगृह्य श्रवणादिसाधनमसकृदनुतिष्ठतो लब्धसम्यग्बोधस्यापि यथापूर्वं कर्माण्युपलभन्ते तानि च बन्धहेतूनि भविष्यन्तीत्याशङ्क्य श्लोकान्तरमवतारयति यदा पुनरिति सम्यग्दर्शनप्राप्त्युपायत्वेन यदा पुनरयं पुरुषो योगयुक्तत्वादिविशेषणः सम्यग्दर्शी सम्पद्यते तदा प्रातिभासिकीं प्रवृत्तिमनुसृत्य कुर्वन्नपि न लिप्यत इति योजना योगेन नित्यनैमित्तिककर्मानुष्ठानेनेति यावत् आदौ नित्याद्यनुष्ठानवतो रजस्तमोमलाभ्याम-कलुषितं सत्त्वं सिध्यतीत्याह विशुद्धेति बुद्धिशुद्धौ कार्य्यकारणसङ्घातस्यापि स्वाधीनत्वं भवतीत्याह विजितेति तस्य यथोक्तविशेषणवतो जायते सम्यग्दर्शित्वमित्याह सर्वभूतेति सम्यग्दर्शिनस्तर्हि कर्मानुष्ठानं कुतस्त्यं तदनुष्ठाने वा कुतोबन्धविश्लेषसिद्धिरित्याशङ्क्याह स तत्रेति सम्यग्दर्शने सम्यगर्थः ॥ ७ ॥

स्वामिकृतटीका ।

कर्मयोगादि क्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवेत्याशंक्याह योगयुक्त इति योगेन युक्तः अतएव विशुद्ध आत्मा चित्तं यस्य अत एव विजित आत्मा शरीरं येन अतएव विजितानीन्द्रियाणि येन ततश्च सर्वेषां भूतानामात्मभूत आत्मा यस्य स लोकसंग्रहार्थं स्वाभाविकं वा कर्म कुर्वन्नपि न लिप्यते ॥ ७ ॥

भाषा अनुवाद ।

जो ऐसा कहो कि कर्म्मके अनुष्ठान से चित्तशुद्धि आदि परम्परा क्रमसे क्रम से ब्रह्मज्ञान होनेके अनन्तर इस ज्ञानीका पूर्वकृत कर्म्म आत्मबन्धक क्यों न होय इस आशङ्कापर कहते हैं कि जो पुरुष योगयुक्त अर्थात् निष्काम कर्म्म योगरूप भक्ति अनुष्ठान करता है और जिसने

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८॥

शाङ्करभाष्यम् ।

नचासौ परमार्थतः करोतीत्येतन्नैव किञ्चित् करोमीति युक्तः समाहितः सन् मन्येत चिन्तयेत तत्त्ववित्तत्त्वमात्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः कदा कथम्वा तत्त्वमवधारयन् मन्येतेत्युच्यते पश्यन्निति मन्येतेति पूर्वेण सम्बन्धः ॥ ८ ॥

आनन्दगिरिकृतटीका ।

कर्माण्यङ्गीकृत्य तैरस्य विदुषो बन्धो नास्तीत्युक्तमिदानीं वस्तुतस्तस्य कर्माण्येव न सन्तीत्याह नचेति लोकदृष्ट्या विदुषोऽपि कर्माणि सन्तीत्याशङ्क्य स्वदृष्ट्या तदभावमभिप्रेत्याह नैवेति सार्द्धं समनन्तरश्लोकमाकाङ्क्षापूर्वकमुत्थापयति कदेत्यादिना चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्तच्चेष्टानिर्वर्त्तनावस्थायां तत्तदर्थेषु सर्वा प्रवृत्तिरिन्द्रियाणामेवेत्यनुसन्दधानो नैव किञ्चित् करोमीति विद्वान् प्रतिपद्यते इत्यर्थः ॥ ८ ॥

स्वामिकृतटीका ।

कर्म कुर्वन्नपि न लिप्यत इत्येतद्विरुद्धमित्याशंक्य कर्त्तृत्वाभिमानाभावान्नेत्याह नैवेति द्वाभ्यां कर्मयोगेन युक्तः क्रमेण तत्त्ववित् भूत्वा दर्शनश्रवणादीनि कुर्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् बुद्ध्या निश्चिन्वन् किञ्चिदप्यहं न करोमीति मन्यते तत्र दर्शनश्रवणस्पर्शनाघ्राणाशनानि चक्षुरादिज्ञानेन्द्रियव्यापारा गतिः पादयोः स्वापो बुद्धेः श्वासः प्राणस्य प्रलपनं वागिन्द्रियस्य विसर्गः पायूपस्थयोः ग्रहणं हस्तयोः उन्मेषनिमेषणे

भाषा अनुवाद ।

चित्त तथा इन्द्रियगण अपने वशीभूत कर राखा है और जो अपने आत्माको शरीरधारी दूसरे प्राणियोंके आत्मासे भिन्नबुद्धि न करके सर्व भूतमे टिका जो चेतनरूप आत्मा तिसको अद्वैत कहे एकरूप विचार कर देखतेहैं इसी से वे लोग शुद्धचित्त भिक्षाके अर्थ अथवा स्वभाव आधीन शौच भिक्षा आदि जो सब कर्मोंको करते हुए भी उन कर्मों मे लिप्त नहीं होते और न कर्म्म उनको लगते हैं ॥ ७ ॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन्॥ ९॥

शाङ्करभाष्यम्।

यस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव पश्यतः सम्यग्दर्शिनस्तस्य सर्वकर्मसंन्यास एवाधिकारः कर्मणोऽभावदर्शनात्। नहि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय सप्रवर्त्तते॥ ९॥

आनन्दगिरिकृतटीका।

यथोक्तस्य विदुषो विध्यभावेऽपि विद्यासामर्थ्यात् प्रतिपत्तिकर्मभूतं कर्मसंन्यासं फलात्मकमभिलपति यस्येति व्यस्यैव विदुषोऽपि कर्मसु प्रवृत्तिसम्भवात् कुतः संन्यासेऽधिकारः स्यादित्याशङ्क्याह नहीति॥ ९॥

स्वामिकृतटीका।

कूर्माणप्राणस्येति विवेकः एतानि सर्वाणि कुर्वन्नपि अनभिमानात् ब्रह्मवित् न लिप्यते तथाच पराम‍र्षं सूत्रं तदधिगमे उत्तरपूर्वाद्ययोरश्लेषविनाशौ तद्व्यपदेशादिति॥ ८॥९॥

भाषा अनुवाद।

और जो ऐसी शङ्का करो कि कर्म्म अनुष्ठान करके भी उस मे लिप्त कहे आशक्त न होना यह अत्यन्त असम्भव है लिप्त होहीगा इसपर दो श्लोक मे कहते हैं कि कर्त्तृत्व अभिमान रहित होना असम्भव नहीं है क्योंकि निष्काम कर्म्मयोग रूप भक्ति अनुष्ठान करने वाले मनुष्य क्रमसे तत्त्वज्ञानी होके दर्शन आदि इन्द्रियव्यापार करते भी इन्द्रिय सब अपना अपना काम करती हैं और हम कुछ भी नहीं करते ऐसी बुद्धि उनकी निश्चय बनी रहती है यथा दर्शन श्रवण पर्श घ्राण भोजन ये ज्ञान इन्द्रियोंके व्यापार और गमन वचन विसृजन कहे विष्ठामूत्रका त्याग जो कर्म्म इन्द्रीयोंके काम और ग्रहण जो कर कहे हाथका व्यापार और स्वप्न बुद्धिव्यापार निद्रा होना श्वसन् प्राणवायुका व्यापार औ उन्मेष निमेष कहे पलक लगना औ खुलना जो कूर्म्म वायुमे होना है यह सब इन्द्रिय

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

शाङ्करभाष्यम्।

यस्तु पुनरतत्त्ववित् प्रवृत्तश्च कर्मयोगे ब्रह्मणीति ब्रह्मणीश्वरे आधाय निक्षिप्य तदर्थं करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि लिप्यते न स पापेन संबध्यते पद्मपत्रमिवाम्भसोदकेन ॥ १० ॥

आनन्दगिरिकृतटीका।

तर्हि विद्यावानिवाविद्यावानपि कर्मणि न प्रवर्त्तेत पापोऽपहतिसम्भवादित्याशङ्क्याह यस्त्विति यथा भृत्यः स्वाम्यर्थं कर्माणि करोति न स्वफलमपेक्षते तथैव यो विद्वान् मोक्षेऽपि सङ्गं त्यक्त्वा भगवदर्थमेव सर्वाणि कर्माणि करोति न स्वकर्मणा बध्यते नहि पद्मपत्रमम्भसा सम्बध्यते तद्वदित्यर्थः ॥ १० ॥

स्वामिकृतटीका।

तर्हि यस्य करोमीत्यभिमानोऽस्ति तस्याकर्मलेपो दुर्वारः तथा अविशुद्धचित्तत्वात् संन्यासोऽपि नास्तीति महत् सङ्कटमापन्नमित्याशंक्याह ब्रह्मणीति ब्रह्मण्याधाय परमेश्वरे समर्प्य तत्फले च सङ्गं त्यक्त्वा यः कर्माणि करोति असौ पापेन बन्धहेतुतया पापिष्ठेन पुण्यपापात्मकेन कर्मणा न लिप्यते यथा पद्मपत्रमम्भसि स्थितमपि तेनाम्भसा न लिप्यते तद्वत् ॥ १० ॥

भाषा अनुवाद।

आदिका कर्म हैं और हम द्रष्टा साक्षीरूप हैं यह कुछ हम नहीं करते ऐसे ही ज्ञानी पुरुष इन कर्मों मे अभिमान शून्य लिप्त नहीं होते हैं सोई कहा दो श्लोक से कि इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्ते इति धारयन् यहांतक ८ आठ नव इन दोनो श्लोकका अर्थ एकही साथ है ॥ ८ ॥ ९ ॥

और जो मनुष्य हम कर्म करते हैं ऐसा अभिमान रखते हैं तेई कर्ममे लिप्त होते और उन्हीं को कर्मबन्ध होता है फेरि चित्तकी अशुद्धता से उनको संन्यास भी दुर्घट है इससे उनको सब तरह सङ्कट है

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥ ११॥

शाङ्करभाष्यम्।

केवलं सत्त्वशुद्धिमात्रफलमेव तस्यैव कर्मणः स्यात् यस्मात् कायेनेति कायेन देहेन मनसा बुद्ध्या च केवलैरिन्द्रियैर्ममत्ववर्जितैरपि ईश्वरायैव कर्म करोमीति न फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि केवलशब्दः कायादिभिरपि प्रत्येकं सम्बध्यते सर्वव्यापारेषु ममतावर्ज्जनाय योगिनः कर्मिणः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्त्वशुद्धय इत्यर्थः॥ ११॥

आनन्दगिरिकृतटीका।

अविदुषस्तर्हि कृतेन कर्मणा किं स्यादित्याशङ्क्याह केवलमिति अवश्यमीश्वरार्पणबुद्ध्यानुष्ठितं कर्मबुद्धिशुद्धिफलमित्यत्रैव हेतुमाह यस्मादिति केवलशब्दस्य प्रत्येकं सम्बन्धे प्रयोजनमाह सर्वव्यापारेष्विति॥ ११॥

स्वामिकृतटीका।

बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति कायेनेति कायेन स्नानादि मनसा ध्यानादि बुद्ध्या तत्त्वनिश्चयादि केवलैः कर्माभिनिवेशरहितैरिन्द्रियैः श्रवणकीर्त्तनादि लक्षणं कर्मफलसङ्गं त्यक्त्वा चित्तशुद्धये कर्म योगिनः कुर्वन्ति॥ ११॥

भाषा अनुवाद।

जो ऐसी शङ्का करो तो यह उत्तर सुनो कि अन्तर्यामी ईश्वर की प्रेरणा से हम सब कर्म्म करते हैं ऐसे विचार करिके सकल कर्म ईश्वर मे समर्पण करके औ कर्मकाल मे आशक्ति रहित कर्म करते हैं तो उनको कर्म प्रतिबन्धक नहीं होते और वे कर्म से लिप्त नहीं हैं जैसे पद्मपत्र जलमे निरन्तर रहते भी जलसे अलग है सोई कहा कि ब्रह्ममे कर्म अर्पण करि सङ्ग कहे आशक्ति छोड़िके जो कर्म करै है सो पापसे नहीं लिप्त होता जैसे कमलका पत्ता जलमे रहते भी जलसे भिन्न है॥ १०॥

निष्काम कर्मबन्धक नहीं हैं इस कहने के बाद अब भगवान् उत्तम मनुष्योंकी कर्मके द्वारा मुक्ति दिखावते हैं कि शरीरसे स्नानादि मानस ध्यानादि

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीं ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

शाङ्करभाष्यम् ।

तस्मात्त्वमेव तवाधिकार इति कुरु कर्मैव यस्माच्च युक्त इति युक्त ईश्वराय कर्माणि करोमि न मम फलायेति एवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायाम्भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसन्न्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः कामस्य कारः कामकारस्तेन कामकारेण कामप्रेरिततयेत्यर्थः मम लाभायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यते अतस्त्वं युक्तो भव इत्यर्थः ॥ १२ ॥

आनन्दगिरिकृतटीका ।

कर्मणश्चित्तशुद्धिफलत्वे तादर्थ्येन कर्मानुष्ठानमेव तव कर्त्तव्यमिति यस्मादित्यस्यापेक्षितं वदन् फलितमाह तस्मादिति युक्तः सन् फलं त्यक्त्वा कर्म कुर्वन् मोक्षाख्यां शान्तिं यस्मादाप्नोति तस्मात्त्वया सङ्गं त्यक्त्वा कर्म कर्त्तव्यमिति योजना विपक्षे दोषमाह अयुक्त इति युक्तत्वं व्याकरोति ईश्वरायेति फलं परित्यज्य कर्म कुर्वन्निति शेषः नैष्ठिकी शान्तिरित्येतदेव विशदयति द्वितीयमर्द्धं विभजते यस्त्विति असाधारणे दोषादर्जुनस्य नियोगं दर्शयति अतस्त्वमिति ॥ १२ ॥

स्वामिकृतटीका ।

ननु कथं तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्था अत आह युक्त इति युक्तः परमेश्वरैकनिष्ठः सन् कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन्नात्यन्तिकीं शान्तिं मोक्षं

**भाषा अनुवाद ।**

जो बुद्धि से तत्त्वका निश्चयादि तथा कर्म मे आशक्ति रहित और फलाभिलाष शून्य होकर इन्द्रियोंके द्वारा श्रवण कीर्त्तन आदि चित्तशुद्धि के अर्थ कर्मके अनुष्ठान करने वाले योगी कर्म करते है सोई कहा कि काय मन बुद्धि से और केवल इन्द्रियोंसे आत्म शुद्धिके हेतु सङ्ग छोड़ि कर योगीजन कर्म करते है ॥ ११ ॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥**

## शाङ्करभाष्यम् ।

यस्तु परमार्थदर्शी स सर्वेति सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धञ्च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या कर्मादौ अकर्मसन्दर्शनेन संत्यज्येत्यर्थः आस्ते तिष्ठति सुखं त्यक्तवान् मनःकायचेष्टोपरतिः निरायासः प्रसन्नचित्तः आत्मनोऽन्यत्र निवृत्त-वाह्य सर्वप्रयोजनः सुखमास्ते इत्युच्यते वशी जितेन्द्रिय इत्यर्थः क्वास्ते इत्याह नवद्वारे पुरे सप्तशीर्षण्यात्मन उपलब्धिद्वाराण्यर्वाग् द्वय मूत्र-

## आनन्दगिरिकृतटीका ।

प्राप्नोति अयुक्तस्तु वहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति ॥ १२ ॥

तर्हि फले सक्तिं त्यक्त्वा सर्वैरपि कर्म कर्त्तव्यमिति कर्मसन्न्यासस्य निरवकाशत्व-मित्याशङ्क्याविदुषः सकाशाद्विदुषो विशेषं दर्शयति यस्त्विति सर्वकर्मपरित्यागे प्राप्तं मरणं व्यावर्त्तयति आस्त इति इत्तिं लभमानोऽपि शरीरतापेनाध्यात्मिकादिना तप्यमानस्तिष्ठ-तीति चेन्नेत्याह सुखमिति कार्य्यकरणसङ्घातपारवश्यं पर्युदस्यति वशीति आसनस्या-पेक्षितमधिकरणं निर्दिशति नवेति देहसम्बन्धाभिमानाभासवत्त्वमाह देहीति मनसा सर्वकर्मसन्न्यासेऽपि लोकसंग्रहार्थं वहिः सर्वं कर्म कर्त्तव्यमिति प्राप्तं प्रत्याह नैवेति तान्येव सर्वाणि कर्माणि परित्याज्यानि विशिनष्टि नित्यमिति तेषां परित्यागे हेतुमाह

## भाषा अनुवाद ।

जो ऐसी शङ्का करो कि वही एक कर्मसे कोइ तो मुक्त औ कोई को बन्ध यह कैसी व्यवस्था है तो इसका निवारण करते हुये कहते हैं कि योगी कहे कर्मकारी पुरुष ईश्वर मे एक निष्ठ हो कर्मफल को त्यागकर कर्म अनुष्ठान करिके अत्यन्त शान्तिस्वरूप जो मुक्ति तिसको प्राप्त होते हैं परन्तु अयुक्त कहे कामनाविशिष्ट अर्थात् कामनासे युक्त कर्मफलासक्त वहिर्मुख लोग काम्य कर्म से अवश्य ही बद्ध होते हैं युक्त कहे ईश्वरार्थ कर्म करनेवाले ॥ १२ ॥

## शाङ्करभाष्यम् ।

पुरीषविसर्गार्थैः तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वं कर्मसंन्यस्यास्ते इति किं विशेषणेन सर्वो हि देही संन्यस्य संन्यासीव देह एवास्ते तत्रानर्थकं विशेषणमुच्यते यस्त्वज्ञो देही देहेन्द्रियसङ्घातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वास्ते इति मन्यते नहि देहमात्रात्मदर्शिनो देह इव देह आस इति प्रत्ययः सम्भवति देहादिसङ्घातव्यतिरिक्तात्मदर्शिनस्तु देह आस इयि प्रत्यय उपपद्यते परकर्मणाञ्च परस्मिन्नात्मन्यविद्ययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते उत्पन्नविवेकविज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वाद् यद्यपि कार्य्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि

### आनन्दगिरिकृतटीका ।

तानीति यदुक्तं सुखमास्त इति तदुपपादयति त्यक्त्वेति जितेन्द्रियत्वं कायवशीकारस्योपलक्षणं द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके वागेकेति सप्तशीर्षण्यानि शिरोगतानि शब्दाद्युपलब्धिद्वाराणि तथापि कथं नवद्वारत्वमधोगताभ्यां पायूपस्थाभ्यां सहेत्याह अर्वागिति शरीरस्य पुरसाम्यं स्वामिना पौरैश्चाधिष्ठितत्वेन दर्शयति आत्मेत्यादिना यद्यपि देहे जीवनत्वाद्देहसम्बन्धाभिमानाभासमानवत्तिष्ठते तथापि प्रवासीव परगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन् व्यामोहादिरहितश्च तिष्ठतीति मत्वाह तस्मिन्निति विशेषणमाक्षिपति किमिति तदनुपपत्तिमेवादर्शयति सर्वोहीति सर्व साधारणे देहावस्थाने सन्न्यस्य देहेतिष्ठति विद्वानिति विशेषणमकिञ्चित्करमिति फलितमाह तत्रेति विशेषणफलं दर्शयन्नुत्तरमाह उच्यत इति किं अविवेकिनं प्रति विशेषणानर्थक्यं चोद्यते किंवा विवेकिनं प्रतीति विकल्पमाद्यमङ्गीकरोति यस्त्विति अज्ञत्वदेहित्वे हेतुः तदेव देहित्वं स्फुटयति देहेति सङ्घातात्मदर्शिनोऽपि देहे स्थितिप्रतिभासः स्यादिति चेन्नेत्याह नहीति द्वितीयं दूषयति देहादीति गेहादिषु देहस्यावस्थानेनात्मावस्थान भ्रमव्यावृत्त्यर्थं देहे विद्वानास्त इति विशेषणमुपपद्यते विवेकवतो देहेऽवस्थानप्रतिभाससम्भावादित्यर्थः ननु विवेकिनो देहावस्थानप्रतिभानेऽपि वाङ्मनोदेहव्यापारात्मना कर्मणां तस्मिन् प्रसङ्गाभावात् तत्त्यागेन कुतस्तस्य देहेऽवस्थानमुच्यते तत्राह परकर्मणाञ्चेति ननु विवेकिनो

शाङ्करभाष्यम् ।

सन्न्यस्यास्ते इत्युक्तं तथाप्यात्मसमवायि तु कर्त्तृत्वं कारयितृत्वञ्च स्यादित्याशङ्क्याह नैव कुर्वन् स्वयं न च कार्य्यकरणानि कारयन् क्रियासु प्रवर्त्तयन् किं यत् तत् कर्तृत्वं कारयितृत्वञ्च देहिनः स्वात्मसमवायि सत् सन्न्यासान्न संभवति यथा गच्छतो गतिः गमनव्यापारपरित्यागेन स्यात्तद्वत् किंवा स्वत एवात्मनो नास्तीत्यत्रोच्यते नास्यात्मनः स्वतः कर्त्तृत्वं कारयितृत्वञ्चोक्तं ह्यविकार्य्योयमुच्यते शरीरस्थोपि कौन्तेय न करोति न लिप्यत इति ध्यायतीव लेलायतीवेति श्रुतेः ॥ १३ ॥

आनन्दगिरिकृतटीका ।

दिगाद्यनवच्छिन्नबाह्याभ्यन्तराविक्रियब्रह्मात्मतां मन्यमानस्य कुतो देहेऽवस्थानमास्थातुं शक्यते तत्राह उत्पन्नेति तत्र हेतुमाह प्रारब्धेति प्रारब्धफलं धर्माधर्मात्मकं कर्म तस्योपभुक्तस्य शेषादनुपभुक्ताद्देहादिसंस्कारोऽनुवर्त्तते तदनुवृत्त्या च तत्रैव देहे विशेषविज्ञानमवस्थानविषयमुपपद्यते अतो विवेकवतः सन्न्यासिनो देहेऽवस्थानव्यपदेशः सम्भवतीत्यर्थः अविद्वत्प्रत्ययापेक्षया विशेषणासम्भवेपि विद्वत्प्रत्ययापेक्षया विशेषणमर्थवदित्युपसंहरति देह एवेति देहे स्ववस्थान वियोविद्वत्प्रत्ययस्तद्विषयश्चाविद्वत्प्रत्ययस्तयोरेवं भेदे विद्वत्प्रत्ययापेक्षा विशेषणमर्थवदित्युपसंहरन्नेव हेतुं विशदयति • विद्वदिति आरोपितकर्त्तृत्वाद्यभावेऽपि स्वगतकर्त्तृत्वादि दुर्वारमित्याशङ्कामनूद्य दूषयति यद्यपीत्यादिना क्रियासु प्रवर्त्तयन्नास्त इति पूर्वेण सम्बन्धः पूर्वस्यापि पश्चादेवमेव सम्बन्धः कर्त्तृत्वं कारयितृत्वञ्चात्मनो नेत्यत्र विचारयति किमिति यत् कर्त्तृत्वं कारयितृत्वञ्च तत् किं देहिनः स्वात्मसमवायि सदेव सन्न्यासान्न भवतीत्युच्यते यथा गच्छतो देवदत्तस्य स्वगतैव गतिः तत् स्थित्या त्यागान्न भवति अथवा स्वारस्येन कर्त्तृत्वं कारयितृत्वञ्चात्मनो नास्तीति वक्तव्यमाद्ये सक्रियत्वं द्वितीये कूटस्थत्वमित्यर्थः द्वितीयं पक्षमाश्रित्योत्तरमाह अत्रेति उक्तोऽर्थं वाक्योपक्रममनुकूलयति उक्तं हीति तत्रैव वाक्यशेषमपि सम्पादयति शरीरस्थोऽपीति स्मृत्युक्तेऽर्थे श्रुतिमपि दर्शयति ध्यायतीवेति उपाधिगतैव सर्वाविक्रियानात्मनि स्वतोऽस्तीत्यर्थः ॥ १३ ॥

स्वामिकृतटीका ।

एवं तावत् चित्तशुद्धिशून्यस्य सन्न्यासात् कर्मयोगो विशिष्यत इत्येतत् प्रपञ्चितं इदानीं शुद्धचित्तस्य सन्न्यासः श्रेष्ठ इत्याह सर्वकर्माणीति वशी जितचित्तः सर्वकर्माणि विक्षेपकाणि मनसा विवेकयुक्तेन सन्न्यस्य सुखं यथा भवत्येवं ज्ञाननिष्ठः सन्नास्ते क्वास्त इत्यत आह नवद्वारे नेत्रे नासिके कर्णौ मुखञ्चेति सप्तशिरोगतानि अधोगते द्वेपायूपस्थ-

## न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
## न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

### शाङ्करभाष्यम् ।

किञ्च न कर्तृत्वमिति न कर्तृत्वं स्वतः कुर्विति नापि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा नापि रथादिकृतवतस्तत्फलेनसंयोगं न कर्मफलसंयोगं यदि किञ्चिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन् कारयंश्च प्रवर्तत इत्युच्यते स्वभा-

### आनन्दगिरिकृतटीका ।

आत्मनो यदुक्तं कारयितृत्वं नास्तीति तत् प्रपञ्चयति नेत्यादिना यद्यपि लोकस्य कर्तृत्वं न सृजतीति नास्तीति कारयितृत्वं तथापि रथशकटादीनि कुर्वन् भवति कर्तेत्याशङ्क्याह न कर्माणीति तथापि भोजयितृत्वेन विक्रियावत्त्वं दुष्परिहारमित्याशङ्क्याह

### स्वामिकृतटीका ।

कुपे इत्येवं नवद्वाराणि यस्मिन् पुरे पुरवदहङ्कारशून्ये देहे देही अवतिष्ठते अहङ्काराभावादेव स्वयं तेन देहेन नैव कुर्वन् मम काराभावात् न कारयन्निति अशुद्धचित्ताद्व्यावृत्तिरुक्ता अशुद्धचित्तो हि सन्न्यस्य पुनः करोति कारयति च नत्वयं तथा अतः सुखमास्त इत्यर्थः ॥ १३ ॥

### भाषा अनुवाद ।

इन सब बातों से अशुद्धचित्त मनुष्य को सन्न्यास की अपेक्षा निष्काम कर्म करनाही श्रेय है यह विस्तार पूर्वक कहि कर अब शुद्धचित्त पुरुष को सन्न्यास ही श्रेष्ठ है यह कहते हैं कि जितचित्त विवेक युक्त पुरुष बुद्धि के द्वारा विक्षेप कारक सब कर्म छाड़ि जैसे सुख मे रहते तैसे ज्ञाननिष्ठ युक्तहोके भी सुखमे रहते हैं जो कहो कि कहां रहते तो कहते हैं कि नवद्वार पुर जो अहङ्कार शून्य शरीर तिस मे आत्मस्वरूप से स्थित रहते हैं और अहङ्कार के अभाव से आप शारीरक कर्म नहीं करते और ममता के अभाव से दूसरे सें भी वे कोई काम नहीं करावते हैं यह शुद्ध औ अशुद्धचित्त मनुष्योंका भेद भगवानने कहा ॥ १३ ॥

## शाङ्करभाष्यम्।

वस्तु स्वोभावः स्वभावोऽविद्यालक्षणा प्रकृतिः माया प्रवर्त्तते दैवीहीत्या-दीति वक्ष्यमाणा ॥ १४ ॥

### आनन्दगिरिकृतटीका।

न कर्मेति कस्य तर्हि प्रवर्त्तकत्वं तदाह स्वभावस्त्विति कुर्विति कर्त्तृत्वं लोकस्य न सृज-त्यात्मेति सम्बन्धः रथादीनां कर्मत्वं साधयति ईप्सिततेति आत्मनो देहादिस्वामित्वेन प्रभुत्वं रथादिकृतवतो लोकस्य रथादिफलेन सम्बन्धमपि न सृजत्यात्मेत्यात्मनो भोजयि-तृत्वं प्रत्याचष्टे नापीति चतुर्थपादं शङ्कोत्तरत्वेनावतारयति यहीत्यादिना स्वभावया-दस्तर्हीत्याशङ्क्य व्याकरोति अविद्यालक्षणेति प्रकृतेर्विद्यावत्वं व्युदसितुं मायेत्युक्तं सा च सप्तमे वक्ष्यते तेन प्रधानविलक्षणेत्याह दैवी हीति ॥ १४ ॥

### स्वामिकृतटीका।

नतु एष एव साधु कर्म कारयतितं यमेभ्यो लोकेभ्य उन्निनीषते एषएवासाधुकर्मकारयति तं यमेभ्योलोकेभ्य अधोनिनीषत इत्यादि श्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्त्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेत् ईश्वरेणैव ज्ञानमार्गेप्रयुज्यमानः शुभान्यशुभानिच त्यक्ष्यतीति चेत् एवं सति वैषम्यनैर्घृण्याभ्यामीश्वरस्यापि प्रयोजककर्त्तत्वात् पुण्यपापसम्बन्धः स्यादितिशङ्काह न कर्तृत्वमिति द्वाभ्यां प्रभुरीश्वरो जीवलोकस्य कर्त्तृत्वा-दिकं न सृजति किन्तु जीवस्य स्वभावोऽविद्यैव कर्त्तृत्वादिरूपेण प्रवर्त्तते अनाद्यविद्याकाम-वशात् प्रवृत्तिस्वभावमेव लोकमीश्वरः कर्मसु नियुङ्क्ते नतु स्वयमेव कर्त्तृत्वादिकमुत्पादयती-त्यर्थः ॥ १४ ॥

## भाषा अनुवाद।

ईश्वर जिसको इस लोकसे श्रेष्ठ लोकको लेजाने की इच्छाकरते हैं उससे सत्कर्म करावते और जिसे अधोलोकले जानेकी इच्छाकरते उससे कुकर्म करवावते हैं यह श्रुतिमे कहाहै तो परमेश्वर की प्रेरणासे परा-धीन जो मनुष्य सो कैसे वे कर्मत्याग करने शके एक दूसरे जो परमेश्वर हीकी प्रेरणासे शुभ अशुभ कर्म मे लोगप्रवृत्त होते हैं तो ईश्वर भी विषम-दृष्टि औ निर्दय है फिरि कर्मोंका करवावनेवाला भी वही है तो उसको भी पुण्य पाप सम्बन्ध क्यों न होय जो यह शङ्का करो तो इसका सिद्धान्त यह दो श्लोकसे कहते हैं कि प्रभु जो ईश्वर सो मनुष्योंके कर्तत्व अथवा

**नादत्ते कस्यचित् पापं नचैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

## शाङ्करभाष्यम् ।

परमार्थतस्तु नेति नादत्ते नच गृह्णाति भक्तस्यापि कस्यचित् पापं नचैवादत्ते सुकृतं विभुः भक्तैः प्रयुक्तं विभुः किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकञ्च सुकृतं प्रयुज्यत इत्याह अज्ञानेनावृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥ १५ ॥

### आनन्दगिरिकृतटीका ।

कर्तृत्वभोक्तृत्वैश्वर्य्याद्यात्मनोऽविद्याकृतामीत्युक्तमिदानीमीश्वरे सन्न्यस्तसकलव्यापारस्य तदेकशरणस्य दुरितं सुकृतं वा तदनुग्रहार्थं भगवानादत्ते मदेकशरणो मर्त्यात्वयं कर्म कुर्वाणो दुष्कृताद्यनुमोदनेनानुग्राह्यो ममेति मन्नयभाक्त्वादित्याशङ्क्य सोऽपि परमार्थतो नास्यास्तविक्रियत्वादित्याह परमार्थतस्त्विति कथं तर्हि भक्तानामनुग्राह्यत्वमीश्वरस्यादृष्टहेतुत्वमिति प्रसिद्धिस्तत्राह अज्ञानेनेति पूर्वार्द्धगतान्यक्षराणि व्याख्याय आकाङ्क्षापूर्वकमुत्तरार्द्धमवतार्य्य व्याचष्टे किमर्थमित्यादिना ॥ १५ ॥

### स्वामिकृतटीका ।

कोऽपि सन् प्रभुः कस्यचित् पापं सुकृतञ्च नैवादत्ते न भजते तत्र हेतुः विभुः परिपूर्णः आप्तकाम इत्यर्थः यदि हि स्वार्थकामनया कारयेत्तर्हि तथा स्यात् नत्वेतदस्ति आप्तकामस्यैवाचिन्त्यनिजमायया तत्तत् पूर्वकर्मानुसारेण प्रवर्त्तकत्वात् ननु भक्ताननुगृह्ण-

## भाषा अनुवाद ।

कर्म सृजन नही किया किन्तु मनुष्योंको पूर्वकर्म से संस्काररूप जो अज्ञान सोइ कर्त्तृत्वादिमे प्रवृत्त करै है इसीसे अपनी अनादि अविद्या से कामनाके वश हो प्रवृत्तियुक्त पुरुषको ईश्वरभी कर्ममे नियुक्त करते हैं और ईश्वर कुछ आपसे उसको प्रवृत्ति नहीं देते हैं सोई कहा है कि कर्त्तृत्व औ कर्म तथा फलयोग प्रभुने नहीं किया लोग पूर्वसंस्काररूप स्वभाव अर्थात् मायासे कर्मादि मे प्रवृत्त हैं ॥ १४ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशित मात्मनः ।**
**तेषामादित्यवद्‌ ज्ञानं प्रकाशयति तत्परं ॥ १६ ॥**

## शाङ्करभाष्यम् ।

ज्ञानेन इति ज्ञानेन तु येन अज्ञानेनावृत्त्या मुह्यन्ति जन्तवः तदज्ञानं येषां जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति तेषां जन्तूनामादित्यवत् यथाऽदित्यः समस्तं रूपजातं अवभासयति तद्वत् ज्ञानं ज्ञेयञ्च वस्तु सर्वं प्रकाशयति तत् परमार्थतत्त्वं ॥ १६ ॥

### आनन्दगिरिकृतटीका।

तर्हि सर्वेषामनाद्यज्ञानत्वात् व्यामोहभावाच्च कुतः संसारनिवृत्तिरिति तत्राह ज्ञानेनेति सर्वमिति पूर्वत्वमुच्यते ज्ञेयस्यैव वस्तुनस्तत्परमिति विशेषणं तद्व्याचष्टे परमार्थतत्त्वमिति ॥ १६ ॥

### स्वामिकृतटीका ।

ततोऽभक्तान्निग्रहकृतस्य वैषम्योपलम्भात् कथमाप्तकामत्वमित्यत आह अज्ञानेनेति निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवम्भूतं ज्ञानमावृतं तेन हेतुना जन्तवो जीवा मुह्यन्ति भगवति वैषम्यं मन्यन्त इत्यर्थः ॥ १५ ॥

## भाषा अनुवाद ।

जिस हेतु भगवान् न कुछ करते और न किसीसे कुछ करवावते हैं वेतो विभु कहे व्यापक तथा पूर्णकाम हैं इससे भक्त अभक्त किसीके पुण्य पापके भागी नहीं हैं परन्तु परमेश्वरकी अचिन्त्य जो माया सोई पूर्वकर्मके अनुसार ऊंच नीच कर्ममे लोगोंको प्रवृत्ति देती और अज्ञानसे ज्ञान आवृत्त है तिससे सव मोहित होते हैं जो कहो कि पूर्णकामको फेरि भक्तोंपर अनुग्रह औ अभक्तोंका निग्रह क्योंकर घटै है तो कहते हैं कि परमेश्वरका निग्रहरूप दण्ड अनुग्रह है अर्थात् दण्ड होनेसे पापीका पाप दूर हो जायगा ऐसे दण्डरूप अनुग्रहका न जानना जो अज्ञान सोई परमेश्वरविषयक ज्ञानको आवृत करता है तो फेरि जीव मोहित होय अपने अज्ञानसे परमेश्वरमे विषमदृष्टि करते हैं ॥ १५

**तद्बुद्धय स्तदात्मान स्तन्निष्ठा स्तत्परायणा:।**
**गच्छन्त्य पुनरावृत्तिं ज्ञाननिर्धूत कल्मषा: ॥ १७ ॥**

## शाङ्करभाष्यम्।

यत् परं ज्ञानं प्रकाशितं तद्बुद्धय इति तस्मिन् गता बुद्धिर्येषां ते तद्बुद्धय: तदात्मानस्तदेव परं ब्रह्म आत्मा येषां ते तदात्मान: तन्निष्ठा इति तन्निष्ठा निष्ठाभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि सन्यास्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठा स्तत्परायणाश्च तदेव परमायनं परा गतिर्येषां भवति ते तत्परायणा: केवलात्मरतय इत्यर्थ: ते गच्छन्त्येवंविधा अपुनरावृत्तिं पुनर्देह-सम्बन्धं न व्रजन्ति ज्ञाननिर्धूतकल्मषा: यथोक्तेन ज्ञानेन निर्धूतोऽतिनिवृत्तो नाशित: कल्मष: पापादि संसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा: यतय इत्यर्थ: ॥ १७ ॥

### आनन्दगिरिकृतटीका।

विदुषां विविदिषूणाञ्चान्तरङ्गाणि विद्यापरिपाकसाधनानि इत्युपदिदिक्षुरुत्तरश्लोकस्यापेक्षितं पूरयति यत् परमिति तस्मिन् परमार्थतत्वे परस्मिन् ब्रह्मणि बाह्यं विषयमपोह्य गता प्रवृत्ता श्रवण मनन निदिध्यासनैरसकृदनुष्ठितैर्बुद्धि: साक्षात्कारलक्षणा येषां ते तथेति प्रथमविशेषणं विभजते तस्मिन्निति तर्हि बोद्धा जीवो बोद्धव्यं ब्रह्मेति जीवब्रह्मभेदाभ्युपगमो नेत्याह तदात्मान इति कल्पितं बोद्धृबोद्धव्यत्वं वस्तुतस्तु न भेदोऽस्तीत्यङ्गीकृत्य व्याचष्टे तदेवेति ननु देहादावात्माभिमानमपनीय ब्रह्मण्येवाहमस्मीत्यवस्थानं

### स्वामिकृतटीका।

ज्ञानिनस्तु न मुह्यन्तीत्याह ज्ञानेनेति आत्मनो भगवतो ज्ञानेन येषां तद्वैषम्योपलम्भकमज्ञानं नाशितं तज्ज्ञानं तेषामज्ञानं नाशयित्वा तत्परं परिपूर्णमीश्वरं प्रकाशयति यथाऽऽदित्यस्तमो निरस्य समस्तं वस्तुजातं प्रकाशयति तद्वत् ॥ १६ ॥

## भाषा अनुवाद।

और ज्ञानसे जिनका अज्ञान नाश हो गया है ऐसे ज्ञानी पुरुषोंको पर जो भगवत्स्वरूप सो प्रकाशमान है जैसे सूर्यके प्रकाशसे अन्धकार दूर हो सब वस्तु प्रकाशित होती हैं लोग केवल अपने मोहसे ईश्वरमें मोह कल्पना करते हैं ॥ १६ ॥

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

## शाङ्करभाष्यम्।

येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्तीत्युच्यते विद्येति विद्याविनयसम्पन्ने विद्या च विनयश्च विद्याविनयौ

### आनन्दगिरिकृतटीका।

नसदनुष्ठीयमानकर्मप्रतिबन्धान्न सिध्यतीत्याशङ्क्य विशेषणान्तरमादत्ते तन्निष्ठा इति तत्र निष्ठाशब्दार्थं दर्शयन् विवक्षितमर्थमाह निष्ठेत्यादिना तथापि पुरुषार्थापेक्षाप्रतिबन्धात् कथं यथोक्तं ब्रह्मण्येवावस्थानं वेद्धुं पारयति तत्राह तत्परायणा इति यथोक्तानामधिकारिणां परमपुरुषार्थत्वोक्तब्रह्मातिरेकाभावान्यत्रासक्तिरिति तात्पर्यार्थमाह केवलेति ननु यथोक्तविशेषणवतां वर्त्तमानदेहपातेऽपि देहान्तरपरिग्रहव्यसनतया कुतो यथोक्तं ब्रह्मण्यवस्थानमास्थातुं शक्यते तत्राह ते गच्छन्तीति सति संसारकारणे दुरितादौ संसारप्रसरस्य दुर्वारत्वान्न पुनरावृत्तिसिद्धिरित्याशङ्क्याह ज्ञानेति उक्तविशेषणसम्पत्त्या दर्शितफलशालित्वमात्मनामन्तरेणासम्भावितमिति मत्वा विशिनष्टि यतय इति ॥१७॥

### स्वामिकृतटीका।

एवम्भूतेश्वरोपासकानां फलमाह तदिति तस्मिन्नेव बुद्धिर्निश्चयात्मिका येषां तस्मिन्नेव आत्मा प्रयत्नो येषां तस्मिन्नेव निष्ठा तात्पर्यं येषां तदेव परमायनमाश्रयो येषां ततश्च तत्प्रसादलब्धेनात्मज्ञानेन निर्धूतं निरस्तं कल्मषं येषां तेऽपुनरावृत्तिं मुक्तिं यान्ति ॥१७॥

## भाषा अनुवाद।

ऐसे जो परमेश्वर तिनके उपासकोंको प्राप्त जो फल होता है सो कहते हैं कि भगवतकी भक्तिसे अवश्यही संसारसागरको उतर जायंगे ऐसी जिनके निश्चयरूप बुद्धि है और तैसेही भगवद्भक्तिमे सम्पन्न औ तत्पर हैं और परमेश्वरही जिनके परम अवलम्ब हैं सोई जन ईश्वरके प्रसादसे निःपाप हो मुक्तिपद पाय आवागमनसे रहित होते हैं सोई कहा कि ईश्वरमे बुद्धि औ ईश्वरमे आत्मा औ ईश्वरमे निष्ठा तथा ईश्वरमे परायण कहे तत्पर पुरुष ज्ञानसे निर्धूतकल्मष अपुनरागमनपद जो मोक्ष तिस को प्राप्त होते हैं ॥ १७ ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ॥१९॥

शाङ्करभाष्यम् ।

विद्यात्मनो बोधो विनयश्च उपशमः ताभ्यां विद्याविनयाभ्यां सम्पन्नो विद्वान् विनीतश्च यो ब्राह्मणस्तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनो विद्याविनयसम्पन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायाञ्च राजस्यां गवि संस्कारहीनायमत्यन्तमेव केवलतामसे हस्त्यादौ च सत्वादिगुणैस्तजैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥ १८ ॥

आनन्दगिरिकृतटीका ।

यदपुनरावृत्तिसाधनं तत्त्वज्ञानं तदेव प्रश्नद्वारेण विवृणोति येषामित्यादिना विद्या वेदार्थविज्ञानमित्यङ्गीकृत्य विनयं व्याचष्टे विनय इति उपशमो निरहङ्कारत्व-मनौद्धत्यं पदार्थमेवमुक्त्वा वाक्यार्थं दर्शयति विद्वानिति गवीत्याद्यनूद्य वाक्यार्थं कथयति विद्येति इत्यादौ पण्डिताः समदर्शिन इत्युत्तरत्र सम्बन्धः तत्र तत्र प्राणिप्रभेदेषु तत्तद्गुणैस्तन्निमित्तसंस्कारैश्च संस्पृष्टत्वसम्भवाच्च ब्रह्मणः समत्वमित्याशङ्क्याह सत्त्वादीति तजैश्चेत्यत्र तच्छब्देन सत्त्वमेव गृह्यते सात्त्विकसंस्कारैरिव राजससंस्कारैरपि सर्वथै-वासंस्पृष्टं ब्रह्मेत्याह तथेति राजसैरिव तामसैरपि संस्कारैर्ब्रह्मात्यन्तमेवास्पृष्टमित्याह तथा तामसैरिति ब्रह्मणोऽद्वितीयत्वं कूटस्थत्वमसङ्गत्वञ्चोक्तेऽर्थे हेतुरिति मत्वा सम-शब्दार्थमाह सममिति समदर्शित्वमेव पाण्डित्यं तद्व्याचष्टे ब्रह्मेति ॥ १८ ॥

स्वामिकृतटीका ।

कीदृशास्ते ज्ञानिनो येऽपुनरावृत्तिं मुक्तिं गच्छन्तीत्यपेक्षायामाह विद्येति विषमे-ष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते पण्डिता ज्ञानिन इत्यर्थः तत्र विद्याविनयाभ्यां-युक्ते ब्राह्मणे च शुनो यः पचति तस्मिंश्चेति कर्मणो वैषम्यं गवि हस्तिनि शुनि चेति जातितो वैषम्यं दर्शितम् ॥ १८ ॥

भाषा अनुवाद ।

तो वे तत्त्वज्ञानी जो मुक्ति लाभ करते कैसे होते हैं सोई कहते हैं कि विषम वस्तुमे समज्ञान अर्थात् सकल वस्तुमे ब्रह्मरूप देखते हैं जैसे कि विद्या

## शाङ्करभाष्यम्।

नन्वभोज्यान्नास्ते दोषवन्तः समासमाभ्यां विषमसमे पूजात इति स्मृतेर्न ते दोषवन्तः कथं इहेति इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभासते तथापि तद्दोषैरसंस्पृष्टमिति निर्दोषं हि दोषवर्जितं हि यस्मान्नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च नाप्यन्त्यादिविशेषा आत्मनो भेदकाः सन्ति प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेरतः समं ब्रह्मैकञ्च तस्माद् ब्रह्मण्येव ते स्थिताः तस्मान्न दोष-

### आनन्दगिरिकृतटीका।

सात्त्विकेषु राजसेषु तामसेषु चासमत्वेषु समत्वदर्शनमनुचितमिति शङ्कते नन्विति सर्वत्र समदर्शिनः तच्छब्देन परामृश्यन्ते तेषां दोषवत्त्वादभोज्यान्नत्वादभोज्यान्नत्वमित्यत्र प्रमाणमाह समासमाभ्यामिति समानामध्ययनादिभिः समानधर्मकाणां वस्त्रालङ्कारादिपूजया विषमे प्रतिपत्तिविशेषे क्रियमाणे सत्यसमानाञ्चासमानधर्म्मकाणां कस्यचिदेकवेदत्वमपरस्य द्विवेदत्वमित्यादि धर्मवतां प्रागुक्ततया पूजया समे प्रतिपत्तिविशेषे पूजयिता पुरुषविशेषं ज्ञात्वा प्रतिपत्तिमकुर्वन् धनाद्धर्म्माच्च हीयते तेन सात्त्विके राजसतामसयोश्च समबुद्धिं कुर्वन् प्रत्यवैतीत्यर्थः उत्तरत्वेनोत्तरश्लोकमवतारयति न ते दोषवन्त इति स्तुत्यपदेशेन सर्वसत्त्वेषु समत्वदर्शिनां दोषवत्त्वमुक्तं कथं नास्तीति प्रतिज्ञामात्रेण सिध्यतीति शङ्कते कथमिति स्मृतेर्गतिमप्रवदिष्यन् निर्दोषत्वं समत्वदर्शिनां विशदयति इहैवेति सर्वेषां चेतनानां साम्ये प्रवणमनसां ब्रह्मलोकगमनमन्तरेण अस्मिन्नेव देहे परिभूतजन्मनामशेषदोषराहित्ये हेतुमाह निर्दोषं हीति वर्त्तमानो देहः सप्तम्या परिगृह्यते तानेव समदर्शिनो विशिनष्टि येषामिति ननु ब्रह्मणो निर्दोषत्वमसिद्धं दोषवत्सु श्वपाकादिषु तद्दोषैर्दोषवत्त्वोपलम्भसम्भवात्तत्राह यद्यपीति यस्मात् तन्निर्दोषं तस्मात्तस्मिन् ब्रह्मणि स्थितैर्निर्दोषैः सर्गो जित इति

## भाषा अनुवाद।

औ विनयसे युक्त ब्राह्मण औ गज हाथी कुत्ता तथा चाण्डाल इन सबमे पण्डित कहे ज्ञानी पुरुष समदर्शी होते हैं अर्थात् सबमे आत्मारूप ईश्वरको एक रूपसे देखते हैं॥ १८॥

गन्धमात्रमपि तान् स्पृशति देहादिसंघातात्मदर्शनाभिमानाभावात् तेषां देहादिसंघातात्मदर्शनाभिमानवद्विषयन्तु तत् सूत्रं समासमाभ्यां विषमसमे पूजात इति पूजाविषयत्वविशेषणात् दृश्यते हि ब्रह्मवित् षडङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसम्बन्धः कारणं ब्रह्म तु सर्वगुणदोषसम्बन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तं ॥ १९ ॥

आनन्दगिरिकृतटीका ।

सम्बन्धः ब्रह्मणो गुणभूयस्त्वादल्पीयान् दोषोऽपि स्यादित्याशंक्याह नापीति चेतनस्य गुणविशेषे विशिष्टत्वमानष्टं निर्गुणत्वश्रवणादित्ययुक्तं बुद्धिसुखादीनां परिशेषादात्मधर्मत्वस्य कैश्चिन्निश्चितत्वादित्याशंक्याह वक्ष्यति चेति आत्मनो निर्गुणत्वे वाक्यशेषं प्रमाणयति अनादित्वादिति चकारो वक्ष्यतीत्यनेन सम्बन्धार्थः गुणदोषवशादात्मनो भेदाभावेऽपि भेदोऽन्त्य विशेषेभ्यो भविष्यतीति प्रसङ्गादाशंक्य दूषयति नापीति प्रतिशरीरमात्मभेदसिद्धौ तद्धेतुत्वेन तेषां सत्त्वं तेषाञ्च सत्त्वे प्रतिशरीरमात्मनो भेदसिद्धिरिति परस्पराश्रयत्वमभिप्रेत्य हेतुमाह प्रतिशरीरमिति आत्मनो भेदकाभावे फलितमाह अत इति समत्वमेव व्याकरोति एकञ्चेति ब्रह्मणो निर्विशेषत्वेनैकत्वाज्जीवानाञ्च भेदकाभावेनैकत्वस्योक्तत्वादेकलक्षणत्वादेकत्वं जीव ब्रह्मणोरैक्यमित्याह तस्मादिति जीव ब्रह्मणोरेकत्वे जीवानां ब्रह्मवन्निर्दोषत्वं सिध्यतीत्याह तस्माच्चेति तच्छब्दार्थमेव स्फोरयति देहादीति यदि सर्वसत्त्वेषु समत्वदर्शनमदुष्टमिष्टं तर्हि कथं गौतमसूत्रमित्याशंक्याह देहासंघातेति सूत्रस्य तथोक्ताभिमानवद्विषयत्वे गमकमाह पूजेति यदि चतुर्वेदानामेव सतां पूजया वैषम्यं यदि वा चतुर्वेदानां षडङ्गविदां ब्रह्मविदाञ्च पूजया साम्यं तदा तेषामुक्ता पूजा विषयाणां केषाञ्चिन्मनोविकारसम्भवे कर्त्तव्यवैतीत्यविद्वद्विषयत्वं सूत्रस्य प्रतिभातीत्यर्थः तत्रैव चानुभवमनुभवमनुकूलत्वेनोदाहरति दृश्यते हीति देहादिसंघाताभिमानवतां गुणदोषसम्बन्धसम्भवात्तद्विषयं सूत्रमित्युक्तमिदानीं ब्रह्मात्मदर्शनाभिमानवतां गुणदोषासम्बन्धान्न तद्विषयं सूत्रमित्यभिप्रेत्याह ब्रह्म त्विति ॥ १९ ॥

स्वामिकृतटीका ।

ननु विषमेषु समदर्शनं निषिद्धं कुर्वन्तोऽपि पण्डिताः यथाह गौतमः समासमाभ्यां विषमे पूजात इति अस्यार्थः समाय पूजायां विषमे प्रकारे कृते सति विषमाय च समे प्रकारे कृते सति स पूजक इह लोकात् परलोकाच्च हीयत इति तत्राह इहैवेति इहैव जीवद्भिरेव तैः सृज्यत इति सर्गः संसारो जितो निरस्तः कैः येषां मनः साम्ये समत्वे स्थितं तत्र हेतुः हि यस्मात् ब्रह्म समं निर्दोषञ्च तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिता

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २० ॥**

### शाङ्करभाष्यम् ।

कर्म्मिविषयञ्च समासमाभ्यामित्यादि इदन्तु सर्वकर्म्मसंन्यासिविषयं प्रस्तुतं सर्वकर्म्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः यस्मान्निर्द्दोषं समं ब्रह्मात्मा तस्मात् नेति न प्रहृष्येत् न हर्षं कुर्य्यात् प्रियमिष्टं प्राप्य लब्ध्वा नोद्विजेत् प्राप्यैव चाप्रियमनिष्टं लब्ध्वा देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते न केवलात्मदर्शिनः तस्य प्रियाप्रियप्राप्त्यसम्भवात् किञ्च सर्वभूतेष्वेकः समो निर्द्दोष आत्मेति स्थिरा निर्विचिकित्सा

### आनन्दगिरिकृतटीका ।

इतश्च नेदं सूत्रं ब्रह्मविद्विषयमित्याह कर्म्मीति तत्रैव पूजापरिसंम्भवादित्यर्थः ननु यत्र समत्वदर्शनं तत्रैव त्विदं सूत्रं नतु कर्म्मिणि वेति विभागोऽस्ति तत्राह इदं त्विति समत्व दर्शनस्य संन्यासिविषयत्वे तेन प्रस्तुतत्वे हेतुमाह सर्वकर्माणीति अध्यायपरिसमाप्तेः सर्वकर्माणीत्यारभ्य तत्र सर्वकर्म्म संन्यासाभिधानात्तद्विषयमिदमसत्वदर्शनं गम्यते तत्र च

### स्वामिकृतटीका ।

ब्रह्मभावं प्राप्ता इत्यर्थः गौतमोक्तस्तु दोषो ब्रह्मभावप्राप्तेः पूर्वमेव पूजात इति पूजकावस्थाश्रवणात् ॥ १९ ॥

### भाषा अनुवाद ।

यह सुनि जो सन्देह होय कि विषममे समदृष्टि होनाही निषिद्ध है फेरि सबमे समदृष्टि मनुष्य पण्डित कैसे हैं और गौतमने कहा कि विषममे समपूजन औ सममे विषमपूजन करनेवाले लोक परलोकसे भ्रष्ट होते हैं इस सङ्काको निवारण करते हुये कहते हैं कि जिनका मन समभावमे स्थित हैं उनोने इहांई स्वर्ग जय कर लिया है क्योंकि सर्वत्र समान रूप निर्दोष ब्रह्म परिपूर्ण होरहा है ऐसा जो जानते हैं ते ब्रह्म मे स्थित कहे ब्रह्मरूप होय निर्दोष हैं और गौतम की बात ज्ञान अवस्था के पहली अवस्थाकी है ॥ १९ ॥

## बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
## स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥

### शाङ्करभाष्यम् ।

बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्यात् यथोक्तब्रह्मवित् ब्रह्मणि स्थितोऽकर्म्मकृत् सर्वकर्म्मसंन्यासीत्यर्थः ॥ २० ॥

किञ्च ब्रह्मणि स्थितः बाह्ये बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेषु असक्त आत्मान्तः

### आनन्दगिरिकृतटीका ।

निरहङ्कारे निरवकाशं सूत्रमित्यर्थः ननु इष्टानिष्टप्राप्तिभ्यां हर्षविषादौविद्वानपि कुर्वन्निर्दोषे ब्रह्मणि कथं स्थितिं लभेतेत्याशंक्याकांक्षितं पूरयन्नुत्तरश्लोकमुत्थापयति यस्मादिति आत्मज्ञाननिष्ठावतो विदुषो हर्षविषादनिमित्ताभावान्न तावुचिताविल्याह स्थिरबुद्धिरिति नतु हर्षविषादनिमित्तत्वं प्रियाप्रिययोः सिद्धमिति कथं तत्प्राप्तुाहर्षोद्वेगो न कर्त्तव्याविति निगुज्यते तत्राह देहेति विदुषोऽपि प्रियाप्रियप्राप्तिसामर्थ्यादेव हर्षविषादौ दुर्वारावित्याशंक्याह न केवलेति अद्वितीयदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगान्न तन्निमित्तौ हर्षविषादावित्यर्थः इतोऽपि विदुषो हर्षविषादावसम्भावितावित्याह किञ्चेति निर्दोषे ब्रह्मणि प्रागुक्ते दृढप्रतिपत्तिः संमोहेन हर्षादिहेतुना रहितो यथोक्ते सर्वदोषरहिते ब्रह्मण्यहमस्मीति विद्यावानशेषदोषशून्ये तस्मिन्नेव ब्रह्मणि स्थितस्तदनुरोधात् कर्माण्यकुर्वाणो नैव हर्षविषादभागी भवितुमलमित्यर्थः ॥ २० ॥

### स्वामिकृतटीका ।

ब्रह्मप्राप्तस्य लक्षणमाह न प्रहृष्येदिति ब्रह्मविद्भूत्वा ब्रह्मण्येव यः स्थितः स प्रियं प्राप्य न प्रहृष्येत न प्रहृष्टो हर्षवान् स्यात् अप्रियं प्राप्य च नोद्विजेत न विषीदतीत्यर्थः यतः स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य तत् कुतः यतोऽसंमूढः निवृत्तमोहः ॥ २० ॥

### भाषा अनुवाद ।

अब ब्रह्म भावको प्राप्त पुरुष का लक्षण कहते हैं कि ब्रह्म ज्ञानी होके जो ब्रह्म मे स्थित हैं वे कोई प्रिय वस्तु पाय के हर्षित नहीं होते हैं और अप्रिय प्राप्त होने से भी विषाद कहे दुख नहीं करते हैं क्योंकि वे लोग स्थिर बुद्धि औ मोह से रहित हैं तथा ब्रह्मवित् ब्रह्मरूप हैं ॥ २० ॥

## शाङ्करभाष्यम् ।

करणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः स विन्दति लभते आत्मनि यत् सुखं तद्विन्दतीत्येतत् स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधि र्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन् व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते प्राप्नोति तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्त्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥ २१ ॥

### आनन्दगिरिकृतटीका ।

शब्दादिविषयप्रीतिप्रतिबन्धान्न कस्यचिदपि ब्रह्मणि। स्थितिः सिध्येदित्याशंक्याह किञ्चेति न केवलं पूर्व्वोक्तरीत्या ब्रह्मणि स्थितो हर्षविषादरहितः किन्तु विद्यान्तरेणापीत्यर्थः यावद्यावद्विषयेषु रागरूपमावरणं निवर्त्तते तावत्तावदात्मस्वरूपसुखमभिव्यक्तं भवतीत्याह वाह्येति न केवलमसक्तात्मा शमवशादेव सुखं विन्दते किन्तु ब्रह्मसमाधिना समाहितान्तःकरणः सुखमनन्तं व्याप्नोतीत्याह स ब्रह्मेति तत्र पूर्व्वार्द्धं व्याचष्टे बाह्यास्वेति समाधानशीलसम्यग्ज्ञानद्वारा निरतिशयसुखप्राप्तिमुत्तरार्द्धव्याख्यानेन कथयति ब्रह्मणीत्यादिना शब्दादिविषयविमुखस्यानन्तसुखाप्तिसम्भवात्तदर्थिना प्रयत्नेन विषयवैमुख्यं कर्त्तव्यमिति शिष्यशिक्षार्थमाह तस्मादिति ॥ २१ ॥

### स्वामिकृतटीका ।

मोहनिवृत्त्या बुद्धिस्थैर्य्यहेतुमाह वाह्येति इन्द्रियैः स्पृश्यन्त इति स्पर्शा विषयाः बाह्येन्द्रियविषयेष्वसक्तात्मा अनासक्तचित्तः आत्मन्यन्तःकरणे यदुपशमात्मकं सात्त्विकं सुखं तद्विन्दति लभते स चोपशमसुखं लब्ध्वा ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्तात्मा यस्य सोऽक्षयं सुखमश्नुते प्राप्नोति ॥ २१ ॥

## भाषा अनुवाद ।

मोह निवृत्त मात्र होने से बुद्धि स्थिर होती है इसका हेतु कहते हैं कि वाह्य इन्द्रियोंके विषयमे अनाशक्तचित्त पुरुष अपने अन्तःकरणमे विक्षेपरहित शान्तियुक्त जो सात्विक सुख सो अनुभव करते और वही पुरुष शान्तिसुख प्राप्त होके ब्रह्मयोगयुक्त आत्मा कहे समाधिके द्वारा परमात्माके साथ एकता प्राप्तिरूप जो अक्षय सुख सोभी लाभ करते हैं ॥ २१ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

शाङ्करभाष्यम् ।

इतश्च निवर्तयेत येहीति ये हि यस्मात्संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव यथेह लोके तथा परलोकेऽपीति गम्यते एव शब्दान्न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुध्वा विषयमृगतृष्णिकायां इन्द्रियाणि निवर्तयेन्न केवलं दुःखयोनय आद्यन्तवन्तश्च आदिर्विषयेन्द्रियतत्संयोगो भोगानामन्तश्च तद्वियोग एवात आद्यन्तवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः कौन्तेय न तेषु रमते बुधो भोगेषु विवेकी अवगतपरमार्थतत्त्वेऽत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनां ॥ २२ ॥

आनन्दगिरिकृतटीका ।

तत्रैव हेत्वन्तरपरत्वेनोत्तरश्लोकमुदाहरति इतश्चेति विषयेभ्यः सकाशादिन्द्रियाणीति शेषः वैराग्यार्थमेव वैषयिकानि सुखानि दूषयति ये हीति ननु विषयेन्द्रियसंप्रयोगसम्भूतेषु भोगेषु जन्तूनामभिरुचि दर्शनात् कुतस्तेषां दुःखयोनित्वमित्याशङ्क्याविवेकिनां तेष्वासङ्गेऽपि न विवेकिनामित्याह आद्यन्तवन्त इति यस्मादाधिव्याधिजरामरणादिसहितेभ्यः समागमनादिक्लेशरूपभागिभ्यश्च विषयेन्द्रियसम्बन्धेभ्योभोगाः सुखलवानुभवा जायन्ते तस्मात्ते दुःखहेतवो भवन्तीति योजना अविद्याकार्यत्वाद् दुःखनां कुतो भोगजन्यत्वमित्याशङ्क्य भोगानामविद्याप्रयुक्तत्वात्तन्निबन्धनत्वं दुःखानां युक्तमित्यभिप्रेत्याह अविद्येति भोगानां दुःखयोनित्वे मानमनुभवमुपन्यस्यति दृश्यन्ते हीति ऐहिकानां भोगानां दुःखनिमित्तत्वेऽपि नामुष्मिकाणां तथात्वमनुभवादित्याशङ्क्यावधारणसामर्थ्यसिद्धमर्थमाह यथेति पूर्वार्द्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह नेत्यादिना इतश्च विषयेभ्यः सकाशादिन्द्रियाणि निवर्त्तयितव्यानीत्याह न केवलमिति आद्यन्तवत्त्वे मध्यक्षणवर्त्तित्वेन क्षणभङ्गुरत्वादुपेक्षणीयत्वं भोगानां सिध्यति अस्ति हि तेषां क्षणभङ्गुरत्वं क्षणिकविषयाकारमनोवृत्तिव्यङ्ग्यत्वादिति सन्धानः सन्नाह अत इति बुद्धिपूर्वकारिणां विवेकवतां भोगेषूपेक्षोपलब्धेश्च तेषामाभासत्वं प्रतिभातीत्याह न तेष्विति प्रतीकोपादानमात्रमिदं पुनर्व्याख्यानमिति न पुनरुक्तिः ननु केषाञ्चिद्भोगेष्वभिरुचि रुपलभ्यते तत्राह अत्यन्तेति ॥ २२ ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः॥ २३॥

शाङ्करभाष्यम्।

अयञ्च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यं कर्त्तव्यमित्याह भगवान शक्नोतीति शक्नोत्युत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् आमरणात् इतर्थः मरणसीमाकरणं जीवतोऽवश्यम्भावी हि कामक्रोधोद्भवो वेग अनन्तनिमित्तवान् हि स इति यावन्मरणं तावन्नविश्रम्भणीय इत्यर्थः काम इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे चानुभूते सुखहेतौ या गर्द्धिः तृष्णा स कामः क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधस्तौ कामक्रोधौ उद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः रोमाञ्चन हृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः गात्रप्रकम्पप्रस्वेदसन्दष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्त

स्वामिकृतटीका।

ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात्तत्राह ये हीति संस्पर्शजा इति संस्पर्शा विषयाः तेभ्यो जाता ये भोगाः सुखानि ते हि वर्त्तमानकालेऽपि स्पर्द्धासूयादिव्याप्तत्वात् दुःखस्यैव योनयः कारणभूताः तथाद्यन्तोऽन्तवन्तश्च अतो विवेकी तेषु न रमते॥ २२॥

भाषा अनुवाद।

प्रिय जो विषयभोग तिनके निवृत्त होनेसे फेरि मुक्ति पुरुषार्थ अर्थात् परम प्रिय कैसे हैं इस संशयपर कहते हैं कि जो स्पर्श आदि विषय और उन विषयोंसे प्रगट जो सुख सो भोगसमयमें स्पर्द्धा काहे और का अधिक सुख देखि इच्छाकी वृद्धि औ आयुर्दाही भर हैं और भोग पीछे कुछ नहीं हैं खाली चिन्तामात्र करते हैं इन सब हेतुवोंसे विषय केवल दुखके कारण हैं और उनका आदि अन्तभी है इससे हे कौन्तेय विवेकी लोग उस विषय सुखभोगमें नहीं रमित होते हैं॥ २२॥

आनन्दगिरिकृतटीका।

उत्तरश्लोकस्य तात्पर्यमाह अयञ्चेति श्रेयोमार्गप्रतिपक्षत्वं कष्टमतत्वे हेतुस्तत्रैव हेत्वन्तरमाह सर्वेति प्रयत्नाधिक्यस्य कर्त्तव्यत्वे हेतुं सूचयति दुर्निवार्य्य इति प्रसिद्धं हि कामक्रोधोद्भवस्य वेगस्य दुर्निवारत्वं येन मातरमपि चाधिरोहति पितरमपि हन्ति तमवश्यं परिहर्त्तव्यं दर्शयति शक्नोतीति यथोक्तं वेगं वह्निरनर्थक्रमेण परिणामात् प्रागेव देहान्तरत्यक्तं यः सोढुं क्षमते तं स्तौति स युक्त इति मरणसीमाकरणस्य तात्पर्य्यमाह मरणेति प्रसिद्धौ हिशब्दः तत्र हेतुमाह अनन्तेति व्याध्युपहतानां वृद्धानाञ्च कामादिवेगो न भवतीत्याशङ्क्याह इति यावदिति कामक्रोधोद्भवं वेगं व्याख्यातुसादौ कामं मनोविकारविशेषत्वेन व्याचष्टे काम इति कथमस्य मनोविकारविशेषत्वं तदाह इन्द्रियेति कामो रतिस्तृष्णेति पर्य्यायाः सन्तः शब्दा मनोविकारविशेषे पर्य्यवस्यन्तीत्यर्थः क्रोधस्य मनोविकारविशेषस्तद्वदित्याह क्रोधश्चेति तमेव क्रोधं स्फुटयति आत्मन इति एवं कामक्रोधौ व्याख्याय तयोरुत्कटत्वावस्थात्मनो वेगस्य ताभ्यासुत्पत्तिसुपन्यस्यति ताविति यथोक्तवेगावगमोपायमुपदिशति रोमाञ्चनहृष्टनेत्रेत्यादिना उभयविधवेगं यो जीवन्नेव सोढुं शक्नोति तं पुरुषधौरेयत्वेन स्तौति तमित्यादिना ॥ २३ ॥

स्वामिकृतटीका।

तस्मान्मोक्ष एव परमः पुरुषार्थस्तस्य च कामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थ एव मोक्षभागित्याह शक्नोती हैवेति कामात् क्रोधाच्चोद्भवति यो वेगः मनोनेत्रादिक्षोभलक्षणस्तमिहैव तदुद्भवसमय एव यो नरः सोढुं प्रतिरोद्धुं शक्नोति तदपि न क्षणमात्रं किन्तु शरीरविमोक्षणात् प्राग्देहपातादित्यर्थः य एवम्भूतः स एव युक्तः समाहितः सुखी च भवति नान्यः यद्वा मरणादूर्द्धं विलसन्तीभिर्युवतिभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात् प्रागपि जीवन्नेव यः सहते स एव युक्तः सुखी चेत्यर्थः तदुक्तं वशिष्ठेन प्राणे गते यथा देहः सुखदुःखे नविन्दति तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रमे वसेदिति ॥ २३ ॥

## भाषा अनुवाद।

इससे मुक्ति ही परम पुरुषार्थ है और काम क्रोध से उत्पन्न जो क्षोभ सोई मुक्तिका प्रतिपक्ष हैं अतएव उस वेगको जो सहि सके सो मुक्तिभागी होयगा यही कहते हैं कि शरीर रहते शरीर सामर्थ्य रहते हुये जो काम क्रोधके वेगको सहिले ने सके सोई नर युक्त कहे आत्मरूप और सुखी हैं॥ २३ ॥

योऽन्तःसुखोऽन्तराऽरामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

शाङ्करभाष्यम् ।

कामक्रोधोद्भवं वेगं य उत्सहते सोढुं सहितुं शक्तः स युक्तो योगी सुखी चेह लोके नरः ॥ २३ ॥

कथम्भूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह भगवान् य इति योऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथान्तरेवात्मन्यारामः क्रीड़ा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव य ईदृशः स योगी ब्रह्मनिर्व्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति ॥ २४ ॥

आनन्दगिरिकृतटीका ।

ज्ञानस्यात्यन्तरङ्गमात्ममात्मनिष्ठत्वं दर्शयन् प्रकृतं ब्रह्मविदमेव विशिनष्टि कथम्भूतश्चेति यथान्तरेव सुखं न वाह्यैर्विषयैस्तथान्तरेव ज्योतिर्न श्रोत्रादिभिरतो विषयान्तरविज्ञानरहित इत्याह तथेति यथोक्तविशेषणसमाधिमान् जीवन्नेव मुक्तिमधिगच्छतीत्याह स योगीति आत्मन्यन्तरेव सुखमिति वाह्यविषयनिरपेक्षत्वं विवक्षितमन्तरारामत्वञ्च इन्द्रियादिविषयापेक्षामन्तरेण क्रीड़ाप्रयुक्तफलभाक्त्वमभिमतमिन्द्रियादिजन्यप्रकाशशून्यत्वमात्मज्योतिष्ट्वमिष्टं यथोक्तविशेषणसम्पन्नः समाहितश्च जीवन्नेव ब्रह्मभावं प्राप्नोति ब्रह्मणि परिपूर्णे निर्वृतिं सर्वानर्थनिवृत्त्युपलक्षितां स्थितिमनतिशयानन्दाविर्भावलक्षणात् प्राप्नोतीत्याह य ईदृश इति ॥ २४ ॥

स्वामिकृतटीका ।

न केवलकामक्रोधवेगसंवरणमात्रेण मोक्षं प्राप्नोति अपितु योऽन्तरिति अन्तरात्मन्येव सुखं यस्य नतु विषयेषु अन्तरेवारामः क्रीड़ा यस्य न वहिः अन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिषु स एवं ब्रह्मणि भूतः स्थितः सन् ब्रह्मनिर्वाणं लयमधिगच्छति प्राप्नोति ॥२४॥

भाषा अनुवाद ।

और केवल काम क्रोधका वेग जीतनेही से मुक्त नहीं होय हैं और भी कहते हैं कि जो अपने अन्तरात्मामे सुखी औ विषयभोग मे सुखी

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥**

### शाङ्करभाष्यम् ।

किञ्च लभन्त इति लभन्ते ब्रह्मनिर्व्वाणं मोक्षं ऋषयः सम्यग्दर्शिनः सन्न्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाः छिन्नद्वैधाः छिन्नसंशयाः यतात्मानः संयतेन्द्रियाः सर्वभूतहितेरताः सर्वेषां भूतानां हिते आनुकूल्ये रता अहिंसका इत्यर्थः ॥ २५ ॥

### आनन्दगिरिकृतटीका ।

मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह किञ्चेति यज्ञादि नित्यकर्मानुष्ठानात्पापादिलक्षणं कल्मषं क्षीयते ततश्च श्रवणाद्यावृत्तेः सम्यक्दर्शनं जायते ततो मुक्तिरप्रयत्नेन भवतीत्याह लभन्त इति ज्ञानप्राप्त्युपायान्तरं दर्शयति छिन्नेति श्रवणादिना संशयनिरसनं कार्यकारणनियमनञ्च दयालुत्वेनाहिंसकत्वमित्येतदपि सम्यक्ज्ञानप्राप्तौ कारणमित्यर्थः अक्षरव्याख्यानं स्पष्टत्वान्न व्याख्यायते ॥ २५ ॥

### स्वामिकृतटीका ।

किञ्च लभन्त इति ऋषयः सम्यग्दर्शिनः क्षीणं कल्मषं येषां छिन्नं द्वैधं संशयो येषां यतः संयत आत्मा चित्तं येषां सर्वेषां भूतानां हितेरताः ये कृपालवस्ते ब्रह्मनिर्वाणं मोक्षं लभन्ते ॥ २५ ॥

### भाषा अनुवाद ।

नहीं है और जो पुरुष आत्माराम होके आत्माही मे विहार करता औ बाहर के व्यापार से विरत तथा अन्तः प्रकाश है अथवा आत्मा ही मे दृष्टि औ नृत्यगीत आदिक विषयोंमे दृष्टि नहीं रखताहै सोई योगी इह कहे जीवते ही ब्रह्मरूप ब्रह्म मे लीन होता है॥ २४ ॥

मुक्ति का हेतु जो ज्ञान तिसको साधन उपाय प्रकारन्तर कहे दूसरी तरहसे कहते हैं कि ऋषि कहे सम्यक्दर्शी सन्न्यासी लोग जो यज्ञ आदिनित्य नैमित्तिक कर्म्मकरि क्षीणकल्मष कहे निःपाप औ निःपाप होके स्रवण आदि से ज्ञानके द्वारा छिन्नद्वैध कहे संशय रहित होगये हैं और

काम क्रोध विमुक्तानां यतीनां यतचेतसां ।
अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मनां ॥ २६ ॥

### शाङ्करभाष्यम् ।

किञ्च कामेति कामक्रोधविमुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां विमुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानां अभित उभयतो जीवतां मृतानाञ्च ब्रह्मनिर्व्वाणं मोक्षो वर्त्तते विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥ २६ ॥

### आनन्दगिरिकृतटीका ।

पूर्वं कामक्रोधयोर्वेगः सोढव्यो दर्शितः सम्प्रति तावेव त्याज्यावित्याह किञ्चेति ननु दर्शितविशेषवतां मृतानामेव मोक्षो नतु जीवतामिति नेत्याह अभित इति असदादीनामपि तर्हि प्रभूतकामादिप्रभावविधुराणां किमिति मोक्षो न भवतीत्याशङ्क्य सम्यग्ज्ञानवैशिष्ठ्याभावादित्याह विदितेति उक्तोऽर्थे श्लोकाक्षराणामन्वयमाचष्टे कामक्रोधेत्यादिना ॥ २६ ॥

### स्वामिकृतटीका ।

किञ्च कामेत्यादि कामक्रोधाभ्यां विमुक्तानां यतीनां संन्यासिनां संयतचित्तानां ज्ञातात्मतत्त्वानामभित उभयतो जीवतां मृतानाञ्च न देहान्त एव तेषां ब्रह्मणि लयोऽपितु जीवतामपि वर्त्तत इत्यर्थ, ॥ २६ ॥

### भाषा अनुवाद ।

जिनका चित्त औ इन्द्रियगण वशीभूत हैं औ प्राणियोंके हितकारी दयालु स्वाभाव अर्थात् हिंसासे रहित हैं वेई ब्रह्ममे लयरूप मोक्ष पावते हैं ॥२५॥

और काम क्रोधसे विमुक्त ज्ञानी जन संन्यासी यतचित्त लोग विदित हैं आत्मा जिनको जीवित औ मृत दोनो अवस्था मे मुक्त हैं ऐसा नहीं कि देहान्त मे वे मुक्ति पावेंगे वे जीवते भी ब्रह्मके साथ एकरूप होय जीवन्मुक्त ऐसे प्रसिद्ध होते हैं ॥ २६ ॥

**स्पर्शान् कृत्वा बहिर्वाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**

शाङ्करभाष्यम् ।

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता कर्म्मयोगश्च ईश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्ति सर्वकर्म्मसन्न्यासक्रमेण मोक्षायेति भगवान् पदे पदेऽब्रवीद्वक्ष्यति च अथ इदानीं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयान् श्लोकानुपदिशति स्म भगवान् वासुदेवः स्पर्शानिति स्पर्शान् शब्दादीन् कृत्वा वहिर्व्वाह्यान् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतः शब्दादयो वाह्या वहिरेव कृता भवन्ति तानेवं वहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥

आनन्दगिरिकृतटीका ।

वृत्तमनूद्योत्तरश्लोकत्रयस्य तात्पर्य्यार्थमाह सम्यग्दर्शनेति ईश्वरार्पितसर्वभावेनेति भगवति परस्मिन्नीश्वरे समर्पितः सर्वेषां देहेन्द्रियमनसां भावश्चेष्टाविशेषो न कश्चिदपि वहिस्तेषां व्यापारस्तेनेत्यर्थः कर्मयोगस्य तत्फलस्य चाभिधानानन्तरमित्यथशब्दार्थः स्वतो वाह्यानां विषयाणां कुतो वहिष्करणमित्याशङ्क्याह श्रोत्रादीति तेषां वहिष्करणं कीदृगित्याशङ्क्याह तानिति ॥ २७ ॥

स्वामिकृतटीका ।

स योगी ब्रह्मनिर्वाणमित्यादिषु योगी मोक्षमवाप्नोतीत्युक्तं तमेव योगं सङ्क्षेपेणाह स्पर्शानिति द्वाभ्यां वाह्या एव स्पर्शा रूपरसादयो विषयाश्चिन्तिताः सन्तोऽन्तः प्रविशन्ति तांस्तच्चिन्तात्यागेन वहिरेव कृत्वा चक्षुर्भ्रुवोरन्तरे भ्रूमध्य एव कृत्वा अत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते उन्मीलने च वहिः प्रसरति तदुभयदोषपरिहारार्थमर्द्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः उच्छ्वासनिश्वासरूपेण नासिकयोरभ्यन्तरे चरन्तौ प्राणापानावूर्द्ध्वाधोगतिरोधेन समौ कृत्वा कुम्भकं कृत्वेत्यर्थः यद्वा प्राणोऽयं यथा न वहिर्निर्याति तथा वा अपानोऽन्तर्न प्रविशति किन्तु नासामध्य एव द्वावपि यथा चरतस्तथा मन्दाभ्यामुच्छ्वासनिश्वासाभ्यां समौ कृत्वेति ॥ २७ ॥

यतेन्द्रिय मनोबुद्धि मुनि र्मोक्ष परायण: ।
विगतेच्छा भयक्रोधो य: सदा मुक्त एव स: ॥ २८ ॥

शाङ्करभाष्यम् ।

यतेन्द्रिय इति यतेन्द्रियमनोबुद्धि र्यतानि संयतानि इन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिर्म्मननात् मुनि: सन्यासी मोक्षपरायण: एवं देहसंस्थानो मोक्षपरायणो मोक्ष एव परमायनं परा गतिर्यस्य सोऽयं मोक्ष-परायणो मुनिर्भवेत् विगतेच्छाभयक्रोध इच्छा च भयञ्च क्रोधश्च इच्छाभय-क्रोधास्ते विगता यस्मात् स विगतेच्छाभयक्रोध: य एवं वर्त्तते सदा सन्यासी मुक्त एव सन् तस्य मोक्षेऽन्य: कर्त्तव्यो नास्ति ॥ २८ ॥

आनन्दगिरिकृतटीका ।

विषयप्रावखं परित्यज्य चक्षुरपि भ्रुवोर्मध्ये विक्षेपपरिहारार्थं कृत्वा प्राणापानौ नासाभ्यन्तरचरणशीलौ समौ न्यूनाधिकवर्जितौ कुम्भकेन निरुद्धौ कृत्वा करणानि सर्वा-ण्येवं संयम्य प्राणायामपरो भूत्वा किं कुर्यादित्यपेक्षायामाह यतेन्द्रियेति इन्द्रियादि-संयमं कृत्वा मोक्षमेवापेक्षमाणो मननशील: स्यादित्यर्थ: ज्ञानातिशयनिष्ठस्य सर्वेच्छादि-शून्यस्य सन्यासिनो मुक्तेरनायाससिद्धत्वान्न तस्य किञ्चिदपि कर्त्तव्यमस्तीत्याह विगतेति पूर्वार्द्धाक्षराणि व्याकरोति यतेत्यादिना द्वितीयार्द्धाक्षराणि व्याचष्टे विगतेत्यादिना ॥२८॥

भाषा अनुवाद ।

इसी अध्यायके २४ श्लोक से कहा कि योगी मोक्ष पावते हैं सोई फेरि संक्षेप से कहते हैं कि शब्द स्पर्श आदि वहिर्विषयों को बाहर करिके औ चक्षु कहे दृष्टि को भौंहके मध्यमे राखि प्राण अपान वायु को सम करिके कुम्भकनाम प्राणायाम करैं भ्रूमध्य मे दृष्टि इस लिये कहा कि नेत्र वन्द करने से निद्रावश हो मन लय कहे लीन होजाता और खुले रहने से मन विषयोंपर धावताहै अधखुले रखने से भ्रू के वीच निकट स्थिररहता है औ दोनो वायु सम करने से नासिका रन्ध्र के द्वारा सञ्चार करती हैं जिस मे प्राणवायु बाहर औ अपान भीतर सञ्चार न करै इसवास्ते योगी कुम्भक-नाम प्राणायाम योग करै ॥ २७ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति श्रीभगवद्गीतायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## शाङ्करभाष्यम् :

एवं समाहितचित्तेन किं विज्ञेयमिति चोच्यते भोक्तारमिति भोक्तारं यज्ञानां तपसाञ्च कर्त्तृरूपेण देवतारूपेण च यस्तं सर्व्वलोकमहेश्वरं सर्वेषां लोकानां महान्तं ईश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्म्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥ २९ ॥

इति श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

### आनन्दगिरिकृतटीका ।

अधिकारिणो यथोक्तस्य कर्त्तव्याभावे ज्ञातव्यमपि नास्तीत्याशङ्क्य परिहरति एवमित्यादिना प्रसिद्धं भोक्तारं व्यवच्छिनत्ति सर्वलोकेति ततो ह्यस्य बन्धविपर्ययाविति न्यायेन सर्वफलदातृत्वं दर्शयति सुहृदमिति उक्तेश्वरज्ञाने फलं कथयति ज्ञात्वेति यज्ञेषु तपःसु च द्विधा भोक्तृत्वं व्यनक्ति कर्तृरूपेणेति हिरण्यगर्भादिव्यवच्छेदार्थं विशिनष्टि महान्तमिति स्वपरिकरोपकारिणं राजानं व्यावर्त्तयति प्रत्युपकारेति ईश्वरस्य ताटस्थ्यं व्युदस्यति सर्वभूतानामिति तर्हि तत्र तत्र व्यवस्थितकर्म तत्फलसंसर्गित्वं स्यादित्याशङ्क्याह सर्वकर्मेति नच तस्य बुद्धितद्वृत्तिसम्बन्धोऽपि वस्तुतोऽस्तीत्याह सर्वप्रत्ययेति यथोक्तेश्वरपरिज्ञानफलमभिदधाति मां नारायणमिति तदेवं कर्मयोगस्यामुख्यसन्न्यासापेक्षया प्रशस्तत्वेऽपि

### स्वामिकृतटीका ।

यत इति अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य मोक्ष एव परमयनं प्राप्यं यस्य अतएव विगता इच्छाभयक्रोधा यस्य एवंभूतो यो मुनिः स सदा जीवन्नपि मुक्त एवेत्यर्थः ॥ २८ ॥

आनन्दगिरिकृतटीका ।

ततो मुख्यसन्न्यासस्याधिक्यात्तद्वतो बुद्धिमुख्यादियुक्तस्य कामक्रोधोद्भवं वेगमिहैव सोढुं शक्तस्य शमदमादिमतो योगाधिकृतस्य त्वं पदार्थाभिज्ञस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरिति सिद्धम् ॥ २८ ॥

इति आनन्दगिरिकृतटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

स्वामीकृतटीका ॥

नन्वेवमिन्द्रियादिसंयममात्रेण कथं मुक्तिः स्यान्न तावन्मात्रेण किन्तु ज्ञानद्वारेणेत्याह भोक्तारमिति यज्ञानां तपसाञ्चैव मम भक्तैः समर्पितानां यदृच्छया भोक्तारं पालकमिति वा सर्वेषां लोकानां महान्तमीश्वरं सर्वभूतानां सुहृदं निरपेक्षोपकारिणं मन्तर्यामिणं मां ज्ञात्वा मत्प्रसादेन शान्तिं मोक्षमृच्छति प्राप्नोति ॥ विकल्पशङ्कापोहेन येनैवं योगसांख्ययोः समुच्चयः क्रमेणोक्तः सर्वज्ञं नौमि तं गुरुं ॥ २९ ॥

इति श्रीधरस्वामिकृतटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

**भाषा अनुवाद ।**

**और इसी उपायसे जिसकी इन्द्री औ मन बुद्धि आदि वशीभूत हैं और मुक्ति प्राप्तिके योग्य हैं और जिसने इच्छा भय क्रोधको दूर किया है ऐसे गुणोंसे सदा युक्त जो मुनि सो जीवनकालही मे भी मुक्त अर्थात् वह कर्म्म रहित जीवन्मुक्त है ॥ २८ ॥**

**जो कहो कि इन्द्रीमात्र वश करने से पुरुष कैसे मुक्त होय तिस पर कहते हैं कि हां मुक्ति ज्ञानहीं के द्वारा होती है देखो हमारे भक्तोंसे समर्पित यज्ञ औ तपके अयाचित रूप भोक्ता औ प्रतिपालक सर्वलोक मे श्रेष्ठ ईश्वर सबसे निरपेक्ष अन्तर्यामीरूप हमको जानिके योगी लोग मेरी अनुग्रह से शान्ति कहे मोक्ष पावते हैं ॥ २९ ॥**

**श्रीधरस्वामी कहते हैं कि जो अर्जुन को कर्म्मयोग औ ज्ञानयोग की पृथक शङ्का निवारण करके जिसने क्रमसे दोनो को एक कहा है सोई जगत के गुरुदेव श्रीकृष्ण को हम प्रणाम करते हैं ।**

**इति श्रीजगन्नाथ शुक्ल विरचितायां मनभावनी टीकायां पञ्चमोऽध्यायः ॥ ५ ॥**

## श्रीभगवानुवाच ।

अनाश्रितः कर्म्मफलं कार्य्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाऽक्रियः ॥ १ ॥

### शाङ्करभाष्यम् ।

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान् कृत्वा वहिरित्यादय उपदिष्टा स्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते तत्र ध्यानयोगस्य वहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थ स्तावद्गृहस्थेनाधिकृतेन कर्त्तव्यं कर्मेति अतस्तत् स्तौति अनाश्रित इति ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावतानुष्ठेयमेव विहितं कर्म यावज्जीवं नारुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति विशेषादारूढ़स्य च शमेनैव सम्बन्धकरणादारुरुक्षोरारूढ़स्य च शमः कर्म चोभयं कर्त्तव्यत्वेनाभिप्रेतञ्चेत् स्यात्तदारुरुक्षोरारूढस्येति शमकर्मविषयभेदेन विशेषणं विभागकरणञ्चानर्थकं स्यात् तत्राश्रमिणां कश्चित् योगमारुरुक्षुर्भवत्यारूढ़श्च कश्चिदन्येऽनारुरुक्षवो नचारूढास्तानपेक्ष्या रुरुक्षोरारूढस्य चेति विशेषणविभागकरणञ्चोपपद्यत एवेति चेन्न तस्यैवेति वचनात् पुनर्योग-

### आनन्दगिरिकृतटीका ।

ध्यानयोगप्रस्तावानन्तरं तद्योग्यताहेतुकर्मणः स्तुतिं भगवानुक्तवानित्याह श्रीभगवानिति पूर्वोत्तराध्याययोः सङ्गतिमभिदधानो वृत्तमनूद्याध्यायान्तरमवतारयति अतीतेति सम्यगदर्शनप्रकरणे ध्यानयोगस्य प्रसङ्गाभावं व्युदस्यति सम्यगिति संग्रहविवरणयोरतीतानन्तराध्याययोर्युक्तं हेतुहेतुमत्वमिति भावः अध्यायसम्बन्धमभिधायानाश्रितः कर्मफलमित्यादिश्लोकद्वयस्य तात्पर्य्यमाह तत्रेति कर्मयोगस्य संन्यासहेतोर्मर्य्यादां दर्शयितुं साङ्ख्ययोगं विचारयितुमध्याये प्रवृत्ते सतीति सप्तम्यर्थः संन्यासिना कर्त्तव्यं कर्मेत्येवं प्रतिभासं व्युदस्यति गृहस्थेनेति कर्त्तव्यत्वं स्तुतियोग्यत्वमतः शब्दार्थः समुच्चयवादी सीमाकरणमाक्षिपति नन्विति यावज्जीवश्रुतिवशात् ध्यानारोहणसामर्थ्ये सत्यपि कर्मानुष्ठानस्य दुर्वारत्वा-

## शाङ्करभाष्यम् ।

ग्रहणाच्च योगारूढस्येति य आसीत् पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शम एव कर्त्तव्यं कारणं योगफलं प्रत्युच्यत इत्यतो न यावज्जीवं कर्त्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणो योगविभ्रष्टवचनाच्च गृहस्थस्य चेत् कर्मिणो योगो विहितः षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशङ्कानुपपन्ना स्यादवश्यं हि कृतं कर्म काम्यं नित्यम्वा मोक्षस्य नित्यत्वादनारभ्यत्वेपि स्वं फलमारभत एव नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात् फलेन भवितव्यमित्यवोचामान्यथा वेदस्यानर्थक्यप्रसङ्गादिति नच कर्मणि सत्युभय विभ्रष्टवचनमर्थवत् कर्मणो विभ्रंशकारणानुपपत्तेः कर्म कृतमीश्वरे संन्यस्येत्यतः कर्त्तरि कर्मफलं नारभत इति चेन्नेश्वरे सन्यासस्याधिकतरफलहेतुत्वोपपत्तेर्मोक्षायैवेति चेत् स्वकर्मणां कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय योगसहितः योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशाशंका युक्तैवेति चेन्नैकाकी यतचित्तात्मा निराशी रपरिग्रहो ब्रह्मचारि-

### आनन्दगिरिकृतटीका ।

दिति हेतुमाह यावतेति भार्य्यावियोगादिप्रतिबन्धाद्यावज्जीव श्रुतिचोदितकर्मानुष्ठानवत् वैराग्यप्रबन्धादपि तदननुष्ठानसम्भवाद्भगवतो विशेषवचनाच्च न यावज्जीवं कर्मानुष्ठानप्रसक्तिरिति परिहरति नारुरुक्षोरिति उक्तमेवार्थं व्यतिरेकद्वारेण विवृणोति आरुरुक्षोरित्यादिना आरोढुमिच्छतीत्यारुरुक्षु रत्वारोहणेच्छाविशेषणमारोहणं कृतवानित्यत्र पुनरिच्छाविषयभूततमारोहणं विशेषणमेवं शमकर्म विषययोर्भेदेन विशेषणं मर्य्यादाकरणानङ्गीकरणे विरुद्धमापद्येत तयोरेवं विभागकरणञ्च भगवतसीमानङ्गीकारेण युज्येतेत्यर्थः विशेषणविभागकरणयोरन्यथोपपत्तिमाशङ्कते तत्रेति व्यवहारभूमिः सप्तम्यर्थः षष्ठी निर्द्धारणे भवत्वधिकारिणां त्रैविध्यं तथापि प्रकृते विशेषणादौ किमायातामित्यशङ्क्य तृतीयापेक्षया तदुपपत्तिरित्याह तानपेक्ष्येति आरुरुक्षोरारूढस्य च भेदे तस्यैवेति प्रकृतपरामर्शानुपपत्तिरिति दूषयति न तस्येति यद्यनारुरुक्षुं पुरुषमपेक्ष्याऽऽरुरुक्षोरिति विशेषणं तस्य च कर्मारोहणकारणमनारूढञ्च पुरुषमपेक्ष्यारूढस्येति विशेषणं तस्य च शमः सन्न्यासो योगफलप्राप्तौ कारणमिति विशेषणविभागकरणयोरुपपत्तिस्तदारुरुक्षोरारूढस्य च भिन्नत्वात् प्रकृतपरामर्शिनः तच्छब्दस्यानुपपत्तेर्न युक्तमित्थं विशेषणाद्युपपादनमित्यर्थः किञ्च योगमारुरुक्षोस्तदारोहणे कारणं कर्मेत्युक्त्वा पुनर्योगारूढस्येति योगशब्दप्रयोगात् यो योगं पूर्वमारुरुक्षुरासीत्तस्यैवापेक्षितं योगमारूढस्य तत्फलप्राप्तौ कर्मसंन्यासः शमशब्दवाच्यो

शाङ्करभाष्यम्।

व्रते स्थित इति कर्मसन्न्यासविधानात् नचात्र ध्यानकाले स्त्रीसहायत्वाशंका येनैकाकित्वं विधीयते नच गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलं उभयभ्रष्टप्रश्नानुपपत्तेश्च अनाश्रित इत्यनेन कर्मिण एव सन्न्यासित्वं योगित्वञ्चोक्तं प्रतिषिद्धञ्च निरग्नेरक्रियस्य च सन्न्यासित्वं योगित्वञ्चेति चेन्न ध्यानयोगं प्रति वहिरङ्गस्य सतः कर्मणः फलाकांक्षा सन्न्यासस्तुतिपरत्वान्न केवलं निरग्निरपि य एव सन्न्यासी योगी च किं तर्हि कर्म्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन् सत्त्वशुद्ध्यर्थं सन्न्यासी योगी च भवतीति स्तूयते नचैकेन वाक्येन कर्मफलासङ्गसन्न्यासस्तुति श्चतुर्थाश्रमप्रतिषेधकोपपद्यते नच प्रसिद्धनिरग्नेरक्रियस्य परमार्थसन्न्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं सन्न्यासित्वं योगित्वञ्च प्रतिषेधति भगवान् स्ववचनविरोधाच्च सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते मौनी सन्तुष्टो येनकेन-

आनन्दगिरिकृतटीका।

हेतुत्वेन कर्त्तव्य इति वचनादारुरुक्षोरारूढस्य चाभिन्नत्वप्रत्यभिज्ञानाच्च तयोर्भिन्नत्वं शङ्कितुं शक्यमित्याह पुनरिति यत्तु यावज्जीवश्रुतिविरोधात् योगारोहणसीमाकरणं कर्मणोऽनुचितमिति तत्राह उच्यत इति पूर्वोक्तरीत्या कर्मतत्त्यागयोर्विभागोपपत्तौ श्रुतेरन्यविषयत्वात् योगमारूढस्य मुमुक्षोर्जिज्ञासमानस्य नित्यनैमित्तिककर्मस्वपि परित्यागसिद्धिरित्यर्थः इतश्च यावज्जीवं कर्मकर्त्तव्यत्वं न भवतीत्यर्थः नतु योगभ्रष्टशब्देन गृहस्थस्यैवाभिधानात्तस्यैवास्मिन्नध्याये योगविधानाद्योगारोहणयोग्यत्वे सत्यपि यावज्जीवं कर्म्म कर्त्तव्यमिति नेत्याह गृहस्थस्येति तेनापि मुमुक्षुणा कृतस्य कर्म्मणो मोक्षातिरिक्तफलानारम्भकत्वाद्योगभ्रष्टोऽसौ छिन्नाभ्रमिव नश्यतीति शङ्का सावकाशेत्याशङ्क्याह अवश्यं हीति अपौरुषेयान्निर्दोषाद्वेदात् फलदायित्वी कर्म्मणः स्वाभाविकी शक्तिरवरा ब्रह्मभावस्य च स्वतः सिद्धत्वान्न कर्म्मफलवत्त्वमिति मोक्षातिरिक्तस्यैव फलस्य कर्मारम्भकमिति कर्म्मिणि योगभ्रष्टेऽपि कर्म्मगतिं गच्छतीति निरवकाशा शङ्केत्यर्थः नतु मुमुक्षुणा काम्यप्रतिषिद्धयोगकरणात् कृतयोश्च नित्यनैमित्तिकयोरफलत्वात् कथं तदीयस्य कर्म्मणो नियमेन फलारम्भकत्वं तत्राह नित्यस्य चेति चकारेण नैमित्तिकं कर्मानुकृष्यते वेदप्रमाणकत्वेऽपि नित्यनैमित्तिकयोरफलत्वे दोषमाह चान्यथेति कर्म्मणनुष्ठितस्य फलारम्भकत्वध्रौव्यात् गृहस्थो योगभ्रष्टोपि कर्मगतिं गच्छतीति न तस्य नाशाऽशङ्केति शेष इतोऽपि गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीत्याह

## शाङ्करभाष्यम् ।

चिदनिकेतन: स्थिरमति र्विहाय कामान् य: सर्व्वान् पुमांश्चरति निस्पृह: सर्व्वारम्भपरित्यागीति च तत्र तत्र भगवता स्ववचनानि दर्शितानि तैर्विरुध्येत चतुर्थाश्रमविप्रतिषेधश्च तस्मात् मुनेर्योगमारुरुक्षो: प्रतिपन्नगार्हस्थ्यस्याग्नि-होत्रादिकर्म्मफलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वबुद्धिशुद्धि-द्वारेण प्रतिपद्यत इति स सन्न्यासी च योगी चेति स्तूयते अनाश्रित इति अना-श्रित न आश्रितोऽनाश्रित: किं कर्म्मण: फलं यत्तदनाश्रित: कर्म्मफल: तृष्णा-रहित इत्यर्थ: यो हि कर्म्मफले तृष्णावान् स कर्म्मफलमाश्रितो भवति अयन्तु तद्विपरीतोऽनाश्रित: कर्म्मफलं एवम्भूत:सन् कार्य्यं कर्त्तव्यं नित्यं काम्यवि-परीतमग्निहोत्रादिकं करोति निर्वर्तयति य: कश्चित् य ईदृश: कर्म्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येवमर्थमाह स सन्न्यासी च योगी चेति सन्न्यास:

### आनन्दगिरिकृतटीका ।

नचेति ज्ञानं कर्म चेत्युभयं ततो भ्रष्टोऽयं नश्यतीति वचनं गृहस्थे कर्मणि सति नार्थवद्भवितु-मलं तस्य कर्मनिष्ठस्य कर्मणो विभ्रंशे हेत्वभावात् तत्फलस्यावश्यकत्वादित्यर्थ: ननु तस्य कर्मणो मुमुक्षुणा भगवति समर्पणात् कर्तरि फलानारम्भकत्वादस्ति विभ्रंशकारण-मिति शङ्कते कर्मेति राजाराधनबुद्ध्या धनधान्यादिसमर्पणस्याधिकफलहेतुत्वोपलम्भादीश्वरे समर्पणं न भ्रंशकारणमिति दूषयति नेत्यादिना अधिकफलहेतुत्वेऽपि मोक्षहेतुत्वमिष्यता-मिति शङ्कते मोक्षायेति तदेव चोद्यं विवृणोति स्वकर्मणामिति सहकारिसामर्थ्यात्तस्य फलान्तरं प्रत्युपायत्वासिद्धिरिति हेतुं सूचयति योगेति ध्यानसहितस्य सन्न्यासस्य मोक्षो-पयिकत्वे कुतो योगभ्रष्टमधिकृत्य नाशाऽशङ्केत्याशङ्क्याह योगाश्चेति सहकार्यभावे सामग्र्य-भावात् फलानुपपत्तेर्युक्ता नाशाऽशङ्केत्यर्थ: ध्यानसहितमीश्वरे कर्मसमर्पणं मोक्षायेत्यत्र प्रमाणाभावात् गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीति दूषयति नेति गृहस्थस्य योग-भ्रष्टशब्दवाच्यत्वाभावे हेत्वन्तरमाह एकाकीति न खल्वेतानि विशेषणानि गृहस्थसमवायीनि सम्भवन्ति तेन तस्य ध्यानयोगविध्यभावात् न तंप्रति योगभ्रष्टशब्दवचनमुचितमित्यर्थ: एका-कित्ववचनं गृहस्थस्यापि ध्यानकाले स्त्रीसहायत्वाभावाभिप्रायेण भविष्यतीत्याशङ्क्य अग्नि-होत्रादिवज्ज्ञानस्य पत्नीसाध्यत्वाभावादप्राप्तप्रतिषेधप्रसङ्गान्नैवमित्याह नचात्रेति विशेष-णान्तरपर्यालोचनयापि नायमेकाकिशब्दो गृहस्थपरो भवितुमर्हतीत्याह नचेति किञ्च गृहस्थस्यैकाकित्वादिविवक्षितध्यानयोगविधौ तं प्रत्युभयभ्रष्टप्रश्नो नोपपद्यत इत्याह

## शाङ्करभाष्यम् ।

परित्यागः स यस्यास्ति स सन्न्यासी च योगी च योगश्चित्तसमाधानं स यस्यास्ति स योगी चेत्येवं गुणसम्पन्नोऽयं मन्तव्यो न केवलं निरग्निरक्रिय एव सन्न्यासी योगी चेति मन्तव्यः निर्गता अग्नयः कर्माङ्गभूता यस्मात् स निरग्निरक्रियश्च अनग्निसाधना अप्यविद्यमाना क्रियास्तपोदानादिका यस्यासावक्रियः ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु सन्न्यासित्वं योगित्वञ्च प्रसिद्धं कथमिह साग्नेः सक्रियस्य सन्न्यासित्वं योगित्वञ्चाप्रसिद्धमुच्यते इति नैष दोषः कयाचिद् गुणवृत्त्योभयस्य सम्पिपादयिषितत्वात् कर्मफलसंकल्पसन्न्यासात् सन्न्यासित्वं योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद्योगित्वञ्चेति ॥ १ ॥

### आनन्दगिरिकृतटीका ।

अथेति जडिम्नगृहस्थं प्रति उभयस्मात् ध्यानात् कर्मणश्च विभ्रष्टत्वमुपेत्य प्रष्टुं युज्यते तस्य ध्यानात् भ्रंशेऽपि कर्मणस्तदभावादनुष्ठितकर्मवशात् फलप्रतिलम्भात्ततो यथोक्तप्रश्नालोचनया न गृहस्थं प्रति ध्यानविधानोपपत्तिरित्यर्थः ननु भगवता सन्न्यासस्य प्रतिषिद्धत्वात् गृहस्थस्यैव योगविधानात्तस्यैव योगभ्रष्टशब्दवाच्यत्वमिति शङ्कते अनाश्रित इत्यनेनेति भगवद्वाक्यं न प्रतिषेधपरमिति परिहरति न ध्यानेति स्तुतिपरत्वमेव स्फोरयति न केवलमिति सत्त्वशुद्ध्यर्थमनुतिष्ठन्निति सम्बन्धः वाक्यस्योभयपरत्वमाशङ्क्य वाक्यभेदप्रसङ्गान्नैवमित्याह नचेति इतोऽपि भगवतः सन्न्यासाश्रमप्रतिषेधोऽभिप्रेतो न भवतीत्याह नच प्रसिद्धमिति तस्य प्रसिद्धं सन्न्यासित्वं योगित्वञ्चेति सम्बन्धः प्रसिद्धत्वमेव व्याकरोति श्रुतीति इतोऽपि सन्न्यासाश्रमं भगवान्नप्रतिषेधतीत्याह स्ववचनेति विरोधमेव साधयति सर्वकर्माणीत्यादिना अनाश्रित इत्यादिवाक्यस्य यथाश्रुतार्थत्वानुपपत्तेः स्तुतिपरत्वमुपपादितमुपसंहरति तस्मादिति कर्मफलसंन्यासित्वमत्र सुनिश्चितार्थः स्तुतिपरं वाक्यमक्षरयोजनार्थमुदाहरति अनाश्रित इति कर्मफलेऽभिलाषो नास्तीत्येतावता कथं तदनाश्रितत्ववाचो युक्तिरित्याशङ्क्य व्यतिरेकमुखेन विशदयति यो हीति कार्य्यमित्यादि व्याकरोति एवम्भूतः सन्निति कथं कर्मिणः संन्यासित्वं योगित्वञ्च कर्मित्वविरोधादित्याशङ्क्याह य ईदृश इति स्तुतेरत्र विवक्षितत्वान्नानुपपत्तिश्चोदनीयेति मन्वानः सन्नाह इत्येवमिति न निरग्निरित्यादेरर्थमाह न केवलमिति अग्नयो गार्हपत्याऽऽहवनीयाऽन्वाहार्य्यपचनप्रभृतयः अनग्नित्वे सिद्धमक्रियत्वमग्निसाध्यत्वात् क्रियाणां तथाच न निरग्निरित्येतावतैवापेक्षितसिद्धेर्नचाक्रिय इत्यनर्थकमर्थपुनरुक्तेरिति तत्राह अग्नीति उत्तरश्लोकस्य तात्पर्य्यं दर्शयितुं व्यावर्त्त्यामाशङ्कां दर्शयति ननु चेति प्रसिद्धं

आनन्दगिरिकृतटीका ।

परिव्राज्याप्रसिद्धिरुपादीयमाना प्रसिद्धिविरुद्धेति चोद्यं दूषयति नैष दोष इति उभयस्य साग्नौ सक्रिये च संन्यासित्वस्य योगित्वस्य चेत्यर्थः गुणवृत्त्योभयसम्पादनं प्रश्न पूर्वकं प्रकटयति तत् कथमित्यादिना ॥ १ ॥

स्वामिकृतटीका ।

चित्ते शुद्धेऽपि न ध्यानं विना संन्यासमात्रतः मुक्तिः स्यादिति षष्ठेऽस्मिन् ध्यानयोगो वितन्यते पूर्वाध्यायान्ते संक्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायारम्भस्तत्र तावत् सर्वकर्माणि मनसा संन्यस्येत्यारभ्य संन्यासपूर्विकाया ज्ञाननिष्ठाया स्तात्पर्येणाभिधानात् दुःखरूपत्वाच्च कर्मणः सहसा संन्यासातिप्रसङ्गं प्राप्तं वारयितुं संन्यासादपि श्रेष्ठत्वेन कर्मयोगं स्तौति अनाश्रित इति द्वाभ्यां कर्मफलमनाश्रितोऽनपेक्षमाणः सन्नवश्यं कार्यतया विहितं कर्म यः करोति स एव संन्यासी योगी च नतु निरग्निरग्निसाध्येष्ट्याख्य कर्मत्यागी नचाक्रियोऽग्निसाध्यपूर्त्ताख्यकर्मत्यागी च ॥ १ ॥

## भाषा अनुवाद ।

श्रीधरस्वामी छठये अध्याय के आरम्भ मे वर्णन करते हैं कि मनुष्योंको चित्तशुद्ध होने से भी ध्यान के विना केवल सन्यास मात्र से मुक्ति नहीं मिलती है इसी हेतु से श्रीभगवान् छठयें अध्याय मे ध्यानयोग विस्तार करि कहते हैं कि पञ्चम अध्याय के अन्तभाग मे सङ्क्षेप से कहा गया जो ध्यान योग सोई विस्तार करने को छठयें अध्याय का आरम्भ अर्थात् सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी इस ५ अध्याय के १३ स्लोक से सब कर्मत्यागपूर्वक ज्ञाननिष्ठा की प्रशंसा करने से और कर्म अनुष्ठान क्लेशकारी है इससे हठात् कर्मत्याग की अवस्था विना भी कर्म का त्याग मनुष्यों के मन मे होय उठै है तिसके निवारन के अर्थ कर्म छोड़ने से कर्म करना श्रेष्ठ है यह कहि कर्मयोग की बडाई करते हुए भगवान् कहते हैं कि अनाश्रित कहे कर्मफल की आकांक्षा रहित होय कर सब कर्म्म अवश्य ही कर्त्तव्य हैं इस विचार से जो विहित कर्म्मका अनुष्ठान करै सोई सन्यासी औ सोई योगी है नहीं तो निरग्नि कहे अग्निसाध्य यज्ञादि कर्मत्यागी औ अक्रिय अर्थात् विना अग्निके कर्म कुआं

यं सन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

शाङ्करभाष्यम् ।

गौणमुभयं न पुनर्मुख्य मन्यासित्वं योगीत्वञ्चा भिमतमित्येतमर्थं दर्शयितुमाह यं सन्यासमिति यं सर्वं कर्म तत्फलपरित्याग लक्षणं परमार्थं सन्यासं सन्यासमिति प्राहुः श्रुतिस्मृतिविदो योगं कर्मानुष्ठानलक्षणं तं परमार्थ सन्यासं विद्धि जानीहि हे पाण्डव कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसन्यासेन कीदृशं सामान्यमङ्गी-कृत्य तद्भाव उच्यत इत्यपेक्षाया मिदमुच्यते अस्ति परमार्थ सन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य यो हि परमार्थसन्यासी सत्यक्तसर्वकर्मसाधनतया सर्वकर्म तत्फलविषयं सङ्कल्पं प्रवृत्तिहेतु कामकारणं सन्यस्यति अस्यापि

आनन्दगिरिकृतटीका ।

सन्यस्तेति मुख्ये संन्यासित्वादौ किमिति गौणमुभयमभीष्टमित्याशङ्क्य मुख्यस्य कर्मसन्यासस्य-वान्नौणमेतं स्तुतिसिद्ध्यर्थं तदिष्टमित्याह न पुनरिति चित्तव्याकुलत्वहेतुकामना त्यागाच्चित्त-समाधानसिद्धेर्योगित्वं कर्मिणोपि युक्तं संन्यासित्वं तु तस्य विरुद्धमितिशङ्कमानं प्रत्युक्तेऽर्थे श्लोकमवतारयति इत्येतमिति परमार्थसंन्यासं प्राहुरिति सम्बन्धः ईदृशं संन्यासस्य प्रामा-णिकाभ्युपगतत्वादितीतिशब्दो योऽन्यो योगं फलतृष्णां परित्यज्य समाहितचेतस्तेन क्रियते यदुक्तं सन्यासित्वं योगित्वञ्च कर्मिणस्य गौणमिति तदुत्तरार्द्धयोजनया प्रकटयितुमुत्तरार्द्ध-मुत्थापयति कर्मयोगस्येति कर्मयोगस्य परमार्थसन्यासेन कर्तृद्वारकं साम्यमुक्तं व्यक्तं करोति योहीति त्यक्तानि सर्वाणि कर्माणि साधनानि च येन स तथोक्तस्य भावस्तत्ता तया सर्व-कर्मविषयं तत्फलविषयञ्च सङ्कल्पं त्यजतीत्यर्थः सङ्कल्पत्यागे तत्कार्यकामत्यागः तत्त्यागे तज्जन्यप्रवृत्तित्यागश्च सिध्यतीत्यभिसन्धाय विशिनष्टि प्रवृत्तीति कर्मिणमपि यथोक्त

भाषा अनुवाद ।

ताल बावडी खनन तथा दानादि कर्मत्यागी होके लोग अपने को योगी समझेंगे किन्तु ऐसा नहीं हैं तात्पर्य यह कि फल ही का त्याग उचित है कर्म का त्याग नही अर्थात् ऊपर लिखे सब कर्म विष्णुप्रीत्यर्थ करना ही चाहिये सोई कहा अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥ १ ॥

## शाङ्करभाष्यम्।

कर्मयोगी कर्म कुर्वाण एव फलविषयं सङ्कल्पं सन्यस्यतीत्येतमर्थं दर्शयन्नाह नहि यस्मादसन्यस्तोऽसङ्कल्पोऽसन्यस्तोऽपरित्यक्तः फलविषयसङ्कल्पोऽभिसन्धिर्येन सोऽसंन्यस्तसङ्कल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति न सम्भवतीत्यर्थः फलसङ्कल्पस्य चित्तविक्षेपहेतुत्वात् तस्माद्यः कश्चन योगी कर्मी संन्यस्तफलसङ्कल्पो भवेत् स योगी समाधानवान् भवति न विक्षिप्तचित्तो भवति चित्तविक्षेपहेतोः फलसङ्कल्पस्य संन्यस्तत्वात् इत्यभिप्रायो योगाङ्गत्वेन कर्मानुष्ठानात् कर्मफलसङ्कल्पस्य वा चित्तविक्षेपहेतोः परित्यागात् योगित्वञ्चेति संन्यासित्वञ्चेत्यभिप्रेतमुच्यते एवं परमार्थसंन्यासकर्मयोगयोः कर्त्तृद्वारकं सन्याससामान्यमपेक्ष्य यं सन्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेति कर्मयोगस्य स्तुत्यर्थं सन्यासत्वमुक्तं ॥ २ ॥

## आनन्दगिरिकृतटीका।

सङ्कल्पसन्यासित्वमस्तीत्याह अयमपीति तदपरित्यागे व्याकुलचेतस्तया कर्मानुष्ठानस्यैव दुःशक्यत्वादित्यर्थः उक्तमेव साम्यं व्यक्तीकुर्वन् व्यतिरेकं दर्शयति इत्येतमिति फलसङ्कल्पापरित्यागे किमिति समाधानवत्ताभावस्तत्राह फलेति व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनोपसंहरति तस्मादिति हिशब्दार्थस्य यस्मादित्युक्तस्य तस्मादित्यनेन सम्बन्धः कर्मिणां प्रति यथोक्तविधौ हेतुसद्भावमभिप्रेत्य द्वितीयविधौ हेतुमाह चित्तविक्षेपेति पूर्वश्लोके पूर्वोत्तरार्द्धाभ्यामुक्तमनुवदति एवमिति ॥ २ ॥

## स्वामिकृतटीका।

कुत इत्यपेक्षायां कर्मयोगस्यैव सन्यासत्वं प्रतिपादयन्नाह यमिति यं सन्यासं प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुः सन्यास एवात्यरेचयदित्यादि श्रुतय इति केवलात् फलसन्यासाङ्गतो योगमेव तं जानीहि कुत इत्यपेक्षायामिति शब्दोक्तो हेतुर्योगेऽप्यस्तीत्याह नहीति न सन्यस्तः फलसङ्कल्पो येन स कर्मनिष्ठो ज्ञाननिष्ठो वा कश्चिदपि योगी नहि भवति अतः फलसङ्कल्पत्यागादेव चित्तविक्षेपाभावात् योगी च भवत्येव स इत्यर्थः ॥ २ ॥

## भाषा अनुवाद।

यह सुनि अर्जुन ने पूछा कि हे कृष्ण किस कारण से वे मनुष्य योगी औ सन्यासी नहीं हैं इस पर कर्मयोग को सन्यास प्रतिपादन करते हुए भग-

आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

शाङ्करभाष्यम् ।

ध्यानयोगस्य फलनिरपेक्षः कर्म्मयोगी वहिरङ्गसाधनमिति तं सन्यासत्वेन स्तुत्वाऽधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति आरुरुक्षोरिति आरुरुक्षो रारोढुमिच्छतः अनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः कस्य तस्यारुरुक्षोर्मुनेः कर्मफलसन्यासिन इत्यर्थः किमारुरुक्षोर्योगं कर्मकारणं साधनमुच्यते योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः यावद्यावत् कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते तथा सति स झटिति योगारूढो भवति तथाचोक्तं व्यासेन नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता शमता सत्यता च शीलं स्थिति र्दण्डनिधान मार्जवं ततस्ततश्चोपरमः क्रियाभ्य इति ॥ ३ ॥

आनन्दगिरिकृतटीका ।

परमार्थसन्यासस्य कर्मयोगान्तर्भावे कर्मयोगस्यैव सदा कर्त्तव्यत्वमापद्येत तेनेतरस्यापि कृतत्वसिद्धेरित्याशङ्कोक्तानुवादपूर्वकमुत्तरश्लोकतात्पर्यमाह ध्यानयोगस्येति भाविन्या वृत्त्या मुनेर्योगमारोढुमिच्छोरिष्यमाणस्य योगारोहणस्य कर्महेतुत्वे दपेक्षितं योगमारूढस्यापि तत्फलप्राप्तौ तदेव कारणं भविष्यति तस्य कारणत्वे कृच्छ्रशक्तित्वादित्याशंक्याह

भाषा अनुवाद ।

वान् कहते हैं कि हे पाण्डव अर्जुन सन्यास मानहो को जो सब श्रुतियोंने श्रेष्ठ कहा है सोई फल सन्यासरूप कर्म को भी जानो जो कहो कि कैसे जाने तो कहते हैं कि इति शब्दसे कहे जो हेतु सो योग मे भी हैं सोई छठ श्लोक से कहते हैं कि कर्मनिष्ठ या ज्ञाननिष्ठ जो होय पर फल की इच्छाके त्याग विना योगी नहीं है इससे फलकी कामनामे जिसका चित्त विक्षिप्त नहीं है सोई योगी औ सन्यासी है सोई कहा नह्य सन्यस्त सङ्कल्पो योगी भवति कश्चन ॥ २ ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

शाङ्करभाष्यम् ।

अथेदानीं यदा योगारूढो भवतीत्युच्यते यदेति यदा समाधीयमानचित्तो भवति योगी हीन्द्रियार्थेषु इन्द्रियाणामार्थाः शब्दादयस्तेष्विन्द्रियार्थेषु

आनन्दगिरिकृतटीका ।

योगारूढस्येति अनारूढस्येत्येतस्यैवार्थं स्फुटयति ध्यानेति कुनित्वं कर्मफलसन्न्यासिन्यौपचारिकमित्याह कर्मफलेति साधनं चित्तशुद्धिद्वारा ध्यानयोगप्राप्तीच्छायामिति शेषः तस्यैत प्रकृतस्य कर्मिणो ग्रहणं एवकारो भिन्नक्रमः शमशब्देन सम्बध्यते कस्मान्ययोगव्य च्छेदेन शमो हेतुरिति तत्राह योगारूढत्वस्येति सर्वव्यापारोपरमरूपोपशमस्य योगारूढत्वे-विष्टत्वेति यावद्यावदिति सर्वकर्मनिष्टत्तावायासाभावाद्दशीकृतस्येन्द्रियग्रामस्य चित्तसमाधाने योगारूढत्वं सिध्यतीत्यर्थः सर्वकर्मोपरमस्य पुरुषार्थसाधनत्वे पौराणिकीं सम्मतिमाह तथाचेति एकता सर्वेषु भूतेषु वस्तुनो द्वैताभावोपलक्षितत्वमिति प्रतिपत्तिः समता तेष्वौपाधिकविशेषेऽपि स्वतो निर्विशेषत्वधीः सत्यता तेष्वेव हितवचनं शीलं स्वभावसम्पत्तिः स्थितिः स्थैर्यं दण्डनिधानमहिंसनं आर्जवमवक्रत्वं क्रियाभ्यः सर्वाभ्यः सकाशादुपरतिश्चेत्येतदुक्तं सर्वं यथा याष्टशमेतादृशं नान्यद्ब्राह्मणस्य वित्तं पुरुषार्थसाधनमस्ति तस्मादेतदेवास्य निरतिशयं पुरुषार्थसाधनमित्यर्थः ॥ ३ ॥

स्वामिकृतटीका ।

तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशंक्य तस्यावधिमाह आरुरुक्षोरिति ज्ञानयोगमारोढुं प्राप्तुमिच्छोः पुंसस्तदारोहे कारणं कर्मोच्यते चित्तशुद्धिकरत्वात् तं योगमारूढस्य तु तस्यैव ज्ञाननिष्ठस्य शमोयो विक्षेपककर्मोपरमो ज्ञानपरिपाके कारणमुच्यते ॥ ॥

भाषा अनुवाद ।

तो फिरि जावतजीव कहे जिन्दगीभर कर्म योगही करना चहिये जो ऐसी शंका करो तो कर्मयोगकी अवधि कहते हैं कि ज्ञानयोगमे आरूढ होनेकी इच्छा करनेवाले पुरुषोंको उस राहके चढ़नेमे कर्महीं को कारण रूप कहा है क्योंकि निष्काम कर्म चित्तशुद्धि करता है और ज्ञानयोग आरूढ कहे ज्ञानीको शम कहे विक्षेपकारी कर्म सकलका त्यागही उचित है जिसलिये त्याग ज्ञानपरिपाक का कारणरूप कहा है ॥ ३ ॥

शाङ्करभाष्यम् ।

कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जते अनुषङ्गं कर्त्तव्यताबुद्धिं न करोतीत्यर्थः सर्वसंकल्पसन्न्यासी सर्व्वान् संकल्पान्निहामुत्रार्थकामहेतून् सन्न्यसितुं शीलं अस्येति स सर्वसंकल्पसन्न्यासी योगारूढ प्राप्तयोग इत्येतत्तदा तस्मिन् काले योगारूढ उच्यते सर्वसंकल्पसन्न्यासीति वचनात् सर्वांश्च कामन् कामात्मकान् सर्वाणि च कर्माणि सन्न्यसेदित्यर्थः संकल्पमूला हि सर्वे कामाः संकल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः कामं जानामि ते मूलं संकल्पात्त्वं हि जायसे न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि इत्यादिस्मृतेः सर्वकामपरित्यागे च सर्वकर्मसन्न्यासः सिद्धो भवति स यथाकामोभवति तत्क्रतुर्भवति तत्कर्म कुरुते इत्यादिश्रुतिभ्यो यद्यद्धि कुरुते कर्म तत्तत् कामस्य चेष्टितमित्यादिस्मृतिभ्यश्च न्यायाच्च नहि सर्वसंकल्पसन्न्यासे कश्चित् स्पन्दितुमपि शक्तस्तस्मात् सर्वसंकल्पसन्न्यासीति वचनात् सर्वान् कामान् सर्व्वाणि कर्माणि च त्याजयति भगवान् ॥ ४ ॥

आनन्दगिरिकृतटीका ।

योगप्राप्तौ कारणकथनानन्तरं तत्प्राप्तिकालं दर्शयितुं श्लोकान्तरमवतारयति अथेति समाधानावस्था यदेत्युच्यते अतएवोक्तं समाधीयमानचित्तो योगीति शब्दादिषु कर्मसु चानुषङ्गस्य योगारोहणप्रतिबन्धकत्वात्तदभावस्य तदुपायत्वं प्रसिद्धमिति द्योतयितुं हीत्युक्तं सर्वेषामपि सङ्कल्पानां योगारोहणप्रतिबन्धकत्वमभिप्रेत्य सर्वसङ्कल्पसन्न्यासीत्यत्र विवक्षितमर्थमाह सर्वानिति सर्वसङ्कल्पसन्न्यासेऽपि सर्वेषां कामानां कर्मणाञ्च प्रतिबन्धकत्वसम्भवे कुतो योगप्राप्तिरित्याशङ्क्याह सर्वेति सर्वसङ्कल्पपरित्यागे यथोक्तविध्यनुष्ठानमयत्नसिद्धमिति मन्वानः सचाह सङ्कल्पेति मूलोन्मूलने च तत्कार्यनिवृत्तिरयत्नसुलभेति भावः तत्र प्रमाणमाह सङ्कल्पमूल इति तत्रान्वयव्यतिरेकावभिप्रेत्योक्तमुपपादयति कामेति सर्वसङ्कल्पाभावे कामाभाववत् कर्माभावस्य सिद्धत्वेऽपि कर्मणां कामकार्यत्वात्तन्निवृत्तिप्रत्युक्तामपि निवृत्तिमुपन्यस्यति सर्वकामेति यदुक्तं कर्मणां कामकार्यत्वं तत्र श्रुति स्मृती प्रमाणयति स यथेति स पुरुषः स्वरूपमजानन् यत्फलकामो भवति तत्साधनमनुष्ठेयतया बुद्धौ धारयतीति तत् क्रतुर्भवति यच्चानुष्ठेयतया गृह्णाति तदेव कर्म बहिरपि करोतीति कामाधीनं कर्मेत्यर्थः कामजन्यं कर्मेत्यन्वयव्यतिरेकसिद्धमिति द्योतयितुं स्मृतौ

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५

भाषा अनुवाद।

यदैवं योगारूढ़स्तदा तेनात्मनोद्धृतो भवति संसारादनर्थव्रातादत उद्धरेदिति उद्धरेत् संसारसागरे निमग्नमात्मनात्मानं तत उत उर्द्ध्वं हरेत् उद्धरेत् योगारूढ़तामापादयेदित्यर्थः नात्मान मवसादये न्नाधो नयेत् आत्मैव हि यस्मादात्मनो बन्धु र्नह्यन्यः कश्चिद् बन्धुर्यः संसारमुक्तये भवति बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादि बन्धनायतनत्वात्त-स्मायुक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति आत्मैव रिपुः शत्रुर्योऽन्यो-पकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति॥ ५॥

आनन्दगिरिकृतटीका।

हि शब्दः न्यायमेव दर्शयति नहि सर्वसङ्कल्पेति स्वापादावदर्शनादित्यर्थः नित्यनैमित्तिक-कर्मानुष्ठानं दूरनिरस्तमिति वक्तुमपिशब्दः श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति तस्मा-दिति॥ ४॥

स्वामिकृतटीका।

कीदृशोऽयं योगारूढ़ो यस्य शमः कारणमुच्यत इत्यत्राह यदेति इन्द्रियार्थेष्विन्द्रिय-भोगेषु तत्साधनेषु च कर्मसु यदा नानुषज्जते आसक्तिं न करोति तत्र हेतुः आसक्तिमूल-भूतान् सर्वान् भोगविषयान् कर्मविषयांश्च सङ्कल्पान् सन्न्यसितुं त्यक्तुं शीलं यस्य स तदा योगारूढ़ उच्यते॥ ४॥

भाषा अनुवाद।

जो पूछो कि वह ज्ञानयोग आरुढ पुरुष जिसको विक्षेपकारी कर्म का त्याग कहागया कैसा होता है तो कहते हैं कि जब इन्द्रियोंके भोग जो विषय तिनमे और भोगके साधनभूत कर्मोंमे आसक्त नहोय और कर्मसंकल्प को छोडि सकै तब उसको जोगारूढ़ कहते हैं॥ ४॥

बन्धुरात्माऽऽत्मनस्तस्य येनैवाऽऽत्माऽऽत्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेताऽऽत्मैव शत्रुवत् ॥ ६ ॥

आनन्दगिरिकृतटीका ।

योगारूढस्य किं स्यादित्याशङ्क्याह यदेवमिति योगारोहस्य दृष्टादृष्टोपायैरवश्यकर्त्तव्यतायै मुक्तिहेतुत्वं तद्विपर्ययद्वाराः पतनहेतुत्वञ्च दर्शयति आ इति तत्र हेतुमाह आत्मैव हीति उद्धरणापेक्षामात्मनः सूचयति संसारेति संसारादुद्धरणं कीदृगित्याशङ्क्याह योगारूढतामिति योगप्राप्त्यवस्था तु न कर्त्तव्येत्याह नात्मानमिति योगप्राप्त्युपायश्चेन्नानुष्ठीयते तदा योगाभावे संसारपरिहारासम्भवादात्माधो नीतः स्यादित्यर्थः नन्वात्मानं संसारे निमग्नं तदा यो बन्धुस्तमुद्धरिष्यति नेत्याह आत्मैव हीति कुतोऽवधारणमन्यस्यापि प्रसिद्धस्य बन्धोः सम्भवादित्याह न हीति अन्यो बन्धुः सन्नपि संसारमुक्तये न भवतीत्येतदुपपादयति बन्धुरपीति स्नेहादीत्यादिशब्दात्तदनुगुणप्रवृत्तिविषयत्वं गृह्यते आत्मातिरिक्तस्यापि शत्रोरपकारिणः दुर्निरूपत्वादवधारणमनुचितमित्याशङ्क्याह योऽन्य इति ॥ ५ ॥

स्वामिकृतटीका ।

अतो विषयासक्तित्यागे मोक्षं तदासक्तौ च बन्धं पर्य्यालोच्य रागादिस्वभावं त्यजेदित्याह उद्धरेदिति आत्मना विवेकयुक्तेनात्मानं संसारादुद्धरेत् नत्ववसादयेदधो नयेत् हि यत आत्मैव मनः सङ्गाद्युपरत आत्मनः स्वस्य बन्धुरुपकारकः रिपुरपकारकः ॥ ५ ॥

## भाषा अनुवाद ।

देखो विषयोंकी इच्छानिवृत्ति होनेसे मोक्ष औ विषयोंमें आसक्तिसे बन्ध होताहै यह विचारि रागद्वेषादि स्वभावसे रहितहोना उचित है सोई कहते हैं कि विवेकयुक्त आपही अपने आत्माको बुद्धिके द्वारा संसारसे उद्धार करैगा और अधोगति को न लेजायगा जिसहेतु कामनासे निवृत्त जो आत्मा कहे मन सोई अपना बन्धुरूप उपकारी है और कामको कामनासे आशक्त जो मन सोई शत्रुरूप अपकारी है तो अपना शत्रु औ मित्र आत्मा आपही है ॥ ५ ॥

## शाङ्करभाष्यम्।

आत्मैवात्मनो बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किं लक्षण आत्मा आत्मनो बन्धुः किंलक्षणो वा आत्मा आत्मनो रिपुरित्युच्यते बन्धुरिति बन्धुरात्मात्मनस्तस्य तस्यात्मनः स आत्मा बन्धुर्येनात्मनाऽत्मैव जितः आत्मकार्य्यकारणसंघातो येन जितो वशीकृतो जितेन्द्रिय इत्यर्थः अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्त्तेत शत्रुवत् यथाऽनात्मा शत्रुरात्मनोऽपकारी तथाऽत्माऽत्मनोऽपकारे वर्त्तेत इत्यर्थः॥ ६॥

### आनन्दगिरिकृतटीका।

उक्तमनूद्य प्रश्नपूर्वकं श्लोकान्तरमवतारयति आत्मैवेत्यादिना एकस्यैवात्मनो मिथोविरुद्धं बन्धुत्वं रिपुत्वञ्च लक्षणभेदमन्तरेणायुक्तमिति चोदिते वशीकृतसङ्घातस्यात्मानं प्रति बन्धुत्वमितरस्य शत्रुत्वमित्यविरोधं दर्शयति बन्धुरित्यादिना वशीकृतसङ्घातस्य विक्षेपाभावादात्मनि समाधानसम्भवादुपपन्नमात्मानं प्रतिबन्धुत्वमिति साधयति तस्येति अवशीकृतसङ्घातस्य पुनर्विक्षेपोपपत्तेरात्मनि समाधानायोगादात्मानं प्रति शत्रुभावे प्रसिद्धशत्रुवत् आत्मैव शत्रुत्वेन वर्त्तेतेत्युत्तरार्द्धं व्याकरोति अनात्मन इति दृष्टान्तं व्याचष्टे यथेति उक्तदृष्टान्तवशादवशीकृतसङ्घातः स्वस्य हितानाचरणादात्मानं प्रति शत्रुरेवेति दार्ष्टान्तिकमाह तथेति॥ ६॥

### स्वामिकृतटीका।

कथम्भूतस्यात्मैव बन्धुः कथंभूतस्य चात्मैव रिपुरित्यपेक्षायामाह बन्धुरिति येनात्मनैवात्मा कार्य्यकरणसंघातरूपो जितो वशीकृतस्तस्य तथाभूतस्यात्मैव बन्धुः अनात्मनोऽजितात्मनस्तु आत्मैवात्मनः शत्रुत्वे शत्रुवदपकारित्वे वर्त्तेत॥ ६॥

## भाषा अनुवाद।

अब आत्माहीं तो किसी मनुष्यका बन्धु औ किसीका रिपु है इस अपेक्षापर कहते हैं कि जिसने अपने आत्मासे आत्माको जीता अर्थात् विज्ञानमय आत्मा कर्तृक कार्यकारण मिलितरूप जो आत्मा स्थूल सूक्ष्म शरीरादि वशीभूत होतो है सोई विज्ञानमय जीव अपना बन्धु है और अनात्मा कहे शरीरादि अवशीकृत जो है सोई आप अपना शत्रुतुल्य है॥ ६॥

## जितात्मनः प्रशान्तस्य परमात्मा समाहितः।
## शीतोष्णसुखदुःखेषु तथा मानाऽवमानयोः ॥ ७ ॥

### शाङ्करभाष्यम्।

जितात्मनइति जितात्मनः कार्यकरणादिसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य परमात्मा समाहितः साक्षादात्मभावेन वर्त्तत इत्यर्थः किञ्च शीतोष्णसुखदुःखेषु तथा मानेऽवमानेच मानावमानयोः पूजापरिभवयोः समः स्यात् इत्यध्याहारः ॥ ७ ॥

### आनन्दगिरिकृतटीका।

कथं संहतकार्यकरणस्य बन्धुरात्मेति तत्राह जितात्मन इति जितकार्यकरणसङ्घातस्य प्रकर्षेणोपरतवाह्याभ्यन्तरकरणस्य परमात्मा विशेषेण पुनःपुनरनभिभूयमानो निस्तरं चित्ते प्रथन इत्यर्थः जितात्मानं सन्न्यस्त समस्तकर्माणमधिकारिणं प्रदर्श्य योगाङ्गानि दर्शयति शीतेति समः स्यादित्यध्याहारः पूर्वार्द्धं व्याचष्टे जितेत्यादिना न केवलं तस्य परमात्मा साक्षादात्मभावेन वर्त्तते किन्तु शीतोष्णादिभिरपि नासौ चाल्यते तत्त्वज्ञानादित्युत्तरार्द्धं विभजते किञ्चेति तेषु समः स्यादिति सम्बन्धः ॥ ७ ॥

### स्वामिकृतटीका।

जितात्मनः स्वस्मिन् बन्धुत्वं स्फुटयति जितात्मन इति जित आत्मा येन तस्य प्रशान्तस्य रागादिरहितस्यैव परं केवलमात्मा शीतोष्णादिषु सत्स्वपि समाहित आत्मनिष्ठो भवति नान्यस्य यद्वा तस्य हृदि परमात्मा समाहितः स्थितो भवति ॥ ७ ॥

### भाषा अनुवाद।

जितात्मा पुरुषकी जो अपने आत्मासे बन्धुता है सो खुलासा करके कहते हैं कि जिसने आत्मा जो शरीर आदि तिसको जीता अर्थात् अपने आधीन किया केवल उस प्रीति विरोध आदिसे रहित मनुष्यका मन शीत-उष्ण सुख दुःख आदिमे समाहित कहे सावधान रहता है अर्थात् वही आत्मनिष्ठ है अथवा उसीका हृदय परमात्मा मे समाहित अर्थात् विक्षेपरहित निश्चल होता और किसीका नहीं है न होसकता है ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

शाङ्करभाष्यम् ।

ज्ञानेति ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं विज्ञानन्तु शास्त्रतोऽज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्यय आत्मान्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थोऽप्रकम्प्यो भवति इत्यर्थः विजितेन्द्रियश्च य ईदृशो युक्तः समाहित इति स उच्यते कथ्यते स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः ॥ ८ ॥

आनन्दगिरिकृतटीका ।

चित्तसमाधानमेव विशिष्टफलञ्चेदिष्टं तर्हि कथम्भूतः समाहितो व्यवह्रियते तत्राह ज्ञानेति परोक्षापरोक्षाभ्यां ज्ञानविज्ञानाभ्यां सञ्जातोऽलं प्रत्ययोऽक्रियो हर्षविषादकामक्रोधादिरहितो योगी युक्तः समाहित इति व्यवहारभागी भवतीति पादत्रयव्याख्यानेन दर्शयति ज्ञानमित्यादिना स च योगी परमहंस परिव्राजकः सर्वत्रोपेक्षाबुद्धिरनतिशय वैराग्यभागीति कथयति स योगीति ॥ ८ ॥

स्वामिकृतटीका ।

योगारूढस्य लक्षणं श्रैष्ठ्यं चोक्तमुपसंहरति ज्ञानेति ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवस्ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य अतः कूटस्थो निर्विकारः अतएव विजितानीन्द्रियाणि येन अतएव समानानि लोष्टादीनि यस्य स्तृत्खण्ड पाषाण सुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

भाषा अनुवाद ।

योग आरूढ़ पुरुषके लक्षण औ श्रेष्ठता कहते है कि ज्ञान कहे सास्त्रसे अथवा गुरुके उपदेशसे जो होय और विज्ञान जो अनुभवसिद्ध अर्थात् हम सोई ब्रह्म हैं यह प्रत्यक्षज्ञान इन दोनोसे जिसका आत्मा कहे चित्त सन्तुष्ट है और जिसने इन्द्रियगणको जीता है तथा ढेला पत्थर सोना ये जिसको समान अर्थात् लेने छोड़ने की बुद्धि जिस मे नहीं ऐसा जो निरपेक्ष निर्वि-

सुहृन्मित्रार्य्युदासीन मध्यस्थ द्वेष्यबन्धुषु।
साधुष्वपिच पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

शाङ्करभाष्यम्।

किञ्च सुहृदिति सुहृदित्यादि श्लोकार्द्धमेकपदं सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्त्ता मित्रं स्नेहवान् अरि शत्रुः उदासीनो न कस्यचित् पक्षं भजते मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी द्वेष्यः आत्मनो प्रियोबन्धुः सम्बन्धीत्येतेषु साधुषु शास्त्रानुवर्त्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः किं कर्म्मेत्यव्यापृतबुद्धिरित्यर्थो विशिष्यते विमुच्यत इति वा पाठान्तरं योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥ ९ ॥

आनन्दगिरिकृतटीका।

योगारूढस्य प्रशस्तत्वमभ्युपेत्य योगस्याङ्गान्तरं दर्शयति किञ्चेति पदच्छेदः पदार्थोक्तिरिति व्याख्यानाङ्गं सम्पादयति सुहृदितीति अरिर्नाम परोक्षमपकारकः प्रत्यक्षमप्रियो द्वेष्य इति विभागः समबुद्धिरिति व्याचष्टे कः किमिति प्रथमो हि प्रश्नो जातिगोत्रादिविषयः द्वितीयो व्यापारविषयः उक्तप्रकारेणाव्यापृतबुद्धित्वे सर्वोत्कर्षोव सर्वोपाश्रविमोक्षो वा सिध्यतीत्याह विशिष्यत इति पाठद्वयेऽपि सिद्धमर्थं संक्षिप्य कथयति योगारूढानामिति ॥ ९ ॥

स्वामिकृतटीका।

सुहृन्मित्रादिषु समबुद्धिस्तु ततोऽपि श्रेष्ठ इत्याह सुहृदिति सुहृत् स्वभावेनैव हिताशंसी मित्रं स्नेहवशेनोपकारकः अरिर्घातकः उदासीनो विवदमानयोरुभयोरप्युपेक्षकः मध्यस्थो विवदमानयोरुभयोरपि हिताशंसी द्वेष्यो द्वेषविषयः बन्धुः सम्बन्धी साधवः सदाचाराः पापा दुराचाराः एतेषु समा रागद्वेषशून्या बुद्धिर्यस्य स तु विशिष्टः ॥ ९ ॥

भाषा अनुवाद।

कार कूटस्थ कहे अचलके तुल्य निश्चल पुरुष सोई युक्त योगी कहे योगारूढ़ हैं ॥ ८ ॥

और शत्रुमित्रादिमें जो समदर्शी मनुष्य सो योगीसे भी अधिक है यह कहते हैं कि सुहृद कहे स्वभावहीसे हितकारी औ मित्र जो स्नेह-

**योगी युञ्जीत सतत मात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशी रपरिग्रहः ॥ १० ॥**

### शाङ्करभाष्यम् ।

अतएव उत्तमफलप्राप्तये योगीति योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदात्मानमन्तःकरणं रहस्येकान्ते योगी गिरिगुहादौ स्थितः सन्नेकाकी असहाया रहसि स्थित एकाकी चेति विशेषणात् संन्यासं कृत्वेत्यर्थः यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः संन्यासित्वेऽपि सति त्यक्तसर्वपरिग्रहः सन् युञ्जीतेत्यर्थः ॥ १० ॥

### आनन्दगिरिकृतटीका ।

यथोक्तविशेषणवतो योगारूढेषूत्तमत्वे योगानुष्ठाने प्रयतितव्यमित्युक्ताभिधानानन्तरं प्रधानमभिदधाति अतएवमिति आदरनैरन्तर्य्यदीर्घकालत्वं विशेषणत्रयं योगस्य सूचयति सततमिति तस्यैव पञ्चाङ्गान्युपन्यस्यति रहसीतीत्यादिना सर्वदेत्यादरदीर्घकालयोरुपलक्षणं प्रत्यगात्मानं व्यावर्त्तयति अन्तःकरणमिति गिरिगुहादावित्यादिशब्देन योगप्रतिबन्धकदुर्जनादिविधुरो देशो गृह्यते विशेषणद्वयस्य तात्पर्य्यमाह रहसीति योगं युञ्जानस्य सन्न्यासिनो विशेषणान्तराणि दर्शयति यतेति सति सन्न्यासित्वे किमर्थपरिग्रहग्रहणमर्थपुनरुक्तेरित्याशङ्क्य कौपीनाच्छादनादिष्वपि शक्तिनिवृत्त्यर्थमित्याह सन्न्यासित्वेऽपीति ॥ १० ॥

### भाषाअनुवाद ।

वग्रते उपकारी औ अरि कहे घातक जो शत्रु औ उदासीन अर्थात् उपकार अपकार दोनोंसे अलग निरपेक्ष जो है औ मध्यस्थ कहे पक्षपात विना-दोनो ओर हितकारी औ द्वेष्य अर्थात् निःप्रयोजन शत्रु जो अकारण क्रोधी औ बन्धु जिनसे कुछ सम्बन्ध है औ साधु कहे सुशील सुन्दर आचरण-जिनका है तथा पाप जो दुराचारी इन सबके विषे जिसकी बुद्धि समान कहे प्रीति विरोध रहित है सो विशिष्ट कहे योगीसे अधिक है ॥ ९ ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासन मात्मनः।
नात्युच्छ्रितं नातिनीचं चेलाजिन कुशोत्तरं॥ ११ ॥

शाङ्करभाष्याम्।

अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः प्राप्तयोगस्य लक्षणं तत्फलादि चेत्यत आरभ्यते तत्र) आसनमेव तावत् प्रथममुच्यते शुचाविति शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलनमात्मनः आसनं नात्युच्छ्रितं नाप्यतिनीचं तच्च चेलाजिनकुशोत्तरं चेलमजिनं कुशाश्च उत्तरे यस्मिन्नासने तदासनं चेलाजिनकुशोत्तरं पाठक्रमात् विपरीतोच अनुक्रमश्चेलादीनाम् ॥ ११ ॥

आनन्दगिरिकृतटीका।

योगं योगाङ्गानि चोपदिश्योत्तरसन्दर्भस्य तात्पर्यमाह अथेति यीगस्वरूपकतिपयतदङ्गप्रदर्शनानन्तर्य्यमथशब्दार्थविहारादीनामित्यादिशब्देन यथोक्तासनादिगतावान्तरभेदग्रहणं तत्फलादि चेत्यादिशब्देन योगफलं सम्यग्ज्ञानञ्च तत्फलं कैवल्यं ततो भ्रष्टस्यावान्तरा-

स्वामिकृतटीका।

एवं योगारूढस्य लक्षणमुक्त्वेदानीं तस्य साङ्गं योगं विधत्ते योगीत्यादिना स योगी परमो मत इत्यन्तेन ग्रन्थेन योगी योगारूढ़ आत्मानं मनो युञ्जीत समाहितं कुर्यात् सततं निरन्तरं रहसि एकान्ते स्थितः सन् एकाकी सङ्गशून्यः यतं चित्तमात्मा देहश्च यस्य निराशीर्निराकाङ्क्षः अपरिग्रहः परिग्रहशून्यश्च ॥ १० ॥

भाषा अनुवाद।

योगीके लक्षण कहि कर अब उसका अङ्गरूप जो योग सो ईस श्लोकसे लेकर इसी अध्यायके स योगी परमो मतः इस ३२ श्लोक तक कहते हैं कि योग आरूढ पुरुष सङ्गरहित होय जिसके अन्तःकरण औ शरीर वशीभूत हैं सो निराकांक्ष सर्वपरिग्रह से रहित पुरुष एकान्तमे अकेला सावधान बैठि कर अपने आत्मा कहि मनको निरन्तर भगवत के मननमे युक्त करे ॥ १० ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

### शाङ्करभाष्यम् ।

प्रतिष्ठाप्य किं तत्रेति तत्र तस्मिन्नासने उपविश्य योगं युञ्ज्यात् कथं सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः स

### आनन्दगिरिकृतटीका ।

विनष्टत्वमित्यादि गृह्यते एवं समुदायतात्पर्ये दर्शिते किमासीनः शयानस्तिष्ठन् गच्छन् कुर्वन् वा युञ्जीतेत्यपेक्षाया मनन्तरश्लोकतात्पर्यमाह तत्रेति निर्द्धारणे सप्तमी प्रथमं योगानुष्ठानस्य प्रधानसाधीनः सम्भवादिति न्यायादिति यावत् विविक्तत्वं द्वेधा विभजते स्वभावत इति आसनस्यास्थैर्ये तत्रोपविश्य योगमनुतिष्ठतः समाधानायोगात् योगासिद्धिरित्यभिसन्धाय विशिनष्टि अचलमिति आस्तेऽस्मिन्निति व्युत्पत्तिमनुसृत्याह आसनमिति आसन इति परकीयासनव्युदासार्थं पतनभयपरिहारार्थं नात्युच्छ्रितमित्युक्तं नात्यतिनीचमिति भूतलपाषाणादिसंश्लेषे वात चोभाग्निसान्ध्यादिसम्भावितदेशनिरासार्थं चेलं वस्त्रमजिनं चर्म पशूनां तस्य त्वगस्य कुशा दर्भास्ते चोत्तरे यस्मिन्नुपरिष्टादारभ्य तत्रयोक्तं प्रथमं चेलं ततोऽजिनं ततश्च कुशा इति प्रतिपन्नक्रमस्यापातिकं क्रममतिक्रम्यादौ कुशास्ततोऽजिनं ततश्चेलमिति क्रमं विवक्षित्वाह विपरीतोऽत्रेति ॥ ११ ॥

### स्वामिकृतटीका ।

आसननियमं दर्शयन्नाह शुचाविति द्वाभ्यां शुद्धे स्थाने आत्मनः स्वस्यासनं स्थापयित्वा कीदृशं स्थिरमचञ्चलं नात्युच्छ्रितं नचातिनीचं चेलं वस्त्रं अजिनं व्याघ्रादिचर्म चेलाजिने कुशेभ्य उत्तरे यस्य कुशानामुपरि चर्म तदुपरि वस्त्रमास्तीर्य्येत्यर्थः ॥ ११ ॥

### भाषा अनुवाद ।

उसी योगका साधन औ नियम आदि दिखावते हुये दो श्लोकसे कहते हैं कि पवित्र स्थानमें अपने आसनपर बैठनेके अनन्तर योग अभ्यास करै आसन कैसा चहिये कि जो अचल औ न बहुत ऊंचा न अतिनीचा होय और चेल कहे वस्त्र अजिन व्याघ्रचर्म अर्थात् नीचे कुश तब चर्म ऊपर वस्त्र ऐसा आसन करै ॥ ११ ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

शाङ्करभाष्यम् :

किमर्थं योगं युञ्ज्यादित्याह आत्मविशुद्धये अन्तःकरणस्य शुद्ध्यर्थमित्येतत् ॥ १२ ॥

बाह्यमासनमुक्तं अधुना शरीरस्य धारणं कथमित्युच्यते सममिति समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलञ्च समं धारयत श्चलनं न सम्भवत्यतो विशिनष्टि अचलमिति स्थिरः स्थिरो भूत्वेत्यर्थः स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेवेतीव शब्दो लुप्तो द्रष्टव्यो नहि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितं किं तर्हि चक्षुषो दृष्टिसन्निपातः स चान्तःकरणसमाधानापेक्षो विवक्षितः स्वनासिकाग्रसंप्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत नात्मनि आत्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः

आनन्दगिरिकृतटीका ।

यथोक्तमासनं सम्पाद्य किं कर्त्तव्यमिति प्रश्नपूर्वकं कर्त्तव्यं तन्निर्दिशति प्रतिष्ठाप्येति योगं युञ्जानस्येति कर्त्तव्यताकलापं पृच्छति कथमिति सर्वेभ्यो विषयेभ्यः सकाशात् प्रत्याहृत्य मनसो यदेकस्मिन्नेव ध्येये विषये समाधानं यच्चित्तस्येन्द्रियाणाञ्च बाह्यक्रियाणां संयमनं तदुभयं कृत्वा योगमनुतिष्ठेदित्याह सर्वेति आसने यथोक्ते स्थित्वा यथोक्तं चरित्वा योगानुष्ठानस्य प्रश्नपूर्वकं फलमाह स किमर्थमित्यादिना ॥ १२ ॥

स्वामिकृतटीका ।

तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यादभ्यसेत् यता संयता चित्तस्येन्द्रियाणाञ्च क्रिया यस्य आत्मनो मनसो विशुद्धय उपशान्तये ॥ १२ ॥

भाषा अनुवाद ।

और जिसका चित्त औ इन्द्रिय निष्क्रिय कहे व्यापार रहित हैं सो मनकी शान्ति कहे शुद्धिके अर्थ उक्त आसनर पर बैठनेके बाद मनको एकाग्र विक्षेपरहित करके योग अभ्यास करै ॥ १२ ॥

## शाङ्करभाष्यम् ।

कृत्वेति तस्मादपिशब्दलोपे नाप्यो दृष्टिसन्निपात एव संप्रेक्ष्येत्युच्यते दिशश्चानवलोकयन् दिशाञ्चावलोकनमकुर्वन्नित्येव मन्तरा कुर्वन्नित्येतत् ॥ १३ ॥

### आनन्दगिरिकृतटीका ।

उक्तमनूद्यानन्तरश्लोकस्यापुनरुक्तमर्थमाह वाह्येति समत्वमृजुत्वं कायः शरीरमध्यं अचलमिति विशेषणमवतार्य्य तस्य तात्पर्य्यमाह सममिति कार्यकरणयोर्विषयपारवश्यशून्यत्वमचलत्वं स्थैर्यं किमितीव शब्दलोपोऽत्र कल्पते स्वनासिकाग्रसंप्रेक्षणमेव योगाङ्गत्वेनात्र विधित्सितं किं न स्यादित्याशंक्याह नहीति तर्हि किमत्र विवक्षितमिति प्रश्नपूर्वकमाह किं तर्हीति दृष्टिसन्निपातो दृष्टेश्चक्षुषो रूपप्रवृत्तिराहित्यं कथमसावनायासेन सिध्यति तत्राह तत्रेति समाधानस्य प्राधान्येनात्र विवक्षितत्वात् दृष्टेर्बहिर्विषयत्वेन तत्तत्सङ्गात्तस्याविषयेभ्यो व्यावृत्त्यान्तरे च सन्निपातो विवक्षितो भवतीत्यर्थः तथापि कथं स्वनासिकाग्रसंप्रेक्षणमत्र श्रुतमविवक्षितमित्याशंक्याह स्वनासिकेति तत्रैव मनःसमाधाने का हानि रित्याशंक्य वाक्यशेषविरोधान्नैवमित्याह आत्मनि हीति किं तर्हि प्रेक्ष्येत्यादौ विवक्षितमित्याशंक्याह तस्मादिति दक्षिणोत्तरचक्षुषो र्या दृष्टिस्तस्या वाह्याद्विषयाद्वैमुख्येनान्तरेव सन्निपतनमत्र स्वकीयं नासिकाग्रं नासिकान्तं संप्रेक्ष्येति विवक्षितमित्यर्थः तत्रैवोत्तरमपि विशेषणमनुकूलमित्याह दिशश्चेति अनवलोकयन्नासीदित्युत्तरत्र सम्बन्धः अन्तरा दिशामवलोकनमपि योगप्रतिबन्धक मिति तत्प्रतिषेधः ॥ १३ ॥

### स्वामिकृतटीका ।

चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयन्नाह सममिति द्वाभ्यां काय इति देहस्य मध्यभागो विवक्षितः कायस्य शिरश्च ग्रीवा च कायशिरोग्रीवं मूलाधारादारभ्य मूर्द्धाग्रपर्यन्तं सममवक्रं निश्चलं धारयन् स्थिरो दृढ़प्रयतो भूत्वेत्यर्थः स्वीयं नासिकाग्रं संप्रेक्ष्य चार्द्धनिमीलितनेत्र इत्यर्थः इतस्ततो दिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः ॥ १३ ॥

## भाषा अनुवाद ।

अब चित्त की एकाग्रता के उपयोगी जो देहधारणादि सो दो श्लोकसे कहते हैं कि काय कहे शरीर का मध्यभाग औ शिर ग्रीवा अर्थात् मूल आधारसे ले मस्तक पर्यन्त शरीर को अतियत्नसे सीधीराखिके औ निश्चलकरके धारणाके बाद अपनी नासिका के अग्र भागमे अर्द्ध उन्मीलन पूर्वक दोनो दृष्टी लगाय समाहित सावधान होय और दिशोंमे दृष्टि न देय॥१३॥

## प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
## मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

शाङ्करभाष्यम् ।

किञ्च प्रशान्तेति प्रशान्तात्मा प्रकर्षेण शान्त आत्माऽन्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीर्विगतभयः ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचारिव्रतं ब्रह्मचर्यं गुरुशुश्रूषा भिक्षा भुक्त्यादि तस्मिन् स्थितस्तदनुष्ठाता भवेदित्यर्थः किञ्च मनः संयम्य मनसो वृत्तीरुपसंहृत्येत्येतत् मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेत् मत्परोऽहं परो यस्य सोऽयं मत्परो भवति कश्चित् रागी स्त्रीचित्तो नतु स्त्रियमेव परत्वेन गृह्णाति किं तर्हि राजानं महादेवं वा अयन्तु मच्चित्तो मत्परश्च ॥ १४ ॥

आनन्दगिरिकृतटीका ।

योगं युञ्जानस्य विशेषणान्तराणि दर्शयति किञ्चेति अन्तःकरणस्य प्रशान्तिः रागद्वेषादि दोषराहित्यं तस्याश्च प्रकर्षो रागादि हेतोरपि निवृत्तिः विगतभयत्वं सर्वकर्मपरित्यागे शास्त्रीयनिश्चयवशान्निःसन्दिग्धबुद्धित्वं भिक्षाभुक्त्यादीत्यादि शब्देन त्रिषवणस्नानशौचाचमनादि गृह्यते विशेषणान्तरमाह किञ्चेति उपसंहृत्य योगनिष्ठो भवेदिति शेषः मनोवृत्त्युपसंहारे ध्यानमिति न सिध्येत्तस्य तद्वृत्त्या वृत्तिरूपत्वादित्याशङ्क्याह मच्चित्त इति विषयान्तर विषयमनोवृत्त्युपसंहारेणात्यन्तमेव तन्नियमनान्न ध्यानानुपपत्तिरित्यर्थः मच्चित्तत्वेनैव मत्पर इति पृथक् विशेषणमनर्थकमित्याशङ्क्याह भवतीति अन्तःकरणशुद्धि र्योगस्यावान्तरफलम् ॥ १४ ॥

स्वामिकृतटीका ।

प्रशान्तेति प्रशान्त आत्मा चित्तं यस्य विगता भीर्भयं यस्य ब्रह्मचारिव्रते ब्रह्मचर्ये स्थितः सन् मनः संयम्य प्रत्याहृत्य मय्येव चित्तं यस्य अहमेव परः पुरुषार्थो यस्य स मत्परः एवं युक्तो भूत्वा तिष्ठेत् ॥ १४ ॥

भाषा अनुवाद ।

जिसका चित्त प्रशान्त और जो निर्भय औ ब्रह्मचर्य्यव्रतमें स्थित होके अपने मनको सब तरफसे खींच मेरेमें लगाया है और जिसको मेरेही

युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

शाङ्करभाष्यम् ।

अथेदानीं योगफलमुच्यते युञ्जन्निति युञ्जन् समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः स शान्तिमुपरतिं निर्व्वाणपरमां निर्व्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः स निर्व्वाणपरमा तां निर्व्वाणपरमां मत्संस्थां मदधीनता मधिगच्छति प्राप्नोति ॥ १५ ॥

आनन्दगिरिकृतटीका ।

सम्प्रति परमफलकथनपरत्वेनानन्तरश्लोकमादत्ते अथेति योगस्वरूपं तदङ्गान्यासनमतिसदृशकर्तृविशेषणानि [illegible] प्रकथनानन्तरमित्यथशब्दार्थः आत्मानं युञ्जन्निति सम्बन्धः आत्मशब्दो मनोविषयः यथोक्तो विधिरासनादि उक्तविशेषणवत्त्व द्योतनार्थं सदेत्युक्तं योगी ध्यायी [illegible] यमस्य योगं प्रत्यसाधारणत्वं दर्शयति नियतेति शान्तिशब्दितोपरतेः सर्वसंसार[illegible]यित्वं मत्वा विशिनष्टि निर्वाणेति यथोक्ताया मुक्तेर्ब्रह्मस्वरूपावस्थानादनर्थान्तर[illegible]संस्थामिति मदधीनां मदात्मिकामित्यर्थः ॥ १५ ॥

स्वामिकृतटीका ।

योगाभ्यासफलमाह युञ्जन्नेवमिति एवमुक्तप्रकारेण सदा आत्मानं मनो युञ्जन् समाहितं कुर्वन् नियतं निरुद्धं मानसं चित्तं यस्य स शान्तिं संसारोपरमं प्राप्नोति कथं भूतां निर्वाणं परं प्राप्यं तस्यां मत्संस्थां मद्रूपेणावस्थितिम् ॥ १५ ॥

भाषा अनुवाद ।

परम पुरुषार्थरूप कहे इष्ट हों ऐसा मत्परायण पुरुष उक्तमत योगमें समाहित सावधान रहता है ॥ १४ ॥

अब योगाभ्यास करनेका फल कहते हैं कि पूर्व्वोक्त प्रकारसे सदा आत्मामें मनको युक्त करते नियत कहे निरुद्ध है मानस अर्थात् चित्त जिसका सोइ शान्ति कहे संसारसे निवृत्तिको प्राप्त होता है वह शान्ति किसरूपकी है सो कहते हैं कि जिससे परम निर्व्वाण प्राप्त होय है सोइ

**नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः।**
**नचातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन ॥ १६ ॥**

शाङ्करभाष्यम्।

इदानीं योगिन आहारादिनियम उच्यते नात्यश्नत इति न अत्यश्नत आत्मसंमितम् अन्नपरिमाणमतीत्याश्नतः अत्यश्नतो न योगोऽस्ति नच एकान्तमनश्नतो योगोऽस्ति यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति तद् यत् कनीयो न तदवतीति श्रुतेः तस्मात् योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयादथवा योगिनो योगशास्त्रे परिपठिता-दन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति उक्तं हि अर्द्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु वायोः सञ्चरणार्थन्तु चतुर्थमवशेषयेदित्यादि परि-माणं तथा नचाति स्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्ज्जुन ॥ १६ ॥

आनन्दगिरिकृतटीका।

आहारादीत्यादिशब्देन विहारजागरितादि चोच्यते आत्मसंमितमन्नपरिमाणमष्ट-ग्रासादि आहारनियमे शतपथश्रुतिं प्रमाणयति तदिति तदन्नं भुज्यमानं यदु ह वा इति प्रसिद्धद्योतको वाशब्दः कर्त्तव्यानुष्ठानयोग्यता शमाद्यनुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तद-नुष्ठानयोग्यं भवतीत्यर्थः यत्पुनरात्मसंमितात् भूयोऽधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनस्ति भोक्तुरनर्थाय भवति यच्चान्नं कनीयोऽल्पतरं शास्त्रनिश्चयाभावादद्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते तस्मादत्यधिकमत्यल्पं चान्नं योगमारुरुक्षता त्याज्यमित्यर्थः श्रुतिसिद्धमर्थं निगमयति तस्मादिति नेत्यादेर्व्याख्यानान्तरमाह अथवेति किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाऽभ्यवहरतो योगानुपपत्तिरित्याशंक्याह उक्तं हीति पूरयेदशनेनार्द्धं तृतीयमुदकेन तु वायोः सञ्चरणार्थाय चतुर्थमवशेषयेदिति वाक्यमादिशब्दार्थः यथा नात्यन्तमश्नतोऽनश्नतश्च योगो न सम्भवति तथा अत्यन्तस्वपतो जाग्रतश्च न योगःसम्भवतीत्याह नचेति ॥ १६ ॥

भाषा अनुवाद।

शान्ति और मत्संस्था कहे मेरे रूपमें अवस्थिति सोभी उसको मिले है ॥ १५ ॥

युक्ताऽऽहार विहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

## शाङ्करभाष्यम् ।

कथं पुनर्योगो भवतीत्युच्यते युक्तेति युक्ताहारविहारस्य युक्तचेष्टस्य आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रम स्तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारस्तस्य युक्तचेष्टस्य तथान्या च युक्ता नियता चेष्टा यस्य कर्म्मसु तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्व्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद् योगो भवति इत्यर्थः ॥ १७ ॥

## आनन्दगिरिकृतटीका ।

आहारनिद्रादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयं व्याचष्टे कथं पुनरित्यादिना अन्नस्य नियतत्वमर्द्धमशनस्येत्यादि विहारस्य नियतत्वं योजनान्न परं गच्छेदित्यादि कर्मसु चेष्टाया नियतत्वं वाङ्नियमादि रात्रौ प्रथमतो दशघटिका परिमिते काले जागरणं मध्यतः स्वपनं पुनरपि दशघटिका परिमिते जागरणमिति स्वप्नावबोधयोर्नियतकालत्वमेवं प्रयतमानस्य योगिनो भवति योगस्य फलमाह दुःखहेति सर्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः यथोक्तयोगमन्तरेणापि स्वस्वप्नादौ दुःखनिवृत्तिरस्तीति विभिनष्टि सर्वेति विमुक्तविशानद्वारेति शेषः ॥ १७ ॥

## स्वामीकृतटीका ।

योगाभ्यासनिष्ठस्याहारादिनियममाह नात्यश्नत इति द्वाभ्यां अत्यन्तमधिकं भुञ्जानस्य एकान्तमत्यन्तमभुञ्जानस्यापि योगः समाधिर्न भवति तथाऽतिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति ॥ १६ ॥

## भाषा अनुवाद ।

योगाभ्यासी को आहार शयन आदिका नियम कहते हैं कि हे अर्जुन अत्यन्त अधिक आहारी और अत्यन्त निराहारी इन दोनोको भी योग जो समाधि सो नहीं होसकती है और अतिनिद्रा करनेवाला तथा निद्रात्यागी इन दोनोंको भी समाधिन नहीं होसकती है ॥ १६ ॥

यदा विनियतं चित्त मात्मन्येवाऽवतिष्ठते।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा॥ १८॥

शाङ्करभाष्यम्।

अथाधुना कदा युक्तो भवतीत्युच्यते यदेति यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं वृत्तं हित्वा वाह्यं चित्तमात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत इत्यर्थः निस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन् काले॥ १८॥

आनन्दगिरिकृतटीका।

सफलस्य साङ्गस्य योगस्योक्त्यनन्तरं यदा होत्यादावुक्तकालानुवादेन युक्तं लक्षयितुमनन्तरश्लोकप्रवृत्तिं दर्शयति अथाधुनेति विशेषेण संयतत्वमेव सङ्क्षिपति एकाग्रतामिति आत्मन्येवेत्येवकारार्थं कथयति हित्वेति केवलत्वमद्वितीयत्वं तस्यात्मस्थितिं विवृणोति स्वात्मनीति चित्तस्य हि कल्पितस्यात्मैव तत्त्वं तत् पुनरन्यतः सर्वतो निवारितमधिष्ठाने निमग्नं तिष्ठतीति भावः तस्यामवस्थायां सर्वेभ्यो विषयेभ्यो व्यावृत्ततृष्णो युक्तो व्यवह्रियत इत्याह निस्पृह इति॥ १८॥

स्वामिकृतटीका।

तर्हि कथम्भूतस्य योगो भवतीत्यत आह युक्ताहारेति युक्तो नियत आहारो विहारश्च गतिर्यस्य कर्मसु कार्य्येषु युक्ता नियता चेष्टा यस्य युक्तौ नियतौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य दुःखनिवर्त्तको योगो भवति सिद्ध्यति॥ १७॥

कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह यदेति विनियतं विशेषेण निरुद्धं सच्चित्तमात्मन्येव यदा निश्चलं तिष्ठति तदा प्राप्तयोग इत्युच्यते॥ १८॥

भाषा अनुवाद।

तो फेरि कैसे पुरुषको समाधि होसकती है इस अपेक्षापर कहते हैं कि नियतरूप आहार औ विहार है जिसका तथा कर्मोंमें परिमित चेष्टा कहे व्यापार है जिसका और यथा उचित है सोवना औ जागना जिसका उसीको योगकहे समाधि होती है और दुख दूर करती है अर्थात् संयम करनेसे समाधि औ समाधिसे दुख दूर होता है॥ १७॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥ १६॥

## शाङ्करभाष्यम्

योगिनः समाहितं यच्चित्तं तस्योपमोच्यते यथेति यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते स्थाने स्थितो नेङ्गते नेजति न चलति सा उपमा उपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः॥ १६॥

## आनन्दगिरिकृतटीका।

उपमा योगिनश्चित्तस्थैर्यस्योदाहरणमित्यर्थः उपमाशब्दस्य प्रदीपविषयत्वनिरासार्थं करणव्युत्पत्तिं दर्शयति उपमीयत इति योगिनो यथोक्तविशेषणवत चित्तस्थैर्यमिति शेषः॥ १६॥

## स्वामीकृतटीका।

आत्मैकाकारतयावस्थितस्य चित्तस्योपमानमाह यथेति वातशून्ये देशे स्थितो दीपो यथा नेङ्गते न चलति सा उपमा दृष्टान्तः कस्य आत्मविषयं योगं युञ्जतोऽभ्यस्यतो योगिनो यतं नियतं चित्तं यस्य निष्कम्पतया प्रकाशकतया चाचञ्चलं तच्चित्तं तद्वत्तिष्ठतीत्यर्थः॥ १६॥

## भाषा अनुवाद।

कौन समयमें योगसम्पन्न अर्थात् समाधिसिद्ध होगा सो कहते हैं कि जब पुरुषका चित्त एकाग्र कहे अच्छीतरह सब ओर से हटकर अर्थात् बाह्य कहे बाहरके सकल विषयोंको छोडिकर केवल आत्मामें निश्चलरूपसे लगैं अर्थात् अपने आत्मामें स्थिति करे और सब मनोरथकी इच्छा न रहे अर्थात् देखी सुनी जो संसारिक विषय तिनकी कामनामें स्पृहा कहे तृष्णा न उठे तब वह योगसिद्ध कहे युक्त समाहित कहा जाता है सोई कहा कि यदा विनियतं चित्तमात्मन्येवावतिष्ठते इति॥ १८॥

आत्माकाराकारितरूप अवस्थितचित्त कहे आत्मारूपताको प्राप्त जो

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

शाङ्करभाष्यम् ।

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् यत्रेति यत्र यस्मिन् काले उपरमते चित्तं उपरतिं गच्छति निरुद्धं सर्वतो निवारित-प्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काले आत्मना समाधि-परिशुद्धेनान्तःकरणेन आत्मानं परं चैतन्यं सर्वतो ज्योतिः स्वरूपं पश्यन्नु-पलभमानः स्वे एवात्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

आनन्दगिरिकृतटीका ।

द्विविधः समाधिः सम्प्रज्ञातोऽसम्प्रज्ञातश्च ध्येयैकाकारसत्त्ववृत्तिभेदेन कथञ्चित् ज्ञाय-मानः सम्प्रज्ञातः समाधिः कथमपि पृथग् ज्ञायमाना सैव सत्त्ववृत्तिरसम्प्रज्ञातः समाधि-स्तत्र सामान्येन समाधिलक्षणमभिधायासंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षन्नाह एवमिति काले समाध्युपलक्षिते एवकारस्तुष्यतीत्यनेन सम्बध्यते चकारस्य सम्बन्धमाह यस्मिंश्चेति कालस्तु पूर्ववत्सकर्मकारकत्वेन निर्दिष्टमात्मानं तत्पदार्थत्वेन व्याचष्टे परमिति आत्मनीत्यस्य त्वं पदार्थविषयत्वमाह स्वे एवेति परमात्मानं प्रतीच्येव तद्भावेनापरोक्षी-कुर्वंश्च तुष्टिहेत्वभावात्तुष्यत्येवेत्यर्थः तस्मिन् काले योगसिद्धिर्भवतीति शेषः ॥ २० ॥

भाषा अनुवाद ।

चित्त तिसका दृष्टान्त कहते हैं कि जैसे निर्व्वात स्थान मे दीपशिखा हलचल नहीं होती सोई उपमा कहे दृष्टान्त जानो यह किसका दृष्टान्त है जो पूछो तो कहते हैं कि आत्मविषयक योगाभ्यासी योगी पुरुष जिसका चित्त वशीभूत है उसीका चित्त निर्व्वात स्थान मे स्थित दीपशिखा के समान आत्मामे स्थिर है यहां चित्तशब्द का अर्थ अन्तःकरण है सो अन्तः-करण वृत्तिभेदसे चारि प्रकारका है संकल्पात्मक कहे संकल्परूप अन्तःकरण की वृत्ति कहे स्वभाव को मन कहते हैं और निश्चयात्मक अन्तःकरण की वृत्तिको बुद्धि कहते और अनुसन्धान कहे किसी वस्तुके जाननेके लिये तद्रूप होरहना अनुसन्धानात्मक अन्तःकरणवृत्ति को चित्त कहते हैं और अभिमानयुक्त अन्तःकरण अहङ्कार कहा जाता है ॥ १९ ॥

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र नचैवायं स्थित श्चलति तत्वतः॥ २१॥

शाङ्करभाष्यम्।

किञ्च सुखमिति सुखमात्यन्तिक मत्यन्तमेव भवती त्यात्यन्तिकं अनन्तमित्यर्थः यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्य मतीन्द्रियगोचरातीत मविषयजनित मित्यर्थः वेत्ति यदीदृशं सुखमनुभवति यत्र यस्मिन् काले नच एव अयं विद्वानात्मस्वरूपे स्थितस्तस्मात् नैव चलति तत्वतः तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः॥ २१॥

स्वामिकृतटीका।

यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेत्यादौ कर्म्मैव योगशब्देनोक्तं नात्यश्नतस्तु योगोऽस्तीत्यादौ तु समाधिर्योगशब्देनोक्तस्तत्र मुख्यो योगः क इत्यपेक्षायां समाधिमेव स्वरूपतः फलतश्च लक्षयन् स एव मुख्यो योग इत्याह यत्रेति सार्द्धैस्त्रिभिः यत्र यस्मिन्नवस्थाविशेषे योगाभ्यासेन निरुद्धं चित्तमुपरतं भवतीति योगस्य स्वरूपलक्षणमुक्तं तथाच पातञ्जलसूत्रं योगश्चित्तवृत्तिनिरोध इति इष्टप्राप्तिलक्षणेन फलेन तमेव लक्षयति यत्र च यस्मिन्नवस्थाविशेषे आत्मना शुद्धेन मनसा आत्मानमेव पश्यति नतु देहादि पश्यं स्त्वात्मन्येव तुष्यति नतु विषयेषु यत्रेत्यादीनां षं यच्छब्दानां योगसंचितं विद्यादिति चतुर्थेनान्वयः॥ २०॥

भाषा अनुवाद।

यसन्न्यासमिति प्राहुर्योगं तद्विद्धि पाण्डव इसी अध्यायके इस दूसरे श्लोकमे योगशब्दसे कर्म्म कहा है और नात्यश्नतस्तु योगोस्ति इस सोलहें श्लोकमें योगशब्दसे समाधि कहा तो इनमे मुख्य योग किसको कहैं इस अपेक्षामे फल औ स्वरूप तथा लक्षण क्रमसे समाधिही मुख्य है यह साढे तीनि श्लोकमे कहते हैं कि जिस अवस्थामे योगाभ्यास से निरुद्ध कहे एकाग्रचित्त होता है और जिस अवस्थामे आप अपने स्वरूप को देखते हुये सन्तुष्ट होता है ऐसी जो समाधि कहे चित्तवृत्तिकी एकाग्रता सोई योग है सोई पातञ्जलसूत्र मे कहा कि योगश्चित्तवृत्ति निरोधः योग चित्तवृत्ति का रोकना है॥ २०॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥**

### शाङ्करभाष्यम् ।

किञ्च यं लब्ध्वेति यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य च अपरमन्यलाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति किञ्च यस्मिन्नात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते॥२२॥

### आनन्दगिरिकृतटीका ।

योगसिद्धिकालं प्रकारान्तरेण प्रकटयति किञ्चेति बुद्धिशब्दः स्वानुभवविषयः इन्द्रियनिरपेक्षस्वानुभवगम्यत्वादतीन्द्रियमिति पुनरुक्तमित्याशङ्क्याह अविषयेति पदच्छेदः नचैत्यादि अपेक्षितपूरणं आत्मस्वरूप इति तस्मात् तत्त्वत इति सम्बन्धः नैवेत्येवकारसंबन्धोक्तिः चकारः समुच्चयार्थः यत्रेति पूर्ववत् सम्बन्धः ॥ २१ ॥

प्रकारान्तरेण प्रकृतं योगं विशिनष्टि किञ्चेति आत्मलाभात्परं विद्यते इति कृत्वा व्याचष्टे यमात्मलाभमिति लाभान्तरं पुरुषार्थभूतं तस्मादात्मलाभादिति यावत् तं विद्यादित्युत्तरत्र सम्बन्धः यस्मिन् इत्याद्यवतारयति किञ्चेति अपरिपक्वयोगो यथा-

### स्वामिकृतटीका ।

आत्मन्येव तोषे हेतुमाह सुखमिति यत्र यस्मिन्नवस्थाविशेषे यत्तत् किमपि निरतिशयमात्यन्तिकं नित्यं सुखं वेत्ति ननु तदा विषयेन्द्रियसम्बन्धाभावात् कुतः सुखं स्यात्तत्राह अतीन्द्रियं विषयेन्द्रियसम्बन्धातीतं केवलं बुद्ध्यैवात्माकारया ग्राह्यं अतएव च यत्र स्थितः सांस्यस्त्वा आत्मस्वरूपान्नैव चलति ॥ २१ ॥

### भाषा अनुवाद ।

आत्मसन्तोषका हेतु कहते हैं कि जिस अवस्था विशेष मे योगी, अन कोई निरतिशय कहे अत्यन्तनित्य सुखरूपका अनुभव करते हैं जो कहो कि उस अवस्थामे तो विषयसम्बन्धका अभाव है तो सुखका सम्भव कैसे होय तिस पर कहते हैं कि विषय इन्द्रियसम्बन्धसे रहित जो केवल आत्माकार रूप बुद्धिसे ग्रहणके योग्य है इसीसे उस मे स्थित हो योगी आत्मस्वरूपसे विचलित नहीं होते हैं ॥ २१ ॥

तं विद्याद्दुःखसंयोग वियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥

शाङ्करभाष्यम् ।

यत्रोपरमते इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः तमिति तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः योगफलमुपसंहृत्य पुनरन्वयारम्भेण योगस्य कर्त्तव्यतोच्यते निश्चयानिर्वेदयोर्योगस्य साधनविधानार्थं स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णं अनिर्विण्णं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥ २३ ॥

आनन्दगिरिकृतटीका ।

दुर्भिक्षेण दुःखेन मच्छाद्यते न चैवं विचाल्यते यस्मिं स्थितो योगी तं योगं विद्यादिति पूर्ववत् ॥ २२ ॥

तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति यत्रेति तमित्यात्मावस्थाविशेषं परामृशति दुःखसंयोगस्य वियोगो वियोगसंज्ञितो युज्यते स कथं योगसंज्ञितः स्यादित्याशङ्क्याह विपरीतेति इयं हि योगावस्था समुत्खातनिखिलदुःखभेदेति दुःखसंयोगाभावो योग-

स्वामिकृतटीका ।

स्थिरत्वमेवोपपादयति यमिति यतो यमात्मस्वरूपं लब्ध्वा ततोऽधिकं लाभं न मन्यते तस्यैव निरतिशयसुखत्वात् यस्मिंश्च स्थितो महतापि शीतोष्णादिदुःखेन न विचाल्यते नाभिभूयते एतेनानिष्टनिवृत्तिफलेनापि योगस्य लक्षणमुक्तं द्रष्टव्यं ॥ २२ ॥

भाषा अनुवाद ।

उसीका अचलत्व प्रतिपादन करते हैं कि आत्मआनन्द सुख जो आत्मस्वरूपलाभ लक्षित कहे पाय करिके और लाभ फेरि उससे अधिक नहीं गिनते अर्थात् बड़े दुख भी शीत उष्ण आदि उसका कुछ नहीं कर सकते हैं और का क्या लेखा है ॥ २२ ॥

**सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्व्वान शेषत: ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्तत: ॥ २४ ॥**

शाङ्करभाष्यम् ।

किञ्च संकल्पेति संकल्पप्रभवान् संकल्प: प्रभवो येषां कामनां ते संकल्पप्रभवा: कामास्तान् कामांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन

आनन्दगिरिकृतटीका ।

संन्यासहेतीत्यर्थ: उपसंहृतयोगफले किमिति पुनर्योगस्य कर्त्तव्यत्वमुच्यते तत्राह योगफलमिति प्रकारान्तरेण योगस्य कर्त्तव्योपदेशारम्भोऽत्रान्वारम्भ: योगं युंजानस्तद्बलात् दुःखं स सिद्धिमलभमान: संशयानो विवर्तेतेति तन्निवृत्त्यर्थं पुन: कर्त्तव्योपदेशोऽर्थवानिति मत्वाऽह निश्चयेति तयो: साधनत्वविभागमेवान्वययोजनया साधयति स यथेति इह जन्मनि जन्मान्तरे वा सेत्स्यतीत्यध्यवसायेन योक्तव्य: कर्त्तव्य: ॥ २३ ॥

स्वामिकृतटीका ।

तमिति य एवंभूतोऽवस्थाविशेषस्तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यात् दुःखशब्देन दुःखमिश्रितं वैषयिकं सुखमपि गृह्यते दुःखस्य संयोगेन संस्पर्शमात्रेणापि वियोगो यस्मिंस्तमवस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं जानीयात् परमात्मनि चेतसो योजनं योग: यद्वा दुःखस्य संयोगेन वियोग एव शूरे कातरशब्दवद्विरुद्धलक्षणया योग उच्यते कर्म्मणि तु योगशब्दस्तदुपायत्वादौपचारिक इति भाव: यस्मादेवं महाफलो योगस्तस्मात् स एव यत्नतोऽभ्यसनीय इत्याह स इति सार्द्धेन स योगो निश्चयेन शास्त्राचार्य्योपदेशजनितेन योक्तव्योऽभ्यसनीय: यद्यपि शीघ्रं न सिध्यति तथाप्यनिर्व्विण्णेन निर्वेदरहितेन चेतसा योक्तव्य: दुःखबुद्ध्या प्रयत्नशैथिल्यं निर्वेद: ॥ २३ ॥

भाषा अनुवाद ।

ऐसी दुख संयोगके अभाव अवस्थाविशेषको योगसंज्ञा जानो दुखशब्दसे विषयसुख जो हैं उनका ग्रहण करते हैं अर्थात् जिस अवस्था मे दुखका लेशमात्रभी नहीं है सोई अवस्था योग है इससे थिरचित्त होकर निश्चयसे योग अभ्यास करना अवश्यही कर्त्तव्य है निर्वेद शब्द का अर्थतो यत्न करने मे शैथिल्य है सोई कहा कि अनिर्विसचित्त होय अर्थात् शैथिल्य छोडि यत्नपूर्वक अभ्यास करै विषय सुखभी दुख ही है ॥ २३ ॥

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥**

शाङ्करभाष्यम्।

किञ्च मनसैव विवेकयुक्तेन इन्द्रियग्राम मिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥

शनैरिति शनैःशनैर्न सहसा उपरमेत् उपरतिं कुर्य्यात् कया बुद्ध्या किं विशिष्टया धृतिगृहीतया धृत्या धैर्य्येण गृहीतया धैर्य्येण युक्तयेत्यर्थः आत्मनि संस्थितं आत्मैव सर्वं न ततोऽन्यत् किञ्चदस्तीत्येव मात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् एष योगस्य परमो विधिः तत्रैवमात्मसंस्थं मनः कर्त्तुं प्रवृत्तो योगी॥ २५ ॥

आनन्दगिरिकृतटीका।

इतश्च योगस्य कर्त्तव्यत्वमिति प्रतिजानीते किञ्चेति केन क्रमेण कर्त्तव्यत्वमित्यपेक्षायामाह सङ्कल्पेति सङ्कल्पः शोभनाध्यासः सर्वानित्युक्त्वा पुनरशेषत इति पुनरुक्तिरित्याशङ्क्याह निर्लेपेनेति यथा शेषो न भवति तथा सर्वेषां कामानां शोभनाध्यासाधीनानां त्यागस्य योगानुष्ठानशेषत्ववद्विवेकयुक्तेन मनसा करणसमुदायस्य सर्वतो नियमनमपि तत्र शेषत्वेन कर्त्तव्यमित्याह किञ्चेति ॥ २४ ॥

स्वामिकृतटीका।

किञ्च सङ्कल्पेति सङ्कल्पात् प्रभवो येषां तान् योगप्रतिकूलान् सर्वान् कामानशेषतः सवासनांस्त्यक्त्वा मनसैव विषयदोषदर्शिना सर्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योगी योक्तव्य इति पूर्वेणान्वयः ॥ २४ ॥

भाषाअनुवाद।

सङ्कल्पसे प्रभव कहे प्रगट जो योगके प्रतिकूल कहे विरोधी बाधकरूप सकल कामना उनको वासना समेत त्याग करिके विषयोंके दोष देखता हुआ पुरुष मन के द्वारा सर्वत्र धावमान इन्द्रियोंको सब ओरसे दमन करिके योगाभ्यास करे अथवा सर्वत्र धावती हुई इन्द्रियोंको मनहींसे रोंक कर योग करे यह इस श्लोकसे कहा ॥२४॥

यतो यतो निश्चलति मनश्चञ्चल मस्थिरम् ।
ततस्ततो नियम्यै त दात्मन्ये व वशं नयेत् ।२६॥

आनन्दगिरिकृतटीका ।

कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्यादिति शङ्कितारं प्रत्याह शनैःशनैरिति सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं सम्भवतीत्यभिप्रेत्याह न सहसेति तत्र साधनं धैर्ययुक्ता बुद्धिरित्याह कया इत्यादिना भूम्यादीरव्याकृतपर्यन्ताः प्रकृतीरष्टौ पूर्वत्र पूर्वत्र धारणं कृत्वोत्तरक्रमेण प्रविलापयेदिति भावः अव्यक्तमात्मनि प्रविलाप्य आत्मामात्रनिष्ठं मनो विधाय चिन्तयितव्याभावादतिस्थयौ भवेदित्याह आत्मेति तत्र संस्थितिमेव मनसो विशृणोति आत्मैवेति योगविधिसुपक्रम्य किमिदमुक्तमित्याशङ्क्याह एष इति यन्मनसो नैश्चल्यमिति शेषः ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादत्यन्तचञ्चलस्या-स्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यञ्चेति तत्रेति योगप्रारम्भः सम्प्रत्यर्थ एवशब्देन मनसैवेत्यादि उक्तप्रकारो स्मर्यते ॥ २५ ॥

स्वामिकृतटीका ।

यदि प्राक्तनकर्म्मसंस्कारेण मनो विचलेत्तर्हि धारणया स्थिरीकुर्य्यादित्याह शनै-रिति धृतिर्धारणा तया गृहीतया वशीकृतया बुद्ध्या आत्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वा उपरमेत् तत्तु शनैरभ्यासक्रमेण नतु सहसा उपरमस्वरूपमाह न किञ्चिदपि चिन्तयेत् निश्चले मनसि स्वयमेव प्रकाशमानपरमानन्दनिर्वृतो भूत्वा आत्म-ध्यानादपि न निवर्त्तेत इत्यर्थः ॥ २५ ॥

भाषा अनुवाद ।

और जो मन पूर्वजन्मकृत कर्म्मके संस्कारसे चलविचल होय तोभी धारणा जो धैर्यरूप बुद्धिशक्ति तिससे थिर करै यह कहते हैं कि धारणा से वशीभूत जो बुद्धि तिससे मनको आत्मा मे अच्छीतरह स्थापन करिके उपरम करे अर्थात् फेरि न कुछ चिन्तन करै परन्तु यहभी सनैः सनैः कहे धीरे धीरे धैर्यवती बुद्धिके द्वारा क्रमसे मनको आत्मामे थिर करै सहसा न करै अर्थात् जल्दी न करै तो आत्मास्वरूप आनन्द को पावै ॥ २५ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं ।
उपैति शान्तरजसं ब्रह्मभूत मकल्मषं ॥ २७ ॥

शाङ्करभाष्यम् ।

यत इति यतो यतो यस्माद् यस्मान्निमित्ताच्छब्दादेर्निश्चरति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलमत एवास्थिरं ततस्ततस्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत ॥ २६ ॥

एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति मनः प्रशान्तेति प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैत्युपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्व मित्येवं निश्चयवन्तं ब्रह्मभूत मकल्मषं धर्माऽधर्मादिवर्जितम् ॥ २७ ॥

आनन्दगिरिकृतटीका ।

स्वाभाविको दोषो मिथ्याज्ञानाधीनो रागादिशब्दादेर्मनसो नियमनं कथमित्याशङ्क्याह तत्तन्निमित्तमिति यथात्म्यनिरूपणं क्षयिष्णुत्वदुःखसंमिश्रत्वाद्यालोचनं तेन तत्र तत्र वैराग्यभावनया तत्तदाभासीकृत्य ततस्ततो नियम्यैतन्मन इति सम्बन्धः ॥ २६ ॥

मनसो वशीकरणेनोपशमे किं स्यादित्याह एवमिति योगाभ्यासो विषयविवेकद्वारा मनोनिग्रहाद्यावृत्तिः प्रशान्तमात्मन्येव प्रलीनमिति यावत् मनस्तद्वृत्त्योरभावे स्वरूप-

स्वामिकृतटीका ।

एवमपि रजोगुणवशाद्यदि मनः प्रचलेत्तर्हि पुनः प्रत्याहारेण वशीकुर्यादित्याह यतो यत इति स्वभावतश्चञ्चलं धार्य्यमाणमप्यस्थिरं मनो यं यं विषयं प्रति निर्गच्छति ततस्ततः प्रत्याहृत्य आत्मन्येव स्थिरं कुर्यात् ॥ २६ ॥

भाषा अनुवाद ।

फिरि भी जो रजोगुण वशते मन विचलित होय तो फेरि उसको अपने वश करना यह कहतेहैं कि स्वभावहीसे चञ्चल मन धारणाकी इच्छा करतेभी जो चञ्चल होय तो जिस जिस विषयमे गमन करै उसी उसी विषयसे खैंचि करि आत्माहीमे थिर करै ॥ २६ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

शाङ्करभाष्यम्

युञ्जन्निति युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तराय वर्जितः सदा सर्वदात्मानं युञ्जन् विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यन्त मुत्कृष्टं सुखं निरतिसय सुखमश्नुते व्याप्नोति ॥ २८ ॥

आनन्दगिरिकृतटीका।

भूतसुखाविर्भावस्य स्वापादौ प्रसिद्धिं द्योतयितुं हिशब्दः मोहादिक्लेशप्रतिबन्धाद्योगिनं यथोक्तसुखाप्राप्तिमाशङ्क्य मनोविलयमुपेत्य परिहरति प्रशान्तेति तस्यास्वदादिविलक्षणत्वमाह ब्रह्मभूतमिति अस्मदादेरपि स्वतो ब्रह्मभूतत्वेन तुल्यं जीवन्मुक्तत्वमित्याशङ्क्याह ब्रह्मैवेति धर्माधर्मप्रतिबन्धाद्युक्ता यथोक्तसुखप्राप्तिरित्याशङ्क्योक्तम् अकल्मषमिति ॥ २७ ॥

उत्तमं सुखं योगिनो भवतीत्युक्तं तदेव स्फुटयति युंजन्निति क्रमो यथोक्तो मनइन्द्रियग्राममित्यादि योगान्तरायो रागद्वेषादि सदात्मानं युंजन्निति सम्बन्धः ॥२८॥

स्वामिकृतटीका।

एवं प्रत्याहारादिभिः पुनःपुनर्मनोवशीकुर्वन्तं रजोगुणक्षये सति योगसुखं प्राप्नोतीत्याह प्रशान्तेति एवमुक्तप्रकारेण शान्तरजो यस्य तं अतएव प्रशान्तं मनो यस्य तमेनं निष्कल्मषं ब्रह्मत्वं प्राप्तं योगिनमुत्तमं सुखं समाधिसुखं स्वयमेवोपैति प्राप्नोति ॥ २७ ॥

ततश्च कृतार्थो भवतीत्याह युंजन्निति एवमनेन प्रकारेण सर्वदा आत्मानं मनो युंजन् वशीकुर्वन् विशेषेण सर्वात्मना विगतं कल्मषं यस्य स योगी सुखेनानायासेन ब्रह्मणः

भाषा अनुवाद।

इस प्रकार मन औ इन्द्री वशकारी पुरुषको रजोगुणकी क्षय होनेसे परे योगसुख प्राप्त होता है सोई कहते हैं कि पूर्वोक्त रीतिसे जिसका रजोगुण नाश भया और अच्छीतरह मनभी शान्त भया है सोई पापरहित प्रक्षीणमोह गतमोह तथा ब्रह्मभावको प्राप्त योगी उत्तम समाधि सुखको अनायास पावता हैं ॥ २७ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

## शाङ्करभाष्यम् :

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते सर्वेति सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं विक्रियारहितं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥ २९ ॥

### आनन्दगिरिकृतटीका ।

पापपदमुपलक्षणं पुण्यस्यापि संस्पर्शस्तादात्म्यमेकरसं उत्कर्षो विषयासंस्पर्शो योगमनुतिष्ठतो ब्रह्मभूतस्य सर्वानर्थनिवृत्तिनिरतिशयसुखप्राप्तिलक्षणो द्विविधो मोक्षो हेतुना केन स्यादिति शङ्कमानं प्रत्याह इदानीमिति स्वमात्मानमीक्षत इति सम्बन्धः सर्वभूतान्यपि तद्विशेषणत्वेन पश्यति चेन्न शुद्धस्तु ज्ञानमिति नाविद्यानिवृत्तिरित्याशङ्क्याह सर्वभूतानीति उक्ते दर्शने चित्तसमाधानोपायं दर्शयति योगेति विषमेषु उपाधिषु तदनुरोधाद्विषममेव दर्शनम् उपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति सर्वत्रेति ॥ २९ ॥

### स्वामिकृतटीका ।

संस्पर्शोऽविद्यानिवर्त्तकः साक्षात्कारस्तदेवात्यन्तं सर्वोत्तमं सुखमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

## भाषा अनुवाद ।

अब योगी जनकी कृतार्थता कहते हैं कि इसी प्रकार सर्वदा मन वशीभूतकारी पुरुष जिसका सम्पूर्ण पाप दूर भया है सोई योगी अनायास ब्रह्मसंस्पर्श अर्थात् अविद्या अज्ञान का निवृत्तिकारी जो प्रत्यक्ष ब्रह्मज्ञान सर्वोत्तम सुख सो पावते अर्थात् जीवन्मुक्त होते हैं ॥ २८ ॥

**यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥ ३०॥**

शाङ्करभाष्यम्।

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते यो मामिति यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्व्वेषु भूतेषु पश्यति सर्वञ्च ब्रह्मादिभूतजातं मयि सर्व्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनः अहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि स च मे न प्रणश्यति स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति तस्य च मम चैकात्मकत्वात् स्वात्मा हि नाम आत्मनः प्रिय एव भवति॥ ३०॥

आनन्दगिरिकृतटीका।

उक्तस्यैकत्वज्ञानस्य फलविकल्पत्वशङ्कां शिथिलयति एतस्येति तदेकत्वदर्शनमनुवदति यो मामिति तत्फलमिदानीमुपन्यस्यति तस्येति ज्ञानानुवादभागं विभजते यो मामिति तत्फलोक्तिभागं व्याचष्टे तस्यैवमिति अनेकत्वदर्शिनोऽपीश्वरो नित्यत्वान्न प्रणश्यतीत्याशङ्क्याह नेति अहं परमानन्दो न तं प्रति परोक्षो भवामीत्यर्थः स चेत्यादि व्याचष्टे विद्वानिति विद्वानिवाविद्वानपीश्वरस्य न नश्यतीत्याशङ्क्योक्तं नेत्यादिना अविदुषस्तु स्वरूपेण सतोऽपि व्यवहितत्वादविद्यया नष्टप्रायतेत्यर्थः ईश्वरस्य विदुषश्च परस्परमपरोक्षत्वे हेतुमाह तस्य चेति आत्मैकत्वेऽपि कथं मिथोऽपरोक्षत्वं तत्राह स्वात्मेति॥ ३०॥

स्वामिकृतटीका।

ब्रह्मसाक्षात्कारमेव दर्शयति सर्वभूतस्थमिति योगेनाभ्यस्यमानेन युक्तात्मा समाहितचित्तः सर्वत्र समं ब्रह्मैव पश्यतीति तथा स स्वमात्मानमविद्याकृतदेहादि परिच्छेदशून्यं सर्वभूतेषु ब्रह्मादिस्थावरान्तेष्ववस्थितं पश्यति तानि च आत्मन्यभेदेन पश्यति॥ २९॥

भाषा अनुवाद।

ब्रह्मका साक्षात्काररूप अपरोक्षज्ञान कैसा होता सो देखावते हैं कि योगसे युक्तात्मा पुरुष ब्रह्मसेले कर स्थावर पर्यन्त मे समदर्शी सर्वभूत कहे प्राणीमात्रमे अपनेको देखता और यावत् जीवोंको भी अपने मे देखता है अर्थात् अविद्याकृत देहादि भेद दूर हो ब्रह्ममय ज्ञानवान् सर्वत्र समदर्शी होता है अर्थात् ईश्वर को छोड और कुछ नहीं देखता॥ २९॥

**सर्वभूतस्थितं यो मां भजत्येकत्व मास्थितः ।**
**सर्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते ॥ ३१ ॥**

## शाङ्करभाष्यम् ।

यस्मात्त्वाहमेव स सर्व्वात्मैकत्वदर्शी इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते सर्व्वेति सर्वथा सर्वप्रकारैर्वर्त्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्त्तते नित्यमुक्त एव सः न मोक्षंप्रति केनचित् प्रतिबध्यत इत्यर्थः ॥ ३१ ॥

### आनन्दगिरिकृतटीका ।

विद्वदीश्वरयोरेकत्वानुवादेन विद्याफलं विदृणोति यस्मादिति तस्मादेकदर्शनार्थं प्रयतितव्यमिति शेषः पूर्वार्द्धेनानूद्योत्तरार्द्धेन फलविधिरिति मत्वाह इत्येतदिति रागादिरहितस्य यमनियमादिसंस्कारवतः स्वैरप्रवृत्त्यसम्भवेऽपि तामङ्गीकृत्य ज्ञानं स्तौति सर्वथेति प्रतिभासतोऽपि यथेष्टचेष्टाङ्गीकारे कुतो ज्ञानवतो नित्यमुक्तत्वं प्रातीतिकदुराचारप्रतिबन्धादित्याशङ्क्याह न मोक्षमिति ॥ ३१ ॥

### स्वामीकृतटीका ।

एवं भूतात्मज्ञाने च सर्वभूतात्मतया मदुपासनं सुख्यकारणमित्याह यो मामिति मां परमेश्वरं सर्वत्र भूतमात्रे यः पश्यति सर्वं च प्राणिमात्रं मयि यः पश्यति तस्याहं न प्रणश्यामि अदृश्यो न भवामि स च ममादृश्यो न भवति प्रत्यक्षो भूत्वा कृपा दृष्ट्या तं विलोक्यानुग्रह्णामीत्यार्थः ॥ ३० ॥

नचैवम्भूतो विधिकिङ्करः स्यादित्याह सर्वस्थितमिति सर्वभूतेषु स्थितं नामाभेदमास्थित आश्रितो यो भजति स योगी ज्ञानी सन् सर्वथा कर्मपरित्यागेनापि वर्त्तमानो मय्येव वर्त्तते मुच्यते न तु भ्रश्यतीत्यर्थः ॥ ३१ ॥

## भाषा अनुवाद ।

अब पूर्वोक्त ज्ञानीको जो फल होता सो कहते हैं कि साक्षात् परमेश्वर जो मैं तिसको यावद्वस्तुमात्र सबमें और सकल जो कुछ है सो मेरे में जो देखता है तो उसको हम अदृश्य नहीं होते और हमको वह भी अदृस्य नही होता अर्थात् हम प्रत्यक्ष होयकर कृपादृष्टिसे उस पर अनुग्रह करते हैं ॥ ३० ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

शाङ्करभाष्यम्।

किञ्चान्यत् आत्मेति आत्मौपम्येन आत्मा स्वयमेव उपमीयत इति उपमा तस्याः उपमायाः भाव औपम्यं तेन आत्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन स च किं समं पश्यतीत्युच्यते यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखमनुकूलं वा शब्दश्चार्थे यदिवा यच्च दुखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःख-मनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुखे अनुकूलप्रतिकूले तुल्य तया सर्वभूतेषु समं पश्यति न कस्यचित् प्रतिकूलमाचरत्यहिंसक इत्यर्थः य एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परम उत्कृष्टो मतो अभिप्रेतः सर्वयोगिनां मध्ये ॥ ३२ ॥

आनन्दगिरिकृतटीका।

स्वैराचरणस्याप्रतिबन्धकत्वकथनात् परपीड़नस्य योगिनः सम्यग्दर्शनं प्रत्यप्रतिबन्ध-कत्वप्रसक्तावुक्तं किञ्चेति अन्यदपि किञ्चिदुच्यते परमयोगिनो निर्देशद्वारा योगमाहात्म्य-मित्यर्थः उपमैवौपम्यमात्मा च तदौपम्यञ्च तेन सर्वभूतेषु यः समं पश्यतीत्युक्तं तदेव सम-दर्शनं प्रश्नपूर्वकं विवृणोति किमित्यादिना विकल्पार्थत्वं वारयति वाशब्द इति उपदर्शित-समदर्शनफलमभिलपति न कस्यचिदिति किमपेक्षया तस्य परमत्वं तत्राह सर्वेति ॥ ३२ ॥

स्वामिकृतटीका।

एवञ्च मां भजतो योगिनां मध्ये सर्वभूतानुकम्पी श्रेष्ठ इत्याह आत्मौपम्येनेति आत्मौपम्येन स्वसादृश्येन यथा मम सुखं प्रियं दुःखञ्चाप्रियं तथान्येषामपीति सर्वत्र

भाषा अनुवाद।

एवम्भूत पुरुष विधि कहे कर्मके अधीन नहीं है सो कहते हैं कि सर्वभूतमे वर्त्तमान जो मै तिसको एक बुद्धि कहे एकमोहिं छोड और बुद्धि नहीं है जिसके सो मेरेही को आश्रय करिके भजता है सो योगी तत्वज्ञानी सकल कर्म परित्याग करिके सर्वथा वर्त्तमान कहे जीवित-दशामे भी मेरेमे प्राप्त है अर्थात् सायुज्य गतिको प्राप्त है। ३१ ॥

## अर्जुन उवाच।

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥**

### शाङ्करभाष्यम्।

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःसम्पाद्यतम मालक्ष्य शुश्रूषुः ध्रुवं तत्प्राप्त्युपाय मर्जुनउवाच योऽयमिति योऽयं योगस्त्वया प्रोक्तः साम्येत समत्वेन हे मधुसूदन एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचलां स्थितिं प्रसिद्धमेतत् ॥ ३३ ॥

### आनन्दगिरिकृतटीका।

मनश्चञ्चलमस्थिरमित्युपश्रुत्य निर्विशेषे चित्तस्थैर्य्य दुःशक्यमिति मन्वानस्तदुपायबुभुत्सया पृच्छतीति प्रश्नमुत्थापयति एतस्येति तत्प्राप्त्युपायं शुश्रूषुरिति मन्वानः मनश्चञ्चलत्वेऽपि तन्निग्रहद्वारा योगस्थैर्य्यं सम्पाद्यतामित्याशङ्क्याह एतस्येति प्रसिद्धमिति सम्बन्धः ॥ ३३ ॥

### स्वामीकृतटीका।

समं पश्यन् सुखमेव सर्वेषां यो वाञ्छति न तु कस्यापि दुःखं स योगी श्रेष्ठो ममाभिमत इत्यर्थः ॥ ३२ ॥

उक्तलक्षणस्य योगस्यासम्भव मन्वानोऽर्जुन उवाच योऽयमिति साम्येन मनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन योऽयं योगस्त्वया प्रोक्त एतस्य योगस्य स्थिरां दीर्घकालां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥

### भाषा अनुवाद।

और ऐसे योगी जनोंके बीचमें जीवोंपर अनुग्रह करनेवाला श्रेष्ट है सो कहते हैं कि हे अर्जुन जो अपनी उपमा कहे और सबमें भी अपने समान सुख या दुख तथा प्रिय अप्रिय देखता है और सबकोभी सुखकी इच्छा करता औ दुख नहीं देख सकता है सोई योगी योगीजनों के बीचमें श्रेष्ठ है ॥ ३२ ॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करं॥ ३४॥

शाङ्करभाष्यम्।

चञ्चलमिति चञ्चलं हि मनः कृष्ण इति कृषते र्विलेखनार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात् कृष्ण हि यस्मान्मनः चञ्चलं न केवलमत्यर्थं चञ्चलं प्रमाथिच प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशीकरोति किञ्च बलवत् प्रबलं न केनचिन्नियन्तुं शक्यं दुर्निवारत्वात् किञ्च दृढं तन्तुनागव दच्छेद्यं तस्यैवम्भूतस्य मनसोऽहं निग्रहं रोधं मन्ये वायोरिव यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्य इत्यभिप्रायः॥ ३४॥

आनन्दगिरिकृतटीका।

मनसश्चञ्चलत्वेऽपि कृष्णपदपरिनिःपत्तिप्रकारं सूचयति कृष्ण इतीति कथं कर्षकत्वमाप्तकामस्य भगवतः सम्भवतीत्याशङ्क्याह भक्तेति ऐहिकामुष्मिक सर्वसम्पदामाकर्षणशीलत्वाच्चेति द्रष्टव्यं प्रमथ्नाति क्षोभयति तदेव क्षोभकत्वं प्रकटयति विक्षिपतीति दुर्निवारत्वमभिप्रेताद्विषयादाक्रष्टुमशक्यत्वं विशेषणान्तरमाह किञ्चेति अच्छेद्यत्वं विशेषणान्तरमाह किञ्च दृढमिति तन्तुनागो वरुणपाशशब्दितो जलचारी पदार्थोऽत्यन्तदृढतया छेत्तुमशक्यत्वेन प्रसिद्धो विवक्षितः वायोरित्युक्तं व्यनक्ति यथेति॥ ३४॥

स्वामिकृतटीका।

एतत् स्फुटयति चञ्चलमिति चञ्चलं स्वभावेनैव चपलं किञ्च प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकरमित्यर्थः किञ्च बलवद्विचारेणापि जेतुमशक्यं किञ्च दृढं विषयवास-

भाषा अनुवाद।

ऐसे योगके लक्षण भगवानसे सुनिकरि असम्भव जानि अर्जुन कहते हैं कि मनकी लय औ विक्षेप शक्ति दूरकरि केवल आत्मामें जो अवस्था न कहे समभावसे मनका थिर होरहना रूप योग जो आपने कहा सो हे मधुसूदन मनकी चञ्चलताईके हेतुसे हमको इस योगकी दीर्घकाल अवस्थिति कहे थिर रहना नही देख पड़ता है॥ ३३॥

## श्रीभगवानुवाच।

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ ३५॥**

### शाङ्करभाष्यम्।

श्रीभगवानुवाच एवमेतद्यथा ब्रवीषि असंशयं नास्ति संशयो मनो दुर्निग्रहं चञ्चलमित्यत्र हे महाबाहो किन्तु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्याञ्चित् समानप्रत्ययावृत्तिचित्तस्य वैराग्येण च गृह्यते वैराग्यं नाम दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासात् वैतृष्ण्यं विषयेषु वितृष्णां वैराग्यं तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते निरुध्यत इत्यर्थः॥ ३५

### आनन्दगिरिकृतटीका।

प्रश्नमङ्गीकृत्य प्रतिवचनमुत्थापयति श्रीभगवानिति कृत संशयराहित्यं तत्राह मन इति कथं तर्हि मनोनिरोधो भवति तत्राह किन्त्विति अभ्यासस्वरूपं सामान्येन निदर्शयति अभ्यासो नामेति कस्याञ्चिच्चित्तभूमावित्यविशेषितो ध्येयो विषयो निर्दिश्यते समानप्रत्ययावृत्तिविजातीयप्रत्ययान्तरितेति शेषः चित्तस्येति षष्ठीप्रत्ययस्य तद्विकारत्व-

### स्वामिकृतटीका।

नानुबन्धतया दुर्भेद्यम् अतो यथाऽऽकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधनमशक्यं तथाऽहं तस्य मनसो निग्रहं निरोधं दुष्करं सर्वथा कर्त्तुमशक्यं मन्ये॥ ३४॥

### भाषा अनुवाद।

और वही चञ्चलताको विस्तार करि कहते हैं कि हे कृष्ण यह मन स्वभावहीसे चञ्चल औ प्रमाथी अर्थात् देह इन्द्रियोंका विक्षिप्तकारी और बलवान कहे विचार से इसका जीतना असाध्य है तथा दृढ कहे विषयवासनासे बद्ध इस मनको विषयोंसे भिन्न करना अतिदुष्कर कहे कठिन है इससे जैसे आकाशमे वायुको निश्चल करना कठिन है तैसे इस मनका भी निग्रह कहे थिर करना हमको अति असाध्य बोध होता है॥ ३४॥

असंयतात्मना योगो दुष्प्राप्य इति मे मतिः।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥

शाङ्करभाष्यम्।

यः पुनरसंयतात्मा तेन असंयतेति असंयतात्मना अभ्यासवैराग्याभ्यां असंयत आत्मा अन्तकरणं यस्य सोऽयमसंयतात्मा तेनाऽसंयतात्मना

आनन्दगिरिकृतटीका।

द्योतनार्थं वैराग्यस्वरूपं निरूपयति वैराग्यमिति तेषु वैतृष्ण्यं वैराग्यं नामेति सम्बन्धः तत्र हेतुं सूचयति दोषेति विषयेषु वितृष्णा विषयेषु दोषदर्शनमभ्यस्यते तेन वैतृष्ण्यं जायते तेन निगृह्यमाणं निर्दिशति विक्षेपेति तस्मिन् गृह्यते निरुद्धे मनोनिरोधेऽस्य किं स्यादित्यपेक्षायामाह एवमिति अभ्यासहेतुकवैराग्यद्वारा चित्तप्रचारनिरोधे निरुद्धवृत्तिकं मनो विषयविमुखमन्तर्निष्ठं भवतीत्यर्थः ॥ ३५ ॥

स्वामिकृतटीका।

तदुक्तं चञ्चलत्वादिकमङ्गीकृत्यैव मनोनिग्रहोपायं श्रीभगवानुवाच असंशयमिति चञ्चलत्वादिना मनो निरोद्धुमशक्यमिति यद्वदसि एतन्निःसंशयमेव तथापि तु अभ्यासेन परमात्माकारया वृत्त्या विषयवैतृष्ण्यं नच गृह्यते अभ्यासेनालं प्रतिबन्धाद्वैराग्येण च विक्षेपप्रतिबन्धादुपरतवृत्तिकं सत् परमात्माकारेण परिणतं तिष्ठतीत्यर्थः तदुक्तं योगशास्त्रे मनसो वृत्तिशून्यस्य ब्रह्माकारतयास्थितिः या सम्प्रज्ञातनामासौ समाधिरभिधीयत इति ॥ ३५ ॥

भाषाअनुवाद।

अर्जुनको कही मनकी चञ्चलता अङ्गीकार करि भगवान उसके निग्रह करनेको उपाय कहते है कि हे महाबाहो हां मनकी चञ्चलताका रोंकना कठिन है यह जो तुम कहते हो सो निःसन्देह ठीकहै पर तौभी हे कौन्तेय अभ्यासके द्वारा मन परमात्माकार वृत्तिमे विषयोंकी वैराग्य वशते निग्रहीत होसकै है अभ्याससे लय और वैराग्यसे विक्षेप ये दोनो दूरहोय यह मन निर्वृत्ति होय अर्थात् और विषयोंको छोड़कर परमात्माकारता पायकर थिर होता है क्योंकि योगशास्त्रमे कहा है कि-वृत्तिशून्य मनकी ब्रह्माकाराकारितरूप स्थिति होती है उसीको निर्विकल्पक समाधि कहते हैं ॥ ३५ ॥

## अर्जुन उवाच।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

### शाङ्करभाष्यम्।

योगो दुःप्रापो दुःप्राप्य इति मे मतिः यस्तु पुनर्वश्यात्मा अभ्यासवैराग्याभ्यां वश्यमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतो यथोक्तादुपायात् ॥ ३६ ॥

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशं-

### आनन्दगिरिकृतटीका।

संयतात्मनो योगप्राप्तिः सुलभेत्युक्त्वा व्यतिरेकं दर्शयति यः पुनरिति व्यतिरेकोपन्यासपरं पूर्वार्द्धमनूद्य व्याकरोति असंयतेति पूर्वोक्तान्वयव्याख्यानपरमुत्तरार्द्धं व्याचष्टे यस्त्वित्यादिना अन्तःकरणस्य स्ववशत्वे सिद्धेऽपि वैराग्यादावास्थावता भवितव्यमित्याह यततेति उपायवैराग्यादि पूर्वको मनो निरोधः ॥ ३६ ॥

### स्वामिकृतटीका।

एतावांस्त्विह निश्चय इत्याह असंयतेति उक्तप्रकारेणाभ्यासवैराग्याभ्यां फलसंयत आत्मा चित्तं यस्य तेन योगो दुःप्राप्यः प्राप्तुमशक्यः अभ्यासवैराग्याभ्यां वश्यो वशवर्त्ती आत्मा चित्तं यस्य तेन पुरुषेण पुनस्त्वानेनैवोपायेन प्रयत्नं कुर्वता योगः प्राप्तुं शक्यः ॥३६॥

### भाषा अनुवाद।

और संयत आत्माको योगप्राप्ति सुलभ है यह कहते हैं कि उक्तरीतिसे अभ्यास औ वैराग्यके द्वारा जिसका चित्त वश नहीं है उसको यह योग दुःप्राप है और जिसका चित्त वशीभूत है और जो पूर्वकथित उपायसे यत्न करता है वह मेरे मतसे प्राप्त होसकता है असंयतात्मा वह है जिसका चित्त वशीभूत नहीं है ॥ ३६ ॥

## शाङ्करभाष्यम् ।

**अथाऽर्जुनउवाच अयतिरिति अयतिरप्रयत्नवान् योग मार्गे श्रद्धयाऽस्ति-क्यबुद्ध्या योगतो योगादन्तकालेऽपि चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥**

### आनन्दगिरिकृतटीका ।

प्रश्नान्तरमुत्थापयति तत्रेत्यादिना मनोनिरोधस्य दुःखसाध्यत्वमाशंक्य परिहृते सति प्रष्टा पुनरवकाशं प्रतिलभ्योवाचेति सम्बन्धः लोकद्वयप्रापककर्मसम्भवे कुतो योगिनो नाशाशङ्केत्याशंक्याह योगाभ्यासेति तथापि योगानुष्ठानपरिपाकप्राप्तिसम्यग्दर्शन-सामर्थ्यान्मोक्षोपपत्तौ कुतस्तस्य नाशाशंकेति चेन्नैवमनेकान्तरायवत्त्वाद्योगस्येह जन्मनि प्रायेण संसिद्धेरसिद्धिरित्यभिसन्धायाह योगसिद्धीति अभ्युदयनिःश्रेयसबहिर्भावो नाशो योगमार्गे तत्फलस्य सम्यग्दर्शनादिति शेषः तर्हि ततो वहिर्मुखत्वमेवात्यन्तिकं संवृत्तमित्याशंक्याह श्रद्धयेति तर्हि योगमार्गमाश्रयते नेत्याह योगादिति मरणकाले व्याकुलेन्द्रियस्य ज्ञानसाधनानुष्ठानावकाशाभावाद् युक्तं ततश्चलितमानसत्वमित्याशंक्याह भ्रष्टेति मन्यत इति गतिः पुरुषार्थः सामान्यप्रश्नमन्तर्भाव्य विशेषप्रश्नो द्रष्टव्यः ॥ ३७ ॥

### स्वामिकृतटीका ।

अभ्यासवैराग्याभावेन कथञ्चिदप्राप्तसम्यग्ज्ञानः किं फलं प्राप्नोतीत्यर्जुन उवाच अयति-रिति प्रथमं श्रद्धयोपेत एव योगे प्रवृत्तः नतु मिथ्याचारतया ततः परं त्वयतिः सम्यक् न यतते शिथिलाभ्यास इत्यर्थः तथा योगाच्चलितं मानसं विषयप्रवणं चित्तं यस्य मन्दवैराग्य इत्यर्थः एवमभ्यासवैराग्य शैथिल्याद्योगस्य संसिद्धिं फलं ज्ञानमप्राप्य कां गतिं प्राप्नोति ३७

## भाषा अनुवाद ।

**अभ्यास वैराग्यके अभावसे या और कोई प्रकार उपायसे जिसको तत्व-ज्ञान भया ऐसा मनुष्य कौन फल को पाय सकता है औ किस गतिको जाता है यह प्रश्न अर्जुन करते हैं कि हे कृष्ण जो प्रथम कपटरहित औ श्रद्धायुक्त हो योगमें प्रवृत्त भया परन्तु तिस पीछे यत्न न किया अर्थात् अभ्यासमें शिथिल कहे ढीला रहा और जिसका मन विषयमें मग्न रहा कहे विषयसे विराग न भया ऐसा मनुष्य योगसंसिद्धि जो ज्ञानरूप फल**

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढ़ो ब्रह्मणः पथि ॥ ३८ ॥**

### शाङ्करभाष्यम् ।

कच्चिदिति कच्चित् किं नोभयविभ्रष्टः कर्म्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति किंवा न नश्यति अप्रतिष्ठो निराश्रयो हे महाबाहो विमूढ़ः । ससन् ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

### आनन्दगिरिकृतटीका ।

प्रश्नमेव विवृणोति कच्चिदिति प्रशस्तप्रश्नार्थत्वं कच्चिदित्यस्याङ्गीकृत्य व्याचष्टे किमिति उभयविभ्रष्टत्वं स्पष्टयति कर्म्मेत्यादिना वायुना छिन्नं विश्लकलितमभ्रं यथा नश्यति तद्वदित्याह छिन्नेति नाशाशङ्कानिमित्तमाह निराश्रय इति कर्म्ममार्गरूपावष्टम्भाभावेऽपि ज्ञानमार्गावष्टम्भ स्तस्य भविष्यतीत्याशंक्याह विमूढ़ः सन्निति नहि कर्म्मिणां प्रतीयमानाशङ्कायुक्ताभिलाषं त्यक्त्वेश्वरे समर्प्यैवाक्कर्म्मानुतिष्ठतो निरूपचारेण तद्भ्रंशवचनासम्भवात् सर्वकर्म्मसंन्यासिनस्तु विहितानां त्यागात् ज्ञातोपायाच्च विच्युतेरर्थप्राप्तिशङ्का युक्तेति भावः ॥३८॥

### स्वामिकृतटीका ।

प्रश्नाभिप्रायं विवृणोति कच्चिदिति कर्म्मणामीश्वरेऽर्पितत्वादननुष्ठानाच्च तावत् कर्म्मफलं स्वर्गादिकं न प्राप्नोति योगानिष्पत्तेश्च मोक्षं न प्राप्नोति एव मुभयस्माद् भ्रष्टः अप्रतिष्ठो निराश्रयः अतएव ब्रह्मप्राप्त्युपाये पथि मार्गे विमूढः सन् कच्चित् किं न नश्यति किंवा नश्यतीत्यर्थः नाशे दृष्टान्तः यथा छिन्नमभ्रं पूर्वस्मादभ्राद्विश्लिष्टमभ्रान्तरमप्राप्तं सन् मध्य एव विलीयते तद्वदित्यर्थः ॥ ३८ ॥

### भाषा अनुवाद ।

तिसको न प्राप्त होके किसरूप से नतिको पाय सकता है अर्थात् कौन गतिको जाता है ॥ ३७ ॥

पूर्वोक्त प्रश्नकी अभिप्रायको विस्तारसे अर्ज्जुन कहते हैं कि नतो निष्काम कर्मकरि ईश्वरको समर्पण किया और न काम्य कर्मोंका अनुष्ठान किया तो स्वर्गादि फलसेभी रहित रहा और योगकी असम्पन्नता कहे अपूर्णतासे, मोक्षभी न मिली तो फेरि हे महाबाहो वह अप्रतिष्ठत कहे

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

श्रीभगवानुवाच।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
नहि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

शाङ्करभाष्यम्।

एतदिति एतन्मे मम संशयं कृष्ण छेत्तुमपनेतुमर्हसि अशेषतः त्वदन्यः त्वत्तोऽन्यः ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य नहि यस्मादुपपद्यते न सम्भवति अतस्त्वमेव छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

आनन्दगिरिकृतटीका।

यथोपदर्शितसंशयापाकरणार्थमर्जुनो भगवन्तं प्रेरयन्नाह एतदिति मत्तोऽन्यः कश्चिदृषिर्वा देवो वा त्वदीयं संशयं छेत्स्यतीत्याशंक्याह तदन्य इति अन्यस्य संशयच्छेत्तुरभावे फलितमाह अत इति ॥ ३९ ॥

स्वामिकृतटीका।

त्वयैव सर्वज्ञेनायं मम सन्देहो निरसनीयः त्वत्तोऽन्यस्तु एतत्सन्देहनिवर्त्तको नास्तीत्याह एतदिति एतत् एतत्छेत्ता निवर्त्तकः स्पष्टमन्यत् ॥ ३९ ॥

भाषा अनुवाद।

प्रतिष्ठा रहित मनुष्य दोनो ओर से भ्रष्टहो छिन्नमेघके समान क्या नष्टतो नहीं हो जाता है जैसे मेघदलसे भिन्नभया मेघ दूसरे मेघको न प्राप्त होके अन्तरिक्षहीमे विलाय जाता है या उसकोभी कोई गति है ॥ ३८ ॥

जिससे आप सर्वज्ञ हो इससे आपको छोड और कोई इस हमारी संशयका दूर करनेवाला नही है अर्जुन यही कहते हैं कि हे कृष्ण मेरी इस सन्देहको आपही छेदन करने योग्य हो और आपके विना दूसरा इस सन्देहका निवृत्ति कर्त्ता नहीं है सो इस सन्देहको कृपाकर मेरे मनसे दूर करो ॥ ३९ ॥

## शाङ्करभाष्यम् ।

पार्थेति हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशस्तस्य विद्यते नास्ति नाशो नाम पूर्वस्माद्धि न जन्मप्राप्तिः स तस्य योगभ्रष्टस्य नास्ति नहि यस्मात् कारणात् कल्याणकृत् शुभकृत् कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्र इति पुत्रोऽपि तात उच्यते शिष्योऽपि पुत्रतुल्य उच्यते यतो न गच्छति ॥ ४० ॥

### आनन्दगिरिकृतटीका ।

योगिनो नाशाशङ्कां परिहरन्नुत्तरमाह भगवानिति यदुक्तमुभयभ्रष्टो योगी नश्यतीति तत्राह पार्थेति तत्र हेतुमाह नहीति योगिनो मार्गद्वयाद्विभ्रष्टस्यैहिको नाशः शिष्टगर्हालक्षणो न भवतीति श्रद्धादेः सद्भावात्तथापि कथमामुष्मिकनाशशून्यत्वमित्याशंक्य तद्रूपनिरूपणपूर्वकं तदभावं प्रतिजानीते नाशो नामेति तत्र हेतुभागं विभजते नहीत्यादिना उभयभ्रष्टस्यापि श्रद्धेन्द्रियसंयमादेः सामिकृतश्रवणादेश्चाभावादुपपन्नं शुभकृत्त्वं कथं पुत्रस्थानीयः शिष्यः सम्बोध्यते पितुरेव तात शब्दत्वादित्याशंक्याह तनोतीति तेन पुत्रस्थानीयस्य शिष्यस्य तातेति सम्बोधनमविरुद्धमित्यर्थः न गच्छति कुत्सितां गतिं कल्याणकरत्वादिति नाशाभावः ॥ ४० ॥

### स्वामिकृतटीका ।

अत्रोत्तरं श्रीभगवानुवाच पार्थेति सार्द्धैश्चतुर्भिः इह लोके नाश उभयभ्रंशात् पातित्यं अमुत्र परलोके नाशो नरकप्राप्तिः स्तदुभयं तस्य नास्त्येव यतः कल्याणकृत् शुभकारी कश्चिदपि दुर्गतिं न गच्छति अयञ्च शुभकारी श्रद्धया योगे प्रवृत्तत्वात् तातेति लोकरीत्या उपलालयन् सम्बोधयति ॥ ४० ॥

## भाषा अनुवाद ।

अर्जुन की इस प्रश्न का उत्तर श्रीभगवान् साढ़े चारि श्लोकसे कहते हैं कि हे पार्थ उस अधूरे योगाभ्यासी को योगभ्रष्ट होनेसे यह लोक नाश कहे इस लोक मे पातक और परलोक मे नरकप्राप्ति ये दोनो नहीं होते हैं जिस हेतु किसी कल्याणकृत् कहे शुभ आचरण करनेवाला पुरुष तात कहे हे भाई अर्जुन दुर्गतिको नहीं प्राप्त होताहै तात-

## प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
## शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

### शाङ्करभाष्यम् ।

किन्त्वस्य भवति प्राप्येति योगमार्गेषु प्रवृत्तः सन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृता मश्वमेधादि याजिनां लोकांस्तत्र च उषित्वा वा समनुभूय शाश्वतीर्नित्याः समाः संवत्सरान् तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

### आनन्दगिरिकृतटीका ।

योगभ्रष्टस्य लोकद्वयेऽपि नाशाभावे किं भवतीति पृच्छति किंत्विति तत्र श्लोकेनोत्तरमाह प्राप्येति कथं संन्यासीति विशेष्यते तत्राह सामर्थ्यादिति कर्म्माणि व्यापृतस्य कर्म्मिणो योगमार्गप्रवृत्त्यनुपपत्तिस्तत्प्रवृत्तावपि फलाभिलाषविकलस्येश्वरे समर्पितसर्व्वकर्म्मणस्तद्भ्रंशाशङ्काऽनवकाशादित्यर्थः समानां नित्यत्वं मानुषसमाविलक्षणत्वं वैराग्याभावविवक्षया विभूतिमतां गृहे जन्मेति विशिष्यते ॥ ४१ ॥

### स्वामिकृतटीका ।

तर्हि किमसौ प्राप्नोतीत्य पेक्षायामाह प्राप्येति पुण्यकारिणामश्वमेधादियाजिनां लोकान् प्राप्य तत्र शाश्वतीः समा बहून् संवत्सरानुषित्वा वाससुखमनुभूय शुचीनां सदाचाराणां श्रीमतां धनिनां गेहे स योग भ्रष्टो जन्म प्राप्नोति ॥ ४१ ॥

### भाषा अनुवाद ।

शब्दसे लोकरीति देखावते भये भगवानने स्नेहपूर्वक अर्जुनको सम्बोधन करि कहा है तातका अर्थ पिता औ पुत्र है और शिष्यभी पुत्रके तुल्य है ॥ ४० ॥

तौफेरि वे योगभ्रष्ट लोग किस गतिको जाते हैं इस अपेक्षापर कहते हैं कि जिस स्वर्गआदि लोकको अश्वमेध आदि यज्ञ करिके मनुष्य जाते हैं पुण्यकर्म्मकारी योगभ्रष्ट पुरुषभी उसी उत्तम लोक मे जायकर बहुते बरसतक तहां वसि सुखभोग करिके फेरि सत्कर्म्मकारी धनी लोगोंके घर मे आय कर जन्मग्रहण करते हैं ॥ ४१ ॥

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशं ॥ ४२ ॥**

### शाङ्करभाष्यम् ।

अथेति अथवा श्रीमतां कुलादन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमतां एतद्धि जन्म यद्दरिद्राणां योगिनां कुले दुर्लभ्यतरं दुःखेन लभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले यस्मात् ॥ ४२ ॥

### आनन्दगिरिकृतटीका ।

अल्पवैराग्यादिकल्याणाधिकारे पक्षान्तरमाह अथवेति योगिनामिति कर्मिणां यहणं माभूदिति विधिनष्टि धीमतामिति ब्रह्मविद्यावतां शुचीनां दरिद्राणां कुले जन्म दुर्लभं प्रमादकारणाभावादित्याह एतद्धीति किमपेक्ष्यास्य जन्मनो दुःखलभ्यादपि दुःखलभ्यतरत्वं तदाह पूर्वमिति यद्यपि विभूतिमतां शुचीनां गृहे जन्म दुःखलभ्यं तथापि तदपेक्षया इदं जन्म दुःखलभ्यतरं यदीदृशं शुचीनां दरिद्राणां विद्यावतामिति विशेषणोपेते कुले लोके जन्मलक्षणमित्यर्थः यदुक्तमपरं जन्मोक्तं तस्योत्तमत्वे हेत्वन्तरमाह यस्मादिति ॥ ४२ ॥

### स्वामिकृतटीका :

अल्पकालाभ्यस्तयोगभ्रंशे गतिविशेषमुक्त्वा चिराभ्यस्तयोगभ्रंशे पक्षान्तरमाह अथवेति योगनिष्ठानां धीमतां ज्ञानिनामेव कुले जायते ननु पूर्व्वोक्तानामनारूढयोगानां कुले एतज्जन्म स्तौति ईदृशं जन्म एतद्धि लोके दुर्लभतरं मोक्षहेतुत्वात् ॥ ४२ ॥

### भाषा अनुवाद ।

थोड़े दिन योगाभ्यास करिके योगसे भ्रष्ट हुये पुरुषकी गति कहि चुके अब बहुत काल अभ्यास करके भ्रंश हुये योगीकी गति कहते हैं कि अथवा सत्पात्र धनियोंके घरजन्म लेनेसे और जो दरिद्र बुद्धिमान् योगाभ्यासियों के कुलमें जन्मग्रहण होना सो उत्तम है ऐसा जन्मलोक में अतिदुर्लभ है सो चिरकाल योगाभ्यासी योगभ्रष्ट होय के ऐसे ही घरमे उत्पन्न होते हैं ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥ ४३॥
पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते॥ ४४॥

शाङ्करभाष्यम्।

तत्रेति तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदैहिकं पूर्वस्मिन् देहे भवं पौर्वदैहिकं यतते च यत्नं करोति ततस्तस्मात् पूर्वकृतात् संस्काराद्भूयो बहुतरं संसिद्धिनिमित्तं हे कुरुनन्दन॥ ४३॥

कथम्भूतं पूर्वदेहबुद्धिसंयोगं इति तदुच्यते पूर्वेति यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते संसिद्धौ हि यस्मादवशोऽपि सः योगभ्रष्टः न कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेणाह्रियतेऽधर्मश्चेद् बलवत्तरः

आनन्दगिरिकृतटीका।

बुद्ध्येत्यात्मविषयेति शेषः पूर्वस्मिन् देहे भवं तत्रानुष्ठितसाधनविशेषयुक्तमित्यर्थः तर्हि यथोक्तजन्मनि साधनानुष्ठानमन्तरेणैव बुद्धिसम्बन्धः स्यादित्याशङ्क्याह यतते चेति प्रयत्नः श्रवणाद्यनुष्ठानविषयः॥ ४३॥

स्वामिकृतटीका।

ततः किमत आह तत्रेति सार्द्धेन स तत्र द्विप्रकारेऽपि जन्मनि पूर्वदेहभवं पौर्वदैहिकं तमेव ब्रह्मविषयया बुद्ध्या संयोगं लभते ततश्च भूयोऽधिकं संसिद्धौ मोक्षे प्रयत्नं करोति॥ ४३॥

भाषा अनुवाद।

सोई जन्मग्रहणके बादि क्याहोता है यह डेढश्लोक से कहते हैं कि हे कुरुनन्दन तेई दोनोप्रकारके योगभ्रष्ट लोग जन्मधारण करिके औ पूर्वदेह के अभ्यासमे ब्रह्मविषयक बुद्धिसंयोगयुक्त होते हैं और फेरिभी मोक्षकी सिद्धिके लिये अधिक यत्न करतेहैं॥ ४३॥

## शाङ्करभाष्यम्।

कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव तत्क्षये तु योगजः संस्कारः स्वयमेव कार्य्यमारभते न दीर्घकालस्थस्यापि विनाश स्तस्यास्तीत्यतो जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् योगमार्गे प्रवृत्तः सन्न्यासी योगभ्रष्टः सामर्थ्यात् सोपि शब्दब्रह्मवेदोक्त कर्मानुष्ठानफल मतिवर्त्तते कर्मा-नुष्ठानलक्षणमतिक्रामति अपाकरिष्यति किमुत बुद्ध्या यो योगं तन्निष्ठा अभ्यासं कुर्य्यात् ॥ ४४ ॥

### आनन्दगिरिकृतटीका।

यदि पूर्व्वसंस्कारोऽस्येच्छामनुपनयन् प्रवर्त्तयति तथापि प्रवृत्तिरनिच्छया स्यादित्या-शङ्क्याह पूर्व्वेति स हि योगभ्रष्टः समनन्तरजन्मकृतसंस्कारवशादुत्तरस्मिन् जन्मनि अनि-च्छन्नपि योगं प्रत्येवाकृष्टो भवतीत्यर्थः तत्र कैमुतिकन्यायं सूचयति जिज्ञासुरिति पूर्व्वार्द्धं विभजते पूर्व्वेति तस्यानिच्छया तत्र प्रवृत्तिरिति शेषः योगभ्रष्टस्याधर्मादिप्रतिबन्धेऽपि तर्हि पूर्व्वाभ्यासवशात् बुद्धिसम्बन्धः स्यादित्याशङ्क्याह नेत्यादिना यदि योगभ्रष्टेन योगा-भ्यासजनितसंस्कारप्राबल्यात् प्रबलतरधर्म्मप्रभेदरूपं कर्म न कृतं स्यात् तदा तेन संस्का-रेण वशीकृतः सन्निच्छादिरहितोऽपि बुद्धिसम्बन्धभाग् भवतीत्यर्थः विपक्षे योगसंस्कार-स्याभिभूतत्वान्न कार्य्यारम्भकत्वमित्याह अधर्मश्चेदिति योगजसंस्कारस्याधर्माभिभूतस्य कार्य्यकृत्वैवाभिभावकप्राबल्ये प्रश्नाशः स्यादित्याशङ्क्याह तत्क्षयेत्विति कालव्यव-धानान्निवृत्तिं शङ्कित्वोक्तं नेति तत्त्वजलौकादृष्टान्तमुत्वा संस्कारस्य दीर्घतायाः समधिगत-त्वादिति भावः कैमुतिकन्यायोक्तिपरमुत्तरार्द्धं विभजते जिज्ञासुरपीत्यादिना अत्रापि सन्न्यासीति विशेषणं पूर्व्ववदवधेयमित्याह सामर्थ्यादिति नहि कर्मी कर्ममार्गे प्रवृत्त-स्ततो भ्रष्टः शङ्कितुं शक्यते अतः सन्न्यासी पूर्व्वोक्तैर्विशेषणैः विशिष्टो योगभ्रष्टोऽभीष्टः सोपि वैदिकं कर्म तत्फलञ्चातिवर्त्तते किमुत योगं बुद्ध्वा तन्निष्ठः सदाभ्यासं कुर्व्वन् कर्म तत्फलञ्चातिवर्त्तते किमिति वक्तव्यमिति योजना योगनिष्ठस्य कर्म तत्फलातिवर्त्तनं ततोऽधिकफलावाप्तिर्विवक्ष्यते ॥ ४४ ॥

### स्वामीकृतटीका।

तत्र हेतुः पूर्व्वेति तेनैव पूर्व्वदेहकृताभ्यासेनावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि स ह्रियते विषयेभ्यः पराहृत्य ब्रह्मनिष्ठः क्रियते तदेवं पूर्व्वाभ्यासवशेन प्रयत्नं कुर्व्वन् शनैर्मुच्यत इतीमर्थं कैमुतिकन्यायेन स्पष्टयति जिज्ञासुरिति सार्द्धेन योगस्य स्वरूपं जिज्ञासुरेव

प्रयत्नात् यतमानस्तु योगी संशुद्ध किल्विषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

शाङ्करभाष्यम् ।

कुतश्च योगित्वं श्रेय इति प्रयत्नादिति प्रयत्नात् प्रयतमानादधिकतरं यतमान इत्यर्थः तत्र योगी विद्वान् संशुद्धकिल्विषो विशुद्धकिल्विषः स शुद्धपापोऽनेकेषु जन्मसु किञ्चित् किञ्चित् संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धः ततो लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिं ॥ ४५ ॥

आनन्दगिरिकृतटीका ।

योगनिष्ठस्य श्रेष्ठत्वे हेत्वरं युक्तं उत्तरश्लोकमवतारयति कुतश्चेति मृदुप्रयत्नोऽपि क्रमेण मोच्यते वैदधिकप्रयत्नस्य क्लेशहेतोरकिञ्चित्करत्वमित्याशङ्क्य हेत्वन्तरमेव प्रकटयति

स्वामिकृतटीका ।

केवलं न तु प्राप्तयोगः एवंभूतो योग प्रविष्टमात्रोऽपि पापवशाद्योगभ्रष्टोऽपि शब्दब्रह्म-वेदमतिवर्त्तते वेदोक्तकर्मफलान्यतिक्रामति तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः ॥ ४४ ॥

भाषा अनुवाद ।

वह पूर्वदेह का बुद्धिसंस्कार कैसा है तो उसका कारण यह है कि सोई पूर्वदेह के अभ्यास से अवश अर्थात् जो कोई कारण या विघ्न वलते इच्छा नभी होय तौ भी मोच सिद्धि के अर्थ पूर्व्वसंस्कार के जोर से अवश की नाई यत्न करते हैं अर्थात् विषयोंसे विमुख होय ब्रह्ममें निरत होते हैं और इस तरह पूर्व्व अभ्यास के कारणसे मुक्ति के अर्थ यतन कारी मनुष्य जिस क्रमसे मुक्त होते हैं सो कैमुतिक न्यायसे डेढ श्लोकके द्वारा कहते हैं कि जिज्ञासु कहे योगस्वरूप जानने की इच्छा करने वाला कुछ केवल योगही को नहीं प्राप्त होता किन्तु योग प्रविष्ट मनुष्य पापवशते योगभ्रष्ट होय भी शब्दब्रह्म जो वेद तिसको अतिवर्त्तन करता अर्थात् वेदोक्त फलकी अपेक्षा अधिक फल प्राप्तहोयके फेरि मुक्त होताहै इतनाहीं नहीं इससेभी अधिक इसी को कैमुतिक न्याय कहते हैं ॥४४॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवाऽर्जुन ॥ ४६ ॥**

शाङ्करभाष्यम् ।

यस्मादेवं तस्मात् तपस्विभ्य इति तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि ज्ञानमात्रशास्त्रार्थपाण्डित्यं तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति कर्मिभ्योऽग्निहोत्रादिकर्म तद्वद्भ्योऽधिको योगी विशिष्टः तस्माद्योगी भवाऽर्जुन ॥ ४६ ॥

आनन्दगिरिकृतटीका ।

प्रयत्नादिति तत्र योगविषये प्रयत्नातिरेके सतीत्यर्थः ततः सञ्चितसंस्कारसमुदायादिति यावत् संसृत्यसम्यग्दर्शनवशात् प्रकृष्टा गतिः सन्न्यासिना लभ्यते तेन शीघ्रं मुक्तिमिच्छन्नधिकप्रयत्नो भवेदल्पप्रयत्नस्तु चिरेणैव मुक्तिभागित्यर्थः ॥ ४५ ॥

सम्यग्ज्ञानद्वारा मोक्षहेतुत्वं योगस्योक्तमनूद्य योगिनः सर्वाधिकत्वमाह यस्मादिति योगस्य सर्वस्मादुत्कर्षाद्वश्यकर्त्तव्यत्वाय योगिनः सर्वाधिक्यं साधयति तपस्विभ्य इति योगिनो ज्ञानिनश्च पर्य्यायत्वात् कथं तस्य ज्ञानिभ्योऽधिकत्वमित्याशङ्क्याह ज्ञानमिति योगिनः सर्वाधिकत्वे फलितमाह तस्मादिति ॥ ४६ ॥

स्वामिकृतटीका ।

यदेवं मन्दप्रयत्नोऽपि योगी परां गतिं याति तदा यस्तु योगी प्रयत्नादुत्तरोत्तरमधिकं योगे यतमानो यत्नं कुर्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा ततः श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥४५॥

**भाषा अनुवाद ।**

जिस हेतु मन्दयत्नकारी योगी श्रेष्ठगतिको प्राप्त होते हैं तो उत्तरोत्तर योग मे जो अधिक यत्न करते वे योगसे निःपाप हो अनेक जन्म संसिद्ध अर्थात् सम्यक्ज्ञानी होय श्रेष्ठगति पावेंगे इसमे और कुछ कहना या सन्देह क्या वाको है सोई कहा कि अच्छी तरहसे यतन करता हुआ योगी संशुद्धकिल्बिष निःपाप अनेक जन्मसे सिद्ध होय फिरि परमगति को याता है ॥ ४५ ॥

**योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ ४७॥**
**इति श्रीभगवद्गीतायां ध्यानयोगो नाम षष्ठोऽध्यायः॥ ६॥**

शाङ्करभाष्यम्।

योगिनामिति योगिनामपि सर्वेषां रुद्रादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति॥ ४७॥

इति श्रीभगवद्गीताभाष्ये षष्ठोऽध्यायः॥ ६॥

आनन्दगिरिकृतटीका।

नन्वादित्यो विराडात्मा सूत्रं कारणमक्षरमित्येतेषामुपासका भूयांसो योगिनो गम्यन्ते तेषां कतमः श्रेयानिष्यते तत्राह योगिनामिति यो भगवन्तं सगुणं निर्गुणं वा यथोक्तेन चेतसा श्रद्दधानः सन्ननवरतमनुसन्धत्ते स युक्तानां मध्येऽतिशयेन युक्तः श्रेयानीश्वरस्याभिप्रेतः नहि तदीयोऽभिप्रायोऽन्यथाभवितुमर्हतीत्यर्थः तदनेनाध्यायेन कर्मयोगस्य सन्न्यासहेतोर्मर्य्यादां दर्शयता साङ्ख्ययोगं विवृण्वता मनोनिग्रहोपायोपदेशेन योगभ्रष्टस्यात्यन्तिकनाश-

स्वामिकृतटीका।

यस्मादेवं तस्मात्तपस्विभ्य इति कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्योऽपि ज्ञानिभ्यः शास्त्रविज्ञानवद्भ्योऽपि कर्म्मिभ्य इष्टापूर्त्तादिकर्मकारिभ्योऽपि योगिश्रेष्ठो ममाऽभिमतः तस्मात्त्वं योगी भव॥ ४६॥

## भाषा अनुवाद।

जिस कारणसे ऐसा है कि कृच्छ्र चान्द्रायण आदि तप मे निरत औ शास्त्र से जो ज्ञानी इनसे भी योगी अधिक है तथा यज्ञ कुवां ताल वाग दानकर्म्मकारी जो कर्म्मी तिससे भी अधिक है हमारे मतमे योगी इस कारण से हे अर्जुन तुम योगी होउ॥ ४६॥

आनन्दगिरिकृतटीका।

शङ्काञ्च शिथिलयता त्वं पदार्थाभिज्ञस्य ज्ञाननिष्ठत्वोक्त्या वाक्यार्थज्ञानान्मुक्तिरिति साधितम् ॥ ४७ ॥

इति आनन्दगिरिकृतटीकायां षष्ठोऽध्यायः ॥ ६ ॥

स्वामिकृतटीका।

योगिनामपि यमनियमादिपराणां मध्ये मद्भक्तः श्रेष्ठ इत्याह योगिनामपीति मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं श्रद्धायुक्तः सन् भजते स योगयुक्तेभ्यः श्रेष्ठो मम सम्मतः अतो मद्भक्तो भवेति भावः ॥ आत्मयोगमवोचद्यो भक्तियोगशिरोमणिं तं वन्दे परमानन्दं माधवं भक्तसेवधिं ॥ ४७ ॥

इति श्रीधरस्वामीकृते षष्ठोऽध्यायः ॥ ६ ॥

## भाषा अनुवाद।

योगियोंके मध्य अर्थात् यम नियम परायण लोगोंके बीचमे मेरा भक्तही श्रेष्ठ है यह कहते हैं कि मै जो परमेश्वर सो मद्गत अर्थात् मेरे मे मन लगाय श्रद्धासे जो हमको भजै है मेरे मतसे सोई श्रेष्ठ इससे अर्जुन तुम मेरे भक्त होउ ॥ श्रीधरस्वामी प्रभु को प्रणाम करते हैं कि परमानन्द भक्तसेवित लक्ष्मीपति को मै वन्दना करता हूं जिसने भक्तियोग शिरोमणि रूप आत्मयोग उपदेश किया है ॥ ४७ ॥

इति श्रीजगन्नाथशुक्ल विरचितायां मनभावनी नाम टीकायां षष्ठोध्यायः ॥ ६ ॥

---

# श्रीमद्भगवद्गीता ।

## सप्तमोऽध्यायः ।

श्रीभगवानुवाच ।

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

शाङ्करभाष्यम् :

योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति प्रश्नबीजमुपन्यस्य स्वयमेव ईदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुर्भगवानुवाच मयीति मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य स मय्यासक्तमनाः हे पार्थ योगं युञ्जन् मनःसमाधानं कुर्वन् मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयो यो हि कश्चित् पुरुषार्थेन केनचिदर्थी भवति स तत् साधनं कर्माग्निहोत्रादितपोदानं वा किञ्चिदाश्रयं प्रतिपद्यते अयन्तु योगी मामेवाश्रयं प्रतिपद्यते हित्वान्यत् साधनान्तरं मय्येवासक्तमनाः भवति यस्त्वमेवम्भूतः सन् असंशयं समग्रं समस्तः विभूतिबलशक्त्यैश्वर्य्यादिगुणसम्पन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया ॥ १ ॥

आनन्दगिरिकृतटीका ।

कर्मसंन्यसात्मकसाधनप्रधानं त्वं पदार्थप्रधानं वा प्रथमषट्कं व्याख्याय मध्यमषट्कमुपास्तिनिष्ठं तत्पदार्थनिष्ठं वा व्याख्यातुमारभमाणः सप्तमन्तराध्यायमवतारयति योगिनामिति अतीताध्यायान्तेनान्तरात्मना यो भजते मामिति प्रश्नबीजं प्रदर्श्य कीदृशं भगवतस्तत्त्वं कथं वा मद्गतान्तरात्मा स्यादित्यर्जुनस्य प्रश्नद्वये जाते स्वयमेव भगवान् अपृष्टमेव तद्वक्तुं इच्छन्नुक्तवानित्यर्थः परमेश्वरस्य वक्ष्यमाणविशेषणं सकलजगदायतनत्वादिना नानाविधविभूतिभागित्वं तत्रासक्तिर्मनसो विषयान्तरपरिहारेण तन्निष्ठत्वं मनसो भगवत्येवासक्तौ हेतुमाह योगमिति विषयान्तरपरिहारे हि गोचरमालोच्यमानो भगवत्येव प्रतिष्ठितो

आनन्दगिरिकृतटीका ।

भवतीत्यर्थः तथापि स्वाश्रये पुरुषो मनः स्थापयति नान्यत्रेत्याशङ्क्याह मदाश्रय इति योगिनो यदीश्वराश्रयत्वेन तस्मिन्नेवासक्तमनस्त्वमुपन्यस्तं तदुपपादयति यो हीति ईश्वराख्याश्रयस्य प्रतिपत्तिमेव प्रकटयति हित्वेति अस्तु योगिनस्त्वदाश्रयप्रतिपत्त्या मनसस्त्वय्येवासक्तिस्तथापि मम किमायातमित्याशंक्य द्वितीयार्द्धं व्याचष्टे यस्त्वमेवमिति एवम्भूतो यथोक्तध्याननिष्ठपुरुषवदेवमध्यात्मज्ञानजा यस्त्वं स त्वं तथाविधः सन्नसंशयमविद्यमानः संशयो यत्र ज्ञाने तद्यथा स्यात्तथा मां समग्रं ज्ञास्यसीति सम्बन्धः समग्रमित्यस्यार्थमाह समस्तेति विभूतिर्नानाविधैश्वर्योपायसम्पत्तिः बलं शरीरगतं सामर्थ्यं शक्तिर्मनोगतं प्रागल्भ्यं ऐश्वर्यमीशितव्यविषयमीशनसामर्थ्यं आदिशब्देन ज्ञानेच्छादयो गृह्यन्ते असंशयमिति पदस्य क्रियाविशेषणत्वं विशदयन् क्रियापदेन सम्बन्धं कथयति संशयमिति विना संशयं भगवत्तत्त्वपरिज्ञानमेव स्फोरयति एवमेवेति भगवत्तत्त्वे ज्ञातव्ये कथं मम ज्ञानमुपदेक्ष्यति नहि त्वामृते तदुपदेष्टा कश्चिदस्तीत्याशङ्क्याह तच्छृण्विति ॥ १ ॥

स्वामीकृतटीका ।

विज्ञेयमात्मनस्तत्त्वं सयोगं समुदाहृतं भजनीयमथेदानीमैश्वरं रूपमीर्यते पूर्वाध्यायान्ते मद्गतेनान्तरात्मना यो मां भजते स मे युक्ततमो मत इत्युक्तं तत्र कीदृशस्त्वं यस्य भक्तिः कर्त्तव्येत्यपेक्षायां स्वस्वरूपं निरूपयिष्यन् श्रीभगवानुवाच मयीति मयि परमेश्वरे आसक्तमभिनिविष्टं मनो यस्य सः मदाश्रयोऽहमेवाश्रयो यस्य अनन्यशरणः सन् योगं युञ्जन्नभ्यस्यन्नसंशयं यथा भवत्येवं मां समग्रं विभूतिबलैश्वर्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु ॥ १ ॥

## भाषा अनुवाद ।

अब इस अध्यायमें भजनीय ईश्वरका स्वरूप कहते हैं कि जो पूर्व अध्यायके अन्तमें कहा कि मदात्मक होय जो मेरो भजन करे है सो उत्तम है इस पर जो कहो कि सो भगवान कैसे हैं जिनको भक्ति करना चाहिये इस अभिप्राय पर अपने स्वरूपका निरूपण करनेके अर्थ श्रीकृष्ण अर्जुनसे कहते हैं कि हे अर्जुन मेरेमें जिसका मन लगा है और मेंहीं हौं अवलम्ब जिसके ऐसा अनन्य शरणागत होय योगाभ्यास करनेके अनन्तर संशयरहित समग्र कहे विभूति बल ऐश्वर्य सहित मेरे रूपको जैसे जानि सकैगा सोई मेरे वचन तुम श्रवण करो ॥ १ ॥

ज्ञानं तेऽहं सविज्ञान मिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

शाङ्करभाष्यम् ।

तच्च मद्विषयं ज्ञानमिति ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं सानुभवसंयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा नेह भूयः पुनः ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः ॥ २ ॥

अतो विशिष्टफलत्वात् दुर्लभतरं ज्ञानं कथमित्युच्यते मनुष्याणामिति

आनन्दगिरिकृतटीका ।

शास्त्रसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निरासार्थं तदुक्तिप्रकारमेव विवृणोति तच्चेति इदमपरोक्षं ज्ञानं चैतन्यं तस्य सविज्ञानस्य प्रतिलम्भो किं स्यादित्याशङ्क्याह यज्ज्ञात्वेति इदमाचैतन्यस्य परोक्षत्वं व्यावर्त्तते तदेव सविज्ञानमिति विशेषणेन स्फुटयति अशेषतः अनवशेषेण तद्वेदनफलोपन्यासेन श्रोतारं तत्श्रवणप्रवणं करोति तज्ज्ञानमिति एकविज्ञानेन सर्वविज्ञानश्रुतिमाश्रित्योत्तरार्द्धतात्पर्यमाह यज्ज्ञात्वेति ॥ २ ॥

स्वामिकृतटीका ।

वक्ष्यमाणं स्तौति ज्ञानमिति ज्ञानं शास्त्रीयं विज्ञानमनुभवस्तत्सहितमिदं मद्विषयमशेषतः साकल्येन वक्ष्यामि यज्ज्ञात्वा इह श्रेयोमार्गेवर्त्तमानस्य पुनरन्यज्ज्ञातव्यमवशिष्टं न भवति तेनैव कृतार्थो भवतीत्यर्थः ॥ २ ॥

भाषाअनुवाद ।

अब भगवान जो कहते हैं उसीकी प्रसंशा करते हैं कि विज्ञान जो अनुभव और ज्ञान जो शास्त्रसे मेरे विषयमे होता है ये दोनो मैं तुमारे प्रति कहूंगा जो जानिकर मुक्तिमार्गमे आरूढ़ पुरुष को और फेरि कुछ जानना बाकी नहीं रहता हैं इसीसे वे कृतारथ होते हैं ॥ २ ॥

## भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
## अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

शाङ्करभाष्यम् ।

मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति सिद्धये सिद्ध्यर्थं यतति प्रयत्नं करोति तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय मोक्षमार्गे यतन्ते तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥ ३ ॥

अतः श्रोतारं प्ररोचनेनाभिमुखीकृत्याह भूमिरिति भूमिरिति पृथिवी

आनन्दगिरिकृतटीका ।

भगवत्तत्त्वज्ञानस्य विशिष्टफलत्वमुक्त्वा फलितमाह अत इति ज्ञानस्य दुर्लभत्वं प्रश्नपूर्वकं प्रकटयति कथमित्यादिना मनुष्यग्रहणं बहुवाचकत्वमुपेत्य व्याकरोति अनेकेष्विति सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्त्यर्थमित्यर्थः सिद्ध्यर्थं यतमानानां कथं सिद्धिमित्याशङ्क्याह सिद्धा एवेति सर्वेषामेव तेषां ज्ञानोदयात्तस्य सुलभत्वमित्याशङ्क्याह तेषामिति ॥ ३ ॥

स्वामिकृतटीका ।

मद्भक्तिं विना तु मज्ज्ञानं दुर्लभमित्याह मनुष्याणामिति असंख्यातानां जीवानां मध्ये मनुष्यव्यतिरिक्तानां श्रेयसि प्रवृत्तिरेव नास्ति मनुष्याणान्तु सहस्रेषु मध्ये कश्चिदेव पुण्यवशात् सिद्धये आत्मज्ञानाय प्रयतते प्रयत्नं कुर्वतामपि सहस्रेषु प्राक्तनपुण्यवशादात्मानं वेत्ति तादृशानां चात्मज्ञानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्ति तदेवमतिदुर्लभमप्यात्मतत्त्वं तुभ्यमहं वक्ष्यामीत्यर्थः ॥ ३ ॥

भाषा अनुवाद ।

हमारी भक्ति विना हमै जानने सके यह अति दुर्लभ है सोई कहते हैं कि असंख्य जीवोंके मध्यमे मनुष्य छोडि और किसीको मोक्षके विषयमे प्रवृति नही होती है और हजार मनुष्यके बीच कोई एक पुन्यके प्रभावसे आत्मज्ञान के हेतु यत्न करता है ऐसे यत्नकारी हजार के मध्य मे कोई एक अति उत्तम पुन्यवशते अपनेको जानि शके है और ऐसे आत्मज्ञानी हजारके बीचमे कोई एक मेरी कृपासे परमात्मा स्वरूपमुझे यथार्थ रूपसे जाने है सोई अति कठिन ज्ञान हम तुमसे कहैंगे ॥ ३ ॥

## शाङ्करभाष्यम् ।

तन्मात्रमुच्यते न स्थूला भिन्ना प्रकृतिरष्टधेति वचनात् तथाऽबादयोऽपि तन्मात्राण्येवोच्यन्ते अपोऽनलो वायुः खं मनो मन इति मनसः कारणं अहंकारो गृह्यते बुद्धिरित्यहंकारकारणं महत्तत्त्वं अहंकार इत्यविद्यासंयुक्तमव्यक्तं यथा विषसंयुक्तमन्नं विषमुच्यते एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते प्रवर्त्तकत्वादहंकारस्याहंकार एवहि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके इतीयं यथोक्ता प्रकृतिर्मे ममेश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥ ४ ॥

### आनन्दगिरिकृतटीका ।

ज्ञानार्थं प्रयत्नस्य तद्द्वारा ज्ञानलाभस्य तदुभयद्वारेण मुक्तेश्च दुर्लभत्वाभिधानस्य श्रोतृप्ररोचनं फलमिति मत्वाह श्रोतारमिति आत्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति आहेति भूमिशब्दस्य व्यवहारयोग्यस्थूलपृथिवीविषयत्वं व्यावर्त्तयति भूमिरितीति तत्र हेतुमाह भिन्नेति प्रकृतिसमानाभिव्याहारात् गन्धतन्मात्रस्थूलपृथिवीप्रकृतिरुत्तरविकारो भूमिरित्युच्यते न विशेष इत्यर्थः भूमिशब्दवदबादिशब्दानामपि सूक्ष्मभूतविषयत्वमाह तथेति तेषामपि प्रकृतिसमानाविकृतत्वाविशेषात् तन्मात्राणां पूर्वपूर्वप्रकृतीनामुत्तरोत्तरविकाराणां न विशेषसिद्धिरित्यर्थः मनःशब्दस्य सङ्कल्पविकल्पात्मककरणविषयत्वमाशङ्क्याह मन इतीति न खल्वहङ्काराभावे सङ्कल्पविकल्पयोरसम्भवात्तदात्मकं मनः सम्भवतीत्यर्थः निश्चयलक्षणा बुद्धिरित्युपगमाद् बुद्धिशब्दस्य निश्चयात्मककरणविषयत्वमाशङ्क्याह बुद्धिरितीति नहि हिरण्यगर्भसमष्टिबुद्धिरूपमन्तरेण व्यष्टिबुद्धिः सिध्यतीत्यर्थः अहङ्कारस्याभिमानविशेषात्मकत्वेनान्तःकरणप्रभेदत्वं व्यावर्त्तयति अहङ्कार इति अविद्यासंयुक्तमित्यविद्यात्मकमित्यर्थः कथं मूलकारणस्याहङ्कारशब्दत्वमित्याशङ्कोक्तमर्थं दृष्टान्तेन स्पष्टयति यथेत्यादिना मूलकारणस्याहङ्कारशब्दत्वे हेतमाह प्रवर्त्तकत्वादिति तस्य प्रवर्त्तकत्वं प्रपञ्चयति अहङ्कार एवेति सत्येवाहङ्कारे ममकारो भवति तयोश्चाभावे सर्वाऽप्रवृत्तिरिति प्रसिद्धमित्यर्थः उक्तां प्रकृतिमुपसंहरति इतीयमिति इयमित्यपरोक्षा साक्षिदृश्येति यावत् ऐश्वरी तदाश्रया तदैश्वर्योपाधिभूता प्रक्रियते महदाद्याकारेणेति प्रकृतिस्त्रिगुणं जगदुपादानं प्रधानमिति मतं व्युदस्यति मायेति तस्यास्तत्कार्याकारेण परिणामयोग्यत्वं द्योतयति शक्तिरिति अष्टधेति अष्टभिः प्रकारैरिति यावत् ॥ ४ ॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मेऽपराम्।**
**जीवभूतां महाबाहो ययेदं धार्य्यते जगत्॥ ५॥**

## शाङ्करभाष्यम्।

अपरेति अपरा न परा निकृष्टाऽशुद्धानर्थकरी संसाररूपा बन्धनात्मिकेयमितोऽन्यां यथोक्तायास्तु अन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे

## स्वामिकृतटीका।

एवं श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह भूमिरिति द्वाभ्यां भूम्यादीनि पञ्चभूतसूक्ष्माणि मनःशब्देन तत्कारणभूतोऽहङ्कारः बुद्धिशब्देन तत्कारणं महत्तत्वं अहङ्कारशब्देन तत्कारणमविद्या इत्येवमष्टधा भिन्ना यद्वा भूम्यादिशब्दैः पञ्चमहाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्ते अहङ्कारशब्देनैवाहङ्कारस्तेनैव तत्कार्य्याणीन्द्रियाण्यपि गृह्यन्ते बुद्धिरिति महत्तत्त्वं मनःशब्देन तु मनसैवोन्नेयमव्यक्तस्वरूपं प्रधानमित्यनेन प्रकारेण मे प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवान्तर्भावविवक्षयाऽष्टधा भिन्नेत्युक्तं तथाच क्षेत्राध्याये इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति॥ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेवच इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचरा इति॥ ४॥

## भाषा अनुवाद।

इन वातोंसे श्रोता अर्जुनको उत्साहयुक्त करके अब प्रकृति जो माया तिसके द्वारा सृष्टि आदिका कर्त्तृत्व जो अङ्गीकार किया है ईश्वरत्व उसका निरूपण उत्तम अधम भेद क्रमसे दो श्लोकसे कहते हैं कि भूमि आदि पञ्च भूत और मन शब्दसे मनका कारणरूप अहङ्कार तथा बुद्धिका कारण महत्तत्त्व औ अहङ्कारका कारण भूत जो अविद्या कहे अज्ञान इस प्रकारसे मेरी प्रकृति माया आठ प्रकारकी है अथवा पञ्च भूतसे रूपादिमात्रा और अहङ्कारसे कार्य्यरूप इन्द्री औ मन बुद्धि ये आठप्रकार जानो यद्यपि इहां चौविश भेदोंको इन आठके अन्तर्भूत करि मायाके आठही प्रकार कहा तौभो क्षेत्राध्याय जो तेरहवां अध्याय तहां प्रकृतिके चौविशही तत्त्वरूप विभाग कहेंगे॥ ४॥

**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।**
**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥**

शाङ्करभाष्यम् ।

परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो यया प्रकृत्या इदं धार्यते जगदन्तः प्रविष्टया ॥ ५ ॥

आनन्दगिरिकृतटीका ।

अचेतनवर्गमेकीकर्त्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नं कार्यकर्त्तृ चेतनवर्गमेकीकर्त्तुं पुरुषस्य चैतन्यस्य विद्याशक्त्यवच्छिन्नस्यापि प्रकृतित्वं कथयितुमन्यां प्रकृतिमनूद्य दर्शयति अपरेति निकृष्टत्वं स्पष्टयति अनर्थकरीति अनर्थकरत्वमेव स्फोरयति संसारेति कथञ्चिदृष्यमन्यत्वव्याष्टव्यर्थस्तुशब्दः अन्यामत्यन्तविलक्षणामिति यावत् अन्यत्वमेव स्पष्टयति विशुद्धामिति प्रकृतिशब्दस्यात्र प्रयुक्तस्यार्थान्तरमाह ममेति प्रकृष्टमेव भोक्तृत्वेन स्पष्टयति जीवभूतामिति प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह ययेति नहि जीवरहितं जगद्धारयितुं शक्यमित्याशयेनाह अन्तरिति ॥ ५ ॥

स्वामिकृतटीका ।

अपरामिमां प्रकृतिमुपसंहरन् परां प्रकृतिमाह अपरेयमिति अष्टधा या प्रकृतिरुक्ता इयमपरा निकृष्टा जड़त्वात् परार्थत्वाच्च इतः शकाशात् परां प्रकृष्टामन्यां जीवभूतां जीवस्वरूपां मे प्रकृतिं जानीहि परत्वे हेतुः यया चेतनया क्षेत्रज्ञस्वरूपया स्वकर्मद्वारेणेदञ्च-जगद्धार्यते ॥ ५ ॥

## भाषा अनुवाद ।

अपर कहे आठप्रकार की निकृष्ट प्रकृति कहिकर अब पर कहे उत्कृष्ट प्रकृतिको कहते हैं कि हे महाबाहो यह पूर्वकही जो अष्टप्रकारकी प्रकृति सो अपर कहे निकृष्ट है क्योंकि वह जड औ उत्तम प्रकृतिके आधीन है किन्तु और पर कहे उत्कृष्ट मेरी प्रकृति व्यवहारिक जीवस्वरूप इस प्रकृतिसे भिन्न जानो जो इस जगत्को धारण करती है अर्थात् इसके उत्कृष्टतामे कारण यह कि क्षेत्रज्ञरूप वही चैतन्य शक्तिकार्तृक स्वकर्मद्वारा यह संसार स्थित है जीवस्वरूप बिना जगत का धारण कैसे हो सके है ॥ ५ ॥

## शाङ्करभाष्यम् ।

एतदिति एतद्योनीन्येते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनी येषां भूतानां तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि यस्मान्मम प्रकृतिर्योनिः कारणं सर्व्वभूतानां अतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभवः उत्पत्तिः प्रलयो विनाश स्तथा प्रकृतिद्वय दारेणाहं सर्व्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥ ६ ॥

### आनन्दगिरिकृतटीका ।

उक्तप्रकृतिद्वये कार्यलिङ्गकमनुमानं प्रमाणयति एतद्योनीति प्रकृतिद्वयस्य जगत्कारणत्वे कथमीश्वरस्य जगत्कारणत्वं तदुपगतमित्याशङ्क्याह अहमिति एतद्योनीत्यत्र समनन्तरप्रकृतजीवभूतप्रकृतावेतच्छब्दस्याव्यवधानात् प्रवृत्तिमाशङ्क्य व्याकरोति एतदिति सर्वाणि चेतनाचेतनानि जनिमन्तीत्यर्थः सर्वभूतकारणत्वेन प्रकृतिद्वयमङ्गीकृतञ्चेत् कथमहमित्ययुक्तमित्याशङ्क्याह यस्मादिति मम प्रकृती परमेश्वरस्योपाधितया स्थिते इत्यर्थः तर्हि प्रकृतिद्वयं कारणमीश्वरश्चेति जगतोऽनेकविधकारणाङ्गीकरणं स्यादित्याशङ्क्याह प्रकृतीति अपरप्रकृतिरचेतनत्वात्परप्रकृतेश्चेतनत्वेऽपि किञ्चिज्ज्ञत्वात् ईश्वरस्यैव सर्वकारणत्वं युक्तमित्याह सर्वज्ञेति ॥ ६ ॥

### स्वामिकृतटीका ।

अनयोः प्रकृतित्वं दर्शयन् स्वस्य तद्द्वारा सृष्ट्यादिकारणत्वमाह एतदिति एते चेतनाचेतनस्वरूपे प्रकृती योनी कारणभूते येषां तानि एतद्योनीनि स्थावरजङ्गमात्मकानि सर्वाणि भूतानीति उपधारय बुध्यस्व तत्र जड़ा प्रकृतिर्देहरूपेण परिणमते चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति ते च मदीये प्रकृती मत्तः सम्भूते अतो ऽहमेव कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभवः परमकारणमहमित्यर्थः तथा प्रलीयतेऽनेनेति प्रलयः संहर्त्ताप्यहमेवेत्यर्थः ॥ ६ ॥

## भाषा अनुवाद ।

प्रकृतिके पर औ अपर ये दो भेद देखायके अब प्रकृतिके द्वारा सृष्टि आदिके आपही कारण हैं सोई कारणत्व कहते हैं कि हे धनञ्जय क्षेत्र कहे शरीर औ क्षेत्रज्ञ कहे जीव यह जो दो प्रकार की प्रकृति योनि है कहे कारण जिनका ऐसे स्थावर जङ्गम यावत् भूत इसी कारणसे उत्पन्न

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

### शाङ्करभाष्यम् ।

यस्मादेतत्ततः मत्तः इति मत्तः परमेश्वरात् परतरं अन्यत् कारणान्तरं किञ्चिन्नास्ति न विद्यते अहमेव जगत्कारणमित्यर्थः हे धनञ्जय यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत् प्रोतमनुस्यूतमनुगतमनुविद्धं ग्रथितमित्यर्थः दीर्घतन्तुषु पटवत् सूत्रे च मणिगणा इव ॥ ७ ॥

### आनन्दगिरिकृतटीका ।

प्रधानात् परतोऽक्षरात् पुरुषवत् परमात्मनोऽपि परादन्यत् परं स्यादित्याशङ्क्य प्रकृतिद्वयद्वारा सर्वकारणत्वमीश्वरस्योक्तमुपजीव्य परिहरति यस्मादिति नान्यदस्ति परमित्यत्र हेतुमाह मयीति परतरशब्दार्थमाह अन्यदिति स्वातन्त्र्यव्यावृत्त्यर्थमन्तरशब्दः निषेधफलं कथयति अहमेवेति सर्वजगत्कारणत्वेन सिद्धमर्थं द्वितीयार्द्धव्याख्यानेन विशदयति यस्मादिति अतो दीर्घेषु तिर्य्यक्षु च पटघटितेषु तन्तुषु पटस्यानुगतिरवगम्यते तद्वन्मय्येवानुगतं जगदित्याह दीर्घेति यथा च मणयः सूत्रेऽनुस्यूतास्तेनैव प्रोयन्ते तदभावे विप्रकीर्य्यन्ते तथा मय्येवात्मभूतेन सर्वं व्याप्तं ततो निष्कृष्टं विनष्टमेव स्यादिति लोकोक्तं दृष्टान्तमाह सूत्रे इति ॥ ७ ॥

### स्वामिकृतटीका ।

यस्मादेवं तस्मान्मत्त इति मत्तः सकाशात् परतरं श्रेष्ठं जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणं किञ्चिदपि नास्ति स्थितिहेतुरप्यहमेवेत्याह मयीति मयि सर्वमिदं जगत् प्रोतं ग्रथितमाश्रितमित्यर्थः दृष्टान्तः स्पष्टः ॥ ७ ॥

### भाषा अनुवाद ।

हैं यह जानो और विशेष यही है कि जड़रूप निकृष्ट प्रकृति देहरूप अनेकरूप पावती है और मेरा अंशजो चैतन्य सो भोक्तारूप शरीरमें प्रवेश करके अपने कर्मके अनुसार अनेक देह धारण करता रहता है और यह प्रकृति हमहीसे उत्पन्न है औ इसका कारणभी हमको जानो कि सम्पूर्ण जगतके प्रभव कहे उत्पन्न करनेवाले औप्रलय कहे संहार के कर्त्ताभी हमहीं हैं ॥ ६ ॥

**रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्य्ययोः।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु॥ ८॥**

शाङ्करभाष्यम्।

केन केन धर्म्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते रस इति रसोऽहमपां यः सारः रसस्तस्मिन् रसभूते मय्यापः प्रोता इत्यर्थः एवं सर्वत्र यथाहमप्सु रस एवं प्रभास्मि शशि सूर्ययोः प्रणवः ओङ्कारः सर्ववेदेषु तस्मिन् प्रणवभूते मयि सर्ववेदाः प्रोताः तथा खे आकाशे शब्दः सारभूतः तस्मिन् मयि खं प्रोतं तथा पौरुषं पुरुषस्य भावः पौरुषं यतः पुंबुद्धिः नृषु तस्मिन् मयि पुरुषाः प्रोताः॥ ८॥

आनन्दगिरिकृतटीका।

अबादीनां रसादिषु प्रोतत्वप्रतीतिस्त्वय्येव सर्वं प्रोतमित्ययुक्तमिति मत्वा पृच्छति केनेति तत्रोत्तरमुत्तरग्रन्थेन दर्शयति उच्यत इतिसारो मधुरो हेतुरिति यावत् रसोऽहमिति कथं तत्राह तस्मिन्निति अप्सु यो रसः सारस्तस्मिन्मयि मधुररसे कारणभूते प्रोता आप इति वदुत्तरत्र सर्वत्र व्याख्यानं कर्त्तव्यमित्याह एवमिति उक्तमर्थं दृष्टान्तं कृत्वा प्रभास्मीत्यादि व्याचष्टे यथेति चन्द्रादित्ययो र्या प्रभा तद्भूते मयि तौ प्रोतावित्यर्थः तत्र वाक्यार्थं कथयति तस्मिन्निति प्रणवभूते तस्मिन् वेदानां प्रोतत्ववदाकाशे यः सारभूतः शब्दस्तद्रूपे परमेश्वरे प्रोतमाकाशमित्याह तथेति पौरुषं नृष्विति भागं पूर्ववद्विभजते तथेत्यादिना पुरुषत्वमेव विशदयति यत इति पुंस्त्वसामान्यात्मके परस्मिन्नीश्वरे प्रोतास्तद्विशेषास्तदुपादानत्वेन तत् स्वभावत्वादित्यर्थः॥ ८॥

स्वामिकृतटीका।

जगत्स्थितिहेतुत्वमेव प्रपञ्चयति रसोऽहमिति पञ्चभिः अप्सु रसोऽहं रस तन्मात्रस्वरूपया विभूत्या आश्रयत्वेनाप्सु स्थितोऽहमित्यर्थः तथा शशिसूर्ययोः प्रभास्मि चन्द्रे सूर्ये

**भाषा अनुवाद।**

हे धनञ्जय इसीसे हमसे और कोई भी जगतकी सृष्टि औ संहार करनेवाला श्रेष्ठ स्वतन्त्र कारण नहीं है और स्थितिके भी हेतु हम हैं यह ही कहते हैं कि मेरेही मे यह समस्त जगत ग्रथित है जैसे सूत मे मणिगण पोह रहते औ कपडे मे सूत ओतप्रोत अर्थात् बिने भये रहते हैं॥७॥

पुण्यो गन्धः पृथिव्याञ्च तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

शाङ्करभाष्यम्।

पुण्य इति पुण्यः सुरभिगन्धः पृथिव्याञ्चाहं तस्मिन् मयि गन्धभूते पृथिवी प्रोता पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थमपुण्यत्वन्तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति तेजो दीप्तिश्चास्मि विभावसावग्नौ तथा जीवनं सर्वभूतेषु येन जीवन्ति सर्वाणि भूतानि तज्जीवनं तपश्चास्मि तपस्विषु तस्मिन् तपसि मयि तपस्विनः प्रोताः ॥ ९ ॥

आनन्दगिरिकृतटीका।

मयि सर्वमिदं प्रोतमित्यस्यैव परिपूरणार्थं प्रकारान्तरमाह पुण्य इति पृथिव्यां पुण्यशब्दितो यः सुरभिगन्धः सोऽहमस्मीत्यन्वयः वाक्यार्थं कथयति तस्मिन्निति कथं पृथिव्यां गन्धस्य पुण्यत्वं तत्राह पुण्यत्वमिति यत्तु पृथिव्यां गन्धस्य स्वाभाविकं पुण्यत्वं दर्शितं तदबादिषु रसादेः स्वाभाविकपुण्यत्वस्योपलक्षणार्थमित्याह पृथिव्यामिति प्रथमोक्तपक्षः पक्षान्तरमपि गुणाः पुण्या एव सिद्धादिभिरेव भोग्यत्वादिति भावः कथं तर्हि गन्धादीनां पुण्यत्वप्रतिभानं तत्राह अपुण्यत्वन्त्विति तदेव स्फुटयति संसारिणामिति गन्धादयः स्वकार्यैर्भूतैः सह परिणममानाः प्राणिनां पापादिवशादपुण्याः सम्पद्यन्ते इत्यर्थः चञ्चाग्नौ तेजः तद्भूते मयि प्रोतोऽग्निरित्याह तेज इति जीवनभूते च मयि सर्वाणि भूतानि प्रोतानीत्याह तथेति जीवनशब्दार्थमाह येनेति अन्नरसेनामृताख्येनेत्यर्थः

स्वामिकृतटीका।

च प्रकाशरूपया विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः अन्यत्रापीत्येवं द्रष्टव्यं सर्वेषु वेदेषु वैखरीरूपेषु तन्मूलभूत ओङ्कारोऽस्मि खे आकाशे शब्दः शब्दतन्मात्ररूपोऽस्मि नृषु पुरुषेषु पौरुषमुद्यमोऽस्मि उद्यमे पुरुषास्तिष्ठन्ति ॥ ८ ॥

भाषा अनुवाद।

इस श्लोकसे लेकर पांच श्लोकतक जगतकी स्थिति का कारण विस्तार करि कहते हैं कि हे कुन्तीपुत्र अर्जुन जलमे रसरूप औ चन्द्रसूर्यमे प्रकाशरूप और वेदमे मूलभूत प्रणव ओंकाररूप मैंहीं हूं तथा आकाश मे शब्दरूप औ पुरुषोंमे पौरुष कहे उद्यमरूप भी मैंहीं यह जानो ॥ ८ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

शाङ्करभाष्यम् :

बीजमिति बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ सनातनं चिरन्तनं किञ्च बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहं ॥ १० ॥

आनन्दगिरिकृतटीका ।

तपश्चास्मीत्यादेस्तात्पर्य्यमाह तस्मिन्निति चित्तैकाग्र्यमनाशकादि वा तपस्तद्वात्मनीश्वरे प्रोता-स्तपस्विनो विशेषणाभावे विशिष्टस्य वस्तुनो भावादित्यर्थः ॥ ९ ॥

ननु सर्वाणि भूतानि स्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वं तत्राह बीजमिति बीजान्तराद्यपेक्षयाऽनवस्थां वारयति सनातनमिति चैतन्यस्याभिव्यञ्जकं तत्त्वनिश्चय-सामर्थ्यं बुद्धिस्तद्वतां या बुद्धिस्तद्भूते मयि सर्वे बुद्धिमन्तः प्रोता भवन्तीत्याह किञ्चेति प्राग-ल्भ्यवतां यत् प्रागल्भ्यं तद्भूते मयि तद्वन्तः प्रोता इत्याह तेज इति तद्धि प्रागल्भ्यं परपराभिभवसामर्थ्यं परैश्च प्रधृष्यत्वम् ॥ १० ॥

स्वामिकृतटीका ।

किञ्च पुण्य इति पुण्योऽविकृतो गन्धो गन्धतन्मात्रं पृथिव्याश्रयभूतोऽहमित्यर्थः यद्वा विभूतिरूपेणाश्रयत्वस्य विवक्षितत्वात् सुरभिगन्धस्यैवोत्कृष्टतया विभूतित्वात् पुण्यो गन्ध इत्युक्तं तथा विभावसौ अग्नौ यत्तेजो दुःसहा दीप्तिस्तदहं सर्वभूतेषु जीवनं प्राण-धारणमायुरहमित्यर्थः तपस्विषु वानप्रस्थादिषु द्वन्द्वसहनरूपं तपोऽस्मि ॥ ९ ॥

किञ्च बीजमिति । सर्वेषां चराणां भूतानां बीजं सजातीयोत्पादनसामर्थ्यं सनातनं नित्यं उत्तरोत्तरसर्वकार्य्येष्वनुस्यूतं सदेव बीजं मद्विभूतिं विद्धि नतु प्रकृतिव्यक्तिरिव नश्यत् तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि तेजस्विनां प्रगल्भानां तेजः प्रागल्भ्यमहं ॥ १० ॥

भाषा अनुवाद ।

और पवित्र गन्धरूप मात्रा पृथिवीमे औ तेजरूप अग्निमे तथा जीवनरूप सब भूत कहे प्राणियोंमे औ तपस्वियोंमे तपरूप मैहूं अर्थात् मेरीही विभूति है ॥ ९ ॥

और हे पार्थ स्थावर जङ्गम जो कुछ भूतमात्र है उसका सनातन कहे उत्तरोत्तर समस्त कार्यमे अनुगत कहे प्राप्त अविनाशी बीजरूप हमे

## बलम्बलवतां चाहं कामरागविवर्जितम् ।
## धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

शाङ्करभाष्यम् ।

बलमिति बलं सामर्थ्यमोजो बलवतामहं तच्च बलं कामरागविवर्जितं कामश्च रागश्च कामरागौ कामस्तृष्णा असन्निकृष्टेषु विषयेषु रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलं सत्त्वमहमस्मि नतु यत् संसारिणां तृष्णा रागकारणं किञ्च धर्म्माऽविरुद्धो धर्मेण शास्त्रार्थेन अविरुद्धो यः प्राणिषु भूतेषु कामो यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः कामोऽस्मि हे भरतर्षभ ॥ ११ ॥

आनन्दगिरिकृतटीका ।

यच्च बलवतां बलं तद्भूते मयि तेषां प्रोतत्वमित्याह बलमिति कामक्रोधादिपूर्वकस्यापि बलस्यानुमतिं वारयति तच्चेति कामरागयोरेकार्थत्वमाशङ्क्यार्थभेदमावेदयति कामस्तृष्णेत्यादिना विशेषणसामर्थ्यसिद्धं व्यावर्त्यं दर्शयति नत्विति शास्त्रार्थाविरुद्धकामभूते मयि तथाविधकामवतां भूतानां प्रोतत्वं विवक्षित्वाह किञ्चेति धर्माविरुद्धं काममुदाहरति यथेति ॥ ११ ॥

स्वामिकृतटीका ।

किञ्च बलमिति कामोऽप्राप्तेषु वस्तुष्वभिलाषो रागः रागः पुनरभिलषितेऽर्थे प्राप्तेऽपि पुनरधिकेऽर्थे चित्तरञ्जनात्मकस्तृष्णापर्यायस्ताभ्यां विवर्जितं बलवतां बलमस्मि सात्त्विकं स्वधर्मानुष्ठानसामर्थ्यमहमित्यर्थः धर्मेणाविरुद्धः स्वदारेषु पुत्रोत्पादनमात्रोपयोगी कामोऽहमिति ॥ ११ ॥

भाषा अनुवाद ।

जानो अर्थात् समानजातीय कार्य्य उत्पादन की सामर्थ्यरूप जो कारण सोभी मेरीही विभूति जानो परन्तु सामान्य बीज जैसे अंकुर होनेपर नष्ट होते हैं तैसे मेरी विभूतिरूप बीज नाश नहीं होता इसी से सनातन है और बुद्धिमानो की बुद्धि कहे विवेकशक्ति मैंही हैं और तेजस्वियोंमें तेज कहे प्रगल्भता प्रताप रूप अर्थात् ढीठिपनके बोलभी मैंहीं हूं यह जानो ॥१०॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।**
**मत्त एवेति तान् विद्धि नत्वहं तेषु ते मयि॥ १२॥**

शाङ्करभाष्यम्।

किञ्च ये चैवेति ये चैव सात्त्विकाः सत्त्वनिर्वृत्ताः भावाः पदार्था राजसाः रजोनिर्वृत्ता स्तामसा स्तमोनिर्वृत्ताश्च ये केचित् प्राणिनां स्वकर्म्मवशात् जायन्ते भावाः तान् मत्त एव जायमानानित्येवं विद्धि सर्व्वान् समस्तानेव यद्यपि ते मत्तो जायन्ते तथापि नत्वहं तेषु तदधीनस्तद्वशो यथा संसारिणस्ते पुनर्मयि मद्वशा मदधीनाः॥ १२॥

आनन्दगिरिकृतटीका।

चिदानन्दयोरभिव्यञ्जकानां भावानाम् ईश्वरात्मत्वाभिधानादन्येषामतदात्मत्वप्राप्तावुक्तं किञ्चेति प्राणिनां त्रैविध्ये हेतुं दर्शयन् वाक्यार्थमाह ये केचिदिति तर्हि पितुरिव सुतावधीनत्वं ततो जायमानानां तदधीनत्वं तवापि स्यादिति विक्रियावत्त्वदृश्यत्वप्रसक्तिरित्याशङ्क्याह यद्यपीति मम परमार्थत्वात्तेषां कल्पितत्वाच्च तद्गुणदोषौ मयि स्याताभित्यर्थः तेषामपि तद्वदेव स्वतन्त्रतासम्भवात् किमिति कल्पितत्वमित्याशङ्क्याह ते पुनरिति त्रिविधानां भावानां न स्वातन्त्र्यमीश्वरकार्यत्वेन तदधीनत्वात्तथाच कल्पितस्याधिष्ठानसत्ताप्रतीतिभ्यामेव तद्वत्त्वात्तन्मात्रत्वसिद्धिरित्यर्थः॥ १२॥

स्वामीकृतटीका।

किञ्च ये चैवेति ये चान्येऽपि सात्त्विका भावाः शमदमादयः राजसाश्च हर्षदर्पादयः तामसाश्च ये शोकमोहादयः प्राणिनां स्वकर्म्मवशाज्जायन्ते तान् सर्वान् मत्त एव जातान्

भाषा अनुवाद।

और काम राग विवर्जित अर्थात् काम कहे अप्राप्तविषय मे अभिलाषस्वरूप जो रजोगुणका कार्य इच्छा और राग कहे अभिलषित अर्थ पायके उससे भी अधिक के अर्थ जो चित्त का अनुराग कहे तमोगुण का कार्य तृष्णारूप इच्छा है इन दोनोको छोड़ि और यावत् बलवानों का बलभी मैहौं अर्थात् सात्त्विक स्वधर्म्मानुष्ठान की सामर्थ्य मैहूं और हे भरतर्षभ भरतवंश मे श्रेष्ठ अर्जुन धर्म्म अविरुद्ध अर्थात् स्वभार्यामे पुत्रमात्र उत्पन्न उपयोगी जो कामभोग सोभी मैहीं हूं धर्म्म अविरुद्ध कहने से वध आदि काम का निषेध आया है॥ ११॥

त्रिभि र्गुणमयै र्भावै रेभिः सर्व मिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

शाङ्करभाष्यम्।

एवम्भूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्ररोहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान् तच्च किंनिमित्तं जगतोऽज्ञानमुच्यते त्रिभिरिति त्रिभिर्गुणमयैर्भावैर्गुणविकारैः रागद्वेषमोहादिप्रकारैर्भावैः पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगत् मोहितमविवेकतामापादितं सत् नाभिजानाति मामेभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणञ्चाव्ययं व्ययरहितं जन्मादि सर्वभावविकारवर्जितमित्यर्थः ॥ १३ ॥

आनन्दगिरिकृतटीका।

सतीश्वरस्य स्वातन्त्र्ये नित्यशुद्धत्वादौ च कुतो जगतस्तदात्मकस्य संसारित्वमित्याशङ्क्य तदज्ञानादित्याह एवम्भूतमपीति यद्यप्रपञ्चोऽविक्रियश्च त्वं कस्मात्त्वामात्मभूतं स्वयं प्रकाशं सर्वो जनस्तथा न जानातीति मत्वा शङ्कते तच्चेति श्लोकेनोत्तरमाह उच्यत इति एभ्यः परमित्यप्रपञ्चकत्वमुच्यते अव्ययमिति सर्वविक्रियाराहित्यं ॥ १२ ॥

स्वामिकृतटीका।

विद्धि मदीयप्रकृतिगुणत्रयकार्यत्वात् एवमपि तेष्वहं न वर्त्ते जीववत्तदधीनोऽहं न भवामीत्यर्थः ते तु मदधीनाः सन्तो मयि वर्त्तन्त इत्यर्थः ॥ १२ ॥

एवं भूतमीश्वरं त्वामेवं जनः किमिति न जानातीत्यत आह त्रिभिरिति त्रिभिस्त्रिविधैरेभिः पूर्वोक्तैर्गुणमयैः कामलोभादिभिर्गुणविकारैर्भावैः स्वभावैर्मोहितमिदं जगत्

भाषा अनुवाद।

और जो सात्त्विक भाव अर्थात् शम दम आदि और राजसभाव कहे हर्ष गर्व आदि औ तामस भाव जो शोक मोहादि ये सब प्राणीमात्र को स्वकर्म्म वशते जन्मते हैं सो मेरे से उत्पन्न जानो जिस हेतु वे मेरी माया के तीन गुणोंके कार्य हैं किन्तु तौ भी उनमे हम वर्त्तते नही अर्थात् जीवके समान इन गुणोंके अधीन होते नहीं वलु ये गुण मेरे अधीन होय मेरे मे रहते हैं सोई कहा कि वे मेरे मे हैं और मै उनमे नहीं हौं जैसे संसारी मेरे अधीन है यह जानो ॥ १२ ॥

## दैवी ह्येषा गुणमयी मम माया दुरत्यया।
## मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

### शाङ्करभाष्यम्

कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायां मतिक्रामन्तीत्युच्यते दैवीति देवो देवस्य विष्णोः स्वभावभूता हि यस्मात् एषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं न वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतचित्तमोहिनीं तरन्त्यतिक्रामन्ति संसारबन्धनात् मुच्यन्त इत्यर्थः ॥ १४ ॥

### आनन्दगिरिकृतटीका।

यथोक्ताऽनादिसिद्धमायापारवश्यपरिवर्ज्यमायोगाज्जगतो न कदाचिदपि तत्त्वबोधसमुदयसम्भावनेत्याशङ्कते कथं पुनरिति भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमः सम्भवतीति परिहरति उच्यत इति कथं दुरत्ययत्वेन तदत्ययः स्यादिति तत्राह मामेवेति प्रधानस्येव स्वातन्त्र्यं मायाया व्युदस्यति देवस्येति स्वातन्त्र्ये मायात्वाऽनुपपत्तिं हि शब्दद्योतितां हेतुं करोति यस्मादिति अनुभवसिद्धा सा नकस्मादपलापमर्हतीत्याह एषेति जगतस्तत्त्वप्रतिबन्धकीभूता गुणाः सत्त्वादयो ममेति प्रागुक्तमेव मायायाः सम्बन्धसम्भूय विशिष्टानं दुरत्ययत्वं विभजते दुःखेनेति ममेत्यादि व्याचष्टे तत्रेति तस्मिन्

### स्वामीकृतटीका।

अतो मां नाभिजानाति कथंभूतं एभ्यो भावेभ्यः परं ह्यभिरस्पृष्टं एतेषां नियन्तारं अत एवाव्ययं निर्विकारमित्यर्थः ॥ १३ ॥

### भाषा अनुवाद।

जो कहो कि ऐसे परमेश्वर को किस कारण से लोग नहीं जानते हैं इस पर कहते हैं कि पूर्वोक्त यही तीन प्रकार काम लोभ आदि गुणविकार स्वभाव वशते अविवेकता को प्राप्त प्राणी मोहित होय हमको नहीं जानते हैं इस अपेक्षा से कहते हैं कि हम ये तीन भावसे पर कहे संसर्गरहित और इन सब भावोंके नियन्ता इसी से अव्यय कहे निर्विकार मे हों ॥ १३ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराऽधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः॥ १५॥

शाङ्करभाष्यम्।

यदि त्वां प्रपन्नाः मायामेतां तरन्ति कस्मात्त्वामेव सर्व्वे न प्रपद्यन्ते इत्युच्यते न मामिति न मां परमेश्वरं दुष्कृतिनः पापकारिणो मूढाः प्रपद्यन्ते नराधमाः नराणां मध्ये अधमा निकृष्टास्ते च माययापहृतज्ञाना आसुरं भावं हिंसानृतादिलक्षण माश्रिताः॥ १५॥

आनन्दगिरिकृतटीका।

मायारूपे यथोक्तरीत्या दुरत्यये सतीति यावत् मामेवेत्येवकारेण मायाया वेद्यकोटिनिवेशाभावो विवक्षते सर्वात्मना कर्म्मानुष्ठानादिव्यग्रतामन्तरेणेत्यर्थः भवातिक्रमे मोहातिक्रमो भवतीति मत्वा विशिनष्टि सर्वेति मायातत्प्रयुक्तमोहयोरतिक्रमेऽपि कथं पुरुषस्य पुरुषार्थ सिद्धिरित्याशंक्याह संसारेति॥ १४॥

भगवन्निष्ठाया मायातिक्रमहेतुत्वे तदेकनिष्ठत्वमेव सर्वेषामुचितमिति पृच्छति यदीति पापकारित्वेनाविवेकभूयस्तया हिंसानृतादिभूयस्त्वाद्भूयसां जन्तूनां न भगवन्निष्ठत्वसिद्धिरित्याह उच्यत इति मौढ्यं पापकारित्वे हेतुरत एव निकृष्टाः संवृतमिव तिरस्कृतं ज्ञानं स्वस्वरूपचैतन्यमेषामिति ते तथा॥ १५॥

स्वामिकृतटीका।

के तर्हि त्वां जानन्तीत्यत आह दैवीति दैवी अलौकिकी अत्यद्भुतेत्यर्थः गुणमयी सत्त्वादिगुणविकारात्मिका मम परमेश्वरस्य शक्तिर्माया दुरत्यया दुस्तरा हि प्रसिद्धमेतत्तथापि मामेवेत्येवकारेणाव्यभिचारिण्या भक्त्या ये प्रपद्यन्ते भजन्ति मायामेतां सुदुस्तरामपि ते तरन्ति ततो मां जानन्तीति भावः॥ १४॥

किमिति तर्हि सर्वे त्वामेव न भजन्तीत्यत आह न मामिति नरेषु येऽधमास्ते मां न प्रपद्यन्ते न भजन्ति अधमत्वे हेतुः मूढा विवेकशून्याः तत्कुतो दुष्कृतिनः पापशीला

भाषा अनुवाद।

जों कहो कि तुमको फेरि कौन जानने शकै इस पर कहते हैं कि दैवी कहे अद्भुत औ सत्त्व आदि गुण विकाररूप मेरी शक्ति जो दुस्तर माया है इसको जो अव्यभिचारिणी भक्ति से हमे भजे हैं सोई हमारी माया के पार होके हमको जानि शके है॥ १४॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

शाङ्करभाष्यम् ।

ये पुनर्नरोत्तमाः पुण्यकर्माणः चतुर्विधेति चतुर्विधा चतुःप्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हे अर्जुन आर्त्तः आर्त्तिपरिगृहीतः तस्करव्याघ्ररोगादिना अभिभूतः अभिभवं आपन्नो जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति योऽर्थार्थी धनकामो ज्ञानी विष्णोस्तत्त्वविच्च हे भरतर्षभ ॥ १६ ॥

आनन्दगिरिकृतटीका ।

केषां तर्हि तन्निष्ठता सुकरेति तत्राह ये पुनरिति ते भजन्ते भगवन्तमिति शेषः ये त्वां भजन्ते ते किं सर्वे मायां तरन्ति नैवं प्रार्थना वैचित्र्यादित्याह चतुर्विधा इति आपन्नस्तन्निवृत्तिमिच्छन्निति शेषः तत्त्वविदिति ब्रह्मज्ञानवानात्मतत्त्वसाक्षात्कारमात्रार्थं मुमुक्षुरित्यर्थः ॥ १६ ॥

स्वामिकृतटीका ।

अतो मयापहृतं निरस्तं शास्त्राचार्य्योपदेशाभ्यां जातमपि ज्ञानं येषां ते तथा अतएव दम्भो दर्पोऽभिमानश्च क्रोधपारुष्यमेव चेत्यादिना वक्ष्यमाणमासुरं भावं स्वभावं प्राप्ताः सन्तो न मां भजन्ति ॥ १५ ॥

सुकृतिनस्तु मां भजन्त्येव ते च सुकृततारतम्येन चतुर्विधा इत्याह चतुर्विधा इति पूर्वजन्मसु ये कृतपुण्यास्ते मां भजन्ति ते चतुर्विधाः आर्त्तो रोगाद्यभिभूतः स यदि पूर्वं कृतपुण्यस्तर्हि मां भजति अन्यथा क्षुद्रदेवताभजनेन संसरति एवमुत्तरत्रापि द्रष्टव्यं जिज्ञासुरात्मज्ञानेच्छुः अर्थार्थी अत्र परत्र च भोगसाधनभूतार्थप्रेप्सुः ज्ञानी चात्मवित् ॥ १६॥

भाषा अनुवाद ।

तो फेरि सब मनुष्य तुमको काहे नहीं भजते हैं जो यह कहो तो उत्तर सुनो कि मनुष्योंके मध्यमे जो अधम हैं तेई मेरी भजन नहीं करते हैं कारण यह कि वे लोग पापपरायण औ माया से अपहृतज्ञान अर्थात् शास्त्र या आचार्य्य के द्वारा ज्ञान होने से भी मै उनको निस्तार कर्ता हूं और सोरहें अध्याय मे चौथे श्लोक से कहेंगे कि जो आसुर भाव उसको प्राप्त होय मेरी भक्ति नहीं करते हैं ॥ १५ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

## शाङ्करभाष्यम् ।

तेषामिति तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित्त्वान्नित्ययुक्तो भवत्येकभक्तिश्चान्यस्य भजनीयस्य दर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यते अतिरिच्यत इत्यर्थः प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः प्रसिद्धं हि लोके आत्मा प्रियो भवति इति तस्मात् ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः स च ज्ञानी मम वासुदेवस्यात्मैवेति ममात्यर्थं प्रियः ॥ १७ ॥

## आनन्दगिरिकृतटीका ।

चतुर्विधानां तेषां सुकृतिनां भगवदभिमुखानां तुल्यत्वमाशंक्याह तेषामिति तस्य विशिष्यमाणत्वे हेतुमाह प्रियो हीति नित्ययुक्तत्वं भगवत्यात्मनि सदा समाहितचेतस्त्वं असारे संसारे भगवानेव सारः सोऽहमस्मीत्येकस्मिन्नद्वितीये स्वस्मादत्यन्तमभिन्ने भगवति भक्तिः स्नेहविशेषोऽस्येत्येकभक्तिः तस्याधिक्ये हेतुं विवृणोति प्रियो हीत्यादिना भगवतो ज्ञानिनश्च परस्परं प्रेमास्पदत्वे प्रसिद्धिं प्रमाणयति प्रसिद्धं हीति आत्मनो ज्ञानिनं प्रति प्रियत्वेऽपि भगवतो वासुदेवस्य कथं तं प्रति प्रियत्वमित्याशंक्याह तस्मादिति अहं ज्ञानीनो निरुपाधिकप्रेमास्पदं परमपुरुषार्थत्वेनात्मत्वेन च गृहीतत्वादित्यर्थः ज्ञानिनोऽपि भगवन्तं प्रति प्रियत्वं प्रकटयति स चेति ॥ १७ ॥

## भाषा अनुवाद ।

सत्कर्मकारी मनुष्य ही मेरी भजन करते हैं और वे भी पुण्यके न्यून अधिकवशते चारिप्रकार के हैं सोई कहते हैं कि हे अर्जुन जो पूर्वजन्म अवधि से पुण्यवान् हैं तेई हमको भजते हैं चारिप्रकार के भक्त ये हैं प्रथम आतुर कहे रोगग्रस्त दूसरा जिज्ञासु कहे आत्मज्ञान की इच्छा है जिसे तीसरा अर्थार्थी अर्थात् लोक या परलोक का भागसाधक अर्थाकाङ्क्षी चौथा ज्ञानी है पर ये चरो पूर्व पुण्यके प्रभाव होने से भजते हैं नहीं तो और देवतोंको भक्तिकरि अपना काम निकार लेते पर वह काम कामका नही है ॥ १६ ॥

## उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
## आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

### शाङ्करभाष्यम्।

न तर्हि आर्त्तादयस्त्रयो वासुदेवस्याऽप्रियाः नकिं तर्हि उदारा इति उदारा उत्कृष्टाः सर्व एवैते त्रयोऽपि मम प्रिया एवेत्यर्थः नहि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवतीति ज्ञानी त्वत्यर्थं प्रियोभवतीति विशेषः तत् कस्मादित्याह ज्ञानीत्वात्मैव नान्यो मत इति मे मम मतं निश्चयः आस्थित आरोढुं प्रवृत्तः स च ज्ञानी हि यस्मादहमेव भगवान् वासुदेवो नान्योऽस्मी त्येवं युक्तात्मा समाहितचित्तः सन् मामेव परं ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

### आनन्दगिरिकृतटीका।

ज्ञानी चेदत्यर्थमीश्वरस्य प्रियो भवति तर्हि विशेषणसामर्थ्यादितरेषामप्रियत्वं प्राप्तमिति शङ्कते न तर्हीति तेषां भगवन्तं प्रति प्रियतमत्वमिविवक्षितमित्याह नेति अत्यर्थमिति विशेषणस्य तर्हि किं प्रयोजनमिति पृच्छति किं तर्हीति सर्वेषां भगवदभिमुखत्वादुत्कर्षेऽपि

### स्वामिकृतटीका।

तेषां मध्ये ज्ञानी श्रेष्ठ इत्याह तेषामिति तेषां मध्ये ज्ञानी विशिष्टः तत्र हेतवः नित्ययुक्तः सदा मन्निष्ठः एकस्मिन् मय्येव भक्तिर्यस्य सः ज्ञानीनो देहाद्यभिमानाभावेन चित्तविक्षेपाभावान्नित्ययुक्तत्वमेकान्तभक्तित्वञ्च सम्भवति नान्यस्य अतएव तस्याहमत्यन्तप्रियः स च मम तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हेतुभिः स उत्तम इत्यर्थः ॥ १७ ॥

### भाषा अनुवाद।

परन्तु इनके मध्यमे ज्ञानी भक्त श्रेष्ठ है सोई कहते हैं कि ज्ञानी पुरुष नित्ययुक्त अर्थात् सर्वदा ही मेरे मे निष्ठ रहता है और केवल हमारा ही एक भक्त और ज्ञानीको शरीर आदि मे अहं बुद्धि का अभाव रहने से मनकी विक्षेपशक्ति के अभाव से नित्ययुक्तत्व उसको है और इस ज्ञानी को हम अत्यन्त प्रिय हैं और वह भी हमको अति प्रिय है इन कारणोंसे ज्ञानी भक्त भक्तोंमे उत्तम है ॥ १७ ॥

## बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
## वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

### शाङ्करभाष्यम् ।

ज्ञानी पुनरपि स्तूयते बहूनामिति बहूनां जन्मनां ज्ञानार्थसंस्कारार्जनाश्रयाणां अन्ते समाप्तौ ज्ञानवान् प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रतिपद्यते कथं वासुदेवः सर्वमिति य एवं सर्वात्मानं

### आनन्दगिरिकृतटीका ।

ज्ञानिनि तदितरे कमङ्गीकृत्य विशेषणमित्याह उदारा इति किं तत्र प्रमाणमित्याशंक्य ईश्वरज्ञानमित्याह मे मम मतमिति ज्ञानी त्वात्मैवेत्यत्र हेतुमाह आस्थित इति सर्वस्य ज्ञानिव्यतिरिक्तविषयत्वमाह तयोऽपीति ज्ञानिव्यतिरिक्तानां भगवदभिमुखत्वेऽपि ज्ञानाभावापराधान्न भगवत्प्रीतिविषयतेत्याशंकाह नहीति कस्तर्हि ज्ञानवति सति विशेषस्तत्राह ज्ञानीत्विति तमेव विशेषं प्रश्नपूर्वकं प्रकटयति कस्मादित्यादिना सर्वकालात्मं पक्षतोऽपि अपक्षपातिनः तस्य तव कथं यथोक्तो निश्चयः स्यादित्याशंक्यास्थित इत्येतत् व्याकरोति आरोढुमिति आरोहे हेतुं सूचयति सच ज्ञानीति आरोढुं प्रवृत्तमेव स्फुटयति मामेवेति ॥ १८ ॥

### स्वामिकृतटीका ।

तर्हि इतरे त्वयस्वभक्ताः किं संसरन्ति नहि नहीत्याह उदारा इति सर्वेऽप्येते उदारा महान्तः मोक्षभाज इत्येवत्यर्थः ज्ञानी तु पुनरात्मैवेति मे मतं निश्चयः हि यस्मात् स ज्ञानी युक्तात्मा मदेकचित्तः सन् न विद्यते उत्तमा यस्यास्तामनुत्तमां सर्वोत्तमां गतिं मामेवास्थित आश्रितवान् मत्व्यतिरिक्तमन्यत् फलं न मन्यत इत्यर्थः ॥ १८ ॥

### भाषा अनुवाद ।

सो क्या बाकी तीनिप्रकार के भक्त संसारगति को प्राप्त होते हैं ऐसी शङ्का को वार वार निषेध करि कहते हैं कि नहीं नहीं भक्त सब भी उदार कहे महान् हैं अर्थात् मोक्षपावने के योग्य हैं परन्तु मेरो यह अभिप्राय है कि ज्ञानी भक्त मेराही स्वरूप है जिस हेतु वह मदेकचित्त है इससे सर्वोत्तम गतिरूप हमको आश्रय करके और कोई फलकी इच्छा नहीं रखता है ॥ १८ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

## शाङ्करभाष्यम्।

मां प्रतिपद्यते स महात्मा न तत्समोऽन्योऽस्त्यधिको वाऽतः सुदुर्लभो मनुष्याणां सहस्रेष्वित्युक्तं ॥ १९ ॥

आत्मैव सर्वो वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते कामैरिति कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञाना अपहृतविवेकविज्ञानाः प्रपद्यन्ते अन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवतास्तं तं नियमं देवतारा-

## आनन्दगिरिकृतटीका।

उत्तरश्लोकस्य गतार्थत्वं परिहरति ज्ञानीति ज्ञानार्थसंस्कारो वासना तत्तज्जन्मनि पुण्यकर्मानुष्ठानजनिता बुद्धिशुद्धिस्तदाश्रयाणां तद्वतामनन्तानां जन्मनामिति यावत् ज्ञानवत्त्वं प्राक्तनेष्वपि जन्मसु सम्भावितमित्याशंक्याह प्राप्येति ज्ञानवतो भगवत्प्रतिपत्तिं प्रेमद्वारा विवृणोति कथमिति यथोक्तज्ञानस्य तद्वतश्च दुर्लभत्वं सूचयति य एवमिति मत् सर्वोत्कृष्टमात्मशब्दितं चित्तमस्येति महात्मत्वे फलितं हेतुमाह अत इति तत्र वाक्योपक्रमानुकूल्यं कथयति मनुष्याणामिति ॥ १९ ॥

## स्वामिकृतटीका।

एवंभूतो मद्भक्तोऽतिदुर्लभ इत्याह बहूनां जन्मनां किञ्चित् पुण्योपचयेन अन्ते चरमे जन्मनि ज्ञानवान् सन् सर्वमिदं चराचरं वासुदेव इति सर्वात्मदृष्ट्या मां प्रपद्यते भजति अतः स महात्मा अपरिच्छिन्नदृष्टिः सुदुर्लभः ॥ १९ ॥

## भाषा अनुवाद।

ऐसे भक्त अतिदुर्लभ हैं यह कहते हैं अनेक जन्मसे कुछ कुछ पुण्य सञ्चित कहे इकट्ठी होने से शेषजन्म में तत्त्वज्ञानी होयकर यह जो चराचरात्मक कहे स्थावर जङ्गमरूप ब्रह्माण्ड सो सम्पूर्ण एक वासुदेव मात्र है इस प्रकार सर्वत्र आत्मदृष्टि के द्वारा हमको भजता है अपरिच्छिन्न कहे अबाधितदृष्टि से ऐसा महात्मा ज्ञानी दुर्लभ है ॥ १९ ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

शाङ्करभाष्यम्।

धने प्रसिद्धो यो यो नियमस्तं तमास्थायाश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियतनियमिताः स्वया आत्मीयया ॥ २० ॥

आनन्दगिरिकृतटीका।

किमिति तर्हि सर्वेषां प्रत्यग्भूते भगवति यथोक्तज्ञानं नोदेतीत्याशंक्य न मामित्युक्तं हृदि निधाय ज्ञानानुदये हेत्वन्तरमाह आत्मैवेति कामैर्नानाविधैरपहृतविवेकविज्ञानस्य देवतान्तरनिष्ठत्वमेव प्रत्यग्भूतपरदेवताप्रतिपत्त्यभावे कारणमित्याह कामैरिति देवतान्तरनिष्ठत्वे हेतुमाह तं तमिति प्रसिद्धो नियमो जपोपवासप्रदक्षिणनमस्कारादिः नियमविशेषाश्रयणे कारणमाह प्रकृत्येति ॥ २० ॥

स्वामिकृतटीका।

तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेश्वरमेव ये भजन्ति ते कामान् प्राप्य शनैर्मुच्यन्त इत्युक्तं ये त्वन्यं राजसतामसास्तु कामाभिभूताः क्षुद्रदेवताः सेवन्ते ते संसरन्तीत्याह कामैरिति चतुर्भिः ये तु तैस्तैः पुत्रकीर्त्तिशत्रुजयादिविषयैः कामैरपहृतविवेकाः सन्तोऽन्याः क्षुद्रा भूतप्रेतयक्षादिदेवता भजन्ति किं कृत्वा तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं नियमं स्वीकृत्य तत्रापि च स्वीयया प्रकृत्या पूर्वाभ्यासवासनया नियता वशीकृताः सन्तो देवताविशेषं भजन्ति ॥ २० ॥

भाषा अनुवाद।

सतोगुणी कामना करि के जो मनुष्य परमेश्वर ही को भजते हैं तो कामना प्राप्त होय क्रमसे मुक्त होते हैं परन्तु जो रजोगुण तमोगुण का आलम्बन करके कामना के वश होय और और देवतोंकी उपासना करते हैं तेई संसारगति को पावते हैं इसश्लोकसे चौथे श्लोकतक कहते हैं कि जो पुत्र कलत्र धन शत्रुनाश आदि मनोरथ से हतबुद्धि होय भूत प्रेत पिशाच यक्ष क्षुद्र कहे नीच देवतोंको पूजते हैं वे नियम उपवास बलिदान अङ्गीकार करिके अपनी कामना की वासना के वश होय प्रकृत्या कहे स्वभाव ही से उन देवतोंकी सेवा करते हैं ॥ २० ॥

**स तया श्रद्धया युक्तस्तस्याराधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान् हि तान् ॥२२॥**

शाङ्करभाष्यम् ।

तेषाञ्च कामिनां यो य इति यो यः कामी यां यां देवतां तनुं श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ययैव पूर्वं प्रवृत्तः स्वभावतो यो यो यां देवतातनुं श्रद्धया अर्चितुमिच्छतीति ॥ २१ ॥

स तयेति स तया मद्विहितया श्रद्धया युक्तः सन् तस्या देवतायाः तन्वा आराधनमीहते चेष्टते लभते च ततः तस्या आराधितायाः देवता तन्वाः कामानीप्सितान् मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितान् तान् हि यस्मात्ते भगवता विहिताः कामास्तस्मात्ता-

आनन्दगिरिकृतटीका ।

तत्तद्देवताप्रसादात् कामिनामपि सर्वेश्वरे सर्वात्मनि वासुदेवे क्रमेण भक्तिर्भविष्यतीत्याशंक्याह तेषाञ्चेति स्वभावतो जन्मान्तरीयसंस्कारवशादित्यर्थः भगवद्विहितया स्थिरया श्रद्धया संस्काराधीनया देवताविशेषमाराधयतोऽपि भगवदनुग्रहादेव फलप्राप्तिरित्याह यो यो यामिति ईहते निर्वर्त्तयतीत्यर्थः ॥ २१ ॥

स्वामिकृतटीका ।

तेषां मध्ये यो य इति यो यो भक्तो यां यां तनुं देवतारूपां मदीयामेव मूर्त्तिं श्रद्धया अर्चितुम् इच्छति प्रवर्त्तते तस्य तस्य भक्तस्य तत्तन्मूर्त्तिविषयां तामेव श्रद्धामचलां दृढामहमन्तर्यामी विदधामि करोमि ॥ २१ ॥

भाषा अनुवाद ।

भक्तोंके बीच में जो जो भक्त मेरी मूर्तिविशेष को याने जिस मूर्तिको अर्थात् देवतारूप को श्रद्धा से पूजने मे प्रवृत्त होते हैं उसी उसी भक्तकी भावना के अनुसार वह इच्छा अन्तर्यामीरूप से मैंपूरी कर्त्ता हूं अर्थात् सोई मूर्त्ति धारण कर उनका इष्ट सिद्ध करता हूं ॥ २१ ॥

## अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
## देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि॥ २३॥

### शाङ्करभाष्यम्।

नवश्यं लभन्ते इत्यर्थः हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्पंत्र नहि कामाऽहिताः कस्यचित्॥ २२॥

यस्मादन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च ते अतः अन्तवदिति अन्तवद्विनाशितफलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानां देवान् देवयजो यान्ति देवान् जयन्ति इति देवयजः ते देवान् जान्ति मद्भक्ता यान्ति मामपि एवं समानेऽप्यायासे मामेव न प्रतिपद्यन्ते अनन्तफलायाहो खलु कष्टं वर्तत इत्यनुक्रोशं दर्शयति भगवान्॥ २३॥

### आनन्दगिरिकृतटीका।

आराधितदेवताप्रसादात् फलप्राप्तौ किमीश्वरेणेत्याशंक्य तस्य सर्वज्ञस्य सर्वकर्मफलविभागाभिज्ञस्य तद्देवताधिष्ठातृत्वात्तस्यैव फलदातृत्वमित्याह सर्वज्ञेनेति एको बहूनां यो विदधाति कामानित्यादि श्रुतिमाश्रित्य हितानिति पदद्वयं व्याचष्टे यस्मादिति हितानीत्येकं पदमिति पूर्वं प्रत्याह हितानिति मुख्यत्वसम्भवे किमित्यौपचारिकत्वमित्याशंक्याह नहीति॥ २२॥

प्रेक्षपूर्वकारीणि कामानां हितत्वाभावे हेतुमाह यस्मादिति किञ्च ये कामिनस्तेन विवेकिनस्ततश्चाविवेकपूर्वकत्वात् कामानां कुतो हितत्वाशङ्केत्याह अविवेकिन इति कामाना-

### स्वामिकृतटीका।

ततश्च स तयेति स भक्तस्तया दृढ़या श्रद्धया तस्यास्तनोराराधनमीहते करोति ततश्च कामाः ये सङ्कल्पितास्तांश्च ततो देवताविशेषाल्लभते किन्तु मयैव तत्तद्देवतान्तर्यामिना विहितान् निर्मितान् हि स्फुटमेतत् तत्तद्देवतानामपि मदधीनत्वान्मूर्तित्वाच्चेत्यर्थः॥ २२॥

### भाषा अनुवाद।

सो मेराभक्त उस अपनी श्रद्धासे उसी देवताकी पूजा करता है और कामनोंको पावता हैं पर वे कामना मैहीं देता हूं क्योंकि मै सर्व देवमय हों और देवता मेरे आधीन हैं॥ २२॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।
परं भावमजानन्तो ममाव्ययमनुत्तमम्॥ २४॥

शाङ्करभाष्यम्।

किं निमित्तं त्वामेव न प्रपद्यन्ते इत्युच्यते अव्यक्तमिति अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतं इदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकि-

आनन्दगिरिकृतटीका।

मनन्तफलत्वे न स्थितत्वमाशंक्याह अतइति तेषामविवेकपूर्वकत्वमतः तुशब्दार्थः तुशब्दोऽवधारणार्थः कामफलस्यानाशित्वे किमिति कामनिष्ठत्वं जन्तूनामित्याशंक्य प्रज्ञामान्द्यादित्याह अल्पेति किं तर्हि साधनमनन्तफलायेत्याशंक्य भगवद्भक्तिरित्याह भक्ता इति अक्षरार्थमुक्त्वा श्लोकस्य तात्पर्यार्थमाह एवमिति देवताप्राप्तौ भगवत्प्राप्तौ चेति शेषः मामेवेत्यादौ देवताविशेषं प्रतिपद्यन्ते अन्तवत् फलायेति वक्तव्यं उक्तवैपरीत्ये कारणमविवेकातिरिक्तं नास्ति इत्यभिप्रेत्याह अहो खल्विति॥ २३॥

स्वामिकृतटीका।

तदेवं यद्यपि सर्वा अपि देवता ममैव तनवोऽतस्तदाराधनमपि वस्तुतो मदाराधनमेव तत्तत्फलदातापि चाहमेव तथापि साक्षान्मद्भक्तानाञ्च तेषाञ्च फलवैषम्यं भवतीत्याह अन्तवदिति अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवत् विनाशि भवति तदेवाह देवान् यजन्तीति देवयजस्ते देवानन्तवतो यान्ति मद्भक्तास्तु मामनाद्यनन्तं परमानन्दं प्राप्नुवन्ति॥ २३॥

भाषा अनुवाद।

अब कहते हैं कि यद्यपि देवता मेरीही मूर्त्ति हैं और उनकी पूजा भी मेरीही पूजा है तथा कर्म्मफल दाता भी हमहीं हैं पर तौ भी उन अल्पबुद्धियों की अन्तवन्त कहे विनाशी फल होता अर्थात् स्वर्ग आदि सांसारिक सुख कुछ दिन के लिये होता है क्योंकि साक्षात् मेरी उपसना नहीं किया है और जो जिस देवता को आराधै है सो उसी को प्राप्त होता और मेरे भक्त जन्मनाश रहित होय के मेरेही को प्राप्त होते हैं॥ २३॥

## शाङ्करभाष्यम् ।

न्तो ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥ २४ ॥

### आनन्दगिरिकृतटीका ।

भगवद्भजनस्योत्तमफलत्वेऽपि प्राणिनां प्रायेण तन्निष्ठत्वाभावे प्रश्नपूर्वकं निमित्तं निवेदयति किंनिमित्तमित्यादिना अप्रकाशं शरीरग्रहणात् पूर्वमिति शेषः इदानीं लीला-विग्रहपरिग्रहावस्थायामित्यर्थः प्रकाशश्च तर्हि कदाचित्कत्वं भगवति प्राप्तं नेत्याह नित्येति कथं तर्हि भगवन्तमागन्तुकप्रकाशं मन्यन्ते तत्राबुद्धय इत्युत्तरं तद्विद्यशोति परमिति परमनुत्तममिति विशेषणद्वयं सोपाधिकनिरुपाधिकभावार्थं ॥ २४ ॥

### स्वामिकृतटीका ।

ननु च समाने प्रयासे महति च फलविशेषे सति सर्वेऽपि किमिति देवतान्तरं हित्वा त्वामेव नभजन्ति तत्राह अव्यक्तमिति अव्यक्तं प्रपञ्चातीतं मां व्यक्तिं मनुष्यमत्स्य कूर्मादिभावं प्राप्तमल्पबुद्धयो मन्यन्ते तत्र हेतुः मम परं भावं स्वरूपमजानन्तः कथं भूतम् अव्ययं नित्यं न विद्यते उत्तमो भावो यस्मात् तं मद्भावम् अतो जगद्रक्षणार्थं लीलयाविष्कृतनानाविशुद्धोर्जितसत्त्वमूर्तिं मां परमेश्वरं कर्मनिर्मितभौतिकदेहं देवता न्तरसमं पश्यन्तो मन्दमतयो मां नातीवाद्रियन्ते प्रत्युत क्षिप्रफलदं देवतान्तरमेव भजन्ते ते चोक्तप्रकारेणान्तवत् फलं प्राप्नुवन्तीत्यर्थः ॥ २४ ॥

## भाषा अनुवाद ।

और जो ऐसी शङ्का करो कि ध्यान पूजा आदि प्रयत्न तो समान और फल मे वैषम्य कहे बड़ा अन्तर है तो फेरि सब देवतोंको त्याग करिके तुमहीं को क्यों न सब भजै इस पर कहते हैं कि अल्पबुद्धि मनुष्य प्रपञ्च रहित हमको मनुष्य मत्स्य कूर्म स्वरूप ठहराते हैं इसका कारण यह कि वे लोग मेरे श्रेष्ठ रूपको नहीं जानते हैं सोई रूप प्रकाशित करते हैं कि जो अव्यय कहे नाश रहित और जिससे और कोई उत्तम नहीं है परन्तु संसार को रक्षाके अर्थ लीलासे विशुद्धसत्त्व प्रधान जो मैं तिसको कर्मसे उत्पन्न भौतिक कहे पञ्चभूतमय देहधारी और देवताके समान जानि कै हमारे प्रति अधिक आदर नहीं करते हैं बलु शीघ्र-फलदाता और देवतोंको भजते हैं वेई अन्तवन्त फल पावते हैं॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमाया समावृतः।
मूढो यं नाभिजानाति लोको मामज मव्ययम् ॥ २५ ॥

शाङ्करभाष्यम्।

तदज्ञानं किं निमित्तं इत्युच्यते नाहमिति नाहं प्रकाशः सर्वस्य लोकस्य केषाञ्चिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः योगमायासमावृतो योगो गुणानां युक्तिर्घटनं सैव माया योगमाया तया योगमायया समावृतः संच्छन्न इत्यर्थः अतएव मूढलोकोऽयं नाभिजानाति मामजमव्ययं ॥ २५ ॥

आनन्दगिरिकृतटीका।

अविवेकरूपमज्ञानं भगवच्चिदा प्रतिबन्धकमुक्तं तस्मिन्नपि निमित्तं प्रश्नपूर्वकमनूद्य-ज्ञानमुपन्यस्यति तदज्ञानमित्यादिना त्रिभिर्गुणमयैरित्यनौपाधिकरूपस्याप्रतिपत्तौ कारण-मुक्तमत्र तु सोपाधिकस्यापीति विशेषं गृहीत्वा व्याचष्टे नाहमिति तर्हि भगवद्भक्ति-रनुपयुक्तेत्याशंक्याह केषाञ्चिदिति सर्वस्य लोकस्य न प्रकाशोऽहमित्यत्र हेतुमाह योगेति अनाद्यनिर्वाच्याज्ञानाच्छन्नत्वादेव मद्विषये लोकस्य मौढ्यं ततश्च मदीयस्वरूपविवेकाभावान्म-न्निष्ठत्वराहित्यमित्याह अत एवेति ॥ २५ ॥

स्वामिकृतटीका।

तेषां स्वाज्ञाने हेतुमाह नाहमिति सर्वस्य लोकस्य नाहं प्रकाशः प्रकटो न भवामि किन्तु मद्भक्तानामेव यतो योगमायया समावृतः योगयुक्तिर्मदीयः कोऽप्यचिन्त्यः प्रज्ञाविलासः स एव माया अघटमानघटनापटीयस्त्वात् तया संच्छन्न अतएव मत्स्वरूपज्ञाने मूढः सन्नयं लोकोऽजमव्ययञ्च मां न जानातीति ॥ २५ ॥

भाषा अनुवाद।

मूढ़ लोगोंके अज्ञान मे कारण कहते हैं कि उन लोगोंके सामने हम प्रगट नहीं होते परन्तु अपने भक्तोंके सामने प्रगट होते हैं क्योंकि मूढ़ लोग मेरी योगमायासे आवृत हैं तो फेरि कहो कैसे अव्यय स्वरूप हमको जानि सकेंगे ॥ २५ ॥

वेदाहं समतीतानि वर्त्तमानानि चार्ज्जुन।
भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥ २६ ॥

शाङ्करभाष्यम्।

यथा योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति यथान्यस्यापि मायाविनो मायाज्ञानं तद्वत् यत एवमतः वेदाहमिति अहन्तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि तथा वर्त्तमानानि चार्ज्जुन भविष्याणि च भूतानि वेदाहं मान्तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥

आनन्दगिरिकृतटीका।

मायया भगवानावृतश्चेत्तस्यापि लोकस्येव ज्ञानप्रतिबन्धः स्यादित्याशंक्याह यथेति नहीयं माया मायाविनो विज्ञानं प्रतिबध्नाति मायात्वात् लौकिकमायावत् अथवा नेश्वरो मायाप्रतिबद्धज्ञानो मायावित्वात् लौकिकमायाविवदित्यर्थः भगवतो मायाप्रतिबद्धज्ञानत्वाभावेन सर्वज्ञत्वमप्रतिबद्धं सिद्धमित्याह यत इति लोकस्य मायाप्रतिबद्धविज्ञातत्वादेव भगवदाभिमुख्यशून्यत्वमित्याह मांत्विति कालत्रयपरिच्छिन्नसमस्तवस्तुपरिज्ञाने प्रतिबन्धो नेश्वरस्यास्तीति द्योतनार्थस्तुशब्दः मां त्विति लोकस्य भगवत्तत्त्वज्ञाने प्रतिबन्धं द्योतयति तर्हि त्वद्भक्तिर्विफलेत्याशंक्याह मद्भक्तमिति तर्हि सर्वोऽपि त्वद्भक्तिद्वारा त्वां ज्ञास्यति नेत्याह मत्तत्त्वेति विवेकवतो मद्भजनं नतु विवेकशून्यसर्वस्यापीत्यर्थः ॥ २६ ॥

स्वामिकृतटीका।

सर्वोत्तमं स्वरूपमज्ञानन्त इत्युक्तं तदेव स्वस्य सर्वोत्तमत्वमनावृतज्ञानशक्तित्वेन दर्शयन्नन्येषामज्ञानमेवाह वेदाहमिति समतीतानि विनष्टानि वर्त्तमानानि च भावीनि च त्रिकालवर्त्तीनि भूतानि स्थावरजङ्गमानि सर्वाण्यहं वेद जानामि मायाश्रयत्वान्न तस्याः स्वाश्रयव्यामोहकत्वाभावात् मान्तु कोऽपि न वेत्ति मन्मायामोहितत्वात् प्रसिद्धं हि लोके मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वञ्चेति ॥ २६ ॥

भाषा अनुवाद।

मेरे सर्वोत्तम स्वरूप को अज्ञानी लोग नहीं जानते यह जो पूर्व में कहा सोई स्वस्वरूप की उत्तमता औ अनावृतत्व ज्ञान रूपसे देखावते

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥ २७ ॥

शाङ्करभाष्यम् ।

केन पुनस्त्वत्तत्त्वे न प्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि त्वां न विन्दन्ति इत्यपेक्षायामिदमाह इच्छेति इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थेन केनेति विशेषापेक्षायामिदमाह द्वन्द्वमोहेनेति द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहस्तावेव इच्छाद्वेषौ शीतोष्णवत् परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वन्द्वशब्देनाभिधीयेते तत्र यदा इच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः नहीच्छाद्वेषदोषवशीकृतचित्तस्य यथा भूतार्थविषयज्ञानमुत्पद्यते बहिरपि किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इत्यतस्तेनेच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत भरतान्वय सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मनि उत्पत्तिकाले इत्येतत् यान्ति गच्छन्ति हे परन्तप मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः ॥ २७ ॥

आनन्दगिरिकृतटीका ।

भगवत्तत्त्वविज्ञानप्रतिबन्धकं मूलाज्ञानातिरिक्तप्रश्नद्वारेणोदाहरति केनेत्यादिना पुनः शब्दात्

प्रतिबन्धकं मूलाज्ञानातिरिक्तप्रश्नद्वारेणोदाहरति केनेत्यादिना पुनःशब्दात्

भाषा अनुवाद ।

हुये औरोंकी अज्ञानता कहते हैं कि जिस हेतु हे अर्जुन हम माया के आश्रय हैं इससे भूतकाल वर्त्तमान काल औ भविष्यत काल इन तीनों काल के वर्ती चराचर सबको हम जानते हैं क्योंकि माया अपने आश्रय को मोह नहीं कर सकती है परन्तु मेरी मायासे मोहित कोई भी हमें नहीं जानिसके है माया अपने आश्रय के आधीन तथा औ रोंको मोह करती यह प्रसिद्ध है ।२६॥

## येषामन्तगतं पापं जनानां पुण्यकर्मणाम्।
## ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥ २८॥

आनन्दगिरिकृतटीका।

प्रतिबन्धकान्तरवियन्धं गमन्ति अपरोक्षमगान्तरप्रतिबन्धकमिदमागच्छते किंशेषमाकाङ्क्षा-पूर्वकं निश्चिपति केनेति विशेषणमेवायामिति द्वन्द्वशब्देन गृहीतयोरपि इच्छाद्वेषयो-र्ग्रहणं द्वन्द्वशब्दार्थोपलक्षणार्थमित्याह तावेति तयोरपर्य्यायमेकत्वानुपपत्तिं गृहीत्वा विशिनष्टि यथाकालमिति नच तयोरनधिकरणं किञ्चिदपि भूतं संसारमण्डले सम्भवतीत्याह सर्वभूतैरिति तथापि कथं तयोर्मोहहेतुत्वमित्याशंक्याह तत्रेति तयोराश्रयः सप्तम्यर्थः उक्तमेवार्थं कैमुतिकन्यायेन प्रपञ्चयति गृहीति पूर्वभागानुवादपूर्वकमुत्तरभागेन फलितमाह अतइति प्रत्यगात्मन्यहङ्कारादिप्रतिबन्धप्रभावतो ज्ञानोत्पत्तेरसम्भवोऽतःशब्दार्थः कुलप्रयुक्त-महिम्ना स्वरूपमप्राच युक्तैव यथोक्तप्रतिबन्धप्रतिविधानसामर्थ्यमिति द्योतनार्थं भारत परन्तपेति सम्बोधनद्वयमन्यथा प्रतिबन्धं प्रकृतमवान्तरकारणमुपसंहरति सोहेति॥ २७॥

स्वामीकृतटीका।

तदेवं मायाविषयत्वेन जीवानां परमेश्वराज्ञानमुक्तं तस्यैवाज्ञानस्य दृढत्वे कारणमाह इच्छेति सृज्यत इति सर्गः सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूले इच्छा तत्प्रतिकूले च द्वेष-स्ताभ्यां समुत्थः समुद्भूतो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशस्तेन सर्वाणि भूतानि सम्मोहं यान्ति अहमेव सुखो दुःखी चेति गाढ़तरमभिनिवेशं प्राप्नु-वन्ति अतस्तानि मज्ज्ञानाभावान्मां न भजन्तीति भावः॥ २७॥

### भाषा अनुवाद।

माया से मोहित जीवोंको परमेश्वर विषयक ज्ञानका अभाव जो कहा सोई अज्ञान की दृढ़ता से कारण कहते हैं कि हे भारत सृष्टि कहे स्थूल देह धारण होनेसे जो देहके अनुकूल विषयमें इच्छा और उस देहके प्रतिकूलसे जो द्वेष और उन दोनो इच्छा औ द्वेष से उत्पन्न जो सुख दुख आदि तिससे भया जो विवेक का नाश इससे प्राणी मोहको प्राप्त हैं अर्थात् हम सुखी हम दुखी ऐसी निश्चय रखते हैं इसीसे ये अज्ञानी हमको नहीं भजते हैं॥ २७॥

## शाङ्करभाष्यम् :

यत एवमतस्तेन द्वन्द्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्ति अत एवात्मभावेन मान्तु न भजन्ते के पुनरनेन द्वन्द्वमोहेन निर्मुक्ताः सन्तः त्वां विदित्वा यथाशास्त्र मात्मभावेन भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते येषामिति येषान्तु पुनरन्तर्गतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां ते द्वन्द्वमोहनिर्मुक्ता यथोक्तेन द्वन्द्वमोहेन निर्मुक्ता भजन्ते मां परमात्मानं दृढव्रता एवमेव परमार्थतत्त्वं नान्यथेत्येवं सर्वपरित्यागव्रतेन निश्चितविज्ञाना दृढ़व्रता उच्यन्ते ॥ २८ ॥

### आनन्दगिरिकृतटीका ।

जायमानभूतानां मोहपरतन्त्रत्वे फलितमाह यत इति भगवत्तत्त्ववेदनाभावे तद्भिन्नत्ववैधुर्यं फलतीत्याह अतएवेति यदि सर्वाणि भूतानि जन्मप्रतिपद्यमानानि संमूढ़ानि सन्ति भगवत्तत्त्वपरिज्ञानशून्यानि भगवद्भजनपराङ्मुखानि तर्हि शास्त्रानुरोधेन भगवद्भजनपराङ्मुखानि तर्हि शास्त्रानुरोधेन भगवद्भजनमुच्यमानमधिकार्य्यभावादनर्थकमापद्येतेति शङ्कते के पुनरिति अनेकेषु जन्मसु सुकृतवशादपाकृतदुरितानां द्वन्द्वप्रयुक्तमोहविरहिणां ब्रह्मचर्यादिनियमवतां भगवद्भजनाधिकारित्वान्न शास्त्रविरोधोऽस्तीति परिहरति उच्यत इति तुशब्दद्योत्यमर्थमाह पुनरिति सुकृतैर्वाञ्छितद्धर्थं समाप्तप्रायमित्युक्तं प्रकृतोपयोगं पुण्यस्य कर्मणो दर्शयितुं विशिनष्टि सत्त्वेति उभयविधशुद्धे द्वन्द्वनिमित्तमोहनिवृत्तफलमाह ते द्वन्द्वेति मोहनिवृत्तेर्भगवन्निष्ठापर्यन्तत्वमाह भजन्त इति तेषां नानापरिग्रहवतां भगवद्भजनप्रतिहतिमाशंक्याह दृढेति ॥ २८ ॥

### स्वामिकृतटीका ।

कुतस्तर्हि केचन त्वां भजन्तो दृश्यन्ते तत्राह येषामिति येषान्तु पुण्याचरणशीलानां सर्वप्रतिबन्धकं पापमन्तगतं नष्टं ते द्वन्द्वनिमित्तेन मोहेन विनिर्मुक्ताः दृढ़व्रताः एकान्तिनः सन्तो मां भजन्ति ॥ २८ ॥

## भाषा अनुवाद ।

तो फोरि कोई कोई जो तुमारी भजन करते हैं इस शङ्कामे कहते हैं कि जो पुण्यकर्म औ आचरणशील हैं उनके सर्वप्रतिबन्धक स्वरूप सब पाप

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

शाङ्करभाष्यम् ।

ते किमर्थं भजन्त इत्युच्यते जरेति जरामरणमोक्षाय जरामरणयोर्मोक्षार्थं मां परमेश्वरं आश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये ते यद्ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः कर्म चाखिलं समस्तं विदुः ॥ २९ ॥

आनन्दगिरिकृतटीका ।

यथोक्तानामधिकारिणां भगवद्भजनफलं प्रश्नद्वारा दर्शयति ते किमर्थमिति जरामरणादिलक्षणो यो बन्धस्तद्विश्लेषार्थं भगवद्भजनमित्यर्थः सम्प्रति सगुणस्य सप्रपञ्चस्य मध्यमानुग्रहार्थं ध्येयत्वमाह मामाश्रित्येति जरादि संसारनिवृत्त्यर्थं निर्गुणं निःप्रपञ्चं मामुत्तमाधिकारिणो जानन्तीत्युक्तं मामेव ये प्रपद्यन्त इत्यादाविव्याह जरेति मध्यमाधिकारिणं प्रत्याह मामिति परमेश्वराश्रयणं नाम विषयविमुखत्वेन भगवदेकनिष्ठत्वमित्याह मत्समाहितेति प्रयतनं भगवन्निष्ठासिद्ध्यर्थं बहिरङ्गानां यज्ञादीनामन्तरङ्गानाञ्च श्रवणादीनामनुष्ठानं प्रागुक्तं जगदुपादानं परं ब्रह्म कथं ब्रह्म विदुरित्यपेक्षायां समस्ताध्यात्मवस्तुत्वेन सकलकर्मत्वेन च तद्विदुरित्याह कृत्स्नमिति ॥ २९ ॥

स्वामिकृतटीका ।

एवञ्च मां भजन्तस्ते सर्वं विज्ञेयं विज्ञाय कृतार्था भवन्तीत्याह जरेति जरामरणयोर्निरसनार्थं मामाश्रित्य ये प्रयतन्ते ते तत् परं ब्रह्म विदुः कृत्स्नमध्यात्मञ्च विदुः येन तत्प्राप्तव्यं तं देहादिव्यतिरिक्तं शुद्धमात्मानञ्च जानन्तीत्यर्थः तत्साधनभूतमखिलं सरहस्यं कर्म च जानन्ति इत्यर्थः ॥ २९ ॥

भाषा अनुवाद ।

नष्ट होगयेहैं वे लोग सुख दुख आदि द्वन्दसे मुक्त औ एकाग्रचित्त होय हमको भजते हैं ॥ २८ ॥

और ऐसे जो मेरे भक्त जन तेई जानवे जोग वस्तु को अच्छीतरह जानिके कृतार्थ होते हैं यह कहते हैं कि जरा मरणकेनिवारणार्थ मेरी आश्रय ले जो मनुष्य यत्न करते हैं वे परब्रह्मको जानि सके हैं और सम्पूर्ण

**साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥ ३० ॥**

**इति श्रीभगवद्गीताया योगशास्त्रे कृष्णार्जुनसंवादे**
**विज्ञानयोगो नाम सप्तमोऽध्यायः॥ ७ ॥**

### शाङ्करभाष्यम्।

साधीति साधिभूताधिदैवं अधिभूतं चाधिदैवञ्च अधिभूताधिदैवं तेन सह अधिभूताधिदैवेन वर्त्तते इति साधिभूताधिदैवं मां ये विदुः साधियज्ञञ्च सह अधियज्ञेन साधियज्ञं ये विदुः प्रयाणकाले मरणकालेपि च ते मां विदुः युक्तचेतसः समाहितचित्ता इति॥ ३०॥

इति श्रीमद्भगवद्गीताभाष्ये सप्तमोऽध्यायः॥ ७॥

### आनन्दगिरिकृतटीका।

न केवलं भगवन्निष्ठानां सर्वाध्यात्मककर्मात्मकब्रह्मवित्त्वमेव किन्त्वधिभूतादिसहितं तद्वे-दित्वमपि सिध्यतीत्याह साभिभूतेति अध्यात्मं कर्माधिभूतमधिदैवमधियज्ञञ्चेति पञ्चकं कर्म तद् ब्रह्म ये विदुस्तेषां यथोक्तज्ञानवतां समाहितचेतसामापदवस्थायामपि भगवत्तत्त्वज्ञान-मप्रतिहतं तिष्ठतीत्याह प्रयाणेति अपिचेति निपाताभ्यां तस्यामवस्थायां करणग्रामस्य व्यग्रतया ज्ञानसम्भवेपि मयि समाहितचित्तानामधुनाज्ञानवतां भगवत्तत्त्वज्ञानमयत्नलभ्यमिति द्योत्यते तदनेन सप्तमेनोत्तममधिकारिणं प्रतिज्ञेयं निरूपयता तदर्थमेव सर्वात्मकत्वादिक-मुपदिशता प्रकृतिद्वयद्वारेण सर्वकारणत्वादिति च वदता तत्पदवाच्यं तल्लक्ष्यञ्चोपेक्षितं॥३०॥

इति आनन्दगिरिकृत टीकायां सप्तमोऽध्यायः ७॥

### स्वामिकृतटीका।

नचैवं भूतानां योगभ्रंशशङ्कापीत्याह साधिभूतेति अधिभूतादिशब्दानामर्थं श्रीभग-वानेवोत्तराध्याये व्याख्यास्यति रधिभूतेनाधिदैवेन च सह अधियज्ञेन च सह मां ये जानन्ति

### भाषा अनुवाद।

**अध्यात्म विद्या जाने हैं अर्थात् अध्यात्म ज्ञानसे प्राप्तव्य सोई देहादिसे भिन्न शुद्ध आत्माको भी जानते हैं और तत्त्वज्ञान के साधनरूप कर्म्म भी जानि सकते हैं॥ २९॥**

स्वामिकृतटीका ।

जानन्ति ननु तदापि व्याकुलीभूय मां निस्मरन्ति अतो मद्भक्तानां न योगभ्रंशशङ्केति भावः ॥ कृष्णभक्तैरेव यत्नेन ब्रह्मज्ञानमवाप्यते इति विज्ञानयोगाख्ये सप्तमे सम्प्रकाशितम् ॥ ३०॥

इति श्रीधरस्वामिकृतटीकायां सप्तमोऽध्यायः ॥ ७ ॥

भाषा अनुवाद ।

और ऐसे मेरे भक्तोंको योगसे भ्रष्ट होनेकी शङ्का नहीं हैं यही इस श्लोकसे कहते हैं कि अधिभूत अधिदैव अधियज्ञ सहित जो हमको जानते हैं तेई मेरे आसक्तचित्त मरणसमयमें भी हमको जानिशकें हैं उस वेला भी व्याकुल होय हमको नहीं भुलते हैं इससे मेरे भक्तको योगभ्रष्ट होने का डर नहीं है । श्रीधरस्वामी अध्यायभरका अर्थ कहते हैं कृष्णके भक्तही यत्नसे ज्ञानलाभ करते हैं यही विज्ञानयोगनामक सप्तम अध्याय भगवानने प्रकाशित किया है ॥ ३० ।

इति श्रीजगन्नाथशुक्लविरचितायां मनभावनीटीकायां सप्तमोऽध्ययाः ॥ ७ ॥

---

# श्रीमद्भगवद्गीता

## अष्टमोऽध्यायः

### अर्जुन उवाच ।

**किन्तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

शाङ्करभाष्यम् ।

ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवताऽर्जुनस्य प्रश्नबीजानि उपदिष्टानि अतस्तत्प्रश्नार्थं अर्जुन उवाच किं तदिति ॥१॥ अधियज्ञ इति ॥ २ ॥

आनन्दगिरिकृतटीका ।

सप्तमाध्यायान्ते येषामन्तर्गतं पापमित्यादिना येषां ब्रह्मादीनामनुसन्धानमुक्तं यच्च प्रयाणकाले भगवतः स्मरणं दर्शितं तदिदं जिज्ञासमानः सन् पृच्छतीति प्रश्नसमुदायमवतारयति ते ब्रह्मेति प्रश्नबीजानि तद्विषयभूतानि ब्रह्मादीनि वस्तूनीति यावत् बुभुत्सितविषयप्रतिलम्भानन्तरं तेषां प्रश्नद्वारा निर्णयार्थमाह अत इति यदुक्तं ते ब्रह्म तद्विदुरिति तत् किं सोपाधिकं निरुपाधिकंवा ब्रह्मशब्दस्योभयत्रापि सम्भवादिति मत्वाऽऽह किं तदिति यच्चोक्तं कृत्स्नमध्यात्ममिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा प्रत्यग्भूतं ब्रह्मैव वा विवक्षितमित्याह किमध्यात्ममिति विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति श्रुतौ कर्म्मणो द्वैविध्यनिर्द्धारणात् कर्म चाखिलमित्यत्र कर्म गृहीतमिति पृच्छति किमिति क्षराक्षराभ्यां कार्य्यकारणाभ्यां अतीतस्य भगवतो न किञ्चिदवेद्यमस्तीति सूचयति पुरुषोत्तमेति साधिभूताधिदैवमित्यत्राधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्त्तमानं किञ्चिदेव गृह्यते किंवा समस्तमेव कार्यमिति निर्द्दिधारयिषया पृच्छति अधिभूतमिति अधिदैवमिति च दैवतविषयमनुध्यानं वा दैवतेष्वादित्यमण्डलादिषु वर्त्तमानं चैतन्यं वा जिहृक्षितमिति प्रश्नान्तरं प्रस्तौति अधिदैवमिति ॥ १ ॥

स्वामिकृतटीका ।

ब्रह्मकर्माधिभूतादि विदुः कृष्णैकचेतसः इत्युक्तं ब्रह्मकर्मादि स्पष्टमष्टम उच्यते पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तपदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाच किं तद्ब्रह्मेति द्वाभ्यां स्पष्टोऽर्थः ॥ १ ॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

आनन्दगिरिकृतटीका ।

साधियज्ञं चेत्यत्राधियज्ञशब्देन यज्ञमधिकृतो विज्ञानात्मा वा परदेवता वेति प्रश्नान्तरं प्रतिकरोति अधियज्ञ इति स च कथं केन प्रकारेण ब्रह्मत्वेन चिन्तनीयः किं तादात्म्येन किमात्यन्ताभेदेनेत्याह कथमिति सर्वथापि स किमस्मिन् देहे वर्त्तते ततो बहिर्वा देहे चेत् स कोऽत्र बुद्ध्यादि तद्व्यतिरिक्तो वेति जिज्ञासया ब्रूते कोऽत्रेति अधियज्ञः कथं कोऽत्रेति न प्रश्नभेदकः कथमिति किन्तु प्रकारभेदविवक्षयेति द्रष्टव्यं यत्तु सर्वाश्रितविज्ञानात्मनस्तदुत्क्रमणकालेऽपि भगवदनुसन्धानं सिध्यतीति तदयुक्तमुत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तिरित्यभिप्रेत्याह प्रयाणेति ॥ २ ॥

स्वामिकृतटीका ।

किञ्च अधियज्ञ इति अत्र देहे यो यज्ञो वर्त्तते तस्मिन् कोऽधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः स्वरूपं पृष्ट्वाधिष्ठानप्रकारं पृच्छति कथं केन प्रकारेण अत्रावस्मिन् देहे स्थितः यज्ञमधितिष्ठतीत्यर्थः यज्ञग्रहणं सर्वकर्मणामुपलक्षणार्थं अन्तकाले च नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसि ॥ २ ॥

## भाषा अनुवाद ।

सप्तम अध्याय मे जो सङ्क्षेप से कहा कि भगवद्भजन मे एकचित्त भक्त जन ब्रह्म कर्म्म औ अधिभूत आदि सात पदार्थ जानि सके है सोई जो सप्तम अध्याय मे कहा जो ब्रह्म कर्म्मादि तिसको भगवान् अष्टम अध्याय मे प्रकाश रूपसे कहैंगे सो यह है कि सतयें अध्याय के अन्त मे प्रसङ्गवशते भगवान् ने कहा जो ब्रह्म औ अध्यात्म सात पदार्थ तिनके ज्ञानेच्छुक अर्जुन दो श्लोक से प्रश्न करते हैं कि हे पुरुषोत्तम आपने कहा जो ब्रह्म सो किस रूपक है और अध्यात्म ह्वीं वा किस प्रकार का जानैं तथा कर्म्म ह्वी वा क्या है और अधिभूत या अधिदेव किस को कहते है यह प्रश्न अर्जुनने भगवान से किया है ॥ १ ॥

श्रीभगवानुवाच ।

अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

शाङ्करभाष्यम् ।

एषां प्रश्नानां यथाक्रमं निर्णयाय अक्षरमिति अक्षरं न क्षरतीति परमात्मा एतस्य वा अक्षरस्य प्रशासने गर्गीति श्रुतेः ओंकारस्य चोमित्येकाक्षरं ब्रह्मेति परेण विशेषणात्तद्ग्रहणं परमिति च निरतिशये ब्रह्मण्यक्षरे उपपन्नतरं विशेषणं तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावो इति स्वोभावः स्वभावोऽध्यात्मं उच्यते आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यते अध्यात्मशब्देनाभिधीयते भूतभावोद्भवकरः भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः विसर्गो विसर्जनं देवतोद्देशेन च रुपुरोडाशादेः स्वस्य द्रव्यस्य वितरणं परित्यागः स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्यर्थः इत्येतस्माद्बीजभूतात् वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतानि उद्भवन्ति ॥ ३ ॥

आनन्दगिरिकृतटीका ।

व्याख्यातप्रश्नसप्तकस्य प्रतिवचनं भागवतमवतारयति एषामिति क्रमेण कृतानां प्रश्नानां क्रमेणैव प्रतिवचने प्रष्टुरभीष्टं प्रतिपत्तिसौकर्यञ्च सिध्यतीति बुद्ध्यमानो विशिनष्टि यथाक्रम

भाषा अनुवाद ।

और शरीर के द्वारा जो यज्ञादि कर्म्म किये जाते हैं उनका अधियज्ञ कहे अधिष्ठाता और कर्मका फलदाता को है अधियज्ञ स्वरूप पूंछि करके अब उसका अधिष्ठानभूत वस्तु पूंछते हैं कि हे मधुसूदन यह अधियज्ञ पुरुष इस देह में किस प्रकार से स्थित होके यज्ञादि कर्मोंका नियोग कहे अवधारण और यज्ञफल का प्रदान करता है और अन्तकाल मे संयत चित्त पुरुष तुमको किस उपाय से जान ते हैं यहां यज्ञशब्द से सब कर्मोका ग्रहण है यह जानो ॥ २ ॥

आनन्दगिरिकृतटीका ।

मिति तत्र प्रश्नत्रयं निर्णेतुं भगवद्वचनमुदाहरति अक्षरमिति किं तद्ब्रह्मेति प्रश्नस्य प्रतिवचनमक्षरं ब्रह्मपरममिति तत्राक्षरशब्दस्य निरुपाधिके परस्मिन्नात्मन्यविनाशित्वव्याप्तिमत्त्वसम्बन्धात् प्रवृत्तिं व्युत्पादयति अक्षरमित्यादिना कथं पुनरक्षर शब्दस्य यथोक्ते परमात्मनि वृद्धप्रयोगमन्तरेण व्युत्पत्त्या प्रवृत्तिराश्रीयते व्युत्पत्तेरर्थान्तरेऽपि सम्भवादित्याशंक्य द्यावापृथिव्यादि विषयनिरङ्कुशप्रशासनस्य परस्मादन्यस्मिन्नसम्भवात्तथाविध प्रशासनकर्त्तृत्वेन श्रुतमक्षरं ब्रह्मैवेत्याह एतस्येति रूढिर्योगमपहरतीति न्यायादोंकारे वर्णसमुदायात्मन्यक्षरशब्दस्य रूढ्या प्रवृत्तिराश्रयितव्येत्याशंक्याह ओंकारस्येति प्रतिवचनोपक्रमे प्रक्रान्तमोङ्काराख्यमक्षरमेवोत्तरत्र विशेषितं भविष्यतीत्याशंक्य परमविशेषणविरोधात् न तस्य प्रक्रमः सम्भवतीत्याह परममिति चेति किमध्यात्ममिति प्रश्नस्योत्तरं स्वभावोऽध्यात्ममित्यादि तद्व्याचष्टे तस्यैवेति स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्रामः स चात्मनि देहेऽहंप्रत्ययवेद्ये वर्त्तत इति अस्तु प्रतिभासं व्यावर्त्त्य स्वभावपदं व्यनक्ति स्वो भाव इति एवं विग्रहपरिग्रहे स्वभावोऽध्यात्ममुच्यते इत्यस्यायमर्थो निष्पन्नो भवतीत्यनुवादपूर्वकं कथयति स्वभाव इति तस्यैव परस्येत्यादिनोक्तं न विस्मर्त्तव्यमिति विशिनष्टि परमार्थेति परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावमनुभवति तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरित्यर्थः किं कर्मेति प्रश्नस्योत्तरमुपादत्ते भूतेति भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति भूतानामिति भावः सद्भावो वस्तुभावोऽतएव भूतवस्तूत्पत्तिकर इति वक्ष्यति वैदिकं कर्म्मोक्तविशेषणं कर्मशब्दितमिति विसर्गशब्दार्थं दर्शयन् विशदयति विसर्ग इत्यादिना कथं पुनर्यथोक्तस्य यज्ञस्य सर्व्वेषु भूतेषु सृष्टिस्थितिप्रलयहेतुत्वेन तदुद्भवकरत्वमित्याशंक्याग्नौ प्रास्ताहुतिरित्यादिस्मृतिमनुसृत्याह एतस्माद्धीति ॥ ३ ॥

स्वामिकृतटीका ।

प्रश्नक्रमेणैवोत्तरं श्रीभगवानुवाच अक्षरमिति त्रिभिः न क्षरति न चलतीत्यक्षरं ननु जीवोऽप्यक्षरस्तत्राह परमं यदक्षरं जगतां मूलकारणं तद्ब्रह्म एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति श्रुतेः तस्यैव ब्रह्मणः अंशतया जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्त्तमानोऽध्यात्मशब्देनोच्यत इत्यर्थः भूतानां जरायुजादीनां भावः सत्ता उत्पत्तिः उद्भवश्च आदित्याज्जायते वृष्टिरिति क्रमेण वृद्धिस्तत्कृतत्वेन भवनमुद्भवः तौ भूतभावोद्भवौ करोति योविसर्गो देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः सर्वकर्म्मणामुपलक्षणमेतत् स च कर्मशब्दवाच्यः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतं ।
अधियज्ञोऽहमेवात्र देहे देहभृतांवर ॥ ४ ॥

शाङ्करभाष्यम् ।

अधिभूतमिति अधिभूतं प्राणिजातमधिकृत्य भवतीति कोसौ क्षरः क्षरतीति क्षरो विनाशी भावो यत् किञ्च जनिमद्वस्त्वित्यर्थः पुरुषः पूर्ण-मनेन सर्वमिति पुरि शयनाद्वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः सर्व-प्राणिकरणानामनुग्राहकः सोऽधिदैवतं अधियज्ञः सर्वजज्ञाभिमानिनी देवता विष्णुाख्या यज्ञो वै विष्णुरिति श्रुतेः स हि विष्णुरहमेवात्रास्मिन् देहे यो यज्ञस्तस्याऽहमधियज्ञः यज्ञो हि देहनिर्वर्त्त्यत्वेन देहसमवायीति देहाधिकरणो भवति देहभृतांवर ॥ ४ ॥

भाषा अनुवाद ।

श्रीकृष्ण भगवान इस श्लोक से लेकर तीन श्लोक के द्वारा अर्जुन को प्रत्येक प्रश्नका सिद्धान्तरूप उत्तर कहते हैं कि न क्षरति गच्छति अक्षरं अर्थात् जिसका गमन औ आगमन नहीं है सोई अक्षर ब्रह्म है जो कहो कि जीव चैतन्य भी अक्षर क्यों न होय तो कहते हैं कि नहीं जो परम अक्षर कहे जगत का मूल कारण है सोई ब्रह्म जानो क्योंकि श्रुति में भी कहा है कि हे गार्गि वेद कहे जानो कि इसी ब्रह्माण्ड ही को सोई ब्रह्म कहते हैं यह बात प्रसिद्ध है और उसी ब्रह्मका अंश जो जीवरूप होने से नाम स्वभाव और देह आदि अङ्गीकार करिके भोक्तारूप से वर्त्तमान है उसी जीवको अध्यात्म कहा है और भूत कहे जरायुज आदिकों की उत्पत्ति और उद्भव शब्द का यह अर्थ है कि सूर्य्यसे वर्षा वर्षा से अन्न औ अन्न से प्रजा ऐसे क्रमसे उत्तमरूप जो वृद्धि सोई भूतों का भाव है और उद्भवकारी जो विसर्ग अर्थात् सर्वकर्म्म का उपलक्षणरूप देवतोंको उद्देश करि द्रव्यत्याग रूप जो होम यज्ञ आदि सोई कर्म्म है ॥ ३ ॥

आनन्दगिरिकृतटीका।

सम्प्रति प्रश्नत्रयस्योत्तरमाह अधिभूतमिति अधिभूतञ्च किं प्रोक्तमित्यस्य प्रतिवचनमधिभूतं क्षरो भाव इति तत्राधिभूतपदमनूद्य वाच्यमर्थं कथयति अधिभूतमित्यादिना तस्य निर्देशमन्तरेण निर्द्धारितुमशक्यत्वात् प्रश्नद्वारा तन्निर्दिशति कोऽसाविति कार्य्यमात्रमत्र संगृहीतमिति वक्तुमुक्तमेव व्यनक्ति यत् किञ्चिदिति अधिदैवं किमिति प्रश्ने पुरुषश्चेत्यादि प्रतिवचनं तत्र पुरुषशब्दमनूद्य मुख्यमर्थं तस्योपन्यस्यति पुरुष इति तस्यैव सम्भावितमर्थान्तरमाह पुरि शयनाद्वेति वैराजं देहमासाद्यमादित्यमण्डलादिषु दैवत्येषु योऽन्तरवस्थितो लिङ्गात्मा व्यष्टिकरणानुग्राहकोऽत्र पुरुषशब्दार्थः स चाधिदैवतमिति स्फुटयति आदित्येति अधियज्ञः कथमित्यादिप्रश्नपरिहरन्नधियज्ञशब्दार्थमाह अधियज्ञ इति कथमुक्तायां देवतायामधियज्ञशब्दः स्यादित्याशङ्क्य श्रुतिमनुसरन्नाह यज्ञो वेद इति परैव देवताधियज्ञशब्देनोच्यते सा च ब्रह्मणः सकाशादत्यन्ताभेदेन प्रतिपत्तव्येत्याह स हि विष्णुरिति शास्त्रीयव्यवहारभूमिरत्रेत्युक्ता देहसामानाधिकरण्याद्वात्रेत्यस्य व्याख्यानम् अस्मिन्निति किमधियज्ञो बहिरन्तर्वा देहादिति सन्देहो माभूदित्याह देह इति ननु यज्ञस्य देहाधिकरणत्वाभावात् कथं तथाविधयज्ञानि देवतात्त्वं भगवतो विवक्ष्यते तत्राह यज्ञो हीति एतेन तस्य बुद्ध्यादिव्यतिरिक्तत्वमुक्तमवधेयं नहि परा देवता दर्शितरीत्यादियज्ञशब्दिता बुद्ध्यादिष्वन्तर्भावमनुभावयितुमलं देहान् बिभ्रतीति देहभृतः सर्वे प्राणिनस्तेषामेव वरः श्रेष्ठः युक्तं हि भगवता साक्षादेव प्रतिक्षणं संवादं विदधानस्यार्जुनस्य सर्वेभ्यः श्रैष्ठ्यम् ॥ ४ ॥

स्वामिकृतटीका।

किञ्च अधिभूतमिति क्षरो विनश्वरो भावः देहादिपदार्थः भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते पुरुषो वै राजः सूर्यमण्डलवर्त्ती स्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते आधिदैवतमधिष्ठात्री देवता स वै शरीरी प्रथमः स वै पुरुष उच्यते आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत इति श्रुतेः अत्रास्मिन् देहेस्थितोऽहमेवाधियज्ञोयज्ञस्याधिष्ठात्री देवता यज्ञादिकर्म्म प्रवर्त्तकस्तत्फलदाता च कथमित्यस्याप्युत्तरमनेनैवोक्तं द्रष्टव्यमन्तर्यामिणोऽसत्तादिभिर्गुणैर्जीववैलक्षण्येन देहान्तर्वर्त्तित्वप्रसिद्धत्वात् तथाच श्रुतिः द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽपि चकास्तीति देहभृतां मध्ये श्रेष्ठ इति सम्बोधयन् त्वमप्येवं भूतमन्तर्यामिणं पराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धुमर्हसीति सूचयति ॥ ४ ॥

भाषा अनुवाद।

और क्षर कहे विनश्वर जो देह आदि सो प्राणीमात्र को अधिकार करके स्थिति करै है इससे अधिभूत कहावे है और पुरुष कहते हैं सूर्य-

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरं।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥ ५॥

शाङ्करभाष्यम्।

अन्तकाल इति अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति नास्ति न विद्यते अत्रास्मिन्नर्थे संशयो याति वा न वेति॥ ५॥

आनन्दगिरिकृतटीका।

यत्तु प्रयाणकाले चेत्यादि चोदितं तत्राह अन्तकाले चेति मामेवेत्यवधारणेन अध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्त्यते विशिष्टस्मरणे हि चित्तविक्षेपात् प्रधान-

भाषा अनुवाद।

मण्डलवर्त्ती विराट को जो अपने अंशरूप समस्त देवतोंके अधिपति हैं वेई अधिदेव हैं अधिदैव कहते अधिष्ठात्री देवताको यह श्रुतिमे कहा है कि सोई विराट पुरुष प्रथम शरीरधारी सकल भूतोंके आदि कर्त्ता औ ब्रह्माके भी पूर्व वर्त्तमान थे और इस शरीर मे अन्तर्यामी रूपसे वर्त्तमान जो हम को अधिष्ठात्री देवता तथा कर्म्मफल तिन के दाता जानो इस से अधियज्ञ किसरूप स्थिति करते हैं इस प्रश्न का उत्तर भया क्योंकि यही अन्तर्यामी की असङ्ग आदि गुणके द्वारा जीवके साथ भिन्नता पूर्वक देहके बीच मे वर्त्तमानता लोकमे प्रसिद्ध है सो श्रुतिभी कहती है कि मित्रभाव से एकस्थान मे रहनेवाले जो जीव औ अन्तर्यामी रूप ये दोनो सुन्दर पक्षयुक्त शरीररूप एकवृक्षपर स्थिथि किये हैं तिनके मध्य एकफल भोगी औ दूसरा साक्षीमात्र कहे देखनेवाला है और हे देहभृतांवर नरश्रेष्ठ अर्जुन इस सम्बोधन से यह जनाया कि तुम भी अपने प्रवृत्तिरूप कर्मोके अन्वय व्यतिरेकके अनुरूप सिद्धि असिद्धि मे एक ही अन्तर्यामी के आधीन हो तो सुतरां कहे भले प्रकार अन्वयव्यतिरेक के द्वारा इस अन्तर्यामी को तुम आप अपने से जानने के योग्य हो॥ ४॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

शाङ्करभाष्यम् ।

न मद्विषय एवायं नियमः किं तर्हि यं यमिति यं यं वापि यं यं भावं देवताविशेषं स्मरंश्चिन्तयन् त्यजति परित्यजति अन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय सदा सर्वदा तद्भाव-

आनन्दगिरीकृतटीका ।

स्मरणमपि स्यान्नच मरणकाले कार्य्यकरणपारवश्याद्भगवदनुस्मरणाऽसिद्धिः सर्वदैव-नैरन्तर्य्येण आदरधिया भगवति समर्पितचेतसः तत्कालेऽपि कार्य्यकरणजातमगणयतो भगवदनुसन्धानसिद्धेः शरीरे तस्मिन्नहं ममाभिमानाभावादिति यावत् प्रयातीत्यत्र प्रकृतशरीरमपादानं ब्रह्मवित् ब्रह्मैव भवतीत्यादि श्रुतिमाश्रित्याह नास्तीति व्यासेध्यं संशयमेवाभिनयति याति वेति ॥ ५ ॥

स्वामिकृतटीका ।

प्रयाणकाले च कथं ज्ञेयोऽसीत्यनेन पृष्टमन्तकाले ज्ञानोपायं तत्फलञ्च दर्शयति अन्तकाले इति मामेवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन् देहं त्यक्त्वा यः प्रकर्षेण अर्च्चिरादिमार्गेण उत्तरायणपथा याति स मद्भावं मद्रूपतां याति अत्र संशयो नास्ति स्मरणं ज्ञानोपायो मद्भावापत्तिश्च फलमित्यर्थः ॥ ५ ॥

भाषा अनुवाद ।

और तुम अन्तकाल मे कैसे जाने जाते हो इस विषय मे अन्तसमय-ज्ञान को उपाय औ उसका फल देखावते हैं कि उक्त जो अन्तर्यामि स्वरूप परमेश्वर मै सो मेरे को स्मरणपूर्वक देहत्याग करिके जो प्रकृष्ट रूपसे अर्चिरादि कहे सूर्य्यमण्डल मे होय के उत्तरायण राह से अर्थात् उत्तरायण सूर्य्यमे गमन करते हैं वे मेरे स्वरूप को प्राप्त होते हैं इस मे संशय नहीं है मेरा स्मरण ही तत्त्वज्ञान को उपाव है औ मेरे रूप को प्राप्तिही फल है ॥ ५ ॥

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पित मनोबुद्धि र्मामेवैष्यस्यसंशयः ॥ ७ ॥

शाङ्करभाष्यम् ।

भावितस्तस्मिन् भावस्तद्भावः स भावितःस्म थैमाश्चतयाऽभ्यस्तो येन स तद्भावभावितः सन् ॥ ६ ॥

यस्मादेवमन्त्यभावन देहान्तरप्राप्तौ कारणं तस्मादिति तस्मात् सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युद्धञ्च स्वधर्मं कुरु मयि वासुदेवेऽर्पिते मनोबुद्धिर्यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन् मामेव यथास्मृतमेष्यसि असंशयो न संशयोऽत्र विद्यते ॥ ७ ॥

आनन्दगिरिकृतटीका ।

अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्तिनियमवदन्यमपि तत्काले देवादिविशेषं ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यं भाविनीति दर्शयति यंयमित्यादिना कथं पुनरन्तकाले परवशस्य नियतविषयस्मृतिर्भवितुमलमत आह सदेति देवादिविशेषस्तत्किञ्चिति सम्प्रत्यर्थः भावो भावना वासना स भावो भावितः सम्पादितो येन पुंसा स तथाविधः सन् यं यं भावं स्मरति तन्तमेव देहत्यागादूर्ध्वं गच्छतीति सम्बन्धः ॥ ६ ॥

स्वामिकृतटीका ।

न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः किं तर्हि यं यमिति यं यं भावं देवतान्तरं वा अन्यमपि वा अन्तकाले स्मरन् देहं त्यजति तं तमेव स्मर्यमाणं भावं प्राप्नोति अन्तकाले भावविशेषस्मरणे हेतुः सदा तद्भावभावित इति सर्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्तः ॥ ६ ॥

भाषा अनुवाद ।

अन्तकालमे मेरा स्मरण करके मेरीही प्राप्तिहोय केवल यही नहीं सोई कहते हैं कि हे कुन्तीपुत्र अर्जुन अन्तकालमे जो कोई जिस देवताका या औरकिसी विषयका ध्यान कर देह छोडे है सो उसीको प्राप्त होता जिसका ध्यान कियाहै देखो सर्वदा जिसका चिन्तन करते रहो तो अन्तकालमे भी अन्तःकरणमे उसीका संस्कार रहता और नवीन अपूर्व वस्तुका स्मरण होना अति कठिन है ॥ ६ ॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थाऽनुचिन्तयन् ॥ ८ ॥**

## शाङ्करभाष्यम् ।

किञ्च [अभ्यासेति ] अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूते एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः स चासौ

## आनन्दगिरिकृतटीका ।

सततं भावना प्रतिनियतफलप्राप्तिनिमित्तान्ययव्ययहेतुरित्यङ्गीकृत्यानन्तरश्लोकमवता-रयति तस्मादिति विशेषणत्रयवतो भगवदनुस्मरणस्य भगवत्प्राप्तिहेतुत्वंभाति तस्मादित्युक्तं सर्वेषु कालेष्वादर नैरन्तर्याभ्यां सहेति यावत् भगवदनुस्मरणे विशेषणत्रयशालित्वं यथा-शास्त्रमिति द्योत्यते भगवदनुसन्धानं कर्त्तव्यमुक्त्वा तेन सह स्वधर्ममपि कुरु युद्धमित्युपदि-शता भगवता समुच्चयो ज्ञानकर्मणोरङ्गीकृतो भातीत्याशंक्याह मयीति मनोबुद्धिगोचरं क्रियाकारकफलजातं सकलमपि ब्रह्मैवेति भावयन् युद्ध्यस्वेति ब्रुवता क्रियादि कलापस्य ब्रह्मातिरिक्तस्याभावाभिलापाच्चात्र समुच्चयो विवक्षित इत्यर्थः उक्तरीत्या स्वधर्ममनुवर्त्त मा-नस्य प्रयोजनमाह मामेवेति उक्तसाधनवशात् फलप्राप्तौ प्रतिबन्धाभावं सूचयति असंशय इति ॥ ७ ॥

## स्वामिकृतटीका ।

तस्मादिति यस्मात् पूर्ववासनैवान्तकाले स्मृतिहेतुर्नतु तदा विवशस्य स्मरणोद्यमः सम्भवति अस्मात् सर्वदा मामनुस्मर अनुचिन्तय सन्ततस्मरणमाह चित्तशुद्धिं विना न भवति अतो युध्य च युध्यस्व चित्तशुद्ध्यर्थं युद्धादिकं स्वधर्ममनुतिष्ठेत्यर्थः एवं मर्य्यर्पितं मनः संकल्पात्मकं बुद्धिश्च व्यवसायात्मिका येन त्वया स त्वमनायासेन मामेव प्राप्स्यसि असंशयः संशयोऽत्र नास्ति ॥ ७ ॥

## भाषा अनुवाद ।

पूर्वकी वासनाही जिसलिये मरणकालके स्मरणमें हेतु है और अन्तसमय मे विवश प्राणीको अपूर्व वस्तूका स्मरण असंभव है इससे सर्वदा हमको चिन्तन करो परन्तु मेरा चिन्तन भी चित्तशुद्ध विना दुर्लभ है सो तुम चित्तशुद्धि के अर्थ युद्धरूप स्वधर्मका अनुष्ठान करो और तुमारा संकल्पा-त्मक मन तथा व्यवसायात्मिका बुद्धि मेरे मे अर्पित भई है इससे अनायास हमको प्राप्त होउगे इसमें संशय नही है ॥ ७ ॥

## शाङ्करभाष्यम्।

**योगस्तेन युक्तं तत्रैव व्यावृत्तं प्रवृत्तं योगिनश्चेतस्तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं दिव्यं याति गच्छति हे पार्थ अनुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायन्नित्येतत्॥ ८॥**

### आनन्दगिरिकृतटीका।

इतश्च पूर्वश्लोकोक्तकार्यानुष्ठायी भगवन्तमन्तकाले प्राप्नोतीत्याह - किञ्चेति अभ्यास विभजते मयीति नहि चित्तसमर्पणस्य विषयभूतं भगवतोऽर्थान्तरं वस्तु सदस्तीति मन्वानो विशिनष्टि चित्तेति अन्तरालकालेऽपि विजातीय प्रत्ययेषु विच्छिद्य विच्छिद्य जायमानेष्वपि सजातीय प्रत्ययावृत्तिरयोगिनोऽपि स्यादित्याशंक्याह विलक्षणेति अभ्यासाख्येन योगेन युक्तत्वं चेतसो विशेषणेति तत्रैवेति तृतीयया परामृष्टोऽभ्यासयोगः सप्तम्यापि परामृश्यते ननु प्राकृतानां चेतस्तथेत्याशंक्य विशिनष्टि योगिन इति तच्चेतो विषयान्तरं परामृशेच्च तर्हि परमपुरुषार्थप्राप्तिहेतुः स्यादित्याशंकयाह नान्यगामिनेति प्रामादिकं विषयान्तरपारवश्यमभ्यनुज्ञातुं ताच्छील्यप्रत्ययात्तेन तात्पर्यादपरामृष्टार्थान्तरेण परमपुरुषनिष्ठेनेत्यर्थः तदेव पुरुषस्य निरतिशयत्वं यदपरामृष्टाखिलानर्थत्वमनतिशयानन्दत्वं तच्च प्रागेव व्याख्यातं नेह व्याख्यानमपेक्षते यश्चासावादित्ये इत्यादिश्रुतिमनुसृत्याह दिवीति तत्र विशेषतोऽभिव्यक्तिरेव भवनं पूर्वोक्तेन चेतसा यथोक्तं पुरुषमनुचिन्तयन् याति तमेवेति सम्बन्धः अनुचिन्तयन्नित्यत्रानुशब्दार्थं व्याचष्टे शास्त्रेति चिन्तयन्निति व्याकरोति ध्यायन्निति॥ ८॥

### स्वामिकृतटीका।

अन्तकरणस्य चाभ्यासोऽन्तरङ्गसाधनमिति दर्शयन्नाह अभ्यासयोगेति अभ्यासः सजातीय प्रत्ययप्रवाहः स एव योग उपायस्तेन युक्तेनैकाग्रेण अतएव नान्यं विषयं गन्तुं शीलं यस्य तेन चेतसा दिव्यं द्योतनात्मकं परमेश्वरमनुचिन्तयन् हे पार्थ तमेव यातीति॥ ८॥

## भाषा अनुवाद।

**और स्मरणमे परम कारण अभ्यास को देखावते हुये कहते हैं कि अभ्यास कहे समानजातीय की प्रतीतिका प्रवाह जो धारावहक योग है अर्थात् उपाय उससे एकाग्र चित्त होय जिसकी बुद्धि अन्यविषयमे न जाय**

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

## शाङ्करभाष्यम् :

किंविशिष्टञ्च पुरुषं यातीत्युच्यते कविमिति कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरन्तनमनुशासितारं सर्वस्य जगतः प्रशासितारम् अणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरम् अनुस्मरेदनुचिन्तयेत् यः कश्चित् सर्वस्य कर्म्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारमचिन्त्यरूपं नास्य रूपं नियतं विद्यमानमपि केनचित् चिन्तयितुं शक्यते इत्यचिन्त्यरूपस्तम् आदित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात् परं तमनुचिन्तयन् यातीति पूर्व्वेणैव सम्बन्धः ॥ ९ ॥

## आनन्दगिरिकृतटीका ।

किं विशिष्टपुरुषमनुचिन्तयन्निति सम्बन्धः चकारात् कया वा नाड्योत्क्रामन्नित्यनुक्रम्यते तत्र ध्यानद्वारा प्राप्यस्य पुरुषस्य विशेषणानि दर्शयति उच्यत इति क्रान्तदर्शित्वमतीतादेरशेषस्य वस्तुनो दर्शनशालित्वं तेन निष्पन्नमर्थमाह सर्वज्ञमिति चिन्तनमादिमतः स सर्वस्य कारणत्वादनादिमित्यर्थः सूक्ष्ममाकाशादि ततः सूक्ष्मतरं तदुपादानत्वादित्यर्थः यो यथोक्तमनुचिन्तयेत् स तमेवानुचिन्तयन् यातीति पूर्व्वेणैव सम्बन्ध इति योजना ननु विशिष्टजात्यादिमतो यथोक्तमनुचिन्तनं फलवद्भवति नत्वस्मदादीनामित्याशङ्क्याह यः कश्चिदिति फलमत उपपत्तेरिति न्यायेनाह सर्वस्येति एतदप्रमेयं ध्रुवमिति श्रुतिमाश्रित्याह अचिन्त्यरूपमिति नहि परस्य किञ्चिदपि रूपादिवस्तुतोऽस्ति अरूपवदेव हीति न्यायात् कल्पितमपि नास्मदादिभिः शक्यते चिन्तयितुमित्याह नास्येति मूलकारणाद्ज्ञानात् तत्कार्य्याच्च पुरस्तादुपरिष्टाद् व्यवस्थितं परमर्थतो ज्ञानतत्कार्य्यास्पृष्टमित्याह तमस इति ॥ ९ ॥

## भाषा अनुवाद ।

ऐसा मनुष्य बुद्धिके द्वारा प्रकाशरूप परमेश्वरको निरन्तर चिन्तन करिके हे पार्थ इस परमेश्वर को प्राप्त होता है ॥ ८ ॥

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥१०

शाङ्करभाष्यम् ।

किञ्च प्रयाणकाल इति प्रयाणकाले मरणकाले मनसाचलेन प्रचलनवर्जितेन भक्त्या युक्तो भजनं भक्तिः तया युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितं स्वचित्तस्थैर्य्यलक्षणं योगबलं तेन च युक्त इत्यर्थः पूर्वं हृदयपुण्डरीके वशीकृत्त्य तत ऊर्ध्वगामिन्या

आनन्दगिरिकृतटीका ।

इतश्च भगवदनुस्मरणं सफलत्वादनुष्ठेयमित्याह किञ्चेति कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तत्राह प्रयाणकाल इति कथं तदनुस्मरणमित्युपकरणकलापमपेक्ष्यमाणं प्रत्याह मनसेति योऽनुस्मरेत् स किमुपैति तत्राह स तमिति मरणकाले क्लेशबाहुल्येऽपि

स्वामिकृतटीका ।

पुनरप्यनुचिन्तनीयं पुरुषं विशिनष्टि कविमिति द्वाभ्यां कविं सर्वज्ञं सर्वविद्यानिर्मातारं पुराणमनादिसिद्धम् अनुशासितारं नियन्तारम् अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्मं आकाशकालदिग्भ्योऽप्यतिसूक्ष्मतरं सर्वस्य धातारं पोषकम् अपरिमितमहिमत्वादचिन्त्यरूपं मलीमसयोर्मनोबुद्ध्योरगोचरम् आदित्यवत् स्वरूपप्रकाशात्मको वर्णः स्वरूपं यस्य तं तमसः प्रकृतेः परस्तादहमेतं वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति श्रुतेः ॥ ९ ॥

भाषा अनुवाद ।

फेरिभी चिन्तनीय पुरुषका स्वरूप दो श्लोकसे कहते हैं कि कवि कहे सर्वज्ञ सकल विद्योंके निर्माणकाकर्त्ता पुराण कहे अनादिसिद्ध अनुशासिता कहे समस्त जगतके नियन्ता औ अणोरणीयांस कहे सूक्ष्मसे भी सूक्ष्म आकाश काल दिशोंसे भी सूक्ष्म औ सबके धाता कहे पोषण कर्त्ता अपरिमित महिमासे अचिन्त्यरूप अर्थात् मलयुक्त मन औ बुद्धिके अगोचर कहे अदृश्य औ आदित्यवर्ण तथा तम जो प्रकृतिमाया तिससे पर ऐसे मेरे रूप को जो स्मरण करै हैं॥ ९

## शाङ्करभाष्यम्।

नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः बुद्धिमान् योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषमुपैति प्रपद्यते दिव्यं द्योतनात्मकम्॥ १०॥

### आनन्दगिरिकृतटीका।

प्राचीनाभ्यासप्रसादासादित बुद्धिवैभवो भगवन्तमनुस्मरन् यथाश्रुतमेव देहाभिमानविगमा-नन्तरमुपागच्छतीत्यर्थः भगवदनुस्मरणस्य साधनं मनसैवानुद्रष्टव्यमिति श्रुत्युपदिष्टमाचष्टे मनसेति तस्य चञ्चलत्वात् स्थैर्यमीश्वरे सिध्यति तत् कथं तेन तदनुस्मरणमित्याशङ्क्याह अचलेनेति ईश्वरानुस्मरणे प्रयत्नेन प्रवर्त्तितं विषयविमुखं तस्मिन्नेवानुस्मरणयोग्यं पौनः पुन्येन प्रवृत्त्या निश्चलीकृतं तच्चलनविकलं तेनेति व्याचष्टे अचलनेति सम्यत्नुस्मरणाधि-कारिणं विशिनष्टि भक्त्येति परमेश्वरे परेण प्रेम्णा सहितो विषयान्तरविमुखः सत्त्वव्य इत्यर्थः योगबलमेव स्फोरयति समाधिजेति योगः समाधिः चित्तस्य विषयान्तरवृत्ति-निरोधेन परस्मिन्नेव स्थापनं तस्य बलं संस्कारप्रचयो ध्येयैकाग्र्यकरणं तेन तत्रैव स्थैर्य-मित्यर्थः चकारसूचितमन्वयमन्वाचष्टे तेनचेति यत्, कया नाड्योत्क्रामन् यातीति तत्राह पूर्वमिति चित्तं हि स्वभावतो विषयेषु व्याप्टतं तेभ्यो विमुखीकृत्य हृदये पुण्डरीकाकारे परमात्मस्थाने यत्नतः स्थापनीयम् अथ यदिदमस्मिन् ब्रह्मपुरे इत्यादिश्रुतेस्तत्र चित्तं वशी-कृत्य स्थादावनन्तरं कर्त्तव्यमुपदिशति तत इति इडापिङ्गले दक्षिणोत्तरे नाड्यौ हृदयाद्विः सृते निरुध्य तस्मादेव हृदयाद्यादूर्ध्वगमनशीलया सुषुम्णया नाड्या हार्दं प्राणमानीय कण्ठावलम्बितं स्तनसदृशं मांसखण्डं प्राप्य तेनाध्वना भ्रुवोर्मध्ये तमावेश्य अप्रमाद-वान् ब्रह्मरन्ध्राद्विनिःक्रम्य कविं पुराणमित्यादि विशेषणं परमपुरुषमुपगच्छतीत्यर्थः भूमि-जयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य स्वाधीनचेष्टावैशिष्ट्यं तद्द्वारेणेत्येतदुच्यते ततमित्यादि व्याचष्टे स एवमिति॥ १०॥

### स्वामीकृतटीका।

स प्रपञ्च प्रकृतिं भित्त्वा यस्तिष्ठति एवंभूतं पुरुषम् अन्तकाले भक्तियुक्तो निश्चलेन विक्षेपरहितेन मनसा योऽनुस्मरेत् मनोनैश्चल्ये हेतुः योगबलेन सम्यक् सुषुम्णा मार्गेण भ्रुवोर्मध्ये प्राणमावेश्य इति स तं परं पुरुषं परात्मस्वरूपं दिव्यं द्योतनात्मकं प्राप्नोति॥१०॥

## भाषा अनुवाद।

प्रपञ्चसहित प्रकृति को भिन्नकरिके जो स्थित होरहा है ऐसे पुरुषको भक्तियुक्त जो पुरुष विक्षेपरहित निश्चलमनसे आसन्नकालमे कहे अन्तमे

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥**

शाङ्करभाष्यम्।

योगमार्गानुगमनेनैव ब्रह्मविद्या मन्तरेणापि ब्रह्माप्यत इत्येवं प्राप्त इद-मुच्यते पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद इत्यादि-विशेषणविशेष्यस्याभिधानं करोति भगवान् यदक्षरमिति यदक्षरं नक्षरतीति अक्षरं अविनाशि वेदविदो वेदार्थज्ञा वदन्ति तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति श्रुतेः सर्वविशेषनिवर्त्तकत्वेनाभिवदन्त्यस्थूलमनण्वित्यादि विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः संन्यासिनो वीतरागा विगतो रागो येभ्यस्ते वीतरागाः यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः ब्रह्मचर्यं गुरौ चरन्तीति तत्ते पदं यदक्षराख्यं ब्रह्मख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपः तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि स योह तद्भगावन् मनुष्येषु प्राणायामोङ्कारमभिध्यायीत कतमं वा वसते न लोकं जयतीति तस्मै सहोवाच एतद्वै सत्यकामपरञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपक्रम्य यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदित्यादिना वचनेन अन्यत्र धर्मादन्यत्राधर्मादिति चोपक्रम्य सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदीच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतदित्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत् प्रतीकरूपेण च परब्रह्मप्रतिपत्तित्वेन मन्दमध्यम-बुद्धिनां विवक्षित स्योङ्कारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि

भाषा अनुवाद।

धारावाहिक चित्तवृत्तिसे स्मरण करै है उसके स्मरणविषयक मनकी स्थिरताका कारण यही है कि सम्पूर्ण योगबलसे सुषुम्ना नाम नाड़ीकी मार्गक्रमसे उसकी प्राणवायु भ्रूमध्यमे प्रविष्ट होती है ऐसा पुरुष परमात्मारूप प्रकाशात्मक पुरुषको प्राप्त होता है ॥ १० ॥

## शाङ्करभाष्यम् ।

अधिकृतं कविं पुराणमनुशासितारं यदक्षरं वेदविदो वदन्तीति चोपन्यस्तस्य च परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योङ्कारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं ॥ ११ ॥

### आनन्दगिरिकृतटीका ।

येन केन चिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते सत्यभिधानत्वेन नियन्तु कर्त्तव्यत्वेन प्रकृतपरमपुरुषस्य त्रैविद्यवृद्धप्रसिद्ध्या प्रामाणिकत्वमाह पुनरपीति उपायो वक्ष्यमाण ओङ्कारः अविषये प्रतीचि ब्रह्मणि वेदार्थविदामपि कथं वचनमित्याशंक्याविषयत्वमित्येतावतैवेति मत्वा श्रुतिमुदाहरति तद्धीति तथापि तस्मिन्नविषये सर्व्वविशेषशून्ये वचनमनुचितमित्याशंक्याह सर्वेति न केवलं विद्वदनुभवसिद्धं यथोक्तं ब्रह्म किन्तु मुक्तोपसृप्यतया मुक्तानामपि प्रसिद्धमित्याह किञ्चेति केषां पुनः सन्न्यासित्वं तदाह वीतरागा इति ज्ञानार्थं ब्रह्मचर्य्यविधानादपि ब्रह्म ज्ञेयत्वेन प्रसिद्धमित्याह यच्चेति कथं तर्हि यथोक्तं ब्रह्म मम ज्ञातुं शक्यमित्याकुलितचेतसमर्जुनं प्रत्याह तत्ते पदमिति वक्ष्यमाणेनोपायेनेत्युक्तं व्यक्तीकुर्वन्नोङ्कारद्वारा ब्रह्मोपासनं श्रुत्युक्तमनुक्रामति स योहेति सत्यकामेनाभिध्यानफलं जिज्ञासुना भगवन्निति पिप्पलादः सम्बोध्याभिमुखीक्रियते निपातो तु प्रसिद्धमर्थमवद्योतयन्तावभिध्यानस्य फलत्वेन कर्त्तव्यत्वमावेदयतः मनुष्येषु मध्ये स योऽधिकृतो मनुष्यस्तत्प्रसिद्धमभिध्यानं यथा सिध्यति तथा सर्ववेदसार भूतमोङ्कारमाभिमुख्येन ध्यायीत तदभिध्यानमाप्रायणादिति न्यायेन मरणान्तमनुष्ठेयं स चैवमनुतिष्ठन् प्रकृतेनाभिध्यानेन लोकानां जेतव्यानां बहुत्वात् कतमं लोकं जयतीति प्रश्ने पृष्टवते सत्यकाय पिप्पलादनामा किलाचार्यः प्रतिवचनं प्रोवाच तत्र प्रथमं अभिध्येयमोङ्कारं परापरब्रह्मत्वेन सङ्गीकरोति एतद्वा इति त्रिमात्रेणाकारमकारात्मकेनेति यावत् योऽभिध्यायीत तमेव यथा भिध्यातं पुरुषमभिगच्छतीत्यादि वचनेनोपासनमोङ्कारस्योक्तमित्यर्थः प्रश्नश्रुतिवत् कठवल्ली च तत्रैवार्थे प्रवृत्तेत्याह अन्यत्रेति अव्यवधानेनोपनिषदां व्यवधाने न च कर्म्मश्रुतीनां परस्मिन्नात्मनि पर्य्यवसानं दर्शयति सर्व इति तपसामपि सर्वेषां चित्तशुद्धिद्वारा तत्रैव पर्य्यवसानमित्याह तपांसीति तस्यैव च ज्ञानार्थमष्टाङ्गं ब्रह्मचर्यं तत्र तत्र विहितमित्याह यदिच्छन्त इति तस्य पदनीयस्य ब्रह्मणः संक्षेपेण कथमोंकाराद्वारकमिति कथयति ओमित्येतदिति उदाहृतवचनानां तात्पर्यं दर्शयति परस्येति तस्य वाचकरूपेण वा तस्यैव प्रतीकरूपेण वा विवक्षितस्योङ्कारस्योपासनं यथोक्तैर्वचनैरुक्तमिति सम्बन्धः ननु परस्मिन् ब्रह्मणि तत्त्वमस्यादिवाक्याद्देव प्रतिपत्तिरधिकारिणो भविष्यति किमित्युपासनमोङ्कारस्योपन्यस्यते तत्राह परेति सत्यपि विशिष्टस्याधिकारिणो विनैवोपासनमुपनिषद्भ्यो ब्रह्मणि प्रतिपत्तिरुत्पद्यते तथापि

## सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
## मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणां ॥ १२ ॥

### शाङ्करभाष्यम् ।

प्रसक्तानुप्रसक्तञ्च यत् किञ्चिदित्येवमर्थं उत्तरो ग्रन्थ आरभ्यते सर्वेति सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि उपलब्धौ तानि

### आनन्दगिरिकृतटीका ।

मन्दानां मध्यमानाञ्च तद्धि हेतुत्वेनोङ्कारो विवक्षितः तस्योपासनं ब्रह्मदृष्ट्या श्रुतिभिरुपदिष्टमित्यर्थः तस्य क्रममुक्तिफलत्वादुत्कृष्टत्वं सूचयति काद्यान्तरेति भवत्येवं श्रुतीनां प्रवृत्तिस्तावता प्रकृते किमायातमित्याशंक्याह उक्तं यदिति तदेवेहापि वक्तव्यमित्युत्तरेण सम्बन्धः उपासनमेवोपास्योपन्यासद्वारा स्फोरयति कविमित्यादिना पूर्वोक्तरूपेणेत्यभिधानत्वेन प्रतीकत्वेन चेत्यर्थः ओतस्योपासनस्यानूद्यमानस्य सोपस्करत्वं सङ्गिरते योगेति ॥ ११ ॥

### स्वामिकृतटीका ।

केवलाभ्यासयोगादपि प्रणवाभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते यदक्षरमिति यदक्षरं वेदार्थज्ञा वदन्ति एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रुतेः वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति यच्च ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्यं चरन्ति तत्ते तुभ्यं पदं पद्यते गम्यत इति पदं प्राप्यं संग्रहेण संक्षेपेण प्रवक्ष्ये तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

### भाषा अनुवाद ।

तिस प्रकाश पुरुषकी प्राप्तिका हेतु जो अभ्यास योग तिसकी अपेक्षा प्रणव अभ्यासका अंतरङ्ग कहे श्रेष्ठ साधन कहनेकी इच्छा रखते हुये भगवान् उसके कहनेकी प्रतिज्ञा करते हैं कि हे गार्गि यही अक्षर स्वरूप परब्रह्म की शिक्षा क्रमसे सूर्य औ चन्द्रमे नियुक्त होय स्थिति करतो है अर्थात् अक्षर स्वरूप ब्रह्मकी शिक्षा चन्द्र औ सूर्य करते हैं यह स्रुतिके कहने से वेदवित् लोग जिसको अक्षर कहते हैं और जिसके राग आदि गत होगये हैं ऐसा यती कहे यत्नकारी पुरुष जिसमे प्रवेश करते और जिसके जाननेके अर्थ गुरुकुलमे वास करि ब्रह्मचर्य करते हैं सोई ब्रह्मपद तुमको अब मै संक्षेपसे कहता हूं ॥ ११ ॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम्॥ १३॥**

शाङ्करभाष्यम्।

सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निःप्रचारतामापाद्य तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्या ऊर्ध्वमारुह्य मूर्द्धमारुह्य मूर्द्ध्न्याधायात्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम्॥ १२॥

आनन्दगिरिकृतटीका।

तर्हि कथमनन्यचेताः सततमित्यादि वक्ष्यते तत्राह प्रसक्तेति ओङ्कारोपासनं प्रसक्तं तदनन्तरं तत्फलमनुप्रसक्तं तद्द्वारा चापुनरावृत्त्यादि वक्तव्यकोटिनिविष्टमित्यर्थः उक्तेऽर्थे समनन्तरग्रन्थमुत्थापयति इत्येवमर्थं इति श्रोत्रादीनां कुत्र द्वारत्वं तत्राह उपलब्धाविति। तेषां संयमनं विषयेषु प्रवृत्तानां दोषदर्शनद्वारा तेभ्यो वैमुख्यापादनं कोऽयं मनसो हृदये निरोधस्तत्राह निःप्रचारमिति मनसो विषयाकारवृत्तिं निरुध्य हृदि वशीकृतस्य कार्यं दर्शयति तत्रेति ऊर्ध्वमित्यत्रापि हृदयादिति सम्बध्यते सर्वाण्येव उपलब्धिद्वाराणि श्रोत्रादीनि संनिरुध्य वायुमपि सर्वेभ्यो निरुध्य हृदयमानीय ततो निर्गतया सुषुम्नया कण्ठकूपमध्यललाटक्रमेण प्राणं मूर्द्ध्न्याधाय योगधारणामारूढो ब्रह्म व्याहरन् मां च तदर्थमनुस्मरन् परमां गतिं यातीति सम्बन्धः॥ १२॥

स्वामिकृतटीका।

प्रतिज्ञातमुपायं साङ्गमाह सर्वेति द्वाभ्यां सर्वाणीन्द्रियद्वाराणि संयम्य प्रत्याहृत्य चक्षुरादिभिर्बाह्यविषयग्रहणमकुर्वन्नित्यर्थः मनश्च हृदि निरुध्य बाह्यविषयस्मरणमप्यकुर्वन्नित्यर्थः मूर्ध्नि भ्रुवोर्मध्ये प्राणमाधाय योगस्य धारणां स्थैर्यमास्थित आश्रितवान् सन्॥ १२॥

भाषा अनुवाद।

ब्रह्मपदप्राप्ति की अङ्ग समेत उपायको दो श्लोकसे कहते हैं कि इन्द्रियों को प्रत्याहरण पूर्वक अर्थात् चक्षुआदिसे बाह्यरूपादि विषयोंका ग्रहण छोड़ि मनको हृदयमें रोध करके अर्थात् विषयोंका स्मरण त्याग करते हुये भौंहके मध्य भ्रकुटी देशमें वायुको स्थापन करनेके अनन्तर योगका धारणरूप जो धैर्य उसका अवलंबन करके॥ १२॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ १४॥

शाङ्करभाष्यम्।

तत्रैव च धारयन् ओमिति ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूत-मोङ्कारं व्याहरन्नुच्चरं स्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिन्तयन् यः प्रयाति म्रियते स त्यजन् परित्यजन् देहं शरीरं त्यजन देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपनाशेनेत्यर्थः स एवं त्यजन् प्रयाति गच्छति परमां प्रकृष्टां गतिं॥ १३॥

किञ्च अनन्येति अनन्यचेता नान्यविषये चेतोयस्य सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः सततमिति नैरन्त-

आनन्दगिरिकृतटीका।

यथोक्तयोगधारणार्थं प्रवृत्तो मूर्द्धनि प्राणमाधाय धारयन् हि किं कुर्यादित्याशंक्या-नन्तरश्लोकमवतारयति तत्रैवेति एकाक्षरं तदक्षरं चेति एकाक्षरमोमित्येवं रूपं तत्कथं ब्रह्मण इति यः प्रयातीति मरणसक्ता त्यजन् देहमिति ब्रुवता पुनरुक्तिराश्रिता स्यादि-त्याशंक्य विशेषणार्थं विवृणोति देहेति एवमोंकारमुच्चारयन्नर्थं चाभिध्यायन् ध्याननिष्ठः सन्मुमानित्यर्थः परमामिति गतिविशेषणं क्रममुक्तिविवक्षया द्रष्टव्यं॥ १३॥

स्वामिकृतटीका।

ओमिति ओमित्येकं यदक्षरं तदेव ब्रह्मवाचकत्वात् ब्रह्मप्रतिमादिवत् ब्रह्मप्रतीकावहा ब्रह्मतद्व्याहरन्नुच्चारयन् तद्वाच्यञ्च मामनुस्मरन्नेव देहं त्यजन् यः प्रकर्षेण याति अर्चिरादि-मार्गेण स परमां श्रेष्ठां सद्गतिं प्राप्नोति॥ १३॥

भाषा अनुवाद।

ओंकाराख्य एक जो अक्षर सो ब्रह्मका वाचक अथवा ब्रह्मप्रतीक कहे प्रतिमाके समान इन दोनो हेतुसे ब्रह्म है ऐसे प्रणव कहे ओंकारके उच्चारणपूर्वक तद्वाच्यरूप अर्थात् उससे जो कहे जाते हमको स्मरण करि ऐसे देहत्याग करते जो मनुष्य अर्चिरादि मार्ग अर्थात् चन्द्रसूर्य मार्गसे गमन करते हैं तेई पुरुष सर्वोत्तम मेरी गतीको पावते हैं॥ १३॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥ १५॥**

## शाङ्करभाष्यम्।

र्थमुच्यते नित्यश इति दीर्घकालमुच्यते न षण्मासं संवत्सरं वा किं तर्हि याव-ज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः तस्य योगिनोऽहं सुखेन लभ्यः पार्थ नित्ययुक्तस्य सदा समाहितस्य योगिनः यत एवमतोऽनन्यचेताः सन् मयि सदा समाहितो भवेत्॥ १४॥

तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति मामु-

### आनन्दगिरिकृतटीका।

ननु वायुनिरोधविधुराणां उदीरितया रीत्या स्वेच्छाप्रयुक्तोत्क्रान्त्यसम्भवाद्दुर्लभा परमा गतिरापतेदिति तत्राह किञ्चेति इतश्च भगवदनुस्मरणे प्रयतितव्यमित्यर्थः सततं नित्यश इति विशेषणयोरपुनरुक्तत्वमाह सततमित्यादिना उक्तमेवापौनरुक्त्यं व्यक्तीकरोति नेत्यादिना जितासुरिच्छया देहं त्यजति तदितरस्तु कर्मक्षयेणैवेति विशेषं विवक्षन्नाह यत इति॥ १४॥

### स्वामिकृतटीका।

एवमन्तकाले धारणया मत्प्राप्तिर्नित्याभ्यासवशत एव भवति नान्यस्येति पूर्वोक्तमेवानु-स्मारयति अनन्येति नास्त्यन्यस्मिन् चेतो यस्य तथाभूतः सन् यो मां सततं निरन्तरं नित्यशः प्रतिदिनं स्मरति तस्य नित्ययुक्तस्य समाहितस्याहं सुखेन लभ्योऽस्मि नान्यस्येति॥ १४॥

## भाषा अनुवाद।

ऐसेही अन्तकालमे धारणक्रमसे नित्य अभ्यासकारी पुरुषको मेरी प्राप्ति होती और को नहीं एतावता पूर्ववचनहीं को स्मरण करावते हैं कि हे पार्थ जिस मनुष्यका चित्त भगवत को छोडि औरमे आसक्त नहीं है ऐसा अनन्यचित्त होय जो निरन्तर या प्रतिदिन हमको स्मरण करै है उसी समाहित पुरुषको हम अनायास कहे सहज से मिलते हैं और को नहीं प्राप्त होते हैं यह तुम जानो॥ १४॥

आब्रह्म भुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

शाङ्करभाष्यम् ।

पेत्येति मामुपेत्य मामीश्वरमुपेत्यमद्भावमापद्य पुनरुत्पत्तिं न प्राप्नुवन्ति किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति तद्विशेषणमाह दुःखालयं दुःखनामाध्यात्मिकादीनामालयमाश्रयं आलीयन्ते यस्मिन् दुःखानि तं दुःखालयं जन्म न केवलं दुःखालयमशाश्वत'मनवस्थितस्वरूपञ्च नाप्नुवन्तीदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः १५

ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते के पुनस्त्वत्तोऽन्यत् प्राप्ताः पुनरावर्त्तन्त इत्युच्यते आब्रह्मेति आब्रह्मभुवनाद्भवन्ति यस्मिन् भूतानीति

आनन्दगिरिकृतटीका ।

अनन्यचेतसं समाहितचेतसं प्रतीश्वरस्य सौलभ्यमेवमित्युच्यते किं त्वां प्राप्तास्त्वय्येवावतिष्ठन्ते किंवा पुनरावर्त्तन्ते चन्द्रलोकादिवेति सन्देहात् पृच्छसि तत्रेति तत्रोत्तरश्लोकेन निश्चयं दर्शयति उच्यत इति ईश्वरोपगमनं न सामीप्यमात्रमिति व्याचष्टे मद्भावमिति पुनर्जन्मनोऽनिष्टत्वं प्रश्नद्वारा स्पष्टयति किमित्यादिना महात्मत्वं प्रकृष्टसत्त्ववैशिष्ट्यं यत् यस्मिन्नेवेश्वरे सकलमसम्यग्दर्शनो भूत्वेति शेषः ॥ १५ ॥

स्वामिकृतटीका ।

यद्येवं त्वं सुलभोऽसि ततः किमत आह मामिति उक्तलक्षणमहात्मानो मद्भक्ता मां प्राप्य पुनर्दुःखाश्रयमनित्यञ्च जन्म न प्राप्नुवन्ति यतस्ते परमां सिद्धिं मोक्षमेव प्राप्ताः पुनर्जन्मनो दुःखानाञ्चालयं स्थानं मा सुप्येत्य न प्राप्नुवन्तीति वा ॥ १५ ॥

भाषा अनुवाद ।

जो तुम स्वभक्तको ऐसे अनायास मिलते हो तो फेरि उसका क्या होता है इस प्रश्नापर कहते हैं कि पूर्वोक्त महात्मा लोग मेरी भक्ति से मेरेको प्राप्त होय दुःखका भवन औ अनित्य जो जन्म तिसको फेरि नहीं प्राप्त होते हैं क्योंकि वेपरम सिद्धिको प्राप्त भये अर्थात् जीवन्मुक्त होय जन्म मरण आदि संसार दुःख से कूटि जाते हैं ॥ १५ ॥

## शाङ्करभाष्यम् ।

भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः आब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्व्वे पुनरावर्त्तिनः पुनरावर्तनस्वभावाः हे अर्ज्जुन मामेकमुपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्ति र्न विद्यते ॥ १६ ॥

### आनन्दगिरिकृतटीका ।

भगवन्तमुपगतानामपुनरावृत्तौ ततो विमुखानामनुपजातसम्यग्धियां पुनरावृत्तिरर्थ-सिद्धेत्याह ये पुनरिति अपामसोममम्‌ता अभूमेति श्रुतेः स्वर्गादिगतानामपि समा-नैवानावृत्तिरिति आशङ्कते के पुनरिति अर्थवादश्रुतौ कर्म्मिणामम्‌तत्वस्यापेक्षिकत्वविव-क्षित्वा परिहरति उच्यत इति एतेन भूरादिलोकचतुष्टयं प्रविष्टानां पुनरावृत्तावपि जनादिलोकत्रयं प्राप्तानामपुनरावृत्तिरिति विभागोक्तिरप्रामाणिकत्वादेव हेयेत्यवधेयं तर्हि तद्वदेवेश्वरं प्राप्तानामपि पुनरावृत्तिः शङ्कते नेत्याह मामिति यावत् सम्यातश्रुति-वदीश्वरं प्राप्तानां निवृत्ताऽविद्यानां पुनरावृत्तिरप्रमाणिकीत्यर्थः ॥ १६ ॥

### स्वामिकृतटीका ।

तदेवं सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन् निर्धारयति आब्रह्मभुवनादिति ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य सर्वे लोका पुनरावर्तनशीलाः ब्रह्मलोकस्यापि विनाशि-त्वात् तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यं भावि पुनर्जन्म य एवं क्रममुक्तिफलाभिरुपा-सनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षो नान्येषां तथाच ब्रह्मणा सह ते सर्व सम्प्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं परस्यान्ते ब्रह्मणः परमायुषोऽन्ते कृतात्मानो ब्रह्मभावापादितमनोवृत्तयः कर्म्मद्वारेण येषां न मोक्ष इति परिनिष्ठितिः मामुपेत्य वर्त्तमानानां तु पुनर्जन्म नास्त्येवेति ॥ १६ ॥

## भाषा अनुवाद ।

इस तरह औरऔर लोकमे भी उन भक्तोंको पुनर्जन्म का अभाव देखाय कर अपुनर् आवृत्ति निर्धारण करते हैं कि हे अर्ज्जुन ब्रह्माके लोकपर्य्यन्त प्राप्त होके भी प्राणी पुनर्वार संसारगामी होते हैं क्योंकि ब्रह्मलोकका भी एकदिन नाशहै और क्रममुक्ति जो कहाहै सो किसी विरलेको उपासनाके द्वारा ब्रह्मलोकमे जाय ज्ञान प्राप्त होय ब्रह्माके साथ मुक्ति मिलती है परन्तु हे कौन्तेय मद्रूपको प्राप्त मेरे भक्तका पुनर्जन्म तो नहीं होता हैं ॥ १६ ॥

**सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

**शाङ्करभाष्यम् ।**

**ब्रह्मलोकसहिता लोकाः कस्मात् पुनरावर्त्तिनः कालपरिच्छिन्नत्वात् कथं सहस्रेति सहस्रयुगपर्य्यन्तं सहस्राणि युगानि पर्य्यन्तपर्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्यन्तं ब्रह्मणः प्रजापतेः विराजो विदुः रात्रिमपि युगसहस्रामहःपरिमाणामेव के विदुरित्याह तेऽहोरात्रविदः कालसंख्याविदो जना इत्यर्थः ॥ १७ ॥**

आनन्दगिरिकृतटीका ।

यस्य स्वाभाविकी वंशप्रयुक्ता च शुद्धिस्तस्यैवोक्तोऽर्थे बुद्धिरुदेतीति मत्वा संबुद्धिद्वयं ब्रह्मलोकसहितानां पुनरावृत्तौ हेतुं प्रश्नद्वारा दर्शयति ब्रह्मेति उक्तमेव हेतुमाकाङ्क्षापूर्वकमुत्तरश्लोकेन साधयति कथमित्यादिना यथोक्ताहोरात्रावयव मासर्त्त्वयनसंवत्सरावयवं शतसंख्यायुरवच्छिन्नत्वात् प्रजापतेस्तदन्तर्वर्त्तिनामपि लोकानां यथायोग्यकालपरिच्छिन्नत्वेन पुनरावृत्तिरित्यभिप्रेत्य व्याचष्टे सहस्रेत्यादिना ॥ १७ ॥

स्वामिकृतटीका ।

ननु च तपस्विनो दानशीला वीतरागास्तितिक्षवः त्रैलोक्यस्योपरिस्थानं लभन्ते शोकवर्जितं इत्यादिपुराणवाक्यैस्त्रिलोक्याः सकाशान्महर्लोकादीनामुत्कृष्टत्वं गम्यते विनाशित्वं च सर्वेषामपि शिष्ट्यं कथमसौ विशेषः स्यादित्याशंक्य बहुकल्पकालावस्थायित्वनिमित्तोऽसौ विशेष इत्याशयेन स्वमानेन शतवर्षायुषो ब्रह्मणोऽहन्यहनि त्रिलोक्या उत्पत्तिर्निशि निशि च प्रलयो भवतीति दर्शयिष्यन् ब्रह्मणोऽहोरात्रयोः प्रमाणमाह सहस्रेति सहस्रं युगानि पर्यन्तोऽवसानं यस्य तद् ब्रह्मणो यदहस्तद्ये विदुः युगसहस्रमन्तो यस्यास्तां रात्रिञ्च योगबलेन ये विदुस्त एव सर्वज्ञा जना अहोरात्रविदः येषान्तु केवलं चन्द्रादित्यगत्यैव ज्ञानं ते तथाहोरात्रविदो न भवन्ति अल्पदर्शित्वात् युगशब्देनात्र चतुर्युगमभिप्रेतं चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यत इति विष्णुपुराणोक्तेः ब्रह्मण इति च महर्लोकादिवासिनामुपलक्षणार्थं तत्रायं कालगणनाप्रकारः मनुष्याणां यद्वर्षं तद्देवानामहोरात्रं तादृशैरहोरात्रैः पक्षमासादिकल्पनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति चतुर्युगसहस्रन्तु ब्रह्मणो दिनं तावत्प्रमाणैव रात्रिस्तादृशैश्चाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति ॥ १७ ॥

अव्यक्ताद् व्यक्तय: सर्वा: प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

शाङ्करभाष्यम्।

यत एवं कालपरिच्छिन्नास्तेऽत: पुनरावर्त्तिनो लोका: प्रजापतेरह्नि यद्भवति रात्रौ च तदुच्यते अव्यक्तेति अव्यक्ताद्व्यक्तं प्रजापते: स्वापावस्था तस्माद्व्यक्तात् व्यक्तयो व्यज्यन्त इति व्यक्तय: स्थावरजङ्गमलक्षणा: सर्वा प्रजा: प्रभवन्त्यभिव्यज्यन्ते अह्न आगमोऽहरागमस्तस्मिन्नहरागमे काले ब्रह्मण: प्रबोधकाले तथा रात्र्यागमे ब्रह्मण: स्वापकाले प्रलीयन्ते सर्वाव्यक्तयस्तत्रैव पूर्व्वोक्तेऽव्यक्तसंज्ञके ॥ १८ ॥

आनन्दगिरिकृतटीका।

अक्षरार्थमुक्त्वा तात्पर्य्यार्थमाह यत इति यत् प्रजापतेरहस्तद् युगसहस्रपरिमितं या च तस्य रात्रि: सापि तथेति कालविदामभिप्रायमनुस्मृत्य ब्राह्मस्याहोरात्रस्य कालपरिमाणं दर्शयित्वा तत्रैव विमृश्य कार्य्यं कथयति प्रजापतेरिति अव्यक्तमव्याकृतमिति शङ्कां वारयति अव्यक्तमित्यादिना जातिप्रतियोगिभूता व्यक्तीर्व्यावर्त्तयति स्थावरेति

भाषा अनुवाद।

और जो कहो कि तपस्वी ज्ञानी विगतराग औ क्षमाशील लोग त्रैलोक के ऊपर होकर हित स्थानको प्रस्थान करि वास करते हैं इस पुराणके वचनसे महर्लोक आदि लोकोंकी और लोकसे उत्तमता मालूम होती है परन्तु विनाश तो सबका है इस पक्षमे सबकी अपकृष्टता ही है हां विशेष यही कि वे लोक बहुत दिन तक स्थिर रहते हैं और ब्रह्माकी अपने बरषों से सौवर्षकी आयुर्दा है औ त्रैलोक अर्थात् स्वर्ग मर्त्य औ पाताल ये ब्रह्माके प्रतिदिन मे उत्पन्न औ प्रतिरात्रि मे प्रलय होते हैं ब्रह्माका एक दिन मनुष्यके हजार चतुर्युग का होता और उतनीही रात्रि है और मनुष्यका एक वर्ष देवतोंकी राति औ दिन है इस हिसाबसे देवतोंके बारह हजार वर्षसे चारि युग होतेहैं जो यह जानते सोई सर्वज्ञ हैं और जो चन्द्रसूर्य्यकी गति को राति दिन जानते वे नहीं जानते हैं ॥ १७ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
राज्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

## शाङ्करभाष्यम्।

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं बन्धमोक्षशास्त्रप्रवृत्तिसाफल्य-प्रदर्शनार्थं अविद्यादिक्लेशमूलकर्म्माशयवशाच्चावशीभूतग्रामो भूत्वा प्रलीयत इत्यर्थः संसारे वैराग्यप्रदर्शनार्थञ्चेदमाह भूतग्राम इति भूतग्रामो भूतस-मुदायः स्थावरजङ्गमलक्षणो यः पूर्व्वस्मिन् कल्पे आसीत् स एवायं नान्यो भूत्वा पुनः अहरागमे प्रलीयते पुनः पुनः रात्र्यागमेऽह्नः क्षयेऽवशोऽ-स्वतन्त्र एव पार्थ प्रभवति जायते स एव अहरागमे ॥ १८ ॥

### आनन्दगिरिकृतटीका।

असदुत्पत्तिप्रसक्तिं प्रत्यादिशति अभिव्यज्यन्त इति पूर्वोक्तमव्यक्तसंज्ञकं स्वापावस्थं ब्रह्म प्रजापतिशब्दितं तस्मिन्निति यावत् ॥ १८ ॥

### स्वामिकृतटीका।

ततः किमत आह अव्यक्तादित्यादिकार्यस्याव्ययरूपं कारणात्मकं तस्मादव्यक्तात् कारण रूपात् व्यज्यन्त इति व्यक्तय चराचराणि भूतानि प्रादुर्भवन्ति कदा अहरागमे ब्रह्मणो दिवसस्योपक्रमे तथा रात्र्यागमे ब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञके कारणरूपे प्रलयं यान्ति यद्वा तेऽहोरात्रविद् इत्येतन्न विधीयते किन्तु ते प्रसिद्धा अहोरात्रविदो जना ब्रह्मणो यद्-विदुस्तस्याह्न आगमेऽव्यक्ताद्व्यक्तयः प्रभवन्ति याञ्च रात्रिं विदुस्तस्या रात्र्यागमे प्रलीयन्त इति द्वयोरन्वयः ॥ १८ ॥

## भाषा अनुवाद।

जिस से कालगति के पराधीन सब लोक हैं इससे पुनरावृत्ति होती है सोइ कहते हैं कि कार्यरूप जगतके अव्यक्त कहे सूक्ष्मरूप कारणस्व-रूपही को प्रकृति कहते हैं उसी कारणरूप प्रकृति से ब्रह्माके दिन मे चराचर सकल उत्पन्न होते और रात्रि के आनेसे फेरि उसी प्रकृति मे लीन होते अर्थात् लय पाते हैं ॥ १८ ॥

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात् सनातनः।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

आनन्दगिरिकृतटीका।

ननु प्रबोधकाले ब्रह्मणो यो भूतग्रामो भूत्वा तस्यैव स्वापकाले विलीयते तस्मादन्यो भूयोभूयो ब्रह्मणोऽहरागमे भूत्वा पुनररात्र्यागमे परवशो विनश्यति तदेवं प्रत्यवान्तरकल्पं भूतग्रामविभागो भवेदित्याशङ्क्यानन्तरश्लोकतात्पर्यमाह अकृतेति प्रतिकल्पं प्राणिनिकायस्य भिन्नत्वे सति अकृताभ्यागमादिदोषप्रसङ्गात् तत्परिहारार्थं भूतग्रामस्य प्रतिकल्पमैक्यमास्थेयमित्यर्थः यदि स्थावरजङ्गमलक्षणप्राणिनिकायस्य प्रतिकल्पमन्यथात्वं तदेकस्य बन्धमोक्षान्वयिनो भावात् काण्डद्वयात्मनो बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिरफला प्रसज्येत् अतस्तत्साफल्यार्थमपि प्रतिकल्पं प्राणिवर्गस्य नवीनत्वानुपपत्तिरित्याह बन्धेति कथं पुनर्भूतसमुदायोऽस्वतन्त्रः सन्नवशीभूत्वा प्रविलीयते तत्राह अविद्यादीति आदिशब्देनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते यथोक्तं क्लेशपञ्चकं मूलप्रतिलभ्यकल्पं प्रतिलभ्यधर्माधर्मात्मकं कर्मराशिरुद्भवति तद्वशादेवास्वतन्त्रोभूतसमुदायो जन्मविनाशावनुभवतीत्यर्थः प्राणिनिकायस्य जन्मनाशाभ्यासोक्तेरर्थसिद्धमर्थमाह इत्यत इति संसारे विपरिवर्त्तमानानां प्राणिनामस्वातन्त्र्यात्स्ववशानामेव जन्ममरणप्रवन्धसम्बाधत् अलमनेन संसारेणेति वैराग्यं तस्मिन् प्रदर्शनीयं तदर्थश्चेदम्भूतानामहोरात्रमावृत्तिवचनमित्यर्थः समनन्तरवाक्यमिदमापराम्रश्यते रात्र्यागमे लयमनुभवतोऽहरागमे च प्रभवं प्रतिपद्यमानस्य प्राणिवर्गस्य तुल्यं पारवश्यमित्याशयवानाह अह्न इति ॥ १९ ॥

स्वामीकृतटीका।

तत्र च कृतनाशाकृताभ्यागमशङ्कां वारयन् वैराग्यार्थं सृष्टिप्रलयप्रवाहस्य विच्छेदं दर्शयति भूतग्राम इति भूतानां चराचरप्राणिनां ग्रामः समूहो यः प्रागासीत् स एवायमहरागमे भूत्वा भूत्वा रात्र्यागमे प्रलीयते प्रलीय पुनरप्यहरागमेऽवशः कर्मादिपरतन्त्रः सन् प्रभवति नान्य इत्यर्थः ॥ १९ ॥

भाषा अनुवाद।

अब विषयोंसे वैराग्य होनेके अर्थ सृष्टि औ लयका प्रवाह देखावते हैं कि हे पार्थ जो चराचर प्राणीमात्र पूर्व मे थे तेई अवश कर्मके आधीन वारम्वार होते औ जाते हैं जब ब्रह्माका दिन भया तब प्रगटे जब राति आई तो फिरि प्रकृति मे लीन होगये ऐसे ही हेरा फेर लगाह रहता है ॥ १९ ॥

शाङ्करभाष्यम् ।

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्ट ओमित्येकाक्षरं ब्रह्मेत्यादि- अथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षयेदमुच्यते पर इति अनेन योगमार्गेणेदं गन्तव्यमिति परस्तस्मादिति परो व्यतिरिक्तो भिन्नः कुतस्तस्मात् पूर्व्वोक्ताद- व्यक्तात् तुशब्दोऽव्यक्ताक्षरस्य विवक्षितस्य व्यक्ताद्वैलक्षण्यविशेषणार्थः भावोऽ- क्षराख्यं परं ब्रह्म व्यतिरिक्तत्वे सत्यपि सालक्षण्य प्रसङ्गोऽस्तीति तद्विनिवृ- त्त्यर्थमाह अन्य इति अन्यो विलक्षणः सचाव्यक्तोऽनिन्द्रियगोचरः परस्तस्मा- दित्युक्तः कस्मात् पुनः परः पूर्व्वोक्ताद्भूतग्रामवीजभूतादविद्यालक्षणादव्यक्ता- दन्यो विलक्षणो भाव इत्यभिप्रायः सनातनश्चिरन्तनो यः स भावः सर्व्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥ २० ॥

आनन्दगिरिकृतटीका ।

अक्षरं ब्रह्म परममित्युपक्रम्य तदनुपयुक्तं किमिदमन्यदुक्तमित्याशंक्य वृत्तमनूद्यानन्तर- ग्रन्थसङ्गतिमाह यदुपन्यस्तमिति अक्षरस्वरूपे निर्दिदिक्षिते तस्मिन् पूर्व्वोक्तयोगमार्गस्य कथमुपयोगः स्यादित्याशंक्य तत्प्राप्त्युपायत्वेनेत्याह अनेनेति गन्तव्यमिति योगमार्गोक्ति- रूपयुक्तेति शेषः पूर्वोक्तादव्यक्तादिति सम्बन्धः परशब्दस्य व्यतिरिक्तविषयत्वे तुशब्देन वैलक्षण्यसुक्ता पुनरन्यशब्दप्रयोगात् पौनरुक्त्यमित्याशंक्याह व्यतिरिक्तत्व इति तुना द्योतितं वैलक्षण्यमन्यशब्देन प्रकटितं यतो भिन्नेष्वपि भावभेदेषु सालक्षण्यमालक्ष्यते ततश्चाव्यक्ता- द्भिन्नत्वेऽपि ब्रह्मणस्तेन सादृश्यमाशङ्कते तन्निवृत्त्यर्थमन्यपदमित्यर्थः यद्वा परशब्दस्य प्रकृष्ट- वाचिनो भावविशेषणार्थत्वे पुनरुक्तिशङ्कैव नास्तीति द्रष्टव्यः अनादिभावस्याक्षरस्याविना- शित्वमर्थसिद्धं समर्थयते यः स भाव इति सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति स तु विनाशहेत्वभावान्न विनष्टुमर्हतीत्यर्थः ॥ २० ॥

स्वामिकृतटीका ।

लोकानां अनित्यत्वं प्रपंच्य परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति पर इति द्वाभ्यां तस्मा- च्चराचरकारणभूतादव्यक्तात् परस्तस्यापि कारणभूतोयोन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरो भावः सनातनोऽनादिः स तु सर्वेषु कार्यकारणलक्षणेषु भूतेषु नश्यत्स्वपि न विनश्यति ॥ २० ॥

**भाषा अनुवाद ।**

**सकल लोक की अनित्यता दिखाय कर अब दो श्लोक से परमेश्वर का नित्यत्व विस्तार करि के कहते हैं कि सोई चराचर की कारण रूप**

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं ।
यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥ २१ ॥

शाङ्करभाष्यम् ।

अव्यक्त इति योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावं आहुः परमां प्रकृष्टां गतिं यं भावं प्राप्य गत्वा न निवर्त्तन्ते संसाराय तद्धामस्थानं परमं प्रकृष्टं मम विष्णोः परमं पदमित्यर्थः ॥ २१ ॥

आनन्दगिरीकृतटीका ।

यथोक्तेऽव्यक्ते भावे श्रुतिसम्मतिमाह अव्यक्त इति तस्य परमगतित्वं साधयति यः प्राप्येति योऽसावव्यक्तो भावोऽत्र दर्शितः स येनाक्षरं पुरुषं वेद सत्यमित्यादिश्रुतावक्षर इत्यक्षरं भावं परमां गतिं पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्याद्याः श्रुतयो वदन्तीत्याह योऽसाविति परमपुरुषस्य परमगतित्वमुक्तं व्यनक्ति यं भावमिति तद्विष्णोः परमं पदमिति श्रुतिमत्र संवादयति तद्धामेति ॥ २१ ॥

स्वामिकृतटीका ।

अविनाशे प्रमाणं दर्शयन्नाह अव्यक्त इति यो भावोऽव्यक्तोऽतीन्द्रियः अक्षरः प्रवेश-नाशशून्य इति तथा अक्षरात् सम्भवतीह विश्वमित्यादि श्रुतिष्वक्षर इत्युक्तः परमां गतिं गम्यं पुरुषार्थमाहुः पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्यादिश्रुतयः परमगतित्वमेवाह यं प्राप्य न पुनर्निवर्त्तन्त इति तच्च ममैव धाम स्वरूपं ममेत्युपचारे षष्ठी राहोः शिर इतिवत् अतोऽहमेव परमागतिरित्यर्थः ॥ २१ ॥

भाषा अनुवाद ।

प्रकृति से पर अर्थात् उस का भी कारण स्वरूप औ उस से भिन्न चक्षु आदि इन्द्रियों का अगोचर भाव जो अनादि पुरुष सो यावत् कार्य कारणरूप भूत मात्रका नाश होने से भी नष्ट नहीं होता है ॥ २० ॥

अब परमेश्वर के अविनाशित्वमें प्रमाण दर्शायकर कहते हैं कि जो भावरूप इन्द्रिय के अगोचर प्रवेश नाशशून्य अक्षरस्वरुप परमेश्वर जिससे इस विश्वका उद्भव है औ श्रुति जिसको अक्षर कहती हैं कि पुरुषान्न किञ्चित्परं सा काष्ठा परा गति सो सबके पर और जिससे पर कोई नहीं

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

शाङ्करभाष्यम् ।

तल्लब्धेरुपाय उच्यते पुरुष इति पुरुषः पुरि शयनात् पूर्णत्वाद्वा सपरः पार्थ परो निरतिशयो यस्मात् पुरुषान्न परं किञ्चित् स भक्त्या लभ्यस्तु ज्ञान लक्षणयाऽनन्यया आत्मविषयया यस्य पुरुषस्यान्तः स्थानि मध्यस्थानि कार्य्य-भूतानि कार्य्यं हि कारणस्यान्तर्वर्त्ति भवति येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तं आकाशेनेव घटादि ॥ २२ ॥

आनन्दगिरिकृतटीका ।

ननु व्यक्तादतिरिक्तस्य तद्विलक्षणस्य परमपुरुषस्य प्राप्तौ कश्चिदसाधारणो हेतुरेषि-तव्यो यस्मिन् प्रेक्षापूर्वकारी यत्नप्रेक्षया प्रवृत्तो निर्वृणोति तत्राह तल्लब्धेरिति परस्य पुरुषस्य सर्वकारणत्वं सर्वव्यापकत्वञ्च विशेषणद्वयमुदाहरति यस्येति निरतिशयत्वं विश-दयति यस्मादिति तुशब्दोऽवधारणार्थः भक्तिर्भजनं सेवा प्रदक्षिण प्रणामादि लक्षणान्तां व्यावर्त्तयति ज्ञानेति उक्तायां भक्तौ विषयतो वैशिष्ट्यमाह अनन्ययेति कोऽसौ पुरुषो यद्वि-षया भक्तिस्तत्प्राप्तौ पर्य्याप्तेत्याशङ्क्योत्तरार्द्धं व्याचष्टे यस्येति कथं भूतानां तदवस्थत्वं तत्राह कार्य्यं हीति स पर्यगादिति श्रुतिमाश्रित्याह येनेति ॥ २२ ॥

स्वामिकृतटीका ।

तत्प्राप्तौ च भक्तिरन्तरङ्गोपाय इत्युक्तमेवेत्याह पुरुष इति स चाह परः पुरुषोऽनन्यया न विद्यतेऽन्यः शरणत्वेन यस्यास्तया एकान्तरभक्त्यैव लभ्यो नान्यथा परत्वमेवाह यस्य कारणभूतस्यान्तरमध्ये भूतानि येन च कारणभूतेनेदं सर्वं जगत्ततं व्याप्तम् ॥ २२ ॥

भाषा अनुवाद ।

इस प्रकार श्रुति जिसको उत्कृष्ट गति कहती हैं और जिस को पायकर फेरि संसार गति नहीं होती वही मेरा स्वरूप है इससे मेहीं परगति हौं यह जानो ॥ २१ ॥

इस परमेश्वर को प्राप्तिमे भक्तिही सबसे बढ़िके परम उपाय है इस को कहते हैं कि सोई परम पुरुष मै अनन्यभक्ति मे अर्थात् जिसमे हमे छोड़ि

यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

शाङ्करभाष्यम्।

प्रकृतानां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां तत् ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इति यत्र काल इत्यादिविवक्षितार्थसमर्पणार्थमुच्यते आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः तत्रेति यत्र काले प्रयाता इति व्यवहितेन सम्बन्धः यत्र यस्मिन् काले त्वनावृत्तिमपुनर्जन्म आवृत्तिं तद्विपरीताञ्चैव योगिन इति कर्मिणश्चोच्यन्ते कर्मिणस्तु गुणतः कर्मयोगेन योगिनामिति विशेषणात् तत्र विभज्यन्ते योगिनः यत्र काले प्रयाता मृता योगिनोऽनावृत्तिं यान्ति यत्र काले च प्रयाता मृता आवृत्तिं यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

आनन्दगिरिकृतटीका।

ननु ज्ञानायत्ता परमपुरुषप्राप्तिरुक्ता नच ज्ञानं मार्गमपेक्ष्य फलाय कल्पते विदुषो ह्युत्क्रान्तिनिषेधश्रुतेः तथाच मार्गोक्तिरयुक्तेत्याशङ्क्य सगुणशरणानां तदुपदेशोऽर्थवानित्यभिप्रेत्याह प्रकृतानामिति वक्तव्य इति यत्र काल इत्याद्युच्यते इति सम्बन्धः स वेद्वक्तव्यस्तर्हि किमित्यध्यात्मादिभावेन सविशेषं ब्रह्मध्यायतां फलाप्तये मूर्द्धन्यनाडीसम्बन्धे देवयाने पथ्युपास्यत्वाय वक्तव्यं कालो निर्दिश्यते तत्राह विवक्षितेति सोऽर्थो मार्गस्तदुक्तिशेषत्वेन कालोक्तिरित्यर्थः पितृयानमार्गोपन्यासस्तर्हि किमिति क्रियते तत्राह आवृत्तिमिति मार्गान्तरस्यावृत्तिफलत्वादस्य चानावृत्तिफलत्वात् तदपेक्षया मद्दीयानमिति स्तुतिर्विवक्षितेति भावः योगिन इति ध्यायिनां कर्मिणाञ्च तन्त्रेणाभिधानमित्याह योगिन इति कथं कर्मिषु योगिशब्दो वर्त्ततामित्याशङ्क्यानुष्ठानगुणयोगादित्याह कर्मिणस्त्विति गुणतो योगिन इति सम्बन्धः तत्रैव वाक्योपक्रमस्यानुकूल्यमाह कर्मयोगेनेति

भाषा अनुवाद।

और कोईभी चिन्तनीय नहीं है ऐसी एकान्त भक्तिसे मै मिलता हूं और अब प्राप्तव्य पुरुषको श्रेष्ठता कहते हैं कि जिस पुरुषमे ये भूत सकल स्थित हैं और जो कारणरूप से समस्त जगतमे व्यापरहा है सोई मै हूं ॥ २२ ॥

अग्नि ज्योतिरहः शुक्ल षण्मासा उत्तरायणं ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना: ॥ २३ ॥

शाङ्करभाष्यम् ।

तं कालमाह अग्निर्ज्योतिरिति अग्निः कालाभिमानिनी देवता तथा ज्योतिर्देवतैव कालाभिमानिनी अथवा अग्निज्योतिषी यथाश्रुते एव देवते

आनन्दगिरिकृतटीका ।

अवशिष्टान्यक्षराणि व्याचक्षाणो वाक्यार्थमाह यत्रेति योगिनोऽत्र विवक्षिताः ये आवृत्तावधिकृता योगिनः कर्मिण इति विभागः कालप्राधान्येन मार्गद्वयोपन्यासमुपक्रम्य तमेव प्रधानीकृत्य देवयानं पन्थानमवतारयति तं कालमिति ॥ २३ ॥

स्वामिकृतटीका ।

तदेवं परमेश्वरोपासकास्तत्पदं प्राप्य न निवर्त्तन्ते अन्ये त्वावर्त्तन्त इत्युक्तं तत्र केन मार्गेण गता नावर्त्तन्ते केन वा वर्त्तन्त इत्यपेक्षायामाह यत्रेति यत्र यस्मिन् काले प्रयाता योगिनोऽनावृत्तिं यान्ति यस्मिंश्च काले प्रयाता आवृत्तिं यान्ति तं कालं वक्ष्यामीत्यन्वयः अत्र च रश्म्यनुसारी अनश्नायनेऽपि दक्षिण इति सूचितन्यायेनोत्तरायणादिकालविशेषस्यास्य त्वविवक्षितत्वात् कालशब्देन कालाभिमानिनीभिरातिवाहिकीभिर्देवताभिः प्राप्यो मार्ग उपलक्ष्यते अतोऽयमर्थः यस्मिन् कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिन उपासकाः कर्मिणश्च यथोक्तमनावृत्तिमावृत्तिञ्च यान्ति तं कालाभिमानिदेवतोपलक्षितं मार्गं कथयिष्यामीति अग्निज्योतिषोः कालाभिमानित्वाभावेऽपि भूयसामहरादिशब्दोक्तानां कालाभिमानिनां साहचर्यादाम्रवनमित्यादिवत् कालशब्देनोपलक्षणमविरुद्धं ॥ २३ ॥

भाषा अनुवाद ।

इस प्रकारसे भगवत् उपासक परमपद प्राप्त होके फेरि संसारगति मे नहीं आवते हैं यह तीनि श्लोकसे कह के अब कौन मार्गसे गमन करि फेरि आवते औ कौन मार्गगामी फेरि नही आवते यही प्रकाशरूप से कहते हैं कि हे अर्ज्जुन योगी जन जिस काल मे गमन करि आवते और जिससे गमन करि नहीं आवते सो काल तुमसे कहुं गा यद्यपि देहत्यागमे उत्तरायण काल श्रेष्ठ औ दक्षिणायन निकृष्ट है तौभी व्याससूत्रमे कहा है कि भगवत्भक्त दक्षिणायनमे भी उत्तमगतिको जाते हैं यहां योगी कहे कर्मी औ कालसे तदभिमानिनी देवता लेते हैं ॥ २३ ॥

## शाङ्करभाष्यम् ।

भूयसान्तु निर्द्देशो यत्र कालो तं कालमिति आम्रवनवत् तथाऽहर्द्देवताऽहरभिमानिनी शुक्लपक्षदेवता तथा षण्मासा उत्तरायणं तत्रापि देवतैव मार्गभूतेति स्थितोऽन्यत्र न्यायस्तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासकाः ब्रह्मोपासनपरा जनाः क्रमेणेति वाक्यशेषो नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिर्वा क्वचिदस्ति न तस्य प्राणा उत्क्रामन्तीति श्रुतेः ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते ॥ २४ ॥

### आनन्दगिरिकृतटीका ।

यथोपक्रमं व्याख्याय यथाश्रुतं व्याख्याति अथवेति कथं तर्हि देवतानामभिनेत्रीणां ग्रहणे कालप्राधान्येन निर्देशोऽस्मिन्यते तत्राह भूयसांस्त्विति मार्गद्वयेऽपि कालाद्यभिमानिन्यो देवताः कालशब्देनोच्यन्ते कालाभिमानिनीनां भूयस्त्वात् कालशब्देन सर्वासां देवतानामुपलक्षणत्वं विवक्षित्वा कालकथनमित्यर्थः यथाम्राणां भूयस्त्वाद्विद्यमानेष्वपि द्रुमान्तरेषु आम्रैरेव वनं निर्दिश्यते तद्वदित्युदाहरणमाह आम्रेति ननु भोगचिह्नानां भोगभूमीनां वा तत्तच्छब्दैरुपादानसम्भवे किमिति देवताग्रहणमित्याशङ्क्यातिवाहिकास्तल्लिङ्गादिति न्यायेनोत्तरमाह इति स्थित इति तेषां अग्न्यादीनां समीपमिति सामीप्ये तत्रेति सप्तमी ब्रह्मकार्य्यौपाधिकं परं वा ब्रह्मपरम्परया मुक्त्यालम्बनमत एव क्रमेणेत्युक्तनिर्गुणमप्रपञ्चं ब्रह्माप्नोतीति विद्यावतो व्यवच्छिनत्ति ब्रह्मोपासनेति ननु ब्रह्मशब्दस्य मुख्यार्थत्वार्थं परब्रह्मविदामेवेयं गतिरुच्यते नवाद्यर्य्यधिकरणविरोधादित्याह नहीति ॥ २४ ॥

### स्वामिकृतटीका ।

तत्रानावृत्तिमार्गमाह अग्निरिति अग्निर्ज्योतिःशब्दाभ्यां तेऽर्च्चिषमभिसम्भवन्तीति श्रुत्युक्तार्च्चिरभिमानिनी देवतोपलक्ष्यते अहरिति दिवसाभिमानिनी शुक्ल इति शुक्लपक्षाभिमानिनी उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी एतच्चान्यासामपि श्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानामुपलक्षणार्थं एवंभूतो यो मार्गस्तत्र प्रयाता गता भगवदुपासकाजना ब्रह्म प्राप्नुवन्ति यतस्ते ब्रह्मविदः तथाच श्रुतिः तेऽर्च्चिषमभिसम्भवन्ति अर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकमिति ॥ २४ ॥

## धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
## तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते॥ २५॥

### शाङ्करभाष्यम्।

धूम इति धूमो रात्रिः धूमाभिमानिनी रात्र्यभिमानिनी च देवता तथा कृष्णः कृष्णपक्षदेवता षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिस्तत्फलं इष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयादिह निवर्त्तते पुनः॥ २५॥

### आनन्दगिरिकृतटीका।

प्रकृतं देवयानं प्रस्थानं स्तोतुं पितृयानमुपन्यस्यति धूम इति तत्रापि मार्गचिह्नानि भोगभूमीश्च व्यवच्छिद्य आतिवाहिकदेवताविषयत्वं धूमादिपदानां विभजते धूमेत्यादिना तत्रेति सप्तमी पूर्ववदेव सामीप्यार्था इष्टादीत्यादिशब्देन पूर्त्तदत्ते गृह्येते कृतात्ययेऽनुशयवानिति न्यायं सूचयति तत्क्षयादिति आरोहावरोहयोरभ्यासवाचिना पुनः शब्देन संसारस्थानादित्वं सूच्यते॥ २५॥

### स्वामिकृतटीका।

आवृत्तिमार्गमाह धूम इति धूमाभिमानिनी देवता रात्र्यादिशब्दैश्च पूर्ववदेव रात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमानिन्यस्तिस्रोदेवता उपलक्ष्यन्ते एताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्रेष्टापूर्त्तकर्मफलं भुक्त्वा पुनरावर्त्तते तत्रापि श्रुतिः ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाण-

### भाषा अनुवाद।

और जिस मार्गसे प्रयाण करिके फिरि नहीं संसारगति को प्राप्त होते हैं कि अर्चि अभिमानिनी अर्थात् अग्नि या ज्योतिरूप और अहर कहे दिन औ शुक्लपक्ष तथा उत्तरायण जो छमास और संवत्सर इन सबकी अभिमानिनी देवता इहां लेते हैं यथा प्रथम जोतिमे प्रवेश करि फेरि दिनमे दिनसे पक्षमे पक्षसे उत्तरायण छमाहीमे उससे संवत्सर मे संवत्सर से देवलोक मे प्राप्त होय फेरि भगवत् उपासक ब्रह्मज्ञ होय साक्षात् ब्रह्मस्वरूप होते हैं निस्काम कर्मकारी इस गतिसे जाते हैं॥ २४॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥
एकया यात्यनावृत्ति मन्ययाऽवर्त्तते पुनः ॥ २६ ॥

शाङ्करभाष्यम् ।

शुक्लेति शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे ज्ञानप्रकाशकत्वात् शुक्ला तदभावात् कृष्णा एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोर्न जगतः सर्वस्यैवैते गती सम्भवतः शाश्वते नित्ये संसारस्य नित्यत्वान्नित्ये मतेऽभिप्रेते तत्रैकया शुक्लया यात्यनावृत्तिमावृत्तिमन्यथेतरयाऽवर्त्तते पुनः भूयः ॥ २६ ॥

आनन्दगिरिकृतटीका ।

रात्र्यादौ मृतानां ब्रह्मविदामब्रह्मप्राप्तिशङ्कानिवृत्त्यर्थमभिमानिनिर्देवताग्रहणायमार्गयोर्नित्यमाह शुक्लेति ज्ञानप्रकाशकत्वाद्विद्याप्राप्यत्वादर्च्चिरादिप्रकाशोपलक्षितत्वाच्च शुक्ला देवयानाख्या गतिस्तदभावाज्ज्ञानप्रकाशकत्वाभावत् धूमाद्यप्रकाशोपलक्षितत्वादविद्याप्राप्यत्वाच्च कृष्णा पितृयानलक्षणा गतिः तयोर्गत्योः श्रुतिस्मृतिप्रसिद्धार्थो हिशब्दः जगच्छब्दस्य ज्ञानकर्माधिकृतविषयत्वेन सङ्कोचे हेतुमाह न जगत इति अन्यथा ज्ञानकर्मोपदेशानर्थ

स्वामिकृतटीका ।

पञ्चमपञ्चीवमाक्षपक्षत्यान षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकात् चन्द्रं ते प्राप्यार्द्रं भवन्तीत्यादि तदेवं निवृत्तिकर्मसहितोपासनया क्रममुक्तिः काम्यकर्मभिस्तु स्वर्गभोगानन्तरमावृत्तिः निषिद्धकर्मभिस्तु नरकभोगानन्तरमावृत्तिः क्षुद्रकर्मणान्तु जन्तूनां अत्रैव पुनः पुनर्जन्मेति द्रष्टव्यं ॥ २५ ॥

भाषा अनुवाद ।

और जिस राहसे गमन करिके फेरि संसारमे आवते सो कहते हैं कि प्रथम धूममे प्राप्त होय फेरि धूमसे रात्रिमे रात्रिसे कृष्णपक्ष मे कृष्णपक्ष से दक्षिणायन छमासमे तब पितृलोकमे उससे फेरि चन्द्रज्योतिमे प्राप्त होय योगी फेरि निवृत्त होते हैं इहां भी धूमादि शब्दों से तदभिमानिनी देवता लेते हैं कामना करिके कर्मकारियों की यह गति है कि कर्मफल भोगकरि फेरि संसार होता हैं तो निःकाम कर्महीं ठीक है ॥ २५ ॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवाऽर्जुन ॥ २७ ॥

शाङ्करभाष्यम् ।

नैत इति नैते यथोक्ते सृती मार्गौ पार्थ जानन् संसारायैकाऽन्या मोक्षाय चेति योगी न मुह्यति न कश्चन कश्चिदपि तस्मात् सर्वेषु कालेषु योगयुक्तः समाहितो भवाऽर्जुन ॥ २७ ॥

आनन्दगिरिकृतटीका ।

कथादित्यर्थः तयोर्नित्यत्वे हेतुमाह संसारस्येति मार्गयोर्यावत्संसारभावित्वे फलितमाह तत्रेति क्रमसुक्तिरनावृत्तिः भूयो भोक्तव्यकर्मवशादित्यर्थः ॥ २६ ॥

गतेरुपास्यत्वाय तद्विज्ञानं स्तौति नैत इति योगस्य मोहापोहकत्वे फलितमाह तस्मादिति ज्ञानप्रकारमनुवदति संसारायेति मोक्षाय क्रमसुक्त्यर्थमित्यर्थः योगी ध्याननिष्ठो गतिमपि ध्यायन्नेव मुह्यति केवलं कर्म दक्षिणमार्गप्रापकं कर्त्तव्यत्वेन न प्रत्येतीत्यर्थः योगस्यापुनरावृत्तिफलत्वे नित्यकर्त्तव्यत्वं सिद्धमित्युपसंहरति तस्मादिति ॥ २७ ॥

स्वामिकृतटीका ।

उक्तमार्गावुपसंहरति शुक्लेति शुक्लाऽर्चिरादिगतिः प्रकाशमयत्वात् कृष्णा धूमादिगतिस्तमोमयत्वात् एते गती मार्गौ ज्ञानकर्माधिकारिणौ जगतः शाश्वते अनादी संमते संसारस्यानादित्वात् तयोरेकया शुक्लयाऽनावृत्तिं मोक्षं याति अन्यया कृष्णया तु पुनरावर्त्तते ॥ २६ ॥

मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति नैते इति एते सृती मार्गौ मोक्षसंसारप्रापकौ जानन् कश्चिदपि योगी न मुह्यति सुखबुद्ध्या स्वर्गादिफलं न कामयते किन्तु परमेश्वरनिष्ठ एव भवतीत्यर्थः स्पष्टमन्यत् ॥ २७ ॥

भाषा अनुवाद ।

येई शुक्ल कृष्ण दो गती जगतमे सनातनसे चली आवती हैं इनमे निःकाम कर्मकारी ज्ञानी शुक्ल कहे प्रकाश मार्ग से गमन करके मुक्त होते और नाना मनोरथ करके यज्ञादि कर्मकारी मनुष्य कृष्ण कहे अन्धेरी धूममार्गसे गमन कर कर्मफल भोगके अनन्तर फिरि संसारमे आय जन्म ग्रहण करते हैं सो एई दो मार्ग है ॥ २६ ॥

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत् पुण्यफलं प्रदिष्टम् ।
अत्येति तत् सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति श्रीभगवद्गीतासु योगशास्त्रेषु श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो नाम अष्टमोऽध्यायः ॥ ८ ॥

शाङ्करभाष्यम् ।

शृणु योगस्य माहात्म्यं वेदेष्विति वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु यदेतेषु पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत् सर्वं फलजातमिदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तं सम्यगवधार्य्यानुष्ठाय इह यथा योगी परं उत्कृष्टमैश्वरं स्थानमुपैति प्रतिपद्यते आद्यमादौभवं कारणं ब्रह्मेत्यर्थः ॥ २८ ॥

इति श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ॥ ८ ॥

आनन्दगिरिकृतटीका ।

अष्टाष्टद्यर्थं योगं स्तौति वेदेष्विति पवित्रपाणित्वप्राङ्मुखत्वादिसाहित्यमध्ययनस्य सम्यक्त्वमङ्गोपाङ्गोपेत्य मनुष्ठानस्य साद्गुण्यं तपसां शास्त्रोक्तानां सुतप्तत्वं मनोबुद्ध्याद्यैकाग्र्यपूर्वकत्वं दानस्य च सम्यक्त्वं देशकालपात्रानुगुणत्वमिदं विदित्वेत्यत्रेदंशब्दार्थमेव स्फुटयति सप्तेति यद्यपि किं तद् ब्रह्मेत्यादावधियज्ञः कथं कोऽत्रेत्यत्र प्रश्नद्वयं प्रतिभासानुसारेण कैश्चिदुक्तं तथापि प्रतिवचनालोचनायां द्वित्वप्रतीत्यभावात् प्रकारभेदविवक्षया च शब्दद्वयस्य प्रतिनियतत्वान्न सप्तेति विरुध्यते नचेदं वेदनमात्यन्तिकं किन्त्वनुष्ठानपर्यन्तमित्याह सम्यगिति प्रकृती ध्याननिष्ठो योगीत्युच्यते ऐश्वरं विष्णोः परमं पदं तदेव तिष्ठत्यस्मिन्नशेषमिति स्थानं योगानुष्ठानादशेषफलातिशायिमोक्षलक्षणं फलं क्रमेण लब्धुं शक्यमिति भावः तदनेन सप्त प्रतिवचनेन योगमार्गं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति आनन्दगिरिकृतटीकायां अष्टमोऽध्यायः ॥ ८ ॥

स्वामिकृतटीका ।

अध्यायार्थमष्टप्रश्नार्थनिर्णयसफलमुपसंहरति वेदेषु अध्ययनादिभिः यज्ञेषु अनुष्ठानादिभिः तपःसु कायशोषणादिभिः दानेषु सत्पात्रेऽर्पणादिभिः यत्पुण्यफलमुपदिष्टं शास्त्रेषु

स्वामिकृतटीका।

तत्सर्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्यं प्राप्नोति किं कृत्वा इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्वं विदित्वा ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टं आद्यं जगन्मूलभूतं स्थानं विष्णोः पदं प्राप्नोति ॥ २८ ॥

इति स्वामिकृतटीकायामष्टमोऽध्यायः ॥ ८ ॥

भाषा अनुवाद।

उक्त दोनो मार्गके ज्ञानसे जो फल होता सो दिखावते हुये भक्ति-योग कहते हैं कि हे पार्थ मोक्ष श्री संसारको देनेवालो इन दोनो मार्गको जानिकर कोई योगी पुरुष सांसारिक मोह को नहीं पावता अर्थात् सुख समृद्धि स्वर्गादि फलकी कामना नहीं करता वलकि परमेश्वरही मे निष्ठा करता है इससे अर्जुन तुम मेरी भक्तियोगमे युक्त होके रहो॥ २७ ॥

अध्यायका अर्थस्वरूप आठ प्रश्नोका अर्थनिर्णय फलके सहित कहते हैं कि वेदोंमे अध्ययनके द्वारा और यज्ञोंमे अनुष्ठानके द्वारा श्री तपस्यामे शरीर शोषणके द्वारा श्री सर्वदानमे सत्पात्रके अर्पणसे जो उत्तम पुण्यफल सब शास्त्रोंने कहा है उस फलको उल्लङ्घन करि अर्थात् उस फलकी अपेक्षा अधिक जानि योगी श्रेष्ठ योगरूप ऐश्वर्यको प्राप्त होते हैं अर्थात् परम पद पावते हैं अर्थात् आठ प्रश्नसे कहा जो तत्व तिसके जाननेही से योग ऐश्वर्य पावते और फेरि सोई योगीजन ज्ञानी होय के उत्तम जो भगवत् का पद कहे स्थान सो लाभ करते हैं॥ २८ ॥

इति श्रीजगन्नाथ शुक्लविरचित मनभावनी नाम भाषाटीकायां अष्टमो ऽध्यायः॥ ८ ॥

---

# श्रीमद्भगवद्गीता ।

## नवमोऽध्यायः ।

श्रीभगवानुवाच ।

इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १॥

### शाङ्करभाष्यम् ।

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तस्तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपं निर्दिष्टं तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते नान्यथेति तदाशङ्काव्यावृत्त्यर्थं श्रीभगवानुवाच इदमिति। इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तञ्च पूर्वेष्वध्यायेषु तद्बुद्धौ सन्निधीकृत्येदमित्याह तुशब्दो विशेषनिर्द्धारणार्थः इदमेव तु सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं वासुदेवः सर्वमित्यात्मैवेदं सर्वमेकमेवाद्वितीयमित्यादि श्रुतिस्मृतिभ्यो नान्यदथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्तीत्यादि श्रुतिभ्यश्च ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्याम्यनसूयवे असूयारहिताय किंतज्ज्ञानं किंविशिष्टं विज्ञानसहितमनुभवयुक्तं यत् ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसेऽशुभात् संसारबन्धनात् ॥ १ ॥

### आनन्दगिरिकृतटीका ।

व्यतीतेनागामिनोध्यायस्यागतार्थत्वं वक्तुं वृत्तम् अनुद्रवति अष्टम इति नाडी सुषुम्नाख्या धारणाख्येनाङ्गेन युक्तो योगः धारणायोगः सगुणः सर्वद्वारसंयमनादिगुणस्तेन सहित इत्यर्थः तत्फलोक्त्यर्थमनन्तराध्यायारम्भमाशङ्क्याह अ तस्य चेति अनरर्चिरित्यादिनोपल.क्षितेन क्रमवता देवयानेन यथेति यावत् ज्ञानान्तरमेव यथोक्तफललाभात् अलमनेन

### आनन्दगिरिकृतटीका।

मार्गेणेत्याशंक्याह कालान्तर इति अर्चिरादिमार्गेण ब्रह्मप्राप्तौ मुक्तेः मार्गायत्तत्वात् नतस्येत्यादिश्रुतिविरोधः स्यादित्याशयेन शङ्कते तत्रेति इत्तोऽर्थः सप्तम्यर्थः उक्ताशङ्का-निवृत्त्यर्थमनन्तराध्यायमुत्थापयति तदा शङ्केति संप्रयुक्तत्वेनापरोक्षत्वाभावेऽपि पूर्वोत्तर-ग्रन्थालोचनयाबुद्धिसन्निधानादिदं शब्देन ब्रह्मज्ञानं गृह्यीतं इत्याह तद्बुद्धाविति प्रकृता-ज्ञानात् ज्ञानस्य वैशिष्ट्यावद्योती तुशब्द इत्याह तुशब्द इति निपातार्थमेव स्फुटयति इद-मेवेति तस्मिन्नर्थे संवादकत्वेन श्रुतिस्मृतिं दर्शयति वासुदेव इति अद्वैतज्ञानवत् द्वैतज्ञानमपि केषाञ्चिन्मोक्षहेतुरित्याशंक्याह नान्यदिति द्वैतज्ञानं मोक्षाय नक्षमित्यत्र श्रुतिमुदाहरति अथेति अविद्याप्रकरणोपक्रमार्थोऽथशब्दः अतो द्वैतादन्यथा भिन्नत्वेनेत्यर्थः विदुस्तत्त्वमिति शेषः द्वैतस्य दुर्निरूपत्वेन कल्पितत्वात् तज्ज्ञानं रज्जुसर्पादिज्ञानतुल्यत्वान्न क्षेमप्राप्तिहेतु-रिति चकारार्थः असूया गुणेषु दोषाविष्करणं तद्रहिताय ज्ञानाधिकृताय इत्यर्थः ज्ञानं ब्रह्मचैतन्यं तद्विषयं वा प्रमाणज्ञानं तस्य तेनैव विशेषितत्वानुपपत्तिमाशंक्य व्याकरोति अनुभवेति विज्ञानमनुभवः साक्षात्कारस्तेन सहितमित्यर्थः उक्तज्ञानं प्राप्तस्य किं स्यादि-त्याशङ्क्याह यज्ज्ञानमिति ॥ १ ॥

### स्वामिकृतटीका।

परेशः प्राप्यते शुद्धभक्त्येति स्थितिमष्टमे ॥ नवमे तु तदैश्वर्यमत्याश्चर्यं प्रपञ्च्यते ॥ एवं तावत् सप्तमाष्टमयोः स्वीयपरमेश्वरतत्त्वं भक्त्यैव सुलभं नान्यथेत्युक्तमिदानीमचिन्त्यं स्वकीयमैश्वर्यं भक्तेश्चासाधारणप्रभावं प्रपञ्चयिष्यन् श्रीभगवानुवाच इदमिति विशेषेण ज्ञायते अनेनेति विज्ञानमुपासनं तत्सहितं ज्ञानमीश्वरविषयमिदं तु तेऽनसूयवे पुनः पुनः स्वमाहात्म्यमेवोपदिशतीत्येवं परमकारुणिके मयि दोषदृष्टिरहिताय तुभ्यं वक्ष्यामि तुशब्दो वैशिष्ट्ये तदेवाह गुह्यतममित्यादिना गुह्यं धर्मज्ञानं ततो देहादिव्यतिरिक्तात्म-ज्ञानं गुह्यतरं ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमं तज्ज्ञात्वाऽशुभात् संसार-बन्धान्मोक्ष्यसे सद्य एव मुक्तो भविष्यसि ॥ १ ॥

## भाषा अनुवाद।

केवल भक्तिहीके द्वारासे परमेश्वर पाये जाते अर्थात् ईश्वरका तत्त्व-ज्ञान भक्ति विना कोई उपायसे सुलभ नहीं है यही अष्टम अध्यायमे स्थिर किया है सोई ईश्वरका अद्भुत ऐश्वर्य औ अपनी भक्तिकी सर्वश्रेष्ठ महिमा अब इस नवयें अध्यायमे विस्तारसे भगवान् आप कहते हैं कि

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्॥ २॥

शाङ्करभाष्यम्।

तच्च स्तौति राजविद्येति राजविद्या विद्यानां राजा दीप्त्यतिशयत्वात् दीप्यते ह्री यमतिशयेन ब्रह्मविद्या सर्वविद्यानां राजगुह्यं तथा गुह्यानां राजा पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणानामिदं ब्रह्मविज्ञान मुत्कृष्टतम मनेकजन्म सहस्रसञ्चितमपि धर्माधर्मादि समूलं कर्म्म क्षणमात्राद्भस्मीकरोति यतोऽतः किं तस्य पावनत्वं वक्तव्यं किञ्च प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत् प्रत्यक्षावगमं अनेक गुणवतोऽपि धर्मविरुद्धत्वं दृष्टं श्येनयाग इव न तथा आत्मज्ञानं धर्मविरोधि किन्तु धर्म्यं धर्मादनपेतं एवमपि स्यात् दुःसंपाद्यमित्यत आह सुसुखं कर्तुं यथारत्नविवेकविज्ञानं तत्राल्पायासानां अन्येषां कर्मणां सुखसंपाद्यानामल्प-

आनन्दगिरिकृतटीका।

तदाभिमुख्यसिद्धये जज्ञानं स्तौति तच्चेति ब्रह्मविद्या विद्यानां राजा श्रेष्ठ इत्यत्र हेतुमाह दीप्तीति कुतो ब्रह्मविद्यायाः विद्यान्तरेभ्यो दीप्त्यतिशयित्वं तत्राह दीप्यते हीति

भाषा अनुवाद।

जिससे परमेश्वर जाने जांय सोई विज्ञान कहे उपासना तिसके सहित ईश्वरविषक जो यह ज्ञान गुह्यतम अर्थात् शास्त्रोक्त धर्मज्ञान गुह्य कहे गोपनीय है और उसकी अपेक्षा देहादिसे भिन्न जो आत्मज्ञान सो गुह्यतर कहे अधिक गोपनीय है फेरि आत्मज्ञानसे भी परमात्मज्ञान गुह्यतम है अत्यन्त गोपनीय है सो असूयारहित अर्थात् वार वार अपना माहात्म्य उपदेश करते हुये मेरेमे दोष दृष्टिरहित तुम ही इससे मै अब दया करिके तुमसे कहूंगा कि जिनको जानि करिके इस अशुभरूप संसारबन्धन से छूटि जाउगे॥ १

## शाङ्करभाष्यम् ।

फलत्वं फलतः दृष्टं दुष्कराणाञ्च महाफलत्वं दृष्टमितीदन्तु सुखसम्पाद्यत्वात् तत् फलक्षयाद्व्येतीति प्राप्तौ तत्राह अव्ययं नास्य फलतः कर्मवद्व्ययोऽस्तीति अव्ययं अतः श्रद्धेय मात्मज्ञानं ॥ २ ॥

### आनन्दगिरीकृतटीका ।

दृश्यते हि विद्वदन्तरेभ्यो लोके पूजातिरेको ब्रह्मविदामिति भावः उत्कृष्टतमं शुद्धिकारणं ब्रह्मज्ञानमित्येतदुपपादयति अनेकेति तत्र श्रुतिस्मृतिप्रमाणयितव्येन शास्त्रैकगम्यमिदं ज्ञानं किन्तु प्रत्यक्षप्रमेयमित्याह किञ्चेति प्रत्यक्षमवगम्यमानमस्मिन्निति तथा यद्वावगम्यत इति अवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यते धर्म्यमित्येतद्व्याकरोति अनपेतमिति धर्मस्यैव तस्य क्लेशसाध्यत्वमाशङ्क्याह एवमपीति रत्नविषयं विवेकज्ञानं सम्प्रयोगादुपदेशापेक्षादनायासेन दृष्टं तथेदं ब्रह्मज्ञानमित्याह यथेति अव्ययमिति विशेषणमाशङ्कापूर्वकं विवृणोति तत्रेत्यादिना व्यवहारभूमिः सप्तम्यर्थः ज्ञानस्याक्षयफलत्वे फलितमाह अत इति ॥ २ ॥

### स्वामिकृतटीका ।

किञ्च राजविद्येति इदं ज्ञानं राजविद्या विद्यानां राजा राजगुह्यं गुह्यानाञ्च राजा विद्यासु गोप्येषु चातिरहस्यं श्रेष्ठमित्यर्थः राजदन्तादित्वादुपसर्जनस्यापि परत्वं राज्ञां विद्या राज्ञां गुह्यमिति वा उत्तमं पवित्रमिदमत्यन्तपावनं ज्ञानिनां प्रत्यक्षावगमञ्च प्रत्यक्षः स्पष्टोऽवगमोऽवबोधो यस्य तत् प्रत्यक्षावगमं दृष्टफलं इत्यर्थः धर्म्यं धर्मादनपेतं वेदोक्तसर्वधर्मफलत्वात् कर्त्तुञ्च सुसुखं सुखेन कर्त्तुं शक्यमित्यर्थः अव्ययञ्चाक्षयफलत्वात् ॥ २ ॥

### भाषा अनुवाद ।

अब अर्जुन की इच्छा बढावनेके हेतु जो ज्ञान कहैंगे उसकी प्रशंसा करते हैं कि यह जो ज्ञान सो सकल विद्योंका राजा और गोपनीय जो कुछ है उसका भी राजा अर्थात् सबसे श्रेष्ठ है और यह अत्यन्त पावन तथा उत्तम है औ ज्ञानियों को प्रत्यक्षावगम कहे जिसका बोध सुलभ है और धर्म्य कहे धर्मसे भिन्न नहीं अर्थात् वेदविहित सर्व धर्मका फलस्वरूप है और सुसुखं कहे अनायास साधन किया जाय सकै है और जिस हेतु अक्षय फल है इससे अव्यय अर्थात् नाशरहित है ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

## शाङ्करभाष्यम्

ये पुनः अश्रद्दधाना इति अश्रद्दधानाः श्रद्धाविरहिताः आत्मज्ञानस्य धर्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असन्तः पुरुषाः परन्तप अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैवाशङ्केति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमप्यप्राप्येत्यर्थः निवर्त्तन्ते निश्चयेन आवर्तन्ते क्व मृत्युसंसारवर्त्मनि मृत्युयुक्तं संसारस्तस्य वर्त्म नरकतिर्यगादि प्राप्तिमार्गस्तस्मिन्नेव वर्त्तन्त इत्यर्थः ॥ २ ॥

### आनन्दगिरिकृतटीका ।

आत्मज्ञानाख्ये धर्मे श्रद्धावतां तन्निष्ठानां परमपदप्राप्तिमुक्त्वा ततो विमुखानां संसारप्राप्तिमाह ये पुनरिति आत्मज्ञानतत्फलयोर्नास्तिकानेव विशिनष्टि पापेति उक्तानामात्मश्मरीणां भगवत् प्राप्तिसम्भावनाभावादप्राप्य मामित्यप्रसक्तं प्रतिषेधः स्यादिशंङ्क्याह मत्प्राप्ताविति ॥ २ ॥

### स्वामिकृतटीका ।

नन्वेवमप्यतिसुकरत्वेन के नाम संसारिणः स्युस्तत्राह अश्रद्दधाना इति अस्य भक्तिसहितज्ञानलक्षणस्य धर्मस्येति कर्मणि षष्ठी इमं धर्ममश्रद्दधाना आस्तिक्येनास्वीकुर्वन्त उपायान्तरैर्मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि निवर्त्तन्ते मृत्युव्याप्तसंसारमार्गे परिभ्रमन्तीत्यर्थः ॥ २ ॥

### भाषा अनुवाद ।

जो इस ज्ञानसे ऐसा सुख सुलभ है तो फेरि कौन ऐसा अभागी जन जो संसारी होगा इस शङ्कापर कहते हैं कि यही भक्तिसहित ज्ञानस्वरूप धर्म को न करिके दूसरी उपाय से मेरी प्राप्तिके लिये जो लोग यत्न करते हैं वे मनुष्य हमको न पायके मृत्युयुक्त संसारमार्गमें प्रवृत्त होते अर्थात् मृत्युके अर्थ संसारमें वार वार आते और जाते हैं ॥ २ ॥

## मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना।
## मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः ॥ ४ ॥

शाङ्करभाष्यम्।

इति ज्ञानं स्तुत्वार्जुनमभिमुखीकृत्याह मयेति मया मम यः परोभावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्त्तिना न व्यक्ता मूर्त्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्त्तिस्तेन मयाव्यक्तमूर्त्तिना करणागोचरस्वरूपेणेत्यर्थः तस्मिन्मय्यव्यक्तमूर्त्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्य्यन्तानि नहि निरात्मकं किञ्चिद्भूतं व्यवहारायावकल्प्यतेऽतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितानि अतो मयि स्थितानीत्युच्यते तेषां भूतानामहमेव आत्मा इत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासतेऽतो ब्रवीमि नचाहं तेषु भूतेष्ववस्थितो मूर्त्तवत् संश्लेषाभावेनाऽकाशस्याप्यन्तरतमो ह्यहं ॥ ४ ॥

आनन्दगिरिकृतटीका।

स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां मन्दीकृत्य ज्ञानं व्याख्यातुमारभते स्तुत्वेति सोपाधिकस्य व्याप्यत्वसम्भवमभिप्रेत्य विशिनष्टि मयेति अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति करणेति व्याप्यव्यापकत्वेन जगतो भगवतश्च परिच्छेदमाशङ्क्याह तस्मिन्निति तथापि भगवतो भूतानाञ्चाधाराधेयत्त्वेन भेदः स्यादित्याशङ्क्याह नहीति निरात्मकस्य व्यवहारानर्हत्वे फलितमाह अत इति ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशङ्क्याह तेषामिति तस्य तेषु स्थित्यभावं व्यवस्थापयति मूर्त्तवदिति ॥ ४ ॥

स्वामीकृतटीका।

तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति मयेति द्वाभ्याम् अव्यक्ता अतीन्द्रिया मूर्त्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्वमिदं जगत्ततं व्याप्तं तत् सृष्ट्वा तदेवानुप्राविशदित्यादिश्रुतेः अतएव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्वाणि भूतानि चराचराणि एवमपि घटादिषु स्वकार्येषु मृत्तिकेव तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात् ॥ ४ ॥

भाषा अनुवाद।

इस प्रकारसे अवसर प्राप्त जो ज्ञानकाण्ड तिसके श्रोता अर्जुनको उत्साहयुक्त करिके सोई ज्ञान दो श्लोकसे कहते हैं कि जिसका स्वरूप

## नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
## भूतभृन्नच भूतस्थो ममात्मा भूतभावनः॥ ५॥

### शाङ्करभाष्यम्।

यच्चासंसर्गिवस्तु क्वचिदाधेयभावेनावस्थितं भवत्यत एवासंसर्गित्वान्मम नचेति नच मत्स्थानि भूतानि ब्रह्मादीनि पश्य मे योगं युक्तिः घटनं मे ममैश्वरं योगमात्मनः ईश्वरस्येदमैश्वरं माहात्म्यमित्यर्थः तथाचात्मनो या श्रुतिरसंसर्गित्वादसङ्गतां दर्शयत्यसङ्गो नहि सज्जत इदञ्चाश्चर्यमन्यत् पश्य भूतभृदसङ्गोऽपि सन् भूतानि बिभर्त्ति नच भूतस्थो यथोक्तेन न्यायेन दर्शितत्वात् भूतस्थत्वानुपपत्तेः कथं पुनरुच्यते असौ ममात्मेति विभज्य देहादिसंघातं तस्मिन्नहङ्कारमध्यारोप्य लोकबुद्धिमनुस्मरन् व्यपदिशति ममात्मेति न पुनरात्मन आत्मा अन्य इति लोकवदजानंस्तथा भूतभावनो भूतानि भावयति उत्पादयति वर्द्धयति वा भूतभावनः॥ ५॥

### आनन्दगिरिकृतटीका।

संश्लेषाभावेऽपि किमिति नाधेयत्वमत आह नचेति परमेश्वरस्य भूतेषु स्थित्यभावेऽपि भूतानां तत्र स्थितिरास्थितेति कुतोऽसङ्गत्वं तत्राह अतएवेति नचेत् तत्र चकारोऽवधारणार्थः भूतानामीश्वरेणैव स्थितिरित्यत्र हेतुमाह पश्येति आत्मनोऽसङ्गत्वस्वरूपस्थित्यत्र प्रमाणमाह तथाचेति असङ्गश्चेदीश्वरस्तर्हि कथं मत्स्थानि भूतानीत्युक्तं कथञ्च तथोक्तांश्च मत्स्थानीति तद्विरुद्धमुदीरितमित्याशङ्क्याह इदञ्चेति तर्हि भूतसम्बन्धः स्यादिति नेत्याह नचेति यथोक्तेन न्यायेन असङ्गत्वेनेति यावत् असङ्गतया वस्तुतो

### भाषा अनुवाद।

अव्यक्त कहे इन्द्रियोंका अगोचर ऐसा कारणरूप जो मैं सो मेरेसे सम्पूर्ण जगत व्याप्त है क्योंकि श्रुति कहती हैं कि सोई ब्रह्म संसार सृष्टि करिके उसके बीच जीवरूप होय प्रविष्ट है इस कारण चराचरात्मक भूतमात्र कारणरूप मेरेही मे स्थित हैं परन्तु ऐसा है तोभी स्वकार्य घटादिमे मृत्तिकाके तुल्य मै भूतोंमे नहीं हूं जिस हेतु मै आकाशके समान संगरहित अर्थात् अलग हौं॥ ४॥

आनन्दगिरिकृतटीका ।

भूतासम्बन्धेऽपि कल्पनया तद्विरोधान्न मिथोविरोधोऽस्तीति भावः आत्मनः सङ्काशादात्मनोऽन्यत्वायोगाय कुतः सम्बन्धोक्तिरित्याशङ्क्याह असाविति यथा लोको वस्तुतत्त्वमजानन् भेदमारोप्य ममायमिति सम्बन्धमनुभवति न तथेह सम्बन्धव्यपदेशः आत्मनि स्वतो-भेदाभावात्ततो भेदे सत्येव लोके सम्बन्धबुद्धिदर्शनमनुसरन् भगवानात्मनो देहादिसङ्घातं विभज्याहङ्कारं तस्मिन्नारोप्य असौ ममात्मेति भेदं व्यपदिशति तथाच सङ्घातस्य ममेति व्यपदेशात्ततो निकृष्टस्य स्वरूपस्यात्मशब्देन निर्देशाच्च भूतस्थोऽसावित्यर्थः पूर्वोक्तासंगत्वाङ्गीकारेऽपि वात्मा भूतानि भावयतीत्याह तथेति ॥ ५ ॥

स्वामिकृतटीका ।

किञ्च नचेति नच मयि स्थितानि भूतानि असङ्गत्वादेव मम ननु तर्हि व्यापकत्वमाश्रयत्वञ्च पूर्वोक्तं विरुद्धमित्याशङ्क्याह पश्येति मे ऐश्वरमसाधारणं योगं युक्तिं अघटनघटनाचातुर्यमिदं पश्य मदीययोगमायावैभवस्यावितर्क्यत्वान्नकिञ्चित् विरुद्धमित्यर्थः अन्यदप्याश्चर्यं पश्येत्याह भूतेति भूतानि बिभर्त्ति धारयतीति भूतभृत् भूतानि भावयति पालयतीति भूतभावनः एवं भूतोऽपि ममात्मा प्रपच स्वरूपं भूतस्थो न भवतीति अयं भावः यथा देहं बिभ्रत् पालयंश्च जीवोऽहङ्कारेण तत्संश्लिष्टस्तिष्ठति एवमहं भूतानि धारयन् पालयन्नपि तेषु न तिष्ठामि निरहङ्कारत्वादिति ॥ ५ ॥

भाषा अनुवाद ।

और देखो कि हम सबसे अलग हैं इस हेतु स्थावर जङ्गम भूत हमारेमे नहीं स्थितहैं और जो शङ्का करो कि पीछे तुमने अपना सर्वव्यापित्व औ सबके आश्रय यह कहा है तो कहते हैं कि हमारी अघट-घटनारूप चातुरी देखो कि मेरी योगमाया के विभव बलसे मेरी चातुरी बूझनेके अयोग्य है पर मेरा कहना तो किसी अंशमे विरुद्ध नहीं है और आचार्य लोगभी भूतभावन पालनकर्त्ता कहते हैं तौभी हमारा उत्कृष्ट रूप भूतभावन नहीं है जैसे जीव देहधारण औ पालन करते हुये अहङ्कारसे देहके साथ मिलते हैं तैसे निरहङ्कार हेतुसे भूतोंका धारन पालन करते हुये भी हम उनसे पृथक हैं यही मेरा ऐश्वर्य है कि जैसे आकाश औ वायु सबमे रहते औ सबसे जुदे हैं ॥ ५ ॥

**यथाऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

### शाङ्करभाष्यम् ।

यथोक्तेन श्लोकद्वयेन उक्तमर्थं दृष्टान्तेनोपपादयन्नाह यथेति यथा लोके आकाशस्थितः आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगः महान् परिमाणतस्तथाकाशवत् सर्वगते मय्यसंश्लेषेणैव स्थितानि मत्स्थानीत्येवं उपधारय जानीहि ॥ ६ ॥

### आनन्दगिरिकृतटीका ।

सृष्टिस्थितिसंहाराणां मसङ्गात्माधारत्वं मया ततमिदमित्यादि श्लोकद्वयेनोक्तोऽर्थस्तद्दृष्टान्तेनोपपादयन्नादौ दृष्टान्तमाहेति योजना सर्वेष्युत्पत्तिस्थितिसंहारकालो गच्छति आकाशादेर्महतोऽन्याधारत्वं कथमित्याशङ्क्याह महानिति यथा सर्वगामित्वात् परिमाणतो महान् वायुराकाशे सदा तिष्ठति तथा आकाशादीनि महान्त्यपि सर्वाणि भूतान्याकाशकल्पे पूर्णे प्रतीच्यसङ्गे परस्मिन्नात्मनि संश्लेषमन्तरेण स्थितानीत्यर्थः ॥ ६ ॥

### स्वामिकृतटीका ।

असंश्लिष्टयोरपि आधाराधेयभावं दृष्टान्तेनाह यथेति अवकाशंविनावस्थानानुपपत्तेर्नित्यमाकाशस्थितो वायुः सर्वत्रगोऽपि महानपि नाकाशेन संश्लिष्यते निरवयवत्वेन संश्लेषायोगात् तथा सर्वाणि भूतानि मयि स्थितानि जानीहि ॥ ६ ॥

### भाषा अनुवाद ।

अनमिल वस्तुभी आधार आधेय अर्थात् रहनेकी जगह औ रहनेवाली वस्तु होसकेहै यह दृष्टान्त देखाय कर कहते हैं कि आकाश के विना किसी वस्तुके रहनेका असम्भव हैं इससे आकाशमे स्थित जो वायु सो सर्वगत औ महान होकेभी आकाश के साथ मिलनेकी कोई उपाय न रहनेसे जैसे आकाशके साथ नहीं मिलती हे तैसे भूत मेरेमे रहते भी हमसे अलगजानो अर्थात् जैसे आधाररूप आकाशमे रहिकर वायुनिर्लिप्त है तैसे भूतोंके रहते हुये भी आधार स्वरूप ब्रह्म निर्लिप्त है अर्थात् सबसे अलग है ॥ ६ ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ ७॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥ ८॥

शाङ्करभाष्यम्।

एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि सर्वाणि भूतानि स्थितिकाले तानि सर्वभूतानि कौन्तेय प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये ब्राह्मे प्रलयकाले पुनर्भूयस्तानि भूतान्युत्पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत्॥ ७॥

आनन्दगिरिकृतटीका।

आकाशे वाय्वादिस्थितिवदाकाशादीनि भूतानि स्थितिकाले परमेश्वरे स्थितानि चेत्तर्हि प्रलयकाले ततोऽन्यत्र तिष्ठेयुरित्याशंक्याह एवमिति प्रकृतिशब्दस्य स्वभाववचनत्वं व्यावर्त्तयति त्रिगुणात्मिकामिति सा चापरेयमिति प्रागेव सूचितेत्याह अपरामिति तस्या-श्चेश्वराधीनत्वेनास्वातन्त्र्यमाह मदीयामिति प्रलयकाले भूतानि यथोक्तां प्रकृतिं यान्ति चेदुत्पत्तिकालेऽपि ततस्तेषामुत्पत्तिरीश्वराधीनत्वं भूतसृष्टेर्न स्यादित्याशंक्याह पुनरिति॥७॥

स्वामिकृतटीका।

तदेवमसङ्गस्यैव योगमायया स्थितिहेतुत्वमुक्तं तयैव सृष्टिप्रलयहेतुत्वमाह सर्वेति कल्प-क्षये प्रलयकाले सर्वाणि भूतानि मदीयां प्रकृतिं यान्ति त्रिगुणात्मिकां यानि मायां लीयन्ते पुनः कल्पादौ सृष्टिकाले तानि विसृजामि विशेषेण सृजामि॥ ७॥

भाषा अनुवाद।

इससे असङ्गरूप ईश्वरकी योगमाया से चराचरकी स्थिति ईश्वरमें कही गई अब सोई योग मायासे सृष्टि औ पालनके भी हेतु ईश्वर है यह कहते हैं कि प्रलयके समयमें सकल भूत सत्व रज तम गुणमयी मेरी प्रकृतिमें लीन होते फेरि सृष्टिके समयमें स्थूल सूक्ष्म नानारूप भूतोंको मैं सृजन करता हूं हे कौन्तेय अर्जुन॥ ७॥

नच मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीन मसक्तं तेषु कर्मसु ॥ ९ ॥

शाङ्करभाष्यम् ।

एवमविद्यालक्षणां प्रकृतिमिति प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनःपुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायं इमं वर्त्तमानं कृत्स्नं समग्रमवशमस्वतन्त्रमविद्यादिदोषैः परवशीकृतं प्रकृतेर्वशात् स्वभाववशात् ॥ ८ ॥

तर्हि तस्यैव परमेश्वरस्य तत्भूतग्रामं विषमं विदधतः तन्निमित्ताभ्यां धर्माधर्माभ्यां सम्बन्धः स्यादितीदमाह भगवान् नचमामिति नच मामीश्वं तानि भूतग्रामस्य विषमविसर्गनिमित्तानि कर्माणि निबध्नन्ति धनञ्जय तत्र कर्म्मणामसम्बन्धत्वे कारणमाह उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित् तद्वदासीनमात्मनोऽविक्रियत्वमसंसक्तं फलसङ्गरहितमभिमानवर्जि-

आनन्दगिरिकृतटीका ।

तर्हि कीदृशी प्रकृतिः सा च कथं स्रष्टारुपयुक्तेत्याशंक्याह एवमिति संसारस्या-नादित्वद्योतनार्थं पुनः पुनरित्युक्तं भूतसमुदायस्य विद्यास्मितादि दोषपरवशत्वे हेतु-माह स्वभाववशादिति ॥ ८ ॥

स्वामिकृतटीका ।

नत्वसङ्गो निर्व्विकारस्त्वं कथं सृजसीत्यपेक्षायामाह प्रकृतिमित्यादि स्वां स्वाधी-नां प्रकृतिमवष्टभ्य अधिष्ठाय प्रलये लीनं सन्तं चतुर्विधमिमं सर्वभूतग्रामं कर्म्मादिपरवशं पुनः पुनर्विविधं सृजामि विशेषेण सृजामीति वा कथं प्रकृतेर्वशात् प्राचीनकर्मनिमि-त्ततत्तत्स्वभाववशात् ॥ ८ ॥

भाषा अनुवाद ।

जो कहोकि तुम जो असङ्ग निर्विकार सो कैसे सृष्टि करते हो इस अपेक्षापर कहते हैं कि मै अपने आधीन प्रकृतिको अंगीकार करि प्राचीन कर्मोंके स्वभाववश पराधीन भये कर्म्मके वशीभूत भूत सकलको मैं हों फेरि नानारूप सिर्जन करता रहता हूं ॥ ८ ॥

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

### शाङ्करभाष्यम् ।

तमहङ्करोमीति तेषु कर्मस्वतोऽन्यस्यापि कर्त्तृत्वाभिमानाभावः फलं सङ्गाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यते मूढः कोषकारवदित्यभिप्रायः ॥ ९ ॥

तत्र भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यते

### आनन्दगिरिकृतटीका ।

यदि प्राकृतं भूतग्रामं स्वभावादविद्यातन्त्रं विषमं विदधासि तर्हि तव विषमसृष्टि-प्रयुक्तं धर्मादिमत्त्वमित्यनीश्वरत्वापत्तिरिति शङ्कते तर्हीति तत्रेति सप्तम्या परमेश्वरो निरुच्यते ईश्वरस्य फलसङ्गाभावात् कर्तृत्वाभिमानाभावाच्च कर्मासम्बन्धवदीश्वरा-दन्यस्यापि तदुभयाभावो धर्माद्यसम्बन्धे कारणमित्याह अतोन्यस्येति यदि कर्मसु कर्त्तृत्वाभिमानो वा कस्यचित् कर्मफलसंयोगो वा स्यात्तदाह अन्यथेति ॥ ९ ॥

### स्वामिकृतटीका ।

नन्वेवं नानाविधानि कर्म्माणि कुर्वतस्तव जीववद्बन्धः कथं न स्यादित्यत आह नच मामिति तानि विश्वसृष्ट्यादीनि कर्म्माणि मां न निबध्नन्ति कर्म्मासक्तिर्हि बन्धहेतुः सा चाप्तकामत्वान्मम नास्ति अत उदासीनवद्वर्त्तमानस्य मे बन्धं नोपपादयति उदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वं चोदासीनत्वानुपपत्तेरुदासीनवत् स्थितमित्युक्तं ॥ ९ ॥

### भाषा अनुवाद ।

और जो कहो कि इसप्रकार नानाप्रकार कर्मकारी जो तुम तो तुमारा भी जीव के समान बन्धन क्यों न होय तो इसपर कहते हैं कि वे कर्म हमको बन्ध नहीं कर सकते क्योंकि कर्म मे जो आसक्ति सोई बन्धन का कारण है और हम पूरण काम है इस से वह आसक्ति हम को नहीं है हम तो उदासीन के समान वर्तमान हैं इस से उदासीनके समान कर्म करो कुछ डर नही हे कोई कर्म्म तुम को भी न लगेंगे हे धनञ्जय अर्जुन ॥ ९ ॥

शाङ्करभाष्यम्।

तत्परिहारार्थमाह मयेति मया सर्वतो दृशि मात्रस्वरूपेणाविक्रियात्मनाऽध्यक्षेण मम माया त्रिगुणात्मिकाऽविद्यालक्षणा प्रकृतिः सूयते उत्पादयति स चराचरं जगत् तथाच मन्त्रवर्ण एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूताऽन्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति साक्षिमात्रेण हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत् सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्त्तते सर्वावस्थासु दृशि कर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिरहमिदं भोक्ष्ये पश्यामीदं शृणोमीदं सुखमनुभवामि दुःखमनुभवामि तदर्थमिदं करिष्याम्येतदर्थमिदं करिष्ये इदं ज्ञास्यामीत्याद्यव-

आनन्दगिरिकृतटीका।

ईश्वरे स्रष्टृत्वमौदासीन्यञ्च विरुद्धमिति शङ्कते तत्रेति पूर्वग्रन्थः सप्तम्यर्थः विरोधपरिहारार्थमुत्तरश्लोकमवतारयति तदिति तृतीयाद्वयं समानाधिकरणमित्यभ्युपेत्य व्याचष्टे मयेत्यादिना प्रकृतिशब्दार्थमाह ममेति तस्या अपि ज्ञानत्वं व्यावर्तयति त्रिगुणेति पराभिप्रेतं प्रधानं व्युदस्यति अविद्येति साक्षित्वे प्रमाणमाह तथाचेति मूर्तित्रयात्मनो भेदं वारयति एक इति अखण्डजाड्यं प्रत्याह देव इति आदित्यवत्ताटस्थ्यं प्रत्यादिशति सर्वभूतेष्विति किमिति तर्हि सर्वैर्नोपलभ्यते तत्राह गूढ इति बुद्ध्यादिवत्परिच्छिन्नत्वं व्यवच्छिनत्ति सर्वव्यापीति तर्हि नभोवदनात्मत्वं नेत्याह सर्वभूतेति तर्हि तत्र तत्र कर्मतत्फलसम्बन्धित्वं स्यात्तत्राह कर्मेति सर्वाधिष्ठानत्वमाह सर्वेति सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संनिविष्टोऽभिव्यते न केवलं कर्मणामेवायमध्यक्षोऽपि तु तद्वतामपीत्याह साक्षीति दर्शनकर्तृत्वशङ्कां शातयति चेतेति अद्वितीयत्वं केवलत्वं धर्माधर्मादिराहित्यमाह निर्गुण इति किं बहुना सर्वविशेषशून्य इति चकारार्थः उदासीनस्यापीश्वरस्य साक्षित्वमात्रं निमित्तीकृत्य जगदेतत् पौनःपुन्येन सर्गसंहारावनुभवतीत्याह हेतु नेति कार्यवत् कारणस्यापि साक्ष्यधीना प्रवृत्तिरिति वक्तुं व्यक्ताव्यक्तात्मकमित्युक्तं सर्वावस्थास्वित्यनेन सृष्टिस्थितिसंहारावस्था गृह्यन्ते तथापि जगतः स्वार्गादिष्वपि भिन्ना प्रवृत्तिः स्वाभाविकी नेश्वरायत्तेत्याशंक्याह दृशीति नहि दृशा व्याप्यत्वं विना जडवर्गस्यापि प्रवृत्तिसुरिति हिशब्दार्थः तामेव प्रवृत्तिमदाहरति अहमित्यादिना भोग्यस्य विषयोपलम्भाभावासम्भवाज्ज्ञानाविधां विषयोपलब्धिं दर्शयति पश्यामीति भोगफलमिदानीं कथयति सुखमिति विहितप्रतिषिद्धाचरणनिमित्तं सुखदुःखमित्याह तदर्थमिति नच विमर्शपूर्वकं विनानुष्ठानमित्याह इदमिति इत्याद्या प्रवृत्तिरिति सम्बन्धः सा च प्रवृत्तिः सर्वा दृक्कर्मत्वपुरःसरीत्वेव विष्टणोति इत्युक्तं निगमयति आगतीतोऽपि

## शाङ्करभाष्यम् ।

गतिर्निष्ठा अवगतिरवसानो योऽस्याध्यक्षः परमे व्योमन्नित्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसम्बन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात् किं निमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचनेऽनुपपन्ने कोऽद्धा वेद क इह प्रावोचत् कुत आयातः कुत इयं विसृष्टिरित्यादि मन्त्रवर्णेभ्यो दर्शितश्च भगवता अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति ॥ १० ॥

### आनन्दगिरिकृतटीका ।

तत्रैव च प्रवृत्तेरवसानमित्याह अवगतिरवसान इति परस्याध्यक्षत्वमात्रेण जगच्चेष्टेत्यत्र प्रमाणमाह योऽस्येति अस्य जगतो योऽध्यक्षो निर्विकारः स परमे प्रकृष्टे हार्दे व्योम्नि स्थितो निर्विकारः न परमे प्रकृष्टे हार्दे व्योम्नि स्थितो दुर्विज्ञेय इत्यर्थः ईश्वरस्य साक्षित्वमात्रेण स्रष्टृत्वे स्थिते फलितमाह ततश्चेति किंनिमित्तापरस्येयं सृष्टिर्न तावद्भोगार्था परस्य परमार्थतो भोगासम्बन्धित्वात्तस्य सर्वसाक्षीभूतचैतन्यमात्रत्वान्न चान्यो भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वान्न च सृष्टिरपवर्गार्था तद्विरोधित्वान्नैवं प्रश्नो वा तदनुरूपं प्रतिवचनं वा युक्तं परस्य मायानिबन्धने सर्गे तस्यानवकाशत्वादित्यर्थः परस्यात्मनो दुर्विज्ञेयत्वे श्रुतिमुदाहरति कोऽद्धेति तस्मिन् प्रवक्तापि संसारमण्डले नास्तीत्याह क इहेति जगतः सृष्टिकर्तृत्वेन परस्य ज्ञेयत्वमाशङ्क्य कूटस्थात्ततो न सृष्टिर्जातेत्याह कुत इति नहीयं विविधा सृष्टिरन्यस्मादपि कस्माच्चिदुपपद्यते अन्यस्य वस्तुनो भावादित्याह कुत इति कथं तर्हि सृष्टिरित्याशङ्क्याज्ञानाधीनेत्याह दर्शितश्चेति ॥ १० ॥

### स्वामिकृतटीका ।

तदेवोपपादयति मयेति मया अध्यक्षेण अधिष्ठात्रा निमित्तभूतेन प्रकृतिः स चराचरं विश्वं सूयते जनयति अनेन मदधिष्ठानेन हेतुना इदं जगद्विपरिवर्त्तते पुनः पुन र्जायते सन्निधिमात्रेणाधिष्ठातृत्वात् कर्त्तृत्व मुदासीनत्वञ्चाविरुद्धमितिभावः ॥ १० ॥

## भाषा अनुवाद ।

सोई कहते हैं कि अधिष्ठाता कारणस्वरूप मेरे बल से यह प्रकृति चराचर विश्व को वारवार उत्पन्न करती है तात्पर्य यह कि मेरी सान्निध्य कहे निकटतासे प्रकृति सृष्टि करनेको समर्थ होती है इससे हमको कर्तृत्त्व

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भाव मजानन्तो मम भूत महेश्वरम् ॥ ११ ॥**

### शाङ्करभाष्यम् ।

एवं मां नित्यशुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमपि सन्तं अवैति अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो मानुषीं मनुष्यसम्बन्धिनीं तनुं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानं ततश्च तस्य ममावज्ञानभावनेन हताः वराकास्ते ॥ ११ ॥

### आनन्दगिरिकृतटीका ।

सर्वाध्यक्षः सर्वभूताधिवासो नित्यमुक्तश्चेत्त्वं तर्हि किमिति त्वामेवात्मत्वेन भेदेन वा सर्वे न भजन्ते तत्राह एवमिति विपर्य्यस्तबुद्धित्वं भगवदवज्ञायां कारणमित्याह मूढा इति भगवतो मनुष्यदेहसम्बन्धात्तस्मिन् विपर्यासः सम्भवतीत्याह मानुषीमिति अस्मदादिवद्देहतादात्म्याभिमानं भगवतो व्यावर्त्तयति मनुष्येति भगवन्तमवजानतामविवेकमूलाज्ञानं हेतुमाह परमिति ईश्वरावज्ञानात् किं भवतीत्यपेक्षायां तदवज्ञानप्रतिबन्धबुद्धयः शोच्या भवन्तीत्याह ततश्चेति भगवदवज्ञानादेव हेतोरवजानन्तस्ते जन्तवो वराकाः शोच्याः सर्वपुरुषार्थबाह्याः स्युरिति सम्बन्धः तत्र हेतुं सूचयति तस्येति प्रकृतस्य भगवतोऽवज्ञानमनादरणं निन्दनं वा तस्य भावनं पौनःपुन्यं तेन हतास्तज्जनितदुरितप्रभावात् प्रतिबद्ध बुद्धय इत्यर्थः ॥ ११ ॥

### स्वामिकृतटीका ।

नन्वेवं भूतं परमेश्वर त्वां किंमिति केचिन्नाद्रियन्ते तत्राह अवजानन्तीति द्वाभ्यां सर्वभूतमहेश्वररूपं मदीयं परंभावं तत्त्वमजानन्तोमूढा मूर्खा मामवजानन्ति मामवमन्यन्ते अवज्ञाने हेतुः शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशान्मनुष्याकारा माश्रितवन्तमिति ॥ ११ ॥

### भाषा अनुवाद ।

औ उदासीनत्व दोनो असङ्गत नहीं हैं क्योंकि यह माया हमारे सहारे विन असमर्थ है अर्थात् आप अकेली कुछ नहीं कर सकती है ॥ १० ॥

और जो कहोकि ऐसे जो परमेश्वर तुम तो तुमको कोई कोई

मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीञ्चैव प्रकृतिं मोहनीं श्रिताः ॥ १२ ॥

शाङ्करभाष्यम् ।

कथं मोघाशेति मोघाशा वृथा आशा आशिषो येषां ते मोघाशास्तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात् स्वात्मभूतस्यावज्ञानान्मोघान्येव निःफलानि कर्माणि भवन्तीति मोघकर्माणस्तथा मोघज्ञाना: मोघं निःफलं ज्ञानं येषां ते मोघज्ञाना: ज्ञानमपि तेषां निःफलमेव स्यात् विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्राय: किञ्च ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावं आसुरीमसुराणाञ्च प्रकृतिं मोहनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताः छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवं वदनशीला: क्रूरकर्म्मकुर्वाणा भवन्तीत्यर्थः असूर्य्यानाम ते लोका इति श्रुतेः ॥ १२ ॥

आनन्दगिरिकृतटीका ।

भगवन्तमवजानतां प्रश्नपूर्वकं मोघत्वं विशदयति कथमिति भगवन्निन्दापराणां न काचिदपि प्रार्थनार्थवतीत्याह वृथेति ननु भगवन्तं निन्दन्तोऽपि नित्यं नैमित्तिकं वा कर्मानुतिष्ठन्ति तदनुष्ठानाच्च तेषां प्रार्थिताः सार्था भविष्यन्तीति नेत्याह तथेति परिभवस्तिरस्करणं अवज्ञानमनादरणं तेषामपि शास्त्रार्थविज्ञानवतां तद्द्वारा प्रार्थनार्थवत्त्वमित्याशंक्याह तथा मोघेति तथापि यौक्तिकविवेकवशात्तत्प्रार्थनासाफल्यमित्याशंक्याह विचेतस इति न केवलमुक्तविशेषणवत्त्वमेव तेषां किन्तु वर्त्तमानदेहपातादनन्तरं तत्तदतिक्रूरयोनि-

भाषा अनुवाद ।

आदर नहीं क्यों करते हैं तो दो श्लोकसे कहते हैं कि सर्वभूत के ईश्वर जो हम सो हमारा परमतत्त्व जो लोग नहीं जानते तेई मूढ हमारा निरादर करते हैं इस मे कारण यह है कि हम विशुद्ध सत्त्वरूप होय के भी अपने भक्तोंकी इच्छा वशते मनुष्यके समान शरीर धारण करते औ तसेही कर्म्म भी करते हैं इसी से मूढ़ लोग अपने समान हम को भी मानते हैं ॥ ११ ॥

महात्मनस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं ॥ १३ ॥

शाङ्करभाष्यम् ।

ये पुनः श्रद्दधाना: भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः महात्मान इति महात्मानस्तु अक्षुद्रचित्ता मामीश्वरं पार्थ दैवीं देवानां प्रकृतिं शम दम दयाश्रद्धादि लक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ता ज्ञात्वा मां भूतादिं भूतानां आश्रयमादिकारणं वियदादीनां प्राणिनां चादिकारणमाश्रयमव्ययम् ॥ १३ ॥

आनन्दगिरिकृतटीका ।

आश्रित्य निश्चितेत्याह किञ्चेति मोहकारीमिति प्रकृतिद्वयेऽपि तुल्यं विशेषणं छिन्धि भिन्धि पिब खादेति प्राणिहिंसारूपो रक्षसां स्वभावोऽसुराणां स्वभावस्तु न देहिनो जुहुधि परस्वमेवापरेत्यादिरूपः मोहो मिथ्याज्ञानं तत्रैव स्फुटयति किञ्चेति ॥ १२ ॥

स्वामिकृतटीका ।

किञ्च मोघाशा इति मत्तोऽन्यद्देवतान्तरं क्षिप्रं फलं दास्यतीत्येवंभूता मोघा निःफलैवाशा येषां ते अतएव मद्विमुखत्वान्मोघानि निःफलानि कर्माणि येषां ते मोघमेव नानाकुतर्काश्रितं शास्त्रज्ञानं येषां ते अतएव विचेतसो विक्षिप्तचित्ताः सर्वत्र हेतुः राक्षसीं तामसीं हिंसादिप्रचुरां आसुरीञ्च राजसीं कामदर्पादिबहुलां मोहनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिताः आश्रिताः सन्तो मामवजानन्तीति पूर्वेणैवान्वयः ॥ १२ ॥

भाषा अनुवाद ।

और जो मनुष्य हमसे भिन्न और देवतोंसे कि शीघ्र फल देयँगे ऐसी निःफल आशा करते हैं और हमसे विमुख जा फलके हेतु कर्म्म करे हैं और जिन के शास्त्रसे जो ज्ञान सो नाना कुतर्कयुक्त हैं वेई सकल विचेतस कहे विक्षिप्तचित लोग अनर्थके हेतु हिंसादि तामसकर्म्म तथा काम अभिमानसे भरोपूरी जो राजसी बुद्धि तिसके आश्रित होय हमको न जानि हमारा निरादर करते हैं अभिमान करते और जीव मारते हैं ॥ १२ ॥

**सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

शाङ्करभाष्यम् ।

कथं सततमिति सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्त्तयन्तो यजन्तश्चेन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैः धर्मैः प्रयतन्तश्च दृढव्रता दृढं स्थिरमचाञ्चल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदये शतमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥ १४ ॥

आनन्दगिरिकृतटीका ।

के पुनर्भगवन्तं भजन्ते तानाह ये पुनरिति महान् प्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं तेषामिति व्युत्पत्तिमाश्रित्याह क्षुद्रेति तुशब्दोऽवधारणे प्रकृतिं विशिनष्टि शमेति अनन्यस्मिन् प्रत्यग्भूते मयि परस्मिन्नेव मनोयेषामिति व्युत्पत्त्या व्याकरोति अनन्यचित्ता इति अज्ञाते सेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवन्ते इत्याह ज्ञात्वेति अव्ययमविनाशिनं ॥ १३ ॥

स्वामिकृतटीका ।

के तर्हि त्वामाराधयन्तीत्यत आह महात्मान इति महात्मानः कामाद्यनभिभूतचित्ताः अतएव अभयं सत्त्वसंशुद्धिरित्यादिना वक्ष्यमाणां दैवीं प्रकृतिं स्वभावमाश्रिताः अतएव मद्व्यतिरेकेण नास्त्यन्यस्मिन्मनो येषां ते तु भूतादिं जगत्कारणं अव्ययं नित्यञ्च मां ज्ञात्वा भजन्ति ॥ १३ ॥

तेषां भजनप्रकारमाह सततमिति द्वाभ्यां सततं सर्वदा स्तोत्रमन्त्रादिभिः कीर्त्तयन्तः केचिन्मामुपासते सेवन्ते दृढानिव्रतानि नियमा येषां तादृशाः सन्तो यतन्तश्च ऐश्वर्यज्ञानादिषु

भाषा अनुवाद ।

तो तुमारी आराधना कौन करते हैं जो यह पूछो तो कहते हैं कि कामादिक मे जिनका चित्त अवश नहीं है ऐसे जो महात्मा लोग वे दैवी प्रकृतिके आश्रित होते हैं इसीसे हमको छोड़ि और मे जिनका मन नहीं है ते मनुष्य हमको समस्त भूतके आदि कहे जगतके कारण नित्यस्वरूप जानि के भक्तिपूर्वक आराधना करते है ॥ १३ ॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥ १५ ॥**

### शाङ्करभाष्यम् ।

ते केन केन प्रकारेणोपासत इत्युच्यते ज्ञानेति ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो मामीश्वरं चान्येऽन्यामुपासनां परित्यज्य उपासते तच्च ज्ञानमेकत्वेन एकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते केचिच्च पृथक्त्वेन आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरादित्यादिरूपेणावस्थित इत्युपासते केचिद् बहुधावस्थितः स एव भगवान् सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥ १५ ॥

### आनन्दगिरिकृतटीका ।

भजनप्रकारं पृच्छति कथमिति तत्प्रकारमाह सततमिति सर्वदेति अवस्थावस्था स्वहान्ते कीर्त्तनं वेदान्तश्रवणं प्रणवजपश्च व्रतं ब्रह्मचर्यादि नमस्यन्तो मां प्रति चेतसा प्रह्वीभवन्तो भक्त्या परेण प्रेम्णा नित्ययुक्ताः सन्तः सदा संयुक्ताः ॥ १४ ॥

उपासनप्रकारभेदप्रतिपित्सया पृच्छति ते केनेति तत्प्रकारभेदोदीरणार्थं श्लोकमवतारयति उच्यत इति इज्यते पूज्यते परमेश्वरोऽनेनेति प्रकृते ज्ञाने यज्ञशब्दः ईश्वरश्चेति

### स्वामिकृतटीका ।

प्रयत्नं कुर्वन्तः केचिद्भक्त्या नमस्यन्तश्च प्रणमन्तः अन्ये नित्ययुक्ता अनवरतं अवहिताः सेवन्ते भक्त्येति नित्ययुक्ता इति च कीर्त्तनादिष्वपि द्रष्टव्यं ॥ १४ ॥

### भाषा अनुवाद ।

अब भक्तोंके भजनका प्रकार दो श्लोकसे कहते हैं कि सर्वदा स्तोत्र औ मंत्रसे कोई मेरा कीर्त्तन करते हुये मेरी उपासना करते हैं और कोई दृढ नियम करके ऐश्वर्य औ ज्ञान मे यत्न करते हुये मेरे उपासक होते हैं और कोई भक्तिपूर्वक प्रणत होय मेरा सेवन करते हैं ऐसे नित्ययुक्त कहे सावधान मेरे मे तत्पर होय मेरे भक्त मुझे सेवते हैं ॥ १४॥

अहं क्रतुरहं यज्ञ: स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥

## शाङ्करभाष्यम् ।

यदि बहुभि: प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह अहमिति अहं श्रौतकर्म्मभेदोऽहमेवाहं यज्ञः स्मार्त्तः किञ्च स्वधान्नमहं पितृभ्यो यद्दीयते तत् स्वधा तथा अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यव्रीहि यवादिसाधनमथवा स्वधेति सर्वप्राणिसाधारणमन्नमौषधमिति व्याध्युपशमार्थभेषजं मन्त्रोऽहं यत् पितृभ्यो देवताभ्यश्च हविर्दीयतेऽहमेवाज्यं हविष्टाहमग्निर्यस्मिन् हूयते सोऽप्यग्निरहमेवाहं हुतं हवनं कर्म च ॥ १६ ॥

## आनन्दगिरिकृतटीका ।

चकारोऽवधारणे देवतान्तरध्यानत्यागमपि शब्दस्सूचितं दर्शयति अन्यामिति अन्ये च ब्रह्मनिष्ठामिति यावत् ज्ञानयज्ञमेव विभजते तच्चेति उत्तमाधिकारिणामुपासनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह केचिच्चेति तेषामेव अहं यज्ञः स्मार्तः किञ्च स्वधाहं पितृभ्यो यद्दीयते तत् स्वधा तथा अमौषधं सर्वप्राणिभिर्यदद्यते प्रकारान्तरेणोपासनमुदीरयति केचिदिति बहुप्रकारेणान्योऽदित्यादिरूपेणेति यावत् ॥ १५ ॥

## स्वामिकृतटीका ।

किञ्च ज्ञानेति वासुदेवः सर्वमित्येवं सर्वात्मदर्शनं ज्ञानं तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूजयन्तोऽप्युपासते तत्रापि केचिदेकत्वेनाभेदभावनया केचित् पृथग्भावनया दासोऽहमिति केचित्तु विश्वतोमुखं सर्वात्मकं मां बहुधा ब्रह्म रुद्रादि रूपेणोपासते ॥१५॥

## भाषा अनुवाद ।

और चराचर मात्र श्रीकृष्ण हैं ऐसा जो आत्म दर्शन सोई ज्ञान औ सोई यज्ञ इस प्रकार ज्ञान यज्ञ से कितने हमको पूजते हैं देखो कोई अभेद भावसे औ कोई हम भगवान के दास हैं इस भेदभाव से उपासना करते हैं और कोई हम को ब्रह्मा रुद्र आदि रूप समझ कर सेवते हैं ॥ १५ ॥

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥ १७ ॥

शाङ्करभाष्यम् ।

किञ्च पितेति पिता जनयिताऽहमस्य जगतो माता जनयित्री धाता कर्मफलस्य प्राणिभ्यो विधाता पितामहः पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनं ओङ्कारश्च ऋक् साम यजुरेव च ॥ १७ ॥

आनन्दगिरीकृतटीका ।

भगवदेकविषयमुपासनं तर्हि न सिध्यतीति शङ्कते यदीति प्रकारभेदमादाय ध्यायन्तोऽपि भगवन्तमेव ध्यायन्ति तस्य सर्वात्मत्वादित्याह अत आहेति क्रतुयज्ञशब्दयो रनयोरपौनरुक्त्यं दर्शयन् व्याचष्टे श्रौत इति क्रियाकारकफलजातं भगवदतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥

इतश्च भगवतः सर्वात्मकत्वमनुसन्तव्यमित्याह किञ्चेति पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धेकारणं पुण्यं कर्मेत्याह पावनमिति वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारस्तत्र प्रमाणमृगादि च चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥

स्वामिकृतटीका ।

सर्वात्मतां प्रपञ्चयति अहं क्रतुरिति चतुर्भिः क्रतुः श्रौतोऽग्निष्टोमादिः यज्ञः स्मार्त्तपञ्चयज्ञादिः स्वधा पित्रर्थं श्राद्धादिः औषधं ओषधिप्रभवमन्नं भेषजं वा मन्त्रो याज्यापुरोधोवाक्यादिः आज्यं होमादिसाधनं अग्निराहवनीयादिः हुतं होमः एतत्सर्वमहमेव ॥ १६ ॥

भाषा अनुवाद ।

अब अपनी सर्वरूपता चारि श्लोक से कहते हैं कि मैंहीं क्रतु कहे वेदोक्त अग्निष्टोम आदि यज्ञ और यज्ञ कहे धर्म्म शास्त्रोक्त जो पञ्च यज्ञ बलिवैश्वदेवादि औ स्वधाकहे श्राद्ध और औषध अर्थात् फल होनेसे जो पकि जांय इससे अन्नभी आयगये औ मंत्र औ आज्य कहे घृत आदि औ अग्नि कहे यज्ञाग्नि औ होम यह जो कुछ है सो हम हैं ॥ १६ ॥

गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

शाङ्करभाष्यम्।

किञ्च गतिरिति गतिः कर्मफलं भर्त्ता पोष्टा प्रभुः स्वामी साक्षी प्राणिनां कृताकृतस्य निवासो यस्मिन् प्राणिनो निवसन्ति शरणमार्त्तानां प्रपन्नानामार्त्तिहरः सुहृत् प्रत्युपकारानपेक्ष उपकारी प्रभव उत्पत्तिर्जगतः प्रलयः प्रलीयते यस्मिन् इति प्रलयः तथा स्थानं तिष्ठत्यस्मिन्निति निधानं निक्षेपः कालान्तरोपभोग्यःप्राणिनां बीजं प्ररोहकारणं प्ररोहधर्मिणामव्ययं यावत्संसारभावित्वादव्ययं नह्यबीजं किञ्चित् प्ररोहति नित्यञ्च प्ररोहदर्शनाद्बीजसन्तति र्न व्येतीत्येव गम्यते ॥ १८ ॥

आनन्दगिरिकृतटीका।

भगवतः सर्वात्मकत्वे हेत्वन्तरमाह किञ्चेति गम्यत इति प्रकृतिविलयपर्य्यन्तं कर्म्मफलं गतिरित्याह कर्मेति पोष्टा कर्म्मफलस्यैव प्रदाता कार्य्यकारणप्रपञ्चस्याधिष्ठानमित्याह निवास इति शीर्य्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याह शरणमिति प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तं उत्पत्तिरिति कारणस्य कथमव्ययत्वमित्याशंङ्क्याह यावदिति कारणान्तरेणापि कार्य्यं कदाचिदुदेष्यति किंकारणेनेत्याशंङ्क्याह नहीति माभूत्तर्हि संसारदशायामेव कार्य्योत्पत्तिरित्याशंङ्क्याह नित्यञ्चेति कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वं पूर्वकालस्य नास्तीति सिद्धवत्कृत्य विशिनष्टि बीजेति ॥ १८ ॥

स्वामिकृतटीका।

किञ्च पिताहमस्येति धाता कर्मफलविधाता वेद्यं ज्ञेयं वस्तु पवित्रं शोधकं प्रायश्चित्तात्मकं वा ओङ्कारः प्रणवः ऋगादयो वेदाश्चाहमेव स्पष्टमन्यत् ॥ १७ ॥

भाषा अनुवाद।

और इस जगत के पिता माता तथा धाता कहे कर्मफल के दाता औ पितामह तथा वेद्य ज्ञेय वस्तु औ पवित्र कहे शुद्ध करनेवाले औ ओङ्कार तथा ऋक यजुर साम अथर्व वेद यह समस्त मैहीं हौं ॥ १७ ॥

तपाम्यह मह वर्षं निगृह्णाम्युत्सृजामि च।
अमृतञ्चैव मृत्युश्च सदसच्चाह मर्जुन ॥ १९ ॥

शाङ्करभाष्यम्।

किञ्च तपामीति तपाम्यहमादित्यो भूत्वा कैश्चित् रश्मिभिस्तपामि अहं वर्षं कैश्चिद्रश्मिभिरुत्सृज्यामिरुत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टाभि- र्मासै: पुनरुत्सृजामि प्रावृषि अमृतञ्चैव देवानां मृत्युश्च मर्त्यानां यत् यस्य यत् सम्बन्धितया विद्यानां तद्विपरीतं असच्चैवाहं अर्ज्जुन न पुन- रत्यन्तमेवासद्भगवान् स्वयं कार्य्यकारणे वासदसती ये पूर्वोक्तै: निवृत्तिप्रकारै- रेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति ॥ १९ ॥

आनन्दगिरिकृतटीका।

इतश्च सर्वात्मत्वे भगव ते न विवदितव्यमित्याह किञ्चेति आदित्याज्जायते वृष्टिरिति स्मृतिमवष्टभ्य व्याचष्टे कैश्चिदिति वर्षोत्सर्गनिग्रहावेकस्मैकस्मिन् काले विरुद्धौ इत्याशङ्क्याह

स्वामिकृतटीका।

किञ्च गतिरिति गम्यत इति गति: फलं भर्त्ता पोषणकर्त्ता प्रभुर्नियन्ता साक्षी शुभा- शुभ द्रष्टा निवासो भोगस्थानं शरणं रक्षक: सुहृत् हितकर्त्ता प्रकर्षेण भवत्यमेनेति प्रभव: स्रष्टा प्रलीयतेऽनेनेति प्रलय: संहर्त्ता तिष्ठन्त्यस्मिन्निति स्थानमाधार: निधीयतेऽस्मिन्निति निधानं लयस्थानं वीजं कारणं तथाप्यव्ययमविनाशि नतु व्रीह्यादि वीजवद्विनश्वर- मित्यर्थ: ॥ १८ ॥

भाषा अनुवाद।

और मैंहीं गति कहे प्राप्य कर्म फलरूप औ भर्ता कहे पोषण कर्त्ता औ प्रभु नियामक तथा साक्षी शुभ अशुभके द्रष्टा औ निवास भोगस्थान तथा शरणकहे रक्षक एवं सुहृत् कहे हेतुरहित हितकारी प्रभव अर्थात् जगत के उत्पन्न कर्त्ता प्रलय कहे संहर्त्ता स्थान कहे विश्वके आधार और निधान कहे लयके स्थान औ बीज कहे कारण औ अव्यय कहे अविनाशी मैंहीं हौं ॥ १८ ॥

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान्॥ २०॥

आनन्दगिरिकृतटीका।

अश्मिरिति क्रतुभेदेन वर्षस्य नियन्तृत्वमग्निविकर्त्तृकावविरुद्धाविस्यर्थः यस्य कारणस्य सम्बन्धित्वेन यत्कार्यमभिव्यज्यते तदिह सदित्युच्यते कारणसम्बन्धेनानभिव्यक्तं कारणमेव अनभिव्यक्तनामरूपमसदिति व्यवह्रियन्ते तदेतदाह सदेति शून्यवादं व्युदस्यति न पुनरिति भगवतोऽत्यन्तसत्त्वे कार्यकारणकल्पना निरधिष्ठाना न तिष्ठेदित्यर्थः तर्हि यथाश्रुतं कार्यस्य सत्त्वं कारणस्य चासत्त्वमास्थेयमित्याशंक्य वाशब्देन निषेधति कार्य्येति तर्हि कार्य्यस्यात्यन्तिकं सत्त्वं वाचारम्भणश्रुतेर्नापीतरस्यात्यन्तिकं असत्त्वं कुतस्तु खल्वित्यादिश्रुतेरित्यर्थः उक्तैर्नानायज्ञैर्भगवदभिध्यानाभिनिविष्टबुद्धीनां किं फलमित्याशंक्य सद्यो वा क्रमेण वा मुक्तिरित्याह ये इति॥ १९॥

स्वामीकृतटीका।

किञ्च तपाम्यहमिति आदित्यात्मना स्थित्वा निदाघकाले तपामि जगतस्तापं करोमि वृष्टिसमये च वर्षमुत्सृजामि कदाचित् वर्षं निगृह्णामि आकर्षामि अमृतं जीवनं मृत्युश्च नाशः सत स्थूलं दृश्यम् असञ्च सूक्ष्ममदृश्यम् एतत्सर्वमहमेवेति एवं मत्वा मामेव बहुधोपासते इति पूर्वेणैवान्वयः॥ १९॥

## भाषा अनुवाद।

और ग्रीष्मकालमे सूर्य्यरूप मैंहीं ताप देताहूं औ वर्षाकालमे जल वृष्टि भी हमी करते हैं औ तथा कोई समैमे जल किरणोसे खींचते औ कभी फेरि जलको छोड़ते भी हमीं हैं अमृत कहे जीवन मृत्यु कहे मरण और सत कहे पृथिवी आदि स्थूल पदार्थ औ असत् कहे सूक्ष्म वस्तु रूपादि पांच मात्रा भी हे अर्जुन हमहीं को जानो इसीसे लोग नानारूप हमारी उपासना करते हैं॥ १९॥

शाङ्करभाष्यम्।

ये पुनरज्ञाः कामकामाः त्रैविद्येति त्रैविद्या ऋग्यजुः सामविदः याज्ञिकाः ये ते मां वस्वादिदेवरूपिणं इष्ट्वा सम्पूज्य यज्ञशेषं सोमपाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन ते पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव गतिः स्वर्गतिस्तां प्रार्थयन्ते याचयन्ते ते च पुण्यं पुण्यफलमासाद्य सम्प्राप्य सुरेन्द्रलोकं शतक्रतोः स्थान अश्नन्ति भुञ्जते दिव्यान् दिवि भवान् अप्राकृतान् देवभोगान् देवानां भोगांस्तान्॥ २०॥

आनन्दगिरिकृतटीका।

भगवद्भक्तानामपि निःकामानामेव मुक्तिरिति दर्शयितुं सकामानां पुंसां संसारमवतारयति ये पुनरिति तिस्रो विद्या अधीयन्ते विदन्तीति वा ते त्रैविद्या वेदविदस्तदाह ऋगिति वस्वादोव्यादिशब्देन सवनत्रयेष्वादित्या रुद्राश्च गृह्यन्ते शुद्धकिल्बिषा निरस्तपापा इति यावत्॥ २०॥

स्वामिकृतटीका।

तदेवमवजानन्ति मां मूढा इत्यादि श्लोकद्वयेन चिप्रफलाशया देवतान्तरं यजन्तो मां नाद्रियन्त इत्यभक्ता दर्शिताः महात्मानस्तु मां पार्थेत्यादिना च भक्ता उक्तास्तत्रैकत्वेन पृथक्त्वेन वा ये परमेश्वरं न भजन्ति तेषां जन्ममृत्युप्रवाहो दुर्वार इत्याह त्रैविद्या इति द्वाभ्यां ऋग्यजुःसामलक्षणास्तिस्रो विद्या येषां ते त्रिविद्यास्त्रिविधा एव त्रैविद्याः स्वार्थेऽण् तिस्रो विद्या अधीयन्ते जानन्तीति वा त्रैविद्या वेदत्रयोक्तकर्मपरा इत्यर्थः वेदत्रयविहितैर्यज्ञैर्मामिष्ट्वा ममैव रूपं देवतान्तरमित्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेवेष्ट्वा संपूज्य यज्ञशेषं सोमं पिबन्तीति सोमपास्तेनैव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गं प्रति गतिं ये प्रार्थयन्ते ते पुण्यफलरूपं सुरेन्द्रलोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यानुत्तमान् देवानां भोगानश्नन्ति भुञ्जते॥ २०॥

भाषा अनुवाद।

मूढ़ मेरा अनादर करते औ महात्मा मेरी भजन करते ऐसे पूर्वमे भक्त अभक्त के लक्षण कहिके अवमूढ़ोंका जन्म मृत्युरूप संसार प्रवाह

ते तं भुक्त्वा स्वर्गलोकं विशालम्
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्म्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

शाङ्करभाष्यम् ।

ते तमिति ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्याविशन्ति एवं हि यथोक्तेन प्रकारेण त्रयीधर्म्मं केवलं वैदिकं कर्म्मानुप्रपन्नास्ते गतागतं गतञ्चागतञ्च गतागतं गमनागमनं कामकामाः कामं कामयन्त इति कामकामा लभन्ते गतागतमेव न तु स्वातन्त्र्यं क्वचिल्लभन्तम् इत्यर्थः ॥ २१ ॥

आनन्दगिरिकृतटीका ।

तर्हि स्वर्गप्राप्तेरपि भगवत्प्राप्तितुल्यतामित्याशङ्क्याह तेतमिति पुण्ये स्वर्गप्राप्तिहेताविति यावत् प्रसिद्धोऽर्थो हि शब्दः त्रयाणां होत्रादीनां वेदत्रय विहितानां धर्म्माणां समाहारस्त्रिधर्म्मं तदेव त्रैधर्म्मं तदनुप्रपन्नास्तदनुगता इति यावत् कामकामानां गमनागमन द्वारा कामि तत्फलाप्तिश्चेदिष्टमेव चेष्टितमित्याशङ्क्याह गतेति ॥ २१ ॥

स्वामिकृतटीका ।

ततश्च ते तमिति ते स्वर्गकामास्तं प्रार्थितं विपुलं स्वर्गलोकं तत् सुखं भुक्त्वा भोगप्रापके पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति पुनरप्येवमेव वेदत्रयविहितं धर्ममनुगताः कामकामा भोगान् कामयमाना गतागतं यातायातं लभन्ते ॥ २१ ॥

भाषा अनुवाद ।

दुर्निवार है यह दो श्लोकसे कहते हैं कि जो मनुष्य ऋक् यजुर सामवेद पढ़ते वे त्रैविद्य अर्थात् वेदोक्त कर्म्म परायण यज्ञके द्वारा सर्वरूप जो मैं हूं सो मेरीही पूजा करि और सोमलताका रस पीकर पूत पाप होय स्वेच्छासे स्वर्गलोक को जाते और पुण्यफलरूप स्वर्गको प्राप्त होय वहांके उत्तम देवभोग्य वस्तुवोंका भोग करते हैं ॥ २० ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

## शाङ्करभाष्यम् ।

ये पुनः निःकामा सम्यग्दर्शिनः अनन्याइति अनन्या अपृथग्भूताः परं देवं नारायणं आत्मत्वेन गताः सन्तश्चिन्तयन्तो मां ये जनाः संन्यासिनः पर्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहं ज्ञानीत्वात्मैव मे मतं स च मम प्रियो यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति नन्वेषामपि भक्तानां योगक्षेमं वहत्येव भगवान् सत्यमेवं वहत्येव किन्त्वयं विशेषोऽन्ये मे भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्ते अनन्यदर्शिनस्तु नात्मार्थं योग क्षेममीहन्ते नहि ते जीविते मरणेवात्मनो ग्रन्थिं कुर्वन्ति केवलमेव भगवच्छरणास्ते अतो भगवानेव तेषां योगक्षेमं वहतीति ॥ २२ ॥

## आनन्दगिरिकृतटीका ।

फलमनभिसन्धाय त्वामेवाराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिःकामानां कथं योगक्षेमं स्यातामित्याशङ्क्याह ये पुनरिति तेषा योगक्षेमं वहामीत्युत्तरत्र सम्बन्धः येभ्योऽन्यो न विद्यत इति व्युत्पत्तिमाश्रित्याह अपृथगिति कार्यस्यैव कारणे कर्मतादात्म्यं व्यावर्त्तयति परमिति अहमेव वासुदेवः सर्वात्मानमतोऽन्यत् किञ्चिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा ध्यायन्त इत्याह चिन्तयन्त इति प्राकृतान् व्यावर्त्य मुख्यानधिकारिणो निर्दिशति

## भाषा अनुवाद ।

फेरि तेई स्वर्गकामी मनुष्य अपना इष्ट विपुल स्वर्ग सुखभोग करि के जब पुण्य क्षीण भई तब फेरि मर्त्यलोक मे आवते हैं आय करके फेरि वही वेदत्रयी विहित धर्मकर्म करिके भोग कामनाकारी लोग गमनागमन मात्र लाभ किया करते हैं अर्थात् कभी नीचे आते और कभी उपर जाते रहते हैं ॥ २१ ॥

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

शाङ्करभाष्यम् ।

नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव भजन्ते सत्यमेवं ये अन्यदेवता भक्ता अन्यासु देवतासु भक्ता अन्यदेवता भक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धयास्तिक्यबुद्ध्या अन्विता अनुगतास्तेऽपि मामेव कौन्तेय यजन्त्य विधिपूर्वकमविधिरज्ञानं तत् पूर्वकं ज्ञानपूर्वकं यजन्त इत्यर्थः ॥२३॥

आनन्दगिरिकृतटीका ।

संन्यासिन इति पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः नित्याभियुक्ताना-मित्यनवरतमादरेण ध्याने व्यापृतानामित्याह सतेति योगश्च क्षेमञ्च योगक्षेमञ्च योगक्षेमं तत्ता पुनरुक्तमर्थमाह योग इति किमर्थं परमार्थदर्शिनां योगक्षेमं वहामीत्याशङ्क्याह ज्ञानीत्विति अतस्तेषां योगक्षेमं वहामि इति सवन्धः सम्यगदर्शननिष्ठानामेव योगक्षेमं वहति विशेषणमव्यमाणः शङ्कते नन्विति अन्येषामपि भक्तानां भगवान योगक्षेमं वहती-त्येतदङ्गीकरोति सत्यमिति तर्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति किंत्विति तत्र विशेषं प्रतिज्ञाय विवृणोति अयमित्यादिना योगक्षेमहद्दिश्य स्वयमीहन्ते चेष्टां कुर्व-न्तीति यावत् आत्मविदां स्वार्थयोगक्षेममुद्दिश्य चेष्टाभावं स्फुटयति नहीति अन्यिरपेक्ष कामामित्येतत् ज्ञानिनां तर्हि सर्वत्वानास्थेत्याशङ्क्याह केवलमिति तेषां तदेकशरणत्वे फलितमाह अत इति इति शब्दो विशेषशब्देन सम्बध्यते ॥ २२ ॥

स्वामिकृतटीका ।

मत् भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह अनन्या इति अनन्या नास्ति मद्व्य-तिरेकेणान्यत् काम्यं येषां ते तथाभूता ये जना मां चिन्तयन्तः सेवन्ते तेषां तु नित्याभियुक्तानां सर्वथा मदेकनिष्ठानां योगं धनादिलाभं क्षेमञ्च तत्पालनं मोक्षञ्चा तैरप्रार्थितमपि अह-मेव वहामि प्रापयामि ॥ २२ ॥

भाषा अनुवाद ।

और हमारे भक्तजन मेरी कृपाही से कृतार्थ होते यह कहते हैं कि जिन के हमे छोड़ि और कोई कामना नहीं है तई अनन्य भक्त

## अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
## नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥

### शाङ्करभाष्यम् ।

कस्मात्तेऽविधिपूर्वकं यजन्त इत्युच्यते यस्मात् अहमिति अहंहिसर्वं यज्ञानां श्रौतानां स्मार्त्तानाञ्च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभु-

### आनन्दगिरिकृतटीका ।

तत्तद्देवतात्मना परस्यैवात्मनः स्थित्यभ्युपगमाद्देवतान्तरपराणामपि भगवच्छरणत्वा-विशेषात्तद्देकनिष्ठत्वमकिञ्चित्करमिति मन्वानः शङ्कते नन्विति उक्तमङ्गीकृत्य परि हरति सत्यमित्यादिना देवतान्तरयाजिनां भगवद्याजिभ्यो विशेषमाह अविधीति तद्व्याकरोति अविधिरिति ॥ २२ ॥

### स्वामिकृतटीका ।

ननु च त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादिन्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरंस्तत्राह येऽपीति श्रद्धयोपेताः सन्तो ये जना अन्यदेवता इन्द्रादि-रूपा यजन्ते तेऽपि मामेव यजन्तीति सत्यं किन्तु अविधिपूर्वकं मोक्षप्रापकं विधिं विना यजन्ति अतस्ते पुनरावर्त्तन्ते ॥ २३ ॥

### भाषा अनुवाद ।

हमारी सेवा करते हैं नित्य अभियुक्त सर्वदा एक मेरेहीमें तत्पर हैं मन जिनका उनका योग क्षेम अर्थात् योग जो धन आदि लाभ और क्षेम जो प्राप्त वस्तुका रक्षण सो मैं करता हूं अथवा निर्वाण जो मुक्ति यद्यपि वे नहीं चाहते हैं परन्तु उनको मैं अपनी इच्छासे देता हौं ॥ २२ ॥

जो कहो कि विचार से तो सर्व देवरूप तुम को छोड़ि और देवता कौन है देखो सवरूप जो तुमारे हैं तो इन्द्रादि के पूजक लोग भी तुमारे ही उपासक हैं फेरि क्या कारण है जो वे विचारे उपर नीचे गमनागमन करते हैं इस पर कहते हैं कि हां अश्रद्धायुक्त जो इन्द्रादि देवतों की आराधना करते हैं सो सत्य हमारी ही सेवा है परन्तु वे अविधि से अर्थात् मोक्ष की देन हार विधि को छोड़ि कर पूजन करते हैं इसी से पुनः पुनः संसार पावते हैं ॥ २३ ॥

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥

शाङ्करभाष्यम् ।

रेव च मत्स्वामिको हि यज्ञोऽधियज्ञोऽहमेवात्रेति चोक्तं तथा न तु मामभिजानन्ति तत्त्वेन यथावदतश्चाविधिपूर्वकमिष्ट्वा यागफलात् च्यवन्ति ते ॥ २४ ॥

आनन्दगिरिकृतटीका ।

नतु यस्मादित्येन्द्रादिज्ञानपूर्वकमेव तद्भक्तास्तद्याजिनो भवन्तीति कथमविधिपूर्वकं तेषां यजनमिति शङ्कते कस्मादिति देवतान्तरयाजिनां यजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेन श्लोकद्वयमुत्थापयति उच्यत इति सर्वेषां द्विविधानां यज्ञानां यस्मादिदेवतात्वेनाहमेव भोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवेति प्रसिद्धमेतदिति हि शब्दः प्रभुरेव चेत्युक्तं विवृणोति मत्स्वामिको हीति तत्र पूर्वाध्यायगतवाक्यं प्रमाणयति अधियज्ञोऽहमिति तथापि देवतान्तरयाजिनां यजनमविधिपूर्वकमिति कुतः सिद्धं तत्राह तथा इति ममैव यज्ञेषु भोक्तृत्वे प्रभुत्वे च सतीति यावत् तयो भोक्तृप्रभोर्भावस्तत्त्वं तेन भोक्तृत्वेन प्रभुत्वेन च मां यथावद्यतो न जानन्ति अतो भोक्तृत्वादिना ममाज्ञानान्मयि अनर्पितकर्माणश्चावर्त्तन्ते कर्मफलादित्याह अतश्चेति ॥ २४ ॥

स्वामिकृतटीका ।

एतदेव विवृणोति अहमिति सर्वेषां यज्ञानां तत्तद्देवता रूपेणाहमेव भोक्ता प्रभुश्च स्वामी फलदाताप्यहमेवेत्यर्थः एवं भूतं मां ते तत्त्वेन यथावन्नाभिजानन्ति अतश्च्यवन्ति प्रच्यवन्ति वा पुनरावर्त्तन्ते ये तु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति ते तु नावर्त्तन्ते ॥ २४ ॥

भाषा अनुवाद ।

पूर्वकथित वाक्यको विस्तार से कहते हैं कि देवतास्वरूप यज्ञफल भोक्ता मही हों और प्रभु कहे यज्ञफलदाता भी मही हूं पर इस तरह से वे देवपूजक लोग यथावत् कहे ठीक नहीं जानते हैं इसी से फेरि संसार वृति को पावते हैं और सर्वदेव मे हमको अन्तर्यामीरूप देखि जो मेरा अर्चन करते वे पुनः संसार गति को नहीं पावते हैं ॥ २४ ॥

## शाङ्करभाष्यम्।

येऽप्यन्यदेवता भक्तिमत्त्वेनाविधि पूर्वकं यजन्ते तेषामपि यागफलमव-श्यम्भाविकं कथं यान्तीति यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो-भक्तिश्च येषां ते देवव्रता देवान् यान्ति पितॄनग्निष्वात्तादीन् यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः भूतानि विनायकमातृगणचतु-र्भगिन्यादीनि यान्ति भूतेज्याभूतानां पूजकाः यान्ति मद्याजिनो मद्यजन-शीला वैष्णवाः मामेव यान्ति समानेऽप्यायासे मामेव न भजन्ते अज्ञाना-त्तेन ते अल्पफलभाजो भवन्तीत्यर्थः॥ २५॥

### आनन्दगिरिकृतटीका।

यद्यन्यदेवताभक्ता भगवत् तत्त्वाज्ञानात् कर्मफलाच्च्यवन्ते तर्हि तेषां देवतायजनम किञ्चित्करमित्याशंक्याह येऽपीति देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवता-यागानुरूपफलप्राप्तिर्ध्रौव्यान्नतदाकिञ्चित्करमित्यर्थः देवतान्तरयाजिनामावश्यकं ततफल-माशङ्कापूर्वकमुदाहरति कथमित्यादिना नियमो वल्युपहारप्रदक्षिण प्रह्वीभावादिरित्यर्थः देवतान्तराराधनस्यान्तवत् फलमुक्त्वा भगवदाराधनस्यानन्तफलत्वमाह यान्तीति भगवदारा-धनस्यानन्तफलत्वे देवतान्तराराधनं त्यक्त्वा भगवदाराधनमेव युक्तं मायास मास्यात फलानि देवाच्चेत्याशङ्क्याह समाने पीति अज्ञानाधीनत्वेन देवतान्तराराधनवतां फलतो न्यूनतां दर्शयति तेनेति॥ २५॥

### स्वामिकृतटीका।

तदेवोपपदायति यान्तीति देवेष्विन्द्रादिषु व्रतं नियमो येषां ते अन्नवतो देवान् यान्ति अतः पुनरावर्तन्ते पितृषु व्रतं येषां श्राद्धादि क्रियापराणां ते पितॄन् यान्ति भूतेषु विनायकमातृगणादिषु इज्या पूजा येषां ते भूतेज्या भूतानि यान्ति मां यष्टुं शीलं येषां ते मद्याजिनस्ते तु मामव्ययं परमानन्दस्वरूपं यान्ति॥ २५॥

### भाषा अनुवाद।

अब वही उक्त वाक्य का प्रतिपादन करते हैं कि जो देवव्रत कहे इन्द्रादिदेव के उपासक हैं वे लोग देवलोक को जाते औ पितृ उपासना करनेवाले पितृलोक को जाते तथा भूत सेवाकार अन्त मे भूत जोनि

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥**

### शाङ्करभाष्यम् ।

न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलमुक्तं सुखाराधनश्चाहं कथं पत्रमिति पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥ २६ ॥

### आनन्दगिरिकृतटीका ।

अनन्तफलत्वाद्भगवदाराधनमेव कर्त्तव्यमित्युक्तं सुकरत्वाच्च तथेत्याह न केवलमिति भगवदाराधनस्य सुकरत्वमेव प्रश्न पूर्वकं प्रपञ्चयति कथमित्यादिना यद्धि पुष्पादिकं भक्ति पूर्वकं मदर्थमर्पितं तेनायं शुद्धचेताः तपस्वी मामाराधयतीत्याह अवधारयामीत्याह पत्रमित्यादिना ॥ २६ ॥

### स्वामिकृतटीका ।

तदेवं स्वभक्तानामक्षयफलमुक्त्वा अनायासमत्वञ्च स्वभक्तेर्दर्शयति पत्रमिति पत्रपुष्पादि मात्रमपि मह्यं भक्त्या यः प्रयच्छति तस्य प्रयतात्मनः शुद्धचित्तस्य निष्कामभक्तस्य तत् पत्रपुष्पादिकं भक्त्या तेनोपहृतं समर्पितमहमश्नामि प्रीत्या गृह्णामि नहि महाविभूति पतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्यायागादिभिः परितोषः स्यात् किन्तु भक्तिमात्रेण अतो भक्तेन समर्पितं यत् किञ्चित् पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥

### भाषा अनुवाद ।

पावते हैं और जो मेरी पूजा करैं हैं सो मद्याजी अक्षय परमानन्द स्वरूप हम को प्राप्त होते हैं फिरि गमनागमन होता नहीं ॥ २५ ॥

अब स्वभक्त को अक्षय फलत्व औ स्वभक्तिका सुलभत्व देखावते हैं जो मनुष्य भक्तिपूर्वक पत्र पुष्प फल जलमात्र भी हमे देय हैं वह विमल-चित्त भक्तजन का प्रीति से दिया हुआ पुष्पादि मै अति प्रसन्न होय ग्रहण

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणं ॥ २७ ॥
शुभाऽशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यसयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

### शाङ्करभाष्यम् ।

यत एवमतः यत् करोषीति यत् करोषि यदाचरसि शास्त्रीयं कर्म्म स्वतः प्राप्तं यदश्नासि यत् खादसि यद् जुहोषि हवनं निर्वर्त्तयसि श्रौतं स्मार्त्तं वा यत् ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्मयपात्ररत्नादि यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणं मत्समर्पणं ॥ २७ ॥

### आनन्दगिरिकृतटीका ।

तदाराधनस्य सुकरत्वे तदेवावश्यकर्मित्याह यत इति स्वतः शास्त्रादृतेः प्राप्तं गमनादी तियावत् यदश्नासि यं किञ्चिद्भोगं भुंक्षे हवनस्य स्वतस्त्वं वारयति श्रौतमिति मत्समर्पणं तत् सर्वं मह्यं समर्पयेत्यर्थः ॥ २७ ॥

### स्वामिकृतटीका ।

न च फलपुष्पादिकमपि यज्ञार्थं पशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैरापाद्य समर्पणीयं किन्तर्हि यत्करोषीति स्वभावतः शास्त्रतो वा यत्किञ्चित् कर्म करोषि तथा यदश्नासि यज्जुहोषि यद्ददासि यच्च तपस्यसि तपः करोषि तत् सर्वं मय्यर्पितं यथाभवति एवं कुरुष्व ॥ २७ ॥

### भाषा अनुवाद ।

करता हूं इस का भाव यह है कि और देव के समान बड़ी पूजा सामग्री हमै न चाहिये हम केवल भाव भक्ति से प्रसन्न होते हैं ॥ २६ ॥

जिस लिये मै केवल भाव भक्ति से भक्तपर प्रसन्न होता हूं इससे हे कौन्तेय कुन्तीपुत्र जो कुछ कर्म्म करो या आहार करो या दानकरो या यज्ञकरो सो सब मदर्पण अर्थात् मेरे को समर्पन करो तो वह सब अक्षय फल होगा और दोष किसी तरह का न लगैगा । २७ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहं ॥ २९ ॥

शाङ्करभाष्यम् ।

एवं कुर्वस्तव यद्भवति तच्छृणु शुभेति शुभाशुभफलैरेवं शुभाशुभे इष्टानिष्टफले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन् मोक्ष्यसे सोऽयं संन्यासयोगोनाम संन्यासश्चासौ मत्समर्पणतया कर्मकर्त्तृत्वाद्योगश्चासाविति तेन संन्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्म्मबन्धनैर्जीवन्नेव पतिते चास्मिन् शरीरे मामुपेष्यस्यागमिष्यसि ॥ २८ ॥

रागद्वेषवान् तर्हि भगवान् यतो भक्ताननु गृह्णाति नेतराणीति तन्न समोहमिति समः तुल्योहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः अग्नि-

आनन्दगिरिकृतटीका ।

किमतोभवति तदाह एवमिति भगवदर्पणबुद्ध्या सर्वकर्म कुर्वतो जीवन्मुक्तस्य प्रारब्धकर्मावसाने विदेह कैवल्यमावश्यकमित्याह शुभेत्यादिना भगवदर्पणकारणान्मुक्तिः संन्यासयोगाच्चेति साधनद्वयशङ्कां घातयति सोयमिति ॥ २८ ॥

स्वामिकृतटीका ।

एवञ्च यत् फलं प्राप्स्यसि तच्छृणु इत्याह शुभाशुभेति एवं कुर्वन् कर्मबन्धनैः कर्मनिमित्तैरिष्टानिष्ट फलैर्मुक्तो भविष्यसि कर्मणां मयि समर्पितत्वेन तव तत् फलसम्बन्धानुपपत्तेर तस्य विमुक्तः सन् संन्यासयोगयुक्तात्मा संन्यासः कर्मवदर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतस्त्वं मां प्राप्स्यसीत्यर्थः ॥ २८ ॥

भाषा अनुवाद ।

इस प्रकार आचरण करने से फल होगा सो सुनो कि उक्त प्रकार से कर्म्मसकल भगवत् समर्पण करने से कर्म्म बन्धन अर्थात् कर्म्म से जनित इष्ट अनिष्ट फल प्राप्ति से वचि रहोगे और मेरे मे समर्पित जो कर्म्म सन्यास-योग उसी से युक्त चित्त होके तुम हम को निःसन्देह प्राप्त होउगे ॥ २८ ॥

## शाङ्करभाष्यम् ।

वह्निर्यद्वत् दूरस्थानां यथाग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाऽहं भक्ताननुगृह्णामि नेतरान् ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्त्तन्ते तेषु चाप्यहं स्वभावत एव वर्त्ते नेतरेषु नैतावता तेषु द्वेषो मम ॥ २९ ॥

### आनन्दगिरिकृतटीका ।

भगवतो रागद्वेषवत्त्वेनानीश्वरत्वमाशङ्क्य परिहरति रागेत्यादिना तर्हि भगवज्जनमकिञ्चित्करमित्याशङ्क्याह अग्निवदिति तत् प्रपञ्चयति यथेति भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्च भगवतो न कथं रागादिमत्त्वमित्याशङ्क्याह ये भजन्तीति ये हि वर्णाश्रमादिधर्म्मा मां भजन्ति ते तेनैव भजनेनाचिन्त्यमाहात्म्येन परिशुद्धबुद्धयो मयि मत्समीपे वर्त्तन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति तुशब्दोऽस्य विशेषस्य द्योतनार्थः तेषु च समीपे समर्थं तेषामहमपि स्वभावतो वर्त्तमानस्तदनुग्रहपरो भवामि यथा व्यापकमपि सावित्रं तेजः स्वच्छे दर्पणादौ प्रतिफलति तथा परमेश्वरोऽवर्जनीयतया भक्तिनिरस्तसमस्तकलुषसत्त्वेषु पुरुषेषु सन्निधत्ते दैवीं प्रकृतिमाश्रिता न भजन्तीत्युक्तत्वादित्यर्थः ॥ २९ ॥

### स्वामिकृतटीका ।

यदि तु भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति नेत्याह समोऽहमिति सर्वेषु भूतेष्वहं समः अतो मम प्रियश्च द्वेष्यश्च नास्त्येव एवं सत्यपि ये मां भजन्ति ते भक्त्या मयि वर्त्तन्ते अहमपि तेष्वनुग्राहकतया वर्त्ते अयं भावः यथाग्नेः स्वसेवकेष्वेव तमः शीतादि दुःखमपाकुर्वतोऽपि न वैषम्यं यथा वा कल्पवृक्षस्य तद्वैव भक्तपक्षपातिनोऽपि मम वैषम्यं नास्त्येव किन्तु मद्भक्तेरेवायं महिमेति ॥ २९ ॥

## भाषा अनुवाद ।

भला जो भक्तों को इस भांति मुक्त करते हो औ अभक्तों को नहीं तो क्या तुमारे भी प्रीति विरोध कृत विषम स्वभाव है इस के उपर अपने स्वभाव का अभाव कहते हैं कि सकल भूत मे हम समानरूप से हैं इसी से हमारे न कोई प्रिय और न अप्रिय है और जो हमारी भक्ति करता है सो हमारे मे वर्त्तमान है और मै भी उस पर अनुग्रह करता रहता हूं इस का भावार्थ यह है कि जैसे अग्नि के सेवन करने

अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥

शाङ्करभाष्यम् ।

शृणु मद्भक्तेर्माहात्म्यं अपिचेदिति अपि चेत् यद्यपि सुष्ठु दुराचारः सुदुराचारोऽतीव कुत्सिताचारोऽपि भजते माम् अनन्यभाक् नान्यभक्तिः सन् साधुरेव सम्यग्वृत्त एव स मन्तव्यः ज्ञातव्यः सम्यग् यथावत् व्यवसितो हि यस्मात् साधुनिश्चयः सः ॥ ३० ॥

आनन्दगिरिकृतटीका ।

प्रकृतां भगवद्भक्तिं स्तुवन् पापीयसामपि तत्राधिकारोऽस्तीति सूचयति शृणु इति सम्यग्वृत्त एव भगवद्भक्तो ज्ञातव्य इत्यत्र हेतुमाह सम्यगिति ॥ ३० ॥

स्वामिकृतटीका ।

अपि च मद्भक्तेरेवायमवितर्क्यः प्रभाव इति दर्शयन्नाह अपि चेदिति अत्यन्तदुराचारोऽपि यद्यपृथक् तेन पृथग् देवतापि वासुदेव एवेति बुद्ध्या देवतान्तरभक्तिमकुर्वन् मामेव परमेश्वरं भजते तर्हि साधुः श्रेष्ठ एव स मन्तव्यः यतोऽसौ सम्यग्व्यवसितः शोभनमध्यवसायं कृतवान् ॥ ३० ॥

भाषा अनुवाद ।

पाले का अन्धकार औ शीतादि दुख का निवारणकारी अग्नि है और अग्नि मे विषमभाव नहीं है और जैसे कल्पवृक्ष अपने सेवक को सकल पदार्थ देता है तो इन को प्रिय अप्रिय कोई नहीं परन्तु फल जो है सो भक्त ही को है इस से भक्ति ही को महिमा यह सब जानो ॥ २९ ॥

और अपनी भक्ति का अपूर्व अचिन्त्यप्रभाव देखावते हैं कि अत्यन्त दुराचार कहे औरऔर देवता भी वासुदेव ही हैं इस रूप एकबुद्धि होय यद्यपि औरों कीं भक्ति नकरके केवल परमेश्वर स्वरूप मही का भजे है तौभी सो साधु औ श्रेष्ठ हैं क्योंकि मेरे मे उत्तम निश्चय तो किया है ॥ ३० ॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

शाङ्करभाष्यम् ।

उतसृज्य च बाह्यां दुराचारतामन्तः सम्यग् व्यवसायसामर्थ्यात् क्षिप्रमिति क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव शश्वत् नित्यं शान्तिञ्चोपशमं निगच्छति प्राप्नोति शृणु परमार्थं कौन्तेय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु न मे मम भक्तः मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥ ३१ ॥

आनन्दगिरिकृतटीका ।

हेत्वर्थमेव प्रपञ्चयति उत्सृज्येति भगवन्तं भजमानस्य कथं दुराचारता परित्यक्ता भवतीत्याशङ्क्याह क्षिप्रमिति सति दुराचारे कथं धर्मचित्तत्वं तदाह शश्वदिति उपशमो दुराचारादुपरमः किमिति तद्भक्तस्य दुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तया किमित्यतो न नंक्ष्यतीत्याशङ्क्याह शृणु इति ॥ ३१ ॥

स्वामिकृतटीका ।

ननु कथं समीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह क्षिप्रमिति सुदुराचारोऽपि मां भजन् शीघ्रं धर्मचित्तो भवति तनश्च शश्वच्छान्तिं चित्तोपशमोपरमञ्च परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति [illegible]मर्जुनं प्रोत्साहयति हे कौन्तेय पटहादि महाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु कथं मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति अपि तु कृतार्थ एव भवतीति ततश्च ते तव प्रौढिविजृम्भात् विध्वंसितकुतर्काः सन्तो निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् ॥ ३१ ॥

भाषा अनुवाद ।

ऐसा मनुष्य किस प्रकार उत्तम है इस शङ्कापर कहते हैं कि अत्यन्त दुराचारी भी हमारी भक्ति करके स्वधर्मचित्त होता हैं अर्थात् चित्त की तरङ्ग निवृत्त हो परमेश्वर मे निष्टा अवश्य पावता है औ तुर्त्त धर्म्मात्मा होता और शान्ति को प्राप्त होता है पर इस बात को कुतर्क कर्कशवादी लोग न मानेंगे इस शङ्का से व्याकुल अर्जुन को

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

शाङ्करभाष्यम् ।

किञ्च मां हीति मां हि यस्मात् पार्थ व्यपाश्रित्य ममाश्रित्याश्रयत्वेन गृहीत्वा येऽपि स्युः भवेयुः पापयोनयः पापानि योनिः येषां ते पापजन्मानः के त इत्याह स्त्रियो वैश्या स्तथा शूद्रा स्तेऽपि यान्ति गच्छन्ति परां गतिं प्रकृष्टां गतिम् ॥ ३२ ॥

आनन्दगिरिकृतटीका ।

इतश्च भगवद्भक्तिर्विधातव्येत्याह किञ्चेति न मे भक्तः प्रणश्यतीत्यत्र हेतुमाचक्षाणो भक्तावधिकारे जातिनियमो नास्तीत्याह मां हीति ॥ ३२ ॥

स्वामिकृतटीका ।

स्वाचारभ्रष्टं मद्भक्तिः पवित्रीकरोतीति किमत्र चित्रं यतो मद्भक्तिर्दुष्कुलानप्यनधिकारिणोऽपि संसारान्मोचयतीत्याह मां हीति येऽपि पापयोनयः स्युर्निकृष्टजन्मानोऽन्त्यजादयो भवेयुः येऽपि वैश्याः केवलं कृष्यादिनिरताः अतः स्त्रियः शूद्राश्चाप्यध्ययनादिरहितास्तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति हि निश्चितम् ॥ ३२ ॥

भाषा अनुवाद ।

भगवान उत्साह देते हैं कि हे कौन्तेय नगारा वजाय विवादकारी लोगों की सभा में जाय हाथ उठाय तुम निःशङ्क हो यह प्रतिज्ञा करो कि परमेश्वर के भक्त अति दुराचार होने से भी नष्ट नहीं होते वलु कृतार्थ होते हैं ऐसी प्रतिज्ञा करने पर तुमारी जय और वे नष्टकुतर्क होय तुम को गुरु कर मानेंगे सो तुम यह जानो कि मेरे भक्त का नाश नहीं है ॥ ३१ ॥

अत्यन्त आचारभ्रष्टों को भी जो मेरी भक्ति पवित्र करती है इस में क्या आश्चर्य है क्योंकि देखो मेरी भक्ति अनधिकारीयों को भी संसारसे मुक्त करती है तो दुराचारी की मुक्तिसे क्या सन्देह है कोई कहते हैं कि

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।**
**अनित्यमसुखं लोक मिमं प्राप्य भजस्व माम्॥ ३३॥**

### शाङ्करभाष्यम्।

किं पुनरिति किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयः भक्ता राजर्षयस्तथा राजानश्च ते ऋषयश्चेति राजर्षयः यत एवमतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवर्जितं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम्॥ ३३॥

### आनन्दगिरिकृतटीका।

यदि पापयोनिः पापाचारश्च त्वद्भक्त्या परां गतिं गच्छति तर्हि किमुत जातिनिमित्तेन संन्यासादिना किंवा सहेत्येतेनेत्याशङ्क्याह किं पुनरिति उत्तमजातिमतां ब्राह्मणादीनामतिशयेन परा गतिर्यतो लभ्यते अतो भगवद्भजनं तैः एकान्तेन विधातव्यमित्याह यत इति मनुष्यदेहातिरिक्तेषु पश्वादिदेहेषु भगवद्भजनयोग्यताभावात् प्राप्ते मनुष्यत्वे तद्भजने प्रयतितव्यं इत्याह दुर्लभमिति॥ ३३॥

### स्वामिकृतटीका।

यदेवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परां गतिं यान्तीति किं वक्तव्यमित्याह किं पुनरिति पुण्याः सुकृतिनो ब्राह्मणाः तथा राजानश्च ते ऋषयश्चेति एवंभूताश्च परां-

### भाषा अनुवाद।

कोई निकृष्टजन्म चाण्डाल आदि क्योंनहो और स्त्रीमेभी वेश्या क्योंनहो वेश्याहीको वैश्या कहते स्वार्थमे अणप्रत्यय करनेसे वैश्या होता है और शूद्र येभी हमारी भजन करिके उत्तम गतिको प्राप्तहोते हैं यह निश्चय जानो जो कोई वैश्या का अर्थ वणिक् जातिपर लगाते उनकी भूल कितनी वडी है कि वेद ब्रह्म के अधिकारी तथा संध्या उपासना कर्मके अधिकारी तथा यज्ञ उपवीत कहे जनेउधारी द्विजाति शब्दसे प्रसिद्ध वैश्य कहे वणिक जन जो अनधिकारी हैं तो ब्राह्मण क्षत्रीभी तैसेही हैं मनमाना अर्थ करो वेदशास्त्र क्या करना है पर भाष्यकार आनन्दगिरि औ श्रीधरस्वामी वही अर्थ क्या समझ कर किया सो मूढ़ जन उन को आशय नहीं जानते आशय तो यह है कि जो वैश्य धर्म औ ब्राह्मण तथा वेद

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥ ३४॥

इति श्रीभगवद्गीतायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे राजगुह्यो नाम नवमोऽध्यायः॥ ९॥

शाङ्करभाष्यम्

कथं मन्मना इति मयि मनो यस्य तव स त्वं मन्मना भव तथा मद्भक्तो भव मद्याजी मद्यजनशीलो भव मामेव च नमस्कुरु मामेवेश्वरमेष्यसि आगमिष्यसि युक्त्वा समाधाय चित्तमेवमात्मानं मामेवमहं हि सर्वेषां भूतानाम् आत्मा परा च गतिः परमयनं तं मामेवम्भूतम् एष्यसीत्यतीतेन पदेन सम्बन्धः मत्परायणः सन्नित्यर्थः॥ ३४॥

इति शाङ्करभाष्ये नवमोऽध्यायः॥ ९॥

आनन्दगिरिकृतटीका।

भगवद्भक्तेरित्थम्भावं पृच्छति कथमिति ईश्वरभजने इति कर्त्तव्यतां दर्शयति मन्मना इति एवं भगवन्तं भजमानस्य मम किं स्यादित्याशङ्क्याह मामेवेति समाधाय भगवत्ये-

स्वामिकृतटीका।

गतिं यान्तीति किं वक्तव्यमित्यर्थः अतस्त्वं इमं राजर्षिरूपं देहं प्राप्य लब्ध्वा मां भजस्व किञ्च अनित्यमध्रुवं असुखं सुखरहितमेमं मर्त्यलोकं प्राप्य अनित्यत्वाद्विलम्बमकुर्वन् असुखत्वाच्च सुखार्थमुद्यमं हित्वा मामेव भजस्वेत्यर्थः॥ ३३॥

भाषा अनुवाद।

माने औ सकर्म से उपार्जन कीये हुए धन को सत्पात्र को न देय आपही खाय सोई वैश्य ऐसा है॥ ३२॥

अब सुनो कि मेरी भक्ति जो अनधिकारीयोंको मुक्ति देती तो फेरि ब्राह्मण कहे ब्राह्मणआदि तीनो वर्ण जो ब्राह्मण क्षत्री वैश्य पवित्र औ मेरे भक्त उनकी मुक्तिमे क्या संदेह है तिसमे राजर्षि अर्थात् राजवंश क्षत्रिय राजालोग जो दश दिक् पालोंके अंशसे प्रगट हैं उन को क्या कहना है सो तुम राजवंश होय इस अनित्य संसारके सुखको त्याग करिके इह लोक कहे नरदेह पाय हमको भजो॥ ३३॥

आनन्दगिरिकृतटीका ।

वेति शेषः एवमात्मानमित्थं तद्विद्यणोनि अहं शौति अहमेव परमयनं तत्रेति मत्परायण-स्तथाभूतः मामेवात्मानमेष्यसीति सम्बन्धः तदेवं मध्यमानां ध्येयं निरूप्य नवमेनाधमाना-माराध्याभिधानमुखेन निजेन पारमार्थिकेन रूपेण प्रत्युक्तेन ज्ञानं परमेश्वरस्य परमाराधन-मित्यभिधता सोपाधिकं तत्पदवाच्यं निरुपाधिकञ्च तत्पदलक्ष्यं व्याख्यातं ॥ ३४ ॥

इति आनन्दगिरिकृतटीकायां नवमोऽध्यायः ॥ ९ ॥

स्वामिकृतटीका ।

भजनप्रकारं दर्शयन्नुपसंहरति मन्मना इति मय्येव मनो यस्य स मन्मनास्त्वं भव तथा ममैव भक्तः सेवको भव मद्याजी मत्पूजनशीलो भव मामेव च नमस्कुरु एवमेभिः प्रकारैर्मत्परायणः सन्नात्मानं मनो मयि युक्त्वा समाधाय मामेव परमानन्दरूपमेष्यसि प्राप्स्यसि ॥ निजमैश्वर्यमाश्चर्यं भक्तेश्चाद्भुतवैभवं नवमे राजगुह्याख्ये कृपयाऽवोचदच्युतः ॥ ३४ ॥

इति स्वामीकृतटीकायां नवमोऽध्यायः ॥ ९॥

## भाषा अनुवाद ।

भजनका प्रकार देखावते हुए कहते हैं कि मेरेमे जिसका मन है ऐसे तुम मन्मना होउ और मेरेही भक्त होउ औ मेरीही पूजा करो और मेहीं को प्रणाम करो इसी प्रकारसे मत्परायण होके आत्मा जो मन तिसको मेरेमे योग कहे लगायके परम आनन्दरूप मेरे स्वरूपको प्राप्त होउगे इस नवयें अध्यायमे अपनी भक्तिका अद्भुत प्रभाव राजयोग नाम भगवानने प्रकाश किया हैं ॥ ३४ ॥

इति जगन्नाथ शुक्ल विरचित मनभावनी टीकायां

नवमोऽध्यायः ॥ ९ ॥

---

# श्रीमद्भगवद्गीता।

## दशमोऽध्यायः।

### श्रीभगवानुवाच।

**भूय एव महाबाहो शृणु मे परमं वचः।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया॥ १॥**

#### शाङ्करभाष्यम्।

सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते भावा वक्तव्याः तत्त्वं च भगवतो वक्तव्यम् उक्तमपि दुर्विज्ञेयत्वादित्यतो भगवानुवाच भूय इति भूय एव भूयः पुनः हे महाबाहो शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं यत्परमं ते तुभ्यं प्रीयमाणाय मद्वचनात् प्रीयसे त्वमतीवा-मृतमिव पिबंस्ततो वक्ष्यामि हितकाम्यया हितेच्छया॥ १॥

#### आनन्दगिरिकृतटीका।

अध्यायद्वये सिद्धमर्थं संक्षेपतोऽनुभाषते सप्तम इति तत्त्वं सोपाधिकं निरुपाधिकञ्च विभूतयः सविशेषनिर्विशेषरूपप्रतिपत्त्युपयोगिन्यः उत्तराध्यायद्वयेन सम्बन्धं वदन्नध्याया-न्तरमवतारयति अथेति वक्तव्याः सविशेषध्याने निर्विशेषप्रतिपत्तौ च शेषत्वेनेति शेषः ननु सविशेषं निर्विशेषञ्च भगवतो रूपं प्रागेव तत्र तत्रोक्तं तत् किमिति पुनरुच्यते तत्राह उक्तमपीति तद्यदि तत्र तत्र तत्त्वमुक्तं तथापि पुनर्वक्तव्यं दुर्विज्ञेयत्वादिति यतो मन्यतेऽत इति योजना प्रकृष्टत्वं वचसः स्पष्टयति निरतिशयेति तदेव वचो विशिनष्टि यत्परममिति सकृदुक्तेरर्थसिद्धेरसकृदुक्तिरनर्थिकेत्याशङ्क्याह प्रीयमाणायेति ततो वक्ष्यामि इति तुभ्यम् इति पूर्वेण सम्बन्धः॥ १॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणाञ्च सर्वशः ॥ २ ॥

### शाङ्करभाष्यम्।

किमर्थमहं वक्ष्यामीत्यत आह न म इति न मे विदुर्न जानन्ति सुरगणाः किं ते न विदुः मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम् अथवा प्रभवनम् उत्पत्तिं वा नापि महर्षयो भृग्वादयो विदुः कस्मात्ते न विदुरित्युच्यते अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥ २ ॥

### स्वामिकृतटीका।

उक्ताः संक्षेपतः पूर्वं सप्तमादौ विभूतयः दशमे ता वितन्वन्ते सर्वत्रेश्वरदृष्टये एवं तावत् सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयं परमेश्वरतत्त्वं निरूपितं तद्विभूतयश्च सप्तमे रसोऽहमप्सु कौन्तेयेत्यादिना संक्षेपतो दर्शिताः अष्टमे च अधियज्ञोऽहमेवात्रेत्यादिना नवमे चाहं क्रतुरहं यज्ञ इत्यादिना इदानीं ता एव विभूतीः प्रपञ्चयिष्यन् स्वभक्तेस्वाव-श्यकरणीयत्वं वर्णयिष्यन् श्रीभगवानुवाच भूय एवेति महान्तौ युद्धादिस्वधर्मानुष्ठाने मत्परिचर्य्यायां वा कुशलौ बाहू यस्य तथा हे महाबाहो भूय एव पुनरपि मे वचः शृणु कथंभूतं परमं परमात्मनिष्ठं मद्वचनामृतेनैव प्रीतिं प्राप्नुवते तुभ्यं हितकाम्यया हितेच्छया यदहं वक्ष्यामि तत् ॥ १ ॥

### भाषा अनुवाद।

सप्तम अध्यायसे लेकर नवम अध्याय पर्यन्त भगवानने अपनी विभूति औ सर्वत्र ईश्वरबुद्धि होना तथा आप अपना परमेश्वरत्व औ यज्ञ आदि सकल वस्तु नहींहूं और अपनी अनन्यभक्ति परमभक्त अर्जुनसे संक्षेपरूप कहा अब दशम अध्यायमे वही अपनी विभूतियों को विस्तार करि कहते हुये स्वभक्ति की अवश्य कर्त्तव्यता श्रीभगवान् कहते हैं कि हे महाबाहो अर्जुन तुम फेरि हमारे वचन सुनो परमात्मा विषयक मेरे वचन अमृत ऐसे श्रवण करि अतिप्रसन्न औ प्रीतियुक्त जो तुम सो तुमारी इच्छाके अनुसार तुमारे हित वचन मै कहता हूं तुम श्रवन करो ॥ १ ॥

योमामजमनादिञ्च वेत्ति लोकमहेश्वरम्।
असंमूढ़: स मर्त्त्येषु सर्व्वपापै: प्रमुच्यते॥ २॥

शाङ्करभाष्यम्।

किञ्च यो मामिति यो मामजमनादिञ्च यस्मादहमादिर्हि देवानां महर्षीणाञ्च न ममान्य: आदिर्विद्यतेऽहमजोऽनादिश्च अनादित्वमजत्वे हेतुस्तं मामजमनादिञ्च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महा-

आनन्दगिरीकृतटीका।

हितकाम्यया दुर्विज्ञेयं तत्त्वज्ञानं कश्चिदन्योऽपि परमं वचो मह्यं वक्ष्यति ते नच मम तत्त्वज्ञानं भविष्यत्यतो भगवद्वचनमकिञ्चित्करमिति शङ्कित्वा परिहरति किमर्थ-मित्यादिना इन्द्रादयो भृग्वादयश्च भगवत् प्रभावं न विन्दन्तीत्यत्र प्रश्नपूर्व्वकं हेतुमाह कस्मादिति निमित्तत्वेनोपादानत्वेन च यतो देवादीनां भगवानेव हेतुरतस्तद्विकारास्ते न तस्य तत्त्व प्रभावं विदुरित्यर्थः॥ २॥

स्वामिकृतटीका।

उक्तस्यापि पुनर्वचने दुर्ज्ञेयत्वं हेतुमाह न मे विदुरिति मे मम प्रभवं फलं जन्म-रहितस्यापि नानाविभूतिभिराविर्भावं सुरगणाऽपिमहर्षयोपि भृग्वादयो न जानन्ति तत्र हेतु अहं हि देवानां महर्षीणाञ्चादिः कारणं सर्वशः सर्वैः प्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्त्तकत्वेन च अतो मदनुग्रहं विना मां कोऽपि न जानन्तीत्यर्थः॥ २॥

भाषा अनुवाद।

कही हुई बातका जो पुनर्वार कहना तिसमे हेतु यह कि मेरा तत्व जानना अतिकठिन है सोई कहते हैं कि जन्मरहित होके भी जो विभूतियों के द्वारा मेरा आविर्भाव कहे प्रगट होना सो देवता औ भृगुप्रभृति महर्षि भी नहीं जानते हैं क्योंकि देवता औ महर्षियोंके उत्पन्न करनेवाले तथा बुद्धिके प्रवृत्ति देनहार आदिभूत कारणरूप हम हैं इसीसे हमारी कृपा विना हमको कोई जानने नहीं सकता है॥ २॥

## बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
## सुखं दुःखं भवो भावो भयञ्चाभयमेव च ॥ ४ ॥

शाङ्करभाष्यम् ।

त्मीश्वरमसंमूढ़ः संमोहवर्जित स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैः मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोच्यते ॥ ३ ॥

इतश्चाहं महेश्वरो लोकानां बुद्धिरिति यद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यं तद्वन्तं बुद्धिमानिति हि वदन्ति ज्ञानमात्मादिपदार्थानामवबोधः असंमोहः प्रत्युपपन्नेषु बोद्धव्येषु द्रव्येषु विवेकपूर्विका प्रवृत्तिः क्षमा आक्रुष्टस्य ताड़ितस्य वा अविकृतचित्तता सत्यं यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक् सत्यमुच्यते दमो बाह्येन्द्रियोपशमः शमोऽन्तःकरणस्योपशमः सुखं आह्लादो दुःखं सन्तापो भव उद्भव अभावस्तद्विपर्य्ययः भयञ्च त्रासोऽभयमेव च तद्विपरीतम् ॥ ४ ॥

आनन्दगिरिकृतटीका ।

इतश्च कश्चिदेव भगवत्प्रभावं वेत्तीत्याह किञ्चेति कोऽसौ प्रभावो भगवतो यं वक्ष्यन्ते न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तदधीनफलञ्च कथयति यो मामिति पदद्वयां पौनरुक्त्यमाह अनादित्वमिति ॥ ३ ॥

स्वामिकृतटीका ।

एवं भूतात्मज्ञाने फलमाह यो मामिति सर्व कारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिं अतएवाजं जन्मशून्यं लोकानां महेश्वरञ्च मां यो वेत्ति स मनुष्येषु सम्मोहरहितः सन् सर्वपापैः प्रमुच्यते ॥ ३ ॥

### भाषा अनुवाद ।

अब आत्मज्ञानका फल कहते हैं कि सबके कारणरूप हेतु और जिसका कोई कारण नहीं है ऐसे अनादि औ जन्मरहित सकल लोकके महेश्वर जो मैं सो मुझे जो कोई जाने हैं तो मनुष्योंके मध्यमे वही अच्छीतरह मोह रहित होके समस्त पापोंसे छूटि जाय है ॥ ३ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

शाङ्करभाष्यम् ।

अहिंसेति अहिंसा अपीड़ा प्राणिनां समता समचित्तता तुष्टिः सन्तोषः पर्य्याप्तबुद्धिर्लाभेषु तप इन्द्रियसंयमपूर्वकं शरीरपीड़नं दानं यथाशक्तिसंविभागः यशो धर्मनिमित्ता कीर्त्तिः अयशस्त्वधर्मनिमित्ता कीर्तिः भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात् पृथग्विधा नानाविधा स्वकर्मानुरूपेण ॥ ५ ॥

आनन्दगिरिकृतटीका ।

भगवतो लोकमहेश्वरत्वे हेत्वन्तरमाह इतस्तेति मुमुक्षुभिराराध्यत्वसिद्धये बन्धमोक्षसाधनं पुरस्कृत्यार्थैश्वजगत्प्रकृत्यधिष्ठातृत्वलक्षणं सोपाधिकं भगवत्प्रभावमभिधत्ते बुद्धिरिति सूक्ष्मादीत्यादिशब्देन सूक्ष्मतरः सूक्ष्मतमश्चार्थो गृह्यते उक्तसामर्थ्यं बुद्धिरित्यस्मिन्नर्थे प्रसिद्धिं प्रमाणयति तद्वन्तमिति अस्मादीति तदवबोधवन्तं हि ज्ञानिनं वदन्ति अन्तःकरणस्योपशमो विषयेभ्यो व्यावृत्तिरिति शेषः ॥ ४ ॥

स्वामिकृतटीका ।

लोकमहेश्वरतां स्फुटयति बुद्धिरिति त्रिभिः बुद्धिः सारासारविवेकनैपुण्यं ज्ञानमात्मविषयं असम्मोहो व्याकुलत्वाभावः क्षमा सहिष्णुत्वं सत्यं यथार्थभाषणं दमो बाह्येन्द्रियसंयमः शमोऽन्तःकरणसंयमः सुखमनुकूलसंवेदनीयं दुःखञ्च तद्विपरीतं भव उद्भवः अभावस्तद्विपरीतः भयं त्रासः अभयं तद्विपरीतं अस्य लोकस्य मत्त एव भवन्तीत्युत्तरेणान्वयः ॥ ४ ॥

भाषा अनुवाद ।

अब तीन श्लोकसे अपनी लोक की महेश्वरता प्रकाश करते हैं कि बुद्धि कहे सार असार वस्तु विचारकी चातुरी औ ज्ञान तथा असंमोह औ क्षमा सत्यवचन और दम कहे बाहर की इन्द्रियों का दमन अर्थात् रोकना औ शम कहे मनका निग्रह अर्थात् दबाना औ सुख दुख जन्म नाश औ भय अभय ये सब हमसे होते हैं ॥ ४ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥ ६॥**

शाङ्करभाष्यम्।

किञ्च महर्षय इति महर्षयः सप्तभृग्वादयः पूर्वेऽतीतकालसम्बन्धिन-श्चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः ते च मद्भावा मद्भावना वैष्ण-वेन वा सामर्थ्येनोपेता मानसा मनसैवोत्पादिता मया जाता उत्पन्ना येषां मनूनां महर्षीणाञ्च सृष्टिर्लोक इमाः स्थावरजङ्गमलक्षणाः प्रजाः॥ ६॥

आनन्दगिरिकृतटीका।

यथाशक्तीति पात्रे श्रद्धया स्वशक्तिमनतिक्रम्यार्थान् देशकालानुगुण्येन प्रतिपादन-मित्यर्थः उक्तानां बुद्ध्यादीनां साश्रयाणामीश्वरादुत्पत्तिं प्रतिजानीते भवन्तीति नानावि-धत्वे हेतुमाह स्वकर्मेति॥ ५॥

कथञ्चिदपि तेषामात्मातिरेकेण भावात् मत्त एवेत्युक्तं न केवलं भगवतः सर्वप्रकृतित्वमेव किन्तु सर्वज्ञत्वसर्वेश्वरत्वरूपमधिष्ठातृत्वमपीत्याह किञ्चेति आद्या भृग्वादयो वशिष्ठान्ताः सर्वज्ञा विद्यासम्प्रदायप्रवर्त्तकास्तथेति मनूनामपि पूर्वत्वेनाद्यत्वमनुकृष्यते के ते मनवस्तत्राह सावर्णा इति इति प्रसिद्धाः पौराणेषु प्रजानां पालकाः स्वयमीश्वराश्चेति शेषः महर्षीणां मनूनाञ्च तुल्यं विशेषणं ते चेति मयि सर्वज्ञे सर्वेश्वरे गता भावना येषां ते तथा भावनाक-

स्वामिकृतटीका।

किञ्च अहिंसेति अहिंसा परपीडानिवृत्तिः समता रागद्वेषादिराहित्यं तुष्टिर्दैवलब्धे-न सन्तोषः तपः शारीरादि वक्ष्यमाणं दानं न्यायार्जितस्य धनादेः पात्रेऽर्पणं यशः सत्कीर्त्तिः अयशो दुष्कीर्त्तिः एते बुद्धिज्ञानादयस्तद्विपरीताश्चाबुद्ध्यादयो नानाविधाः भावाः प्राणिनां मत्तः सकाशादेव भवन्ति॥ ५॥

भाषा अनुवाद।

और अहिंसा समता कहे प्रीति औ विरोध का अभाव औ तुष्टि कहे दैवाधीन यथालाभ सन्तोष औ तपस्या जो १७ अध्यायमे कहेंगे और दान कहे स्वधर्मसे उपार्जित जो धन औ सत्पात्र को देना और यश अयश ये नानाप्रकार के भाव सब हमहीसे उत्पन्न होते हैं॥ ५॥

**एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

शाङ्करभाष्यम् ।

एतामिति एतां यथोक्तां विभूतिं विस्तारं योगञ्च युक्तिं चात्मनो घटनमथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वञ्च योग उच्यते मम मदीयं योगं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत् सः अविकल्पेनाप्रचलितेन योगेन सम्यक्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते नात्र संशयः नास्मिन्नर्थे संशयोऽस्ति ॥ ७ ॥

आनन्दगिरिकृतटीका ।

तमाह वैष्णवेनेति वैष्णव्या शक्त्याऽधिष्ठितत्वेन ज्ञानैश्वर्यवन्त इत्यर्थः तेषां जन्मनो वैशिष्ट्यमाचष्टे मानसा इति मन्वादीनेव विशिनष्टि येषामिति विद्यया जन्मना च सन्ततिभूता मन्वादीनामस्मिन् लोके सर्वाः प्रजा इत्यर्थः ॥ ६ ॥

सोपाधिकं प्रभावं भगवतो दर्शयित्वा तज्ज्ञानफलमाह एतामिति बुद्ध्याद्युपा

स्वामीकृतटीका ।

किञ्च महर्षय इति सप्त महर्षयो भृग्वादयः सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गता इत्यादि पुराणप्रसिद्धास्तेभ्योऽपि पूर्व्वेऽन्ये चत्वारो महर्षयः सनकादयस्तथा मनवः स्वायम्भुवाद्यो मद्भावा मदीयो भावः प्रभावो येषु ते हिरण्यगर्भात्मनो ममैव मनसः सङ्कल्पमात्राज्जाताः प्रभावमेवाह येषामिति येषां भृग्वादीनां सनकादीनाञ्च इमा ब्राह्मणाद्या लोके वर्द्धमाना यथायथं पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाश्च प्रजाः प्रजायन्ते ॥ ६ ॥

भाषा अनुवाद ।

और भृगु आदि सप्त महर्षि येई पुराणोमे सात ब्राह्मण करके प्रसिद्ध हैं औ इनके भी पूर्व सनकादि चारि ब्राह्मण हैं और स्वयम्भू आदि चौदह मनु इन सबमे मेरा प्रभाव है और ये सकल हिरण्यगर्भ जो मै सो मेरी इच्छासे प्रगटे हैं येई सात ऋषियों से पुत्र पौत्र शिष्य प्रशिष्यं क्रमसे प्रजारूप ब्राह्मणादि वरण सकल जन्मे हैं ॥ ६ ॥

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ ८॥

## शाङ्करभाष्यम्।

कीदृशेनाविकल्पेन योगेन युज्यत इत्युच्यते अहमिति। अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिर्मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रिया सर्वं जगत्प्रवर्तते इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वार्थाः भावसमन्विताः भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः॥ ८॥

## आनन्दगिरिकृतटीका।

दानत्वेन विविधा भूतिर्भवनं वैभवं सर्वात्मकत्वं तदाह विस्तारमिति ईश्वरस्य तत्तदर्थसम्पादनसामर्थ्यं योगस्तदाह आत्मन इति योगस्तत्फलमैश्वर्य्यं सर्वज्ञत्वं सर्वेश्वरत्वञ्च मदीयं शक्तिज्ञानलेशमाश्रित्य मन्वादयो भृग्वादयश्च शते च तदाह अथर्वेति यथा तौ विभूतियोगो तथा निरङ्कुशत्वेनेति वेदनस्य निरङ्कुशत्वं दर्शयति यथावदिति सोपाधिकं ज्ञानं निरुपाधिकज्ञाने द्वारमित्याह सोऽविकल्पेनेति उक्तेऽर्थे प्रतिबन्धाभावमाह नास्मिन्निति॥ ७॥

कथं तावकविभूत्यैश्वर्यज्ञानमुक्तयोगस्य हेतुरिति मत्वा पृच्छति कीदृशेनेति उक्तज्ञानकाहात्म्यात् प्रतिष्ठिता भगवन्निष्ठा सिध्यतीत्याह उच्यत इति प्रभवत्यस्मादिति प्रभवः सर्वप्रकृतिः सर्वात्मेत्याह उत्पत्तिरिति सर्वज्ञात् सर्वेश्वरान्मत्तो निमित्तात् सर्गस्थिति-

## स्वामिकृतटीका।

यथोक्तविभूत्यादितत्त्वज्ञानस्य फलमाह एतामिति एतां भृग्वादिलक्षणां मम विभूतिं योगञ्चैश्वर्यलक्षणं तत्त्वतो यो वेत्ति सः अविकल्पेन निःसंशयेन योगेन सम्यग्दर्शनेन युक्तो भवति नास्त्यत्र संशयः॥ ७॥

## भाषा अनुवाद।

अब यह सब उक्त विभूति कहे अपनी सम्पतिके तत्त्वज्ञानका फल कहते हैं कि येई भृगु आदि हमारी विभूति औ ऐश्वर्यरूप योग हैं यह जो मनुष्य यथार्थसे जाने है सो संशयरहित सर्वज्ञ सम्यक् दर्शन होय है॥ ७॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

शाङ्करभाष्यम् ।

किञ्च मच्चित्ता इति मयि चित्तं येषां ते मच्चित्ता मद्गतप्राणाः मयि गताः प्राणाश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणा मय्युपसंहृतकरणा इत्यर्थः अथवा मद्गतप्राणा मद्गतजीवना इत्येतद् बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं कथयन्तो ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां तुष्यन्ति च परितोषमुपयान्ति रमन्ति च रतिञ्च प्राप्नुवन्ति प्रियसङ्गत्येव ॥ ९ ॥

आनन्दगिरिकृतटीका ।

नाथादि भवन्ति मयान्तर्यामिणाप्रेर्य्यमाणं सर्वं यथास्वां मर्यादामनतिक्रम्य चेष्टते तदाह मत्त इति इत्थं मम सर्वात्मत्वं सर्वप्रकृतित्वं सर्वेश्वरत्वं सर्वज्ञत्वञ्च महिमानं ज्ञात्वा मय्येव निष्ठावन्तो भवन्तीत्याह इत्येवमिति संसारासारताज्ञानवतां भगवद्भजनेऽधिकारं द्योतयति अवगतेति परमार्थतत्वे पूर्वोक्तरीत्या ज्ञाते प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वञ्च भगवद्भजने भवति हेतुरित्याह भावेति ॥ ८ ॥

स्वामिकृतटीका ।

यथाच विभूतियोगयोर्ज्ञाने सम्यग्ज्ञानावाप्तिस्तद्दर्शयति अहमित्यादिचतुर्भिः अहं सर्वस्य जगतः प्रभवो भृग्वादिमन्वादिरूपविभूतिद्वारेणोत्पत्तिहेतुः मत्त एव च सर्वस्य बुद्धि-ज्ञानमसंमोह इत्यादि सर्वः प्रवर्त्तते इत्येवं मत्वा अवबुध्य बुधा विवेकिनो भावसमन्विताः प्रीतियुक्ता मां भजन्ते ॥ ८ ॥

भाषा अनुवाद ।

अब विभूति औ योग जाननेसे जिस प्रकार सम्यक ज्ञान प्राप्ति होता है सोई चारि श्लोकसे देखावते हैं कि मैंहीं समस्त जगतका प्रभव अर्थात् भृगु आदि मनु आदि रूप विभूतिके द्वारा उत्पत्तिका हेतु हौं और हमींसे बुद्धि औ ज्ञान सकल उत्पन्न होते यही जानिके विवेकी लोग प्रीतियुक्त होय हमारी भजन करते हैं ॥ ८ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

### शाङ्करभाष्यम् ।

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः प्रीतिपूर्वकं तेषामिति तेषां सततयुक्तानां नित्याभियुक्तानां भजतां सेवमानानां किमर्थित्वादिना

### आनन्दगिरिकृतटीका ।

न केवलमुक्तमेव भगद्भजने साधनान्तरञ्चास्तीत्याह किञ्चेति ईश्वरात् प्रतीचः प्रागुक्तादन्यत्र चित्तप्रचारराहित्यं भगवद्भजनोपायमाह मयीति चक्षुरादीनां भगवत्प्राप्तिस्तदगोचरत्वात्तस्य त्वाशङ्क्याह मय्युपसंहृतेति मदतिरेकेण जीवनेऽपि नादरस्तदपि मय्येवार्पितं भक्तानामित्याह अथवेति आचार्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं ब्रह्मचारिणो बोधयन्ति तदपि भगवद्भजनसाधनमित्याह बोधयन्त इति आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्माणं शिष्येभ्यो गुरवो व्यपदिशन्ति तदपि भगवद्भजनमेवेत्याह कथयन्त इति भक्तानां तुष्टिरतोऽस्वरसतः स्यातामित्याह तुष्यन्तीति मनोरथपूर्त्या रतिप्राप्तौ कामुकसंमतमुदाहरणमाह प्रियेति ॥ ९ ॥

### स्वामिकृतटीका ।

प्रीतिपूर्वकं भजनमाह मच्चित्ता इति मय्येव चित्तं येषां ते मच्चित्ताः मामेव गताः प्राप्ताः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः मय्यर्पितजीवना इति वा एवं भूतास्ते बुधा अन्योन्यं मां न्यायोपेतैः श्रुत्यादिप्रमाणैर्बोधयन्तो बुद्धा च मां कथयन्तः संकीर्तयन्तः सन्तः नित्यं तुष्यन्ति अनुमोदनेन तुष्टिं यान्ति रमन्ति च निर्वृतिं यान्ति ॥ ९ ॥

### भाषा अनुवाद ।

प्रीतिपूर्वक भजनका स्वरूप कहते हैं कि जिसका चित्त मेरेहीमे निरत है सो मच्चित्त और जिसके प्राण कहे सकल इन्द्रिय अथवा जीवन मेरेमे अर्पित हैं ऐसे मद्गतप्राण विवेकी जन हमको बुद्धि औ श्रुतिप्रमाणसे जानते हैं और सर्वदा परस्पर मेरीही चर्चा करते हुये सदा सन्तुष्टमन मेरे गुणगानमे रममाण पूर्णकाम इस असार संसारके जञ्जालसे मुक्ति पावते हैं ॥ ९ ॥

तेषामेवानुकम्पार्थं महमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

शाङ्करभाष्यम् ।

कारणेनेत्याह प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतं आत्मत्वेनोपयान्ति प्रतिपद्यन्ते ॥ १० ॥

के ते ये मच्चित्तादिप्रकारैः मां भजन्ते किमर्थं कस्य वा तत्प्राप्तिप्रतिबन्धहेतोः नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददामीत्याकांक्षायामाह तेषामिति तेषामेव कथं नाम श्रेयः स्यादित्यनुकंपार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयाम्यात्मभावस्थः

आनन्दगिरिकृतटीका ।

यदुक्तं सोऽविकल्पेनेत्यादि तदर्थं भूमिकां कृत्वा तदिदानीमुदाहरति ये यथोक्तेति नित्याभियुक्तानामनवरतं भगवत्येकाग्रप्रपन्नानामित्यर्थः पुत्रादिलोकत्रयहेत्वर्थित्वेन वा गर्भदासत्वेन वा प्रत्यहं जीवनोपायसिद्धये वा भजनमिति शङ्कित्वा दूषयति किमित्यादिना प्रागुक्तां ज्ञानाख्यां भक्तिं स्नेहेन कुर्वतामित्यर्थः तेभ्योऽहं तत्त्वज्ञानं प्रयच्छामीत्याह ददामीति उक्तबुद्धिसम्बन्धस्य फलमाह येनेति ॥ १० ॥

स्वामिकृतटीका ।

एवंभूतानाञ्च सम्यग्ज्ञानमहं ददामीत्याह तेषामिति एवं सततयुक्तानां मय्यासक्तचित्तानां प्रीतिपूर्वकं भजतां तं बुद्धिरूपं योगमुपायं ददामि तमिति कं येनोपायेन ते मद्भक्ता मां प्राप्नुवन्ति ॥ १० ॥

भाषा अनुवाद ।

ऐसेही भक्तोंको हम ज्ञानप्रदान करते हैं सोई कहते हैं कि एवम्भूत जैसे सदा आसक्तचित्त औ प्रीतिपूर्बक भजनकारी भक्त लोगोंको मैं सोई बुद्धिरूप योग कहि उपाय देता हूं और उस उपायसे वे मेरे भक्त मुझे अनायासही प्राप्त होते हैं ॥ १० ॥

भाष्यम्।

आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादि साधनसंस्कारवत् प्रज्ञावर्त्तिनापि विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥ ११ ॥

आनन्दगिरिकृतटीका।

ध्यानजन्यप्रकर्षकाष्ठां गतान्तःकरणपरिणामे निरस्ताशेषविशेषे भगवद्रूपप्राप्तिहेतौ बुद्धियोगे प्रश्नपूर्वकभक्तानधिकारिणो दर्शयति के त इति भगवत्प्राप्तेर्बुद्धिसाध्यत्वे तस्यानित्यत्वापत्तेस्त्वं भक्तेभ्यो बुद्धियोगं ददासीत्ययुक्तमिति शङ्कते किमर्थमिति तेषां बुद्धियोगं किमर्थं ददासीति सम्बन्धः भगवत्प्राप्तिप्रतिबन्धकनाशको बुद्धियोगस्तेन नास्ति तत्प्राप्तेरनित्यत्वमित्याशङ्क्याह कस्येति भक्तानां तत्प्राप्तिप्रतिबन्धकं विविच्य दर्शयति इत्याकांक्षायामिति अविवेको नाद्यज्ञानं ततो जातं मिथ्याज्ञानं तदुभयमेकीकृत्य तमो विवक्ष्यते नच तन्नाशकत्वं जडस्य कस्यचित्तदन्तर्भूतस्य युक्तं तेनाहं नाशयामीत्युक्तं केवलचैतन्यस्य जडबुद्धिवृत्तेरिवाज्ञानाद्यनाशकत्वमाशङ्क्य विशिनष्टि आत्मेति तस्याशयस्तन्निष्ठो वृत्तिविशेषः वाक्योत्थबुद्धिवृत्त्यभिव्यक्तश्चिदात्मा सहायसामर्थ्यादज्ञानादि निवृत्तिहेतुरित्यर्थः बुद्धित्वबोधस्याज्ञानादिनिवर्त्तकत्वसुक्ताबोधे त्वबुद्धेस्तन्निवर्तत्वमिति पक्षान्तरमाह ज्ञानेति देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह विवेकेति भगवति सदा विच्छिन्नया भक्त्या तस्य प्रसादोऽनुग्रहः स एव स्नेहस्तेनासेचनद्वारा स्वोत्पत्तिमाह भक्तीति कर्य्येव भावनायामभिनिवेशो वातस्तेन प्रेरितोऽयं जायते नहि वातप्रेरणमन्तरेणादौ दीपस्योत्पत्तिरित्याह मद्भावनेति ब्रह्मचर्य्यमष्टाङ्गमादिशब्देन शमादिग्रहः तेन हेतुना कृतसंस्कारवती या प्रज्ञा तथाविधवर्त्ति निष्ठत्वायं नहि वर्त्यतिरेकेण दीपो निर्वर्त्तते तदाह ब्रह्मचर्य्येति नचाधाराद्दते दीपस्योत्पत्तिरदृष्टत्वादित्याह विरक्तेति तद्विषयेभ्यो व्यावृत्तं चित्तं रागाद्यकलुषितं तदेव निवातमपावरकं तत्र स्थितत्वमस्य दर्शयति विषयेति भास्वतेति विशेषणं विशदयति नित्येति सदातनं चित्तैकाग्र्यं तत्पूर्वकं ध्यानं तेन जनितं सम्यग्दर्शनफलं तदेव भाः तद्वता तत्पर्य्यन्तेनेत्यर्थः तेनाज्ञाने सकार्ये निवृत्ते भगवद्भावः स्वयमेव प्रकाशो भवतीति मत्वा व्याख्यातमेव पदमनुवदति ज्ञानेति ॥ ११ ॥

स्वामिकृतटीका।

बुद्धियोगं दत्त्वा च तस्यानुभवपर्यन्तं तमाविष्कृत्याविद्याकृतं संसारं नाशयामीत्याह तेषामिति तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जातं तमः संसाराख्यं नाशयामि अहं

## अर्जुन उवाच ॥

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

### शाङ्करभाष्यम् ।

यथोक्तां भगवतो विभूतिं योगञ्च श्रुत्वा अर्जुन उवाच परमिति परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान् पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौभवं देवमजं विभुं विभावनशीलं ॥ १२ ॥

### आनन्दगिरिकृतटीका ।

निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकञ्च सर्वात्मत्वादि भगवतो रूपं तद्विफलञ्च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन्पृच्छतीत्याह यथोक्तामिति परं ब्रह्म भवानिति लक्ष्यनिर्देशः तस्य लक्षणार्थं परं धामेत्यादिविशेषणत्रयं धामशब्दस्य स्थानवाचित्वं व्यावर्तयन् व्याचष्टे तेज इति तस्य चैतन्यस्य परमत्वं जन्मादिराहित्येन कौटस्थ्यं प्रकृष्टपावनमत्यन्तशुद्धत्वमुच्यते यदेवं लक्षणं परमं ब्रह्म तद्भवानेव नान्य इत्यर्थः कुतस्त्वमेवमसा-सीरित्याशङ्काप्रकाशादित्याह पुरुषमिति दिवि परमे व्योम्नि भवतीति दिव्यः सर्वप्रप-

### स्वामिकृतटीका ।

स्थितः सन् केन वा साधनेन तमो नाशयसीत्यत आह आत्मभावस्थो बुद्धिवृत्तौ स्थितः सन् भास्वता विस्फुरता ज्ञानलक्षणेन दीपेन नाशयामि ॥ ११ ॥

### भाषा अनुवाद ।

बुद्धियोग देकरके उन अपने भक्तों का फेरि अविद्याकृत संसार नाश करता हूं अब यह कहते हैं कि उनपर अनुग्रह करनेहीं के अर्थ उनके अज्ञानसे उत्पन्न जो संसार अन्धकार तिसको नाश करता हूं जो कहो कि किस स्थानमे वैठि और कौन प्रकारसे सो अन्धकार दूर करते हो तो कहते हैं कि आत्मभाव कहे बुद्धिवृत्ति मे अवस्थान करके प्रकाशमान तत्वज्ञान स्वरूप दीपके द्वारा अन्धकार दूर करता हों ॥ ११ ॥

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।**
**असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ॥ १३ ॥**

शाङ्करभाष्यम्।

ईदृशं आहुः कथयन्ति त्वामृषयो वशिष्ठादयः सर्वे देवर्षिर्नारदस्तथा असितो देवलोऽप्येवमाह व्यासश्च स्वयञ्चैव ब्रवीषि मे मह्यं ॥ १३ ॥

आनन्दगिरिकृतटीका।

ज्ञातीतं दीव्यति द्योतत इति देवः स चादिः सर्वमूलत्वादत एवाजस्तं त्वां सर्वगतमाहु-रिति सम्बन्धः ॥ १२ ॥

उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात् तद्वचनात्तद्यथोक्तं मह्यत्वं युक्त-मित्याह ईदृशमिति ऋषिग्रहणेन गृहीतानामपि नारदादीनां विशिष्टत्वात् पृथक्ग्रहणं असितो देवलस्य पिता किमन्यैस्त्वं स्वयमेवात्मानमुक्तरूपं मह्यमुक्तवानित्याह स्वयञ्चेति ॥१३॥

स्वामिकृतटीका।

संक्षेपेणोक्तां विभूतिं विस्तरेण जिज्ञासुर्भगवन्तं स्तुवन्नर्जुन उवाच परं ब्रह्मेति सप्तभिः परं ब्रह्म परं धाम च आश्रयः परमं पवित्रं भवानेव कुत इत्यत आह यतः शाश्वतं नित्यं पुरुषं तथा दिव्यं द्योतनात्मकं स्वयं प्रकाशं आदिश्चासौ देवश्चेति तं देवानामादिभूतमित्यर्थः तथा अजं अजन्मानं विभुञ्च व्यापकं त्वामेवाहुः ॥ १२ ॥

के ते इत्याह आहुरिति ऋषयो भृग्वादयः सर्वे देवर्षिश्च नारदः असितश्च देवलश्च व्यासश्च स्वयं त्वमेव साक्षान्मे मह्यं ब्रवीषि ॥ १३ ॥

**भाषा अनुवाद।**

**संक्षेपरूपसे कही गई जो विभूति उसको विस्तारसे जाननेकी इच्छा करिके अब अर्जुन भगवान की स्तुति करते हुये सात श्लोकसे कहते हैं कि आप परब्रह्म औ परमधाम कहे आश्रय औ पवित्र हो इस कारण यह कि नित्य कहे सदा वर्तमान पुरुष स्वयंप्रकाश आदिदेव औ जन्मशून्य सर्वव्यापी तुमको ऋषि लोग कहते हैं ॥ १२ ॥**

**कौन ऐसा कहते हैं तो इस पर कहते कि भृगु आदि ऋषिसकल और देवर्षि नारद असित ऋषि देवल व्यासदेव ये सब कहते हैं और आपभी साक्षात् हमसे कहते हो असित देवल के पिता हैं ॥ १३ ॥**

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
नहि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

## शाङ्करभाष्यम्

सर्वमिति सर्वमेतद्यथोक्तमृषिभिस्त्वया चैतदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे हे केशव नहि ते तव भगवन् व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥ १४ ॥

### आनन्दगिरिकृतटीका ।

ऋषिभिस्तथाचोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनीषेत्याह सर्वमिति किं तदित्याशङ्क्यात्मरूपमित्याह यन्मामिति देवादिभिः सर्वैरुच्यमानतया तद्रूपे विशिष्टवक्तृग्रहणमनर्थकमित्याशङ्क्याह नहीति प्रभवो नाम प्रभवोनिरुपाधिकस्वभावः यदा देवादीनामपि दुर्विज्ञेयं तव रूपं तदा का कथा मनुष्याणामित्यर्थः ॥ १४ ॥

### स्वामिकृतटीका ।

अतो ममेदानीं त्वदीयैश्वर्येऽसम्भावना निवृत्तेत्याह सर्वमेतदिति एतद्भवानेव परं ब्रह्मेत्यादि सर्वमपि ऋतं सत्यं मन्ये यन्मां प्रति त्वं कथयसि न मे विदुः सुरगणा इत्यादि तदपि सत्यमेव मन्ये इत्याह नहीति हे भगवंस्तव व्यक्तिं देवा न विदुः अस्मदनुग्रहार्थमियमभिव्यक्तिरिति न जानन्ति दानवाश्च अस्मन्निग्रहार्थमिति न विदुरेवेति ॥ १४ ॥

## भाषा अनुवाद ।

इससे अब आपके ऐश्वर्य्यमें असंभावनारूप बुद्धि निवृत्त होगई यह कहते हैं कि हे केशव आप जो कहते हो कि सब रूप हम हैं सो मैने सत्यकरि माना और जो आपने कहा कि सकल देवता हमको नहीं जानते वहभी यथार्थ करके मैने जाना है सोई अर्ज्जुन कहते हैं कि हे भगवन् भक्तों श्री देवतोंके अनुग्रह अर्थ जो तुमारे अवतार ग्रहण देवता नहीं जानते हैं और दानवभी यह नहीं जानते कि हमारे निग्रहके लिये भगवान का शरीरधारण भया है ॥ १४ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

शाङ्करभाष्यम् ।

यतस्त्वं देवादीनामादिरतः स्वयमिति स्वयमेवात्मनात्मानं वेत्थ जानासि त्वं कथम्भूत निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तमं भूतानि भावयतीति भूतभावनः तत्सम्बुद्धौ हे भूतभावन भूतेश भूतानामीश हे देवदेव जगत्पते ॥ १५ ॥

वक्तुमिति वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः आत्मनो

आनन्दगिरिकृतटीका ।

कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वद्रूपमित्यभिप्रेत्याह यत इति स्वयमेवोपदेशमन्तरेणेत्यर्थः आत्मना प्रत्यक्तेनाविषयतयेति यावत् आत्मानं निरुपाधिकं रूपं नच तव सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह निरतिशयेति पुरुषश्चासावुत्तमश्चेति चराचरातीतपूर्णचैतन्यरूपत्वं सम्बोधनेन बोध्यते सर्वप्रकृतित्वं सर्वकर्तृत्वञ्च कथयति भूतानीति सर्वेश्वरत्वमाह भूतानामिति उक्तं ते सोपाधिकं रूपं देवादीनामाराध्यताभधिगच्छतीत्याह देवेति जगतः सर्वस्य स्वामित्वेन पालयितृत्वमाह जगदिति ॥ १५॥

स्वामिकृतटीका ।

किं तर्हि स्वयमिति स्वयमेव त्वमात्मानं वेत्थ जानासि नान्यः तद्द्यात्मना स्वेनैव वेत्थ न साधनान्तरेण अत्यादरेण बहुधा सम्बोधयति हे पुरुषोत्तम उत्तमत्वे हेतुगर्भसम्बोधनानि हे भूतभावन भूतोत्पादक भूतानामीश नियन्ता देवानामादित्यादीनां देव प्रकाशक, जगत्पते विश्वपालक ॥ १५ ॥

भाषा अनुवाद ।

तो इसका फलित अर्थ क्या है इस आकांक्षापर कहते हैं कि हे पुरुषोत्तम आपही अपनेको जानते हो और कोई तुमको नहीं जाने हैं यह अति आदरसे वारंवार सम्बोधन देकर कहते हैं कि हे भूतभावन भूतेश देवदेव जगतत्पते इन सब सम्बोधनों से श्रीकृष्णका पुरुषोमत्त्वसाधन किया है ॥ १५ ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

शाङ्करभाष्याम् ।

विभूतयो यास्ता वक्तुमर्हसि याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमान् लोकांस्त्वं व्याप्य तिष्ठसि ॥ ॥ १६ ॥

कथमिति कथं विद्यां विजानीयां अहं हे योगिन् त्वां सदा परिचिन्तयन् केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन् मया ॥ १७ ॥

आनन्दगिरिकृतटीका ।

यस्मादस्मादृशामगोचरस्तवात्मा जिज्ञासितस्य तस्मात्त्वयैव तद्रूपं वक्तव्यमित्याह वक्तुमिति दिव्यत्वमप्राकृतत्वं संप्रत्यन्वयमन्वाचष्टे आत्मन इति वक्तव्याविभूतीर्विशिनष्टि याभिरिति यद्द्वारा लोकान् पूरयित्वा वर्त्तसे ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः ॥ १६ ॥

किमर्थं विभूतीः श्रोतुमिच्छतीत्याशङ्क्य ध्यानसौकर्यप्रकारप्रश्नेन फलं कथयति कथमिति योगो नामैश्वर्यं तदस्यास्तीति योगी तस्य सम्बुद्धौ हे योगिन्नहं स्वविष्टमतिस्त्वां केन प्रकारेण सततमनुसन्दधानो विशुद्धबुद्धिर्भूत्वा निरुपाधिकं त्वां विजानीयामिति प्रश्नः प्रश्नान्तरं प्रस्तौति केष्विति चेतनाचेतनभेदादुपाधिबहुत्वाच्च बहुवचनं ॥ १७ ॥

स्वामिकृतटीका ।

यस्मात्तवाभिव्यक्तिं त्वमेव वेत्सि न देवादयस्तस्माद्वक्तुमिति या आत्मनस्तव दिव्या अद्भुता विभूतयस्ताः सर्वा वक्तुं त्वमेवार्हसि योग्योऽसि याभिरिति विभूतीनां विशेषणं स्पष्टार्थं ॥ १६ ॥

कथनप्रयोजनं दर्शयन् प्रार्थयते कथमिति द्वाभ्यां हे योगिन् कथं कैर्विभूतिभेदैः

भाषाऽनुवाद ।

जिस हेतु तुमारा तत्त्व औ अभिव्यक्ति कहे प्रगट होना तुमको छोड़ि देवादिभी नहीं जानते इससे तुमारी जो अद्भुत विभूति सो तुमारेही कहने योग्य हैं कि जिन विभूतियों से तुम सकल लोकमे व्यापरहेहो सो अपनी उन दिव्य विभूतियों को कृपा करके कहो तो मेरे मनका सन्देह छूट जाय ॥ १६ ॥

**विस्तरेणात्मनो योगं विभूतिञ्च जनार्दन।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतं॥ १८॥**

## शाङ्करभाष्यम्।

विस्तरेणेति विस्तरेणात्मनो योगं योगैश्वर्यं शक्तिविशेषं विभूतिञ्च विस्तरं ध्येयपदार्थानां हे जनार्दन अर्द्देतेर्गतिकर्मणो रूपं असुराणां देव प्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दन अभ्युदयनिःश्रेयस-पुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा भूयः पूर्वमुक्तमपि कथय तृप्तिर्हि परितोषो यस्मान्नास्ति मे मम शृण्वतः त्वन्मुखनिःसृतवाक्यामृतं॥ १८॥

### आनन्दगिरिकृतटीका।

प्रकृतप्रश्नमुपसंहरति विस्तरेणेति अर्द्देतेर्गतिकर्मणो जनार्दनेतिरूपं तत् व्युत्पादयति असुराणामिति प्रकारान्तरेण शब्दार्थं व्युत्पादयति अभ्युदयेति ननु पूर्वमेव सप्तमे नवमे च विभूतिरैश्वर्यञ्चेश्वरस्य दर्शितं तत्किमिति श्रोतुमिष्यते तत्राह भूय इति अमृतममृत-प्रख्यमित्यर्थः॥ १८॥

### स्वामिकृतटीका।

सदा परिचिन्तयन्नहं त्वां विद्यां जानीयां विभूतिभेदेन चिन्त्योऽसि त्वं केषु केषु पदार्थेषु मया चिन्तनीयोऽसि॥ १७॥

तदेवं बहिर्मुखस्यापि चित्ते तत्र तत्र विभूति भेदेन त्वच्चिन्तैव यथा भवेत्तथा विस्तरेण कथयेत्याह विस्तरेणेति आत्मनस्तव योगं सर्वज्ञत्वं सर्वशक्तित्वादिलक्षणं योगैश्वर्यं विभूतिञ्च विस्तरेण पुनः कथय यतस्तव वाक्यममृतरूपं शृण्वतो मम तृप्तिरलं बुद्धिर्नास्ति॥ १८॥

### भाषा अनुवाद।

इससे अर्जुन अपने कहने का प्रयोजन देखलायकर प्रार्थना करते हैं कि हे योगिन् श्रीकृष्ण मैं तुमको किसतरह तुमारी विभूतिभेदके द्वारा निरन्तर भावना करि जानने सकोंगा और भिन्न भिन्न विभूति मे चिन्तनीय तुम कौन कौन पदार्थमे मेरी भावना के योग्य हो अर्थात् किस किस वस्तुमे तुमे हम जानै॥ १७॥

## श्रीभगवानुवाच ।

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**

### शाङ्करभाष्यम् ।

हन्त त इति हन्तेदानीं ते तव दिव्या दिवि भवा आत्मविभूतयः आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत् प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ अशेषतस्तु वर्षशतेनापि न शक्यते वक्तुमतो नास्त्यन्तो विस्तरस्य मे विभूतीनामित्यर्थः ॥ १९ ॥

### आनन्दगिरिकृतटीका ।

प्रश्नार्थं विस्पष्टयितुं भगवानुक्तवानित्याह श्रीभगवानिति हन्तेत्यनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति इदानीमिति दिवि भवत्वमप्राकृतत्वमस्मदगोचरत्वं वाक्यान्वयं द्योतयति यास्ता इति सर्वविभूतीनां वक्तव्यत्वप्राप्तावुक्तं यत्रेति किमित्यनवशेषतो विभूतयो नोच्यन्ते तत्राह अशेषतस्त्विति तत्र हेतुर्यतः इति ॥ १९ ॥

### स्वामिकृतटीका ।

एवं प्रार्थितः सन् श्रीभगवानुवाच हन्तेति हन्तेत्यनुकम्पासम्बोधने दिव्या या मद्विभूतयस्ताः प्राधान्येन तुभ्यं कथयिष्यामि यतोऽवान्तरस्य विभूतिविस्तरस्य मदीयस्यान्तो नास्ति अतः प्रधानभूताः कतिचिद्वर्णयिष्यामि ॥ १९ ॥

### भाषा अनुवाद ।

चित्तकी वृत्ति वहिर्मुख होनेपरभी उस समै तुमारी विभूतियों के द्वारा जिस प्रकार तुमारा चिन्तन होय ऐसी उपाय विस्तारसे कहो यह अर्जुन पूछते हैं कि तुमारा सर्वज्ञत्व और सर्वशक्तिमत्त्व आदि स्वरूप जो योगका ऐश्वर्य और सम्पूर्ण विभूति जो हैं सो सब हे जनार्दन विस्तारसे पुनर्वार कहो क्योंकि आपके अमृतस्वरूप वचन श्रवण करते हुये भी मेरा मन तृप्त नहो होता है ॥ १८ ॥

## अहमात्मा गुडाकेश सर्वभूताशयस्थितः।
## अहमादिश्च मध्यञ्च भूतानामन्त एव च ॥ २० ॥

### शाङ्करभाष्यम्।

तत्र प्रथममेव तावच्छृणु अहमिति अहमात्मा प्रत्यगात्मा गुडाकेश गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः घनकेश इति वा सर्वेषां भूतानां आशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयस्तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं चिन्तयितुं शक्यः यस्मादहमेवादिर्भूतानां कारणं तथा मध्यञ्च स्थितिरन्तः प्रलयएव एवञ्च ध्येयोऽहं ॥ २० ॥

### आनन्दगिरिकृतटीका।

विभूतिप्रदर्शने प्रस्तुते सत्यादावेव पारमार्थिकं पारमेश्वरं दर्शयितुं श्रीरर्जुनस्य मनः समाधानार्थम् अर्थयते तत्रेति सोपाधिकमपि काल्पनिकं परस्य रूपं पश्चाद्वक्ष्यमाणं श्रोतुश्चित्तसमाधानञ्च कर्त्तव्यमेवेत्याह तावदिति आशेरतेऽस्मिन् विद्याकर्मपूर्वप्रज्ञा इत्याशयो हृदयं सर्वेषां भूतानां हृदयेऽन्तःस्थितो यः प्रत्यगात्मा सोऽहमेवेति वाक्यार्थमाह सर्वेषामिति यस्तु मन्दो मध्यमो वा परमात्मानमात्मत्वेन ध्यातुं नालं तं प्रत्याह तदशक्तेनेति वक्ष्यमाणादित्यादिषु परस्य न ध्येयत्वमन्यदेव कारणं किञ्चित्तत्र तत्र ध्येयमित्याशङ्क्याह यस्मादिति सर्वकारणत्वेन सर्वज्ञत्वेन सर्वेश्वरत्वेन च परस्य ध्येयत्वमर्त्तेश्वितं नान्यस्य कस्यचित् कारणस्यादित्यादिषु ध्यायतेत्यर्थः उक्तध्यानशक्तेभ्यो वक्तव्यं विभूतियोगमुपदिशति एवञ्चेति तत्र तत्र प्रधानत्वेन परस्य ध्येयत्वं ॥ २० ॥

### स्वामिकृतटीका।

तत्र प्रथममैश्वरं रूपं कथयति अहमिति हे गुडाकेश सर्वेषां भूतानामाशयेष्वन्तःकरणेषु सर्वज्ञत्वादिगुणैर्नियन्तृत्वेनावस्थितः परमात्माहं आदिर्जन्म मध्यं स्थितिः अन्तः संहारः सर्वभूतानां जन्मादिहेतुश्चाहमेवेत्यर्थः ॥ २० ॥

### भाषा अनुवाद।

जब अर्जुनने ऐसी प्रार्थना किया तब भगवान कहते हैं कि हे कुरुश्रेष्ठ अर्जुन मेरी जो दिव्य विभूती हैं सो तुमको अच्छी प्रकार से कहूंगा और विस्तारसे कहने को तो मेरी विभूतियों का अन्त नहीं है इससे प्रधान प्रधान जो हैं सो सब कहूंगा ॥ १९ ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

शाङ्करभाष्यम् ।

आदित्यमिति आदित्यानां द्वादशानां विष्णुरस्म्यहं ज्योतिषां रविः प्रकाशयितॄणामंशुमान् रश्मिमान् मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि नक्षत्राणामहं शशी चन्द्रमाः ॥ २१ ॥

आनन्दगिरिकृतटीका ।

एवं शब्दार्थमेव दर्शयति आदित्यानामित्यादिना ॥ २१ ॥ मन्त्र ब्राह्मण समुदायानामृगादीनां मध्ये सामवेदोऽस्मीति ध्यानान्तरमुदाहरति वेदानामिति संधाने जीवा-

स्वामिकृतटीका ।

इदानीं विभूतीः कथयति आदित्यानामिति यावत्समाप्ति आदित्यानाञ्च द्वादशादित्यानां मध्ये विष्णुनामाहं ज्योतिषां प्रकाशकानां मध्ये अंशुमान् विश्वव्यापिरश्मियुक्तो रविः सूर्योऽहं मरुतां वायूनां मध्ये मरीचिनामाहमस्मि यद्वा सप्त मरुद्गणा देवविशेषास्तेषां मध्ये चन्द्रोऽहं अत्र चादित्यानामहं विष्णुरित्यादिषु प्रायशो निर्धारणे षष्ठी क्वचिच्च भूतानामस्मि चेतनेत्यादिषु सम्बन्धे षष्ठी तच्च तत्रैव दर्शयिष्यामः विष्णुरित्यादिष्ववतारोऽपि प्रभावातिशयमात्रविवक्षया विभूतित्वेन निर्दिश्यते अतः परस्याध्यायस्य स्पष्टार्थत्वेऽपि क्वचित् किञ्चिद् व्याख्यास्यामः ॥ २१ ॥

भाषा अनुवाद ।

अब प्रथम ईश्वरका स्वरूप कहते हैं कि हेगुडाकेश जितनिद्र अर्जुन परमात्मारूप मैं तावत् कहे सकल भूतमात्रके अन्तःकरणमें सर्वज्ञत्व आदि गुणोंसे नियन्तारूप स्थित हौं और आदि मध्य अन्त कहे सर्वभूतोंकी सृष्टि स्थिति संहारका हेतु भी मैंहीं हौं यह जानो गुडाका निद्राको कहते हैं अथवा गुडा कहे तुडवियाले घुंघराले हैं केश जिसके सो गुडाकेश है ॥ २० ॥

अब इस श्लोकसे लेकर अध्यायकी समाप्ति पर्यन्त अपनी विभूति कहते हैं कि बारह अदितिके पुत्रोंमें विष्णुनाम आदित्य मैं हूं औ प्रकाशक

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥ २२॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्॥ २३॥

शाङ्करभाष्यम्।

वेदानामिति वेदानां मध्ये सामवेदोऽस्मि देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि इन्द्रियाणामेकादशानां मनश्चास्मि चक्षुरादीनां सङ्कल्पविकल्पात्मकं मनश्चास्मि भूतानामस्मि चेतना कार्यकारणसंघातेऽभिव्यक्ता बुद्धेर्वृत्तिश्चेतना॥ २२॥

रुद्राणामिति रुद्राणामेकादशानां शङ्करश्चास्मि वित्तेशः कुवेरो यक्षरक्षसां यक्षाणां रक्षसाञ्च वसूनामष्टानां पावकश्चास्मि अग्निः मेरुः शिखरिणां शिखरवतामहं॥ २३॥

आनन्दगिरिकृतटीका।

शिष्टिते इति यावत् पञ्चत्वं सर्वत्र व्यापिनी चैतन्याभिव्यञ्जिकेति शेषः॥ २२॥ २३॥

स्वामिकृतटीका।

वेदानामिति वासव इन्द्रः भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिरहमस्मि॥ २२॥

रुद्राणामिति रक्षसामपि क्रूरत्वादिसाम्यात् यक्षैः सहैकीकृत्य निर्देशः तेषां मध्ये वित्तेशः कुवेरोऽस्मि पावकोऽग्निः शिखरिणां शिखरवतामुच्छ्रितानां मध्ये मेरुः॥ २३॥

भाषा अनुवाद।

रूपोंमे सर्वत्रव्यापी रविरूप मै हौं औ सात देवतों के वीच मरीचि नाम हमै जानो औ नक्षत्रोंमे चन्द्रमा भी महींको मानो॥ २१॥

और वेदोंमे साम वेद देवतोंमे इन्द्र औ इन्द्रियोके मध्यमे मन प्रधान इन्द्री मै हौं तथा भूत कहे प्राणियों के विषे चेतना जो ज्ञानशक्ति सो मै हौं॥ २२॥

पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

शाङ्करभाष्यम् ।

पुरोधसामिति पुरोधसां राजपुरोहितानां मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ बृहस्पतिं स हीन्द्रस्येति मुख्यः स्यात् पुरोधाः सेनानीनां सेनापतीनामहं स्कन्दो देवसेनापतिः सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥ २४ ॥

महर्षीणामिति महर्षीणां भृगुरहं गिरां वाचां पदलक्षणानामेकमक्षरमोङ्कारोऽस्मि यज्ञानामिति यज्ञानां जपयज्ञोऽस्मि स्थावराणां स्थितिमतां हिमालयः ॥ २५ ॥

आनन्दगिरिकृतटीका ।

पुरोहितेषु बृहस्पते र्मुख्यत्वे हेतुमाह स हीति ॥ २४ ॥

एकमित्योङ्कारस्य ब्रह्मप्रतीकत्वेन तदभिमानत्वेन च प्रधानत्वमुच्यते जपयज्ञस्य यज्ञा-

स्वामिकृतटीका ।

पुरोधसामिति पुरोधसां मध्ये देवपुरोहितान्मुख्यं बृहस्पतिं मां विद्धि सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि ॥ २४ ॥

भाषा अनुवाद ।

और एकादश रुद्रोंमे शङ्कर औ यक्ष राक्षसोंमे कुवेर मैं हौं अष्ट वसुवोंके वीच अग्नि औ पर्वतोंमे सुमेरु नाम पर्वत हमै जानो ॥ २३ ॥

और हे अर्जुन पुरोहितों मे मुख्य बृहस्पति हम हैं औ सेनापतियोंमे स्वामकार्त्तिक भी हम हैं और सरसां कहे थिर जलाशयों के मध्य समुद्र हमको जानो । २४ ॥

## अश्वत्थः सर्ववृक्षाणां देवर्षीणाञ्च नारदः।
## गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः॥ २६॥
## उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्।
## ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम्॥ २७॥

शाङ्करभाष्यम्।

अश्वत्थ इति अश्वत्थः सर्ववृक्षाणां देवर्षीणाञ्च नारदः देवा एव सन्त ऋषित्वं प्राप्ताः मन्त्रदर्शित्वात्ते देवर्षयः तेषां नारदोऽस्मि गन्धर्वाणां चित्ररथो नाम गन्धर्वोऽस्मि सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः॥ २६॥

उच्चैरिति उच्चैःश्रवसमश्वानां उच्चैःश्रवा नामाश्वस्तं मां विद्धि

आनन्दगिरिकृतटीका।

नरेभ्यो हिंसादिराहित्येन प्राधान्यमुपेत्याह यज्ञानामिति शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमित्युक्तोऽपि स्थितिशीलानां तेषामेव हिमवान् पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाह स्थितिमतामिति॥ २५॥ सर्ववृक्षाणामित्यत्र सर्वशब्देन वनस्पतयो

स्वामिकृतटीका।

महर्षीणामिति गिरां वाचां पदात्मिकानां मध्ये एकमक्षरमोङ्काराख्यं पदमस्मि॥ २५॥

अश्वत्थ इति देवा एव सन्तो ये मन्त्रदर्शनेन ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि सिद्धानामुत्पत्तित एवाधिगतपरमार्थतत्त्वानां मध्ये कपिलाख्यः मुनिरस्मि॥ २६॥

### भाषा अनुवाद।

और महर्षियोंमे भृगुमै हौं और अक्षर तथा पदआत्मक वाक्यके बीच आकार अक्षरभी मैं हौं औ यज्ञोंमे हिंसारहित हेतुसे जपरूप यज्ञ मै हौं तथा स्थावरोंमे हिमालय गिरि हम हैं॥ २५॥

और वृक्षजातियोंमे अश्वत्थ कहे पीपर औ देवऋषियोंमे नारद मै हौं औ गन्धर्वगणोंमे चित्ररथ नाम गन्धर्वराज मैं औ सिद्ध कहे आजन्मसे परमार्थ तत्त्व ज्ञानियोंमे कपिल मुनि मै हौं॥ २६॥

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः॥ २८॥**

### शाङ्करभाष्यम्।

जानीहि अमृतोद्भवं अमृतनिमित्तमथनोद्भवं ऐरावतमिरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां तं मां विद्धि इत्यनुवर्त्तते नराणां मनुष्याणाञ्च नराधिपं राजानं मां विद्धि जानीहि॥ २७॥

आयुधानामिति आयुधानामहं वज्रं दधीच्यस्थिसम्भवं मां विद्धि धेनूनां दोग्ध्रीणामस्मि कामधुक् वशिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक् प्रजनः प्रजनयितास्मि कन्दर्पः कामः चास्मि सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः॥ २८॥

### आनन्दगिरिकृतटीका।

गृह्यन्ते॥ २६॥ २७॥ प्रजनयतीति व्युत्पत्तिमाश्रित्याह प्रजनयितेति सर्पा नागाश्च जातिभेदाद्भिद्यन्ते॥२८॥ २९॥ ३०॥

### स्वामीकृतटीका।

उच्चैः श्रवसमिति अमृतार्थं चीराब्धिमथनादुद्भूतं उच्चैःश्रवसमश्वानां मद्विभूतिं विद्धि अमृतोद्भवमित्येतदैरावतेऽपि संबध्यते नराधिपं राजानं मां विद्धि॥ २७॥

आयुधानामिति कामान् दोग्धीति कामधुक् प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः कामोऽस्मि न केवलं सम्भोगमात्रप्रधानः कामो मद्विभूतिरशास्त्रीयत्वात् सर्पाणां सविषाणां राजा वासुकिरस्मि॥ २८॥

### भाषा अनुवाद।

अश्व कहे घोड़ोंमे उच्चैःश्रवा औ गजेन्द्रों मे ऐरावत तथा मनुष्योंमे नरपति कहे राजाभी मैंही हौं॥ २७॥

और आयुधोंमे वज्र औ धेनुवोंमे कामधेनु औ प्रजावोंका उत्पत्तिकारी जो कन्दर्प सो मै हौं तथा सर्पोंमे वासुकी नाम सर्पोंरभी हमै जोनो विष धारीयों की सर्पसंज्ञा है नाग विषरहित हैं॥ २८॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्य्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

शाङ्करभाष्यम् ।

अनन्त इति अनन्तश्चास्मि नागानां नागविशेषाणां नागराजः वरुणो यादसामहमब्देवतानां राजाहं पितॄणामर्य्यमा नाम पितृराजश्चास्मि यमः संयमवतां संयमनं कुर्वतामहं ॥ २९ ॥

प्रह्लाद इति प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानां कालः कलयतां कलनं गणनं कुर्वतामहं मृगाणाञ्च मृगेन्द्रः सिंहो व्याघ्रो वाहं वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणामहं ॥ ३० ॥

स्वामिकृतटीका ।

अनन्त इति नागानां निर्विषाणां राजा अनन्तः शेषोऽहमस्मि यादसां जलचराणां मध्ये राजा वरुणोऽस्मि पितॄणां राजा अर्य्यमास्मि संयमतां नियमनं कुर्वतां मध्ये यमोऽस्मि ॥ २९ ॥

प्रह्लाद इति कलयतां वशीकुर्वतां भक्षयतां मध्ये कालोऽहमस्मि मृगेन्द्रः सिंहः पक्षिणां मध्ये गरुड़ोऽस्मि ॥ ३० ॥

भाषा अनुवाद ।

नागोंमे अनन्त शेषनाग और जलजीवों मे वरुण राजा मै हौं औ पितरों मे अर्यमा तथा दण्डकारियों मे यमराज मै हूं नाग औ सर्प के बीच विषरहित को नाग कहते हैं ॥ २९ ॥

दैत्योंमे प्रह्लाद मै हौं और वशकरने वालोंमे अथवा संख्यामे काल मै हौं मृगजातिमे मृगेन्द्र कहे सिंह मै तथा पक्षियों मे गरुड़ मै हौं ॥ ३० ॥

सर्गाणामादिरन्तश्च मध्यश्चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

### शाङ्करभाष्यम् ।

पवनो वायुः पवतां पावयितॄणां अस्मि रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथी रामोऽहं झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहं स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥ ३१ ॥

सर्गाणामिति सर्गाणां सृष्टीनां आदिरन्तश्च मध्यञ्चैवाहमुत्पत्तिस्थितिलयानां अहमर्जुन भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्याद्युक्तमुपक्रम इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः अध्यात्मविद्या विद्यानां मोक्षार्थत्वात् प्रधानमस्मि वेदोऽर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानमतः सोऽहमस्मि प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥ ३२ ॥

### आनन्दगिरिकृतटीका ।

अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते तथाच पुनरुक्तिरित्याशङ्क्याह भूतानामिति सर्गशब्देन सृज्यन्त इति सर्वाणि कार्याणि गृह्यन्ते अध्यात्मविद्येति आत्मन्यन्तःकरणपरिणतिरविद्यावर्तिका गृहीता प्रवदतां सम्बन्धी वादो वीतरागकथा तत्वनिर्णयावसाना यदा प्रवदतामिति लक्षणया कथाभेदोपादानं तदा निर्द्धारणे षष्ठीत्याह प्रवक्त्रीति ॥ ३१ ॥ ३२ ॥ सर्वहरशब्दस्य सुखमर्थान्तरमाह अथवेति ॥ ३३ ॥

### स्वामिकृतटीका ।

पवन इति पवतां पावयितॄणां वेगवतां मध्ये वायुरहमस्मि रामो दासरथिः झषाणां मत्स्यानां मध्ये मकरनाम मत्स्यजातिविशेषोऽहं स्रोतसां प्रवाहोदकानां मध्ये भागीरथी ॥ ३१ ॥

### भाषाऽनुवाद ।

और पवित्र तथा वेगवानों मे पवन कहे वायु औ शस्त्रधारीयों मे राम दशरथके पुत्र हमको जानो तथा मछलियों मे मकर नाम मत्स्य मे हों और स्रोत कहे प्रवाहरूप नदियोंमे जाह्नवी गङ्गाभी मे हों ॥ ३१ ॥

## अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
## अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

### शाङ्करभाष्यम् ।

अक्षराणामिति अक्षराणां वर्णानामकारो वर्णोऽस्मि द्वन्द्वः समासोऽस्मि सामासिकस्य समाससमूहस्य किञ्च अहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणलवाख्यः अथवा परमेश्वरः कालस्यापि कालोऽस्मि धाताहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥

#### स्वामिकृतटीका ।

सर्गाणामिति सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यञ्चैवाहम् अहमादिश्च मध्यञ्चेत्यत्र स्रष्ट्रादिकर्तृत्वं पारमैश्वर्यमुक्तम् अत्र तु सृष्टिस्थितिप्रलया मद्विभूतित्वेन ध्येया इत्युच्यत इति विशेषः अध्यात्मविद्या आत्मविद्या प्रवदतां वादिनां सम्बन्धिन्यो वाद जल्प वितण्डाख्यास्तिस्रः कथाः प्रसिद्धास्तासां मध्ये वादोऽहं यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते सजल्पो नाम यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति न तु स्वपक्षं स्थापयति सा वितण्डानाम कथा तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्ति परीक्षामात्र फले वादस्तु वीतरागयोः शिष्याचार्ययोर्वा तत्वनिरूपणफलः स्तुतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥

अक्षराणामिति अक्षराणां वर्णानां मध्ये अकारोऽस्मि तस्य सर्ववाङ्मयत्वेन श्रेष्ठत्वात् तथाच श्रुतिः अकारो वै सर्वा वाक् सैषा स्पर्शोऽस्मभिव्यज्यमाना बह्वी नानारूपा भवतीति सूयत इति श्रैष्ठ्य सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेन श्रेष्ठत्वात् अक्षयः प्रवाहरूपः कालोऽहमस्मि कालः कलयतामहमित्यत्रायुर्गणनात्मकः संवत्सरशताद्यायुः स्वरूपकालः उक्तः स च तस्मिन्नायुषि

### भाषा अनुवाद ।

सर्ग कहे आकाशादि पदार्थोंमे आकाश जो आदि मध्य अन्तमे सदा वर्त्तमान सो मैं हौं अथवा सृष्टिमे आदि मध्य अन्त मैं हूं तथा हे अर्जुन विद्योंमे अध्यात्मविद्या औ प्रवादकरने वालोंके बीच वादरूप मैं हौं जिससे सिद्धान्त पक्ष स्थिर होता है ॥ ३२ ॥

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।**
**कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥**

शाङ्करभाष्यम्।

मृत्युरिति मृत्युर्द्विविधो धनादिहरश्च प्राणहरः तत्र यः सर्वहरः स उच्यते सोऽहमित्यर्थोऽथवा पर ईश्वरः प्रलये सर्वहरणात् सर्वहरः सोऽहमुद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं केषां भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसम्बन्धेनापि लोकाः कृतार्थमात्मानं मन्यन्ते ॥ ३४ ॥

आनन्दगिरिकृतटीका।

भाविकल्याणानामित्युक्तमेव स्फुटयति उत्कर्षेति कीर्तिर्धार्मिकत्वनिमित्ता ख्यातिः श्रीर्लक्ष्मीः कान्तिः शोभा वाक् वाणी सर्वस्य प्रकाशिका स्मृतिश्चिरानुभूतस्मरणशक्तिः मेधा ग्रन्थधारणशक्तिः धृतिर्धैर्यं क्षमा मानापमानयोरविकृतचित्तता स्त्रीषु कीर्त्यादीनामुत्तमत्वमुपपादयति यासामिति ॥ ३४ ॥

स्वामिकृतटीका।

क्षीणे सति क्षीयते अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलविधाताहमित्यर्थः ॥ ३३ ॥

मृत्युरिति संहारकाणां मध्ये सर्वहरो मृत्युरहं भवितां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहं नारीणां मध्ये कीर्त्याद्याः सप्त देवतारूपाः स्त्रियोऽहं यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्तीति ता कीर्त्याद्याः स्त्रियो मद्विभूतयः ॥ ३४ ॥

भाषा अनुवाद।

और अक्षरोंके मध्यमे अकार अक्षर मै हूं और समासों के विषे उभयपद प्रधान द्वन्द्व समास मै हूं और अक्षय प्रवाहरूप काल जो सो हम हैं और फल प्रदान करने वालोंमे विश्वतोमुख कहे सर्वप्रकार श्री सुवतरफसे सर्वफलका विधानकर्त्ता मैं हौं ॥ ३३ ॥

संहारकारियों के मध्यमे सर्वसंहारकारी मृत्युरूप हमको जानो और

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥

शाङ्करभाष्यम् ।

बृहत्सामेति बृहत्साम तथा साम्नां मोक्षप्रतिपादकसामवेदविशेषः प्रधानमस्मि गायत्री छन्दसामहं गायत्र्यादि छन्दोविशिष्टानामृचां गायत्री ऋगहमित्यर्थः मासानामिति मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरो वसन्तः ॥ ३५ ॥

आनन्दगिरिकृतटीका ।

वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह बृहदिति छन्दसां मध्ये गायत्री नाम यच्छन्दस्तदहमित्ययुक्तं छन्दसामृग्भ्योऽतिरेकेण स्वरूपाभावादित्याशङ्क्याह गायत्र्यादीति द्विजातेर्द्वितीयजन्मजननत्वादित्यर्थः मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासः सोऽहं पक्वशस्याढ्यत्वादित्याह मासानामिति वसन्तो रमणीयत्वादिति शेषः ॥ ३५ ॥

स्वामिकृतटीका ।

बृहदिति त्वां इन्द्रहवामह इत्यस्यां ऋचि गीयमानं बृहत्सामाहं तेन चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रैष्ठ्यं छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्री मन्त्रोऽहं द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात् कुसुमाकरो वसन्तः ॥ ३५ ॥

भाषा अनुवाद ।

होनेवाली वस्तुओंमें उद्भव पदार्थ हम हैं और स्त्रियों में सप्तनारी कहे कीर्त्ति श्री वाणी स्मृति मेधा धृति क्षमा ये रूप मेरे हैं कि जिनको पाय कर मनुष्य धन्य होते हैं ॥ ३४ ॥

और सामवेद में मन्त्र ब्राह्मण गद्य पद्यभूत श्रुतियोंके मध्यमें बृहत्साम नाम हमको जानो जिससे इन्द्र गायेजाते हैं और छन्द बन्धयुक्त मन्त्रों के मध्य गायत्री हम हैं और मास महीनोंमें मार्गशीर्ष कहे अगहन मास हम हैं औ ऋतुओंमें वसन्त ऋतु मै हौं ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्वं सत्ववतामहम् ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना: कविः ॥ ३७ ॥

### शाङ्करभाष्यम् ।

द्यूतमिति द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि तेजस्विनां तेजोऽहं जयोऽस्मि जेतॄणां व्यवसायोऽस्मि व्यवसायिनां सत्त्वं सत्त्ववतां सात्विकवतां सात्त्विकानामहं ॥ ३६ ॥

वृष्णीनामिति वृष्णीनां यादवानां वासुदेवोऽस्मि अयमेवाहं त्वत्सखा पाण्डवानां धनञ्जयस्त्वमेव मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः कवीनां क्रान्तदर्शिनामुशनाः कविरस्मि ॥ ३७ ॥

### आनन्दगिरिकृतटीका ।

द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यायापदेशेन पराभिप्रेतं निघ्नतां स्वाभिप्रेतं वा सम्पादयतामित्याह छलस्येति तेजोऽप्रतिहताज्ञा उत्कर्षो जयः व्यवसायः फलहेतुरुद्यमः धर्मज्ञानवैराग्यादि सत्त्वकार्यं सत्वम् उशनाः शुक्रः कविशब्दोऽत्र यौगिको न रूढः पौनरुक्त्यात् ॥ ३६ ॥ ३७ ॥

### स्वामिकृतटीका ।

द्यूतमिति छलयतामन्योन्यवञ्चनपराणां सम्बन्धिद्यूतमस्मि तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि जेतॄणां जयोऽस्मि व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि सत्ववतां सात्त्विकानां सत्त्वमहं ॥ ३६ ॥

वृष्णीनामिति वासुदेवो योऽहं त्वामुपदिशामि धनञ्जयस्त्वमेव मद्विभूतिः मुनीनां वेदार्थमननशीलानां वेदव्यासोऽस्मि कवीनां शास्त्रदर्शिनामुशनानामा कविः शुक्रः ॥ ३७ ॥

### भाषा अनुवाद ।

छलवस्तुवोंमे द्यूत कहे जुआ मै हौं और तेजस्वियोंमे तेज जो प्रताप सो मै तथा जय और व्यवसाय कहे उद्यमभी मै और सतोगुणी जितने हैं उनमे सतोगुण हम हैं ॥ ३६ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत् स्यान्मया भूतं चराचरं ॥ ३९ ॥

शाङ्करभाष्यम्।

दण्ड इति दण्डो दमयतां दमयितॄणामस्मि अदान्तानां दमनकारणं नीतिरस्मि जिगीषतां जेतुमिच्छतां मौनञ्चैवास्मि गुह्यानां गोप्यानां ज्ञानं ज्ञानवतामहं ॥ ३८ ॥

यच्चापीति यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं वा मया विना यत्

आनन्दगिरिकृतटीका।

अदान्तानुत्पथान् पथि प्रवर्तयतां दण्डोऽनुत्पथप्रवृत्तौ निग्रहे हेतुरित्यर्थः नीतिर्न्यायो धर्मस्य जयः पापस्य प्रकाशकः मौनं वाचः संयमस्तदुत्तमा वा चतुर्थाश्रमवृत्तिः श्रवणादिद्वारा परिपक्वसमाधिजन्यं सम्यग्ज्ञानम् ॥ ३८ ॥

स्वामिकृतटीका।

दण्ड इति दमयतां दमनकर्तॄणां सम्बन्धी दण्डोऽस्मि येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः जेतुमिच्छतां सम्बन्धिनी सामाद्युपायरूपा नीतिरस्मि गुह्यानां गोप्यानां गोपनहेतुर्मौनवचमस्मि नहि तूष्णीं स्थितस्याभिप्रायो ज्ञायते ज्ञानवतां तत्त्वज्ञानिनां यत् ज्ञानं तदहमस्मि ॥ ३८ ॥

भाषा अनुवाद।

और वृष्णिवंशियों मे वासुदेव कृष्ण हम हैं जो तुमको उपदेश करते हैं और पाण्डवोंमे अर्जुन जो तुम सो मे हूं औ मुनियों मे व्यासदेव तथा कवियोंमे उसना शुक्र हम हैं ॥ ३७ ॥

दमकरनेवालोंमे दण्डरूप हम तथा जीतनेवालों की नीति हमे मानों गुह्य पदार्थोंमे मौन जो सो हम हैं और ज्ञानवानों मे ज्ञानरूप भी हम को जानो है ॥ ३८ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

### शाङ्करभाष्यम् ।

स्याद्यन्मया ऽपकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्यादतो मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥

नान्तोऽस्तीति नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप नहीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनां इयत्ता शक्या वक्तुं ज्ञातुं वा केनचित् एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

### आनन्दगिरिकृतटीका ।

जाड्यमात्रप्रतिविम्बितं चैतन्यं वीजं किमिति स्थावरं जङ्गमं वा तद्‌तिरेकेण न भवति तत्राह मयेति तस्यापि स्वरूपेण सत्त्वमाशङ्क्योक्तं शून्यं हीति आत्मनोऽपकर्षादित्यर्थः मयैव सच्चिदानन्दस्वरूपेण सर्वस्य सिद्धेरित्यतः शब्दार्थः ॥ ३९ ॥

दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति नेत्यादिना तदेवोपपादयति नहीति कथं तर्हि विभूतेर्विस्तरो दर्शितस्तत्राह एष त्विति ॥ ४० ॥

### स्वामिकृतटीका ।

यच्चापीति यदपि सर्वभूतानां वीजं प्ररोहकारणं तदहं तत्र हेतुः मया विना यत् स्यात् भवेत् तच्चर मचरं वा भूतं नास्त्येवेति ॥ ३९ ॥

प्रकरणार्थमुपसंहरति नान्तोऽस्तीति अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते एष तु विभूतिविस्तर उद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

### भाषा अनुवाद ।

और यावत् जीवोंमे जो बीज सो हे अर्जुन हम हैं और जो मेरे विना है सो कुछ नहीं है अर्थात् चराचर मेरे विना कुछ वाको नहीं हैं देखो सकल वस्तु मे शक्ति औ चेतन रूप मै हूं ॥ ३९ ॥

जिस हेतु हे परन्तप अर्जुन मेरी दिव्य विभूतियों का अन्त नहीं है इससे सम्पूर्ण नहीं कही जाय सकतीं हैं इतनो जो कहा सो उद्देश कहे संक्षेपसे मैने तुम को लक्षित कराया है ॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवः ॥ ४१ ॥
अथवा बहुनैतेन किं ज्ञातेन तवाऽर्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥
इति श्रीभगवद्गीतायां योगशास्त्रे विभूतियोगो
नाम दशमोऽध्यायः ॥ १० ॥

शाङ्करभाष्यम् ।

यद्यदिति यत् यत् लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तुजातं श्रीमदूर्जितमेव वा श्रीः लक्ष्मीः तया सहितं उत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंऽशसम्भवं तेजसोंऽशः एकदेशः सम्भवो यस्य तत्तेजोंऽशसम्भवमित्यवगच्छ त्वं जानीहि ॥ ४१ ॥

आनन्दगिरिकृतटीका ।

अनुक्ता अपि परस्य विभूतीः संग्रहीतुं लक्षणमाह यद्यदिति वस्तु प्राणिजातं श्रीमत् समृद्धिमद्वा शोभावद्वा कान्तिमद्वा सप्रार्थं बलवदूर्जितं तदाह उत्साहेति सम्भवत्यस्मादिति सम्भवः तेजस्वैतन्यस्येश्वरशक्तेर्वा शस्तेजोऽंशः सम्भवोऽस्येति तेजोऽंशसम्भवं तदाह तेजस इति ॥ ४१ ॥

स्वामिकृतटीका ।

पुनश्च साकांक्षं प्रति कथञ्चित्साकल्येन कथयति यत् यदिति विभूतिमदैश्वर्ययुक्तं श्रीमत्सम्पत्तियुक्तं ऊर्जितं केनापि प्रभावबलादिना गुणेनातिशयितं यद्यत्सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन सम्भूतं जानीहि ॥ ४१ ॥

भाषा अनुवाद ।

यह सुनि अधिक श्रवणके आकांक्षी अर्जुनसे भगवान् संक्षेपरूप अपनी सर्वरूपता कहते हैं कि ऐश्वर्ययुक्त अथवा बलयुक्त या प्रभावयुक्त तथा विद्या बुद्धि रूप गुणयुक्त जो वस्तुमात्र है सो मेरे अंश प्रभाव से प्रगट जानो अर्थात् उसमें मेरा विशेष अंश है ॥ ४१ ॥

## शाङ्करभाष्यम् ।

अथवेति अथवा बहुना एतेनैवमादिना किं ज्ञातेन तवार्जुन स्यात् सावशेषेण अशेषतस्त्विममुच्यमानमर्थं शृणु विष्टभ्य विशेषतस्तम्भनं दृढं कृत्वा इदं कृत्स्नं जगत् एकांशेन एकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत्तथाच मन्त्रवर्णपादोऽस्य सर्वभूतानीति स्थितोऽहं इति ॥ ४२ ॥

इति श्रीशाङ्करभाष्ये दशमोऽध्यायः ॥ १० ॥

### आनन्दगिरिकृतटीका ।

सर्वेषां सुगमत्वादयावयवस्य विभूतिरुक्ता भक्तानुग्रहार्थं साकल्येन तामाह अथवेति पक्षान्तरपरिग्रहार्थमथवेत्युक्तं बहुना विस्तीर्णेनैतेन ग्रन्थेन संज्ञातेन सावशेषेण तव शक्तस्य न किञ्चित् फलं स्यादित्याह बहुनेति नहि विभूतियुक्तासु ज्ञातासु सर्वं ज्ञायते कासाञ्चिदेव विभूतीनामुक्तत्वादित्यर्थः तर्हि केनोपदेशेनाल्पाक्षरेण सर्वार्थो ज्ञातुं शक्यते तत्राह अशेषत इति विशेषतस्तम्भनं विधरणं सर्वभूतस्वरूपेण सर्वप्रपञ्चोपादानशक्त्युपाधिकेनैकेन पादेन कृत्स्नं जगत् विष्टभ्य स्थितोऽस्मीति सम्बन्धः तत्रैव श्रुतिं प्रमाणयति तथाचेति तदनेन भगवतो नानाविभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपदिशतान्ते सर्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा त्रिपादस्यामृतं दिवीति प्रपञ्चाधिकं निरुपाधिकं तत्वमुपदिशता परिपूर्णः सच्चिदानन्दैकतानः तत्पदलक्ष्योऽर्थो निर्द्धारितः ॥ ४२ ॥

इति आनन्दगिरिकृतटीकायां दशमोऽध्यायः ॥ १० ॥

### स्वामिकृतटीका ।

अथवा किमेतेन परिच्छिन्नविभूतिदर्शनेन सर्वत्र समदृष्टिमेव कुर्वित्याह अथवेति बहुना पृथग्ज्ञातेन किं तव कार्यं यस्मादिदं सर्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वा अहमेवावस्थितः न मद्व्यतिरिक्तं किञ्चिदस्ति पादोऽस्य विश्वाभूतानीति श्रुतेः इन्द्रियद्वारतश्चित्तं बहिर्धावति सत्यपि देशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत ॥४२॥

इति स्वामिकृतटीकायां दशमोऽध्यायः ॥ १० ॥

## भाषा अनुवाद ।

अथवा हे अर्जुन इस सब बखेडेसे तुमको क्या प्रयोजन है सकल वस्तुमे हमको देखो यह कहते हैं कि यावत् पदार्थमे मैं व्यापरहा हौं यह जगत मेरा रूप है तो मोहि छोडि कुछ मात्र अन्य नहीं है ॥ ४२ ॥

इति जगन्नाथशुक्लविरचितमनभाविनीनामभाषायां दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।

---

## अर्जुन उवाच ।

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितं ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

### शाङ्करभाष्यम् ।

भगवतो विभूतय उक्तास्तत्र च विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति भगवताभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत् साक्षात्-कर्त्तुमिच्छन्नर्जुन उवाच मदनुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यं अध्यात्म-संज्ञितमात्मानात्मविवेकविषयं निरतिशयं यत्त्वयोक्तं वचो वाक्यं तेन वचसा मोहोऽयं विगतो ममाविवेकबुद्धिरपगतेत्यर्थः ॥ १ ॥

### आनन्दगिरिकृतटीका ।

तेन तेनात्मना भगवदनुसन्धानार्थमुक्ता विभूतीरनुवदति भगवत इति परस्य सोपा-धिकं निरुपाधिकञ्च चिद्रूपं ध्येयत्वेन ज्ञेयत्वेन चोक्तमित्यर्थः सोपाधिकमैश्वरं रूपमशेष-जगदात्मकं विश्वरूपाख्यमधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तं कीर्त्तयति तत्र चेति यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्य जगतः कारणं सर्वज्ञं सर्वैश्वर्यवद्रूपमुक्तं तदिदं श्रुत्वा तस्य साक्षात्कारं यियाचयिषुरादौ तुष्टवानित्याह श्रुत्वेति मयि करुणां निमित्तीकृत्योपकारोऽनुग्रहस्तदर्थमिति वचसो विशेषणं निरतिशयत्वं परमपुरुषार्थसाध-नत्वं अशोच्यानित्यादित्वं पदार्थप्रधानवाक्यं मोहस्यायमित्यात्ममात्रिकत्वं दर्शयति ॥ १ ॥

### स्वामिकृतटीका ।

विभूतीर्भवं प्रोच्य कृपया परया हरिः । दिदृक्षोरर्जुनस्याथ विश्वरूपमदर्शयत् ॥
पूर्वाध्यायान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति विश्वात्मकं पारमेश्वररूप-

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

शाङ्करभाष्यम् ।

किञ्च भवेति भव उत्पत्तिरप्ययः प्रलयो भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशो मया न संक्षेपतस्त्वत्तः त्वत्सकाशात् कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वत् अक्षिणी यस्य तव स त्वं कमलपत्राक्षः हे कमलपत्राक्ष माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्त्तते ॥ २ ॥

आनन्दगिरिकृतटीका ।

अविवेकबुद्धिरज्ञानविपर्यासात्मिका सप्तमादारभ्य तत्पदार्थनिर्णयार्थमपि भगवदुक्तं वचो मया श्रुतमित्याह किञ्चेति तौ भूतानामुत्पत्तिप्रलयौ त्वत्तः श्रुतावित्याभ्यां सम्बध्यते महा-

स्वामिकृतटीका ।

सुपर्जिष्ट तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच मदनुग्रहायेति चतुर्भिः ममानुग्रहा-य शोकनिवृत्तये परमं परमात्मनिष्ठं गुह्यं गोप्यमपि अध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचः अशोच्यानन्वशोचस्त्वमित्यादि षष्ठाध्यायपर्यन्तं यद्वाक्यं तेन ममायं मोहोऽहं हन्ता एते हन्यन्त इत्यादि लक्षणभ्रमो विगतो विनष्टः आत्मनः कर्तृत्वाद्यभावोक्तेः ॥ १ ॥

भाषा अनुवाद ।

श्रीभगवान् कृष्णचन्द्रने अति कृपाकरके अपनी विभूतिका विभव अर्जुनसे कहा सो सुनि के दर्शनेच्छु अर्जुनको विष्टभ्याहमिदं कृत्स्नमे-कांशेन स्थितो जगदित्यादि श्लोकसे भगवानने विश्वात्मक परमेश्वर स्वरूप प्रसंगवशते देखाया तो अर्जुन भगवदुक्त पूर्ववचनों की प्रशंसा करते हुए अब एकादश अध्यायके आरम्भमें चारि श्लोकसे कहते हैं कि अशोच्या नन्वशो च स्त्वमित्यादि दूसरे अध्यायके ग्यारहें श्लोकसे लेकर छठयें अध्यायतक मेरे शोकनिवृत्ति के अर्थ परमात्मनिष्ठ अतिगोपनीय आत्म अनात्म विचार के जो वचन आपने कहा उनसे हम हन्ता औ ये शत्रुगण मारने योग्य ऐसी जो मेरी भ्रम सो नष्ट होगई क्योंकि आत्माको कर्तृत्व आदि कुछ नहीं है यह आपने कहा सो ठीकही है ॥ १ ॥

**एवमेतद्यथात्थ त्वमात्मानं परमेश्वरम्।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम॥ ३॥**

## शाङ्करभाष्यम्।

एवमिति एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि त्वमात्मानं परमेश्वरं तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम॥ ३॥

## आनन्दगिरिकृतटीका।

त्वत्तस्तव भावो माहात्म्यं पारमार्थिकं सोपाधिकं वा सर्वात्मत्वादिरूपं श्रुतमिति परिशेष्या-नुवृत्तिं द्योतयितुं अपिचेत्युक्तं॥ २॥

त्वदुक्तेऽर्थेऽविश्वासाभावात् न तस्मिन् दिदृक्षा किन्तु कृतार्थीबुभूषया इत्याह एवमेतदिति येन प्रकारेण सोपाधिकेन निरूपाधिकेन चेत्यर्थः यदि ममाप्तत्वं निश्चित्य मद्वाक्यं ते भाति

## स्वामिकृतटीका।

किञ्च भवेति भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशात् ते भवत इति श्रुतौ मया अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेत्यादौ विस्तरशः पुनः पुनः कमलस्य पत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव हे कमलपत्राक्ष माहात्म्यमपि चाव्ययं अक्षयं श्रुतं विश्वसृष्ट्यादिकर्तृत्वेऽपि सर्वनियन्तृत्वेऽपि शुभाशुभ कर्मकारयितृत्वेऽपि बन्धमोक्षा-दिविचित्र फलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्वञ्च श्रुतं अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय इति मया ततमिदं सर्वमिति न च मां तानि कर्माणीति समोऽहं सर्वभूतेष्वित्यादिना च अतस्त्वत्परतन्त्राणामपि जीवानामहं कर्त्तेत्यादि मदीयो मोहो विगत इति भावः॥ २॥

## भाषा अनुवाद।

और भूतों की सृष्टि तथा प्रलयभी आपहीसे होती यहभी मैने विस्तारसे सुना औ हे कमलपत्राक्ष श्रीकृष्ण आपका अव्यय कहे अक्षय माहात्म्य भी आपसे सुना तो अब जीव सकल आपके अधीन हैं यह जाना और अहं कर्त्ता भोक्ता इत्यादि मेरा मोह अब सम्पूर्ण दूर होगया॥ २॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययं ॥ ४ ॥**

शाङ्करभाष्यम् ।

मन्यस इति मन्यसे चिन्तयसि यदि मयार्जुनेन तत् शक्यं द्रष्टुमिति प्रभो स्वामिन् योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरः हे योगेश्वर यस्मादहमतीवार्थी द्रष्टुं ततः तस्मान्मे मम मदर्थं दर्शय त्वमात्मानमव्ययं ॥ ४ ॥

आनन्दगिरिकृतटीका ।

तर्हि किमिति मदुक्तं दिदृक्षते कृतार्थीबुभूषये इत्युक्तं मत्वाह तथापीति चतुर्भुजादिरूपनिवृत्त्यर्थमाह ऐश्वरमिति तद्व्याचष्टे ज्ञानेत्यादिना ॥ ३ ॥

द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशंक्याह मन्यस इति न प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्यः इति प्रभुः लक्षणया योगशब्दार्थमाह योगि इति तत इत्यादि व्याचष्टे यस्मादिति ॥ ४ ॥

स्वामिकृतटीका ।

किञ्च एवमेतदिति भवाप्ययौ हि भूतानामित्यादि मया श्रुतं यथा चेदानीमात्मानं त्वमात्थ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्येवं कथयसि हे परमेश्वर एतदेवमेव अत्राप्यविश्वासो मम नास्ति तथापि हे पुरुषोत्तम तवैश्वर्यं ज्ञानैश्वर्यशक्तिवीर्यादिभिः सम्पन्नं त्वद्रूपं कौतूहलादहं द्रष्टुमिच्छामि ॥ ३ ॥

नचाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यं किं तर्हि मन्यस इति योगिन एव योगास्तेषामीश्वर मयाऽर्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपं परमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥

भाषा अनुवाद ।

और जो आपने सप्तम अध्यायमे कहा कि भूतसृष्टि तथा प्रलय आदि कार्मों का कारण मै हूं और दशम अध्यायके अन्तमे कहा कि विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति औ अवमी जो रूप आप अपना कहते हो सो ऐसाही है इसमे हमै कुछ सन्देह नही है तौभी हे पुरुषोत्तम ज्ञान ऐश्वर्य बल वीर्य औ तेजसे सम्पन्न कहे युक्त तुमारे रूपको अति आश्चर्यसे मै देखने की इच्छा करता हूं ॥ ३ ॥

## श्रीभगवानुवाच ।

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

शाङ्करभाष्यम् ।

एवमुदितोऽर्जुनेन भगवानुवाच पश्य म इति पश्य मे मम पार्थ रूपाणि शतशोऽथ सहस्रशः अनेकश इत्यर्थः तानि च नानाविधानि अनेकप्रकाराणि दिविभवानि दिव्यान्यप्राकृतानि च नानावर्णाकृतीनि च नाना नीलपीतादिप्रकारा वर्णा विलक्षणास्तथा आकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥ ५ ॥

आनन्दगिरिकृतटीका ।

अर्ज्जुनमतिभक्तं सखायं प्रार्थितप्रतिश्रवणेनाश्वासयितुमाह एवमिति ॥ ५ ॥

स्वामिकृतटीका ।

एवं प्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन् सावधानो भवेत्येवमर्जुनमभिमुखीकरोति श्रीभगवानुवाच पश्येति चतुर्भिः रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनं अपरिमितानि अनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य वर्णाः शुक्लकृष्णादयः आकृतयः अवयवविशेषाः नाना अनेका वर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि ॥ ५ ॥

भाषा अनुवाद ।

और मेरी इच्छा देखने की है इस हेतु आपको अपना रूप देखावना उचित है यह कुछ बात नही है परन्तु हे योगेश्वर जो वह आपका ईश्वर स्वरूप हमारे देखने योग्य होय और हम देखने सकैं तो हे प्रभो वही अव्यय स्वरूप अपना रूप हमै कृपा करि दिखावो यह अर्जुनने कहा ॥ ४ ॥

जब ऐसी प्रार्थना अर्जुनने किया तब भगवान् श्रीकृष्णचन्द्रने अपने रूप देखावने का मनोरथ करके अर्जुनको सावधान होउ यह कहि

**पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**
**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरं ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

शाङ्करभाष्यम् ।

पश्यादित्यानिति पश्य आदित्यान् द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतः सप्तगणान् एतान् तथाच बहून्यन्यापि अदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित् पश्याश्चर्य्याणि रूपाख्यद्भुतानि भारत ॥ ६ ॥

आनन्दगिरिकृतटीका ।

दिव्यानि रूपाणि पश्येत्युक्तं तान्येव लेशतोऽनुक्रामति पश्यादित्यानिति तान् मरुतस्तथा पश्येति सम्बन्धः नानाविधानीत्युक्तं तदेव स्फुटयति बहूनीति अदृष्टपूर्वाणि पूर्वमदृष्टानि नानावर्णाकृतीनीत्युक्तं व्यनक्ति आश्चर्याणीति ॥ ६ ॥

स्वामिकृतटीका ।

तान्येवाह पश्येति आदित्यादीन् मम देहे पश्य मरुत एकोनपञ्चाशद्देवनाविशेषान् अदृष्टपूर्वाणि त्वया चान्येन वा पूर्वमदृष्टानि रूपाणि ॥ ६ ॥

भाषा अनुवाद ।

कारि चारि श्लोकसे कहते हैं कि हे पार्थ अर्जुन अपरिमित नाना प्रकारके अलौकिक मेरे रूप देखो और वर्ण कहे शुक्ल कृष्ण आदि आकृति कहे कर चरण अङ्ग सब यथा योग मेरा दिव्यरूप नानावर्ण नाना आकृति तुम देखो जो देखा चाहते हो ॥ ५ ॥

अब सोई आप कहते हैं कि हे भारत सब आदित्य औ वसुगण रुद्रगण तथा अश्विनीकुमार औ मरुतगण ये सब देवतोंको मेरी देह मे देखो और हे अर्ज्जुन मेरा रूप न तुमने न और किसीने कभी देखा है ऐसा अद्भुत मेरा रूप देखो ॥ ६ ॥

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्॥ ८॥**

शाङ्करभाष्यम्।

न केवलमेतावदेव इहैकस्थमिति इहैकस्थं एकस्मिन् स्थितं जगत् कृत्स्नं समस्तं पश्याद्येदानीं सचराचरं सह चरेणाचरेण वर्त्तते मम देहे गुडाकेश यच्चान्यज्जयपराजयादि यच्छंकसे यद्वा जयेम यदि वा नो जयेयुरिति यदवोचः तदपि द्रष्टुं यदीच्छसि॥ ७॥

किन्तु न तु मामिति न तु मां शक्यसे न स्वकीयेन चक्षुषा मां विश्वरूपधरं शक्यसे द्रष्टुमनेन प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा येन तु

आनन्दगिरिकृतटीका।

न केवलमादित्यवस्वाद्येव मद्रूपं त्वया द्रष्टुं शक्यं किन्तु समस्तं जगदपि मद्देहस्थं द्रष्टुमकृशीत्याह नेत्यादिना सप्तमीद्वयं मिथः सम्बध्यते समासान्तर्गतापि सप्तमी तत्रैवानीता यदीच्छसि तर्हि इहैव पश्येति सम्बन्धः॥ ७॥

स्वामिकृतटीका।

किञ्च इहैकस्थमिति तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन् मम देहेऽवयवरूपेणैकत्र स्थितमद्यावुनैव पश्य यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं जयपराजयादिकञ्च यच्च यदप्यन्यद्द्रष्टुमिच्छसि तत्सर्वं पश्य॥ ७॥

भाषा अनुवाद।

और इस ब्रह्माण्डके बीच हरएक स्थानों मे भ्रमण करते हुये जो सूर्य चन्द्र ग्रह नक्षत्रादि समस्त चराचर जिनको कोटि वर्षमे भी कोई नही देखि सके है सो सब स्थावर जङ्गम समेत सम्पूर्ण जगत इस मेरो शरीरमे अवयव कहे अङ्गरूप देखो और हे गुडाकेश अर्जुन जगतका आश्रय औ संसारकी अवस्था तथा जय पराजय आदि जो कुछ और देखा चाहो सो भी सब मेरे रूपमे देखो॥ ७॥

## सञ्जय उवाच ।

**एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ६ ॥**

### शाङ्करभाष्यम्

शक्यसे द्रष्टुं दिव्येन तद्दिव्यं ददामि ते तुभ्यं चक्षुस्तेन पश्य मे मम योगमैश्वरम् ईश्वरस्य ममैश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥ ८ ॥

एवं तं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन् धृतराष्ट्र महांश्चासौ योगेश्वरश्च महायोगेश्वरो हरिर्नारायणः दर्शयामास दर्शितवान् पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥ ६ ॥

### आनन्दगिरिकृतटीका ।

मन्यसे यदीत्युक्तमनुवदति किं त्विति सप्रपञ्चमनवच्छिन्नं मां स्वचक्षुषा न शक्नोषि द्रष्टुं इत्यत आह नत्विति कथं तर्हि त्वां द्रष्टुं शक्नुयामित्याशंक्याह येनेति दिव्यस्य चक्षुषो यच्छब्दायोगशक्त्यतिशयदर्शने विनियोगं दर्शयति तेनेति ॥ ८ ॥

इमं वृत्तान्तं धृतराष्ट्राय सञ्जयो निवेदितवानित्याह सञ्जय इति तदीयं विश्वरूपाख्यं रूपं न प्राकृतेन चक्षुषा निरीक्षितुं क्षमं किन्तु दिव्येन इत्यादि यथोक्तप्रकारः अनन्तरं दिव्यचक्षुषः प्रदानादिति शेषः हरत्यविद्यां स कार्य्यामिति हरिः यदीश्वरस्य मायोपहितस्य परमुत्कृष्टं रूपं तद्दर्शयाम्बभूवेत्याह परममिति ॥ ६ ॥

### स्वामिकृतटीका ।

यदुक्तमर्जुनेन मन्यसे यदि तच्छक्यमिति तत्राह नतु मामिति अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि अतो दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि मेऐश्वरमसाधारणं योगं युक्तिमघटनघटनासामर्थ्यं पश्य ॥ ८ ॥

### भाषाऽनुवाद ।

और जो अर्जुनने कहा कि वह स्वरूप मेरे देखने जोग्य होय तो देखावो इसपर कहते हैं कि हे अर्जुन इन अपने चर्मचक्षु कहे चमड़े की आंखोंसे हमारे उस रूप को न देख सकोगे इस से हम तुम को अलौकिक दिव्य ज्ञानचक्षु देते हैं सो मेरा ईश्वर स्वरूप अघटन घटना समर्थ का दर्शन भलो प्रकार से करो । ८ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्॥ १०॥

शाङ्करभाष्यम्।

अनेकेति अनेकवक्त्रनयनम् अनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तदनेकवक्त्रनयनम् अनेकाद्भुतदर्शनम् अनेकान्यद्भुतानि विस्मापकानि यस्मिन् रूपे तदनेकाद्भुतदर्शनं रूपं तथानेकदिव्याभरणम् अनेकानि दिव्याभरणानि यस्मिंस्तदनेकदिव्याभरणं तथा दिव्यानेकोद्यतायुधं दिव्यानि अनेकानि उद्यतानि आयुधानि यस्मिंस्तद्दिव्यानेकोद्यतायुधं दर्शयामासेति पूर्व्वेण सम्बन्धः॥ १०॥

आनन्दगिरिकृतटीका।

तदेव रूपं विशिनष्टि अनेकेति दिव्याभरणादीनि हारकेयूरादीनि भूषणान्युद्यतानि उच्छ्रितानि॥ १०

स्वामिकृतटीका।

एवमुक्त्वा भगवानर्जुनाय स्वरूपं दर्शितवांस्तञ्च रूपं दृष्ट्वाऽर्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थं षड्भिः श्लोकैर्धृतराष्ट्रं प्रति सञ्जय उवाच एवमुक्त्वेति हे राजन् धृतराष्ट्र महात्मासौ योगेश्वरश्च हरिः परमैश्वरं रूपं दर्शितवान्॥ ९॥

कथंभूतं तदित्यत आह अनेकवक्त्रनयनमिति अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत् अनेकानामद्भुतानां दर्शनं यस्मिंस्तत् अनेकानि दिव्याभरणानि यस्मिंस्तत् दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत्॥ १०॥

भाषा अनुवाद।

इस प्रकार से कहिकर भगवान ने अर्जुन को अपना विराटरूप देखाया तो वह रूप देखि कर अर्जुनने श्रीकृष्ण को जैसा जाना औ देखा सोई छःश्लोकसे राजा धृतराष्ट्रके प्रति सञ्जय कहते हैं कि हे राजन धृतराष्ट्र महात्मा श्रीकृष्ण योगेश्वर ने अर्जुनसे ये सब बातें करके अपना ऐश्वर्यविशिष्ट परम विराटरूप अर्जुन को दर्शन कराया॥ ९॥

अब किस प्रकार का वह रूप है सो कहते हैं कि अनेक हैं मुख

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतो मुखम् ॥ ११ ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

शाङ्करभाष्यम् ।

किञ्च दिव्येति दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाणि अम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं दिव्या गन्धा अनुलेपनं सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं देवमनन्तं नास्यान्तोऽस्तीति अनन्तस्तं विश्वतोमुखं सर्वभूतात्मत्वात् तं दर्शयामासार्जुनो ददर्शेति वा अध्याह्रियते ॥ ११ ॥

आनन्दगिरिकृतटीका ।

उक्तरूपवन्तं भगवन्तं प्रकारान्तरेण विशिनष्टि किञ्चेति अध्याहारोऽपि पदसंघटनासम्भवात् ॥ ११ ॥

स्वामिकृतटीका ।

किञ्च दिव्येति दिव्यानि माल्यान्यम्बराणि च धारयतीति तत् तथा दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत् सर्वाश्चर्यमयमनेकाश्चर्यप्रायं देवं द्योतनात्मकम् अनन्तमपरिच्छिन्नं विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

भाषा अनुवाद ।

कहे मुख औ नेत्र तथा अनेक अनेक हैं अद्भुत वस्तुवों के दर्शन जिसमें और अनेक दिव्य आभरण औ दिव्य अनेक आयुध धारण किये हैं जिसमें ऐसा निज रूप भगवान ने अर्जुन को देखाया ॥ १० ॥

और दिव्यमाल्य कहे पुष्प औ दिव्य अम्बर कहे वस्त्र तथा दिव्यगन्ध लेपन हैं जिस रूपमें और नाना आश्चर्ययुक्त तथा अनन्त अपरिच्छिन्न कहे किसी से आवृत नहीं औ सर्वत हैं मुख जिसमें सो रूप देखाया ॥११॥

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा॥ १३॥

शाङ्करभाष्यम्।

या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते दिवीति दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य युगपदुत्थिता भाः सा यदि सदृशी स्यात् तस्य महात्मनो विश्वरूपस्य भासो यदि वा स्यात् ततोऽपि विश्वरूपस्यैव भाः अतिरिच्यत इत्यभिप्रायः॥ १२॥

किञ्च तत्रैकस्थमिति तत्र तस्मिन् विश्वरूपे एकस्मिन् स्थितमेकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा देव पितृमनुष्यादिभेदैरपश्यत् दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डवार्जुनस्तदा॥ १३॥

आनन्दगिरिकृतटीका।

ननु प्रकृतस्य भगवतो रूपस्य दीप्तिरस्ति न वा न चेत् काष्ठादिसाम्यं यद्यस्ति कीदृशी सेत्याशङ्क्याह या पुनरिति सा यदि स्यात्तद्भासः सदृशी सेति योजना असंभाविताभ्युपगमार्थो यदि शब्दः स्याच्छब्दो निश्चयार्थः सां कथं सदृशी सम्भवति नतु भवत्येवेति विवक्षित्वाह यदि वेति॥ १२॥

न केवलमुक्तमेवार्जुनो दृष्टवान् किन्तु तत्रैव विश्वरूपे सर्वं जगदेकस्मिन्नेव स्थितमनुभूतवानित्याह किञ्चेति तदा विश्वरूपस्य भगवद्रूपस्य दर्शयामीत्यर्थः॥ १३॥

स्वामिकृतटीका।

विश्वरूपदीप्तेर्निरूपमत्वमाह दिविसूर्येति दिवि आकाशे सूर्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा महात्मनो विश्वरूपस्य भासः प्रभायाः कथञ्चित् सदृशी स्यात् अन्योपमा नास्त्येवेत्यर्थः तथाभूतं रूपं दर्शयामासेति पूर्वेणैवान्वयः॥ १२॥

भाषा अनुवाद।

और उस रूपकी निरुपम प्रभा प्रकाश करते हैं कि आकाशमें जो एककाल सहस्र सूर्यके उदयकी प्रभा होयउठे तो कदाचित उन महात्मा की कान्तिके कोई अंशकी उपमा होय तो होय नहीं तो उस रूपकी उपमा को संसारमें कोई नहीं है॥ १२॥

**ततः स विस्मयाऽविष्टो हृष्टरोमा धनञ्जयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

### शाङ्करभाष्यम् ।

तत इति ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाणि यस्य सोयं हृष्टो रोमा चाभवद्धनञ्जयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलि नमस्कारार्थं संपुटीकृतहस्तः सन्नभाषतोक्तवान् ॥ १४ ॥

### आनन्दगिरिकृतटीका ।

विश्वरूपधरस्य भगवतस्तस्मिन्नेकीभूतजगन्मोक्षविशेषस्य दर्शनानन्तरं किमकरोदित्यपेक्षायामाह तत इति आश्चर्यं बुद्धिर्विस्मयः रोमणां हृष्टत्वं पुलकितत्वं प्रकर्षो भक्तिश्रद्धयोरतिशयः ॥ १४ ॥

### स्वामिकृतटीका ।

ततः किं वृत्तमित्यपेक्षायामाह तत्रेति अनेकं वा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देव देवस्य शरीरे तदवयवत्वेनैकत्र व्यवस्थितं तदा पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥
एवं दृष्ट्वा किं कृतवानित्यत्राह तत इति ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन् हृष्टान्युत् पुलकितानि रोमाणि यस्य स धनञ्जयस्तमेव देवं शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वा अभाषत उक्तवान् ॥ १४ ॥

### भाषा अनुवाद ।

तिसके बादि क्या भया सो कहते हैं कि उस समय अर्जुन को नाना प्रकार शरीर के अनेक भाग में स्थित समस्त जगत श्रीकृष्ण एक अपनी शरीर मे एकवारगी देखाया ॥ १३ ॥

तब तो अर्जुन वह आश्चर्य रूप भगवान का रूप देखि अति कौतुक युक्त होय आनन्द से पुलकित तन भये और मस्तक झुकाय प्रणाम करि हाथ जोड़ि यह वचन बोलने भये ॥ १४ ॥

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

शाङ्करभाष्यम् ।

कथं यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन् अर्जुन उवाच पश्यामीति पश्याम्युपलभे हे देव तव देहे देवान् सर्वांस्तथा भूतविशेषसंघान् किञ्च ब्रह्माणं चतुर्मुखमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः ऋषींश्च वशिष्ठादीन् सर्वानुरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥ १५ ॥

आनन्दगिरिकृतटीका ।

कथं भगवन्तं प्रत्यर्जुनोऽभाषि अवादीति पृच्छति कथमिति तत् प्रश्नमपेक्षितं पूर्वमवतारयति यत्त्वयेति भूतविशेषसङ्घातेषु देवतानामन्तर्भावेऽपि पृथक्करणमुत्कृष्टत्वाद् ब्रह्मणः सर्वदेवतात्मत्वेऽपि तेऽभ्यो भेदकथनं तावदुत्पादकत्वादिति मत्वाह किञ्चेति ऋषीणामुरगाणाञ्च किञ्चिद्वैषम्यात् पृथक्त्वं दिव्यानीत्युभयेषां विशेषणम् ॥ १५ ॥

स्वामिकृतटीका ।

आश्चर्यमेवाह पश्यामीति सप्तदशभिः हे देव तव देहे देवानादित्यादीन् पश्यामि तथा सर्वान् भूतविशेषाणां जरायुजाण्डजादीनां संघांश्च तथा दिव्यानृषीन् उरगांश्च तक्षकादीन् तथा तेषां देवादीनामीशं स्वामिनं ब्रह्माणञ्च कथं भूतं कमलासनस्थं पृथ्वीपद्मकर्णिकायां मेरौ स्थितमित्यर्थः यद्वा त्वन्नाभिपद्मासनस्थमिति ॥ १५ ॥

भाषा अनुवाद ।

अब सञ्जय सत्रह श्लोकमें अर्जुन के कहे वचन धृतराष्ट्र के प्रति कहते सो ये हैं कि हे कृष्ण आपको शरीर में आदित्य औ तावत् भूतसमूह अर्थात् जरायुज मनुष्य पशु और अण्डज पक्षी सर्प आदि औ स्वेदज जुआं

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप॥ १६॥

शाङ्करभाष्यम्।

किञ्च अनेकेति अनेकबाहूदरवक्त्रनेत्रं अनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव त्वमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्र अनन्तरूपमनन्तानि रूपाणि अस्येत्यनन्तरूपस्त्वम् अनन्तरूपं नान्तम-न्तोऽवसानं न मध्यं नाम द्वयोः कोट्योरन्तरं न पुनस्तवादिं तव देवस्य न अन्तं पश्यामि न मध्यं पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर हे विश्वरूप॥ १६॥

आनन्दगिरिकृतटीका।

यत्र भगवद्देहे सर्वमिदं दृष्टं तमेव विशिनष्टि अनेकेति आदिशब्देन मूलमुच्यते नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं सम्बन्धं सूचयति नान्तं पश्यामीति॥ १६॥

स्वामिकृतटीका।

किञ्च अनेकेति अनेकानि बाह्वादीनि यस्य तादृशं त्वां पश्यामि अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि तव तु अन्तं मध्यमादिञ्च न पश्यामि सर्वगतत्वात्॥ १६॥

भाषा अनुवाद।

मच्छड षटमल प्रभृति तथा उद्भिज जो भूमि फोड़ के निकलते हैं यथा लता वृक्ष आदि ये सब देखता हौं और हे देव देवता सकल औ नाभि-कमल मे बैठे ब्रह्मा तथा ईश जो महादेव और दिव्य ऋषि वशिष्ट आदि औ उरग तक्षक आदि सर्प गणों को देखाता हूं पद्मासनस्थ ब्रह्मा किस प्रकार हैं सो कहते हैं कि पृथिवी रूप नाभि से उठा जो कमल स्वरूप सुमेरु गिरि तिसपर बैठे देखौं हौं॥ १५॥

और अनेक उदर और अनेक बाहु अनेक उदर अनेक मुख अनेक

किरीटिनं गदिनं चक्रिणञ्च
तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम्॥ १७॥

शाङ्करभाष्यम्।

किञ्च किरीटिनमिति किरीटिनं किरीटोनाम शिरोभूषणविशेषः तद्यस्यास्तीति स किरीटी तं किरीटिनं तथा गदिनं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्र मस्यास्तीति चक्री तं चक्रिणं च तेजोराशिं तेजः पुञ्जं सर्वतो दीप्तिमन्तं सर्वतो दीप्तिर्यस्यास्तीति सर्वतो दीप्तिमांस्तं सर्वतो दीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं समन्ततः सर्वत्र दीप्तानलार्कद्युतिम् अनलश्चार्कश्चानलार्कौ दीप्तौ अनलार्कौ दीप्तानलार्कौ तयोर्दीप्तानलार्कयोर्द्युतिरिवद्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्युतिम् अप्रमेयं न प्रमेय- मप्रमेयमशक्यपरिच्छेदमित्यर्थः॥ १७॥

आनन्दगिरिकृतटीका।

विश्वरूपवत्त्वं भगवत्तमेव प्रकारान्तरेण प्रपञ्चयति किञ्चेति परिच्छिन्नत्वं व्यावर्त्तयति सर्वत इति दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदाद्विरुद्धं पुरतो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किन्तु सर्वत्रेत्याह समन्तत इति दीप्तिमन्तं दृष्टान्तेन स्पष्टयति दीप्तेति॥१७॥

स्वामिकृतटीका।

किञ्च किरीटिनमिति मुकुटवन्तं गदावन्तं चक्रवन्तं तेजःपुञ्जरूपं तथा दुर्निरीक्ष्यं द्रष्टुमशक्यं तत्र हेतुः दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तम् अतएवाप्रमेयं एवंभूत इति निश्चेतुमशक्यं त्वां समन्ततः पश्यामि॥ १७॥

भाषा अनुवाद।

नेत्र स्वरूप तुमको सर्वत्र मे देखता हूं परन्तु हे विश्वरूप तुमारा आदि मध्य अन्त नहीं देखता हूं॥ १६॥

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतो धर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥**

## शाङ्करभाष्यम् ।

इत एव ते योगशक्तिदर्शनादनुमिनोमि त्वमिति त्वमक्षरं नक्षरतीति परमं परं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयते अस्मिन्निति निधानं परमाश्रय इत्यर्थः किञ्च त्वमव्ययो न च तव व्ययो विद्यत इति अव्ययः शाश्वतधर्मं गोप्ता शाश्वतभवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता सनातनश्चिरन्तनस्त्वं पुरुषः परो मतोऽभिप्रेतो मे मम ॥ १८ ॥

### आनन्दगिरिकृतटीका ।

सप्रपञ्चे भगवद्रूपे प्रकृते प्रकरणविरुद्धत्वमक्षरमित्यादि निरुपाधिकवचनमित्याशंक्याह इत एवेति योगशक्तिरैश्वर्यातिशयः न क्षरतीति निःप्रपञ्चत्वमुच्यते परमपुरुषार्थत्वात् परमार्थत्वाच्च ज्ञातव्यत्वं यस्मिन् द्यौः पृथिवीत्यादौ प्रपञ्चायतनस्यैव यतोनिकृष्टस्य ज्ञातव्यत्वश्रवणात् कुतो ब्रह्मणो ज्ञातव्यत्वं तत्राह त्वमस्येति निःप्रपञ्चस्य ब्रह्मणोऽव्ययत्वे हेत्वन्तरमाह किञ्चेति अविनाशित्वात्तवैव ज्ञातव्यतातिरिक्तस्यानाशित्वेन ज्ञेयत्वादित्यर्थः ज्ञानकर्मात्मनोधर्मस्य नित्यत्वं वेदप्रमाणकत्वं धर्मस्यापनयनार्थाय सम्भवामीत्युक्तत्वात्तु गोप्ता रक्षिता ॥ १८ ॥

### स्वामिकृतटीका ।

यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्त्वमिति त्वमेव अक्षरं परमं परब्रह्म कथभूतं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः अतएव त्वमव्ययो नित्यः शाश्वतस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरन्तनः पुरुषो मतो मे सम्मतोऽसि ॥ १८ ॥

## भाषा अनुवाद ।

और मुकुट गदा चक्र युक्त तथा तेज पुञ्ज सर्वत्र प्रकाशमान अतिदुर्निरीक्ष्य चक्षु और प्रदीप्त अनल अर्क के समान तुमको मैं देखता हूं ॥ १७ ॥

जिस हेतु तुमारा ऐश्वर्य ऐसा अचिन्त्य है इससे तुम अक्षर जो

अनादि मध्यान्तमनन्तवीर्य
मनन्तबाहुं शशिसूर्य नेत्रं।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

शाङ्करभाष्यम्।

किञ्च अनादीति मध्यान्तमादिश्च मध्यञ्च अन्तश्च न विद्यते यस्य सो यमनादि मध्यान्तस्तं त्वामनादि मध्यान्त मनन्तवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनन्तवीर्यस्तं त्वामनन्तवीर्यं तथा अनन्तबाहु मनन्ता बाहवो यस्य तव स त्वमनन्त बाहुस्तं त्वाम अनन्तबाहुं शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव सः त्वं शशिसूर्यनेत्रः तं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च तद्वत् वक्त्रं यस्य तव सत्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वं समस्तमिदं तपन्तं सन्तापयन्तम् ॥ १९ ॥

आनन्दगिरिकृतटीका।

भगवतो रूपं विश्वरूपाख्यं रूपमेव पुनर्विष्टणोति किञ्चेति हुतमश्नातीति हुताशो वह्निः ॥ १९ ।

स्वामिकृतटीका।

किञ्च अनादीति अनादिमध्यान्तम् उत्पत्तिस्थितिलयरहितं अनन्तम् वीर्यं प्रभावो यस्य तम् अनन्ता बाहवो यस्य तं शशिसूर्यौ नेत्रे यस्य तादृशं त्वां पश्यामि तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तं स्वतेजसा इदं विश्वं तपन्तं सन्तापयन्तं पश्यामि ॥ १९ ॥

भाषा अनुवाद।

परब्रह्म मुमुक्षु लोगों के जानने योग्य और तुम इस विश्वके निधान कहे परम आश्रय हो इससे तुम नाश रहित औ नित्य तथा नित्यधर्म्म के प्रतिपालक औ अनादि पुरुष मेरे मतमे हो ॥ १८ ॥

और अनादि मध्य अन्त कहे उत्पत्ति स्थिति लय रहित औ अनन्त प्रभाव

द्यावापृथिव्यो रिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

शाङ्करभाष्यम् ।

द्यावापृथिव्योरिति द्यावापृथिव्यो रिदमन्तरं हि अन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वाव्याप्ताः दृष्ट्वा उपलभ्य अद्भुतं विस्मापकं रूपमिदं तव उग्रं क्रूरं लोकत्रयं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन् अक्षुद्रस्वभाव ॥ २० ॥

आनन्दगिरिकृतटीका ॥

प्रकृतभगवद्रूपस्य व्याप्तिं वर्णयति द्यावापृथिव्योरितीति तस्यैव भयङ्करत्वमाचष्टे दृष्टेति ॥ २० ॥

स्वामिकृतटीका ॥

किञ्च द्यावापृथिव्योरिति द्यावापृथिव्यो रिदमन्तरमन्तरीक्षं त्वयैवैकेन व्याप्तं दिशश्च सर्वाव्याप्ताः अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमति-भीतं पश्यामीति पूर्वस्यैवानुषङ्गः ॥ २० ॥

भाषा अनुवाद ।

तथा अनन्त बाहु औ चन्द्र सूर्य हैं नेत्र जिसके ऐसे तुमको हम देखते हैं और अग्नि जिसके मुखमे जाज्वल्यमान है ऐसे आप अपने तेज से इस विश्वको सन्तप्त करते हुये तुमको मै देखो हौं ॥ १९ ॥

और हे महात्मन् स्वर्ग औ पृथिवी तथा अन्तरिक्ष और सकल दिशा एक आपही से व्याप्त हैं सो यह उग्ररूप आपका देखि करके त्रैलोक्य भय खाता है ॥ २० ॥

अमी हि त्वां सुरसंघा विशन्ति
केचिद्भीता: प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा सिद्ध महर्षि संघा
वीक्षन्ते त्वां स्तुतिभि: पुष्कलाभि: ॥ २१ ॥

शाङ्करभाष्यम्।

अथाधुना पुरा यद्वा जयेम यदि वा नो जयेयुरिति अर्जुनस्य संशय: आसीत् तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवान् तं पश्यन्नाह.अमीहीति किञ्च अमी हि युध्यमाना योधारस्त्वां सुरसंघा येऽत्र भूभारावतारायावतीर्णा वस्वादि देवसंघा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते तत्र केचिद्भीता: प्राञ्जलय: सन्तो गृणन्ति स्तुवन्ति त्वा-मन्ये पलायऽनेप्य सक्ता: सन्तो युद्धे प्रत्युपस्थिते उत्पातादि निमित्तान्यु-पलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षि सिद्धसंघा: महर्षीणाञ्च सिद्धानाञ्च संघा: स्तुवन्ति त्वां स्तुतिभि: पुष्कलाभि: संपूर्णाभि: ॥ २१ ॥

आनन्दगिरिकृतटीका।

अमीहीत्यादि समनन्तरग्रन्थस्य तात्पर्यमाह अथेति तं भगवन्तं पाण्डवजयमैकान्तिकं दर्शयन्तं पश्यन्नर्जुनो ब्रवीतीत्याह तं पश्यन्निति विश्वरूपस्यैव प्रपञ्चनार्थमनन्तरग्रन्थजात-मिति दर्शयति किञ्चेति असुरसंघा इति पदं स्थित्वा भूभारभूता दुर्योधनादयस् त्वां विशन्तीत्यपि च वक्तव्यम् उभयोरपि सेनयोरवस्थितेषु योद्धुकामेष्ववान्तरविशेषमाह अत्रेति समरभूमौ समागतानां द्रष्टुकामानां नारदप्रभृतीनां विश्वविनाशमाशङ्कमानानां तं परिजिहीर्षतां स्तु पदेषु भगवद् विषयेषु प्रवृत्तिप्रकारं दर्शयति युद्ध इति ॥ २१ ॥

स्वामिकृतटीका।

किञ्च अमी-हीति अमी सुरसङ्घा भीता: सन्तस्त्वां विशन्ति शरणं प्रविशन्ति तेषां मध्ये केचिदतिभीता दूरत एव स्थित्वा कृतसम्पुटकरयुगला: सन्तो गृणन्ति जय जय रक्ष रक्षेति प्रार्थयन्ते स्पष्टमन्यत् ॥ २१ ॥

भाषा अनुवाद।

और ये सम्पूर्ण देवता भयपाय तुमारे शरणागत हैं और कोई अति भीत होय दूरखडे करजोडे जय जय रक्ष रक्ष पुकार पुकार

रुद्राऽऽदित्यावसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्व यक्षाऽसुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

शाङ्करभाष्यम्।

किञ्चान्यत् रुद्रेति रुद्रादित्या वसवो ये साध्या च रुद्रादयो विश्वेश्विनौ विश्वे देवाः अश्विनौ च देवौ मरुतश्च वायव उष्मपाश्च पितरो गन्धर्वयक्षासुरसिद्धसंघाः गन्धर्वा हाहा हूहू प्रभृतयो यक्षाः कुवेरप्रभृतयः असुरा विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां संघाः गन्धर्वयक्षासुरसिद्धसंघास्ते वीक्षन्ते पश्यन्ति त्वा त्वां विस्मिताः विस्मयमापन्नाः सन्तत एव सर्वे ॥ २२ ॥

आनन्दगिरिकृतटीका।

दृश्यमानस्य भगवद्रूपस्य विस्मयकरत्वे हेत्वन्तरमाह किञ्चेति त एवोक्ता रुद्रादयः सर्वे विस्मयमापन्नास्त्वां पश्यन्तीति सम्बन्धः ॥ २२ ॥

स्वामिकृतटीका।

किञ्च रुद्रेति रुद्राश्च आदित्याश्च वसवश्च ये च साध्यानाम देवाः विश्वेदेवाः अश्विनौ देवौ मरुतो मरुद्गणाश्च उष्माणं पिबन्तीत्युष्मपाः पितरः उष्मभं भः गाहि पितर इति श्रुतेः मुनिश्च यावदुष्णं भवेदन्नं तावदश्नन्ति वाग्यताः तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः गन्धर्वाश्च यक्षाश्च असुराश्च विरोचनादयः सिद्धसंज्ञाः सिद्धानां संघाश्च सर्व एव विस्मिताः सन्तस्त्वां वीक्षन्त इत्यन्वयः ॥ २२ ॥

भाषा अनुवाद।

प्रार्थना करते हैं और महर्षि तथा सिद्धसंघ तुमको देखते स्वस्ति वचन उच्चारते हुये संपूर्ण स्तुति से स्तुति करते हैं ॥ २१ ॥

और रुद्रगण आदित्यगण वसुगण औ साध्यगण देवगण तथा विश्वे देवा अश्विनीकुमार औ मरुतगण - पितृगण - उष्माद्रव्य पान करनेवाले

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

शाङ्करभाष्यम्।

यस्मात् रूपमिति रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं हे महाबाहो बहुबाहूरुपाद बहवो बाहव: ऊरव: पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादं किञ्च बहूदरं बहूनि उदराणि यस्मिन्निति तत् बहूदरं बहुदंष्ट्राकरालं बह्वीभि: दंष्ट्राभि: करालं विकृतं तद्बहुदंष्ट्राकरालं दृष्ट्वा रूपमीदृशं लोका: लौकिका: प्राणिन: प्रव्यथिता: प्रचलिता भयेन तथाहम् ॥२३॥

आनन्दगिरिकृतटीका।

लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति यस्मादिति ईदृशं यस्मात्ते रूपं तस्मात्त्वां दृष्ट्वेति योजना भयेन लौकिकवदहमपि व्यथितो व्यथां पीड़ां देहेन्द्रियप्रचलनं प्राप्तोऽस्मीत्याह तथेति ॥ २३ ॥

स्वामिकृतटीका।

किञ्च रूपमिति हे महाबाहो महदत्यूर्जितं तव रूपं दृष्ट्वा लोका: सर्वे प्रव्यथिता अतिभीता: तथाहञ्च प्रव्यथितोऽस्मि कीदृशरूपं दृष्ट्वा बहूनि वक्त्राणि नेत्राणि च यस्मिं-

भाषा अनुवाद।

पितृगण धर्म्मशास्त्र औ श्रुति मे ऐसे कहा है कि पितृगण तबतक मौन भोजन करते जबतक अन्न उष्ण है और यावत पितृ उद्देश करिके दिये हुये अन्न का गुण वर्णन रूप मधुवातादि वैदिक मन्त्र पाठ समाप्त नहीं होती तावत पितर अन्न खाते हैं और गन्धर्वगण यक्षगण औ विरोचन प्रभृति कहे असुरगण औ सिद्धगण सकल विस्मय आदि से युक्त होय के तुमको खड़े देखते हैं। २२ ॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमञ्च विष्णो ॥ २४ ॥

शाङ्करभाष्यम् ।

तत्रेदं कारणं नभःस्पृशमिति नभःस्पृशं द्युस्पृशमित्यर्थः दीप्तं प्रज्वलितम् अनेकवर्णम् अनेकवर्णा भयङ्करा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननं दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमञ्चोपशमं मनस्तुष्टिं हे विष्णो ॥ २४ ॥

आनन्दगिरिकृतटीका ।

अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमाह तत्रेति ॥ २४ ॥

स्वामिकृतटीका ।

स्तत् बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत् बहून्युदराणि यस्मिंस्तत् बह्वीभिर्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः ॥ २३ ॥

न केवलं भीतोऽहमेतावदेव अपि तु नभ इति नभः स्पृशतीति नभस्पृक् तं अन्तरीक्षव्यापिनमित्यर्थः दीप्ततेजो युक्तं अनेका वर्णा यस्य तं व्यात्तानि विवृतान्याननानि यस्य

भाषा अनुवाद ।

और हे महाबाहो यह महान् तुम्हारा रूप जिस मे बहुत मुख नेत्र बाहु ऊरु पाद उदर हैं और जो बहुतेरे दांतों से अति कराल कहे भयानक हैं इन को देख कर सकल लोक व्यथित हैं और मैभी तैसे ही अति पीडित हौं ॥ २३ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥२५॥

शाङ्करभाष्यम्।

कस्मात् दंष्ट्राकरालानीति दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसन्निभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलस्तत्सन्निभानि कालानलसदृशानि दृष्ट्वेत्येतद्दिशः पूर्वापरविवेकेन न जाने दिङ्मूढोऽस्म्यतो न लभे न चोपलभे च शर्म्म सुखमतः प्रसीद प्रसन्नो भव देवेश जगन्निवास ॥ २५ ॥

आनन्दगिरिकृतटीका।

दृश्यमानेऽपि भगवद्देहे परितोषाद्यभावे कारणान्तरं प्रश्नपूर्वकमाह कस्मादिति दृष्ट्वेत्येवकारेण प्राप्तिर्व्यावर्त्तते ॥ २५ ॥

स्वामिकृतटीका।

तं दीप्तानि विशालानि नेत्राणि यस्य तम् एवंभूतं हि त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्य्यमुपशमञ्च न लभे ॥ २४ ॥

किञ्च दंष्ट्रेति हे देवेश तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि शर्म च सुखं न लभे भो जगन्निवास प्रसन्नो भव कीदृशानि मुखानि दृष्ट्वा दंष्ट्राभिः करालानि कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥

भाषाऽनुवाद।

और मैंहीं केवल डरा हूं यह नहीं ऐसा आपका रूप आकाश को परस करनेवाला अर्थात् शून्यव्यापी तेजयुक्त नानावर्ण विशिष्ट विस्तार को प्राप्त औ जलजलाते हैं विशाल कहे बड़े बड़े नेत्र जिस मे ऐसे तुमारे रूप को अवलोकन करि हे विष्णो हमारा अन्तरात्मा व्यथायुक्त है और मे इस रूप को देखते हुये शान्ति तथा धीरज नहीं धर सकता हूं ॥ २४ ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवाऽवनिपाल संघैः।
भीष्मो द्रोणः सूतपुत्र स्तथाऽसौ
सहास्मदीयै रपि योधमुख्यैः॥ २६॥

शाङ्करभाष्यम्।

येभ्यो मम पराजयशङ्का प्रागेवासीत् सा चापगता यतः अमी चेति अमी च त्वां धृतराष्ट्रस्य पुत्रा दुर्योधनप्रतयस्त्वरमाणा विशन्तीति व्यवहितेन संबन्धः सर्वे सहैव संहता अवनिपालसंघैः अवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां संघैः किञ्च भीष्मो द्रोणः सूतपुत्रः कर्णस्तथाऽसौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैः योधानां मुख्यैः प्रधानैः सह॥२६॥

आनन्दगिरिकृतटीका।

अस्माकं जयं परेषां पराजयञ्च दिदृक्षन्तं पश्यामीत्याह येभ्य इति तत्र हेतुत्वेन श्लोकमवतारयति यत इति २६॥

स्वामिकृतटीका।

यस्मात्त्वं द्रष्टुमिच्छसीत्यनेनाखिलं संग्रामे भावि जय पराजयादिकं मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह अनेकेति पञ्चभिः अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वेऽवनिपालानां जयद्रथादीनां राज्ञां संघैः समूहैः सहैव तव वक्त्राणि विशंतीत्युत्तरेणा-न्वयः तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रश्च कर्णः न केवलं त एव विशन्ति अपि तु प्रति-योद्धारोऽस्मदीया ये योधमुख्याः शिखण्डि धृष्टद्युम्नादयस्तैः सह॥ २६॥

भाषा अनुवाद।

और हे देवेश तुमारा मुख देखि डरके मारे हमे दिशा भूलिगई हैं और सुखपावतें नहीं हे जगतनिवास अब प्रसंन होउ वह कैसा मुख देखि डर भया सो कहते हैं कि बड़े बड़े कराल दांतो से अति भयानक मानो प्रलयकी अग्नि के समान है॥ २५॥

और जो कहो कि भव्यत् जो भावी पराजय है सोभी इस मेरी

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्रा करालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

शाङ्करभाष्यम् ।

किञ्च वक्त्राणीति वक्त्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति किं विशिष्टानि दंष्ट्राकरालानि मुखानि भयानकानि भयङ्कराणि किञ्च केचिन्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु मांसमिव भक्षितं संदृश्यन्ते उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः ॥ २७ ॥

आनन्दगिरिकृतटीका ।

न केवलं दुर्योधनादीनामेव पराजयः किन्तु भीष्मादीनामपीत्याह किञ्चेति भगवद्रूपस्योक्तत्वे हेत्वन्तरमाह किञ्चेति प्रविष्टानां मध्ये केचिदिति सम्बन्धः ॥ २७ ॥

स्वामिकृतटीका ।

दंष्ट्राभिः विकृतानि करालानि भयङ्कराणि वक्त्राणि विशन्ति तेषां मध्ये केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसन्धिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥

भाषा अनुवाद ।

शरीर मे देखो सोई देखि कर अब अर्जुन पांच स्लोक से कहते हैं कि जयद्रथ प्रभृति राजगण समेत ए धृतराष्ट्र के पुत्र दुर्योधन आदि तुमारे मुख मे प्रवेश करते हैं और भीष्म द्रोण औ सूतपुत्र कर्ण भी तुमारे मुख मे प्रवेश करते हैं और यही सब नही प्रवेश करते हैं बलु प्रतियोधा अर्थात् हमारे पक्ष के भी शिखण्डी धृष्टद्युम्न प्रभृतिकों के मेसत वे सब प्रवेश करते हैं ॥ २६ ॥

और ए दुर्योधनादिक धावते हुये तुमारे विकटदन्त करालमुख मे प्रवेश करते हैं और तिन के बीच कोई कोई योद्धा मस्तक चूर्ण हुये तुमारे दांतो के मध्य सन्धि मे लिपटे से देख पडते हैं ॥ २७ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥ २८ ॥
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

शाङ्करभाष्यम् ।

कथं प्रविशन्ति मुखानीत्याह यथा नदीनामिति यथा नदीनां स्रवन्तीनां बहवोऽनेके अम्बूनां वेगा अम्बुवेगा त्वरा विशेषाः समुद्रमेवाभिमुखाः प्रतिमुखाः द्रवन्ति प्रविशन्ति तथा तद्वत्तव अमी भीष्मादयो नरलोकवीरा मनुष्यलोकपाला विशन्ति वक्त्राण्यभितो ज्वलन्ति प्रकाशमानानि ॥२८॥

आनन्दगिरिकृतटीका ।

उभयोरपि सेनयोरवस्थितानां राज्ञां भगवन्मुखे प्रवेशनं निदर्शनेन विशदयति कथमित्यादिना ॥ २८ ॥

स्वामिकृतटीका ।

प्रवेशने दृष्टान्तमाह यथेति नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति विशन्ति तथा अमी ये नरलोकवीरास्तेऽभितो ज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

भाषा-अनुवाद ।

अब उनके प्रवेश के विषय में दृष्टान्त कहते हैं कि जैसे अनेक अनेक मार्ग से नदियों के धारा प्रवाह समुद्र के अभिमुख धावतभये जायकर समुद्र में प्रवेश करते हैं तैसेही ए नरलोक के वीर सकल जाज्वल्यमान तुमारे मुख में पैठते जाते हैं ॥ २८ ॥

लेलिह्यसे ग्रसमानः समन्ता
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभि रापूर्य्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

शाङ्करभाष्यम्

ते किमर्थं प्रविशन्ति कथञ्चेत्याह यथेति यथा प्रदीप्तं ज्वलनं अग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्धः उद्भूतो वेगो गतिर्येषां ते समृद्धवेगाः तथैव नाशाय विशन्तः लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

त्वं पुनः लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तः प्रवेशयन् समन्तात् समन्ततो लोकान् समग्रान् समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैः भास स्तेजोभिरापूर्य्य संव्याप्य जगत् समग्रं सहाग्रेण समस्तमित्येतत् किञ्च दीप्तय स्तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील ॥ ३० ॥

आनन्दगिरिकृतटीका ।

प्रवेशप्रयोजनं तत्प्रकारविशेषञ्चोदाहरणान्तरेण स्फोरयति ते किमर्थमित्यादिना ॥२९॥

स्वामिकृतटीका ।

अवशत्वेन प्रवेशेन नदीवेगदृष्टान्त उक्तो बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह यथेति प्रदीप्तं ज्वलन्तमग्निं पतङ्गा शलभा बुद्धिपूर्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि भवन्मुखानि प्रविशन्ति ॥ २९ ॥

भाषा अनुवाद ।

विवशरूप प्रवेश करने मे नदी का दृष्टान्त कहिकर अब बुद्धिपूर्वक प्रवेश करने मे दृष्टान्त कहते हैं कि जैसे बड़े वेग औ उत्साह से पतङ्ग जो पाँखी ते नाशके निमित्त दीपककी शिखामें जाय जायकर गिरते हैं तैसे हो आपके मुखमें अतिवेगसे आय आयकर ये सब वीर मनुष्य नाशके अर्थ प्रवेश करते औ मरते हैं ॥ २९ ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
नहि प्रजानामि तव प्रवृत्तिं ॥ ३ ॥

शाङ्करभाष्यम् ।

यत एवमुग्रस्वभावोऽतः आख्याहीति आख्याहि कथय मे मह्यं को भवानेवमुग्ररूपः अतिक्रूराकारो नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान प्रसीद प्रसादं कुरु विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यं नहि यस्मात् प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टां ॥ ३१ ॥

आनन्दगिरिकृतटीका ।

योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारं प्रदर्श्य तस्यां दशायां भगवतस्तद्ग्रासाङ्ग प्रवृत्तिप्रकारं प्रख्यापयति त्वं पुनरिति भगवत् प्रवृत्तिमेव प्रख्याय तदीयभासां प्रवृत्तिं प्रकटयति किञ्चेति ॥ ३० ॥

भगवद्रूपस्यार्जुनेन दृष्टपूर्वत्वात् तस्य तस्मिन् न जिज्ञासेत्याशंक्याह यत इति उपदेशं शुश्रूषमाणेनोपदेशकर्तुः प्रह्वी भवनं कर्त्तव्यमिति सूचयति नमोऽस्त्विति क्रौर्यत्यागं समर्थयते प्रसादमिति त्वमेव मां जानीषे किमर्थमित्यभिप्रेत्ये दानीमर्थयसे मदीयां चेष्टां दृष्ट्वा त्वयैव प्रतिपद्यस्वेत्याशंक्याह नहीति ॥ ३१ ॥

स्वामिकृतटीका ।

ततः किमत आह लेलिह्यसे इति ग्रसमानोऽपि सन् समन्तात् लोकान् सर्वानेतान् वीरान् सर्वतो लेलिह्यसे अतिशयेन भक्षयसि कैः ज्वलद्भिर्वदनैः किञ्च हे विष्णो तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समग्रं जगद्व्याप्य तीव्राः सत्यः प्रतपन्ति सन्तापयन्ति ॥३०॥

भाषा अनुवाद ।

और प्रवेश के अनन्तर फेरि क्या होता भी कहते हैं कि तुम भी अतिभयानक जिह्वा लहलहावते हुये मानो त्रैलोक्य लीलवे को रसनापसारी है अपने तेजसे समग्र जगतको सन्तप्त करते हुये उन सब वीरों को ग्रास कहे भक्षण करने की इच्छा करते हो ॥ ३० ॥

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

शाङ्करभाष्यम् ।

कालोऽस्मीति कालोऽस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धिं गतो यदर्थं प्रवृद्धस्तच्छृणु लोकान् समाहर्त्तुम् इह अस्मिन् काले प्रवृत्तः ऋतेऽपि विनापि त्वा त्वांनभविष्यन्ति भीष्मद्रोणकर्ण-प्रभृतयः सर्वे येभ्य स्त्वाशङ्का येऽवस्थिताः प्रत्यनीकेष्वनीकमनीकं प्रति-प्रत्यनीकेषु प्रतिपक्षभूतेषु अनीकेषु योधा एव योद्धारः ॥ ३२ ॥

आनन्दगिरिकृतटीका ।

यदर्था च स्वप्रवृत्तिः तत्सर्वं भगवानुक्तवानित्याह भगवानिति कालः क्रियाशक्त्युप-हितः परमेश्वरः अस्मीति वर्त्तमानयुद्धोपलक्षितत्वं कालस्य विवक्षितं लोकसंहारार्थं

स्वामिकृतटीका ।

यत एवं तस्मात् आख्याहीति भगवानुग्ररूपः क इत्याख्याहि कथय तुभ्यं नमोऽस्तु हे देववर प्रसीद प्रसन्नो भव भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि एवंभूतस्य तव प्रवृत्तिं वार्त्तामपि न जानामीति वा ॥ ३१ ॥

भाषा अनुवाद ।

हे महाराज जिस से तुमारा ऐसा उग्ररूप है इससे आपको हो सो कहो और हम तुमको वारवार प्रणाम करते हैं हे देवश्रेष्ठ तुम मेरे पर प्रसन्न होउ श्री आदिपुरुष जो तुम सो मैं तुम को जाना चाहता हूं और एवं भूत जो तुम तुमारी प्रवृत्ति कहे वार्त्ता कुछभी हम नहीं जान सकतेहै ॥ ३१ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रु भुङ्क्ष्व राज्यं समृद्धं ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

शाङ्करभाष्यम् ।

यस्मादेवं तस्मात्त्वमिति तस्मात्त्वमुत्तिष्ठ भीष्मद्रोणप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशो लभस्व केवलं पुण्यैर्हि तत् प्राप्यते जित्वा शत्रून् दुर्य्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धम् असपत्नमकण्टकं मया एवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव निमित्तमात्रं भव त्वं हे सव्यसाचिन् सव्येन वामेन हस्तेन शराणां क्षेपात् सव्यसाचीत्युच्यतेऽर्जुनः ॥ ३३ ॥

आनन्दगिरिकृतटीका ।

त्वत्प्रवृत्तावपि नाशायार्थवती प्रतिपक्षाणां भीष्मादीनां मत्प्रवृत्तिं विनापि संहर्तुमशक्यत्वादित्याशङ्क्याह ऋतेऽपीति ॥ ३२ ॥

तत्रादासोन्येऽपि प्रतिकूलानीकस्था मत्प्रातिकूल्यादेव न भविष्यन्तीत्येवं यस्मान्निश्चितं

स्वामिकृतटीका ।

एवं प्रार्थितः सन् श्रीभगवानुवाच काल इति त्रिभिः लोकानां क्षयकर्त्ता प्रवृद्धोऽत्युत्कटः कालोऽस्मि लोकान् प्राणिनः संहर्त्तुमिह लोके प्रवृत्तोऽस्मि अतः ऋते त्वां हन्तारं विना न भविष्यन्ति जीविष्यन्ति के ते प्रत्यनीकेषु अनीकानि प्रति भीष्म द्रोणादीनां सर्वाह्व ये योद्धारोऽवस्थिता स्ते सर्वेऽपि ॥ ३२ ॥

## भाषा अनुवाद ।

इस प्रकार अर्जुन से प्रार्थना किये गये श्रीभगवान तीनि श्लोक से कहते हैं कि मै सकल लोक को क्षय करने वाला कालरूप हौं और प्राणियों को संहार करने की इच्छाकरि इस लोक मे प्रवृत्तभया हौं सो एक तुमको छोडि कर और कोई हमसे न वंचैगे अर्थात् प्रतिसेना मे जो भीष्म द्रोण आदि योद्धा हैं वे सब मरेंगे ॥ ३२ ॥

द्रोणञ्च भीष्मञ्च जयद्रथञ्च
कर्णं तथान्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान्॥ ३४॥

शाङ्करभाष्यम्।

द्रोणञ्चेति द्रोणञ्च येषु योधेषु अर्जुनस्याशङ्कासीत् तां स्तान् सर्व्वान् व्यपदिशति भगवान् मया हतानीति तत्र द्रोण भीष्मयोस्तावत् प्रसिद्धमाशङ्काकारणं द्रोणो धनुर्वेदाचार्य्यो दिव्यास्त्रसंपन्नः आत्मनश्च विशेषतो गुरु-

आनन्दगिरिकृतटीका।

तस्मात्त्वदौदासीन्यमकिञ्चित्करमित्याह यस्मादिति उत्तिष्ठ युद्धाय उन्मुखीभवेत्यर्थः यशोलाभमभिनयति भीष्मेति किं तेन पुरुषेणत्याशङ्क्याह पुण्यैरिति राज्यभोगेऽपेक्षिते किमन्यपेक्षितेनेत्याशक्याह जित्वेति भीष्मादिष्वतिरथेषु कुतो जयाशङ्का इत्याशङ्क्याह मयैवैत इति तर्हि कृतकारित्वार्थं न मे प्रवृत्तिस्तत्राह निमित्तेति सव्यसाचिपदं विभजते वामेनेति ॥३३॥

स्वामिकृतटीका।

तस्मादिति यस्मादेवं तस्मात्त्वं युद्धायोत्तिष्ठ देवैरपि दुर्जया भीष्मादयोऽर्जुनेन निर्जिता इत्येवं भूतं यशो लभस्व प्राप्नुहि अयत्नतश्च शत्रून् जित्वा समृद्धं राज्यं भुङ्क्ष्व एतेच तवशत्रवस्त्वदीययुद्धात् पूर्व्वमेव मयैव कालात्मना निहतप्रायास्तथापि त्वं निमित्तमात्रं भव हे सव्यसाचिन् सव्येन वामेन हस्तेन साचितुं शरान् सन्धातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात् सव्यसाचीत्युच्यते॥ ३३॥

भाषा अनुवाद।

जिस हेतु ऐसा होनहार है इस से तुम युद्धके अर्थ उठो और देवतोंसे भी अजय जो भीष्म द्रोण आदि वीर सो अर्जुन से पराजित भये इस यशको लाभ करो और शत्रुवों का विनाश करिके संपूर्ण राज्य का भोग करो और ये जो तुमारे शत्रु हैं तिन को युद्धके पूर्वहीं कालरूप मैने यद्यपि हत करि राखा है तौ भी हे सव्यसाचिन् अर्जुन तुम निमित्त मात्र होउ सव्यसाची उसको कहते हैं जो बांये हाथ से युद्ध आदि कार्य्य करि शके है॥ ३३॥

## शाङ्करभाष्यम् ।

गरिष्ठो भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्व युद्ध मगमन्न च पराजितः तथा जयद्रथोऽपि यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ पातयिष्यति य स्तस्यापि शिरः पतिष्यतीति कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया सम्पन्नः सूर्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः मया हतां स्त्वं जहि निमित्तमात्रेण मा व्यथिष्ठा स्तेभ्यो भयं मा कार्षीः युद्धस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥ ३४ ॥

### आनन्दगिरिकृतटीका ।

मयैवेत्यादिनोक्तं प्रपञ्चयति द्रोणञ्चेति किमिति कतिचिदेवात्र द्रोणादयो गण्यन्ते तत्रायं येष्वेति द्रोणादिषु कुतः शङ्केत्याशङ्क्य द्वयोः शङ्कानिमित्तत्वमाह तत्रेत्यादिना जयद्रथेऽपि शङ्कानिमित्तत्वमाह तथेति दिव्यास्त्रसम्पन्न इति सम्बन्धः तत्र शङ्कायां कारणान्तरमाह यस्येति कर्णेऽपि तत्कारणत्वं कथयति कर्णोऽपीति पूर्ववदेव सम्बन्धः हेत्वन्तरमाह वासवेति सा खल्वमोघा पुरुषमेकमत्यन्तसमर्थं घातयित्वैव निवर्त्तते जन्मनापि तस्य शङ्कयत्वमाह सूर्येति कुन्ती हि कन्यावस्थायां मन्त्रप्रभावं ज्ञातुमादित्यमाजुहाव ततस्तस्यामेवावस्थायामयमुद्बभूव तदाह कानीन इति एतदेवाभिप्रेत्य कर्णग्रहणमित्याह यत इति उक्तेष्वन्येषु च न त्वया शङ्कितव्यमित्याह मयेति ॥ ३४ ॥

### स्वामिकृतटीका ।

नचैतद्विद्मः कतरन्नोगरीयो यद्वा जयेम यदि वा नो जयेयुरिति या आशङ्कासापि न कार्येत्याह द्रोणमिति येभ्यस्त्वं शङ्कसे तान् द्रोणादीन् मयैव हतां स्त्वं जहि घातय मा व्यथिष्ठा भयं मा कार्षीः सपत्नान् शत्रून् रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥

## भाषा अनुवाद ।

और जो पूर्व मे अर्जुनने शंका किया हैं कि हम इन को जीतेंगे या येई हम को जय करें यह हम नहीं जानते उस का वारण करते हुये कहते हैं कि जिन से तुमको शङ्का भई थी वे मुझ से प्रथमही हत भये हैं जो द्रोण भीष्म जयद्रथ कर्ण तथा और और जो वीर उन सबै को तुम जयकरो और उनसे नेकहु न डरो तुम अवश्य ही उन को युद्धम जीतोगे ॥ ३४ ॥

सञ्जय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

शाङ्करभाष्यम् ।

एतच्छ्रुत्वेति एतत् श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्य भूयः पुनरेवाहोक्तवान् कृष्णं सगद्गदं सह गद्गदया वाचा मन्दशब्देन भयाविष्टस्य दुःखाभिघातात् स्नेहाविष्टस्य च हर्षोद्भवात् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत् स गद्गदस्तेन सह वर्त्तत इति सगद्गदं वचनमाहेति वचनं क्रियाविशेषणमेतत् भीतभीतः पुनर्भयाविष्टचेताः सन् प्रणम्य प्रह्वीभूत्वाहेति व्यवहितेन सम्बन्धः अत्रावसरे सञ्जयवचनं साभिप्रायं कथं द्रोणादिष्वर्जुनेन निहतेष्वजेयेषु चतुर्षु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन् सन्धिं वा करिष्यतीति ततः शान्तिरुभयेषां भविष्यतीति तदपि नाश्रौषीत् धृतराष्ट्रो भवितव्यवशात् ॥ ३५ ॥

आनन्दगिरिकृतटीका ।

पराजयाभावात् करिष्यति सन्धिमिति बुद्धा सञ्जयो राज्ञे वृत्तान्तमुक्तवानित्याह सञ्जय इति पूर्वोक्तवचनं कालोऽस्मीत्यादि विश्वरूपदर्शनदशायामर्जुनस्य भगवता सम्वादवचनं किमिति सञ्जयो राज्ञे व्यज्ञापयदित्याशङ्क्य तदुक्तेस्तात्पर्य्यमाह अत्रेति तमेवाभिप्रायं प्रश्नद्वारा विशदयति कथमित्यादिना तर्हि सञ्जयवचनं श्रुत्वा किमिति राजा सन्धिं न कारयामासेति तत्राह तदपीति ॥ ३५ ॥

स्वामिकृतटीका ।

ततो यद्वृत्तं तदेव धृतराष्ट्रं प्रति सञ्जय उवाच एतदिति एतत् पूर्वोक्तश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः कृताञ्जलिः संपुटीकृतहस्तः कृष्णं

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥

शाङ्करभाष्यम् ।

स्थान इति स्थाने युक्तं किं तव प्रकीर्त्त्या त्वन्माहात्म्यकीर्त्तनेन श्रुतेन हृषीकेश यज्जगत् प्रहृष्यति प्रहर्षमुपैति तत् स्थाने युक्तमित्यर्थः अथवा विषय विशेषणं स्थान इति युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्व्वात्मा सर्वभूत सुहृच्चेति तथा अनुरज्यते अनुरागञ्चोपैति तच्च विषय इति व्याख्येयं किञ्च रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषये सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसङ्घाः सिद्धानां समुदायाः कपिलादीनां तच्च स्थाने ॥ ३६ ॥

आनन्दगिरिकृतटीका ।

किं तदर्जुनो भगवन्तं प्रति सगद्गदं वचनमुक्तवानिति तदाह अर्जुन इति विषयवि शेषणत्वमेव व्यनक्ति युक्त इति भगवतो हर्षादिविषयत्वेऽयुक्तमित्यत्र हेतुमाह यत इति तव

स्वामिकृतटीका ।

नमस्कृत्य पुनरप्याह उक्तवान् कथमाह भयहर्षाद्यावेशवशात् गद्गदेन कण्ठकम्पेन सह वर्त्तत इति सगद्गदं यथा स्यात्तथा किञ्च भीतादपि भीतः सन् प्रणम्य अवनतोभूत्वा आह ॥ ३५ ॥

भाषा अनुवाद ।

तिस के वादि जो भया सो संजय धृतराष्ट्र से कहते हैं कि ए श्रीकृष्ण के वचन श्रवणकरि कम्पमान कलेवर किरीटी अर्जुन हर्ष औ भयके मारे गद्गद कण्ठ अतिडरैसे हाथ जोड़ि कर कृष्णको प्रणाम करके आगे कहैं गे जो सो वातैं कहते भये ॥ ३५ ॥

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत्॥ ३७॥

शाङ्करभाष्यम्।

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति कस्माच्चेतिकस्माच्चहेतोस्ते तुभ्यं न नमस्कुर्युः हे महात्मन् गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्या-

आनन्दगिरिकृतटीका।

प्रकीर्त्त्या हर्षवदनुरागञ्च गच्छति जगदित्याह तथेति नन्वेत्यनुरागगमनं रक्षःसु जगदेकदेश-भूतेषु प्रतिपक्षेषु कुतो जगतो भगवति हर्षानुरागावित्याशंक्याह क्षिश्चेति इतश्च जगतो भगवति हर्षादियुक्तमित्याह सर्वे इति॥ ३६॥

स्वामिकृतटीका।

स्थाने इत्येकादशभिरर्जुनोक्तिः स्थाने इत्यव्ययं युक्तमित्यस्मिन्नर्थे हे हृषीकेश यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्चातस्तव प्रकीर्त्त्या माहात्म्यसङ्कीर्त्तनेन न केवलमहमेव प्रहृष्यामीति किन्तु जगत् सर्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत् स्थाने युक्तमित्यर्थः तथा जगदनुरज्यते च अनुरागमुपैति इति यत्तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति पलायन्ते इति यत् सर्वे योगतपोमन्त्रादि सिद्धानां सङ्घा नमस्यन्ति प्रणमन्तीति यत् एतञ्च स्थाने युक्तमेव न चित्रमित्यर्थः॥ ३६॥

भाषा अनुवाद।

अब इस श्लोकसे अर्जुन कहते हैं कि हे हृषीकेश जिस हेतु तुम ऐसे अद्भुत प्रभाव से युक्त औ भक्त वत्सल हो इस से तुमारा माहात्म्य संकीर्त्तन करने से केवल हमने जो हर्ष पाया सो नहीं किन्तु ब्रह्माण्ड भर भी अति हर्षित औ प्रीति युक्त है यह उचित है और इस ब्रह्माण्ड मे जो सब सज्जन प्रसन्न औ राक्षस सकल डर के मारे दशदिशा मे भागि फिरेते हैं और योग तप मन्त्र आदि के द्वारा सिद्धगण तुम को प्रणाम करते हैं यह कुछ आश्चर्य नहीं है॥ ३६॥

शाङ्करभाष्यम् ।

ण्यादिकर्त्ता कारणमतस्तस्मा आदिकर्त्रे कथमेव ते न नमस्कुर्युः अतो हर्षादीनां नमस्कारस्य च स्थानं त्वमर्हो विषय इत्यर्थः हे अनन्त हे देवेश हे जगन्निवास त्वमक्षरं तत्परं यद्वेदान्तेषु श्रूयते किं तत् सदसत् यत् विद्यमानं तत् सत् असच्च यत् नास्तीति बुद्धिस्ते उपधानभूते सदसती यस्याक्षरस्य यद्द्वारेण सदसदित्युपचर्यते परमार्थतस्तु सदसतः परं तत् यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः ॥ ३७ ॥

आनन्दगिरिकृतटीका ।

उक्तेऽर्थे हेत्वर्थत्वेनोत्तरश्लोकमवतारयति भगवत इति महात्मत्वमनुद्यैतत्त्वं गुरुतरत्वान्नमस्कारादियोग्यत्वमाह गुरुतरायेति तत्रैव हेत्वन्तरमाह यत इति महात्मत्वादि हेतूनामुक्तानां फलमाह अत इति तत्रैव हेत्वन्तराणि सूचयति हे अनन्तेति अनवच्छिन्नत्वं सर्वदेव नियन्तृत्वं सर्वं जगदाश्रयत्वञ्च तव नमस्कारादियोग्यत्वे कारणमित्यर्थः तत्रैव हेत्वन्तरमाह त्वमिति तत्र मानमाह यदिति कथमेकस्यैव सदसद्रूपत्वं तत्राह ते इति कथं सतोऽसतश्चाक्षरं प्रत्युपाधित्वं तदाह यद्द्वारेणेति तत्परं यदि ते तद्व्याचष्टे परमार्थतस्त्विति अनन्तत्वादिना भगवतो नमस्कारादियोग्यत्वमुक्तम् ॥ ३७ ॥

स्वामिकृतटीका ।

तत्र हेतुमाह कस्मादिति हे महात्मन् हे अनन्त हे देवेश हे जगन्निवास कस्माद्धेतोस्ते तुभ्यं न नमेरन् न नमस्कारं कुर्युः कथं भूताय ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे च ब्रह्मणोऽपि जनकाय किञ्च सद् व्यक्तम् असदव्यक्तञ्च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तच्च त्वमेव एतैर्नवभिर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न चित्रमित्यर्थः ॥३७॥

भाषा अनुवाद ।

और सब के हर्ष औ प्रणाम करने मे अब हेतु कहते हैं कि हे महात्मन् हे अनन्त हे जगन्निवास श्रीकृष्ण क्यौंन ये सब प्रणाम करैंगे कि जो तुम ब्रह्माके भी आदिकर्त्ता कहे जनक और गुरू हौ और सत् कहे व्यक्त प्रगट जो जगत् औ असत् जो अव्यक्त प्रकृति माया इन दोनो से पर अर्थात् मूलकारण रूप अक्षर कहे अविनाशी जो ब्रह्म सो भी तुम ही हौ तौ नवधा भक्तिके द्वारा जो सब तुम को प्रणाम करते हैं सो उचित है ॥ ३७ ।

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यञ्च परञ्च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

शाङ्करभाष्यम् ।

पुनरपि स्तौति त्वमिति त्वमादिदेवो जगतः स्रष्टृत्वात् पुरुषः पुरि-शयनात् पुराणश्चिरन्तनस्त्वमेवास्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन् जगत् सर्वं महाप्रलयादाविति किञ्च वेत्तासि सर्वस्यैव वेद्यजातस्य यच्च वेद्यं वेदनार्हं तच्चासि परञ्च धाम परमं पदं वैष्णवं त्वया ततं व्याप्तं विश्वं समस्तं हे अनन्तरूप अन्तो न विद्यते तव रूपाणाम् ॥ ३८ ॥

आनन्दगिरिकृतटीका ।

सम्प्रति जगत् स्रष्टृत्वादिनापि तद्योग्यत्वमस्तीति स्तुतिद्वारा दर्शयति पुनरपीति जगतः स्रष्टा पुरुषो हिरण्यगर्भ इति पक्षं प्रत्याह पुराण इति स्रष्टृत्वं निमित्तमेवेति तटस्थेश्वरवादिमतात् प्रत्युक्तं त्वमेवेति महाप्रलयादावित्यादि पदमवान्तरप्रलयार्थं ईश्वरस्यो-भयथा कारणत्वं सर्वज्ञत्वेन साधयति किञ्चेति वेद्यवेदितृभावेन अद्वैतानुपपत्तिमाशंक्याह यच्चेति सुतरां तस्यानस्य ब्रह्मणोऽर्थान्तरत्वम् आशङ्कित्वोक्तं परञ्चेति यत्परमं पदं तदपि च त्वमेवेति सम्बन्धः तस्य पूर्णत्वमाह त्वयेति व्याप्यव्यापकत्वेन भेदं शङ्कित्वा कल्पितत्वात्तस्य नैवमित्याह अनन्तेति ॥ ३८ ॥

स्वामिकृतटीका ।

किञ्च त्वमादिदेव इति त्वमादिदेवो देवानामादिः यतः पुराणोऽनादिः पुरुषस्त्वमतएव त्वमस्य विश्वस्य परं निधानं लयस्थानं तथा विश्वस्य वेत्ता ज्ञाता त्वं यच्च वेद्यं वस्तु ज्ञानं परञ्च धाम वैष्णवं पदं तदपि त्वमेवासि अतएव हे अनन्तरूप त्वयैवेदं विश्वं ततं व्याप्तं यतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य्य इत्यर्थः ॥ ३८ ॥

भाषा अनुवाद ।

और संपूर्ण देवतों के आदिभूत जो अनादि पुरुष तुम सो इस विश्वके पर निधान कहे लयस्थान औ विश्वके ज्ञाता औ जो कुछ जानने

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

शाङ्करभाष्यम् ।

किञ्च वायुरिति वायुस्त्वं यमश्चाग्निर्वरुणोऽपां पतिः शशाङ्कश्चन्द्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहो ब्रह्मणोऽपि पिता इत्यर्थः नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते बहुशो नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वसुचोच्यते पुनश्च भूयोऽपीति श्रद्धा भक्त्यतिशयादपरितोषमात्मनो दर्शयति ॥ ३९ ॥

आनन्दगिरिकृतटीका ।

तस्य सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति कश्यपादिरित्यादिशब्देन विराट् दक्षादयो गृह्यन्ते पितामहो ब्रह्मा तस्य पिता सूत्रात्मान्तर्यामी चेत्याह ब्रह्मणोपीति सर्वदेवतात्मत्वमेवेत्युक्ते फलितमाह नम इति सहस्रकृत्व इति कृत्वसुचो विवक्षितमर्थमाह बहुश इति पुनरुक्ति तात्पर्यमाह पुनश्चेति श्रद्धा भक्त्योरतिशयात् कृतेपि नमस्कारे परितोषाभावो बुद्धेरात्मनोऽलंप्रत्ययराहित्यं तद्दर्शनार्थं पुनरुक्तिरित्यर्थः ॥ ३९ ॥

स्वामिकृतटीका ।

इतश्च सर्वैस्त्वमेव नमस्कार्य्यः सर्वदेवात्मकत्वादि स्तुवन् स्वयमपि नमस्करोति वायुरिति वाय्वादिरूपस्त्वमिति सर्वदेवात्मकत्वोपलक्षणार्थमुक्तं प्रजापतिः पितामहस्तस्यापि जनकत्वात् प्रपितामहस्त्वम् अतस्ते तुभ्यं सहस्रकृत्वः सहस्रशो नमोऽस्तु पुनः सहस्रकृत्वो नमोऽस्तु भूयोऽपि पुनरपि सहस्रकृत्वो नमो नम इति ॥ ३९ ॥

भाषा अनुवाद ।

के योग्य वस्तु हैं सो तुम हो और परम धाम जो विष्णुपद सोभी तुम हो इस से हे अनन्तरूप कृष्ण तुम इस विश्व मे व्याप्त हो इन सात हेतुओं के द्वारा भी तुमहीं नमस्कार योग्य हो ॥ ३८ ॥

**नमः पुरस्तादथ पृष्ठतस्ते**
**नमोऽस्तु ते सर्वत एव सर्व।**
**अनन्तवीर्यामितविक्रमस्त्वं**
**सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥**

शाङ्करभाष्यम्।

तथा नमः पुरस्तादिति नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यमथ पृष्ठतोऽपि च नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व अनन्तवीर्य्यामितविक्रमः अनन्तं वीर्यमस्य अमितो विक्रमो यस्य वीर्य्यं सामर्थ्यं विक्रमः पराक्रमः वीर्यवानपि कश्चित् शस्त्रादिविषये न पराक्रमते मन्दपराक्रमो वा त्वं तु अनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्य्यामितविक्रमः सर्वं समस्तं जगत् प्राप्नोषि सम्यगेकेनात्मना व्याप्नोषि अत स्तस्मादसि भवसि सर्वस्त्वयाविनाभूतं न किञ्चिदस्तीत्यर्थः ॥ ४० ॥

आनन्दगिरिकृतटीका।

विद्यान्तरेण भगवन्तं स्तुत्वा नमस्कुर्वन्नभिमुखीकरोति तथेति यस्यां दिशि सवितोदेति सा पूर्वा दिगुच्यते तस्यां व्यवस्थितं सर्वं त्वमेव तस्मात्ते तुभ्यं नमोऽस्त्वित्याह नम इति अथ शब्दः समुच्चये पश्चादपि स्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह अथेति किं बहुना यावन्त्यो दिश स्तत्र सर्वत्र यद्वर्त्तते तदशेषं त्वमेव तस्मै ते तुभ्यं प्रह्वीभावः स्यादित्याह नमोऽस्त्विति फलितं सर्वात्मत्वं सूचयति हे सर्वेति वीर्य्यविक्रमयोर्न पौनरुक्त्यमित्याह वीर्यमित्यादिना वीर्यवतो विक्रमाव्यभिचारादर्थपौनरुक्त्यमाशंक्याह वीर्यवानिति भगवति लौकिको विशेषमाह त्वं त्विति उक्तं सर्वात्मत्वं प्रपञ्चयति सर्वमिति सप्रपञ्चत्वं वारयति त्वयेति ॥४०॥

भाषा अनुवाद।

जिस हेतु तुम सर्व देवरूप हो इस से तुम सब के नमस्कार योग्य हो एसे वचनों से अर्जुन भगवान की स्तुति करिके अब आप प्रणाम करते हैं कि वायु यम अग्नि वरुण चन्द्रमा प्रजापति ब्रह्मा औ प्रपितामह ब्रह्माके भी जनक तुम को मेरे सहस्र सहस्र प्रणाम हैं फेरि फेरि भी सहस्रसहस्र प्रणाम हैं ॥ ३९ ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥

शाङ्करभाष्यम् ।

यतोऽहं त्वम्माहात्म्यापरिज्ञानादपराधाद्धेतोः सखेति सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे यादव हे सखेति च अजानता अज्ञानवता अज्ञानिना मूढ़ेन किमजानते त्याह महिमानं माहात्म्यं तदेवमीश्वरस्य विश्वरूपं तवेदं महिमानमजानतेति वैयधिकरण्येन सम्बन्धस्तवेदमिति पाठो यद्यस्ति तदा सामानाधि-

स्वामिकृतटीका ।

भक्ति श्रद्धाद्यादरातिशयेन नमस्कारेषु तृप्तिमनधिगच्छन् पुनरपि बहुशः प्रणमति नम इति हे सर्व सर्वात्मन् सर्वासु दिक्षु तुभ्यं नमोऽस्तु सर्वात्मत्वमुपपादयन्नाह अनन्तं वीर्यं सामर्थ्यं यस्य तथा अमितो विक्रमः पराक्रमो यस्य स एवंभूतस्त्वं सर्वं विश्वं सम्यगन्तर्बहिश्च समाप्नोषि व्याप्नोषि सुवर्णमिव कङ्कणकुण्डलादि स्वकार्यं व्याप्य वर्त्तसे ततः सर्वस्वरूपोऽसि ॥ ४० ॥

भाषा अनुवाद ।

भक्ति श्री श्रद्धा तथा आदर की अधिकाई से भगवत को नमस्कार करने से तृप्ति न पाय के पुनर्बार और भी प्रणाम करते हैं कि हे सर्वात्मन् तुमारे सन्मुख श्री पृष्ठभाग मे प्रणाम करता हूं और तुमारे सब ओर भी मेरा नमस्कार पहुंचे और भगवान की सर्वात्मकता सिद्ध करने की आकांचा पर कहते हैं कि जिसकी अनन्त सामर्थ श्री अपरिमित पराक्रम एवं भूत जो तुम विश्वके भीतर बाहर सम्यक् व्याप्त हो जैसे सुवर्ण नानाविध भूषणों मे व्याप्त है और मृत्तिका घट आदि पात्रों मे व्याप्त है तैसे ही इस विश्व मे आप भी व्याप रहे हो ॥ ४० ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

शाङ्करभाष्यम् ।

त्वमेव मया प्रमादात् विक्षिप्तचित्ततया प्रणयेन वापि प्रणयो नाम स्नेहस्तन्निमित्तो विस्रम्भस्तेनापि कारणेन यदुक्तवानस्मि ॥ ४१ ॥

यच्चेति यच्च अवहासार्थं परिहासप्रयोजनाय असत्कृतः परिभूतोऽसि भवसि क्व च विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः शयनं शय्या आसनं आस्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेषु

आनन्दगिरिकृतटीका ।

अज्ञाननिमित्तमपराधं क्षमयति यत इति इदं शब्दार्थमाह विश्वरूपमिति नञोदमित्यस्य महिमानमित्यस्य च सामानाधिकरण्यं लिङ्गव्यत्ययादित्याह तवेति पाठान्तरसम्भावनायां सामानाधिकरण्योपपत्तिमाह तवेत्यादिना यदुक्तवानस्मि तदहं क्षामये त्वामिति सम्बन्धः ॥ ४१ ॥

स्वामिकृतटीका ।

इदानीं भगवन्तं क्षमापयति सखेति द्वाभ्यां त्वां प्राकृतः सखेत्येवं मत्वा प्रसभं हठात् तिरस्कारेण यदुक्तं तत् क्षामये त्वामित्युत्तरेणान्वयः किं तत् हे कृष्ण हे यादव हे सखेति च सम्बोधनार्थः प्रसभोक्तौ हेतुः तव महिमानमिदञ्च विश्वरूपमजानता मया प्रमादात् प्रणयेन स्नेहेन वा यदुक्तमिति ॥ ४१ ॥

भाषा अनुवाद ।

अब दो श्लोकके द्वारा भगवान से अर्जुन अपनी अपराध क्षमा करावते हैं कि हे कृष्ण हे यादव हे सखे ऐसे वचनोंसे आपकों अपना सखा मानि जो हठसे मैने तुमारी यह महिमा न जानि के अथवा भूलसे या प्रणय कहे अति प्रीतिसे कहा है सो मेरी अनजान की अर्थात् असावधान का अपराध कहे चूक आप क्षमा करो ॥ ४१ ॥

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

शाङ्करभाष्यम् ।

एकः परोक्षः सन् असत् कृतोऽसि परिभूतोऽसि अथवा हे अच्युत तत्समक्षं तच्छब्दः क्रियाविशेषणार्थः अत्यर्थं वा असत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतं यतस्त्वं ॥ ४२ ॥

आनन्दगिरिकृतटीका ।

यदयुक्तमुक्तं तत् क्षन्तव्यमित्येव न किन्तु यत्परीहासार्थं क्रीड़ादिषु त्वयि तिरस्करणं कृतं तदपि सोढ़व्यमित्याह यच्चेति विहरणं क्रीड़ाव्यायामो वा शयनं तल्पादिकं आसनं आस्थायिका सिंहासनादेरुपलक्षणमेतेषु विषयभूतेष्विति यावत् एकशब्दो रहसि स्थितमेकाकिनं कथयतीत्याह परोक्षः सन्निति प्रत्यक्षं परोक्षं वा तदसत्करणं परिभवनं यथा स्यात्तथा यन्मया त्वमसत्कृतोऽसि तत् सर्वमिति योजनामङ्गीकृत्याह तच्छब्द इति क्षमाकारयितव्येत्यत्रापरिमितत्वं हेतुमाह अप्रमेयमिति याचनिकं मदीयमपराधजातं त्वया क्षन्तव्यमित्युक्तं इदानीं मदीयोऽपराधो न त्वया गृहीतव्यो गृहीतोऽपि सोढ़व्य इत्याह यत इति ॥ ४२ ॥

स्वामिकृतटीका ।

किञ्च यच्चेति हे अच्युत यच्च परिहासार्थं क्रीड़ादिषु तिरस्कृतोऽसि एकः केवलः सखीन् विना रहसि स्थित इत्यर्थः अथवा तत् समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽपि तत् सर्वमपराधजातं त्वामप्रमेयं अचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४२ ॥

भाषा अनुवाद ।

और हे अच्युत बिहार शयन भोजन क्रीड़ा आदि मे अथवा सखागण-रहित निर्जन स्थान मे जहां कहूं हम और तुमको छोड़ और कोई न रहा होय ऐसी ठौर कहे जगह मे अथवा परिहास कहे ठट्ठा करनेवाले मित्रोंके बीच मे जो हमने हंसने के लिये तिरस्कार अनादर आपका किया है से सब अचिन्त्य प्रभावरूप आपसे हम क्षमा करवाते हैं ॥ ४२ ॥

## शाङ्करभाष्यम्।

पितासीति पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य न केवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्हो यतो गुरु गरीयान् गुरुतरः कस्मात गुरुतरस्त्वमित्याह नच त्वत्समस्त्वत्तुल्योऽन्योऽस्ति नहीश्वराद्वयं सम्भवत्यनेकेश्वरत्वव्यवहारानुपपत्तेः त्वत्सम एव तावदन्यो न सम्भवति कुत एवान्योऽभ्यधिकः स्यात् यस्माल्लोकत्रयेऽपि सर्वस्मिन्नप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावः हे अप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः ॥ ४३ ॥

### आनन्दगिरिकृतटीका।

गुणाधिक्यात् पूजार्हत्वं धर्मब्रह्मज्ञानसंप्रदायप्रवर्तकत्वेन शिक्षयितृत्वात् गुरुत्वं गुरूणामपि सूत्रादीनां गुरुत्वाद्गरीयस्त्वं तदेव प्रश्नद्वारा साधयति कस्मादिति ईश्वरान्तरं तुल्यं भविष्यतीत्याशंक्याह न हीति ईश्वरभेदे प्रत्येकं स्वातन्त्र्यात्तदैकमत्ये हेत्वभावान्नाना, अनित्वे चैकस्य सिसृक्षायामन्यस्य संजिहीर्षासम्भवाद्व्यवहारलोपाद्युक्तमीश्वरनानात्वमित्यर्थः अभ्यधिकासत्त्वं कैमुतिकन्यायेन दर्शयति त्वत्सम इति स तत्र हेतुमवतार्य व्याकरोति अप्रतिमेत्यादिना ॥ ४३॥

### स्वामिकृतटीका।

अचिन्त्यप्रभावत्वमेवाह पितेति न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमस्तथाविधः प्रभावो यस्य तव अप्रतिमभाव त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि अतएव पूज्यश्च गुरुश्च गुरोरपि गरीयांश्च गुरुतरः अतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरादन्यस्याभावात् त्वत्तोऽधिकः पुनः कुतः स्यात् ॥ ४३ ॥

## भाषा अनुवाद।

अब भगवत् का अचिन्त्य प्रभाव कहते हैं कि हे अप्रतिमप्रभाव नहीं है प्रतिमा कहे उपमा ऐसा निरुपम प्रभाव है जिसका सो तुम इस चराचररूप लोक के पिता कहे उत्पत्ति करनेवाले औ पूजनीय तथा गुरुकेभी गुरु हो इस हेतु से परमेश्वर जो तुम सो तुमारे समान का त्रिलोकी मे दूसरा कोई नहीं है तो अधिक फेरि और कहां से होसके है ॥ ४३ ॥

तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीश मीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुं ॥ ४४ ॥

शाङ्करभाष्यम् ।

यत एवं तस्मादिति तस्मात् प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरं प्रसादये प्रसादं कारये त्वामहमीशमीशितारमीड्यं स्तुत्यं त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखा इव सख्युरपराधं यथा वा प्रियः प्रियाया अपराधं क्षमते एवमर्हसि हे देव सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥ ४४ ॥

आनन्दगिरिकृतटीका ।

निरतिशयप्रभावत्वं हेतुं कृत्वा प्रतिप्रसादने प्रणामपूर्वकं त्वामित्याह यत इति प्रसादनानन्तरं भगवता कर्त्तव्यं प्रार्थयते त्वं पुनरिति प्रिय इव प्रियाया इतीवकारोऽनुषज्जते प्रियायार्हसीति छान्दसः सन्धिः क्षन्तुमदपराधजातमिति शेषः ॥ ४४ ॥

स्वामिकृतटीका ।

यस्मादेवं तस्मादिति तस्मात्त्वामीशं जगत ईड्यं स्तुत्यं प्रसादयामि कथं कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य प्रकर्षेण नत्वा अतस्त्वं ममापराधं सोढुं क्षन्तुमर्हसि कस्य क इव पुत्रस्यापराधं कृपया पिता यथा सहते सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा सहते प्रियश्च प्रियस्यापराधं तत् प्रियार्थं यथा तद्वत् ॥ ४४ ॥

भाषा अनुवाद ।

इससे हे ईश स्वामिन् स्तुति के योग्य ईश्वर जो आप तिनको मैं शरीर से दण्डके समान साष्टाङ्ग प्रणाम करि प्रसन्न करवता हूं कि जैसे पुत्रकी अपराध कृपाकरि के पिता सहिलेता और मित्रकी अपराध मित्र मनमे नहीं धरता है तथा पत्नीकी अपराध पति भी प्रीतिसे सह्य करता है तैसेही हे देव पिता औ मित्र तथा स्वामी रूप आपभी मेरी अनजान-बालक समान प्रीतिपात्र सेवक की अपराध क्षमा कीजिये ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥
किरीटिनं गदिनं चक्रहस्त
मिच्छामि त्वां द्रष्टुमहं तथैव
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्त्ते ॥ ४६ ॥

शाङ्करभाष्यम्।

अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयाऽन्यैर्वा तदहं दृष्ट्वा हृषितोऽस्मि भयेन च प्रव्यथितं मनो मेऽतस्तदेव मे मम दर्शय हे देव रूपं यन्मत्सुखं प्रसीद देवेश जगन्निवास जगतोनिवासो जगन्निवासः हे जगन्निवास ॥ ४५ ॥

आनन्दगिरिकृतटीका।

हेतु किं पूर्वकं विश्वरूपोपसंहारं प्रार्थयते अदृष्टेति हृषितो हृष्टस्तुष्ट इति यावत्-भयेन तद्धेतुविकृतदर्शनेनेत्यर्थः ॥ ४५ ॥

स्वामिकृतटीका।

एवं क्षमयित्वा प्रार्थयते अदृष्टेति द्वाभ्यां हेदेव पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि तथा भयं नच मे मनः प्रव्यथितं प्रचलितं तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय हे देवेश हे जगन्निवास प्रसन्नो भव ॥ ४५ ॥

भाषा अनुवाद।

इस प्रकार से क्षमा करायकर अब अर्जुन दो श्लोकके द्वारा भगवान से प्रार्थना करते हैं कि हे देव श्रीकृष्ण अदृष्टपूर्व यह आपका रूप देखि के मै अतिप्रसन्न भया हौं परन्तु भयके मारे मेरा मन थिर नहीं हैं इससे हे देवेश जगत के निवास अब मेंरे पर प्रसन्न होउ और वही पूर्वरूप फिर देखावो यह प्रार्थना करता हूं ॥ ४५ ॥

## श्रीभगवानुवाच ।

**मया प्रसन्नेन तवार्जुनेदं**
**रूपं परं दर्शितमात्मयोगम् ।**

### शाङ्करभाष्यम् ।

किञ्च किरीटिनमिति किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः यत एवं तस्मात् तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्तमानिकेन विश्वरूपेण भव विश्वमूर्त्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण सुदेवपुत्ररूपेण भवेत्यर्थः ॥ ४६ ॥

### आनन्दगिरिकृतटीका ।

तदेव दर्शयेत्युक्तं किं तदित्यपेक्षायामाह किरीटिनमितीति चक्रं हस्ते यस्य तमिति व्युत्पत्तिं गृहीत्वाह चक्रेति मदीयेच्छा फलपर्यन्ता कर्त्तव्येत्याह यत इति चतुर्भुजत्वे कथं सहस्रबाहुत्वं तत्राह वर्त्तमानिकेनेति सति विश्वरूपे कथं पूर्वरूपमाक्त्वं तत्राह उपसंहृत्येति ॥ ४६ ॥

### स्वामिकृतटीका ।

तदेव रूपं विशेषयन्नाह किरीटिनमिति किरीटवन्तं गदावन्तं चक्रहस्तञ्च त्वां द्रष्टुमिच्छामि यथा पूर्वं दृष्टोऽसि तथैव अतः हे सहस्रबाहो हे विश्वमूर्त्ते इदं विश्वरूपं उपसंहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भव आविर्भव तदनेन श्रीकृष्णमर्जुनः पूर्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते यत्तु पूर्वमुक्तं विश्वस्य प्रदर्शने किरीटिनं गदिनं चक्रिणञ्च पश्यामीति तद्बाहुकिरीटाद्यभिप्रायेण यद्वा एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणञ्च सुप्रसन्नमपश्यं तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवमर्थत्वात् वचनस्य व्यक्तिरित्यविरोधः ॥ ४६ ॥

### भाषा अनुवाद ।

अब सोई पूर्वरूप कहते हैं कि हे सहस्रवाहो हेविश्वमूर्त्ते सोई किरीट मुकुट दिये गदा औ चक्र हाथमे लिये आपको देखने की इच्छा करता हूं इससे अब आप इस विश्वरूप का संहार कहे छिपाय करिके वैसही चतुर्भुजरूप स्वरूपधारण करो ॥ ४६ ॥

तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वं ॥ ४७ ॥

शाङ्करभाष्यम् ।

अर्जुनं भीतमुपलभ्य उपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन् श्रीभगवान् मयेति मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हे अर्जुन इदं परं रूपं दर्शितमात्मयोगात् आत्मन ऐश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वसमस्तमनन्तं अन्तरहितं आदौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वं ॥ ४७ ॥

आनन्दगिरिकृतटीका ।

अर्जुनेन स्थाने हृषीकेशेत्यादिना कस्य भगवतो वचनमवतारयति अर्जुनमिति भगवत्प्रसादैकोपायलभ्यं तद्दर्शनमित्याशयेनाह मयेति ॥ ४७ ॥

स्वामिकृतटीका ।

एवं प्रार्थितः संभ्रान्तमाश्वासयन् श्रीभगवानुवाच मयेति त्रिभिः हे अर्जुन किमिति त्वं वित्रस्तः रूपं दर्शितम् आत्मनो मम योगात् योगमायासामर्थ्यात् प्रसन्नेनैवाह तेजोमयं विश्वात्मकमनन्तमाद्यञ्च यन्मम रूपं त्वदन्येन त्वादृशाद्भक्तादन्येन पूर्वं न दृष्टम् ॥ ४७ ॥

भाषा अनुवाद ।

भगवान् श्रीकृष्णचन्द्र जब ऐसे प्रार्थना कियेगये तब अर्जुन को समझाते हुये तीनि श्लोकसे यह कहने लगे कि हे अर्जुन तुम भय किसलिये करते हो मैंने अतिप्रसन्न होय अपनी योगमाया की सामर्थ्यसे यह अपना अपूर्व उत्तमरूप तुमको कृपाकरिके देखाया और इस तेजोमय विश्वात्मक आदि अन्त रहित मेरे रूपको तुमारे समान भक्तके बिना किसी और भक्तने कभी भी नहीं देखा है ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्योऽहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर॥ ४८॥

शाङ्करभाष्यम्।

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति ततः स्तौति न वेदेति न वेद यज्ञाध्ययनैर्न दानैः चतुर्णामपि वेदानामध्ययनैर्यथावत् यज्ञाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथक् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थं तथा न दानैः तुलापुरुषादिभि र्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैः चान्द्रायणादिभिरुग्रैर्घोरैः एवंरूपो यथादर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्यः अहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन कुरुप्रवीर॥ ४८॥

आनन्दगिरिकृतटीका।

तच्छब्देन प्रकृतं दर्शनं परामृश्यते वेदाध्ययनात् पृथक् यज्ञाध्ययनग्रहणं पुनरुक्तेरयुक्तमित्याशङ्क्याह नवेदेति न च वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतमध्ययनस्यार्थाव बोधान्तरत्वादिति वाच्यं तस्याक्षरग्रहणान्ततया दृष्टेः साधितत्वादिति भावः श्लोकपूरणार्थमसंहितकरणं त्वत्तोऽन्येन मदनुग्रहविहीनेनेति शेषः॥ ४८॥

स्वामिकृतटीका।

एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह न वेदेति वेदाध्ययनव्यतिरेकेण यज्ञाध्ययनस्याभावात् यज्ञविद्याः कल्पसूत्राद्यास्तद्युक्तैर्वेदानां यज्ञविद्यानाञ्चाध्ययनैरित्यर्थः नच दानैः नच क्रियाभिरग्निहोत्रादिभिर्नचोग्रैस्तपोभिश्चान्द्रायणादिभिरेवं रूपोऽहं त्वत्तोऽन्येन मनुष्यलोके द्रष्टुं शक्यः अपि तु त्वमेव केवलं मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि॥४८॥

भाषा अनुवाद।

और यह अति दुर्लभ दर्शन पायके तुम अब कृतार्थ भये हो सोई कहते हैं कि न वेद अध्ययन से न यज्ञ अध्ययन कहे यज्ञविद्या जो कल्प

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदं।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य॥ ४९॥

शाङ्करभाष्यम्।

मा ते व्यथेति मा ते व्यथा मा भूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोरमीदृक् यथादर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन् पुनर्भूयस्त्वं तदेव चतुर्भुजं रूपं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य॥ ४९॥

आनन्दगिरिकृतटीका।

विश्वरूपदर्शनमेवं स्तुत्वा यद्यस्माद्दृश्यमानाद्विभेषि तर्हि तदुपसंहरामीत्याह मा ते व्यथेति बहुविधमनुभूतत्वमभिप्रेत्य तदेवेत्युक्तम् इदमिति॥ ४९॥

स्वामिकृतटीका।

एवमपि चेत्तवेदं घोरं रूपं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह मा त इति ईदृक् ईदृशं घोरं मदीयं रूपं दृष्ट्वा ते व्यथा मास्तु विमूढभावो विमूढत्वञ्च मास्तु विगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेवेदं मम रूपं प्रकर्षेण पश्य॥ ४९॥

भाषा अनुवाद।

सूत्र आदि कर्मकाण्ड के अर्थ संग्रह किये ग्रन्थ तिनसे अर्थात् न यज्ञविद्याध्ययनसे और न दानसे न अग्निहोत्र आदि क्रियोंसे न चान्द्रायण-आदि उग्र कहे कठिन तपस्योंके द्वारा यह मेरा रूप नरलोक मे देखने को शक्य है सो हे कुरुप्रवीर अर्जुन तुमको छोडि और कोई नहीं नृलोकमें इस रूपको देख शका है सो तुम मेरे अनुग्रह से इस मेरे रूपका दर्शन-करि अपने को कृतार्थ भये जानो॥ ४८॥

जो ऐसा घोर भयानक रूप देखि तुमको क्लेश होता है तो जिस मे तुमे मेरा रूप देखि व्यथा औ मूढता न होय इससे अब तुम विगतभय

सञ्जय उवाच ।
इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

शाङ्करभाष्यम् ।

इत्यर्जुनमिति इत्येवमर्जुनं प्रति वासुदेवस्तथाभूतं वचनं उक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् भूयः पुनराश्वासयामास चाश्वासितवान् भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥

आनन्दगिरिकृतटीका ।

प्रत्यक्षयोग्यत्वं तदिदं वृत्तं राज्ञे सूतो निवेदितवानित्याह सञ्जयइति तथाभूतं वचनं मया प्रसन्नेनेत्यादि चतुर्भुजं रूपं किं तस्य रूपस्य परिचितपूर्वस्य प्रदर्शनेन प्रसन्नदेहत्वेन चार्जुनं प्रत्याश्वासनं भगवतोयुक्तमित्यत्र हेतुमाह महात्मेति ॥ ५० ॥

स्वामिकृतटीका ।

एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति सञ्ज उवाच इतीति वासुदेवोऽर्जुनमित्युक्त्वा यथापूर्वमासीत्तथैव किरीटगदादियुक्तं चतुर्भुजं स्वीयं रूपं पुनर्दर्शयामास एनमर्जुनं भीतमेवं प्रसन्नवपुर्भूत्वा पुनरप्याश्वासितवान् महात्मा विश्वरूपः कृपालुरिति वा ॥ ५० ॥

भाषा अनुवाद ।

प्रसन्नचित्त होय फेरि हमारा सोई वह पूर्वरूप जो देखाचाहते हो सो देखो यह भगवान ने कहा ॥ ४९ ॥

ऐसे वचन कहि कर भगवान ने अर्जुनको वही पूर्वरूप अपना देखाया यह सञ्जय धृतराष्ट्र से कहते हैं कि महात्मा वासुदेव श्रीकृष्ण जीने अर्जुन को सोई चतुर्भुज किरीट धारी अपना शान्त स्वरूप फेरि देखाया और डर भये अर्जुनको आश्वास दिया ॥ ५० ॥

अर्जुन उवाच।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥ ५१॥

श्रीभगवानुवाच।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः॥ ५२॥

शाङ्करभाष्यम्।

दृष्ट्वेदमिति दृष्ट्वेदं मानुषं रूपं मत्सुखं प्रसन्नं भव सौम्यं जनार्दनेत्यर्दतेर्गतिकर्मणोऽसुराणां देवप्रतिपक्षजनानां प्राणवियोगजनरकाद्यर्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा गमयितृत्वाच्च जनार्दनः अभ्युदयनिःश्रेयसपुरुषार्थाय इदानीमधुनाऽस्मि संवृत्तः सचेताः किं प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि॥ ५१॥

सुदुर्दर्शमिति सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवादयोऽप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनाकाङ्क्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः॥ ५२॥

आनन्दगिरिकृतटीका।

एवं भगवदाश्वासितः सन्नर्जुनस्तं प्रत्युक्तवानित्याह अर्जुन इति॥ ५१॥

स्वामिकृतटीका।

ततो निर्भयः सन्नर्जुन उवाच दृष्ट्वेदमिति सचेताः प्रसन्नचित्त इदानीं संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यञ्च प्राप्तोऽस्मि शेषं स्पष्टं॥ ५१॥

भाषा अनुवाद।

तिसके अनन्तर निर्भय होय अर्जुनने कहा कि हे जनार्दन तुमारा यह शान्त मनुष्य स्वरूप देखि मै अब प्रसन्नचित्त औ सावधान भया हौं अब मेरे जीसे भय दूर भई॥ ५१॥

नाहं वेदैर्न तपसा न दानेन नचेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम॥ ५३॥
भक्त्या त्वनन्यया शक्योऽहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप॥ ५४॥

### शाङ्करभाष्यम्।

कस्मात् नाहमिति नाहं वेदैः ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि नतपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना नचेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथा दर्शितप्रकारो द्रष्टुमन्यैरशक्यो दृष्टवानसि मां यथा त्वं॥ ५३॥

### आनन्दगिरिकृतटीका।

उपास्यत्वाय विश्वरूपं स्तोतुं भगवद्भक्तिम् उत्थापयति भगवानिति त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति देवादय इति॥ ५२॥

दर्शनोपायाभावात् दुर्दर्शत्वमिति तर्हि दर्शनायोग्यत्वात् द्रष्टुमशक्यत्वमित्याशङ्क्याह दृष्टवानिति॥ ५३॥

### स्वामिकृतटीका।

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच सुदुर्दर्शमिति यन्मम विश्वरूपं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यं अतो देवा अप्यस्य रूपस्य नित्यं सर्वदा दर्शनमिच्छन्ति केवलं न पुनरिदं पश्यन्ति॥ ५२॥ तत्र हेतुमाह नाहमिति स्पष्टार्थं॥ ५३॥

### भाषा अनुवाद।

तिसके वादि भगवान् अपनी कृपाकी दुर्लभता देखावते हैं कि जो यह हमारा विश्वरूप स्वरूप तुमने देखा इसका दर्शन अतिदुर्लभ है देखो देवतागण भी इस रूपके दर्शन की इच्छा सर्वदा करते हैं परन्तु इसका दर्शन कभी नहीं पावते हैं॥ ५२॥

उस अपने रूपके दुर्लभ दर्शन मे कारण कहते हैं कि तुमने जो रूप मेरा देखा वह वेद अध्ययन औ तपस्या या दान यज्ञ के द्वारा किस की देखनेकी सामर्थ नही है॥ ५३॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥
इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुन संम्वादे
विश्वरूपदर्शनो नामैकादशोऽध्यायः ॥ ११ ॥

## शाङ्करभाष्यम् ।

कथं पुनः शक्य इत्युच्यते भक्तेति भक्त्या तु किंविशिष्टयेत्याह अनन्यया अपृथग्भूतया भगवतोऽन्यत्र पृथक् न कदाचिदपि भवति स त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्न लभ्यते यया साऽनन्या भक्तिस्तया शक्योऽहमेवं विधो विश्वरूपप्रकारो हे अर्जुन ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुञ्च साक्षात् कर्त्तुं तत्वेन तत्त्वतः प्रवेष्टुञ्च मोक्षञ्च गन्तुं परन्तप ॥ ५४ ॥

## आनन्दगिरिकृतटीका ।

केनोपायेन तर्हि द्रष्टुं शक्यो भगवानिति पृच्छति कथमिति शास्त्रीयज्ञानद्वारा तद्दर्शनं सफलं सिद्ध्यतीत्याह उच्यत इति न भक्तिमात्रं तत्र हेतुरिति तुशब्दार्थं स्फुटयति किमित्यादिना अनन्यभक्तिमेव व्यनक्ति सर्वैरिति ॥ ५४ ॥

## स्वामिकृतटीका ।

तर्हि केनोपायेन द्रष्टुं शक्यसे तत्राह भक्त्या त्विति अनन्यया मदेकनिष्ठया भक्त्या तु एवंभूतो विश्वरूपोऽहं तत्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतो द्रष्टुं प्रत्यक्षतः प्रवेष्टुञ्च तादात्म्येन शक्यो नान्यैरुपायैः ॥ ५४ ॥

## भाषा अनुवाद ।

तो फेरि कौन उपायसे आप दर्शन देसकते हौ जो यह कहो तो कहते हैं कि हे अर्जुन अनन्य कहे मदेकचित्त भक्तिही के द्वारा ऐसे विश्वरूप से हम प्रगट हो शकते हैं और यह भक्त भी हमै जानि शके है और हे परन्तप अर्जुन शास्त्र से प्रत्यक्ष औ तदात्मरूप प्रवेश अर्थात् उस रूप मे लीन हम कराय शकते हैं और कोई भी उपाय नहीं है यह तुम निश्चयसे जानो ॥ ५४ ॥

शाङ्करभाष्यम् ।

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते मत्कर्मकृदिति मत्कर्मकृन्मदर्थं कर्म मत्कर्म तत् करोतीति मत्कर्मकृत् मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमाप्रेत्यगन्तव्या गतिरिति स्वामिनं प्रतिपद्यते अयन्तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यत इति मत्परमोऽहं परमः परागतिर्यस्य सोऽयं मत्परमः तथा मद्भक्तः मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजत इति मद्भक्तः सङ्गवर्जितः धन मित्र पुत्र कलत्र बन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहवर्जितो निर्वैरो निर्गतवैरः अतः सर्वभूतेषु शत्रुभावरहितः आत्मनोऽत्यन्ताप्रकारप्रवृत्तेष्वपि य ईदृशो मद्भक्तः स मामेत्यहमेव तस्य परागतिर्नान्या कदाचिद्भवतीति ॥ ५५ ॥

इति शाङ्करभाष्ये एकादशोऽध्यायः ॥ ११ ॥

आनन्दगिरिकृतटीका ।

भक्त्या त्विति विशेषणादन्येषामहेतुत्वमाशङ्क्याह अधुनेति समुच्चित्य संचिन्त्य पुञ्जीकृत्येति यावत् मत्कर्मकृदित्युक्ते मत्परमत्वम् आर्थिकम् इति पुनरुक्तिरित्याशङ्क्याह करोतीति भगवानेव परमा गतिरिति निश्चयवतस्तस्यैव निष्ठा सिध्यतीत्याह तथेति न तत्रैव सर्वप्रकारैर्भजनं धनादिस्नेहाकृष्टत्वादित्याशङ्क्याह सङ्गेति द्वेषपूर्वकानिष्टाचरणं वैरम् अनुपकारिषु तद्भावेऽपि भवत्वपकारिष्विति शङ्कित्वाह आत्मन इति एतच्च सर्वं संचिन्त्यानुष्ठानार्थमुक्तमेवमनुतिष्ठतो भगवत् प्राप्तिरवश्यम्भाविनीत्युपसंहरति अयमिति तदेवं भगवतो विश्वरूपस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य मत्कर्मकृदित्यादिन्यायेन क्रमसुक्तिफलमभिध्यानमभिवदता तत्पदवाच्योऽर्थो व्यवस्थापितः ॥ ५५ ॥

इति आनन्दगिरिकृतटीकायाम् एकादशोऽध्यायः ॥ ११ ॥

स्वामिकृतटीका ।

अतः सर्वशास्त्रार्थसारं परमरहस्यं दर्शयित्वाह मत्कर्म कृदिति मदर्थं कर्म करोतीति मत्कर्मकृत् अहमेव परमः पुरुषार्थो यस्य सः ममैव भक्त आश्रितः पुत्रादिषु सङ्गवर्जितः निर्वैरश्च सर्वभूतेषु एवम्भूतो यः स मां प्राप्नोति नान्यः इति देवैरपि सुदुर्दर्शं तपो यज्ञादिकोटिभिः भक्ताय भगवानेवं विश्वरूपमदर्शयत् ॥ ५५ ॥

इति श्रीधरस्वामिकृतटीकायाम् एकादशोऽध्यायः ॥ ११ ॥

अब शास्त्र के अर्थ का सारांश परम रहस्य कहते हैं कि हे पाण्डव मत्कर्म कृत कहे मेरी प्रीति के अर्थ जो कर्म करै है और मत्परम कहे मही हो परम प्रयोजन जिस को औ मद्भक्त कहे मेरे आश्रित यथा पुत्र स्त्री धनमे आशक्ति विहीन और भूत कहे प्राणीमात्र मे वैर रहित जो है सोई हम को प्राप्त होते हैं॥ ५५॥

इति श्री जगन्नाथ शुक्ल विरचितायां मनभावनी भाषटीकायां

एकादशोऽध्यायः॥ ११॥

---

# श्रीमद्भगवद्गीता ।

## द्वादशोऽध्यायः ।

---

अर्जुन उवाच

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

शाङ्करभाष्यम् ।

द्वितीय प्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्य्य सर्वज्ञानशक्तिमत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्र तत्रोक्तं विश्वरूपाध्याये तु ऐश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया तच्च दर्शयित्वोक्तवानसि मत्कर्म्मकृदित्याद्यतोऽहमनयो रुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीति अर्जुन उवाच एवमिति एवं सततयुक्तानैरन्तर्य्येण भगवत्कर्मादौयथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः ये भक्ता अनन्यशरणाः

आनन्दगिरिकृतटीका ।

अशोच्यानित्यादिषु विभूत्यध्यायावसानेषु अध्यायेषु निरुपाधिकस्य ब्रह्मणो ज्ञेयत्वेनानुसन्धानमुक्तमिति वृत्तं कीर्तयति द्वितीयेति अतिक्रान्तेषु तत्तदध्यायेषु सोपाधिकस्य ब्रह्मणो ध्येयत्वेन प्रतिपादनं कृतमित्याह सर्वेति सर्वस्यापि प्रपञ्चस्य योगो घटना जन्मस्थिति भङ्गप्रवेशनियमनाख्या तत्रैश्वर्यं सामर्थ्यं तेन सर्वत्र ज्ञेये प्रतिबन्धविधुरया ज्ञानशक्त्या विशिष्टस्य सत्त्वाद्युपहितस्य भगवतो ध्यानं तत्र तत्र प्रसङ्गमापद्य मन्दमध्यमयोरनुग्रहार्थमुक्तमित्यर्थः एकादशे वृत्तमनुद्रवति विश्वरूपेति विश्वरूपेऽपि अध्यायान्ते भगवदुपदेशमनुवदति तच्चेति अतीतानन्तरश्लोकेनोक्तमर्थमपरामृशति मत्कर्मकृदिति यथाधिकारं तारतम्योपेतानि साधनानि नियन्तुमध्यायान्तरमवतारयन्नादौ प्रश्नमुत्थापयति अत इति सोपाधिकध्यानस्य निरुपाधिकज्ञानस्य चोक्तत्वादित्यर्थः एवं शब्दार्थमुक्त्वा तमनूद्य सततयुक्ता इति भागं विभजते एवमिति ये भक्ता इत्यनूद्य व्याचष्टे अनन्येति मन्दमध्यमाधिकारिणः सगुण-

## शाङ्करभाष्यम्।

**त्वां यथा दर्शितं विश्वरूपम्पर्युपासते ध्यायन्ति ये चाप्यक्षरमिति ये चान्येऽपि त्यक्तसर्व्वैषणाः सन्न्यस्तसर्व्वकर्म्माणो यथा विशेषितं ब्रह्माक्षरं निरस्तसर्व्वोपाधित्वादव्यक्तमकरणगोचरं यद्धिलोके करणगोचरन्तद्व्यक्तमुच्यते अञ्जेर्धातोस्तत्कर्म्मकत्वादिदं त्वक्षरं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तत् ये चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः के अतिशयेन योगविद इत्यर्थः॥ १॥**

### आनन्दगिरिकृतटीका।

शरणानुक्त्वा निर्गुणनिष्ठानुत्तमाधिकारिणो निर्द्दिशति ये चेति यथा विशेषितमनिर्देश्यं सर्वत्रगमचिन्त्यं कूटस्थमित्यादि वक्ष्यमाणविशेषणविशिष्टमित्यर्थः नक्षरत्यश्नुते वेत्यक्षरम् अव्यक्तमित्येतद्व्याचष्टे निरस्तेति करणागोचरत्वं व्यतिरेकद्वारा स्फोरयति यद्धीति यथा विशेषितमित्युक्तं स्फुटयति शिष्टैश्चेति पर्वादिगतक्रियापदानुषङ्गं सूचयति तदिति सर्वे तावदेते योगं समाधिं विन्दन्तीति योगविदः के पुनरतिशयेनैषां मध्ये योगविदो योगिन इति पृच्छति के अतिशयेनेति॥ १॥

### स्वामिकृतटीका।

निर्गुणोपासनस्यैवं सगुणोपासनस्य च श्रेयःकतरदित्येतन्निर्णेतुं द्वादशोद्यमः पूर्वाध्यायान्ते मत्कर्मकृन्मत्परमो मद्भक्त इत्येवं निष्ठस्य श्रेष्ठत्वमुक्तं कौन्तेय प्रतिजानीहीत्यादिना च तत्र तत्र तथैव श्रेष्ठत्वं निर्णीतं तथा तेषां ज्ञानी नित्ययुक्त एक भक्तिर्विशिष्यत इत्यादिना सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसीत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् एतत्तूभयोः श्रैष्ठ्ये विशेषजिज्ञासया भगवन्तमर्जुन उवाच एवमिति एवं सर्वकर्मार्पणादिना त्वत्परायणा त्वन्निष्ठाः सन्तो ये भक्तास्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्य्युपासते ध्यायन्ति ये चाप्यक्षरं ब्रह्म अव्यक्तं निर्विशेषमुपासते तेषामुभयेषां मध्ये केऽतिशयेन योगविदोऽतिश्रेष्ठा इत्यर्थः॥ १॥

## भाषा अनुवाद।

**एकादश अध्याय के अन्तिमश्लोक से औ नवम अध्याय के एकतिस श्लोकादि से भी सगुण भगवद्भक्तों को श्रेष्ठ कहा और तेषां ज्ञानी नित्ययुक्त एक भक्तिर्विशिष्यते इत्यादि सप्तम अध्याय के सत्र हें श्लोकसे**

## श्रीभगवानुवाच

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमो मताः ॥ २ ॥**

शाङ्करभाष्यम् ।

श्रीभगवानुवाच ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान् प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः ये त्वितरे मयीति मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनः ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टया उपेताः मे मम मताः अभिप्रेता युक्ततमा इति नैरन्तर्येण हि ते मच्चित्ततयाऽहोरात्रमतिवाहयन्ति अतो युक्तं तान् प्रतियुक्ततमा इति वक्तुम् ॥ २ ॥

आनन्दगिरिकृतटीका ।

किमनयोर्योगयोर्मध्ये सुशक्यो योगो वा पृच्छति किंवा साक्षान्मोक्षहेतुरिति विकल्प्य क्रमेणोत्तरं भगवानुक्तवानित्याह श्रीभगवानिति यदि द्वितीयस्तर्हि तद्विषयोगस्य वक्ष्यमाणत्वात् प्रष्टव्यतेत्याह ये त्वक्षरेति यद्याद्यस्तत्राह ये त्विति सर्वयोगेश्वराणां सर्वेषां योगमधितिष्ठतां योगिनामित्यर्थः विमुक्ता त्यक्ता रागाद्याख्या क्लेशनिमित्तभूता तिमिरशब्दिताऽनाद्यज्ञानकृता दृष्टिरविद्या मिथ्याधीर्येन तमिति विशिनष्टि विमुक्तेति नित्ययुक्तत्वं साधयति अतीतेति तत्रोक्तो योऽर्थो मत्कर्मकृदित्यादि तन्निष्ठत्वेनापनययोग-

भाषा अनुवाद ।

श्री सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि इत्यादि चतुर्थ अध्याय के कत्तिस श्लोकादि से भी ज्ञानी ही को श्रेष्ठ कहा सो सगुण निर्गुण उपासनामे कौन उपासना श्रेय है अर्थात् जो भक्त सर्वज्ञ विश्वरूप सर्वशक्तिमान रूप तुम को ध्यान करता है सो कि जो अव्यक्त औ निर्विशेष अविनाशी ब्रह्म की उपासना करता है सो इन दोनो के मध्य मे कौन भक्त अतिशय श्रेष्ठ अर्थात् श्रेष्ठ है यह अर्जुन भगवान से पूछतेभये ॥ १ ॥

ये त्वक्षर मनिर्देश्य मव्यक्तं पर्य्युपासते।
सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

शाङ्करभाष्यम् ।

किमितरे युक्ततमा न भवन्ति न किन्तु तान् प्रति यद्वक्तव्यन्तत् शृणु येतु अक्षरमनिर्देश्यमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यते अतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते उपासनं नाम यथाशास्त्रमुपास्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेन दीर्घकालं यदासनं तदुपासनमाचक्षते अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्य चिन्त्यं चाव्यक्तत्वादचिन्त्यं यद्धि करणगोचरं तन्मनसापि चिन्त्यं तद्विपरीतत्वादचिन्त्यमक्षरं

आनन्दगिरिकृतटीका ।

मनन्तस्य नियमेनानुष्ठानं तेनेत्यर्थः उपासते मयि स्तुतिं सदा कुर्वन्तीत्यर्थः उक्तोपासकानां युक्ततमत्वं व्यनक्ति नैरन्तर्येणेति तदेव स्फुटयति अहोरात्रमिति अह्नि च रात्रौ चातिमात्रमतिशयेन मामेव विषयान्तरविमुखाश्चिन्तयन्तीत्यर्थः ॥ २ ॥

स्वामिकृतटीका ।

तत्र प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच मयीति मयि परमेश्वरे सर्वज्ञत्वादिगुणविशिष्टे मन आवेश्य एकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः श्रेष्ठया श्रद्धया युक्ता ये मामाराधयन्ति ते युक्ततमा ममाभिमताः ॥ २ ॥

भाषा अनुवाद ।

तिन दोनो के बीच मे सगुण उपासना सुख साध्य है इस हेतु से भगवान् सगुण उपासक भक्त को श्रेष्ठ कहते हुये उत्तर देते हैं कि सर्वज्ञत्व आदि गुणविशिष्ट परमेश्वर स्वरूप मेरे मे मन को एकाग्र करिके श्रद्धापूर्वक मत्प्रीत्यर्थं कर्म का अनुष्ठान करने से मेरेमे निष्ट कहे युक्तहोय जो हमारी आराधना करता है सोई हमारे मत से युक्ततम कहे अतिश्रेष्ठ है सो तुम मत्प्रीत्यर्थं कर्म करो ॥ २ ॥

## शाङ्करभाष्यम् ।

कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषं मायाव्याकृतादिशब्द-वाच्यतया मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं मम माया दुरत्यये-त्यादौ प्रसिद्धं यत्तत् कूटं तस्मिन् कूटे स्थितं तदध्यक्षतया अथवा राशिरिव स्थितं कूटस्थमतएवाचलं यस्मादचलं तस्मात् ध्रुवं नित्य-मित्यर्थः ॥ ३ ॥

### आनन्दगिरिकृतटीका ।

वक्ष्यामस्तदुपरिष्टादित्युक्तं प्रश्नपूर्वकं प्रकटयति किमित्यादिना पूर्वेभ्यः फलतो विशेषार्थस्तुशब्दः अव्यक्तत्वमनिर्देश्यत्वे हेतुरित्याह अव्यक्तत्वादिति यतोऽव्यक्तमतोऽनिर्देश्य-मिति योजना निरुपाधिकेऽक्षरे कथमुपासनेति पृच्छति उपासनमिति शास्त्रतोऽक्षरं ज्ञात्वा तदुपेत्यात्मत्वेनोपगम्योपासते तथैव तिष्ठन्ति पूर्णश्चिदेकतानमक्षरमात्मानमेव सदाभावयन्तीत्ये-तदिह विवक्षितमित्याह यथेति अव्यक्तत्वमेवाचिन्त्यत्वेऽपि हेतुरित्याह यद्धीति कूटस्थ शब्दस्योत्तरार्थत्वं वृद्धप्रयोगतः साधयति कूटरूपमिति आदिपदमनृतार्थं प्रकृते किन्तदनृतं कूटशब्दितमित्याह तथाचेति उक्तरीत्या कूटशब्दस्यानृतार्थत्वे यदनेकस्य संसारस्य बीजञ्चिद्रूपमाणं नानाविधदोषैर्मेलं तद्धीदं तच्चाव्याकृतं मायान्तु प्रकृतिं मम मायेत्यादौ मायाशब्दितया प्रसिद्धमविद्यादि तदिह कूटशब्दितमित्यर्थः तत्रावस्थानं केनरूपेणेत्या-शङ्कायामाह तदध्यक्षतयेति कूटस्थशब्दस्य निःक्रियत्वमर्थान्तरमाह अथवेति पूर्वमुपजीव्याग-न्तरविशेषणद्वयप्रवृत्तिमाह अतएवेति ॥ ३ ॥

### स्वामिकृतटीका ।

तर्हीतरे किं न श्रेष्ठा इत्यत आह ये त्विति द्वाभ्यां ये त्वक्षरं पर्युपासते ध्यायन्ति तेऽपि मामेव प्राप्नुवन्तीति द्वयोरन्वयः अक्षरस्य लक्षणमनिर्देश्यमित्यादि अनिर्देश्यशब्देन निर्देष्टुमशक्यं यतोऽव्यक्तं रूपादिहीनं सर्वत्रगं सर्वव्यापि अव्यक्तत्वादेवाचिन्त्यं कूटस्थं कूटे मायाप्रपञ्चेऽधिष्ठानत्वेनावस्थितम् अचलं स्पन्दनरहितम् अतएव ध्रुवं नित्यं वृद्ध्यादिरहितं सदैकमन्यत् ॥ ३ ॥

## भाषा अनुवाद ।

और अक्षर ब्रह्मका लक्षण औ स्वरूप कहते हैं कि ब्रह्म अनिर्देश्य अर्थात् यह है ऐसा है इस कहने के अयोग्य है क्योंकि अव्यक्त कहे रूपादि

**सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहितेरताः ॥ ४ ॥**

शाङ्करभाष्यम् ।

संनियम्येति संनियम्य सम्यक् नियम्य संहृत्य इन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः ते ये एवम्विधाः ते प्राप्नुवन्ति मामेव सर्वभूतहितेरताः न तेषां वक्तव्यं किञ्चित् मां ते प्राप्नुवन्ति इति ज्ञानीत्वात्मैव मे मतमित्युक्तत्वात् नहि भगवत् स्वरूपाणां सतां युक्ततमा युक्ततमत्वं वा वाच्यम् ॥ ४ ॥

आनन्दगिरिकृतटीका ।

कथमक्षरमुपासते तदुपासने वा किं स्यादिति तदाह सन्नियम्येति तुल्या हर्षविषादरागद्वेषादिरहिता सम्यक् ज्ञानेनाज्ञानस्यापनीतत्वात् परस्परापेक्षयोरसम्भवत्विवक्षितत्वाद्द ते य इति सर्वेभ्यो भूतेभ्यो हितमेव चिन्तयन्तस्तदेवाचरन्ति ज्ञानवतां यथा ज्ञानम्भगवत् प्राप्तेरर्थसिद्धत्वादनुवादमात्रमित्याह नत्विति ज्ञानिनो भगवत् प्राप्तिः सिद्धैवेत्यत्र प्रमाणमाह ज्ञानीत्विति ज्ञानवताम्भगवत् प्राप्तौ त एवयुक्ततमावक्तव्याः कथं सगुणब्रह्मोपासकान् युक्ततमानुक्तवानसीत्याशंक्याह नहीति ॥ ४ ॥

स्वामिकृतटीका ।

संनियम्येति इन्द्रियसमूहमपहृत्य सर्वत्र सर्वस्मिन् काले समबुद्धयः नित्यानित्य इष्टानिऽष्टवस्तुप्राप्तौ ॥ ४ ॥

भाषा अनुवाद ।

रहित है औ सर्वव्यापी तथा निराकार हेतु से अचिन्त्य औ कूटस्थ अर्थात् कूट जो माया प्रपञ्च ब्रह्माण्ड तिस का अधिष्ठान कहे आश्रयरूप स्थित है और अचल कहे व्यापार रहित तथा ध्रुव कहे अचल नित्य हानि वृद्धि शून्य है तीन चारिके श्लोक का अर्थ एक साथ है ॥ ३ ॥

जो निर्गुण के उपासकों को क्लेश अधिक है तो फेरि क्या निर्गुण के उपासक श्रेष्ठ नहीं हैं इस शंकापर दो श्लोक से कहते हैं कि जो समदर्शी जन इन्द्रियगण को अपने वशीभूत करके अक्षर कहे अविनाशी

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

शाङ्करभाष्यम्।

किन्तु क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानापरित्यागनिमित्तः अव्यक्तासक्तचेतसामव्यक्ते आसक्तं चित्तं येषां ते अव्यक्तासक्तचेतसस्तेषाम् अव्यक्तासक्तचेतसाम् अव्यक्ता हि यस्माद् या गतिरक्षरात्मिका दुःखं देहवद्भिर्देहाभिमानवद्भिरवाप्यते अतः क्लेशोऽधिकतरः ॥ ५ ॥

आनन्दगिरिकृतटीका।

सगुणोपासकेष्वपि कथमित्याह किन्त्विति अक्षरोपासनस्य दुष्करत्वादुपासनान्तरस्य सुकरत्वादित्यभिप्रेत्याह क्लेश इति अधिक एवेतरेभ्यो द्वैतदर्शिभ्यः कामिभ्य इति शेषः तेषां क्लेशस्याधिकत्वे हेतुं मत्वा विशिनष्टि देहेति अव्यक्तमत्यन्तसूक्ष्मं निर्विशेषमक्षरन्तस्मिन्नासक्तमभिनिविष्टञ्चेतो येषान्तेषामिति यावत् अक्षरोपासकानां क्लेशस्याधिकतरत्वे भगवानेव हेतुमाह अव्यक्तेति दुःखं दुःखेन कृच्छ्रेणेति यावत् अतो देहाभिमानत्यागादित्यर्थः ॥ ५ ॥

स्वामिकृतटीका।

ननु तेऽपि त्वामेव प्राप्नुवन्ति तर्ह्यीतरेषां युक्ततमत्वं कुत इत्यपेक्षायां क्लेशाकृतं विशेषमाह क्लेश इति त्रिभिः अव्यक्ते निर्विशेषेऽक्षरे आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः हि यस्मादव्यक्तविषया गतिर्निष्ठा देहाभिमानिभिर्दुःखं यथाभवति एवमवाप्यते देहाभिमानिनां नित्यं प्रत्यक् प्रवणत्वस्य दुर्घटत्वादिति भावः ॥ ५ ॥

भाषा अनुवाद।

ब्रह्मका ध्यान करते हैं सो सकल भूतों के हितकारी निर्गुण उपासक मनुष्य भी हम को प्राप्त होते हैं ॥ ४ ॥

जो निर्गुणके उपासक भी तुम को प्राप्त होते हैं तो सगुणके उपासक युक्त कहे श्रेष्ठ जो आपने कहा सो कैसे संभव है इस शंका को निवारण करते हुये तीनि श्लोक से क्लेश हेतुक विशेष कहते हैं कि अव्यक्त

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ६ ॥**

## शाङ्करभाष्यम् ।

अक्षरोपासकानां यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः येत्विति ये तु सर्वाणि कर्माणि मयीश्वरे सन्न्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तः अनन्येनैव अविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनाऽनन्येनैव केवलेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥

### आनन्दगिरिकृतटीका ।

ते कथं वर्त्तन्ते तत्राह अक्षरेति यद्यक्षरोपासका क्लेशमनुभवन्तीति विशिष्यन्ते तत् किं सगुणोपासकास्त्वा नानुभवन्ति न तेषामपि क्लेशो मत्प्रसादादित्याह ये त्विति तुशब्दः शङ्कानिवृत्त्यर्थः ॥ ६ ॥

### स्वामिकृतटीका ।

भक्तानां तु मत्प्रसादादनायासेनैव सिद्धिर्भवतीत्याह ये त्विति द्वाभ्यां ये मयि परमेश्वरे सर्वाणि कर्माणि संन्यस्य समर्प्य मत्पराभूत्वा मां ध्यायन्तोऽनन्येन न विद्यतेऽन्यो भजनीयो यस्मिन् तेनैवैकान्तभक्तियोगेनोपासत इत्यर्थः ॥ ६ ॥

## भाषा अनुवाद ।

निर्विशेष अक्षर ब्रह्म मे जिस का चित्त आशक्त भया उस को अधिक क्लेश होय है क्योंकि अव्यक्त ब्रह्म विषयक जो निष्ठा सो देहाभिमानी मनुष्य को अति दुख से प्राप्त होती हैं कारण यह कि स्थूलशरीर मे आत्मबुद्धि विशिष्ट मनुष्यों के मन का अन्तर्मुख वृत्ति का प्रत्यक चैतन्य मे निमग्न होना सर्वथा दुष्कर है ॥ ५ ॥

परन्तु मेरे भक्त मेरी कृपा से अनायास सिद्ध होते हैं यह दो श्लोक के द्वारा कहते हैं कि जो मनुष्य परमेश्वर स्वरूप मेरे को सकल कर्म अर्पणपूर्वक मत्परायण कहे अनन्य भाव से मेरे मे तत्पर होते हैं ते मेरा ध्यान उपासना करते हैं अनन्यभाव कहे नहीं है अन्यवस्तु मे भाव प्रीति जिस मे ॥ ६ ॥

**तेषामहं समुद्धर्त्ता मृत्युसंसार सागरात्।**
**भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**
**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।**
**निवसिष्यसि मय्येव अत ऊर्द्धं न संशयः ॥ ८ ॥**

शाङ्करभाष्यम्।

तेषां किं तेषामिति तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्त्ता कुत इत्याह मृत्युसंसारसागरात् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागरवत् सागरो दुरुत्तरत्वात् तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्त्ता भवामि न चिरात् किं तर्हि क्षिप्रमेव हेपार्थ मय्यावेशितचेतसां मयि विश्वरूपे आवेशितं चेतो येषां ते मय्यावेशितचेतसस्तेषां ॥ ७ ॥

यतएवं तस्मात् यय्येवेति मय्येव विश्वरूप ईश्वरे मनः सङ्कल्प विकल्पात्मकमाधत्स्व स्थापय मय्येव व्यवसायं कुर्वतीं बुद्धिम् आधत्स्व निवेशय ततस्तेन किं स्यादिति शृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना

आनन्दगिरिकृतटी।

तेषां भगवद् ध्यायिनो किं फलतीति शङ्कामनुभाष्य फलमाह तेषामित्यादिना समुद्धर्त्ता सम्यगूर्द्धं नेता ज्ञानावष्टम्भदानेनेत्यर्थः मृत्युरज्ञानं मरणाद्यनर्थहेतुत्वात्तेन कार्य्यतया युक्तः संसारः ॥ ७ ॥

स्वामिकृतटीका।

एवं मय्यावेशितं चेतो यैस्तेषां मृत्युयुक्तात् संसारसागरादहं सम्यगुद्धर्त्ता अचिरेण भवामि ॥ ७ ॥

भाषा अनुवाद।

इस प्रकार से जिनो ने मेरे मे चित्त लगाया है उनका हे पार्थ तत्काल इस मृत्युसंसार सागर से उद्धार करनेवाला मै हों अर्थात् एकाग्रचित्त भक्तजनों को मै संसार दुख से उद्धार कर्त्ता हूं ॥ ७ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

शाङ्करभाष्यम् ।

मयि निवासं करिष्यस्येव अतः शरीरपातादूर्द्ध्वं न संशयः संशयोत्र न कर्त्तव्यः ॥ ८ ॥

अथेति अथ एवं यथाऽवोचाम तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं कर्त्तुं न शक्नोषि चेत्ततः पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्व आप्तुं प्राप्तुं हे धनञ्जय ॥ ९ ॥

आनन्दगिरिकृतटीका ।

भगवदुपासना विशिष्टफलेत्युक्तेर्यतः नित्ययमनो भगवन्निष्ठायां प्रयतितव्यमित्याह यत इति असंहिताकरणं श्लोकपूरणार्थं मनो वुद्ध्योर्भगवत्यस्थापने प्रश्नपूर्वकं फलमाह तत इति भगवन्निष्ठस्य तत्प्राप्तौ प्रतिबन्धाभावं सूचयति संशयोऽस्तीति ॥ ८ ॥

स्वामिकृतटीका ।

यस्मादेवं तस्मान्मय्येवेति मय्येव संकल्प विकल्पात्मकं मन आधत्स्व स्थिरीकुरु बुद्धिमपि व्यवसायात्मिकां मय्येव निवेशय एवं कुर्वन्नात् प्रसादेन लब्ध ज्ञानः सन्नत ऊर्द्ध्वं देहान्ते मय्येव निवसिष्यसि निवत्स्यसि मदात्मना वासं करिष्यसि नात्र संशयः तथा च श्रुतिः देहान्ते देव परं ब्रह्मतारकं व्याचष्टे इति ॥ ८ ॥

भाषा अनुवाद ।

इस से संकल्प विकल्पात्मक मन को मेरे मे थिर करो और व्यवसायात्मिका बुद्धि को भी जोमेरे मे लगावो तो देह के अन्तमें मेरी कृपासे तत्त्वज्ञान को प्राप्त होय परमात्मारूप मेरे मे स्थिति कहे वास करोगे इस मे कुछ संशय नहीं है सोई श्रुति कहती हैं कि सगुण उपासक को देहान्त होने पर वह उपास्य देव परब्रह्म मंत्र उपदेश करिके अपरोक्ष कहे साक्षात् कर देय है ॥ ८ ॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्म परमो भव ।**
**मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥**

शाङ्करभाष्यम् ।

अभ्यासेऽपीति अभ्यासेऽप्य समर्थोऽसि यदि अशक्तोऽसि तर्हि मत्कर्म परमो भव मदर्थं कर्म मत्कर्म तत्परमो भव मत्कर्म प्रधान इत्यर्थः अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धिं योगं ज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥ १० ॥

आनन्दगिरिकृतटीका ।

तत् प्रदर्शनपूर्वकं भगवत् प्राप्त्युपायान्तरमाह अथेत्यादिना ॥ ९ ॥

एकास्वात्मस्थं स्थूलं प्रतिमादिसमाचारं तपोस्थलरे शिवरूपे चित्तैकाग्र्यं यद्वैताभिनिवेशादभ्यासाधीने योगेऽपि सामर्थ्याभावे पुनरुपायान्तरमाह अभ्यासेऽपीति अभ्यासयोगेन भगवदर्थं कर्माणि कुर्वाणस्य किं स्यादित्याशंक्याह अभ्यासेनेति सिद्धिः ब्रह्मभावः अपेरिह अवधिस्तूचनार्थः ॥ १० ॥

स्वामिकृतटीका ।

अत्राशक्तं प्रति सुगमोपायमाह अथेति स्थिरं यथा भवत्येवं मयि चित्तं धारयितुं यदि शक्तो न भवसि तर्हि विक्षिप्तं चित्तं पुनः पुनः प्रत्याहृत्य मदनुस्मरणलक्षणो योऽभ्यासयोगस्तेन मां प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

यदि पुनर्नैवं तत्राह अभ्यास इति यदि पुनरभ्यासेऽप्यशक्तोऽसि तर्हि मत्प्रीत्यर्थानि यानि कर्माणि एकादश्युपवासव्रतपूजापरिचर्य्यानाम् संकीर्त्तनादीनि तदनुष्ठानमेव परमं यस्य तादृशो भव एवंभूतानि कर्माण्यपि मदर्थं कुर्वन् मोक्षं प्राप्स्यसि ॥ १० ॥

भाषा अनुवाद ।

और सगुण उपासना मे अशक्त पुरुष को सुगम उपाय कहते हैं कि जो चित्त को मेरे मे स्थिर करने न शके तो हे धनञ्जय अर्जुन विषय मे विक्षिप्त चित्त को विषयों से पुनः पुनः फेरि कर मेरे स्मरण को अभ्यास से हमें प्राप्त होने को यत्नकरै ॥ ९ ॥

और जो अभ्यास करने मे समर्थ न होउ तो मत्प्रीत्यर्थ एकादशी

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

शाङ्करभाष्यम् ।

अथैतदिति अथ पुनरेतदपि यदुक्तं मत्कर्मपरत्वं तत् कर्त्तुमशक्तोऽसि मद्योगमाश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं मद्योगस्तमाश्रितः सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान् सन्नित्यर्थः ॥ ११ ॥

आनन्दगिरिकृतटीका ।

भगवत् कर्मपरत्वमप्यशक्यमिति शङ्कते अथेति बहिर्विषयाकृष्टचेतस्त्वादित्यर्थः तर्हि भगवत् पादृष्टुप्रायत्वेन संयतचित्तो भूत्वा कर्मफलसंन्यासं कुर्वित्याह मद्योगमिति ॥ ११ ॥

स्वामिकृतटीका ।

अत्यन्तं भगवद्धर्मपरिनिष्ठायामप्यशक्तस्य पश्चात्तरमाह अथेति यद्येतदपि कर्त्तुं न शक्तोऽपि तर्हि मद्योगं मदेकशरणं त्वमाश्रितः सन् सर्वेषां दृष्टादृष्टार्थानामवश्यकानाञ्चाग्निहोत्रादि कर्मणां फलानि यतचित्तो भूत्वा परित्यज एतदुक्तं भवति मया तावदीश्वराज्ञया यथाशक्ति कर्माणि कर्त्तव्यानि फलं तावद् दृष्टमदृष्टं वा परमेश्वराधीनमित्येवं मयि भावमारोप्य फलासक्तिं परित्यज्य वर्त्तमानो मत्प्रसादेन कृतार्थो भविष्यसीति तात्पर्यम् ॥ ११ ॥

भाषा अनुवाद ।

उपवास व्रत पूजा औ नाम का कीर्त्तन आदि कर्म तो धर्म्म हैं उन मे तत्पर होउ क्योंकि मत्प्रीत्यर्थ कर्म करने से भी तुम मुक्ति को प्राप्त होउगे ॥ १० ॥

और इस भगवद्धर्म मे भी असमर्थ पुरुष को दूसरी उपाय कहते हैं कि जो मत्प्रीत्यर्थ कर्म भी न करि शकै तो एक मेरी शरण होय औ चित्त वशीभूत करिकै यावत् कर्मफल का परित्याग करै इस का तात्पर्य यह है कि अन्तर्यामी ईश्वरकी प्रेरणा से हम को कर्म कर्तव्य हैं और इन कर्मों का दृष्ट अदृष्ट फल परमेश्वरके आधीन है ऐसा भाव मेरे मे आरोप करिकै

## श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
## ध्यानात् कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

### शाङ्करभाष्यम् ।

इदानीं सर्वकर्म्मफलत्यागं स्तौति श्रेयो हि प्रशस्यतरं ज्ञानं कस्माद्-विवेकपूर्वकादभ्यासात्तस्मादपि ज्ञानात् ज्ञानपूर्वकं ध्यानं विशिष्यते ज्ञानवतो ध्यानादपि कर्म्मफलत्यागो विशिष्यत इति अनुषज्यते एवं कर्म्म-फलत्यागात् पूर्वं विशेषणवत: शान्तिरुपशम: सहेतुकस्य संसारस्यानन्तरमेव स्यान्नतु कालान्तरमपेक्षते अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठाना-शक्तौ सर्वकर्मणां फलत्याग: श्रेय: साधनमुपदिष्टं न प्रथममेवातश्च श्रेयो हि ज्ञानमभ्यासादुत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्याग: स्तूयते सम्पन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् केन साधर्म्येण स्तुति: यदा सर्वे प्रमुच्यन्त इति सर्वकामप्रहाणादमृतत्वमुक्तं तत्प्रसिद्धं कामाश्च सर्वे श्रौत स्मार्त्त सर्वकर्मणां फलानि तत्त्यागे च विदुषो ध्याननिष्ठस्यान-

### आनन्दगिरिकृतटीका ।

उत्तरश्लोकनात्पर्य्यमाह इदानीमिति ज्ञानं शब्दयुक्तिभ्यामात्मनिश्चय: अभ्यासो ज्ञानार्थं श्रवणाभ्यासो निश्चयपूर्वको ध्यानाभ्यासो वा तस्य विशिष्यमाणत्वे साक्षात् कारो हेतुस्त्यागस्य विशिष्टत्वे हेतुमाह एवमिति प्रीणातु भगवानिति तस्मिन् कर्मसंन्यासपूर्वक-मित्यर्थ: पूर्वविशेषणवतो नियतचित्तस्य पुंसो यथोक्तत्यागादित्यर्थ: अनन्तरमेवेत्युक्तं व्यनक्ति नत्विति नतु कर्मफलत्यागस्य सद्य: शान्तिकरत्वे सम्यग्धीरेव तथेति श्रुतिस्मृति प्रसिद्धिर्विरुध्येत तत्राह अज्ञस्येति दीर्घेण कालेनादरनैरन्तर्य्यानुष्ठिताज्ज्ञानादस्तु साक्षात् कारद्वारा संसारदु:खोपशान्तेस्तथाविधाद्ध्यानात्त्यागस्य विशिष्टत्वोक्तेस्तदीयस्तुतिरत्वेष्टेत्याह अतश्चेति तत्र हेतुमाह सम्पन्नेति सम्पन्नानि प्राप्तानि साधनान्यक्षरोपासनादीनि तेषां मध्ये पूर्वपूर्वस्यानुष्ठानाशक्तावुत्तरोत्तरस्य अनुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्य्यवसानादित्यर्थ:

### भाषा अनुवाद ।

फल की इच्छा त्याग पूर्वक कर्म करने से मेरी कृपा के द्वारा तुम अवश्य कृतार्थ होउगे ॥ ११ ॥

शाङ्करभाष्यम् ।

त्वरैव शान्तिरिति सर्वकामत्यागसामान्यमज्ञस्य सर्वकर्मफलत्यागस्यास्तीति तत्सामान्यात् सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था यथागस्त्येन ब्राह्मणेन समुद्रः पीत इदानीन्तना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात् स्तूयन्ते एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयः साधनत्वमभिहितम् अत्र चात्मेश्वरभेद-माश्रित्य विश्वरूप ईश्वरे चेतः समाधानलक्षणो योग उक्त ईश्वरार्थं कर्मा-नुष्ठानादि चार्थे तदप्यशक्तोऽसीत्यज्ञानकार्यसूचनान्नाभेददर्शिनोऽक्षरोपास-कस्य कर्मयोग उपपद्यते इति दर्शयति तथा कर्मयोगिनोऽक्षरोपासनानुप-पत्तिं दर्शयति भगवान् ते प्राप्नुवन्ति मामेवेत्यक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्ये मुक्तेतरेषां पारतन्त्र्यमीश्वराधीनतां दर्शितवांस्तेषामहं समुद्धर्त्तेति यदि ह्यीश्वरस्यात्मभूतास्ते मता अभेददर्शित्वादक्षररूपा एव ते इति समुद्धरण-कर्म्मवचनन्तत् प्रत्यपेशलं स्याद्यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवां-स्तस्य सम्यग्दर्शनान्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति न चात्मान-मीश्वरं प्रमाणतो बुद्ध्वा कस्य चिद्गुणभावं जिगमिषति कश्चित् विरोधात् तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् अद्वेष्टा सर्वभूतानामित्यादि धर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्त्तते ॥१२॥

आनन्दगिरिकृतटीका

त्यागे विशिष्टत्ववचनस्य केन साधर्म्येण तं प्रतिस्तुतित्वमिति पृच्छति केनेति उत्तरमाह यदेति अमृतत्त्वमुक्तम् अथमर्त्योऽमृतो भवतीति श्रेयादिति शेषः कामप्रहाणस्यामृतत्वार्थत्व-मथा कामयमान इत्यादावपि सिद्धमित्याह तदिति कामत्यागस्यामृतत्वहेतुत्वेऽपि कथं कर्मफलत्यागस्य तद्धेतुत्वमित्याशंक्याह कामाश्चेति कर्मफलत्यागादेवशान्तिश्चेतज्ज्ञाननिष्ठोऽ-पेक्षितेत्याशंक्याह तत्त्यागे चेति तथापि कथमज्ञस्य कर्मफलत्यागस्तुतिरित्याशङ्क्याह इति सर्वेति विद्यावतस्त्यागवदविद्वत्त्यागस्यापि त्यागत्वाविशेषाद्विशिष्टत्वोक्तिर्युक्तेति स्तुति मुप-संहरति इति तत् सामान्यादिति किमर्थास्तुतिरित्याशङ्क्य त्यागे रुचिमुत्पाद्य प्रवर्त्तयितुमि-त्याह प्ररोचनार्थेति तामस्तुतिं दृष्टान्तेन स्पष्टयति यथेति फलत्यागः श्रेयो हेतुश्चेत् कर्मत्या-गादपि फलत्यागसिद्धेरलं कर्मानुष्ठानेनेत्याशङ्क्याह एवं कर्मेति फलाभिलाषं त्यक्त्वा कर्मानुष्ठा-नस्यार्पितस्येश्वरे श्रेयो हेतुतया विवक्षितत्वान्नानुष्ठानानर्थक्यमित्यर्थः अत्रात्मवेत्याद्यवतार-

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
## निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥

आनन्दगिरिकृतटीका ।

यितुं यत्तं कीर्तयति अत्र चेति तयोर्भेदात्यन्तिकोऽभेदो न तर्हि ईश्वरे मनः समाधानरूपो योगाऽत्मनाभेदे ध्यातृध्येयत्वाभावात् नचात्मनाभेदे कर्मानुष्ठानं तत्फलत्यागो वा अपरस्य तत्त्यागादित्यर्थः भगवदुक्तिसामर्थ्यादपि कर्मयोगादिना भेदहृष्टिमतो भवतीत्याह अथेति अक्षरोपासकस्य कर्मयोगवत् कर्मयोगिनोऽक्षरोपासनानुपपत्तिरपि दर्शितेत्याह तथेति अक्षरोपासकः सम्यग्धीनिष्ठा यथा ज्ञानं भगवन्तमेवाप्नुवन्ति न तथा कर्मिणः साक्षात्तदाप्ता अपि नेतथा च कर्मिणो नाक्षरोपासना सिद्धिरित्यर्थः इतश्चाक्षरोपासनं कर्मानुष्ठानं नचैवात युक्तमित्याह अत्रेति नन्वक्षरोपासकवदन्येषामपि ईश्वरात्मता विशेषात् कुतस्तद्धी-नत्वं तत्राह यदीति कर्मयोगस्याक्षरोपास्तेश्च युगपदेकत्वायोगे हेत्वन्तरमाह सम्याञ्चेति कुरु कर्मैवेत्यादाविति शेषः किञ्चाक्षरोपाको वाक्यादीश्वरमात्मानञ्चेति मासौ क्रियायां गुणत्वेन कर्तृत्वमनुभवति गुणत्वेश्वरत्वयोरेकत्र व्याघातादतोऽपि नाक्षरोपासनं कर्मानुष्ठानञ्चै-कत्र युक्तमित्याह चेति अक्षरोपास्ति कर्मयोगयोरेकत्वायोगे फलितमाह तस्मादिति अज्ञानां कर्मिणां वक्ष्यमाणधर्मजातस्य साकल्येनायोगादक्षरनिष्ठानामेवेदमुच्यते अविरुद्धांशस्य तु सर्वार्थत्वमिष्टमेवेत्यर्थः ॥ १२ ॥

स्वामिकृतटीका ।

तमिदं फलत्यागं स्तौति श्रेय इति सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकं ज्ञानं श्रेयः तस्मादपि तत्पूर्वकं ध्यानं विशिष्टं ततस्तु तं पश्यते निष्फलं ध्यायमान इति श्रुतेः तस्मादप्युक्तलक्षणः कर्मफलत्यागः श्रेष्ठः तस्मादेवं भूतत्यागात् कर्मसु तत्फलेषु चासक्तिनिवृत्त्या मत्प्रसादेन समनन्तरमेव संसारशान्तिर्भवति ॥ १२ ॥

भाषा अनुवाद ।

और उक्त फलत्याग को प्रसंसा करते हैं कि सगुण की उपासनामे सम्यक् ज्ञानरहित जो अभ्यास तिस मे युक्ति सहित उपदेश पूर्वक वह सगुण उपासना का अङ्गभूत जो परोक्षज्ञान सो श्रेष्ठ है और उस ज्ञान से भी ध्यान अधिक है और तिस से भी कर्मफल का त्याग श्रेष्ठ है क्योंकि कर्म औ कर्मफल मे आसक्ति निवृत्त होनेपर मेरी अनुग्रमे शीघ्र संसार की शान्ति होती है ॥ १२ ॥

## शाङ्करभाष्यम् ।

अद्वेष्टेति अद्वेष्टा सर्वभूतानां न द्वेष्टात्मनि दुःखहेतुमपि न किञ्चिद्द्वेष्टि सर्वाणि भूतान्यात्मत्वेन हि यस्मात् पश्यति मित्रस्य भावो मैत्रो मित्रतया वा वर्त्तते इति मैत्रः करुण एव च करुणा कृपा दुःखितेषु दया तद्वान् करुणः सर्वभूताऽभयप्रदः संन्यासीत्यर्थः निर्ममो ममेति प्रत्ययवर्जितो निरहङ्कारो निर्गताऽहं प्रत्ययः समदुःखेति समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्त्तके यस्य समदुःखसुखः क्षमी क्षमावानाक्रुष्टोऽभिहतो वाऽविक्रिय एवास्ते ॥ १३ ॥

### आनन्दगिरिकृतटीका ।

सर्वेषां भूतानां मध्ये यो दुःखहेतुः तं विद्वानपि द्वेष्टु वेत्याशङ्क्याह आत्मन इति तत्र हेतुः सर्वाणीति सर्वभूतानामित्युभयतः संबध्यते मम प्रत्ययवर्जितो देहेऽपीति शेषः व्रत स्वाध्याय कृताहङ्कारः निष्क्रान्तत्वमाह निर्गतेति ॥ १३ ॥

### स्वामिकृतटीका ।

एवं भूतस्य भक्तस्य क्षिप्रमेव परमेश्वरप्रसादहेतून् धर्मानाह अद्वेष्टेत्यष्टभिः सर्वभूतानां यथायथमद्वेष्टा मैत्रः करुणश्च उत्तमेषु द्वेषशून्यः समेषु मित्रतया वर्तते इति मैत्रः हीनेषु कृपालुरित्यर्थः निर्ममो निरहङ्कारश्च कृपालुत्वादेवान्यैः समे सुखदुःखे यस्य सः क्षमी क्षमाशीलः ॥ १३ ॥

## भाषा अनुवाद ।

अब पूर्व उक्त भक्त के ऊपर शीघ्र भगवत की कृपा होने का हेतु रूप सकल धर्म आठ श्लोकसे कहते हैं कि साधारण से सब जीवों के साथ निर्वैर और सब का मित्र तथा दयावान् अर्थात् समान से मैत्री औ हीन पर कृपा और ममता से विहीन अहङ्कार से शून्य औ कृपालुता से औरका सुखदुख देखि अपने सुखदुख के समान जो जाने है ऐसा पुरुष अपने सुखदुख मे समबुद्धि औ क्षमाशील मनुष्यपर मेरी शीघ्र प्रसन्नता होती है ॥ १३ ॥

सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः ।
मय्यर्पित मनो बुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥
यस्मान्नो द्विजते लोका लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

शाङ्करभाष्यम् ।

सन्तुष्ट इति सन्तुष्टः सततं नित्यं देहस्थितिकारणस्य लाभे च उत्पन्नालं-प्रत्ययः तथा गुणवल्लाभे विपर्य्यये च सन्तुष्टः सततं योगी समाहितचित्तः यतात्मा संयतस्वभावो दृढ़निश्चयो दृढ़ः स्थिरोनिश्चयोऽध्यवसायो यस्यात्मतत्त्व-विषये स दृढनिश्चयो मय्यर्पित मनो बुद्धिः संकल्पात्मकमनोऽध्यवसायलचणा बुद्धिस्ते मय्येवार्पिते स्थापिते मनो बुद्धी यस्य संन्यासिनः स मय्यर्पित मनो बुद्धिर्य ईदृशो मद्भक्तः स मे प्रियः ॥ १४ ॥

प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय इति सप्तमेऽध्याये सूचितं तदिह प्रपंच्यते यस्मादिति यस्मात् संन्यासिनो नो द्विजते नोद्वेगं गच्छति

आनन्दगिरिकृतटीका ।

अक्षरोपासकव्याख्यानतो विशेषव्याख्यानान्तराख्याह सन्तुष्ट इति सततमिति सर्वत्र संबध्यते कार्य्यकारणसंघातः स्वभावशब्दार्थः स्थिरत्वं कुतर्कादिनानभिभवनीयत्वं मद्भक्तो मद्भजन-परो ज्ञानवानिति यावत् ॥ १४ ॥

स्वामिकृतटीका ।

सन्तुष्ट इति सततलाभेऽलाभे च सन्तुष्टः सुप्रसन्नचित्तः योगी अप्रमत्तः यतात्मा संयतस्वभावः दृढ़ो मद्विषये निश्चयो यस्य मय्यर्पिते मनो बुद्धी येन एवंभूतो मद्भक्तः स मे प्रियः ॥ १४ ॥

भाषा अनुवाद ।

और हानि लाभ मे प्रसन्नचित्त तथा अप्रमत्त वशीभूत स्वभाव औ सत्तविषय मे दृढ़ निश्चय और मेरे मे अर्पण किया है मनबुद्धि जिसने ऐसा जो मेरा भक्त सो हमै अति प्रिय है ॥ १४ ॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।**
**सर्वारम्भ परित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥**

### शाङ्करभाष्यम्।

न सन्तप्यते न संक्षुभ्यते लोको लोकात् नोद्विजते च यः हर्षामर्षभयोद्वेगैः हर्षश्चामर्षश्च भयञ्चोद्वेगश्चतैः हर्षामर्षभयोद्वेगैर्मुक्तो हर्षः प्रियलाभे अन्तः-करणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः तथा अमर्षोऽभिलषितप्रतिघाते असहिष्णुता भयन्त्रासः उद्वेग उद्विग्नता तैर्मुक्तो यः स च मे प्रियः॥ १५॥

अनपेक्ष इति देहेन्द्रियविषयसम्बन्धादिष्वपेक्षा यस्य नास्ति सविषयेष्वन-पेक्षो निस्पृहः शुचिर्वाह्याभ्यन्तरेण च शौचेन सम्पन्नो दक्षः प्रत्युपपन्नेषु

### आनन्दगिरिकृतटीका।

ज्ञानवतो भगवत् प्रियत्वे प्रमाणमाह प्रियो हीति किमर्थं तर्हि पुनरुच्यते तत्राह तदिति उद्वेगादिराहित्यमपि ज्ञानवतो विशेषणमित्याह यस्मादिति न केवल-मुद्वेगं प्रत्यपादानत्वमेव संन्यासिनो नानुपपन्नं किन्तु तत् कर्त्तृत्वमपीत्याह तथेति असहिष्णुता परकीयप्रकर्षस्येति शेषः त्रासस्तस्करादिदर्शनाधीनः उद्विग्नत्वमचेतना चेतना-धीनस्य लोकादिति यावत्॥ १५॥

### स्वामिकृतटीका।

किञ्च यस्मादिति यस्मात् सकशात् लोको जनो नोद्विजते भयशङ्कया क्षोभं न प्राप्नोति यश्च लोकान्नोद्विजते यश्च स्वाभाविकैर्हर्षादिभिर्मुक्तः तत्र हर्षः स्वस्येष्टलाभे उत्साहः अमर्षः परस्य लाभेऽसहनं भयं त्रासः उद्वेगो भयादिनिमित्तः चित्तक्षोभः एतैर्विमुक्तो यो मद्भक्तः स मे प्रियः॥ १५॥

### भाषा अनुवाद।

और जिस पुरुष से लोग भय के द्वारा उद्वेग कहे चित्तका क्षोभ नही पावते और जिस को लोगों से उद्वेग नहीं होता है और जो इष्ट होने से प्रसन्न औ अनिष्टहोने से अप्रसन्न तथा आमर्ष कहे दूसरे को लाभ न देखि शकना यह जिस के नहीं है और भय उद्वेग से रहित जो मेरा भक्त सो मोंहि प्रिय है॥ १५॥

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**

शाङ्करभाष्यम् ।

**सद्यो यथावत् प्रतिपत्तुं समर्थः उदासीन इति उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते यः स उदासीनो यतिर्गतव्यथो गतभयः सर्वारम्भपरित्यागी आरभ्यन्त इति आरम्भा इहामुत्र फलभोगार्थानि कामहेतूनि कर्माणि सर्वारम्भास्तान् परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

**किञ्च यो न हृष्यतीष्टप्राप्तौ न शोचति प्रियवियोगे न चाप्राप्तं काङ्क्षति शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥**

आनन्दगिरिकृतटीका ।

निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याह अनपेक्ष इति आदिपदमपेक्षणीय सर्वसंग्रहार्थं प्रतिपत्तव्येषु प्रतिपत्तिं कर्त्तव्येषु कर्त्तुमित्यर्थः परैस्ताडितस्यापि गता व्यथा भयमस्येति व्युत्पत्तिमाश्रित्याह गतेति ॥ १६ ॥

स्वामिकृतटीका ।

किञ्च अनपेक्ष इति अनपेक्षो यदृच्छयोपस्थितेऽप्यर्थे निस्पृहः शुचिर्बाह्याभ्यन्तरशौच सम्पन्नः दक्षोऽनलसः उदासीनः पक्षपातरहितः गतव्यथ आधिशून्यः सर्वान् दृष्टादृष्टार्थानारम्भानुद्यमान् परित्यक्तुं शीलं यस्य सः एवंभूतः सन् यो मद्भक्तः स मे प्रियः ॥१६॥

**भाषा अनुवाद ।**

**और जिस को अनायास प्राप्त धन की भी इच्छा नहीं और भीतर-बाहर शुचि कहे पवित्र औ दक्ष कहे आलस्य रहित तथा पक्षपातवर्जित औ गतव्यथ कहे आधिव्याधिशून्य औ सर्व आरम्भ कहे उद्यम का त्यागी ऐसा भक्त मेरा प्रिय है आधि मन की चिन्ता और व्याधि रोग को कहते हैं ॥ १६ ॥**

**समः शत्रौ च मित्रे च तथा मानापमानयोः।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः॥ १८॥**
**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः॥ १९॥**

शाङ्करभाष्यम्।

सम इति समः शत्रौ मित्रे च तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः सर्वत्र च सङ्गवर्जितः॥ १८॥

किञ्च तुल्यनिन्देति तुल्य निन्दा स्तुतिः निन्दा च स्तुतिश्च निन्दास्तुती तुल्ये यस्य स तुल्यनिन्दास्तुति मौनी मौनवान् संयतवाक् सन्तुष्टो येन केनचित् शरीरस्थितिमात्रेण तथा चोक्तं येन केनचिदाच्छन्नो येन केनचिदाश्रितः यत्र क्वचन शायी स्यात्तन्देवा ब्राह्मणं विदुरिति किञ्च अनिकेतो

आनन्दगिरिकृतटीका।

न च त्वमीत्यनेन पौनरुक्त्यं प्रत्युतप्तायामपि व्यथायामपकर्त्तृत्वं त्वमित्वमित्यभ्युपगमाद्वेषहर्षादिराहित्यमपि ज्ञानिनो लक्षणमित्याह किञ्चेति सर्वारम्भपरित्यागीत्यनेन विहितकाम्यत्यागस्योक्तत्वाद्विहिताद्न्यत्र मासङ्कोचीति विशिनष्टि शुभाशुभ इति वैषम्यबुद्ध्यभावादपि ज्ञानिनो विशेषणमित्याह सम इति॥ १७॥

स्वामीकृतटीका।

किञ्च य इति प्रियं प्राप्य यो न हृष्यति अप्रियं प्राप्य यो न द्वेष्टि इष्टार्थनाशे सति यो न शोचति अप्राप्तमर्थं यो न काङ्क्षति शुभाशुभे पुण्यपापे परित्यक्तुं शीलं यस्य सः एवं भूतो भूत्वा यो भक्तिमान् स मे प्रियः॥ १७॥

भाषा अनुवाद।

और जो प्रिय वस्तु पायके सन्तुष्ट औ अप्रिय पायके असन्तुष्ट न होय और इष्टके नाश होनेपर भी शोचता नहीं और किसी अप्राप्त वस्तु की आकांक्षा जिस के मन में नहीं है और शुभ अशुभ कहे पुण्य पाप का भी त्यागी कहे त्याग का अधिकारी है ऐसा भक्ति से युक्त मनुष्य हमें प्रिय है॥ १७॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

शाङ्करभाष्यम् ।

निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽयमनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियः ॥ १९ ॥

आनन्दगिरिकृतटीका ।

सम इति अद्वेष्टेत्यादिना द्वेषादिविशेषाभाव उक्तः सम्प्रति सर्वत्रैवाविकृतचित्तत्वमुच्यते सर्वत्र चेतने स्त्रियादावचेतने च चन्दनादावित्यर्थः ॥ १८ ॥

वाग्यतत्वादिविशेषणमपि ज्ञाननिष्ठस्याचीत्याह किञ्चेति निन्दादोष संकीर्त्तनं स्तुतिर्गुणगणनं देहस्थितिमात्र फलेनान्नादिना ज्ञानिः सन्तुष्टस्ते स्मृतिं प्रमाणयति तथाचेति नियतनिवासराहित्यमपि ज्ञानवतो विशेषणमित्याह किञ्चेति न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे नागारे नासने नान्ने यस्य वै मोक्षवित्तु स इति स्मृतिमुक्तेऽर्थे प्रमाणयति नेत्यादिना ॥ १९ ॥

स्वामिकृतटीका ।

किञ्च सम इति शत्रौ मित्रे च सम एकरूपः मानापमानयोरपि तथा सम एव हर्षविषादशून्य इत्यर्थः शीतोष्णयोः सुखदुःखयोश्च समः सङ्गविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥

किञ्च तुल्या निन्दा स्तुतिश्च यस्य सः मौनी संयतवाक् येन केनचित् यथालब्धेन सन्तुष्टः अनिकेतो नियतवासशून्यः स्थिरमतिः व्यवस्थितचित्तः एवं भूतो मद्भक्तिमान् यः स नरो मम प्रियः ॥ १९ ॥

भाषाऽनुवाद ।

और शत्रु मित्र दोनो के प्रति समान कहे प्रीति विरोध रहित और मान अपमान मे भी हर्ष विषाद रहित है और शीत उष्ण सुख दुख मे एक रूप है तथा सङ्गवर्जित कहे विषयों मे आशक्ति रहित जो है ॥१८॥

और निन्दा स्तुति जिस को तुल्य है औ जो मौनी कहे विरुद्ध वचन तथा बकवाद रहित हो जोकुछ यथालाभ से सन्तुष्ट है अनिकेत कहे निवासस्थान शून्य तथा स्थिर मति अर्थात् वशीभूत चित्त हैं ऐसे गुण युक्त नर मेरे परम प्रिय हैं ॥ १९ ॥

शाङ्करभाष्यम् ।

अद्वेष्टा सर्वभूतानामित्यादिनाऽक्षरस्योपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्म्मजातं प्रक्रान्तमुपसंह्रियत इति ये त्विति ये तु संन्यासिनो धर्म्मामृतं धर्मादनपेतं धर्म्यञ्च तदमृतञ्च तदमृतत्वहेतुत्वादिदं यथोक्तमद्वेष्टा सर्वभूतानामित्यादिना पर्युपासते अनुतिष्ठन्ति श्रद्दधानाः सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशयो गतिर्येषान्ते मत्परमा मद्भक्ताश्च उत्तमाम्परमार्थज्ञानलक्षणां भक्तिमाश्रितास्तेऽतीव मे प्रियाः प्रियो हि ज्ञानिनोऽत्यर्थमिति यत् सूचितं तद्व्याख्यायेहोपसंहृतं भक्तास्तेऽतीव प्रिया इति यस्माद्धर्मामृतमिदं यथोक्तमनुतिष्ठन् भगवतो विष्णोः परमेश्वरस्यातीव मे प्रियो भवति तस्मादिदं धर्मामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परन्धाम जिगमिषुणेति वाक्यार्थः ॥ २०॥

इति श्रीशाङ्करभाष्ये द्वादशोऽध्यायः ॥ १२ ॥

आनन्दगिरिकृतटीका ।

पुनः पुनर्भक्तेर्मोक्षणमपवर्गमार्गस्य परमार्थज्ञानस्योपायार्थम् अद्वेष्टेत्यादिधर्मजातं ज्ञानवतो लक्षणमुक्तं तदुपपादितमनूद्योपसंहारश्लोकमवतारयति अद्वेष्टेत्यादिना चतुर्थपादस्य तात्पर्यमाह प्रियो हीति यद्यपि यथोक्तं धर्मजातं ज्ञानवतो लक्षणं तथापि जिज्ञासूनां ज्ञानोपायत्वेन यत्नादनुष्ठेयमिति वाक्यार्थमुपसंहरति यस्मादिति तदेवं सोपाधिकाभिध्यानपरिपाकान्निरुपाधिकमनुसन्दधानस्याद्वेष्टा सर्वभूतानामित्यादि धर्मविशिष्टस्य मुख्यस्याधिकारिणः साक्षात्कारसम्भवात्ततो मुक्त्युपपत्तेस्तद्धेतु वाक्यार्थधीविषयोऽन्वययोग्यस्तत्पदार्थोऽनु-सन्धेय इति सिद्धम् ॥ २० ॥

इति आनन्दगिरिकृतटीकायां द्वादशोऽध्यायः ॥ १२ ॥

स्वामिकृतटीका ।

उक्तं धर्मजातं सफलमुपसंहरति ये त्विति यथोक्तमुक्तप्रकारं धर्ममेवामृतम् अमृतत्वसाधनत्वात् धर्म्यामृतमिति केचित् पठन्ति ये तदुपासते अनुतिष्ठन्ति श्रद्धां कुर्वन्तो मत्परमाश्च सन्तो मद्भक्तास्तेऽतीव मे प्रिया इति दुःखमव्यक्तवर्त्मैतदङ्गविघ्नमतो बुधः सुखं कृष्णपदाम्भोजं भक्तिं सत्पथवान् भजेत् ॥ २० ॥

इति स्वामिकृतटीकायां द्वादशोऽध्यायः ॥ १२ ॥

भाषाऽनुवाद।

यही सब पूर्वोक्त धर्म अमृत कहे मुक्ति रूप हैं इन को यथोक्त रूप से जो श्रद्धायुक्त मनुष्य उपासना करते हैं और मत्परमा कहे मेंहीं हौं परमपरायण जिन को ऐसे मेरे भक्तजन मुझे अतिशय प्रिय हैं ॥ २० ॥

इति श्रीजगन्नाथशुक्लविरचित मनभावनामनीटीकायां

द्वादशोऽध्यायः ॥ १२ ॥

---

# श्रीमद्भगवद्गीता।

## त्रयोदशोऽध्यायः।

---

### श्रीभगवानुवाच।

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ १॥**

#### शाङ्करभाष्यम्।

सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य त्रिगुणात्मिकाऽष्टधा भिन्नाऽपरा संसारहेतुत्वात्पराचान्या जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मिका याभ्याम् ईश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वय-निरूपणद्वारेण तद्वत ईश्वरस्य तत्त्व निर्द्धारणार्थं क्षेत्राध्याय आरभ्यते अतीतानन्तराध्याये च अद्वेष्टा सर्वभूतानामित्यादिना यावदध्यायपरिसमाप्ति-स्तावत्तत्त्वज्ञानिनां सन्न्यासिनां निष्ठा यथा ते वर्त्तन्ते इत्येतदुक्तं केन पुनस्ते

#### आनन्दगिरिकृतटीका।

प्रथम मध्यमयोः षट्कयो स्त्वं तत्पदार्थावुक्तौ अन्तिमस्तु षट्को वाक्यार्थनिष्ठः सम्यग्-धीप्रधानोऽधुनाऽरभ्यते तत्र क्षेत्राध्यायमन्तिमषट्काद्यमवतितारयिषुर्व्यवहितं वृत्तं कीर्त्तयति सप्तम इति प्रकृतिद्वयस्य स्वातन्त्र्यं वारयति ईश्वरस्येति भूमिरित्यादिनोक्ता सत्त्वादिरूपा प्रकृतिरपरेत्यत्र हेतुमाह संसारेति इतस्त्वन्यामित्यादिनोक्तां प्रकृतिमनुक्रामति परा चेति परत्वे हेतुं सूचयति ईश्वरात्मिकेति किमर्थमीश्वरस्य प्रकृतिद्वयमित्याशंक्य कारणत्वार्थ-मित्याह याभ्यामिति वृत्तमनूद्य वर्त्तिष्यमाणाध्यायारम्भप्रकारमाह तत्रेति व्यवहितेन सम्बन्धमुक्त्वाऽव्यवहितेन तं विवक्षुरव्यवहितमनुवदति अतीतेति निष्ठोक्तेति सम्बन्धः निष्ठामेव व्याचष्टे यथेति वर्त्तन्ते धर्मजातमनुतिष्ठति तथा पूर्वोक्तेन प्रकारेण सर्वमुक्त-मिति यो जना अव्यवहितमेवमनूद्य तेनोत्तरस्य सम्बन्धं सङ्गिरते केनेति तत्त्वज्ञानोक्ति-रुक्तार्थेन समुच्चयार्थश्चेदिति।

## शाङ्करभाष्यम् ।

तत्त्वज्ञानेन युक्ताः यथोक्तधर्माचरणात् भगवतः प्रियाः भवन्तीत्येवमर्थश्चायमध्याय आरभ्यते प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोऽयं सङ्घात इदं शरीरं तदेतत् भगवानुवाच इदमिति इदम् इति सर्वनाम्नोक्तं विशिनष्टि शरीरमिति हे कौन्तेय क्षतत्राणात् क्षयात् क्षरणात् क्षेत्रवद्वास्मिन् कर्मफलनिर्वृतेः क्षेत्रमितीति शब्दः एवं शब्दपदार्थकः क्षेत्रमित्येवमभिधीयते कथ्यते एतत् शरीरं क्षेत्रं यो वेत्ति विजानाति आपादतलमस्तकं ज्ञानेन विषयी करोति स्वाभाविकेन औपदेशिकेन वा वेदनेन विषयी करोति विभागशस्तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इतीति शब्दः एवं पदार्थक एव पूर्ववत् क्षेत्रज्ञ इत्येवमाहुः के तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः ॥ १ ॥

### आनन्दगिरिकृतटीका ।

कारः जीवानां सुखदुःखादिभेदभाजां प्रतिक्षेत्रम्भिन्नानां नाक्षरैक्यमित्याशङ्क्य संसारस्य आत्मधर्मत्वं निराकृत्य संघातनिष्ठत्वं वक्तुं संघातोत्पत्तिप्रकारमाह प्रकृतिश्चेति भोगश्चापवर्गश्चार्थौ तयोरेव कर्त्तव्यतयेति यावत् नन्वनन्तरश्लोके शरीरनिर्द्देशात् तस्योत्पत्तिर्वक्तव्या किमिति संघातस्योच्यते तत्राह सोऽयमिति उक्तेऽर्थे भगवद्वचनमवतारयति तदेतदिति तत्र द्रष्टृत्वेन संघातदृश्यादन्यमात्मानं निर्द्दिशति इदमिति उक्तं प्रत्यक्षदृश्यविशिष्टं किञ्चिदिति शेषः शरीरस्यात्मनोऽन्यत्वं क्षेत्रनामनिरुक्त्या ब्रूते क्षयेति क्षयो नाशः क्षरणमपक्षयः यथा क्षेत्रे बीजमुप्तं फलति तद्वदित्याह क्षेत्रवद्वेति क्षेत्रपदादुपरिस्थितमिति पदं क्षेत्रशब्दविषयमन्यथा वैयर्थ्यादित्याह इति शब्द इति क्षेत्रमित्येवमनेन क्षेत्रशब्देनेत्यर्थः दृश्यं देहमुक्त्वा ततोऽतिरिक्तं द्रष्टारमाह एतदिति स्वाभाविकं मनुष्योऽहमिति ज्ञानं औपदेशिकं देहो नात्मा दृश्यत्वादित्यादिविभागशः स्वतोऽतिरिक्तत्वेनेत्यर्थः क्षेत्रमित्यत्रेतिशब्दवत्प्राणीतिशब्दस्य क्षेत्रज्ञशब्दविषयत्वमाह इति शब्द इति क्षेत्रज्ञ इत्येवं क्षेत्रज्ञशब्देन तं प्राहुरिति सम्बन्धं प्रवदन् प्रश्नपूर्वकमाह के इत्यादिना ॥ १ ॥

### स्वामिकृतटीका ।

भक्तानामहमुद्धर्त्ता संसारादित्यवादि यत् त्रयोदशेऽथ तत्सिद्धौ तत्त्वज्ञानमुदीर्य्यते तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् भवामि न चिरात् पार्थेति पूर्वं प्रतिज्ञातं

**क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

स्वामिकृतटीका ।

नचात्मज्ञानं विना संसारोद्धरणं सम्भवतीति तत्त्वज्ञानोपदेशार्थं प्रकृतिपुरुषविवेका-ध्याय आरभ्यते तत्र यत् सप्तमाध्याये अपरा परा चेति प्रकृतिद्वयमुक्तं ययोरविवेकाज्जीवभावमापन्नस्य चिदंशस्यायं संसारः याभ्याञ्च जीवोपभोगार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिस्तदेव प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञपदवाच्यं परस्परविभक्तं तत्त्वतो निरूपयिष्यन् श्रीभगवानुवाच इदमिति इदं भोगायतनं शरीरं क्षेत्रमित्यभिधीयते संसारस्य प्ररोहभूमित्वात् एतद्यो वेत्ति अहं ममेति मन्यते तं क्षेत्रज्ञं प्राहुः कृषीवलवत्तत्फलभोक्तृत्वात् तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥ १ ॥

**भाषा अनुवाद ।**

अब इस तेरहें अध्यायमे तत्त्वज्ञानका वर्णन कियाजाता है कि हे पार्थ मृत्युयुक्त संसारसागर से सगुणके उपासक अपने भक्तों को मे उद्धार करता हूं इत्यादि द्वादश अध्यायके सप्तम श्लोकमे भगवतका अङ्गीकृत जो संसारसे उद्धरण सो ब्रह्मज्ञानके विना असम्भव है इस हेतु तत्त्वज्ञानका उपदेश करणने को भगवान् यह प्रकृति पुरुषविवेक अध्यायका आरम्भ करते हैं कि जो प्रकृतिपुरुषका विवेक सप्तम अध्यायके पञ्चम श्लोकमे परा अपरा प्रकृतिद्वय कहा है जिस प्रकृतिके द्वारा अविवेक वशते यह चेतनका अंश जीवभाव को प्राप्त होय संसारी होता हैं ॥ और जिस प्रकृतिद्वय से जीवों के उपभोगार्थ परमेश्वर सृष्टि आदि मे प्रवृत्त होते हैं सोई क्षेत्र पदवाच्य परस्परभिन्न स्वरूपद्वयप्रकृति को स्वरूप मे निरूपण करने के लिये भगवान् श्रीकृष्ण कहते हैं कि हे कौन्तेय क्षेत्र औ क्षेत्रज्ञ दोनो के विचारकारी लोग इस भोगायतन भोगसाधन शरीर को क्षेत्र कहते हैं क्योंकि यह शरीर संसार अश्वत्थके अंकुर होने की भूमि है और जो शरीर को जानता अर्थात् हम हमारा यह विचारता है उस को क्षेत्र औ क्षेत्रज्ञके विवेकी जन क्षेत्रज्ञ कहते हैं जिस हेतु क्षेत्रज्ञ किसानके समान इस देहरूप क्षेत्रका फलभोग करता है ॥ १ ॥

## शाङ्करभाष्यम् ।

एवं क्षेत्रक्षेत्रज्ञावुक्तौ किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति नेत्युच्यते क्षेत्रज्ञमिति क्षेत्रज्ञं यथोक्तलक्षणञ्चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि योऽसौ सर्वक्षेत्रज्ञो तेष्वेकः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्य्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिविदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः हे भारत यस्मात् क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति तस्मात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोः यत् ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तत् ज्ञानं सम्यक्ज्ञानमिति मतमभिप्रेतमित्यभिप्रायो ममेश्वरस्य विष्णोः ननु सर्वक्षेत्रेष्वेक एव ईश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्तत ईश्वरस्य संसारित्वं प्राप्तं ईश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात् संसाराभावप्रसङ्गस्तच्चोभयमनिष्टं बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात् प्रत्यक्षादिप्रमाणविरोधाच्च प्रत्यक्षेण तावत् सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारोऽनुमीयते सर्वमेतदनुपपन्नमात्मेश्वरैकत्वेन ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः दूरमेते विपरीते विषूची अविद्या या चविद्येति ज्ञानाज्ञाने तथाच

## आनन्दगिरिकृतटीका ।

दृश्यानां दुःखादीनां भेदकानां यावद्देहभाविनामनात्मधर्मत्वसिद्धये द्रष्टारं देहादन्यमुक्त्वा सांख्यानामिव तावन्मात्रेण मुक्तिनिष्पत्तये तस्य सर्वदेहेष्वैक्योक्तिपूर्वकं स्वेन परमार्थेनाक्षरेणैक्यं उत्तमनूद्य प्रश्नद्वारा दर्शयति एवमित्यादिना यथोक्तलक्षणं दृश्याद्देहाद्विलक्षं द्रष्टारमित्यर्थः चापीति निपातौ जीवस्याक्षरत्वज्ञानस्य देहादन्यत्वज्ञानेन समुच्चयार्थौ भिन्नक्रमौ न क्षेत्रज्ञं सांख्यवद् दृश्यादन्यदेव विद्धि किन्तु माञ्चापि विद्धीति संबध्यते यः सर्वक्षेत्रेषु एकः क्षेत्रज्ञः तं मामेव विद्धीति सम्बन्धं सूचयति सर्वेति तत्तत् क्षेत्रोपाधिकभेदभाजः तत्तच्छब्दधीगोचरस्य कथं तद्विपरीतब्रह्मत्वधीरित्याशङ्क्याह ब्रह्मादिति उत्तरार्द्धं विभजते यस्मादिति तदेव विशिनष्टि क्षेत्रेति नच भेदविषयत्वान्न सम्यग्ज्ञानं तदिति युक्तं तस्य विवेकज्ञानस्य वाक्यार्थज्ञानद्वारा मोक्षौपयिकत्वेन सम्यक्त्वसिद्धेरिति भावः जीवेश्वरयोरेकत्वमुक्तमाक्षिपति नन्विति जीवेश्वरयोरेकत्वे जीवस्येश्वरे वा तस्य जीवेऽवान्तभावः ।

शाङ्करभाष्यम् ।

तयोर्विद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः श्रेयश्च प्रेयश्चेति विद्याविषयः श्रेयः प्रेयस्त्वविद्याकार्यमिति तथाच व्यासः द्वाविमावथ पन्थानावित्यादि इमौ द्वावेव पन्थानावित्यादि चेहच द्वे निष्ठे उक्ते अविद्या च सहकार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते श्रुतयस्तावदिह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिस्तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन अविदुषस्त्वथ तस्य भयं भवत्यविद्यायामन्तरे वर्त्तमानौ ब्रह्मविद्ब्रह्मैव भवति अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं

आनन्दगिरिकृतटीका ।

नन्वौ जीवस्य परस्मादन्यस्याभावे संसारस्य निरालम्बनत्वानुपपत्त्या परस्यैव तदाश्रयत्वप्रसङ्गादित्यर्थः अनश्नन्नन्यो अभिचाकशीति श्रुतेन तस्य संसारित्वेत्याशङ्क्य द्वितीयं दूषयति ईश्वरेति जीवे चेदीश्वरोऽन्तर्भवति तदापि ततोऽन्यसंसार्यभावात्तस्य च संसारानिष्टः संसारो जगत्यस्तं गच्छेदित्यर्थः प्रसङ्गद्वयस्येष्टत्वं निराचष्टे तच्चेति संसाराभावे तयोरन्यः पिप्पलं स्वाद्वत्तीत्यादि बन्धशास्त्रस्य तद्धेतुकर्मविषयकर्मकाण्डस्य चानर्थक्यमीश्वराश्रिते च संसारेतद्भोक्तृत्वश्रुतेश्च संसारेतद्भोक्तृत्वश्रुतेः ज्ञानकाण्डस्य मोक्षतद्धेतुज्ञानार्थस्यानर्थक्यमतो न प्रसङ्गयोरिष्टतेत्यर्थः संसाराभावप्रसङ्गस्यानिष्टत्वे हेत्वन्तरमाह प्रत्यक्षादीति तत्र प्रत्यक्षविरोधं प्रत्यक्षेणेति आदिशब्दोपात्तमनुमानविरोधमाह जगदिति विमतं विचित्रहेतुकं विचित्रकार्यत्वात् प्रसादादिवदित्यर्थः प्रत्यक्षानुमानागमविरोधादयुक्तमैक्यमित्युपसंहरति सर्वमिति ऐक्येऽपि संसारित्वमविद्यातोऽसंसारित्वमिति विभागासानुपपत्तिरित्युत्तरमाह नेत्यादिना तयोः स्वरूपतो विलक्षणत्वे श्रुतिमाह दूरमिति अविद्या या च विद्येति प्रसिद्धे एते विद्याऽविद्ये दूरं विपरीते अत्यन्तविरुद्धे इत्यर्थः विषूची नानागती भिन्नफले इत्यर्थः स्वरूपतो विरोधवत् फलतोऽपि सोऽस्तीत्याह तथेति फलभेदोक्तिनेव व्यनक्ति विद्येति तयोर्द्विधा विलक्षणत्वे वेदव्यासस्यापि सम्मतिमाह तथाचेति उक्तेऽर्थे भगवतोऽपि संमतिमुदाहरति इहचेति द्वयोरपि निष्ठयोस्तुल्यमुपादेयत्वमिति शङ्कां शातयति अविद्या चेति अविद्या सकार्या हातव्येत्यत्र श्रुतिमुदाहरति श्रुतयस्तावदिति इहेति जीवदवस्थोच्यते चेच्छब्दो विद्योदयदौर्लभ्यद्योतो अवेदीदहं ब्रह्मेति विदितवानित्यर्थः ।

शाङ्करभाष्यम् ।

सदेवानामात्मविद्यः स इदं सर्वं भवति यदा चर्म्मवदित्याद्याः सहस्रशः श्रुतयश्च ॥ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः ॥ समं पश्यन् हि सर्वत्र इत्याद्याः न्यायतश्च सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति अज्ञानतस्तत्र यान्तीति केचित् ज्ञाने फलं पश्यन् यथा विशिष्टं तथाच देहादिष्वनात्मस्वात्मबुद्धि-रविद्वान् रागद्वेषादियुक्तो धर्माधर्मानुष्ठानकृत् जायते म्रियते चेत्यवगम्यते देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षया धर्माधर्मप्रवृत्त्-युपशमान्मुच्यन्त इति न केनचित् प्रत्याख्यातुं शक्यं न्यायतस्तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव भवति यथा देहाद्यात्मत्वमात्मनः सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो

आनन्दगिरिकृतटीका ।

अयं विद्यानन्तरमेव सत्यमवितथं पुनरावृत्तिवर्जितं कैवल्यं स्यादित्याह अयेति अविद्याविषयेऽपि श्रुतिमाह नचेदिति जन्ममरणादिरूपा संसृतिर्विनष्टिः तस्यामहत्वं सम्यग्ज्ञानं विना निवर्त्तयितुमशक्यत्वं विद्याविषये श्रुत्यन्तरमाह तमेवमिति परमात्मानं प्रत्यक्त्वेन यः साक्षात्कृतवान् स देहे जीवन्नेव मुक्तो भवतीत्यर्थः विद्यां विनापि हेत्वन्तरतो मुक्तिमाशङ्क्याह नेति भयहेतुमविद्यान्निराकुर्वन् तज्जं भयमपि निरस्यति विद्वान् इति अत्र वाक्यान्तरमाह विद्वानिति अविद्याविषये वाक्यान्तरमाह अविदुष इति प्रतीच्येकरसे स्वल्पमपि भेदं मन्यमानस्य भेददृष्टानन्तरमेव संसारध्रौव्य-मित्यर्थः तत्रैव श्रुत्यन्तरमाह अविद्यायामिति तन्मध्ये तत्परवशतया स्थितास्तु तमजानन्तो देहाद्यभिमानवन्तो मूढाः संसरन्तीत्यर्थः विद्याविषये श्रुत्यन्तरमाह ब्रह्मेति अविद्याविषये श्रुत्यन्तरमाह अन्योऽसाविति भेददृष्टिमनूद्य तं निदानमविद्येत्याह नेति सच मनुष्याणां पश्वादीनां प्रेतां प्राप्नोतीत्याह यथेति विद्याविषये वाक्यान्तरमाह आत्मविदिति इदं सर्वं प्रत्यग्भूतं तूर्णं ब्रह्मेत्यर्थः ज्ञानादेव तु कैवल्यमित्यत्र श्रुत्यन्तरमाह यदेति न ह्याकाशं चर्मवन्मानवो वेष्टयितुमीष्टे तथा यमात्मानं प्रत्यक्त्वेनानुभूय न मुच्यते इत्यर्थः आदिशब्देनासुक्ता विद्याऽविद्याफलभेदार्थाः श्रुतयो गृह्यन्ते तासामभूयस्त्वेन प्रामाण्यं सूचयति सहस्रश इति विद्याऽविद्याविषये स्मृतीरुदाहरति स्मृतयश्चेति तत्राविद्याविषयं वाक्यमाह अज्ञानेनेति विद्याविषयं वाक्यद्वयं दर्शयति इहेत्यादिना विद्याफलमर्थ-

## शाङ्करभाष्यम् ।

निश्चितोऽविद्याकृतो यथा स्थाणौ पुरुषनिश्चयो नचैतावता पुरुषधर्मः स्थाणो भवति स्थाणुधर्मो वा पुरुषस्य तथा न चैतन्यं धर्मो देहस्य देहधर्मो वा चैतन्यस्य एवं सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तो विद्याकृतत्वाविशेषाज्जरामृत्युवन्नात्मतुल्यत्वादिति चेत् स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्राऽन्योन्यस्मिन्नध्यस्तावविद्यया देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरोऽध्यास इति न समो दृष्टान्तोऽतो देहधर्मो ज्ञेयोऽपि ज्ञातुरात्मनो भवतीति चेन्नाचैतन्यादिप्रसङ्गाद्यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःखमोहेच्छादयोऽपि केन च ज्ञातुरात्मनो भवन्ति अविद्याध्यारोपिता जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वक्तव्यो न भवन्तीत्यस्त्यनुमानमविद्याध्यारोपितत्वाज्जरादिवदिति हेयत्वादुपादेयत्वाच्चेत्यादि तत्रैवं सति कर्त्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्था ज्ञातर्यविद्ययाऽध्यारोपित इति न तेन ज्ञातुः किञ्चित् दूष्यति यथा बालैरध्यारोपितेनाकाशस्य तलमलवत्त्वादिना एवञ्च सति सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वं गन्धमात्रमपि न शक्यं नहि

### आनन्दगिरिकृतटीका ।

ध्वस्तिरविद्याफलमनर्थाप्तिरित्येतदन्वयव्यतिरेकाख्यन्यायादपि सिध्यतीत्याह न्यायतश्चेति तत्रैव पुराणसम्मतिमाह सर्पानिति उदपानं कूपं यथात्मज्ञाने विशिष्टं फलं स्यात्तथा पश्येति योजना न्यायतश्चेत्यन्वयव्यतिरेकाख्यं न्यायमुक्तं विवृणोति तथाचेति तत्रादावन्वयमाचष्टे देहादिष्विति अनाद्यनिर्वाच्याविद्यावृतश्चिदात्मा देहादावनात्मन्यात्मबुद्धिमादधाति तद्युक्तो रागादिना प्रवर्तते तत्प्रयुक्तश्च कर्मानुतिष्ठति तत्कर्त्ता च यथा कर्म नूतनं देहमादत्ते पुरातनं त्यजतीत्येवमविद्यावत्त्वे संसारित्वं सिद्धमित्यर्थः व्यतिरेकमिदानीं दर्शयति देहादीति श्रुतियुक्तिभ्यां भेदज्ञाने रागाद्यध्वस्त्या कर्मोपरमादशेषसंसारासिद्धिरित्यविद्याराहित्ये बन्धध्वस्तिरित्यर्थः उक्तान्वयादेरन्यथाशङ्कां शिथिलयति इति नेति उक्तमन्वयादिवादिना केनचिदपि न्यायतो न शक्यं प्रत्याख्यातुं तदन्यथा सिद्धिसाधकाभावादित्यर्थः अन्वयादेरनन्यथासिद्धत्वे चोद्यमपि प्राचीनं प्रतिजानीतमित्याह तत्रेति ज्ञानाज्ञानयोरुक्तन्यायेन स्वरूपभेदे कार्यभेदे च स्वारस्येन परापरयोरैक्येऽपि बुद्ध्याद्युपाधिभेदादविद्यकमात्मनः संसारित्वम् आभासरूपं प्रातिभासिकं सिध्यतीत्यर्थः आत्मनो ब्रह्मता स्वतश्चेद्दृष्टमित्यात्मभावेन ब्रह्मतापि ।

## शाङ्करभाष्यम् ।

क्वचिदपि लोकेऽविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टो यत्तूक्तं न समो दृष्टान्त इति तदसत् कथमविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितं तन्नव्यभिचरति यत्तु ज्ञातरि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिरविद्यावत्त्वात् क्षेत्रज्ञस्य संसारित्वमिति चेन्न अविद्यायास्तामसत्वात्तामसो हि प्रत्यय आवरणात्मकत्वादविद्याविपरीतग्राहकः संशयोपस्थापको वा अग्रहणात्मको वा विवेकप्रकाशभावे तदभात्तामसे चावरणात्मके तिमिरादिदोषे

### आनन्दगिरिकृतटीका ।

भायादित्याशङ्क्याह यथेति देहाद्यतिरिक्तस्यात्मनो वैदिकपक्षे स्वतस्तेऽपि तस्मिन्नहमिति भात्येव तदतिरिक्तत्वं न भाति किंत्वविद्यातो देहात्मत्वमेव विपरीतं भासते तथात्मनो ब्रह्मत्वे स्वाभाविकेऽपि तस्मिन् ब्रह्मत्वं न भात्यविद्यातोऽब्रह्मत्वमेव तस्य भातीत्यर्थः आत्मनो देहाद्यात्मत्वमाविद्यकं भातीत्युक्तम् अनुभवेन स्पष्टयति सर्वेति अतस्मिंस्तद्बुद्धिरविद्याकृतेत्यत्र दृष्टान्तमाह यथेति पुरस्थिते वस्तुनि वस्तुतः स्थाणावविद्यया पुमानिति निश्चयो जायते तथा देहादावनात्मन्यात्मधीरविद्यातो निश्चितेत्यर्थः देहात्मनोरैक्यज्ञाने देहधर्मस्य जरादेरात्मन्यात्मधर्मस्य च चैतन्यस्य देहेऽपि नियमः स्यादित्याशङ्क्याह नचेति स्थाणौ पुरुषत्वं भ्रान्त्या भातीत्येतावता पुरुषधर्मः शिरःपाण्यादिर्न स्थाणोर्भवति तद्धर्मो वा वक्रत्वादिर्न पुंसो दृश्यते मिथ्याध्यस्ततादात्म्याद्वस्तुतो धर्माव्यतिकरादिति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह तथेति जरादेरनात्मधर्मत्वेऽपि सुखादेरात्मधर्मत्वमिति केचित्तान् प्रत्याह सुखेति कामसङ्कल्पादिश्रुतेरनात्मधर्मत्वाम्नानादित्यर्थः किञ्च विमतो नात्मधर्मोऽविद्याकृतत्वाज्जरादिवच्च हेत्वसिद्धिरतस्मिंस्तद्बुद्धिविषयत्वेन स्थाणौ पुरुषत्ववदविद्याकृतत्वस्योक्तत्वादिति मत्वाह अविद्येति स्थाणौ पुरुषत्ववदाविद्यत्वं देहादेरयुक्तं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति शङ्कते नेति तदेव प्रपञ्चयति स्थाण्वित्यादिना ज्ञेयस्य ज्ञेयान्तरेऽध्यासादत्र चोभयोर्ज्ञेयत्वव्यापकव्यावृत्त्या व्याप्याध्यासस्यापि व्यावृत्तिरित्यर्थः देहात्मबुद्धेर्भ्रमत्वाभावे फलितमाह अत इति उपाधिधर्माणां सुखादीनां उपहिते जीवे वस्तुत्वमयुक्तमतिप्रसङ्गादिति परिहरति नेत्यादिना अतिप्रसङ्गमेव प्रकटयति यदीति सुखादीनामात्मधर्मत्वं चेदुपाधिधर्मत्वाच्चैतन्यं जरादिकञ्चात्मनोदुर्वारं स्यादित्यर्थः सुखादिरात्मधर्मो नेति पक्षेऽपि नास्ति विशेषहेतुरित्याशंक्याह नेति तदेवानुमानं स्मारयति अविद्येति विमतं नात्मधर्मः आगमापायित्वात्

शाङ्करभाष्यम् ।

सति अग्रहणादेरविद्यात्रयस्योपलब्धेः अत्राहैवं तर्हि ज्ञातृधर्मो विद्या न करणे चक्षुषि तैमिरकत्वादिदोषोपलब्धेर्यत्तु मन्यसे ज्ञातृधर्मो विद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य तु संसारित्वं तत्र यदुक्तमीश्वर एव क्षेत्रज्ञो न संसारीत्येतदयुक्तमिति तन्न यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनान्न विपरीतादिग्रहणं तन्निमित्तं वा तैमिरकत्वादिदोषो ग्रहीतुश्चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचित् भवितुमर्हति न ज्ञातुः क्षेत्रज्ञस्य संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवन्नज्ञातृधर्मत्वं संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वं सर्वकरणावियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमादात्मनो यदि क्षेत्रज्ञस्याग्न्युष्णवत् स्वो धर्मस्ततो न कदाचिदपि तेन वियोगः स्यादविक्रियस्य

आनन्दगिरिकृतटीका ।

सम्मतवदित्यनुमानान्तरमाह ज्ञेयत्वादिति आदिशब्दाद्दृश्यत्वजडत्वादि गृह्यते सुखादीनां जरादिवदात्मधर्मत्वाभावे तस्य वस्तुतोऽसंसारित्वे फलितमाह तत्रेति आरोपिते नाधिष्ठानस्य वस्तुतोऽस्पर्शे दृष्टान्तमाह यथेति पराभिन्नस्यात्मनः संसारित्वमध्यस्तमिति स्थिते यत्परस्य संसारित्वापादनं तदयुक्तमित्याह एवञ्चेति आत्मनि संसारस्यारोपितत्वासद्भावे परस्मिन्नाशङ्कैव तस्यायुक्तेत्येतदुपपादयति नहीति स्थाणौ पुरुषनिश्चयवदात्मनो देहाद्यात्मत्वनिश्चयस्याध्यस्तत्वेत्युक्तं दृष्टान्तस्य ज्ञेयमात्रविषयत्वादितरस्य ज्ञेयज्ञातृविषयत्वादित्युक्तमनुवदति यच्चेति वैषम्यं दूषयति तदसदिति तर्हि केन सममिति पृच्छति कथमिति अभीष्टसाधर्म्यं दर्शयति अविद्येति तस्योभयत्रानुगतिमाह तत्रेति ज्ञेयान्तरे ज्ञेयस्यारोपनियमात् ज्ञातरि नारोपः स्यादित्याशंक्याह यच्चेति नायं नियमो ज्ञातरि जराद्यारोपस्योक्तत्वादित्याह तस्यापीति ज्ञेयस्यैव ज्ञेयान्तरेऽध्यासनियमस्येति यावत् अतो ज्ञातरि नारोपव्यभिचारशङ्केत्यर्थः आत्मन्यविद्याध्यासे तत्राविद्यायाः स्वाभाविकत्वात्तदधीनत्वं संसारित्वमपि तथा स्यादिति शङ्कते अविद्यावत्त्वादिति काविद्या विपरीतग्रहादिर्वा अनाद्यनिर्वाच्या ज्ञानं वा नाद्यो विपरीतग्रहादेस्तमःशब्दिताऽनिर्वाच्या. ज्ञानकार्यत्वात्तद्विष्टस्यात्मधर्मत्वायोगादित्याह नेत्यादिना तदेव प्रपञ्चयति तामसो हीति आवरणात्मकत्वं वस्तुनि सम्यक्प्रकाशप्रतिबन्धकत्वं विपरीतग्रहणादेरविद्याकार्यत्वं विद्यापोह्यत्वेन साधयति विवेकेति ।

## शाङ्करभाष्यम् ।

च व्योमवत् सर्वगतस्यामूर्त्तस्यात्मनः केनचित् संयोगवियोगानुपपत्तेः सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वमनादित्वान्निर्गुणत्वादित्यादीश्वरवचनाच्च ।

नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति न सर्वैरभ्युपगतत्वात् सर्वैर्ह्यात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्त्तव्यो भवति कथमभ्युपगत इति मुक्तात्मनां संसारसंसारित्वव्यवहाराभावः सर्वैरात्मवादिभिरिष्यते नच तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्यं भवतु अविद्याविषये चार्थवत्त्वं यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवं अद्वैतवादिनामपि ।

## आनन्दगिरिकृतटीका ।

नच कारणाविद्यानाद्यनिर्वाच्यात्मधर्मः स्यादिति युक्तमनिर्वाच्यत्वादेव तस्यास्तद्धर्मत्वस्य दुर्वचत्वादिति भावः किञ्च विपरीतग्रहादेरन्वयव्यतिरेकाभ्यां दोषजन्यत्वावगमादपि नात्मधर्मतेत्याह तामसो वेति तमः शब्दिताज्ञानोत्थो वस्तुप्रकाशप्रतिबन्धकस्तिमिरकाद्यादिदोषस्तस्मिन् सत्यज्ञानं मिथ्याधीः संशयश्चेति त्रयस्योपलम्भादसति तस्मिन्नप्रतीतेरन्वयव्यतिरेकाभ्यां विपरीतज्ञानादेर्दोषाधीनत्वाधिगमान्न केवलात्मधर्मतेत्यर्थः दोषस्य निमित्तत्वात् भावकार्यस्योपादाननियमादनिर्वाच्याविद्यायाश्चासम्मतेरात्मैव विपर्ययादेरुपादानमिति चोदयति अत्राहेति विपरीतग्रहादेर्दोषोत्थत्वं सम्प्रत्ययः अग्रहादित्रितयस्य विपर्ययादेः सत्योपादानत्वे सत्यत्वप्रसङ्गाज्ज्ञाता तदुपादानं किन्तु दोषस्य चक्षुरादिधर्मकत्वग्रहणादिरपि दोषत्वात् करणधर्मत्वं करणमविद्योत्थमन्तःकरणं नच तद्धेतुरविद्यासिद्धेति वाच्यमज्ञोऽहमित्यनुभवात् स्वापे च परामर्शात्तदवगमात् कार्यलिङ्गकानुमानादागमाच्च तत्प्रसिद्धेरिति परिहरति नेत्यादिना संगृहीतञ्चोद्यपरिहारयोश्चोद्यं विवृणोति यत्त्विति अविद्यावत्त्वेऽपि ज्ञातुरसंसारित्वादुद्घातदंष्ट्रोरगवदविद्या किं करिष्यतीत्याशङ्क्याह तदेवेति मिथ्याज्ञानादित्यमेवात्मनः संसारित्वमिति स्थिते फलितमाह तत्रेति न करणेव चक्षुषीत्यादिनोक्तमेव परिहारं प्रपञ्चयति तन्नेत्यादिना तिमिरादिदोषस्तत्कृतो विपरीतग्रहादिश्च न ग्रहीतुरात्मनोऽस्तीत्यत्र हेतुमाह चक्षुष इति तद्गतेनाञ्जनादिसंस्कारेण तिमिरादौ पराकृते देवदत्तस्य ग्रहीतृदोषाद्यनुपलम्भाच्च तस्य तद्धर्मत्वमतो विमतं तत्त्वतो नात्मधर्मो दोषत्वात्तत्कार्यत्वाद्वा सम्मतवदित्यर्थः किञ्च विपरीतग्रहादिस्तत्त्वतो नात्मधर्मो वेद्यत्वात् सम्प्रतिपन्नवदित्याह संवेद्यत्वाच्चेति किञ्च यद्वेद्यं तत् स्वातिरिक्तं वेद्यं

## शाङ्करभाष्यम् ।

ननु आत्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां नः सर्वेषामतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्याद्द्वैतिनां पुनर्द्वैतस्यापरमार्थत्वादविद्याकृतत्वात् बन्धावस्थायाश्च आत्मनोऽपरमार्थत्वे निर्विषयत्वात् शास्त्राद्यानर्थक्यमिति चेन्नात्मनोऽवस्थाभेदानुपपत्तेः यदि तावदात्मनो बन्धमुक्तावस्थे युगपत् स्यातां क्रमेण वा युगपत्तावद्विरोधान्न सम्भवतः स्थितगती इवैकस्मिन् क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गोऽन्यनिमित्तत्वे च स्वतो भावादपरमार्थत्वप्रसङ्गस्तथाच सत्यभ्युपगमहानिः किञ्च बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्य अनादिमत्यन्तवती च तच्च प्रमाणविरुद्धं तथा मोक्षावस्था सादिमत्यनन्तवती च तावत् प्रमाणविरुद्धैवाभ्युपगम्यते नचावस्थावतो-

## आनन्दगिरिकृतटीका ।

यथादीपादि इति व्याप्तेर्विपरीतग्रहादीनामपि वेद्यत्वादतिरिक्तवेद्यत्वे संवेदितानसंवेद्यधर्मवान्वेदितत्वाद्यथादेवदत्तो न स्वसंवेद्यरूपादिमानित्यनुमानान्तरमाह संवेद्यत्वादेवेति ।

किञ्च विपरीतग्रहादयस्तत्त्वतो नात्मधर्माव्यभिचारित्वात् कृशत्वादिवदित्याह सर्वेति उक्तमेव विवृण्वन्नात्मनो विपरीतग्रहादिस्वाभाविको वागन्तुको वेति विकल्पाद्यं दूषयति आत्मन इति अतो निर्मोक्षोऽविद्या तज्जकस्तेरसद्भावादिति भावः आगन्तुकोऽपि स्वतस्त्वेदुक्तिः परतस्त्वेत्वाह अविक्रियस्येति विभुत्वादविक्रियत्वाच्चात्मव्योमवन्न केनचित् संयोगविभागावनुभवति नहि विक्रियाभावे व्योम्नि वस्तुतः संयोगविभागावसङ्गत्वाच्चात्मनस्तदसंयोगान्न परतोऽपि एतस्मिन्विपरीतग्रहादित्यर्थः तस्यात्मधर्मत्वाभावे फलितमाह सिद्धमिति आत्मनो निर्धर्मकत्वे भगवदनुमतिमाह अनादित्वादिति ईश्वरत्वे सत्यात्मनोऽसंसारित्वे विधिशास्त्रसाध्यत्वादेश्चानर्थक्यात्तात्त्विकमेव तस्य संसारित्वमिति शङ्कते नन्विति विद्यावस्थायामविद्यावस्थायां वा शास्त्रानर्थक्यमिति विकल्पाद्यं प्रत्याह न सर्वैरिति विदुषो मुक्तस्य संसारतदाधारत्वयोरभावस्य सर्ववादिसम्मतत्वात्तत्र शास्त्रानर्थक्यादि चोद्यं यथैव न प्रतिविधेयमित्यर्थः संग्रहवाक्यं विवृणोति सर्वैरिति अभिप्रायज्ञानात् प्रश्नं स्वाभिप्रायमाह कथमित्यादिना तर्हि मुक्तान् प्रति विधिशास्त्रसाध्यत्वादेश्चानर्थक्यमित्याशङ्क्याह नचेति नहि व्यवहारातीतेषु तेषु तेषु गुणदोषाशङ्केत्यर्थः द्वैतिनां मते मुक्तात्मस्वेवास्मत्पक्षेऽपि केवलस्येश्वरत्वे तं प्रति च शास्त्राद्यानर्थक्यं विद्यावस्थायामास्थितमिति फलितमाह नथेति द्वितीयं दूषयति अपिद्येति तदेव दृष्टान्तेन विश-

## शाङ्करभाष्यम् ।

**ऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यमथानित्यत्वदोषपरिहाराय
बन्धमुक्तावस्थाभेदो न कल्प्यतेऽतो द्वैतिनामपि शास्त्रानर्थक्यदोषोऽपरि-
हार्य्य एवेति समानत्वान्नाद्वैतवादिना परिहर्त्तव्यो दोषः नच शास्त्रा-
नर्थक्यं यथा प्रसिद्धाविद्वत्पुरुषविषयत्वात् शास्त्रस्य अविदुषां हि फलहेत्वो-
रनात्मनो दर्शनं न विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयो-
रहमित्यात्मदर्शनानुपपत्तेः नह्यत्यन्तमूढ़ उन्मत्तादिरपि जलाग्न्योः छाया-
प्रकाशयोर्वैकात्म्यं पश्यति किमुत विवेकी तस्मान्न विधिप्रतिषेधशास्त्र-
न्तावत् फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति।**

### आनन्दगिरिकृतटीका ।

थेति यथेति एवमद्वैतिनामपि विद्योदयात् प्रागर्थवत्त्वं शास्त्रादेरिति शेषः द्वैतिभिरद्वैति
नाच्च शाम्यमिति शङ्कते नन्विति अवस्थयोर्वस्तुत्वे तन्मते शास्त्राद्यर्थवत्त्वे फलितमाह
अत इति सिद्धान्ते तु नावस्थयोर्वस्तुतेति वैषम्यमाह अद्वैतिनामिति व्यावहारिकं द्वैतं
तत्तन्मतेऽपि स्वीकृतमित्याशङ्क्याह अविद्येति कल्पितद्वैतेन व्यवहारान्न तस्य वस्तुतेत्यर्थः
बन्धावस्थायाः वस्तुत्वभावे दोषान्तरमाह वन्धेति आत्मनोस्तत्त्वतोऽवस्थाभेदो द्वैतिनामपि
नास्तीति परिहरति नेति अनुपपत्तिं दर्शयितुं विकल्पयति यदीति तत्राद्यं दूषयति युग-
पदिति द्वितीयेऽपि क्रमभाविन्योरवस्थयोर्निर्निमित्तत्वं सनिमित्तत्वं वेति विकल्पाद्ये
सदा प्रसङ्गाद् बन्धमोक्षयोरव्यवस्था स्यादित्याह क्रमेति कल्पान्तरन्निरस्यति अन्येति
बन्धमोक्षावस्थेन परमार्थे अस्वाभाविकत्वात् स्फटिकलौहित्यवदिति स्थिते फलितमाह
तथाचेति अवस्थयोर्वस्तुतत्त्वोपगमादित्यर्थः इतश्चावस्थयोर्न वस्तुत्वमित्याह किञ्चेति
अवस्थयोर्वस्तुत्वमिच्छता तयोर्यौगपद्यायोगाद्वाच्ये क्रमे बन्धस्य पूर्वत्वं मुक्तेश्च पाश्चात्यमिति
स्थिते बन्धस्यादित्वकृतं दोषमाह बन्धेति तस्याश्चाकृताभ्यागमकृतविनाशनिवृत्तयेऽनादित्व-
मेष्टव्यमनन्तत्वञ्च तत्क्रमर्थमास्थेयं तच्च यदनादिभावरूपं तन्नित्यं यथात्मेति व्याप्तिविरुद्ध-
मित्यर्थः मोक्षस्य पाश्चात्यकृतं दोषमाह तथेति सा हि ज्ञानादिसाध्यत्वादादिसाध्यत्वा-
दादिमती पुनरावृत्त्यनङ्गीकारादनन्ता च तच्च यत्त्वादिभावं रूपं तदन्तवद्यथा पटादीति-
व्याप्त्यन्तरविरुद्धमित्यर्थः किञ्च क्रमभाविनीभ्यामवस्थाभ्यामात्मा सम्बध्यते न वा प्रथमे
पूर्वावस्थया सहैवोत्तरावस्थां गच्छति चेदुत्तरावस्थामपि पूर्वावस्थावस्थानादनिर्मोक्षः यदि
पूर्वावस्थां त्यक्त्वोत्तरावस्थां गच्छति तदा पूर्वत्यागोत्तरापत्त्योरात्मनः सातिशयत्वान्नित्यत्वानु-
पपत्तिरित्याह नचेति आत्मनोऽवस्थाद्वयसम्बन्धो नास्तीति द्वितीयमनूद्य दूषयति अथेत्या-

## शाङ्करभाष्यम्।

नहि देवदत्तत्वमिदं कुर्विति कस्मिंश्चित् कर्म्मणि नियुक्तो विष्णुमित्रोऽहं नियुक्त इति तत्रस्थो नियोगं शृखन्नपि प्रतिपद्यते नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिस्तथा फलहेत्वोरपि ननु प्राक्तसम्बन्धापेक्षया युक्तैवाप्रतिपत्तिः शास्त्रार्थविषयफलहेतुभ्यामन्यात्मत्वदर्शनेऽपि सति इष्टफल हेतोः प्रवर्त्तितोऽस्म्यनिष्टफलहेतोश्च निवर्त्तितोऽस्मीति यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थो प्रतिपत्तिर्न व्यतिरिक्तात्मदर्शनं प्रतिपत्तेः प्रागेव फलहेतोरात्माभिमानस्य सिद्धत्वात् प्रतिपन्ननियोगप्रतिषेधार्थौ हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते न पूर्वं तस्माद्विधि प्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम्।

ननु स्वर्गकामो यजेत कलञ्जं न भक्षयेदित्यादावात्मव्यतिरेक-

### आनन्दगिरिकृतटीका।

दिना तर्हि पक्षद्वयेऽपि दोषावशेषान्नाद्वैतमतानुरागे हेतुरित्याशंक्याविद्याविषये चेत्युक्तं विद्यणोति न चेति तदेव स्फुटयति अविदुषांहीति फलं भोक्तृत्वं कर्तृत्वे हेतुः यद्वा फलं देहविशेषो हेतुरदृष्टं तयोरनात्मनो भोक्ताहं कर्त्ताहं मनुष्योऽहमित्यादावात्मदर्शनमधिकारकं तेनाविद्वद्विषयं विधिनिषेधशास्त्रमित्यर्थः विदुषामपि मनुष्योऽहमित्यादिव्यवहारात्तद्विषयं शास्त्रं किं न स्यादित्याशंक्याह नेति भोक्तृत्वकर्त्तृत्वाभ्यां ब्रह्मण्यादिमतो देहधर्माधर्माभ्याञ्चात्मनोऽन्यत्वं पश्यतो न विधिनिषेधाधिकारित्वमुक्तफलादावात्मात्मीयाभिमानासम्भवादित्यर्थः आत्मनो देहादेरन्यत्वदर्शिनो न देहादावात्मधीरित्वे तदुपपादयति नहीति विदुषो न विधिनिषेधाधिकारितेत्युक्तमुपसंहरति तस्मादिति शास्त्रस्याविद्वद्विषयत्वमिव विद्वद्विषयत्वमपि मन्तव्यमुभयोरपि शास्त्रश्रवणाविशेषादित्याशङ्क्याह नहीति तत्रस्थो यस्मिन् देशे देवदत्तः स्थितस्तत्रैव वर्त्तमानः सन्नित्यर्थः।

ननु देवदत्ते नियुक्ते विष्णुमित्रोऽपि कदाचिन्नियुक्तोऽस्मीति प्रतिपद्यते सत्यं नियोगविषयानियोज्यादात्मनो विवेकाग्रहणान्नियोज्यत्वभ्रान्तेरित्याह नियोगेति अविवेकिनो नियोज्यधीर्भवतीति दृष्टान्तमुक्त्वा फलेहेतौ चात्मदृष्टिविशिष्टस्याविदुषःसम्भवत्येव विधिनिषेधाधिकारित्वमेवं दार्ष्टान्तिकमाह तथेति विधिनिषेधशास्त्रमविद्वद्विषयमिति वदता शास्त्रानर्थक्यं समाहितं संप्रति शास्त्रस्य विद्वद्विषयत्वेनैवार्थवत्वं शक्यसमर्थनमिति शङ्कते नन्विति प्रकृतिरविद्या ततो जातो यो देहादावभिमानात्मसम्बन्धो विद्योदयात् प्रागनुभूतस्तदपेक्षया

दर्शिनामप्रवृत्तौ केवलदेहाद्यात्मदृष्टीनाञ्चात: कर्त्तुरभावाच्छास्त्रा-
नर्थक्यमिति चेन्न यथा प्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः ईश्वर-
चैतन्यैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते तथा नैरात्म्यवाद्यपि नास्ति
परलोक इति न प्रवर्तते यथा प्रसिद्धस्तु विधिप्रतिषेधशास्त्रश्रव-
णान्यथाऽनुपपत्त्यानुमितात्मास्तित्वआत्मविशेषानभिज्ञः कर्मफलसञ्जात-
तृष्णः श्रद्दधानतया च प्रवर्तत इति सर्वेषां नः प्रत्यक्षमतो न शास्त्रा-
नर्थक्यं विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति
चेन्न कस्यचिदेव विवेकोपपत्तेरनेकेषु हि प्राणिषु कश्चिदेव विवेकी
स्याद्यथैवेदानीन्न चेत् विवेकिनमनुवर्तन्ते मूढ़ा रागादिदोषतन्त्रत्वात्
प्रवृत्तेरभिचरणादौ च प्रवृत्तिदर्शनात् स्वाभाव्याच्च प्रवृत्तेः स्वभावस्तु
प्रवर्त्तत इति उक्तं तस्मादविद्यामात्रं संसारो यथा दृष्टविषय एव न

आनन्दगिरिकृतटीका ।

विधिना प्रवर्त्तितो निषेधेन निवर्त्तितोऽस्मीति विधिनिषेधविषयासत्यामपि विद्यायां धीर्युक्तैवेत्यर्थः विदुषोऽपि पूर्वमाविद्यकं सम्बन्धमपेक्ष्य विधिनिषेधविषयाभियुक्तामेव व्यक्तीकरोति दृष्टेति नन्वविदुषो मिथ्याभिमानवन्न विदुषः सोऽनुवर्त्तते तथाचाविद्या-सम्बन्धापेक्षया विदुषो यथोक्ता धीरिति तत्राह यथेति पिता पुत्रो भ्रातेत्यादीनां मिथोऽन्यत्वदृष्टावप्यन्योन्यनियोगार्थस्य निषेधार्थस्य च धीर्दृष्टा पितरमधिकृत्य विधौ निषेधे वा तस्य तदनुष्ठानाशक्तौ पुत्रस्य तद्विषया धीरिष्टा अथातः सम्प्रति यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञः त्वं लोक इत्यादि सम्प्रतिपत्त्या श्रुत्या-शेषानुष्ठानस्य पुत्रकार्य्यताप्रतिपादनात् पुत्रञ्चाधिकृत्य विधिनिषेधप्रवृत्तौ तस्य तदशक्तौ पितुस्तथा धीरुपगता तथा भ्रात्रादिष्वपि द्रष्टव्यं एवं विदुषो हेतुफलाभ्यामन्यत्वदर्शनेऽपि प्राक्कालीनाविद्यकदेहादिसम्बन्धादविरुद्धा विधिनिषेधार्था धीरित्यर्थः पुत्रादीनां मिथ्या-भिमानान्मिथोनियोगधीर्युक्ता तत्त्वदर्शिनस्तु तदभावान्न देहादिसम्बन्धा धी. नानियोगधी-रिति परिहरति नेत्यादिना किञ्च सर्वापेक्षा यज्ञादिश्रुतेरश्ववदिति सर्वापेक्षाधिकरणे सम्यग्ज्ञानस्य दृष्टसाध्यत्वोक्तेर्विधिनिषेधार्थानुष्ठानं सम्यग्ज्ञानात् पूर्वमिति कुतो विदुषस्त-दनुष्ठानमित्याह प्रतिपन्नेति सत्यदृष्टेः सम्यग्धीदृष्टेरसति चाशुद्धबुद्धेस्तदभावादन्वयव्यतिरे-काभ्यां विविदिषावाक्याच्च विधिनिषेधानुष्ठानात् पूर्वं न सम्यग्धीरित्याह न पूर्वमिति विधिनिषेधयोर्विद्वद्विषयत्वायोगे फलितमाह तस्मादिति शास्त्रस्याविद्वद्विषयत्वेनोक्तमर्थ-मनर्थमर्थेपसमाधिभ्यां अपसम्मितमाक्षिपति नन्विति चकारादूर्ध्वमप्रवृत्तिरिति सम्बध्यते

शाङ्करभाष्यम्।

क्षेत्रज्ञस्य केवलस्याविद्यातत्कार्य्यञ्च न चेन्मिथ्याज्ञानं परमार्थं वस्तु दूषयितुं समर्थं नह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकन्तथाविद्या क्षेत्रज्ञस्य न किञ्चित् कर्तुं शक्नोत्यतश्चेदमुक्तं क्षेत्रज्ञञ्चापि मां विद्धि अज्ञानेनावृतं ज्ञानमिति च अथ किमिदं संसारिणामिवाहमेवं ममैवेदमिति पण्डितानामपि शृणु विदं तत् पाण्डित्यं यत् क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोगं कर्म वा काङ्क्षेयुर्मम स्यादिति विक्रियैव भोगकर्मणी अथैवं सति फलार्थित्वादविद्वान् प्रवर्तते विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्य्यकारणसंघातव्यापारोपरमे निवृत्तिरुपचर्य्यते इदञ्चान्यत् पाण्डित्यं कस्यचिदस्तु क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत् क्षेत्रज्ञस्य विषयः अहन्तु संसारी सुखी दुःखी मूढ़ो जातो मृतो वियुक्तः क्षीणो वृद्धोऽहं ममैवेत्येवमादायः सर्वं आत्मनि अध्यारोप्यन्ते संसारोपरमश्च मम कर्तव्यः क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इत्येवं मन्वानो यः स पण्डितापसदः संसारमोक्षयोः शास्त्रस्य

आनन्दगिरिकृतटीका।

आत्मनो देहाद्यतिरेकं पश्यता देहाद्यभिमानरूपाधिकारहेत्वभावाद्विहितो यागादावप्रवृत्तावनिषिद्धाच्चाभक्ष्यभक्षणादेर्न निवृत्तिरतस्तेषां प्रवृत्तिनिवृत्त्योरभाव देहादावात्मत्वमनुभवतामपि न ते युक्ते तेषां पारलौकिकभोक्तृप्रतिपत्त्यभावादित्यर्थः विदुषामविदुषाञ्च प्रवृत्तिनिवृत्त्यभावे फलितमाह अत इति आत्मनो देहाद्यतिरिक्तं परोक्षमपरोक्षञ्च देहाद्यात्मत्वं पश्यतः शास्त्रानुरोधादेव प्रवृत्तिनिवृत्त्युपपत्तेर्न शास्त्रानर्थक्यमित्युत्तरमाह नेत्यादिना प्रसिद्धिरत्र शास्त्राभिमता एतदेव विवृण्वन् ब्रह्मविदो वा नैरात्म्यवादिनो वा परोक्षज्ञानवतो वा प्रवृत्तिनिवृत्ताविह वक्ष्यतीति विकल्पाद्यं दूषयति ईश्वरेति न निवर्तते चेत्यपि द्रष्टव्यं द्वितीयं निरस्यति तथेति पूर्ववदत्रापि सम्बन्धः तृतीयमङ्गीकरोति यथेति विधिनिषेधादीनां प्रसिद्धमनुरुन्धानः सन्निति यावत् चकारान्निवर्तते चेत्यनुकृष्यते ब्रह्मविदं नैरात्म्यवादिनञ्च त्यक्त्वा देहाद्यतिरिक्तमात्मानं परोक्षमपरोक्षञ्च देहाद्यात्मत्वं पश्यतो विधिनिषेधाधिकारित्वे सिद्धे फलमाह अत इति विधान्तरेण शास्त्रार्थानर्थक्यञ्चोदयति विवेकिनामिति दृष्टा हि तेषां विधिनिषेधयोरप्रवृत्तिर्न हि देहादिभ्यो निःकृष्यात्मानं दृष्टवतां तयोरधिकारस्तेन तान् प्रति शास्त्रं नार्थवच्च देहाद्यात्मत्वदृशस्तत्वा-

शाङ्करभाष्यम् ।

चार्थवत्त्वं करोमीत्यात्मज्ञा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वात् श्रुतहानिमश्रुतकल्पनाञ्च कुर्वं स्तस्मादसम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः ततूक्तमस्थिरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानाञ्चेश्वरैकत्वे संसारिणोऽभावात् संसाराभावप्रसङ्ग इत्येतौ दोषौ प्रयुक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति कथमविद्यापरिकल्पितदोषेण तद्विषयं वस्तुपारमार्थिकं न दुष्यतीति तथा च दृष्टान्तो दर्शितमरीच्यम्भसोषरदेशो न पङ्कीक्रियत इति संसारिणोऽभावात् संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तो नन्वविद्यात्वमेव क्षेत्रज्ञस्य संसारित्वदोषमुक्तन्तत्कृतञ्च दुःखित्वादिप्रत्यक्षमुपलभ्यते न ज्ञेयस्य क्षेत्रधर्मत्वात् ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः यावत् किञ्चित् क्षेत्रज्ञस्य दोषजातमविद्यमानमासञ्जयति तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव न क्षेत्रधर्मत्वं नच तेन क्षेत्रज्ञो दुष्यति ज्ञेयेन तु ज्ञातुः

आनन्दगिरिकृतटीका ।

धिक्रियन्ते तेषां यद्यदाचरतीति न्यायेन विवेकिनो न गच्छतां विध्यादावप्रवृत्तेरतोऽधिकार्य्यभावाद्विध्यादिशास्त्रस्य तदनुसारिशिष्टाचारस्य चानर्थकत्वमित्यर्थः किं सर्वेषां विवेकित्वादधिकार्य्यभावादानर्थक्यं शास्त्रस्योच्यते किंवा कस्यचिदेव विवेकित्वेऽपि तदनवत्तित्वादन्येषामप्रवृत्तेरनर्थक्यं चोद्यते तत्र प्रथमं प्रत्याह न कस्यचिदिति मनुष्याणां सहस्रेष्विति न्यायेनोक्तमेव स्फुटयति अनेकेष्विति तत्रानुभवानुरोधेन दृष्टान्तह यथेति द्वितीयं दूषयति नचेति किञ्च विवेकिनामप्रवृत्तिरित्याशङ्कां निरसितुं श्येनादौ तदप्रवृत्तावपि इतरप्रवृत्तेरित्याह अभिचरणादौ चेति अविवेकिनां रागादिद्वारा प्रवृत्तावसदं सर्वं संपञ्चीलमादिपदम् इतश्च विवेकिनां प्रवृत्त्यभावेऽपि नान्यस्याप्रवृत्तिरित्याह स्वाभाव्याच्चेति प्रवृत्तेः स्वभावाख्याज्ञानकार्यत्वे भगवद्वाक्यमनुकूलयति स्वभावस्त्विति प्रवृत्तेरज्ञानजन्यत्वे विधिनिषेधाधीनप्रवृत्तिनिवृत्त्यात्मकबन्धस्याविद्यामात्रत्वादविद्वद्विषयत्वं शास्त्रस्य सिद्धमिति फलितमाह तस्मादिति दृष्टमेवानुसरन्नविद्वान् यथा दृष्टस्तद्विषयस्तदाश्रयसंसारस्तथा च प्रवृत्तिनिवृत्त्यात्मकसंसारस्याविद्वद्विषयत्वात्तद्धेतुविधिशास्त्रस्यापि तद्विषयत्वमित्यर्थः नन्वविद्यावत्त्वमाश्रयन्ती स्वकार्य्यं संसारमपि तस्मिन्नाधत्ते तेनास्यैव शास्त्राधिकारित्वं नेत्याह नेति अविद्यादेः शुद्धे चेतने वस्तुतोऽसम्बन्धेऽपि तत्तस्मिन्नारोपितं

## शाङ्करभाष्यम्।

संसर्गानुपपत्तेः यदि हि संसर्गः स्यात् ज्ञेयत्वमेव नोपपद्येत यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखित्वादि च कथञ्चोः प्रत्यक्षमुपलभ्यते कं वा क्षेत्रज्ञधर्मः ज्ञेयञ्च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधारितेऽविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यतेऽविद्यामात्रावष्टम्भात् केवलं अत्राह साऽविद्या कस्येति यस्य दृश्यते तस्यैव कस्य दृश्यत इत्यत्रोच्यते अविद्या कस्य दृश्यत इति प्रश्नो निरर्थकः कथं दृश्यते चेदविद्या तद्वन्तमपि पश्यसि नच तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो युक्तो नहि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नो युक्तोऽर्थवान् भवेत् ननु विषमो दृष्टान्तो गवां तद्वतश्च प्रत्यक्षत्वात् सम्बन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थकः न तथा विद्या तद्वांश्च प्रत्यक्षौ यतः प्रश्नो निरर्थकः

### आनन्दगिरिकृतटीका।

तमेव दुःखीकरोतीत्यत्राह नचेति तदेव दृष्टान्तेन दर्शयति नहीति क्षेत्रज्ञस्य वस्तुतोऽविद्यासम्बन्धेऽपि तस्मिन्नारोपितं तमेव दुःखीकरोतीत्याह नचेति तदेव दृष्टान्तेन दर्शयति नहीति क्षेत्रज्ञस्य वस्तुतोऽविद्यासम्बन्धे भगवद्वचोऽपि द्योतकमित्याह अत इति क्षेत्रज्ञेश्वरयोरैक्यं किमित्यसावात्मानमहमिति बध्यमानोऽपि स्वस्येश्वरत्वमीश्वरोऽस्मीति न बध्यते तत्राह अज्ञानेनेति आत्मनो वस्तुतः संसारासंस्पर्शे विद्वदनुभवविरोधः स्यादिति चोदयति अथेति एवमित्यभिजात्यादिनैशिष्ट्युक्तं इदमात्रेत्रकलत्रादिपण्डितानामपि प्रतीतं संसारित्वमिति शेषः किं पाण्डित्यं देहादावात्मदर्शनं किंवा कूटस्थात्मदृष्टिराहोसंसारित्वादि धीरिति विकल्प्याद्यं निराकुर्वन्नाह इत्यिवति तत्र वस्तुतोऽसंसारित्वाविरोधिप्रातिभासिकन्तु संसारित्वमिष्टमिति शेषः द्वितीयं दूषयति यदीति नहि कूटस्थात्मविषयं संसारित्वं प्रतीयते येन वस्तुतो संसारित्वं विरुध्यते कूटस्थस्यात्मधीविरुद्धायाः संसारित्वबुद्धेरनवकाशित्वादित्यर्थः आत्मानमक्रियं पश्यतोऽपि कुतो भोगकर्मणी न स्यातामित्याशङ्क्याह विक्रियेति सविक्रियात्मबुद्धेर्भोगकर्माकाङ्क्षयोरभावे कस्य शास्त्रे प्रवृत्तिरित्याशङ्क्याह अथेति फलार्थित्वाभावाद्विदुषो न कर्मणि प्रवृत्तिरित्येवं स्थिते सत्यनन्तरमविद्वान् फलार्थित्वात्तदुपाये कर्मणि प्रवर्त्तते शास्त्रेऽधिकारीत्यर्थः विदुषो वैधप्रवृत्त्यभावेऽपि निषेधादीनां न प्रवृत्तेरपि दुर्वचत्वात्तस्य निवृत्तिनिष्ठत्वासिद्धिरित्याशङ्क्याह विदुष इति तृतीयइत्यापयति इदञ्चेति सिद्धान्तादविशेषमाशङ्क्य क्षेत्रस्य क्षेत्रज्ञाद्

शाङ्करभाष्यम् ।

स्यादप्रत्यक्षेणाविद्यावता विद्यासम्बन्धे ज्ञाते किन्तव स्यादविद्याया अनर्थहेतुत्वात् परिहर्त्तव्या स्यादस्याविद्या सतां परिहर्तव्येति ननु ममैवाविद्या जानासि तर्ह्यविन्तदन्तस्त्वात्मानं जानासि नतु प्रत्यक्षेणानुमानेन चेज्जानासि कथं सम्बन्धग्रहणं नहि तव ज्ञातुर्ज्ञेयभूतया विद्यया तत्काले सम्बन्धं ग्रहीतुं शक्यते अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वान्नच ज्ञातुरविद्या यश्च सम्बन्धस्य योऽग्रहीता ज्ञानञ्चान्यत् तद्विषयं सम्भवत्यनवस्था प्राप्तेर्यदि ज्ञातापि ज्ञेयसम्बन्धो ज्ञायेतान्यज्ञाता कल्प्यः स्यात्तस्यान्य इत्यनवस्थापरिहार्य्या यदि पुनरविद्याज्ञेयान्यद्वा ज्ञेयं ज्ञेयमेव तथा ज्ञातापि ज्ञातैव न ज्ञेयम्भवति यदा चैवमविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किञ्चित् दुष्यति नन्वयमेव दोषो यत् दोषवत्क्षेत्रविज्ञातृत्वं न विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोप-

आनन्दगिरिकृतटीका ।

वस्तुतो भिन्नत्वेन तद्विषयत्वाङ्गीकारान्नैवमित्याह क्षेत्रज्ञेति अहं धीवेत्यस्यात्मनो वस्तुतः संसारित्वस्वीकारश्च सिद्धान्ताङ्गे दोऽस्तीत्याह अहं त्विति संसारित्वमेव स्फोरयति सुखीति संसारित्वस्य वस्तुत्वे तदनिवृत्त्या पुमर्थासिद्धिरित्याशंक्याह संसारेति कथं तदुपरमस्य हेतुं विना कर्त्तव्यत्वमित्याशंक्याह क्षेत्रेति क्षेत्रं ज्ञात्वा ततो निकृष्टस्य क्षेत्रज्ञस्य ज्ञानं कथं संसारोपरतिमुत्पादयेदित्याशङ्क्याह ध्यानेनेति संसारित्वमात्मनो बुध्यमानस्य तद्रहितादीश्वरादन्यत्वं वक्तव्यमिति वक्तुमिति शब्दः तदेवान्यत्वमुपपादयति यश्चेति मम संसारिणोऽसंसारीश्वरत्वं कर्त्तव्यमित्येवं यो बुध्यते यो वा तथाविधं ज्ञानं तव कर्त्तव्यमित्युपदिशति स क्षेत्रज्ञादीश्वरादन्यो ज्ञेयोऽन्यथोपदेशानर्थक्यादित्यर्थः आत्मा संसारी परस्मादात्मनोऽन्यस्तस्य ध्यानाधीनात्मानेनेश्वरत्वं कर्त्तव्यमित्येतत् ज्ञानं पाण्डित्यमिति मतं दूषयति एवमिति अयमात्मा ब्रह्मेत्यात्मनो ब्रह्मत्वश्रुतिविरोधादित्यर्थः ।

ननु संसारस्य वस्तुत्वाङ्गीकारात्तत्प्रतीत्यवस्थायां कर्मकाण्डस्यार्थवत्त्वं संसारित्वनिरासेनात्मनो ब्रह्मत्वे ध्यानादिना साधिते मोक्षावस्थायां ज्ञानकाण्डस्यार्थवत्त्वं तत् कथं यथोक्तज्ञानवान् पण्डितापसदत्वेनाक्षिप्यते तत्राह संसारेति करोमीति मन्यमानो यः स पण्डितापसद इति पूर्वेण सम्बन्धः कर्मकाण्डं हि कल्पितं संसारित्वमधिकृत्य साध्यसाधनसम्बन्धबोधपदार्थवदिष्टं ज्ञानकाण्डमपि तथाविधं संसारित्वं पराकृत्याखण्डैकरसे प्रत्यग्ब्रह्मणि पर्यवस्यदर्थवद्भवेद-

शाङ्करभाष्यम्।

चारस्तद्दर्शयता भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितः अविद्याध्यारोपितैरेव क्रियाकारकाद्यात्मन्युपचर्य्यते तथा तत्र तत्र य एनं वेत्ति हन्तारं प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्वशः नादत्ते कस्यचित् पापमित्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिरुत्तरेषु च प्रकरणेषु दर्शयिष्यामो हन्त तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्त्तव्यान्येव न विदुषामिति प्राप्तं सत्यमेवं प्राप्तमेतदेव च नहि देहभृता शक्यमित्यत्र दर्शयिष्यामः सर्वशास्त्रार्थोपसंहारप्रकरणे च समासेनैव कौन्तेय निष्ठा ज्ञानस्य यापरेत्यत्र विशेषतो दर्शयिष्यामः अलमिह बहुप्रपञ्चेनेत्युपरम्यते ॥ २ ॥

आनन्दगिरिकृतटीका।

त्यर्थः किञ्चात्मनः शास्त्रसिद्धं ब्रह्मत्वं त्यक्त्वा ब्रह्मत्वं कल्पयन्नात्महा भूत्वा लोकद्वयबहिर्भूतः स्यादित्याह आत्महेति ननु क्षेत्रज्ञञ्चापि मां विद्धीत्यनेन सर्वक्षेत्रान्तर्यामी परो जीवादन्यो निरुच्यते न जीवस्येश्वरत्वमत्र प्रतिपाद्यते तत् कथमित्थमाक्षिप्यते तत्राह स्वयमिति किञ्च तत्त्वमसीतिवत् प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धं तस्येश्वरत्वमिहोपदेशतः श्रुतं तस्य हानिमश्रुतस्य च जीवेश्वरयोस्तात्त्विकभेदस्य कल्पनां कुर्वन् कथं व्यामूढो न स्यादित्याह श्रुतेति ननु केचन व्याख्यातारो यथोक्तं पाण्डित्यं पुरस्कृत्य क्षेत्रज्ञञ्चापीत्यादिश्लोकं व्याख्यातवन्तः तत् कथमुक्तं पाण्डित्यमास्थाय तुल्यामूढत्वं तत्राह तस्मादिति क्षेत्रज्ञञ्चापीत्यत्र क्षेत्रज्ञेश्वरयोरैक्यं स्वाभीष्टं स्पष्टयितुं प्रत्युक्तमेव चोद्यमनुद्रवति यत्तूक्तमिति तात्त्विकमेकत्वमतात्त्विकं संसारित्वमित्यङ्गीकृत्योक्तमेव समाधिं स्मारयति एताविति ईश्वरस्य संसारित्वं संसार्यभावेन संसाराभावश्चेत्युक्तौ दोषौ विद्याविद्ययोर्वैलक्षण्येऽपि कथं प्रत्युक्ताविति पृच्छति कथमिति कल्पितसंसारेण कल्पनाधिष्ठानमद्वयं वस्तु वस्तुतो न सम्बध्यमिति परिहरति अविद्येति तद्विषयं कल्पनास्पदमधिष्ठानमिति यावत् कल्पितेनाधिष्ठानस्य वस्तुनोऽसंस्पर्शे दृष्टान्तं स्मारयति तथाचेति ईश्वरस्य संसारित्वाप्रसङ्गं प्रकटीकृत्य प्रसङ्गान्तरनिरासमनुसारयति संसारिण इति न तावदविद्यासंसारसंसारिणश्च कल्पयन्ती स्वतन्त्रा तत्त्वव्याघातात् पारतन्त्र्ये चाश्रयान्तराभावात् क्षेत्रज्ञस्य तद्वत्त्वे संसारित्वमिति शङ्कते नन्विति नचाविद्यावत्त्वमविद्याकृतमनवस्थानादिति भावः यत्तूक्तं स्वातन्त्र्यं दोषवदविद्या किं करिष्यतीति तत्राह तत्कृतश्चेति अविद्यातत्कार्ययोर्ज्ञेयत्वान्नात्मधर्म्मतेत्युक्तं तदेवाह ज्ञेयत्वादिना तदेव प्रपञ्चयति आवृतिरिति

आनन्दगिरिकृतटीका ।

ज्ञेयस्य क्षेत्रधर्म्मत्वेऽपि क्षेत्रद्वारा क्षेत्रज्ञस्य तत्कृतदोषवत्त्वेत्याशङ्क्याह नचेति क्षेत्रस्यापि ज्ञेयत्वात्र तेन चितो वस्तुतः स्पर्शोऽस्तीत्युपपादयति यदीति धर्मधर्मित्वोनसंसर्गेऽपि ज्ञेयत्वे का क्षतिरित्याशङ्क्याह यदीति आत्मधर्मस्यात्मना ज्ञेयत्वे स्वस्यापि ज्ञेयत्वापत्त्या कर्तृकर्मविरोधः स्यादित्यर्थः किञ्च विमतं न क्षेत्रज्ञाश्रितं तद्वेद्यत्वाद्रूपादिवदित्याह कथं चेति किञ्च महाभूतानीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावान्नाविद्यादेरात्मधर्मतेत्याह ज्ञेयं चेति किञ्चैतद्यो वेत्तीत्युक्तत्वात् क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयान्न तत्र ज्ञेयं किञ्चित् प्रविशतीत्याह ज्ञातैवेति क्षेत्रक्षेत्रज्ञयोरेवं स्वाभाव्ये सिद्धे सिद्धं क्षेत्रधर्मत्वमविद्यादेरिति फलितमाह इत्यवधारिते इति विरोधाच्च न क्षेत्रज्ञधर्मत्वं अविद्यादेरित्याह क्षेत्रज्ञेति विरुद्धयादित्वे मूलं दर्शयति अविद्येति मात्रपदस्य व्यावर्त्यमानं युक्तावष्टम्भान्तरमिति वक्तुं केवलपदं यया विद्यया विरुद्धमपि निर्वोढुं शक्यते तस्याः स्वातन्त्र्याभावाच्चिन्नोऽन्यस्याविद्यकत्वेन तदाश्रयत्वात्तस्याविद्यास्वभावतया तदाश्रयत्वव्याघातात्तदाश्रयजिज्ञासया पृच्छति कस्येति आश्रयमात्रं पृच्छते तद्विशेषो वा प्रथमे प्रश्नस्यानवकाशित्वं मत्वाह यस्येति अविद्याद्रष्टुर्द्रष्टा वा दृश्यत्वे पारतन्त्र्यात् किञ्चिन्निष्ठत्वेनैव तद्दृष्टेः स्वियमात्रं द्रष्टव्यमदृश्यं वा अप्रकाशत्वादसिद्धिरेव स्यादित्यर्थः द्वितीयमालम्बते कस्येति अविद्याया दृश्यमानत्वादाश्रयविशेषस्यात्मनोऽपि स्वानुभवसिद्धत्वात् प्रश्नस्य निरवकाशतेत्युत्तरमाह अत्रेति प्रश्नानर्थक्यं प्रश्नद्वारा स्फोरयति कथमित्यादिना तथापि कथं प्रश्नासिद्धिस्तत्राह नचेति तदेव दृष्टान्तेन स्पष्टयति नहीति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यश्चोदयति नन्विति अत्रा स्वयस्य परोक्षत्वेऽपि प्रश्नैरर्थक्यमित्याह अप्रत्यक्षत्वेति अविद्यावतोऽप्रत्यक्षत्वेऽपि तेनाविद्यासम्बन्धे सिद्धे प्रष्टुरेव प्रश्नानर्थक्यसमाधिर्न कश्चिदित्यर्थः अबुद्धपराभिसन्धिः शङ्कते अविद्याया इति अविद्यावतस्तत्परिहारान्नान्येन प्रयतितव्यमित्याह यस्येति ममैवाविद्यावत्त्वात्तत्परिहारे मया प्रयतितव्यमिति शङ्कते नन्विति तर्हि प्रश्नानर्थक्यमिति सिद्धान्ती स्वाभिसन्धिमाह जानासीति आत्मानमविद्यावन्तं जानन्नपि तद्विषयाध्यक्षाभावात् पृच्छामीति शङ्कते जानामीति अविद्यावतोऽप्रत्यक्षत्वं वदता तस्याहमविद्यावानविद्याकार्य्यान्वयव्यतिरेकेण सुखात्मवदित्यनुमेयत्वमिष्टमित्युपेत्य दूषयति अनुमानेनेति आत्मनो विद्यासम्बन्धग्रहे कानुपपत्तिरित्याशङ्क्य ज्ञानैवात्मा स्वस्याविद्यासम्बन्धं बुध्यतेऽन्योवा ज्ञातेति विकल्पाद्यं दूषयति नहीति तत्काले स्वस्याविद्यां प्रति ज्ञातृत्वावस्थायामिति यावत् अविद्याविषयत्वेन गृहीतत्वात्तत्ज्ञातृत्वेनैवोपयुक्तस्यात्मनस्तस्याः स्वात्मनि कृत सम्बन्धग्राहकत्वमेकस्य कर्मकर्तृत्वविरोधादित्याह अविद्ययेति द्वितीयं निरस्यति नचेति ज्ञो गृहीता स मनः सम्भवतीति सम्बन्धः तद्विषयमिति ज्ञातुरविद्यायाश्च सम्बन्धस्तच्छब्दार्थः अनवस्थामेव प्रपञ्चयति यदीति आत्मनः स्वपरज्ञेयत्वायोगात्तन्निष्ठविद्यासम्बन्धस्याप्रामा-

आनन्दगिरिकृतटीका ।

धिकत्वाद्विद्यानुभवगम्यत्वे स्थिते फलितमाह यदि पुनरिति यदा चैवं तदैतदध्याहार्यं ज्ञातरात्मनो न किञ्चित् दूष्यतीत्येतदवक्ष्यमाणः शङ्कते नन्विति किं ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं ज्ञानस्वरूपत्वं वा नाद्यस्तदभ्युपगमासत्प्रयुक्तदोषाभावात् द्वितीये ज्ञातृत्वस्यौपचारिकत्वान्न तत्कृतो दोषोऽस्तीत्याह नेत्यादिना असत्यामपि क्रियायां क्रियोपचारं दृष्टान्तेन स्फुटयति यथेति आत्मनि वस्तुतो विक्रियाभावे भगवदनुमतिं दर्शयति यथात्वेति गीताशास्त्रं सम्प्रस्यर्थः स्वत एवात्मनि क्रियादागात्मत्वाभावो भगवता शास्त्रे यथोक्तस्तथैव व्याख्यातमस्माभिरिति सम्बन्धः कथं तर्हि क्रियादिरात्मनि भाति तत्राह अविद्येति यथा वस्तुतो नास्त्यात्मनि क्रियादिरुपचारात्तु भाति तथा तत्र तत्रातीतप्रकरणेषु व्याख्यो भगवता कृतो यत इत्याह तथेति न केवलमतीतेष्वेव प्रकरणेषु वास्तवक्रियाद्यभावादात्मन्याध्यासिको तत्प्रतीकरणा किन्तु वक्ष्यमाणप्रकरणेष्वपि तथैव भगवदभिप्रायदर्शनं भविष्यतीत्याह उत्तरेषु केति आत्मनि वास्तवक्रियाद्यभावेऽध्यासाच्च तत्सिद्धौ कर्मकाण्डस्याविद्वदधिकारित्वप्राप्तौ विद्वान्यत्वेन ज्ञाता कर्मारम्भेत्यादिशास्त्रविरोधः स्यादिति शङ्कते हन्तेति शास्त्रस्य देहव्यतिरेकविज्ञानाभिप्रायत्वाददर्शनाद्यादप्रतीतात्मधीविधुरस्यैव कर्मकाण्डाधिकारित्वेनाङ्गीकरोति सत्यमिति कथमज्ञस्यैव कर्माधिकारित्वमुपपन्नमित्याशंक्याह एन्देवेति ज्ञानिनो ज्ञाननिष्ठायामेवाधिकारो निष्ठान्तरे त्वज्ञस्यैवेत्युपसंहारप्रकरणे विशेषतो भविष्यतीत्याह सर्वेति तदेवानुक्रामति समासेनेति जीवब्रह्मणोरैकत्राभ्युपगमेन किञ्चिद्वदत्रमिदमित्युपसंहरति अजमिति ॥ २ ॥

स्वामिकृतटीका ।

तदेवं संसारिणः स्वरूपमुक्तमिदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह क्षेत्रज्ञमिति तञ्च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव विद्धि तत्त्वमसीति श्रुत्युपलक्षितेन मद्रूपत्वोक्तत्वात् आदरार्थमेतत् ज्ञानं स्तौति क्षेत्रक्षेत्रज्ञयोर्यद्वैलक्षण्येन ज्ञानं तदेव मोक्षहेतुत्वात् ज्ञानं मम मतम् अन्यत्तु ज्ञानापाण्डित्यं बन्धहेतुत्वादित्यर्थः तदुक्तम् ॥ तत् कर्म यन्न बन्धाय सा विद्या या च मुक्तये आयासायापरं कर्म विद्यान्या शिल्पनैपुण्यमिति ॥ २ ॥

## भाषा अनुवाद ।

क्षेत्रज्ञ का व्यावहारिक स्वरूप कहा अब परमार्थिक असंसारी स्वरूप कहते हैं कि हे भारत अर्जुन सोई क्षेत्रज्ञ संसारी जो जीव तिसे यावत् क्षेत्रज्ञ का आधाररूप हम को जानो क्योंकि साम वेद के तत्त्वमसि महा-

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

शाङ्करभाष्यम् ।

इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत् क्षेत्रं यच्चेत्यादिव्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति यन्निर्दिष्टमिदं शरीरं इति तत् क्षेत्रमिति तच्छब्देन परामृशति यच्चेदं निर्दिष्टं क्षेत्रं तद्यादृक् यादृशं स्वकीयैर्धर्मैश्च शब्दः समुच्चयार्थो यद्विकारि यो विकारो यस्य तद्यद्विकारि यतो यस्माच्च यत्कार्यमुत्पद्यते इति वाक्यशेषः स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावः ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथा विशेषितं तत् समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वाऽवधारयेत्यर्थः ॥ ३ ॥

आनन्दगिरिकृतटीका ।

एवं श्लोकद्वयं व्याख्याय श्लोकान्तरमवतारयति इदमिति कृत संग्रहश्लोकिरुपयुज्यते तत्राह व्याचिख्यासितस्येति प्रतिपत्तिसौकर्यार्थं संग्रहोक्तिरर्थवतीत्यर्थः वक्ष्यमाणेऽर्थे श्रोतृमनःसमाधानार्थं सूचितो वाक्यार्थोपायविवरणप्रतिज्ञामभिप्रेत्याह यन्निर्दिष्टमिति इदं शरीरमिति यन्निर्दिष्टं तच्छरीरं तच्छब्देन परामृशति प्रकृतार्थत्वात्तस्येति योजना तत् क्षेत्रं ज्ञातव्यमित्यध्याहारः यच्चेति येन रूपेण रूपवदिति तदेव क्षेत्रं विशेष्यते तस्य क्षेत्रस्य स्वकीयाश्च धर्माः जन्मादयस्तैर्विशिष्टस्य ज्ञेयत्वे हेयत्वं फलति चशब्दस्य धर्मस्येतरेतरसमुच्चयार्थत्वमाह च शब्द इति विकारित्वेनापि हेयत्वं सूचयति यद्विकारीति यत् कार्यं तत्सर्वं यस्मादुत्पद्यते तत्कारणत्वाद् ज्ञातव्यमित्याह यत इति क्षेत्रमिव क्षेत्रज्ञं

भाषा अनुवाद ।

वाक्य का लक्ष्य अर्थ चिद्रंश करके मेरे ही रूपका प्रतिपादन किया है और क्षेत्र तथा क्षेत्रज्ञ इन दोनो का जो पृथकरूप ज्ञान सोई मेरे मतसे मुक्ति का हेतु है और सब ज्ञान प्रतिबन्ध के कारण हैं तथाहि सोई कर्म जो बन्धका हेतु नहीं और सोई विद्या जो मुक्ति की हेतु होय बाकी कर्म सब परिश्रमके हेतु और विद्या सकल शिल्प नैपुण्यमात्र अर्थात् कारीगरी की चातुरी हैं उन से कुछ परमार्थ नहीं होता यह जानो ॥ ३ ॥

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

### शाङ्करभाष्यम् ।

तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थं ऋषिभिरिति ऋषिभिर्वशिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिः

### आनन्दगिरिकृतटीका ।

ज्ञातव्यं दर्शयति स चेति ज्ञातव्यमिति सम्बन्धः चक्षुराद्युपाधिकृतदृष्ट्रादिशक्तिवशात्तस्य ज्ञानवत्त्वं सूचयति यत्प्रभाव इति तेनोक्तेन प्रभावेण तस्य ज्ञातव्यतेति शेषः कथं यथा विशेषितं क्षेत्रं क्षेत्रज्ञो वा शक्यो ज्ञातुमित्याशङ्क्य भगवद्वाक्यादित्याह तदिति ॥ ३ ॥

### स्वामिकृतटीका ।

तत्र यद्यपि चतुर्विंशतिभेदभिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेणैव परिणतायामेव तस्यामहं भावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्युक्तं तदेव प्रपञ्चयिष्यन् प्रतिजानीते तदिति तदुक्तं मया तत् क्षेत्रं यत् स्वरूपतो जड़-दृश्यादिस्वभावं यादृक् यादृशञ्च इच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं यतश्च प्रकृतिपुरुषसंयोगाद्भवति यदिति यैः प्रकारैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः स च क्षेत्रज्ञो यत्स्वरूपतो यत्प्रभावश्च अचिन्त्यैश्वर्ययोगेन यैः प्रभावैः सम्पन्नस्तत्सर्वं संक्षेपतो मत्तः शृणु ॥ ३ ॥

### भाषा अनुवाद ।

यद्यपि यहां चौविस प्रकारकी प्रकृति को क्षेत्र कहते हैं तौभी देह रूप परिणाम कहे रूपान्तर प्राप्तिको प्राप्त भई वही प्रकृतिमे अहंरूप अविवेक हेतुसे सोई प्रकृति के विवेक के अर्थ इस शरीर को क्षेत्रमात्र कहा उसी के विस्तार की इच्छासे प्रतिज्ञा करते हैं कि मेरा किया हुआ जो उक्तस्वरूप जड दृश्य आदि स्वभाव और यादृश इच्छादि धर्म्मयुक्त और जैसे इन्द्रियादि विकार मे युक्त और जैसे प्रकृति पुरुष के संयोग से जन्मे और जिस प्रकार स्थावर जङ्गम भेद से नानारूप होय जो क्षेत्रज्ञस्वरूप विद्यमान है और अचिन्त्य ऐश्वर्य के द्वारा जो जो प्रभाव से सम्पन्न होय है सो सब संक्षेप से हमसे श्रवण करो यह भगवान् अर्जुन से कहा ॥ ३ ॥

शाङ्करभाष्यम् ।

छन्दांसि ऋगादीनि तैर्मन्त्रच्छन्दोभिर्विविधैर्नानाप्रकारैः पृथक् विवेकतो गीतं किञ्च ब्रह्मसूत्रपदैश्च एव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि ब्रह्मसूत्रपदैरुच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमिति अनुवर्त्तते आत्मेत्येवोपासीतेत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्न संशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥ ४ ॥

आनन्दगिरिकृतटीका ।

श्लोकान्तरस्य तात्पर्य्यमाह तदित्यादिना विवक्षितं जिज्ञासितमित्यर्थः स्तुतिफलमाह-श्रोत्रेति न केवलमाप्तोक्तैरेव क्षेत्रादियाथात्म्यं सम्भावितं किन्तु वेदवाक्यादपीत्याह छन्दोभिश्चेति ऋगादीनां चतुर्णामपि वेदानां नानाप्रकारत्वं शाखाभेदा दृष्टं न केवलं श्रुतिस्मृतिसिद्धमुक्तं याथात्म्यं किन्तु यौक्तिकञ्चेत्याह किञ्चेति कानि तानि सूत्राणीत्याशङ्क्याह आत्मेत्येवेति आदिपदेन ब्रह्मविदाप्नोति परमथ योऽन्यां देवतामित्यादीनि विद्याविद्यासूत्राण्युक्तानि आत्मेति क्षेत्रज्ञोपादानं तच्च क्षेत्रोपलक्षणं अथातो ब्रह्मजिज्ञासेत्यादीन्यपि सूत्राण्यत्र गृह्णीतान्यन्यथा छन्दोभिरित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि हेतुमद्भिरिति ॥ ४ ॥

स्वामिकृतटीका ।

कैः विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायामाह ऋषिभिरिति ऋषिभिर्वशिष्ठादिभिर्योगशास्त्रेषु ध्यानधारणादिविषयत्वेन वैराजादिस्वरूपेण बहुधा गीतं निरूपितं विविधैर्विचित्रैर्नित्यनैमित्तिककाम्यकर्मादिविषयैः छन्दोभिर्वेदैर्नानापूजनीयदेवतारूपेण गीतं ब्रह्मणः सूत्रैः पदैश्च ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि यतो वा इमानि भूतानि जायन्त इत्यादीनि तटस्थलक्षणपराणि उपनिषद्वाक्यानि तथा ब्रह्म पद्यते साक्षात् ज्ञायते एभिरिति स्वरूपलक्षणपराणि सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि तैश्च बहुधा गीतं किञ्च हेतुमद्भिः स देव सौम्येदमग्र आसीत् कथमसतः सज्जायेत इति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दनस्यात् एष ह्येवानन्दयातीत्यादियुक्तिमद्भिः अन्यात् अपानचेष्टां कः कुर्य्यात् प्राणव्यापारं वा कः कुर्य्यादिति श्रुतपदयोरर्थः विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असन्दिग्धार्थप्रतिपादकैरित्यर्थः तदेवमेतैर्विस्तरेणोक्तं दुःसंग्रहं संक्षेपतस्तुभ्यं कथयिष्यामि तत् शृणु इत्यर्थः यद्वा अथातो ब्रह्मजिज्ञासेत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।**
**इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

स्वामिकृतटीका।

तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिरौपनिषदैर्ब्रह्म आनन्दमयोऽभ्यासादित्यादियुक्तियुक्तैर्विनिश्चितार्थैः शेषं समानम् ॥ ४ ॥

भाषा अनुवाद।

किस के कहे विस्तारवचन का यह संक्षेप है इसपर कहते हैं कि जो वशिष्टादिकों ने योगशास्त्र मे ध्यान धारणादि विषयक परमेश्वरका विराट्रूप नानाप्रकार से निरूपण किया है और जो वशिष्टादिकों ने नित्यनैमित्तिक काम्यकर्म्म आदि विविध प्रकारसे वेदके द्वारा भिन्नभिन्न अनेक पूजनीय देवतारूप से प्रगट किया है और ब्रह्मसूत्र अर्थात् जिस से ब्रह्मका निरूपण होता है तात्पर्य्य यह कि जिस से समस्त भूत जन्मते हैं इत्यादि तटस्थ लक्षणरूप उपनिषद्वाक्य जो ब्रह्मसूत्र और जिस के द्वारा ब्रह्मका साक्षात्कार ज्ञान किया जाता है एतावता स्वरूप लक्षण अर्थात् सोई ब्रह्म सत्य ऐसा ज्ञान औ आनन्दरूप इत्यादि श्रुतियोंने हेतुयुक्तपद से कहा अर्थात् हे सौम्य इस सृष्टिके पूर्व यह जगत् सतमात्र था असत से सत कैसे जन्मै जो इस हृदय आकाश मे आनन्दरूप आत्मा न होता तो अपान औ प्राण वायुकी चेष्टा कौन करता इस से यह आत्माही प्राणियों को आनन्दयुक्त करै है इन सब श्रुति विशिष्ट ब्रह्मसूत्रादिकों से कहा है सोई संक्षेप से सुनो अथवा नित्य नैमित्तिक प्रायश्चित्त उपासनारूप साधन चतुष्टय से सम्पन्न होनेके बादि ब्रह्म जिज्ञासा करै इत्यादि वेदव्यासप्रणीत को ब्रह्मसूत्र कहते हैं परमेश्वरके ईक्षितृत्व हेतु से प्रकृति को जगत् का कारण नहीं कहि सकते और सब श्रुतियों मे आत्मा को आनन्दमयत्व कहा है इस से ये आनन्दमय हैं इत्यादि युक्तियों से निश्चित है अर्थ जिन सूत्रों का सोई कहा हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

## शाङ्करभाष्यम् ।

सुल्ख(?)भिमुखीभूतायार्जुनायाह भगवान् महाभूतानि महान्ति च तानि भूतानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि न स्थूलानि स्थूलानीन्द्रियगोचरशब्देनाभिधायिष्यन्तेऽहङ्कारो महाभूतकारणमहंप्रत्ययलक्षणोऽहङ्कारणं बुद्धिरध्यवसायलक्षणा तत्कारणमव्यक्तमेव च न व्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिः मम माया दुरत्ययेत्युक्तं एवशब्दः प्रकृत्यवधारणार्थं एतावत्येवाष्टधा भिन्ना प्रकृतिः चशब्दो भेदसमुच्चयार्थः इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वात् बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्चकर्मनिर्वर्त्तकत्वात् कर्मेन्द्रियाणि तानि दशैकञ्च किं तत् मन एकादशं सङ्कल्पाद्यात्मकं पञ्च चेन्द्रियगोचराः शब्दादयो विषयास्तान्येतानि सांख्याश्चतुर्विंशति तत्त्वानि आचक्षते ॥ ५ ॥

## आनन्दगिरिकृतटीका ।

क्षेत्रादि यथाक्रमस्तुत्या प्रलोभिताय किन्तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति स्तुत्येति महत्त्वे हेतुमाह सर्वेति भूतशब्देन स्थूलानामपि विशेषाभावाद्ग्रहे का हानिरित्याशङ्क्याह स्थूलामिति अहङ्कारोऽहंप्रत्ययलक्षण इति सम्बन्धः भूतानां प्रातीतिकत्वेनाभिमानमात्रात्मत्वं मत्वाहंकारं विशिनष्टि महाभूतेति महतः परमित्यादौ प्रसिद्धं महच्छब्दार्थमहङ्कारहेतुमाह अहङ्कारेति ईश्वरशक्तिरित्युक्ते चैतन्यमपि शङ्कते तदर्थमाह ममेति अवधारणफलमर्थमेव स्फुटयति एतावत्येवेति पञ्चतन्मात्राण्यहङ्कारो महदव्याकृतमित्यष्टधा भिन्नत्वं मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयश्चकारार्थः दशेन्द्रियाण्येव विभज्य व्युत्पादयति श्रोत्रेत्यादिना तदेव प्रश्नद्वारा स्फुटयति किन्तदिति शब्दादिविषयशब्देन स्थूलानि भूतानि गृह्यन्ते उक्तेषु तन्मात्रान्तरीयसम्मतिमाह तानीति ॥ ५ ॥

## स्वामिकृतटीका ।

तत् क्षेत्रस्वरूपमाह महाभूतानीति द्वाभ्यां महाभूतानि भूम्यादीनि पञ्च अहङ्कारस्तत्कारणभूतः बुद्धिर्ज्ञानात्मकं महत्तत्त्वमव्यक्तं मूलप्रकृतिः इन्द्रियाणि दश बाह्यानि ज्ञानकर्मेन्द्रियाणि एकञ्च मनः इन्द्रियगोचराश्च पञ्चतन्मात्ररूपा एव शब्दादय आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च तदेवं चतुर्विंशतितत्त्वान्युक्तानि ॥५॥

# इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
# एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥ ६॥

## शाङ्करभाष्यम्।

अथेदानीं आत्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव नतु क्षेत्रज्ञस्येत्याह भगवान् इच्छा द्वेष इति इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान् पूर्वं पुनस्तज्जातीयमुपलभ्यमानस्तमादातुमिच्छति सुखहेतुत्वेरिति सेयमिच्छन्तः करणधर्मो ज्ञेयत्वात् क्षेत्रं तथा द्वेषीय जातीयमर्थं दुःखहेतुत्वेनानुभूतवान् पूर्वं पुनस्तज्जातीयमुपलभ्यमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात् क्षेत्रमेव तथा सुखमनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात् क्षेत्रमेव दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रं संघातो देहेन्द्रियाणां संहतिस्तस्यामभिव्यक्तान्तःकरणवृत्तिः तप्त इव लौहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् धृतिर्ययाऽवसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात् क्षेत्रं सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणं यत उक्तं तदुपसंहरति एतत् क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तं यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रं इत्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तं॥ ६॥

## भाषा अनुवाद।

और क्षेत्रस्वरूप दो श्लोक से कहते हैं कि महाभूत कहे चिति जल अग्नि वायु आकाश और इनका कारणरूप अहङ्कार और विज्ञानात्मिका बुद्धि अर्थात् महत्तत्त्व और अव्यक्त कहे मूलप्रकृति और पांच ज्ञान इन्द्री तथा एक सङ्कल्पविकल्पात्मक मन और पांच इन्द्रिय गोचर कहे शब्द आदि तन्मात्रा विशेषरूप से इन्द्रिय ग्राह्यविषय अर्थात् शब्द स्पर्शरूप रस गन्ध जो पांच द्रव्य गुण हैं येई क्षेत्रस्वरूप चौविस तत्त्व कहे हैं॥ ५॥

आनन्दगिरिकृतटीका ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकस्तु विकार इति पठन्ति अव्यक्ताहङ्कारादीनान्तु गुणत्वाभिमानादिधर्मकत्वं प्रसिद्धमिति शब्दादीनामेव ग्रहणं कर्मेन्द्रियाणां विषयानुक्तेर्न्यूनत्वप्रसङ्गात् क्षेत्रनिरूपणस्य च प्रकृतत्वात् स्वरूपनिर्देशेनैव तत् क्षेत्रं यच्च यादृक् चेति व्याख्यातमिदानीमिच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीत्येतन्निरूपयन्मतान्तरनिवृत्तिपरत्वेन श्लोकमवतारयति अथेति सर्वलोकप्रसिद्धिविरोधादेवं वैशेषिकमतमिति मत्वोक्तं भगवानिति उपलब्धजातीयस्योपलभ्यमानस्यादानेच्छायां हेतुमाह सुखेति इति शब्दो हेत्वान्तरविच्छित्त्यर्थः इच्छां सुखतद्धेतुविषयत्वेन व्याख्यायात्मधर्मत्वं तस्या व्युदस्यति सेयमिति तथापि कथं क्षेत्रान्तर्भूतत्वं तत्राह ज्ञेयत्वादिति इच्छावद्द्वेषोऽपि धर्मो बुद्धेरित्याह तथेति कोऽसौ द्वेषो यस्य बुद्धिधर्मत्वं तत्राह यज्जातीयमिति तस्यापीच्छावत् क्षेत्रान्तर्भावमाह सोऽयमिति इच्छाद्वेषवद्बुद्धिधर्मः सुखमपीत्याह तथेति तस्यापि स्वरूपोक्त्या क्षेत्रान्तःपातित्वमाह अनुकूलमिति दुःखस्यापि स्वरूपोक्त्या क्षेत्रमध्यवर्त्तित्वमाह दुःखमिति देहेन्द्रियात्मवादो व्युदसितुं क्षेत्रान्तर्भूतमेव सङ्घातं विभजते देहेति विज्ञानवादं प्रत्याह तस्मिन्निति तप्ते लोहपिण्डे वह्नेरभिव्यक्तिवदुक्तसंहतौ बुद्धिवृत्तिरभिव्यज्यते तत्र चाग्निरभिव्यक्तो लोहपिण्डमेवाग्निबुद्ध्या ग्राहयति तथात्मचैतन्यं बुद्धिवृत्तावभिव्यक्तं तामेवात्मतया बोधयत्यतस्तदाभासानुविद्धा सैव चेतनेत्युच्यते सा च स्वयमचेतनं प्रतिज्ञेयत्वात् तद्रूपत्वात् क्षेत्रमेवेत्यर्थः धृतिस्वरूपोक्त्या क्षेत्रत्वं तस्या दर्शयति धृतिरित्यादिना ननु अन्येऽपि सङ्कल्पादयो ये मनोधर्माः सन्ति ते किमित्यत्र क्षेत्रत्वेन नोच्यन्ते तत्राह सर्वेति तस्योपलक्षणार्थत्वे हेतुमाह यत इति इच्छादिनिर्देशावसरे सङ्कल्पादीनामपि दर्शितत्वं सिद्धवत्कृत्य प्रकरणविभागार्थं यतो भगवदुक्तं क्षेत्रमुपसंहरत्यतो युक्तमिच्छादिग्रहणस्य सर्वानुक्तबुद्धिधर्मोपलक्षणार्थत्वमित्यर्थः विरक्तस्य ज्ञानाधिकाराय वैराग्यार्थं क्षेत्रं व्याख्यातमित्यनुवदति यस्येति क्षेत्रभेदजातस्य व्यष्टिदेहविभागस्य सर्वस्येत्यर्थः संहतिः समष्टिः शरीरम् ॥ ६ ॥

स्वामिकृतटीका ।

इच्छेति इच्छादयः प्रसिद्धाः सङ्घातः शरीरं चेतनात्मिका मनोवृत्तिः धृतिर्धैर्यं एते चेच्छादयो दृश्यत्वान्नात्मधर्माः अपि तु मनोधर्माः अतः क्षेत्रान्तःपातिन एवोपलक्षणार्थञ्चैतत् सङ्कल्पादीनां तथाच श्रुतिः कामः सङ्कल्पोविचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति अनेन यादृगिति प्रतिज्ञाताः क्षेत्रधर्मा दर्शिताः एतत् क्षेत्रं सविकारमिन्द्रियादिविकारसहितं संक्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥६॥

**अमानित्व मदाम्भित्व महिंसा क्षान्ति रार्जवं ।**
**आचार्य्योपासनं शौचं स्थैर्य्यं मात्मविनिग्रहः ॥ ७ ॥**

शाङ्करभाष्यम् ।

क्षेत्रस्य वक्ष्यमाणविशेषणो यस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं तत् प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवानधुना तु तत्ज्ञानसाधनगुणममानित्वादिलक्षणं यस्मिन् सति तत्ज्ञेयविज्ञानयो-र्योऽधिकृतो भवति यत्परः संन्यासी ज्ञाननिष्ठ उच्यते तममानित्वादिगुणं ज्ञानसाधनत्वात् ज्ञानशब्दवाच्यं विदधाति भगवान् अमानित्वमिति अमा-नित्वं मानिनो भावो मानित्वमात्मनः श्लाघनन्तदभावोऽमानित्वमदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वमहिंसा अहिंसनं प्राणिनामपी-डनं क्षान्तिः परापराधप्राप्तावविक्रियाऽर्जवमृजुभावोऽवक्रतयाचार्य्योपासनं मोक्षसाधनोपदेष्टुराचार्य्यस्य शुश्रूषादिप्रयोगेन सेवनं शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानाम-

आनन्दगिरिकृतटीका ।

ननु उक्तं क्षेत्रं क्षेत्रज्ञो वक्तव्यस्तं हित्वा किमित्यन्यदुच्यते तत्राह क्षेत्रज्ञ इति अनादिमदित्यादिना वक्ष्यमाणविशेषणक्षेत्रज्ञं स्वयमेव भगवान् विवक्षितविशेषणसहितं ज्ञेयं यत्तदित्यात्मा वक्ष्यतीति सम्बन्धः किमिति क्षेत्रज्ञो वक्ष्यते तत्राह यस्येति ज्ञेयं यत्तदित्यतः प्राक्तनग्रन्थस्य तात्पर्य्यमाह अधुनेति अमानित्वादिलक्षणं विदधातीत्यु-

भाषा अनुवाद ।

और इच्छा द्वेष सुख दुख औ सङ्घात कहे शरीर औ चेतना कहे ज्ञानात्मक अन्तःकरण की वृत्ति जो बुद्धि औ धैर्य्य ये सब दृश्य हैं इस से ये आत्माके धर्म्म नही हैं अन्तःकरणहीं के धर्म्म हैं तो शरीर धर्म्महीं इन को कहा चाहिये सो श्रुति मे कहा है कि कामना सङ्कल्प संशय श्रद्धा अश्रद्धा धैर्य्य अधैर्य्य लज्जा बुद्धि भय ये सब अन्तःकरणके व्यापार हैं इस वचन से इसी अध्यायके तीसरे श्लोक मे जो कहा क्षेत्र का धर्म्म सो देखाया है और इन्द्रिय आदि विकार सहित क्षेत्र मैंने संक्षेपरूप तुम से कहा ॥ ६ ॥

## शाङ्करभाष्यम् ।

**घनयनं शौचं स्थैर्यं स्थिरभावो मोक्षमार्गे एव कृतव्यवसायित्वमात्म-विनिग्रह आत्मन उपकारकस्यात्मशब्दवाच्यस्य कार्यकारणसंघातस्य विनि-ग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्गे एव निरोध आत्मविनिग्रहः ॥ ७ ॥**

### आनन्दगिरिकृतटीका ।

तत्र सम्बन्धः ज्ञानसाधनसमुदायबोधनं कुतोपयुज्यते तत्राह यस्मिन्निति योग्यमधि-कृतमेव विष्टणोति यत्पर इति एतत् ज्ञानमिति वचनात् कथमिदं ज्ञानसाधनमित्याश-ङ्क्याह तदिति तद्विधानस्य वक्तृद्वारा दार्ढ्यं सूचयति भगवानिति अमानित्वादिनिष्ठ-स्यान्तर्धियो ज्ञानमिति नियमार्थमाह अमानित्वमिति मानस्तिरोहितो विक्षेपः स चात्मन्युत्कर्षारोपहेतुः सऽस्येति मानी नमान्यमानी तस्य भावो मानित्वमिति व्याकरोति अमानित्वमित्यादिना प्रतियोगिमुखेनादम्भित्वं विष्टणोति अदम्भित्वमिति वाङ्मनोदेहै-रपीड़नं प्राणिनामहिंसनं तदेवाहिंसेत्याह अहिंसेति परापराधस्य चित्तविकारकारणस्य प्राप्तावेवाविकृतचित्तत्वेनापकारसहिष्णुत्वं क्षान्तिरित्याह क्षान्तिरिति अवक्रमत्वमकौटिल्यं यथा हृदयव्यवहारः सदैकरूपप्रवृत्तिनिमित्तत्वं वेत्यर्थः उपनीयत यः शिष्यमित्यादिनोक्त-माचार्यं व्यवच्छिनत्ति मोक्षेति शुश्रूषादि इत्यादिपदं नमस्कारादिविषयं बाह्यमाभ्यन्तरञ्च द्विःप्रकारं शौचं क्रमेण विभजते शौचमित्यादिना मनसो रागादिमलानामिति सम्बन्धः तदपनयोपायमुपदिशति प्रतिपक्षेति रागादिप्रतिकूलस्य भावनाविषयेषु दोषदृष्ट्या प्रवृत्ति-साधेति यावत् स्थिरभावमेव विशदयति मोक्षेति आत्मनो नित्यसिद्धस्यानाशेयातिशयस्य कुतो विनिग्रहस्तत्राह आत्मन इति ॥ ७ ॥

### स्वामिकृतटीका ।

इदानीममानित्वमित्यादि पञ्चभिरुक्तलक्षणात् क्षेत्रादतिरिव्युक्ततया ज्ञेयं शुद्धं चेतन्यं विस्तरेण वर्णयिष्यन् तत्त्वज्ञानसाधनान्याह अमानित्वमिति अमानित्वं स्वगुणश्लाघारा-हित्यम् अदम्भित्वं दम्भराहित्यम् अहिंसा परपीड़ावर्जनं क्षान्तिः सहिष्णुत्वम् आर्जव-मवक्रता आचार्योपासनं सद्गुरुसेवनं शौचं बाह्यमाभ्यन्तरञ्च तत्र बाह्यं मृज्जलादिना अभ्यन्तरञ्च रागादिमलक्षालनं तथाच स्मृतिः शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽन्तरमिति स्थैर्यं सन्मार्गप्रवृत्तस्य तदेकनिष्ठता आत्मविनिग्रहः शरीरसंयमः एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

### भाषा अनुवाद ।

**अब उक्त क्षेत्र से पृथक् जो ज्ञेय चैतन्य तिसको विस्तारसे वर्णनकी इच्छा करि मोक्षके ज्ञान होनेके साधन पांच श्लोकसे कहते हैं कि**

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

### शाङ्करभाष्यम्।

किञ्च इन्द्रियेति इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यमनहङ्कारोऽहङ्काराभाव एव च जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनं आलोचनं जन्मनि गर्भवासयोनिद्वारानिःसरणं दोषस्तस्यानुदर्शनं आलोचनं तथा मृतौ दोषानुदर्शनं तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं आलोचनं परिभूतता चेति व्याधिषु शिरोरोगादिषु दोषानुदर्शनं तथा दुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेष्वथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनं दुःखं जन्मदुःखं जरादुःखं मृत्युदुःखं व्याधयो दुःखनिमित्तत्वाज्जन्मादयो दुःखं दुःखानि न पुनः स्वरूपेणैव दुःखमित्येवं जरादिषु दुःखदोषानुदर्शनात् देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते ततःप्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय एवं ज्ञानहेतुत्वात् ज्ञानमुच्यते जन्मादि दुःखदोषानुदर्शनं ॥ ८ ॥

### आनन्दगिरिकृतटीका।

न केवलममानित्वादीन्येव ज्ञानस्यान्तरङ्गसाधनानि किन्तु वैराग्यादीन्यपि तथाविधानि सन्तीत्याह किञ्चेति दृष्टादृष्टेष्वनेकार्थेषु रागे तत्प्रतिबन्धं ज्ञानं नोत्पद्यते इति मत्वा

### भाषा अनुवाद।

अमानित्व अदम्भित्व अहिंसा कहे अपमान कपट परपीडा राहित्य औ चान्ति कहे चमा औ आर्जव जो सीधापन औ आचार्य्योपासन जो गुरुसेवन और शौच कहे बाहर अन्तर शुद्धि औ भावशुद्धि से अन्तःशुद्धि जानो और स्थैर्य कहे सत्मार्गमे प्रवृत्ति औ उसी एकमे तत्परता तथा आत्मविनिग्रह कहे शरीरका संयम करना ॥ ७ ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

शाङ्करभाष्यम् ।

किञ्च असक्तिरिति असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिरनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षणो यथा अन्यस्मिन् सुखिनि दुःखिनि चाहमेव सुखी दुःखी च जीवति मृते चाहमेव जीवामि मरिष्यामि चेति क्वत्याह पुत्रदारगृहादिषु पुत्रेषु दारेषु आदिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु

आनन्दगिरिकृतटीका ।

व्याकरोति इन्द्रियेति आविर्भूतो गर्वोऽहङ्कारस्तदभावोऽपि ज्ञानहेतुरित्याह अनहङ्कार इति इन्द्रियार्थेषु वैराग्यमुक्तमुपपादयति जन्मेति प्रत्येकं दोषानुदर्शनमित्युक्तं तत्र जन्मनि दोषानुदर्शनं विशदयति जन्मनीति यथा जन्मनि दोषानुसन्धानन्तथा मृत्यौ दोषस्य सर्वमर्मनिकृन्तनादेरालोचनं कार्य्यमित्याह तथेति जन्मनि मृत्यौ च दोषानुसन्धानवज्जरादिष्वपि दोषानुसन्धानं कर्त्तव्यमित्याह तथेति व्याधिषु दोषस्यासह्यतारूपस्यानुसन्धानं दुःखेषु त्रिविधेष्वपि दोषानुसन्धानं प्रसिद्धं व्याख्यानान्तरमाह अथवेति यथा जन्मादिषु दुःखान्तेषु दोषदर्शनमुक्तं तथा तेष्वेव दुःखरूपदोषस्य दर्शनं स्फुटयति दुःखमित्यादिना कथं जन्मादीनां वाह्येन्द्रियग्राह्याणां दुःखत्वं तत्राह दुखेति जन्मादिषु दोषानुदर्शनकृतं फलमाह एवमिति वैराग्ये सत्यात्मदृष्ट्यर्थं करणानां तदाभिमुख्येन प्रवृत्तिरिति वैराग्यफलमाह तत इति जन्मादिदुःखदोषानुदर्शनं ज्ञानहेतुषु किमित्युपसंख्यातमित्याशङ्क्य वैराग्यादुद्वारा धीहेतुत्वादित्याह एवमिति ॥ ८ ॥

स्वामिकृतटीका ।

किञ्च इन्द्रियार्थेष्विति जन्मादिषु दुःखदोषयोरनुदर्शनं पुनः पुनरालोचनं दुःखरूपस्य दोषस्यानुदर्शनमिति वा स्पष्टमन्यत् ॥ ८ ॥

भाषा अनुवाद ।

और इन्द्रियार्थ जो रूप आदि पांच विषय तिनमे वैराग्य कहे अप्रीति औ अनहङ्कारता अहङ्कार रहित तथा जन्म मृत्यु जरा व्याधि दुःखदोष इनको वार वार देखना चाहिये जिस मे विषयभोगसे निवृत्ति होय ॥८॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

शाङ्करभाष्यम् ।

तच्चोभयं ज्ञानार्थत्वात् ज्ञानमुच्यते नित्यञ्च समचित्तत्वं तुल्यचित्तता क इष्टानिष्टोपपत्तिषु इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु तच्चैतन्नित्यं समचित्तत्वं ज्ञानं ॥ ९ ॥

किञ्च मयि चेति मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात् परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी सा

आनन्दगिरिकृतटीका ।

ज्ञानस्यान्तरङ्गमेव हेत्वन्तरमाह किञ्चेति नन्वशक्तिरेवाभिष्वङ्गाभावस्तथाच पुनरुक्तिरित्याशंक्याभिष्वङ्गोक्तिद्वारा निरस्यति अभिष्वङ्गो नामेति अन्यस्मिन्नेव पुत्रादावनन्यत्वधिया तद्गते सुखादावात्मनि तद्भावनाख्यं शक्तिविशेषमेवोदाहरति उक्तविशेषणयोराकांक्षाद्वारा विषयमाह कलत्रादिना उक्तविशेषणयोर्ज्ञानशब्दत्वोपपत्तमाह तच्चेति सदा हर्षविषादशून्यमनस्त्वमपि ज्ञानहेतुरित्याह नित्यञ्चेति तदेव विभजते इष्टेति तस्य ज्ञानहेतुत्वन्निगमयति तच्चैतदिति ॥ ९ ॥

स्वामिकृतटीका ।

किञ्च असक्तिरिति पुत्रदारादिषु असक्तिः प्रीतित्यागः अनभिष्वङ्गः पुत्रादीनां सुखे-दुःखे वा अहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः इष्टानिष्टयोरुपपत्तिषु नित्यं सर्वदा समचित्तत्वम् ॥ ९ ॥

भाषा अनुवाद ।

और पुत्र दारा धन आदिमें आसक्ति कहे प्रीतिका त्याग और पुत्रादिके सुखदुःख देखि जो मैं सुखी अथवा दुःखी हूं ऐसा मानिलेना सो अभिष्वङ्ग है तिस का त्याग और इष्ट अनिष्ट दोनोंकी प्राप्तिमें सर्वदा समचित्त कहे चित्तकी एकरूपता अर्थात् सावधान चित्त रहे ॥ ९ ॥

## शाङ्करभाष्यम्।

च ज्ञान विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वा शुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वं विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादि स्वभावना विविक्ते उपजायतेऽतो विविक्तदेशसेवित्वं ज्ञानमुच्यते अरतिररमणं च जनसंसदि तज्जनानां प्राकृतानां संस्कारशून्यानामविनीतानां कलहोन्मुखितचित्तानां संसत्समवायो जनसंस्कारवतां विनीतानां संसत्तस्याज्ञानोपकारकत्वात् अतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वात् ज्ञानं ॥ १० ॥

## आनन्दगिरिकृतटीका।

साधनान्तरमाह किञ्चेति अनन्ययोगमेव संक्षिप्तं व्यनक्ति नेत्यादिना उक्तधीद्वारा ज्ञाताया भक्तेर्भगवति स्थैर्यं दर्शयति नेति तत्रापि ज्ञानशब्दस्तद्धेतुत्वादित्याह सा चेति देशस्य विविक्तत्वं द्विविधमुदाहरति विवक्त इति तदेव स्पष्टयति अरण्येति उक्तदेशसेवित्वं कथं ज्ञाने हेतुस्तत्राह विविक्तेष्विति आत्मादीत्यादिशब्देन परमात्मा वाक्यार्थश्चोच्यते नश्वरनिर्विषयत्वेनाविषयत्वेनाविशेषतो जनसंसन्मात्रं किमिति न गृह्यते तत्राह तस्य इति सतां सङ्गस्तु भेषजमित्युपलम्भादित्यर्थः ॥ १० ॥

## स्वामिकृतटीका।

किञ्च मयीति मयि परमेश्वरेऽनन्ययोगेन सर्वात्मदृष्ट्या अव्यभिचारिणी एकान्ता भक्तिः विविक्तः शुद्धश्चित्तप्रसादकरस्तं देशं सेवितुं शीलं यस्य तस्य भावस्तत्त्वं प्राकृतानां जनानां संसदि सभायामरतीरत्यभावः ॥ १० ॥

## भाषा अनुवाद।

और परमेश्वर स्वरूप मेरे मे अनन्ययोग अर्थात् सर्वत्र कहे सब मे आत्माकी दृष्टिसे अव्यभिचारिणी एकान्तभक्ति और विविक्त कहे शुद्ध अथवा चित्तप्रसन्नकारी जो निर्जन देश वहांकी वास औ संसारी व्यवहारी दुष्टमनुष्योंकी सभामे अरुचि अर्थात् प्रीतिरहित होना ॥ १० ॥

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥**

शाङ्करभाष्यम् ।

किञ्च अध्यात्मेति अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन् नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावानां परिपाकनिमित्ततत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्तस्यालोचनं तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति एतदमानित्वादि तत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् अज्ञानपदे तस्मात् यथोक्तादन्यथा विपर्य्ययेण मानित्वं दम्भित्वं हिंसा क्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥ ११ ॥

आनन्दगिरिकृतटीका ।

साधनान्तरमाह किञ्चेति आत्मादीत्यादिशब्दोऽनात्मार्थस्तद्विषयं ज्ञानं विवेकस्तन्नित्यत्वं तत्रैव निष्ठावत्त्वं विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति तेषां भावनापरिपाको नाम यत्नेन साधितानां प्रकर्षपर्य्यन्तत्वं तन्निमित्तं तत्त्वज्ञानमैक्यसाक्षात्कारस्तत्फलालोचनं किमर्थमित्याशंक्याह तत्त्वेति प्रवृत्तिः स्यादित्यतस्तत्त्वज्ञानार्थदर्शनमर्थवदिति शेषः ज्ञानस्यान्तरङ्गहेतुसङ्घमुपसंहरति एतदिति किमिति तस्य विज्ञेयत्वमित्याशङ्क्याह परिहरणायेति तत्र हेतुः संसारेति तस्य प्रवृत्तिरुत्पत्तिस्तद्धेतुत्वान्मानित्वादि त्याज्यं ज्ञाते च त्याज्यत्वं तेन तस्य ज्ञेयतेत्यर्थः इतिशब्दः साधनाधिकारसमाप्त्यर्थः ॥ ११ ॥

स्वामिकृतटीका ।

किञ्च अध्यात्मेति आत्मानमधिकृत्य वर्त्तमानं ज्ञानं तन्नित्यत्वं नित्यभावः तत्त्वम्पदार्थशुद्धिनिष्ठत्वमित्यर्थः तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षस्तस्य दर्शनं मोक्षस्य सर्वोत्कृष्टत्वालोचनमित्यर्थः एतदमानित्वमदम्भित्वमित्यादि विंशतिसंख्याकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं वशिष्ठादिभिर्ज्ञानसाधनत्वात् अतोऽन्यथा अस्माद्विपरीतं मानित्वादि यत्तदज्ञानमिति ज्ञानविरोधित्वादतः सर्वथा त्याज्यमित्यर्थः ॥ ११ ॥

भाषा अनुवाद ।

और आत्माको अधिकार करि के वर्त्तमान जो ज्ञान तिसमे नित्यभाव अर्थात् तत्त्वमसि महावाक्यके तत्पद औ त्वंपदके अर्थपर विश्वास औ

ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

शाङ्करभाष्यम् ।

यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकांक्षायामाह ज्ञेयं यत्तदित्यादि ननु यमा नियमाश्चामानित्वादयो न ज्ञेयाः तेन ह्यमानित्वादिकस्य चिद्वस्तुनः परिच्छेदकं दृष्टं सर्वत्रैव यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते नह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते यथा घटविषयेण ज्ञानेनाग्निर्नैष दोषः ज्ञाननिमित्तत्वात् ज्ञानमुच्यत इति ह्यवोचाम ज्ञानसहकारिकारणत्वाच्च ज्ञेयमिति ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि किं फलं

आनन्दगिरिकृतटीका ।

उत्तरग्रन्थमवतारयति यथोक्तेनेति अमानित्वादीनां ज्ञानत्वमाक्षिपति नन्विति वस्तुपरिच्छेदकत्वात् ज्ञानत्वमाशङ्क्याह नहीति परिच्छेदकत्वात् ज्ञानत्वं ज्ञानत्वात् परिच्छेदकत्वमित्यन्योन्याश्रयमित्यभिप्रेत्याह सर्वत्रेति स्वार्थस्यैव ज्ञानं परिच्छेदकमित्येतद्व्यतिरेकद्वारा विशदयति नहीति व्यतिरेकदृष्टान्तमाह यथेति अमानित्वादीनां ज्ञानत्वमाक्षिप्तं प्रतिक्षिपति नैष दोष इति तत्र हेतुत्वेनोक्तं स्मारयति ज्ञानेति तेन ज्ञानशब्दो हेत्वन्तरमाह ज्ञानेति अमानित्वादीनां ज्ञानत्वमुक्त्वा ज्ञातव्यमवतारयति ज्ञेयमिति प्रश्नद्वारा ज्ञेयप्रवचनस्य फलमुक्त्वा प्ररोचनं कृत्वा तेन श्रोतुराभिमुख्यमापादयितुं प्ररोचनफलोक्तिपरमनन्तरवाक्यमित्याह किमित्यादिना तदेव विशिनष्टि अनादिमदिति आदिमत्वराहित्यमव्याकृतस्यापि ततो विशेषं दर्शयति किन्तदिति भोक्तुरपि भोग्यात् परत्वमित्यतो

भाषा अनुवाद ।

तत्त्वज्ञानका फल जो मुक्ति तिसीको श्रेष्ठ रूपसे आलोचन करना अर्थात् जानना इससे अमानित्व अदंभित्व आदि जो बीस कहेगये सोई ज्ञानके साधन स्वरूप हैं यह वशिष्ठादिमुनिजनों ने कहा है और इन बीसोंके बिपरीत कहे उलटे जो मान दम्भ हिंसा आदि बीस हैं तेई ज्ञानके विरोधी हैं और इन को अज्ञानके स्वरूप जानो इससे वे सदा वर्जनीय हैं ॥ ११ ॥

शाङ्करभाष्यम् ।

तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह यत् ज्ञेयं ज्ञात्वा अमृतत्वममृतिं न पुनर्म्रियत इत्यर्थः अनादिमत् आदिरस्यास्तीत्यादिमत् न आदिमदनादिमत् किं तत् परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतमत्र केचित् अनादिमत् परमिति पदं छिन्दन्ति बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति अर्थविशेषञ्च दर्शयन्त्यहं वासुदेवाख्यापरा शक्तिर्यस्य तन्मत्परमिति सत्यमेवमपुनरुक्तं स्यादर्थश्चेत् सम्भवति नत्वर्थः सम्भवति ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्नासदुच्यत इति विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धिः तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोग श्लोकपूरणार्थः अमृतत्वफलं ज्ञेयं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह न सत्तत् ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते ननु महता परिकरबन्धेन कण्ठरवेणोद्घोष्य ज्ञेयं प्रवक्ष्यामीत्यननुरूपमुक्तं न सत्तन्नासदुच्यते इति न श्रं॰

आनन्दगिरिकृतटीका ।

विशिनष्टि ब्रह्मेति अनादीत्येकं पदं मत्परमिति पदच्छेदान्न पुनरुक्तिरिति मतान्तरमध्यापयति अत्रेति एकपदत्वसम्भवे किमिति पदद्वयमित्याशङ्क्याह बहुव्रीहिणेति आदिरस्य नास्तीति यो बहुव्रीहिणोऽर्थस्तस्मिन्नादिमत्त्वनिषेधेनास्ति मतुपोऽर्थवत्त्वमिति मतुपानर्थक्यमनिष्टं स्यादिति मत्वा पदं छिन्दन्तीति पूर्वेण सम्बन्धः आदिरस्य नास्तीत्यनादीत्युच्यमाने कोऽर्थः स्यादित्याशङ्क्याह अर्थेति उक्तव्याख्यानस्यायुक्तत्वान्नायं पुनरुक्तिसमाधिरित्याह सत्यमिति अर्थासम्भवं समर्थयते ब्रह्मण इति तथापि विशिष्टशक्तिमत्त्वं किं न स्यादित्याशङ्क्याह विशिष्टेति तथापि मतुपो बहुव्रीहिणा तुल्यार्थस्य कथमानर्थक्यं तत्राह तस्मादिति अनादिमत् परं ब्रह्मेत्यत्र पक्षान्तरं प्रतिक्षिप्य स्वपक्षः समर्थितः संप्रति ब्रह्मणो ब्रह्मत्वादेव कार्यं कारणात्मकत्वप्राप्तावुक्तानुवादद्वारा न सदित्याद्यवतारयति अमृतत्वेति सत्कार्यमभिव्यक्तनामरूपत्वादसत्कारणं तद्विपर्ययादिति भावः ज्ञेयप्रवचनमनिर्वाच्यविषयत्वात् प्रक्रमप्रतिकूलमित्याक्षिपति नन्विति निर्विशेषस्य वस्तुनो ज्ञेयत्वात्तद्विषयं प्रवचनं प्रक्रमानुकूलमित्युत्तरमाह नेत्यादिना अनिर्वाच्यत्वेन सत्तन्नासदित्युच्यमाने कथमिदमनुरूपमिति पृच्छति कथमिति ब्रह्मात्मप्रकाशस्य सिद्धत्वात्तदर्थं विधिमुखेनोपदेशायोगादध्यस्तात्तद्धर्मं निवृत्तये निषेधद्वारोपदेशस्य वेदान्तेषु प्रसिद्धेरारोपितविशेषनिषेधरूपमिदं प्रवचनमुचितमिति परिहरति सर्वास्विति ज्ञेयस्य

शाङ्करभाष्यम् ।

नुरूपमेवोक्तं कथं सर्वासु उपनिषत्सु ज्ञेयं ब्रह्म नेतिनेत्यस्थूलमनणु इत्यादि
विशेषप्रतिषेधेनैव निर्दिश्यते नेदं तदिति वाचो गोचरत्वान्ननु तदस्ति
यद्वस्त्वस्तिशब्देनोच्यते अथास्तिशब्देन नोच्यते यत् नास्ति तत् ज्ञेयं विप्रति-
षिद्धञ्च ज्ञेयं तदस्तिशब्देन नोच्यत इति च न तावन्नास्ति नास्ति बुद्ध्यविष-
यत्वान्ननु सर्वा बुद्धयोऽस्ति नास्ति बुद्ध्यनुगता एव तत्रैवं सति ज्ञेयमप्यस्ति-
बुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्ति बुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नाती-
न्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययविषयत्वात् यद्धीन्द्रियगम्यं वस्तु घटादिकं
तदस्ति बुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्ति बुद्ध्यनुगतप्रत्ययविषयं वा इदन्तु
ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिव उभयबुद्ध्यनुगत प्रत्यय
विषयमित्यतो न सत्तन्नासदित्युच्यते यत्तूक्तं विरुद्धमुच्यते ज्ञेयं यन्न सत्तन्ना-
सदुच्यते इति न विरुद्धमन्यदेव तद्विदितादथो अविदितादधीतिश्रुतेः श्रुति-
रपि विरुद्धार्थेति चेत् यथा यज्ञाय शालामारभ्य को हि तद्वेद यद्यमुष्मिन्

आनन्दगिरिकृतटीका ।

ब्रह्मणो विधिमुखोपदेशायोगे हेतुमाह वाचेति ब्रह्मणोऽस्तिशब्दावाच्यत्वे नरविषाण-
वन्नास्तित्वमित्यनिष्टमाशङ्कते नन्विति एवमुत्सर्गेऽपि ब्रह्मणि किमायातमित्याशङ्क्याह
अथेति ज्ञेयस्यास्तिशब्दावाच्यत्वे व्याघातश्चेत्याह विप्रतिषिद्धञ्चेति अस्तिशब्दावाच्यत्वाद-
वस्तुब्रह्मेत्यत्राप्रयोजकत्वमाह न तावदिति नास्तिबुद्धिविषयत्वमेवावस्तुत्वे निमित्तमतस्तद-
भावाद् ब्रह्मणो नावस्तुत्वमित्येतदेव व्यक्तीकर्त्तुं चोदयति नन्विति सर्वासान्धियामस्तिधीत्वेन
नास्तिधीत्वेन वानुगतत्वेऽन्यतरधीगोचरत्वाभावे ब्रह्मणो निर्वाच्यं दुर्वारमिति फलित-
माह तत्रेति ब्रह्मणो घटादिवैलक्षण्यादुभयबुद्धविषयत्वेऽपि नानिर्वाच्यतेत्याह नेत्यादिना
घटादेरिन्द्रियग्राह्यस्योभयबुद्धिविषयत्वेऽपि ब्रह्मणस्तदग्राह्यस्य नोभयधीविषयत्वं तथापि
नानिर्वाच्यत्वं सच्चिदेकतानस्य शब्दप्रमाणादविषयत्वेन दृष्टत्वादित्युक्तमेव प्रपञ्चयति यद्धीति
परोक्तं विरोधमनुवदति यत्त्विति श्रुत्यवष्टम्भेन निराचष्टे न विरुद्धमिति सापि विरुद्धार्थ-
स्यानुमानं बोधकत्वात्साविरोधापेक्षत्वादिति शङ्कते श्रुतिरिति तस्याविरुद्धार्थत्वेनाप्रामाण्ये
दृष्टान्तमाह यथेति प्राचीनवंशं करोतीति पारलौकिकफलयज्ञानुष्ठानार्थं शालानिर्माणं
प्रस्तुत्य को हि तद्वेदेत्यादावपरलोकसत्त्वे सन्दिहाना यथा विरुद्धार्था श्रुतिरप्रमाणमेवं

## शाङ्करभाष्यम् ।

लोकेऽस्ति वा न वेतीत्येवमिति चेत् न विदितादविदिताऽध्यासनत्वश्रुतेरव-श्यविज्ञेयार्थप्रतिपादनपरत्वात् यद्यमुष्मिन्नित्यादितु विधिशेषोऽर्थवाद उपप-त्तेश्च सदादिशब्दैः ब्रह्म नोच्यत इति सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसम्बन्धद्वारेण सङ्केतग्रहणं सव्यपेक्षोऽर्थं प्रत्याययति नान्यथा दृष्टत्वात् तत् यथा गौरश्व इति वा जातितः पचतीति वा क्रियातः शुक्लः कृष्ण इति वा गुणतो धनी गोमानिति च सम्बन्धतो नतु ब्रह्म जातिभेदतो न सदादिशब्दवाच्यं नापि गुणवत् येन गुणशब्देनो-च्यते निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निःक्रियत्वान्निष्कलं निष्क्रियं शान्तमिति श्रुतेः नच सम्बन्धैकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च न केनचि-च्छब्देनोच्यत इति युक्तं यतो वाचो निवर्त्तन्त इत्यादि श्रुतिभिश्च ॥ १२ ॥

### आनन्दगिरिकृतटीका ॥

विदिताविदिताभ्यत्वश्रुतिरपीत्यर्थः नेयं श्रुतिविरुद्धार्थत्वेनामानतया ज्ञातव्या ब्रह्मण्यद्वितीये प्रत्युक्तप्रतिपादनेन मानत्वादित्युत्तरमाह न विदितेति यत्तु विरुद्धार्थत्वे कोहीत्युदाहृतं तदसदर्थवादस्य विधिशेषस्य स्वार्थे तात्पर्य्यादित्याह यदीति यत्र जात्यादिमत्त्वं तत्र वाच्यत्वं यथा गवादौ न ब्रह्मणि जात्यादिमत्त्वमतस्तस्यावाच्यत्वान्निषेधेनैव बोध्यत्वमित्याह उपपत्तेश्चेति नोच्यत इति निषेधेनैव तस्योपदेश इति शेषः जात्यादिमतोऽर्थस्यैव वाच्यत्वं तत्रैव सङ्गतिग्रहादिति प्रपञ्चयति सर्वो हीति अश्रुतस्य जात्यादिद्वारेणाज्ञात-सङ्गतेर्वा शब्दस्य न बोधकत्वमदृष्टेरित्याह नान्यथेति जात्यादेः शब्दप्रवृत्तिविषयत्वमुदाहरति तत् यथेत्यादिना ब्रह्मणस्त्वगोत्रमवर्णमित्यादिश्रुतेः जात्यादिमत्त्वभावाच्च शब्दवाच्यतेत्याह नन्विति केवले निर्गुणश्चेति श्रुतेर्गुणद्वारा ब्रह्मणो न वाच्यतेत्याह नत्विति केवलो निर्गुणमिति निःक्रियत्वे मानमाह निष्कलमिति ब्रह्मणो द्वितीयत्वस्याशेषोपनिषत्-प्रसिद्धत्वाद्विशिष्टस्य सम्बन्धस्य तन्निष्ठस्याभावेन तद्द्वारापि तस्य वाच्यतेत्याह नचेति ब्रह्मणः-भिधानस्या शब्दाप्रवृत्तौ हेत्वन्तराण्याह अद्वयत्वादिति ब्रह्मणो वाच्यत्वे श्रुतिमपि संवाद-यति यत इति ॥ १२ ॥

### स्वामिकृतटीका ।

एभिः साधनैर्यज्ज्ञेयं तदाह ज्ञेयमिति षड्भिः यज्ज्ञेयं तत् प्रवक्ष्यामि श्रोतुरादरसिद्धये ज्ञानफलं दर्शयति यद्वक्ष्यमाणं ज्ञात्वा अमृतं मोक्षं प्राप्नोति किं तत्

सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

शाङ्करभाष्यम् ।

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह सर्वत इति सर्वतः पाणिपादन्तत् सर्वत्र पाणयः पादाश्चास्येति सर्वतः पाणिपादन्तत् ज्ञेयं सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते तत् क्षेत्रज्ञश्च क्षेत्रोपाधित

स्वामिकृतटीका ।

अनादिमत् आदिमच्च भवतीत्यनादिमत् परं निरतिशयं ब्रह्म अनादीत्येतावतैव बहुव्रीहिणा अनादिमत्त्वे सिद्धेऽपि पुनर्मतुप्प्रत्ययश्छान्दसः यद्वा अनादीति मत्परञ्चेति पदद्वयं मम विष्णोः परं निर्विशेषरूपं ब्रह्मेत्यर्थः तदेवाह न सदित्यादिविधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते निषेधविषयस्त्वसच्छब्देनोच्यते इदन्तु तदुभयविलक्षणमविषयत्वादित्यर्थः ॥ १२ ॥

भाषा अनुवाद ।

और इस सब साधनसे जिसको जानना होता है तिसको छ श्लोकसे कहते हैं कि जो जानवे जोगहै सोई मैं कहूंगा यह कहूंगा परन्तु अभी श्रोता को आदर सिद्धहोनेके लिये वही ज्ञानका फल दिखावते हैं कि मैं जो ज्ञानकी बात कहूंगा सो जानिके लोग मुक्ति पावते हैं और सो ज्ञेय कहे जानवे योग पदार्थ क्या है इसपर कहते हैं कि वह अनादि औ पर कहे निरतिशय अर्थात् जिस से कोई अधिक नहीं सोई ब्रह्मरूप यह ज्ञेय ब्रह्म न सत् न असत् अर्थात् सत् असत् शब्दसे नही कहा जाता तात्पर्य यह कि सत कहे जो विधिमुख कहे विधान करने से प्रमाणका विषय औ असत् कहे जो निषेधका विषय सोई सत् असत् कहावता है यह तो ब्रह्म किसीका विषय नहीं है तो अविषय हेतुसे सत असत उन दोनोसे भी भिन्नहीं है ॥ १२ ॥

## शाङ्करभाष्यम् ।

उच्यते क्षेत्रज्ञस्य पाणिपादादिभिरनेकधाभिन्नं क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयनेन ज्ञेयत्वमुक्तं न सत् तन्नासदुच्यते इति उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत् परिकल्प्योच्यते सर्वतः पाणिपादमित्यादि तथा हि सम्प्रदायविदां वचनमध्यारोपापवादाभ्यां निःप्रपञ्चं प्रपञ्च्यते इति सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते तथा व्याख्येयमन्यत् सर्वतः पाणिपादं तत् ज्ञेयं सर्वतोऽक्षिशिरोमुखं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतोऽक्षिशिरोमुखं सर्वतः श्रुतिमत् सर्वत्र श्रुतिमच्छ्रुतिः श्रवणेन्द्रियं तत् यस्य तत् श्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥ १३ ॥

### आनन्दगिरिकृतटीका ।

सर्वविशेषरहितस्यावाङ्मनसगोचरस्य अदृष्टेः दृष्टेश्च विपरीतस्य प्राप्ते ब्रह्मणः शून्यत्वे प्रत्यक्षेनेन्द्रियप्रवृत्त्यादिहेतुत्वेन कल्पितद्वैतसत्तास्फूर्तिप्रदत्वेनेश्वरत्वेन च सत्त्वं दर्शयन्नादौ देहादीनां वृत्तिमतां रथादिवदचेतनानां प्रेक्षापूर्वकप्रवृत्तिमत्त्वात् चेतनाधिष्ठितत्वमनुमिमानस्तत् प्रत्यक्चेतनं ब्रह्मेत्याह सच्छब्देति तदस्तित्वमितितच्छब्दो ज्ञेयब्रह्मार्थः तदाशङ्केति तच्छब्देनास्तित्वमुच्यते ननु सर्वदेहेषु पाणिपादमस्येति कथं पाणीनां पादानां च देहस्थत्वेनात्मधर्मत्वं तत्राह सर्वेति करणप्रवृत्तेः रथादिप्रवृत्तिवत् प्रेक्षापूर्वकप्रवृत्तिमत्त्वाच्चेति नाधिष्ठातृपूर्विकेत्यर्थः उक्तप्रवृत्त्या चेतनास्तित्वसिद्धावपि कथं क्षेत्रज्ञास्तित्वमित्याशङ्क्य चेतनस्यैव क्षेत्रोपाधिना क्षेत्रज्ञत्वाच्चेतनास्तित्वं तदस्तित्वमेवेत्याह क्षेत्रज्ञस्येति तस्य क्षेत्रोपाधित्वेऽपि कथं पाणिपादाक्षिशिरोमुखादिमत्त्वमित्याशङ्क्याह क्षेत्रज्ञेति अतश्चोपाधितस्तस्मिन् विशेषोक्तिरिति शेषः कथं तर्हि न सत्तन्नासदिति निर्विशेषत्वोक्तिरित्याशङ्क्याह क्षेत्रेति पाणिपादादिमत्त्वमौपाधिकं मिथ्या चेत् ज्ञेयप्रवचनाधिकारे कथं तदुक्तिरित्याशङ्क्याह उपाधीति मिथ्यारूपमपि ज्ञेयवस्तुज्ञानोपयोगीत्यत्र वृद्धसंमतिमानयति तथाहीति पाणिपादादीनामन्यगतानामात्मधर्मत्वे नारोप्यव्यपदेशे को हेतुरिति चेत् तत्राह सर्वत्रेति ज्ञेयस्य ब्रह्मणः शक्तिसन्निधिमात्रेण प्रवर्तनसामर्थ्यं तत्सत्त्वं निमित्तीकृत्य स्वकार्यवन्तो भवन्ति पाण्यादय इति कृत्वेति योजना सर्वतोऽक्षीत्याद्युक्तमतिदिशति तथेति तत् ज्ञेयं यथा सर्वतः पाणिपादमिति व्याख्यातं तथेत्युक्तमेव स्पष्टयति सर्वत

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

### शाङ्करभाष्यम् ।

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणानुज्ञेयस्य तद्वत्ताशंका मा भूदित्येवमर्थः श्लोकारम्भः सर्वेन्द्रियेति सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्तःकरणे च बुद्धिमनसी

### आनन्दगिरिकृतटीका ।

इति सर्वतोऽक्षीत्यादेरक्षरार्थमाह सर्वतोऽक्षीति अक्षिश्रवणवत्त्वमवशिष्टज्ञानेन्द्रियवत्त्वस्य पाणिपादमुखानन्यवशिष्टकर्मेन्द्रियवत्त्वस्य मनोबुद्ध्यादिमत्त्वस्य चोपलक्षणं एकस्य सर्वत्र मायया‌दिमत्त्वं साधयति सर्वमिति ॥ १२ ॥

### स्वामिकृतटीका ।

नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति सर्वं खल्विदं ब्रह्मैवेदं सर्वमित्यादिश्रुतिर्विरुध्येतेत्याशङ्क्य परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिप्रसिद्धया अचिन्त्यशक्त्या सर्वात्मत्वं तस्य दर्शयन्नाह सर्वत इति पञ्चभिः सर्वतः सर्वत्र पाणयः पादाश्च यस्य तत् सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतः श्रुतिमत् श्रवणेन्द्रियैर्युक्तं सत् लोके सर्वमावृत्य व्याप्य तिष्ठति सर्वप्राणिप्रवृत्तिभिः पाणयादिभिरुपाधिभिः सर्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थः ॥ १३ ॥

### भाषा अनुवाद ।

और जो ऐसा कहो कि ब्रह्म सत् असत् से भिन्न है तो यह चराचरात्मक ब्रह्माण्ड ब्रह्मही है इत्यादि श्रुतियोंसे विरुद्धहोय है यह शङ्का करिके इस ब्रह्मको नाना प्रकार शक्ति औ ज्ञानक्रिया बलक्रिया आदि स्वभावसिद्ध नानामत मे श्रुतियोंसे कहा जाय हैं इस तरह ब्रह्मकी सर्वात्मता दिखाय कर अब पांच श्लोकसे कहते हैं कि सर्वत्र हस्त पाद चक्षु मस्तक मुख हैं जिसके सो सर्वत्रही श्रवण इन्द्रिय से युक्त होय सब लोकको व्याप्त करके स्थित हैं अर्थात् यावत् प्राणीमात्र मे वर्त्तमान करचरण आदि उपाधियों से सकल व्यवहार करै है ॥ १३ ॥

शाङ्करभाष्यम्।

ज्ञेयोपाधित्वस्य तुल्यत्वात् सर्वेन्द्रियग्रहणेन ग्रह्यते अपिचान्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामपि उपाधित्वमित्यतोऽन्तःकरणवहिःकरणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसङ्कल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तत् ज्ञेयमित्यर्थः ध्यायतीव लेलायतीवेतीति श्रुतेः कस्मात् पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः अतो न करणव्यापारैर्व्यापृतं तत् ज्ञेयं यस्त्वयं मन्त्रोऽपाणिपादो जवनो ग्रहीतापश्यत्यचक्षुः सः शृणोत्यकर्णः इत्यादि सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् तज्ज्ञेयमित्येवं प्रदर्शनार्थं न तु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः पन्थो मणिमविन्दत्त्वित्यादिमन्त्रार्थवन्नस्य मन्त्रस्यार्थो यस्मात् सर्वकरणवर्जितं ज्ञेयं तस्मादसक्तं सर्वसंश्लेषवर्जितं यद्यप्येवं तथापि सदेव सर्वं सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् नहि मृगतृष्णिकादयोऽपि निरास्पदा भवन्त्यतः सर्वभृत् सर्वं विभर्त्ति इति स्यादिदञ्चान्यत् ज्ञेयस्य सत्त्वाधिगमद्वारं निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तत् ज्ञेयं तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तद् ज्ञेयमित्यर्थः ॥ १४ ॥

आनन्दगिरिकृतटीका।

आरोपादृते साक्षादेव ज्ञेयस्य पाण्यादिमत्त्वमाशङ्क्याह उपाधीति इन्द्रियविशेषणीभूतसर्वशब्दात् ज्ञेयोपाधित्वन्यायविशेषाच्चान्न बुद्ध्यादेरपि ग्रहणमित्याह अन्तःकरणे चेति श्रोत्रादीनां ज्ञेयोपाधित्वस्य मनोबुद्धिद्वारत्वादपि तयोरिह ग्रहणमित्याह अपिचेति तयोरपीहोपादाने फलितमाह इत्यत इति अक्षरार्थमुक्त्वा वाक्यार्थमाह सर्वेति उपाधिद्वारा कल्पितव्यापारवत्त्वे मानमाह ध्यायतीति कल्पितमेवास्य व्यापारवत्त्वं न वास्तवमित्यत्र भगवतोऽपि सम्मतिमाकाङ्क्षाद्वारा दर्शयति कस्मादित्यादिना सर्वकरणराहित्ये फलितमाह अत इति साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्तायां मान्त्रवर्णिकत्वात् कुतोऽस्य करणव्यापारैरव्यापारैरव्यापृतत्वमित्याशङ्क्यानुवादपूर्वकं मन्त्रस्य प्रकृतानुगुणत्वमाह यस्त्विति करणगुणानुगुण्यभजनमन्तरेण साक्षादेव जवनादिक्रियावत्त्वप्रदर्श-

आनन्दगिरिकृतटीका।

नपरत्वे मन्त्रस्य मुख्यार्थत्वं स्यादित्याशङ्क्य तदसम्भयाग्नैवमित्याह अन्य इति अर्थ-वादस्य स्तुतेऽर्थे तात्पर्याभावान्न प्रकृतप्रतिकूलेनेत्यर्थः सर्वकरणगाचित्वं तद्व्यापारराहि-त्यस्योपलक्षणमित्यङ्गीकृत्योक्तमेव हेतुं कृत्वा वस्तुतः सर्ववर्जितत्वमाह यस्मादिति वस्तुनः सर्वसङ्गाभावेऽपि सर्वाधिष्ठानत्वमाह यद्यपीति स्वसत्तामात्रेणाधिष्ठानतया सर्वं पुष्णा-तीत्येतदुपपादयति सदिति विमतं सति कल्पितं प्रत्येकं सदनुविद्धीबोध्यत्वात् प्रत्येकाम्बु-चन्द्रभेदानुविद्धधीबोध्यचन्द्रभेदवदित्यर्थः सर्वं सदास्यदमित्यप्युक्तं मृगतृष्णिकादीनां तदभावा-दित्याशङ्क्याह नहीति तेषामपि कल्पितत्वेन निरधिष्ठानत्वायोगाद्विकल्प्यमाणं तदधिष्ठानं सदेवेति सर्वस्य सति कल्पितत्वमविरुद्धमित्यर्थः सर्वाधिष्ठानत्वेन ज्ञेयस्य ब्रह्मणोऽस्तित्व-मुपसंहरति अत इति इतश्च ज्ञेयं ब्रह्मास्तीत्याह स्यादिदञ्चेति नहि तस्योपलब्धृत्वम-सत्यसत्त्वे विध्यतीत्यर्थः ॥ १४ ॥

स्वामिकृतटीका।

किञ्च सर्वेन्द्रियेति सर्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारेषु वृत्तिषु तत्तदाकारेणाभासत इति तथा सर्वेन्द्रियाणि गुणांश्च तत्तद्विषयानाभासयतीति वा सर्वैरिन्द्रियैर्विवर्जितश्च तथाच श्रुतिः अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादि असक्तः सङ्गशून्यः तथापि सर्वं बिभर्त्तीति सर्वभृत् सर्वस्याधारभूतं तदेव निर्गुणं सत्त्वादिगुणरहितं गुणभोक्तृ च गुणानां सत्त्वादीनां भोक्तृपालकं ॥ १४ ॥

## भाषा अनुवाद।

और चक्षु आदि इन्द्रियों के गुणस्वरूप अर्थात् रूपादि विषयमें तिस तिस आकार से वही प्रकाशमान है अथवा इन्द्रिय और गुण कहे इन्द्रि-योंके विशय रूपादि समस्तमें सोई प्रकाश करता है इससे सर्व इन्द्रीय-गुण का आभासरूप और सम्पूर्ण इन्द्रियोंसे रहित है सोई श्रुति कहती हैं कि सोई जो ब्रह्म सो हस्तसे रहित होकेभी ग्रहण करते औ पाद विना भी वेगवान् चलते तथा चक्षुहीन होकेभी देखता औ कर्णविहीन भी श्रोता औ इन सकल विषय को वे जानते हैं पर उनको कोई भी नहीं जानता है वही परमात्मा को सब वेद आदिपुरुष औ पूर्ण तथा सर्वव्यापी कहते हैं और वे असक्त कहे सत्ता आदि गुणसे रहित औ गुण के भोक्ता अर्थात् सत्तादि गुणसमूह के प्रतिपालक हैं यह श्रीभगवानने अर्जुनसे कहा ॥१४॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

शाङ्करभाष्यम् ।

किञ्च बहिरन्तरिति बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वा अन्तरुच्यते बहिरन्तश्चेत्युक्ते मध्ये अभावे प्राप्त इदमुच्यते अचरमेव च यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासं यद्यचरञ्चरमेव च व्यवहारविषयं सर्वं ज्ञेयं किमर्थमिदमिति सर्वैर्न ज्ञेयमित्युच्यते सत्यं सर्वाभासं तथापि व्योमवत् सूक्ष्मम् तत् सूक्ष्मत्वात् स्वेन रूपेण तत् ज्ञेयमप्यविज्ञेयमविदुषां त्वात्मैवेदं सर्वं ब्रह्मैवेदं सर्वमित्यादिप्रमाणतो हि संविज्ञातं अविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वादन्तिके च तदात्मत्वात् विदुषां ॥ १५ ॥

आनन्दगिरिकृतटीका ।

इतोऽपि ज्ञेयं ब्रह्मास्तीत्याह किञ्चेति बहिरिति व्याख्येयमादाय व्याचष्टे त्वगिति भूतेभ्यो बहिर्बाह्यं विषयात्मात्मकमित्यर्थः कथमनात्म एवात्मत्वं कल्पनयेत्याह आत्मत्वेनेति अन्तःशब्दार्थमाह तथेति भूतानाञ्चराचराणामन्तर्मध्ये प्रत्यग्भूतमित्यर्थः द्वितीयं पादमवतार्य व्याचष्टे बहिरादिना यन्मध्ये भूतात्मकं नानाविधदेहात्मना भासमानं तदपि ज्ञेयात्ममूर्तं नत्वसदित्यर्थः कथञ्चराचरात्मनो भूतजातस्य ज्ञेयत्वं तत्राह यथेति अधिष्ठाने रज्ज्वां कल्पितसर्पादेरन्तर्भाववद्देहाभासस्यापि ज्ञेयान्तर्भावाज्ञासत्त्वं मध्ये ज्ञेयस्य शङ्कितव्यमित्यर्थः सर्वात्मकञ्चेत् ज्ञेयं सर्वैरिदमिति किमिति न ज्ञायतेति शङ्कते यदीति इदमिति प्रत्यक्षयोग्यत्वाभावादित्याह उच्यत इति सर्ववस्त्वात्मनाभासतस्तद्योग्यत्वं कथमित्याशङ्क्याह सत्यमिति सूक्ष्मत्वेऽपि किं स्यादित्याशङ्क्याह अत इति सूक्ष्मत्वमतीन्द्रियत्वं तस्याविज्ञेयत्वे कुतस्तज्ज्ञानान्मुक्तिस्तत्राह अविदुषामिति विशेषणफलमाह विदुषान्त्विति विदुषां हि तेषामात्मत्वेन ज्ञातञ्चेत् कथं दूरस्थत्वमित्याशङ्क्याह अविज्ञाततयेति कथं तर्हि तस्य प्रत्यक्त्वन्तत्राह अन्तिके चेति विद्वदविद्वद्भेदापेक्षया दूरात् सुदूरे तदिहान्तिके चेति श्रुतिः तदर्थोऽत्र मन्त्रादनूदित इत्यर्थः ॥ १५ ॥

अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

शाङ्करभाष्यम् ।

किञ्च अविभक्तमिति अविभक्तञ्च प्रतिदेहं व्योमवत् तदेकं भूतेषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वात् भूतभर्तृ च भूतानि बिभर्त्तीति तत् ज्ञेयं भूतभर्तृ च स्थितिकाले प्रलयकाले ग्रसिष्णु ग्रस

स्वामिकृतटीका ।

किञ्च बहिरिति भूतानां चराचराणां स्वकार्य्याणां बहिश्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनां जलतरङ्गाणामन्तर्बहिर्जलमिव अचरं स्थावरं चरञ्च जङ्गमं भूतजातं तदेव कारणात्मकत्वात् कार्य्यस्य एवमपि सूक्ष्मत्वात् रूपादिहीनत्वात्तदविज्ञेयं इदं तदिति स्पष्टज्ञानार्हं न भवति एतदविदुषां योजनलक्षान्तरितमिव दूरस्थञ्च सविकारायाः प्रकृतेः परत्वात् विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तत् नित्यसन्निहितं तथा च मन्त्रः तदेजति तन्नैजति तद्दूरे तदन्तिके तदन्तस्य सर्व्वस्य तदसर्व्वस्यास्य बाह्यत इति एजति चलति नैजति न चलति तत् उ अन्तिके इति कैटः ॥ १५ ॥

भाषा अनुवाद ।

और जैसे सुवर्ण के कार्य्य जो कड़ा कंगन कुण्डल आदि आभूषणों में सोना उपादान कारणरूप से भीतर बाहर वर्त्तमान है और जैसे जल तरंगमें भी जल छोड़ि और नहीं हैं तथा आकाश जैसे सकल वस्तु के बाहिर अन्तर वर्त्तमानहै तैसेही ब्रह्मके कार्य्यस्वरूप चराचरादि भूत समूह मे अन्तर बाहिर भी सोई ब्रह्महीं वर्त्तमान हैं क्योंकि तावत् कार्य्य के कारणरूप सोई ब्रह्म हैं परन्तु ऐसे होकर भी रूपादिक विहीन हेतु से यह इतना ऐसा स्पष्टरूप से जानवे योग्य नहीं है और यही ब्रह्म अज्ञानियों को लक्ष योजनके समान दूर है क्योंकि विकारसहित जो प्रकृति तिससे पर है और ज्ञानियों को अपरोक्षरूपसे नित्य निकटहैं सूक्ष्मताके कारण अज्ञानियों को अविज्ञेय औ वेदशास्त्रकी मार्गसे चलनेवाले ज्ञानियोंको विज्ञेयअर्थात् जानवेयोग्य है आकाशके समान इनको भी जानो ॥ १५ ॥

ज्योतिषामपि तज्ज्योति स्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्॥१७॥

## शाङ्करभाष्यम्।

नशीलं उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पि तस्य॥१६॥

किञ्च सर्वत्र विद्यमानं सन्नोपलभ्यते चेत् ज्ञेयन्तमस्तर्हि न किं तर्हि ज्योतिषामपीति ज्योतिषामादित्यादीनामपि तत् ज्ञेयं ज्योतिरात्मचैतन्यज्योतिषेद्धानि हि आदित्यादीनि ज्योतींषि दीप्यन्ते येन सूर्य्यस्तपति

### आनन्दगिरिकृतटीका।

ज्ञेयस्यास्तित्वे हेत्वन्तरमाह किञ्चेति तद्धि प्रतिदेहं नभोवदेकं तद्भेदे मानाभावात् भिन्नत्वे च घटवदनात्मत्वापातादतो द्वितीयं सर्वत्र प्रत्यग्भूतं ज्ञेयं नास्तीत्यतिसाहसमित्याह अविभक्तञ्चेति कथं तर्हि देहभेदधीरित्याशङ्क्य कल्पनयेत्याह भूतेष्विति तत्र हेतुः देहेष्विति कार्य्याणां स्थितिहेतुत्वाच्च ज्ञेयमस्तीत्याह भूतेति निमित्तोपादानतया तेषां प्रलये प्रभवे च कारणत्वाच्च तदस्तीत्याह प्रलयेति तर्हि कार्य्यकारणत्वस्य वस्तुत्वाद्वाद्वैतमित्याशङ्क्याह यथेति॥१६॥

### स्वामिकृतटीका।

किञ्च अविभक्तमिति भूतेषु स्थावरजङ्गमात्मकेष्वविभक्तं कारणात्मनाऽभिन्नं कार्य्यात्मना विभक्तं भिन्नमिव स्थितं च समुद्रात् जातं फेनादि समुद्रादन्यन्न भवति तत्स्वरूपमेवोक्तं ज्ञेयं भूतानां भर्तृ च पोषकं स्थितिकाले प्रलयकाले च ग्रसिष्णु ग्रसनशीलं सृष्टिकाले च प्रभविष्णु नानाकार्य्यात्मना प्रभवनशीलम्॥१६॥

### भाषा अनुवाद।

और इस तेरहें अध्यायके बारहें श्लोकमें कहा है जो ज्ञेयपदसे वाच्य ब्रह्म भूताख्य सो स्थावर जङ्गम समूहमें अविभक्त अर्थात् कारणरूपसे अभिन्न और कार्य्यरूपसे समुद्रफेनके समान भिन्न वर्त्तमान है और समस्तभूतों के भर्त्ता अर्थात् स्थितिकाल में प्रतिपालक औ प्रलयमें संहारक तथा सृष्टिकाल में स्वयं आप नाना कार्य्यरूपसे प्रगट होते हैं॥१६॥

## शाङ्करभाष्यम् ।

तेजसेद्धस्तस्य भासा सर्वमिदं विभातीत्यादिश्रुतिभ्यः स्मृतेश्च इहैव यदादित्यगतं तेज इत्यादेस्तमसोऽज्ञानात् परमस्पृष्टमुच्यते ज्ञानमिति ज्ञानादेर्दुःसम्पादनबुद्ध्या प्रामावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादिज्ञेयं ज्ञेय यत्तत् प्रवक्ष्यामीत्यादिनोक्तं ज्ञानगम्यं ज्ञेयमेव ज्ञातं सत् ज्ञानफलमिति ज्ञानगम्यमुच्यते ज्ञायमानन्तु ज्ञेयं तदेतत् त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितं ॥ १७ ॥

### आनन्दगिरिकृतटीका ।

इतोऽपि ज्ञेयस्यास्तित्वमित्याह किञ्चेति हेत्वन्तरमेव स्फोरयितुं शङ्कयन्ति सर्वत्रेति न तत्तमो मन्तव्यमित्याह नेति तर्हि किन्तस्य रूपमिति पृच्छति किं तर्हीति तत्रोत्तरं ज्योतिषामिति सूर्य्यादीनां बुद्ध्यादीनाञ्च प्रकाशकत्वात् अस्ति ज्ञेयं ब्रह्मेत्याह ज्योतिषामिति तदेवोपपादयति आत्मेति तत्र श्रुतिद्वयं प्रमाणयति येनेति उक्तेऽर्थे वाक्यशेषमपि दर्शयति स्मृतेश्चेति ज्ञेयस्यात्मनः तमस्त्वेऽपि तम अस्पृष्टत्वमाशङ्कोक्तं तमस इति उत्तरार्द्धस्य तात्पर्य्यमाह ज्ञानादीति उत्तम्भनमुद्दीपनं प्रकटीकरणमिति यावत् ज्ञानममानित्वादिकरणव्युत्पत्त्येति शेषः ज्ञानगम्यं ज्ञेयमिति पुनरुक्तिं शङ्कित्वोक्तं ज्ञेयमिति उक्तत्रयस्य बुद्धिस्थतया प्राकट्यं प्रकटयति तदेतदिति ॥ १७ ॥

### स्वामिकृतटीका ।

किञ्च ज्योतिषामपीति ज्योतिषां सूर्य्यादीनामपि तत् ज्योतिः प्रकाशकं येन सूर्य्यस्तपति तेजसेद्धः न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निस्तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादि श्रुतेः अतएव तमसोऽज्ञानात् परं तेनासंस्पृष्टमुच्यते आदित्यवर्णं तमसः परस्तादित्यादिश्रुतेः ज्ञानञ्च तदेव बुद्धिवृत्तावभिव्यक्तं तदेव रूपाद्याकारेण ज्ञेयञ्च ज्ञानगम्यञ्च तदेव अमानित्वादिलक्षणेन पूर्वोक्तज्ञानसाधनेन प्राप्यमित्यर्थः ज्ञानगम्य धिष्ठितमिति सर्वस्य प्राणिमात्रस्य हृदि विशेषेणाप्रच्युतस्वरूपेण नियन्तृतया स्थितं धिष्ठितमिति पाठे अधिष्ठाय स्थितमित्यर्थः ॥ १७ ॥

### भाषा अनुवाद ।

और सोई ब्रह्म ज्योतिरूप जो सूर्य चन्द्र तारागण विद्युत् औ अग्नि इन सबका ज्योति कहे प्रकाशक है जिससे ये सब प्रकाशमान हैं और

**इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

शाङ्करभाष्यम्।

तत्रैव हि एवं विभाज्यते यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते इति क्षेत्रमिति इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानममानित्वादित-त्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयञ्च ज्ञेयं यत्तदित्यादि तमसः परमुच्यत इत्येव-मन्तमुक्तं समासतः संक्षेपत एतावान् सर्वो हि वेदार्थो गीतार्थश्चोपसं हृत्योक्तोऽस्मिन् सम्यक्दर्शने कोऽधिक्रियत इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत् पश्यति शृणोति स्पृशति वा सर्वमेव भगवान् वासुदेव इत्येवं ग्रहाविष्टबुद्धिर्मद्भक्तः सन् एतत् यथोक्तं सम्यक् दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै परमात्मभावायोपपद्यते युज्यते घटते मोक्षं गच्छति ॥ १८ ॥

आनन्दगिरिकृतटीका।

तत्त्वानुभवमनुकूलयति तत्रैवेति तमर्थमुक्तार्थं सविकारं क्षेत्रं पदवाक्यार्थविवेक-साधनज्ञानामानित्वादि तत्पदार्थश्च शुद्धं तद्भावोक्तरयंसज्ञा तेषां फलमुपसंहरति यथोक्तेति पूर्वार्द्धं विभजते इत्येवमिति वक्तव्यान्तरे सति किमिति त्रितयमेव संक्षिप्योपहृतं तत्राह

भाषा अनुवाद।

ये सब जिस ब्रह्मको नहीं प्रकाश करिसकते हैं ऐसे ब्रह्मसे यह समस्त जगत् प्रकाशित है यही श्रुति कहती हैं इसीसे तम जो अज्ञान तिससे पर है अर्थात् अज्ञानका लेश भी वहां नहीं है आदित्यवर्णस्तमसः परस्तात् इस श्रुतिने कहा है और सोई ब्रह्म बुद्धिवृत्ति मे ज्ञानरूप प्रगट है और सोई रूपादि आकार स्वरूपसे ज्ञेय कहे ज्ञाननेयोग्य है औ ज्ञानगम्य अर्थात् पूर्वोक्त अमानित्व आदि लक्षण ज्ञानके साधनोंसे प्राप्य है क्योंकि प्राणी-मात्रके हृदय मे नियन्ता अन्तर्यामी चेतनरूपसे स्थित है इसको ज्ञान-दृष्टिसे देखो ॥ १७ ॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १९ ॥

शाङ्करभाष्यम्।

तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे एतद्योनीनि भूतानीति चोक्तं क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते प्रकृतिमिति प्रकृतिपुरुषश्चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी न विद्यते आदिर्ययोस्तावनादी नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुं प्रकृतिद्वयत्वमेव हि ईश्वरस्येश्वरत्वं याभ्यां प्रकृतिभ्यां ईश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणं न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति तेन हि केवलेश्वरस्य कारणत्वं सिध्यति यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव

आनन्दगिरिकृतटीका।

एतावानिति अक्षराद्भूमाकाङ्क्षाद्वाराऽवतारयति अधिकारीति ईश्वरे समर्पितसर्वात्मभावमेवाभिनयति यत्प्रकृतीति विज्ञाय तत्त्वतोऽर्थः ॥ १८ ॥

स्वामिकृतटीका।

उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानञ्च अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तं ज्ञेयञ्च अनादिमत्परं ब्रह्मेत्यादि विहितमित्यन्तं वशिष्ठादिभिर्विस्तरेणोक्तं सर्वमपि मया संक्षेपेणोक्तं एतच्च पूर्वाध्यायोक्तलक्षणो मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति ॥ १८ ॥

भाषा अनुवाद।

अब अधिकारी औ फलसहित कहा जो क्षेत्रादि उसका तात्पर्य कहते हैं कि इस अध्याय के पंचये श्लोकसे लेकर और सत्रहें तक ज्ञेयस्वरूप जो वसिष्ठादि ऋषियोंने विस्तारसे कहा है सो सब मैंने संक्षेपसे कहा सो मेरे भक्त यह जानिकरिके ब्रह्मताकी प्राप्ति होनेके योग्य होते हैं अर्थात् मेरे भावको पावते हैं अर्जुन सो तुम जानो ॥ १८ ॥

शाङ्करभाष्यम् ।

भगवतेश्वरस्य जगतः कर्त्तृत्वं तद्वत् प्राक् प्रकृतिपुरुषयोरुत्पत्तेरीशित-व्याभावात् ईश्वरस्यानीश्वरत्वप्रसङ्गात् संसारस्य निर्निमित्तत्वे निर्मोक्ष-त्वप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च नित्यत्वे पुनरी-श्वरप्रकृत्योः सर्वमेतदुपपन्नं भवेत् कथं विकारांश्च गुणांश्चैव वक्ष्यमाणान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धि जानीहि प्रकृतिसम्भवान् प्रकृतिरीश्वरस्य विकारकारणशक्तिः गुणात्मिका माया सा सम्भवो येषां विकाराणां गुणानाञ्च तान् विकारान् गुणांश्च विद्धि जानीहि प्रकृतिसंभवान् प्रकृतिपरिणामान् ॥ १९ ॥

आनन्दगिरिकृतटीका ।

प्रकृतिमित्यादि वक्ष्यमाणमनन्तरपूर्वग्रन्थसम्बन्धोक्त्याशङ्क्य व्यवहितेन सम्बन्धार्थं व्यवहितमनुवदति तत्रेति तयोश्च प्रकृत्योरपि प्रकृत्योरुक्तभूतकारणत्वमित्याह एतदिति भूतानामिव प्रकृत्योरपि प्रकृत्यन्तरापेक्षाभावतयोनित्यतेति शङ्कते नेति तत्राकृताभ्यागमादिवारणाय बन्धस्य निदानज्ञानार्थमात्मनो विक्रियावत्त्वादिदोषनिरासार्थञ्च प्रकृतिपुरुषयोरनादित्वं वक्तव्येनोक्तां प्रकृतिं प्रकृतिविकारभावत्त्वञ्च दर्शयति अयमर्थ इति स च यो यत्स्वभाव-स्तेनुद्दिष्टं व्याचष्टे प्रकृतिमिति ईश्वरस्यापरा प्रकृतिशब्देनोक्ता परा तु प्रकृतिर्जीवाख्या-पुरुषशब्देन विवक्षितेति व्याकरोति ईश्वरस्येति तयोरनादित्वं व्युत्पादयति नेत्यादिना तत्र युक्तिमाह नित्यत्वादीश्वरस्येति ईश्वरस्योक्तप्रकृतिद्वयवत्त्वं कथमित्याशङ्क्याह प्रकृतीति तस्य जगज्जन्मादौ स्वातन्त्र्यमेव ईश्वरत्वं न प्रकृतिद्वयवत्त्वमित्याशङ्क्याह याभ्यामिति प्रकृत्योरनादित्वं कुतोऽपयुक्तमित्याशङ्क्याह ते इति मतान्तरमाह नेत्यादिना तयो-र्मूलकारणत्वाभावे कस्य तदिष्टमित्याशङ्क्याह तेन हीति प्रकृत्योरेव मूलकारणत्वे श्रुतिस्मृतिसिद्धमीश्वरस्य तथात्वं न स्यादित्याह यदीति प्रकृतिद्वयस्य कार्यत्वपक्षं प्रत्याह तदासदिति किञ्च प्रकृतिद्वयमनपेक्ष्य ईश्वरस्य संसारहेतुत्वे स्वातन्त्र्यान्मुक्तानामपि ततः संसारापत्तेरनिषेधान्मोक्षशास्त्राप्रामाण्याच्च तस्यैव संसारहेतुतेत्याह संसारस्येति निर्निमित्तत्वं प्रकृतिद्वयापेक्षामृते परस्यैव निमित्तत्वमिति यावत् किञ्च कार्यत्वे प्रकृ-त्योस्तदुदयात् पूर्वं बन्धाभावे तद्विश्लेषात्मनो मोक्षस्याभावात् कदाचिदुभयाभावे पुनस्तद्-प्रसङ्गस्य प्रकृतिद्वयस्य कार्यतेत्याह बन्धेति प्रकृत्योर्मूलकारणत्वेनानुपपत्तिरित्याह नित्यत्व इति स्वमते दोषाभावं प्रश्नपूर्वकं प्रपञ्चयति कथमित्यादिना सम्भवः सत्ताप्रापको

आनन्दगिरिकृतटीका।

क्षेत्रः प्रकृतेरनादित्वे विकाराणां गुणानाञ्च तत् कार्य्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वञ्च सिध्यतीति भावः॥ १९॥

स्वामिकृतटीका।

तदेवं तत् क्षेत्रं यच्च यादृक् चेत्येतावत् प्रपञ्चितमिदानीन्तु यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चेत्येतत् पूर्वं प्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति प्रकृतिमिति पञ्चभिः तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यादतस्तावुभावनादी विद्धि अनादेरीश्वरस्य शक्तित्वात् प्रकृतेरनादित्वं पुरुषोऽपि तदंशत्वादनादिरेव अत्र च परमेश्वरस्य तच्छक्तीनाञ्चानादित्वं श्रीमच्छङ्करभगवत्पाद्यकृद्भिरतिप्रबन्धेनोपपादितमिति. ग्रन्थबाहुल्याज्ञाख्याभिः प्रपञ्च्यते. विकारांश्च देहेन्द्रियादीन् गुणांश्च गुणपरिणामान् सुखदुःखमोहादीन् प्रकृतेः संभूतान् विद्धि॥ १९॥

## भाषा अनुवाद।

क्षेत्रस्वरूप औ जो जड अदृश्य आदि औ स्वभाव औ जैसा इच्छादिधर्मविशिष्ट सो सब पूर्व हीं विस्तारूपसे कह चुके अब पूर्व अङ्गीकृत यही क्षेत्र जैसे इन्द्रिय आदि विकारसे युक्त और जैसे प्रकृति पुरुष संयोगसे प्रगट होय है औ जिस प्रकार स्थावर जङ्गम आदि भेदसे भिन्न भिन्न स्वरूप होय है और सोई क्षेत्रज्ञ जो स्वरूप औ जैसे प्रभाव से विशिष्ट हैं सो सब प्रकृति पुरुषको संसारहेतु कहनेके द्वारा पांच श्लोकसे विस्तारपूर्वक कहते हैं कि सोई प्रकृति औ पुरुष दोनो अनादि हैं जो इन का कारण और दूसरा ढूंढोगे तो अनवस्था दोष पड़ेगा अर्थात् उसका कारण तिस का कारण कारणका कारण ऐसे ढूंढ़ते ढूंढ़ते ठिकाना न लगेगा इससे सोई प्रकृति औ पुरुषको अनादि जानो तो ईश्वरशक्ति प्रकृति भी अनादि है औ ईश्वरका अंशभूत पुरुषभी अनादि है औ देह इन्द्रिय आदि विकार तथा गुणरूप परिणाम को प्राप्त जो सुख दुख मोह आदि सो सब प्रकृतिसे होते हैं यह जानो परमेश्वर औ उनकी शक्तियोंको अनादित्व भाष्यकार श्रीशङ्कराचार्य्यने विस्तारसे कहा इससे इहां ग्रन्थ बढनेके डरसे मैने नहीं कहा देह इन्द्री सुख दुख सब प्रकृतिहीके कार्य्य हैं॥१९॥

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

## शाङ्करभाष्यम् ।

के पुनस्ते विकारा गुणाश्च प्रकृतिसम्भवाः कार्येति कार्यकारणकर्तृत्वे कार्यं शरीरं कारणानि तत्स्थानि त्रयोदश देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसम्भवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसम्भवाः सुखदुःखमोहात्मकाः कारणाश्रयत्वात् कारणग्रहणेन गृह्यन्ते तेषां कार्यकारणानां कर्तृत्वमुत्पादकत्वं यत्तत् कार्यकारणकर्तृत्वं तस्मिन् कार्यकारणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते एवं कार्यकारणकर्तृत्वेन संसारस्य कारणं प्रकृतिः कार्यकारणयोः कर्तृत्व इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारः विकारिकारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति तान्येव कार्यकारणान्युच्यन्ते अथवा षोडश विकाराः कार्यं सप्त प्रकृतिविकृतयः कारणं तान्येव कार्यकारणानि उच्यन्ते तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते आरम्भकत्वेनैव पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषः जीवः क्षेत्रज्ञः भोक्ता इति पर्यायः सुखदुःखानां भोग्यानां भोक्तृत्व उपलब्धृत्वे हेतुरुच्यते कथं पुनरनेन कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यते इति अत्रोच्यते कार्यकारणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चैतन्यस्यासति तदुपलब्धृत्वे कुतः संसारः स्यात् यदा पुनः

## आनन्दगिरिकृतटीका ।

विकाराणां गुणानां प्रकृतेश्च स्वरूपनाकाङ्क्षाद्वारा निर्णेतुमनन्तरश्लोकपूर्वार्द्धं पातयति के पुनरिति पुरुषस्यानादित्वकृतबन्धहेतुत्वमाह पुरुष इति पूर्वार्द्धं व्याचष्टे कार्यमित्यादिना ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनोबुद्धिरहङ्कारश्चेति त्रयोदश करणानि तथापि भूतानां विषयाणाञ्चाग्रहणात् कथन्तेषां प्रकृतिकार्यतेत्याशङ्क्याह देहेति तथापि गुणानामिहाग्रहणान्न प्रकृतिकार्यत्वं तत्राह गुणाश्चेति उक्तरीत्यादिना व्याख्यान्तरमाह अथवेति एकादशेन्द्रियाणि पञ्च विषया इति षोडशसंख्याकविकारोक्तं कार्य-

## शाङ्करभाष्यम् ।

**कार्यैः कारणहेतुफलात्मना परिणततया तया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादित्यतो यत् प्रकृतिपुरुषयोः कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्व मुक्तं तत् युक्तमुक्तं कः पुनरयं संसारो नाम सुखदुःखसंभोगः संसारः पुरुषस्य च सुखदुःखानां सम्भोक्तृत्वं संसारित्वमिति ॥ २० ॥**

### आनन्दगिरिकृतटीका ।

शब्दार्थः महानहङ्कारौ भूततन्मात्राणीति प्रकृतिविकृतयः सप्त कार्यं तेषां आरम्भकत्वेन कर्तृत्वेन हेतुराश्रयो मूलप्रकृतिरित्यर्थः उत्तरार्द्धस्य तात्पर्यमाह पुरुषस्येति तस्य परमात्मत्वं व्यवच्छिनत्ति जीव इति तस्य प्राणधारणनिमित्तस्य तदर्थत्वेतत्माह चेतन इति तस्यानौपाधिकत्वं वारयति भोक्तेति तयोः संसारकारणत्वमुपपादयितुं शङ्कयति कथमिति अन्वयव्यतिरेकाभ्यां तयोस्तथात्वमित्याह अत्रेति तत्र व्यतिरेकं दर्शयति कार्येति नहि नित्यमुक्तस्यात्मनः स्वतः संसारोऽस्तीत्यर्थः इदानीमन्वयमाह यदेति अन्वयादिफलमुपसंहरति अत इति आत्मनो विक्रियस्य संसरणं नोचितमित्याक्षिपति कः पुनरिति सुखदुःखाद्यनुसाक्षात्कारो भोगः स चाक्रियस्येव द्रष्टुः संसारः तथाविधं भोक्तृत्वमस्य संसारित्वमित्युत्तरमाह सुखेति श्लोकव्याख्या समाप्ताविति शब्दः ॥ २० ॥

### स्वामिकृतटीका ।

विकाराणां प्रकृतिसम्भवत्वं दर्शयन् पुरुषस्य संसारहेतुत्वं दर्शयति कार्येति कार्यं शरीरं कारणानि सुखदुःखसाधनानीन्द्रियाणि तेषां कर्तृत्वतदाकारपरिणामे प्रकृतिर्हेतुरुच्यते कपिलादिभिः पुरुषो जीवस्तु तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते अयं भावः यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न सम्भवति तथापि कर्तृत्वं नाम क्रियानिर्वर्त्तकत्वं तच्चाचेतनस्यापि चेतनादृष्टवशात् चैतन्याधिष्ठितत्वात् सम्भवति यथा वह्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं वत्सादृष्टवशात् स्तन्यपयसः क्षरणमित्यादि अतः पुरुषसन्निधानात् प्रकृतेः कर्तृत्वमुच्यते भोक्तृत्वञ्च सुखदुःखसंवेदनं तच्च चेतनधर्म एवेति प्रकृतिसन्निधानात् पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २० ॥

## भाषा अनुवाद ।

**भगवान् श्रीकृष्णजी सकल विकार प्रकृतिसे उत्पन्न हैं यह देखाय अब पुरुष को संसार होनेका हेतु इस श्लोकसे देखावते है कि कार्य्य जो शरीर**

# पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।
# कारणं गुणसङ्गोऽस्य सदसद्योनि जन्मसु ॥ २१ ॥

शाङ्करभाष्यम् ।

यत् पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत् किन्नि मित्तमित्युच्यते पुरुष इति पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येवं हि यस्मात् तद्भुंक्त उपलभत इत्यर्थः प्रकृतिजान् प्रकृतितो जातान् सुखदुःख- मोहाकाराभिव्यक्तान् गुणान् सुखी दुःखी मूढः पण्डितोऽहमित्येवं सत्या-

आनन्दगिरिकृतटीका ।

श्लोकान्तरं प्रश्नोत्तरत्वेनावतारयति यदिति निमित्तं वस्तुसाद्दो संसारित्वमस्य विद्ये- क्याध्यासादित्याह पुरुष इति यस्मात् प्रकृतिमात्मत्वेन गतस्तस्माद्भुङ्क्त इति योजना गुण- विषयं भोगमभिनयति सुखीति अविद्याया भोगहेतुत्वात् किं कारणान्वेषणयेत्याशङ्क्याह

भाषा अनुवाद ।

और कार्य सुख दुखके साधनस्वरूप कहे करनेवाली इन्द्री सब और इन्द्रियोंकी कर्तृत्व कहे सोई सोई रूप होजाना इन सबको कारण प्रकृति है यह कपिल आदि ऋषियोंने कहा और पुरुष जो जीव सो शरीर इन्द्री आदि कृत सुखदुःख सबका कारणस्वरूप कहाहै तात्पर्य यह कि यद्यपि अचेतन प्रकृति आपसे कुछ नहीं करसकती और विकारी पुरुष को भी भोक्तृत्व कहे भोग करना यह असंभव है तोभी कर्तृत्वशब्दका अर्थ यह है कि क्रिया करना अचेतन प्रकृतिको भी चैतन्यरूप जीवके अदृष्ट वशते सम्भव होय है जैसे अचेतन होकेभी अग्निज्वाला का ऊर्ध्वग- मन औ वायु का तिर्छा गमन और बच्चोंको जैसे दूध रचा करेहै तैसेही पुरुषकी भी वायु के सान्निध्य कहे अवलंबसे प्रकृतिको कर्तृत्व है और भोक्तृत्व जो सुख दुःख का ज्ञान सो चेतनका धर्म है इससे प्रकृतिका संनिधान कहे मायाकी निकटता को प्राप्त होय पुरुषको भी भोक्तृत्व कहा है ॥ २० ॥

शाङ्करभाष्यम् ।

मप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः स यथाकामो भवति तत् क्रतुर्भवतीत्यादि श्रुतेः तदेतदाह कारणहेतुर्गुणसंगः गुणेषु संगोऽस्य भोक्तुः सदसद्योनिजन्मसु-सतश्चासतश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि तानि सद-सद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषय भूतेषु कारणगुणसंगोऽथवा सदसद्योनिजन्मनस्तस्य संसारस्य कारणं गुणसंग इति संसारपदमध्याहार्यं सद्योनयो देवादियोनयः असद्योनयः पश्वादियोनयः सामर्थ्यात् सदसद्यो-नयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः एतदुक्तं भवति प्रकृतिस्थत्वाख्या विद्या गुणेषु च सङ्गः कामः संसारस्य कारणमिति तच्च परिवर्जनायोच्यते अस्य च निवृत्तिकारणं ज्ञानवैराग्ये सन्यासे गीताशास्त्रे प्रसिद्धं तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयं यत् ज्ञात्वाऽमृतमश्नुत इत्युक्तञ्चान्यापोहेना-तद्धर्माध्यारोपेण च ॥ २१ ॥

आनन्दगिरिकृतटीका ।

तत्रापीति सङ्गस्य जन्मादौ संसारे प्रधानहेतुत्वे मानमाह स यथेति उक्तेऽर्थे द्वितीयार्द्धमवतार्य्य व्याचष्टे तदेतदित्यादिना साध्याहारं योजनान्तरमाह अथवेति सदसद्योनीर्विविच्य व्याचष्टे सद्योनय इति योनिद्वयनिर्देशान्मध्यवर्त्तिन्यो मनुष्ययोनयोऽपि ध्वनिता इत्याह सामर्थ्यादिति सङ्गस्य संसारकारणत्वेनाविद्याया स्तत्कारणत्वमेकस्मादेव क्षेत्रोस्तदुपपत्तेरित्याशङ्क्याह एतदिति अविद्योपादानं संगोनिमित्तमित्युभयोरपि कारणत्वं सिध्यतीत्यर्थः द्विविधहेतूक्तेर्विवक्षितं फलमाह तच्चेति संसर्गस्याज्ञानस्य स्वतो नित्यत्वे-स्तन्निवर्त्तकं वाच्यमित्याशङ्क्याह अस्येति वैराग्ये सति संन्यासस्तत्पूर्वकञ्च ज्ञानं सासंगाज्ञाननिवर्त्तकमित्यर्थः उक्ते ज्ञाने मानमाह गीतेति अध्यायादौ चोक्तं ज्ञानमुदाहृतमित्याह तच्चेति तदेव ज्ञानं यज्ज्ञात्वेत्यादिना न सत्तन्नासतदित्यन्तेनान्यनिषेधेन सर्वतः पाणि-पादमित्यादिना चातद्धर्म्माऽध्यासेनोक्तमित्याह यज्ज्ञात्वेति ॥ २१ ॥

रामकृतटीका ।

तथाप्यविकारिणो जन्मरहितस्य च भोक्तृत्वं कथमित्यत आह पुरुष इति हि यस्मात् प्रकृतिस्थस्तत्कार्यदेहे तादात्म्येन स्थितः पुरुषः अतस्तज्जनितान् सुखदुःखादीन् भुङ्क्ते

## उपद्रष्टाऽनुमन्ता च भर्त्ता भोक्ता महेश्वरः ।
## परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २२ ॥

शाङ्करभाष्यम् ।

तस्यैव पुनः साक्षान्निर्देशः क्रियते उपद्रष्टेति उपद्रष्टा समीपस्थः सन्द्रष्टा स्वयमव्यापृतो यथा ऋत्विग् यजमानेषु यज्ञकर्म्मव्यापृतेषु तटस्थोऽन्योऽव्यापृतोयज्ञविद्या कुशलः ऋत्विग् यजमानव्यापारगुणदोषाणामीक्षिता तद्वत् कार्य्यकारणव्यापारेषु अव्यापृतोऽन्यो विलक्षणस्तेषां कार्य्यकारणानां सव्यापाराणां सामीप्येन द्रष्टृत्वादुपद्रष्टा अथवा देह चक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक् समीपे आत्मा द्रष्टा यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् यज्ञोपद्रष्टृत्वाद्वा सर्व्वविषयीकरणादुपद्रष्टा अनुमन्ता च अनुमोदनमनुमननं

स्वामिकृतटीका ।

कस्य च पुरुषस्य सतीषु देवादियोनिषु असतीषु तिर्य्यगादि योनिषु यानि जन्मानि तेषु गुणसङ्गो गुणैः शुभाशुभकर्म्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः ॥ २१ ॥

भाषा अनुवाद ।

जो कहा कि अविकारी औ जन्मरहित जो आत्मा तिसको भोक्तृत्व कहे भोगना कैसे संभव है कि जिस हेतु याहि पुरुष प्रकृतिस्थ अर्थात् प्रकृतिका कार्य्य जो शरीर तिसमें तदात्मरूपसों वास करे है इस कारण उस शरीर से प्रगट जो सुखदुःख आदि तिनको भूलसे भोग करे है जैसे मनुष्य काहू वस्तु या द्रव्य पाय अपनाकर मानि फेरि उसके जानेसे दुःखी होता है तो कहो यहां दुःखका कारण अभिमानछोड और क्या है और सत जो देव मनुष्य जोनि औ असत् जो पशु पक्षी आदि जोनि तिनमें जो इस पुरुषका जीवरूप जन्म सो गुण कहे शुभ अशुभ कर्मकारी इन्द्रीगण तिनके संसर्ग से होता है संगही ऊंची नीची देह धारणमें कारणरूप है यह जानो ॥ २१ ॥

शाङ्करभाष्यम्।

कुर्वत्सु तत्क्रियासु परितोषस्तत् कर्त्तानुमन्ता चाथवा अनुमन्ता कार्यकारणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ताथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता भर्त्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपरार्थेन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपावधारणं तच्चैतन्यात्मकृतमेवेति भर्त्तात्मेत्युच्यते भोक्तात्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्तात्मोच्यते महेश्वरः सर्वात्मत्वाच्च स्वतन्त्रत्वाच्च महान् ईश्वरश्चेति महेश्वरः परमात्मा देहादीनां बुध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा सोऽतः परमात्मेत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ क्वासौ अस्मिन् देहे पुरुषः परो व्यक्तादुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति यो वक्ष्यमाणः क्षेत्रज्ञञ्चापि मां विद्धि इत्युपन्यस्तो व्याख्यायोपसंहृतश्च तमेतं यथोक्तलक्षणमात्मानं ॥ २२ ॥

आनन्दगिरिकृतटीका।

प्रकृतस्यैव मोक्षहेतोर्दर्शनस्य साक्षान्निर्देशार्थोत्तरश्लोकमुत्थापयति तस्येति कार्यकारणानां व्यापारवतां समीपे स्थितः सन्निधिमात्रेण तेषां साक्षीत्येवमर्थत्वेन उपद्रष्टेति पदं व्याचष्टे समीपस्थ इति लौकिकस्यैव द्रष्टुरस्यापि स्वव्यापाराविष्टतया निःक्रियत्वविरोधमाशङ्क्याह स्वयमिति स्वव्यापाराद्दृते सन्निधिरेव द्रष्टृत्वं दृष्टान्तेन स्पष्टयति यथेति उपद्रष्टेत्यस्यार्थान्तरमाह अथवेति बहूनां द्रष्टृत्वेऽपि कस्योपद्रष्टृत्वं तत्राह तेषामिति उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात्तत्रैव सामीप्यावसानात् प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः उक्तमेव व्यनक्ति यत इति यथा यजमानस्य ऋत्विजाञ्च यज्ञकर्मणि गुणं वा दोषं वा सर्वयज्ञाभिज्ञः सन्नुपद्रष्टा विषयीकरोति तथायमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीत्युपद्रष्टेति पक्षान्तरमाह यद्वेति अनुमन्ता चेत्येतत् व्याकरोति अनुमन्तेति ये स्वयं कुर्वन्तो व्यापारवन्तो भवन्ति तेषु कुर्वत्सु सत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननमनुमोदनं तस्य सन्निधिमात्रेण कर्त्ता यः सोऽनुमन्तेत्यर्थः व्याख्यान्तरमाह अथवेति तदेव स्फुटयति कार्येति अर्थान्तरमाह अथवेत्यादिना भर्त्तेति पदमादाय भरणं किं नामेति पृच्छति भर्त्तेति तद्रूपं निरूप-

आनन्दगिरिकृतटीका ।

यद्यात्मनो भर्तृत्वं साधयति देहेति भोक्तृत्वमुक्तं क्रियावत्त्वे प्राप्ते भोगश्चिद्‌वभासतेति न्याये विभजते अन्नीति विशेषणान्तरमादाय व्याचष्टे महेश्वर इति परमात्मत्वमुपपादयति देहा-दीनामिति अविद्यया कल्पितानामिति सम्बन्धः परमत्वं प्रकृष्टत्वं सः पूर्वोक्तविशेषणवानिति यावत् परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति अत इति तस्य ताटस्थ्यं प्रश्नद्वारा प्रत्याचष्टे क्वेति कस्मात् परत्वन्नदाह अव्यक्तादिति तत्रैव वाक्यशेषानुकूल्यमाह उत्तम इति सोऽस्मिन् देहे परः पुरुष इति सम्बन्धः शोधितार्थयोरैक्यज्ञानं प्रागुक्तं फलोक्तया स्तौति य एवमिति ॥ २२ ॥

स्वामिकृतटीका ।

तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरूपमाह उपद्रष्टेति अस्मिन् प्रकृतिकार्ये देहे वर्त्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः तत्र हेतवः यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः तथा अनुमन्ता अनुमोदितैव सन्निधिमात्रेणानुग्राहकः साक्षी चेताः केवलो निर्गुणश्चेत्या-दिश्रुतेः तथा ईश्वरेण रूपेण भर्त्ता विधायकः भोक्ता पालक इति च महांश्चासावीश्व-रश्चेति ब्रह्मादीनामपि पतिरिति च परमात्मा अन्तर्यामी चेत्युक्तः श्रुत्या तथाच श्रुतिः एष सर्वेश्वर एष भूताधिपतिरेष लोकपाल इत्यादि ॥ २२ ॥

## भाषा अनुवाद ।

उक्त रीति से प्रकृति जो माया तिसके अविवेक वशते जीव को अहं कर्त्ता अहं भोक्ता इत्यादि कल्पितमात्र संसार है पर विचार से तो इस जीवको संसार नहीं है इसी आशापर पुरुषका स्वरूप कहते हैं कि इस प्रकृतिका कार्यरूप जो शरीर तिसमे वर्त्तमान होके भी जीव प्रकृतिसे भिन्न कहे प्रकृतिके गुणोंसे युक्त नहीं उनसे अलग है क्योंकि ईश्वर अंश जीव उपद्रष्टा अर्थात् भिन्नरूपसे समीपमे रहकर देखनेवाला साक्षीमात्र है और अनुमन्ता अर्थात् समीप सम्बन्धसे अनुग्राहक कहे अनुमोदनकर्त्ता कहे माननेवाला है सोई श्रुति कहती हैं कि एक स्वयं प्रकाशरूप जो पर-मात्मा सो भूतमात्रमे निगूढ़ भावसे स्थित है और सर्वव्यापी तावत् प्राणी का अन्तर्यामी है और सकल कर्मका नियन्ता औ भूतमात्रका अधिष्ठान-

य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह।
सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते॥ २३॥

शाङ्करभाष्यम्।

य एवमिति य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेनाय-महमिति प्रकृतिञ्च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्त्तिता-माभासमापादितां विद्यायां सर्वथा सर्वप्रकारेण वर्त्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाऽभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथापि प्राक् ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनाञ्च यानि चातिक्रान्तान्यनेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि कृतविप्रनाशो हि न युक्त इति यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणां नच कर्मणाम्

आनन्दगिरिकृतटीका।

यथोक्तेन प्रकारेण जीवेश्वरादि सङ्कल्पनाधिष्ठानत्वेनेत्यर्थः साक्षादपरोक्षत्वेनेति यावत् यथोक्तामनाद्यनिर्वाच्यां सर्वानर्थोपाधिभूतामित्यर्थः विद्यया प्रागुक्तैकत्वगोचरया प्रकृतिमविद्यारूपां सकार्य्यामभावमापादितां यो वेत्तीति सम्बन्धः सर्वप्रकारेण विहितेन निषेधेन चेत्यर्थः पुनर्नकारोऽन्वयार्थः निपातस्तूचितं न्यायमाह अपीति न स भूयोऽभि-जायत इत्युक्तमाक्षिपति नन्विति ज्ञानोत्पत्त्यनन्तरं जन्माभावस्योक्तत्वात् पुनर्देहारम्भमुपेत्य नाक्षेपः स्यादित्याशङ्क्याह यद्यपीति तथापि स्युस्त्रीणि जन्मानीति सम्बन्धः वर्त्तमाने देहे ज्ञानात् पूर्वोत्तरकालीनानां कर्मणां फलमदत्त्वा नाशायोगाज्जन्मत्रयमावश्यकमतो-

भाषा अनुवाद।

रूप कहे आश्रय औ द्रष्टा औ समस्त भूतोंका चैतन्यकारी औ अद्वितीय तथा गुणोंसे अतीत कहे अलग है और यह पुरुष ईश्वरके सम्बन्धरूपसे कर्त्ता कहे पोषणकारी प्रतिपालक है और महेश्वर कहे ब्रह्मादिकों का भी अधिपति अर्थात् स्वामी है सोई श्रुति है कि यह पुरुष सबका ईश्वर और सर्वभूतका अधिपति तथा भूतमात्रका प्रतिपालक है॥ २२॥

शाङ्करभाष्यम् ।

विशेषोऽवगम्यते तस्मात् त्रिप्रकाराण्यपि कर्माणि क्षीणि जन्मान्यारम्भैर संहतानि वा सर्वाण्येकं जन्मारभेरन् अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यञ्च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति न क्षीयन्ते चास्य कर्माणि ब्रह्मविद् ब्रह्मैव भवति तस्य तावदेव चिरमिषीका तूलवत् सर्वकर्माणि प्रदूयन्ते इत्यादि श्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः इहापि चोक्तो यथैधांसीत्यादिना सर्वकर्मदाहो वक्ष्यति चोपपत्तेश्चाविद्या कामक्लेशबीजनिमित्तानि हि कर्माणि फलारम्भकाणि जन्मान्तराङ्कुरमारभन्ते इहापि च साहङ्काराभिसन्धीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तबीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनरिति अस्तु तावत् ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात् न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानां ज्ञानेन दाहो नत्वतीतानामनेकजन्मान्तरकृतानां दाहो युक्तः न सर्वकर्माणीति विशेषणात् ज्ञानोत्तर-

आनन्दगिरिकृतटीका ।

तानेकदेहेष्वपि कृतकर्मणामाभुक्तं क्षीयते कर्मेति स्मृतेः अदत्त्वा फलमनाशाद्दस्ति तृतीयमपि जन्मेत्याह प्रागिति फलदानं विनापि कर्मनाशे दोषमाह कृतेति न युक्त इति कृत्वा फलमदत्त्वा कर्मनाशो नेति शेषः विमतानि कर्माणि फलमदत्त्वा न क्षीयन्ते वैदिककर्मत्वादारब्धकर्मवदिति मत्वाह यथेति नाशो न ज्ञानादिति शेषः नन्वनारब्धकर्मणां ज्ञानान्नाशो युक्तोऽप्रवृत्तफलवत्त्वायारब्धकर्मणान्तु प्रवृत्तफलवत्त्वेन बलवत्त्वान्न ज्ञानात् तन्निवृत्तिर्नेत्याह नचेति अज्ञानोत्थत्वेन ज्ञानविरोधित्वाविशेषात् प्रवृत्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः कर्मणां फलमदत्वा नाशाभावे फलितमाह तस्मादिति ननु कर्मणां बहुत्वात्तत्फलेषु जन्मसु कुतस्त्रित्वसारम्भकर्मणां त्रिःप्रकारत्वादि केचिदानारब्धत्वेनैकप्रकारत्वसम्भवात् तत्राह संहतानीति नास्ति ज्ञानस्यैकान्तिकफलत्वमिति शेषः उक्तकर्मणां जन्मनारम्भकत्वे प्रागुक्तं दोषमनुभाष्य तस्यातिप्रसङ्गकत्वमाह अन्यथेति सर्वत्रेत्यारब्धकर्मस्वपीति यावत् फलजनकत्वानिश्चयोऽनाश्वासः कर्मणां जन्मनारम्भकत्वे कर्मकाण्डानर्थक्यं दोषान्तरमाह शास्त्रेति अनारब्धकर्मणां सत्यपि ज्ञाने जन्मान्तरारम्भकत्वध्रौव्ये फलितमाह इत्यत इति भुक्त्वद्भामेन परिहरति नेत्यादिना ज्ञानादनारब्धकर्मदाहे भगवतोऽपि सम्मतिमाह

शाङ्करभाष्यम् ।

कालभाविनामेव सर्वकर्म्मणामिति चेन्न संकोचत्वे कारणानुपपत्तेः यत्तूक्तं तथा वर्त्तमानशरीरजन्मारम्भकाणि कर्म्माणि न चीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्त इति तदसत् कथं तेषां मुक्तेषुवत् प्रवृत्तफलत्वात् यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमपि आरब्धवेगक्षयात् पतनेनैव निवर्त्तते एवं शरीरारम्भकं कर्म्मशरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात् पूर्ववद्वर्त्तत एव यथा स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथा नारब्धफलानि कर्म्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्वीजीक्रियन्त इति पतितेऽस्मिन् विद्वच्छरीरे न स भूयोऽभिजायत इति युक्तमेवोक्तमिति सिद्धं ॥ २३ ॥

आनन्दगिरिकृतटीका ।

इहापीति ज्ञानाधीनसर्वकर्मदाहे सर्वधर्मान् परित्यज्येति वाक्यशेषोऽपि प्रमाणीभवतीत्याह वक्ष्यति चेति ज्ञानादनारब्धाशेषकर्मक्षये युक्तिरपि वक्तुं शक्येत्याह उपपत्तेश्चेति तामेव विवृणोति अविद्येति अज्ञस्याविद्यास्मिता रागद्वेषाभिनिवेशाख्यक्लेशात्मकानि सर्वानर्थबीजानि तानि निमित्तीकृत्य यानि धर्माधर्मकर्माणि तानि जन्मान्तरारम्भकाणि यानि विदुषो विद्यादग्धक्लेशबीजस्य प्रतीतिमात्रशरीराणि कर्माणि न तानि शरीरारम्भकाणि दग्धपटवदर्थक्रियासामर्थ्याभावादित्यर्थः प्रतीतिमात्रदेहानां कर्माभासानां न फलारम्भकतेत्यस्मिन्नर्थे भगवतोऽपि सम्मतिमाह इहापीति तत्त्वज्ञानादूर्द्धं प्रातीतिकक्लेशानां कर्मद्वारा देहानारम्भकत्वे वाक्यान्तरमपि प्रमाणयति बीजानीति ज्ञानानन्तरभाविकर्मणां ज्ञानेन दाहमङ्गीकरोति अस्त्विति विरोधप्रस्तानामेवोत्पत्तेरिति हेतुमाह ज्ञानेति अस्मिन् जन्मनि जन्मान्तरेवा ज्ञानात् पूर्वभाविकर्मणां न ततो दाहो विरोधिनं विना प्रवृत्तेरित्याह नत्विति श्रुतिस्मृतिविरोधान्नैवमिति परिहरति नेत्यादिना सर्वशब्दश्रुतेः सङ्कोचं शङ्कते ज्ञानेति प्रकरणादिसंकोचकाभावान्नैवमित्याह नेति आक्षेपदशायामुक्तमनुमानमनुवदति यत्विति आभासत्वादिदमसाधकमिति दूषयति तदसदिति व्याप्त्यादिमत्त्वे कथमाभासत्वमिति पृच्छति कथमिति प्रवृत्तफलत्वोपाधिना हेतोर्व्याप्तिभङ्गादाभासत्वधीरित्याह तेषामिति तदेव प्रपञ्चयति यथेत्यादिना धनुषः सकाशादिषुर्मुक्तो वक्रवत् प्रतिबन्धकाभावे मध्ये न पतति तथा प्रबलप्रतिबन्धकं विना प्रवृत्तफलानां कर्मणां भोगादृते न क्षयो नच तत्त्वज्ञानं तादृक्प्रतिबन्धकं उत्पन्नमेव पूर्वप्रवृत्तेन कर्मणा प्रतिबन्ध्यशक्तित्वादित्यर्थः यत्तु ज्ञानेनादाह्यत्वं तत्

## ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
## अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

### शाङ्करभाष्यम्।

अत्रात्मदर्शने उपायविकल्पा इमे ध्यानादय उच्यन्ते ध्यानेनेति ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक् चेतयितर्येकाग्रतया यच्चिन्तनं तद्ध्यानं तथा ध्यायतीव कः ध्यायतीव पृथिवी ध्यायन्तीव पर्वताः इत्युपमोपादानात् तैलधारावत् सन्ततो विच्छिन्नप्रत्ययो ध्यानन्तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक् चेतन-मात्मनाध्यानसंस्कृतेनान्तःकरणेन केचित् योगिनः अन्ये सांख्येन संयोगेन

### आनन्दगिरिकृतटीका।

प्रवृत्तफलत्वमित्यन्वयेऽपि यत्राप्रवृत्तफलत्वं तत्र ज्ञानदाह्यत्वमिति न व्यतिरेकसिद्धिरित्या-शंक्याह स एवेति प्रवृत्तो निमित्तभूतो नारब्धो वेगोऽनेनेति विग्रहः साश्रयस्यानि साभा-सान्तःकरणनिष्ठानीति यावत् विमतानि तत्त्वधीनिमित्तनिवृत्तानि तत्कृतकार्यनिवृत्त-त्वाद्रज्जुसर्पादिवदिति व्यतिरेकसिद्धिरिति भावः विदुषो वर्त्तमानदेहपाते देहान्तरे हेत्वभा-वात्तत्त्वधीरैकान्तिकफलेत्युपसंहरति पतित इति ॥ २३ ॥

### स्वामिकृतटीका।

एवं प्रकृतिपुरुषविवेकज्ञानिनं स्तौति य एवमिति एवमुपद्रष्टृत्वादिरूपेण पुरुषं यो वेत्ति प्रकृतिञ्च गुणैः सुखदुःखादिभिरिणामैः सहितां यो वेत्ति स पुरुषः सर्वथा विधिमभि-लङ्घ्य वर्त्तमानोऽपि पुनर्नाभिजायते मुच्यत एवेत्यर्थः ॥ २३ ॥

### भाषा अनुवाद।

ऐसो जो प्रकृति औ पुरुष तिनके विवेक के ज्ञानवान् मनुष्योंकी प्रशंसा करते हैं कि जो लोग ऐसे उपद्रष्टारूप पुरुषको जानते हैं तथा प्रकृतिको औ प्रकृतिके गुणरूप परिणामको प्राप्त कहे रूपान्तरको प्राप्त सुख दुःख सहितको जानि सके हैं वह मनुष्य संसारमे रहते ही सम्पूर्ण विधिको उल्लङ्घन करके भी पुनर्जन्मग्रहण नहीं करते मुक्तही होते हैं यह आना ॥ २३ ॥

## शाङ्करभाष्यम् ।

सांख्यं नाम इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहन्तेभ्यो न्यस्तद्व्यापारस्य साक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति वर्त्तन्ते कर्मयोगेन कर्मैव योग ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानं घटनरूपत्वं योगार्थात् योग उच्यते गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥ २४ ॥

### आनन्दगिरिकृतटीका ।

त्वंपदार्थं यत्तदित्यादिना तत्पदार्थस्य पदार्थज्ञानानन्तरमेव शोधितौ तयोरैक्यस्य चोक्तज्ञानस्यापि सा विशेष्योक्तमिदानीं तद्धेतुहेतून् यथाधिकारं कथयति अत्रेति ध्यानाख्यसाधनं किं रूपमिति पृच्छति ध्यानं नामेति तद्रूपं पदमुत्तरमाह शब्दादिभ्य इति एकाग्रतयोपसंहृत्येति सम्बन्धः यच्चिन्तनं प्रत्यक् चेतयितरि इति पूर्वेणान्वयः किं तच्चिन्तनमित्युक्ते दृष्टान्तद्वारा स्पष्टयन् ध्यानं प्रपञ्चयति तथेति विवक्षितध्यानानुरोधेनेति यावत् आत्मानं पश्यन्ति परमात्मतयेति शेषः केचिदित्युत्तमाधिकारिणो दर्शयन्ते मध्यमाधिकारिणो निर्दिशति अन्य इति सांख्यशब्दितं साधनं किन्नामेत्युक्ते विचारजन्यं ज्ञानन्तदेव ध्यानहेतुतपोयोमतुल्यत्वाद्योगशुद्धिहेतोरनेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह सांख्यमिति अधुमानधिकारिणः संगिरते कर्मेति चित्तैकाग्र्यं योगः तादर्थ्यं कर्मणः शुद्धिहेतोरस्ति तेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह गुणत इति अपरे पश्यन्त्यात्मानमात्मनेति पूर्ववदनुषङ्गमङ्गीकृत्याह तेनेति ॥ २४ ॥

### स्वामिकृतटीका ।

एवम्भूतविविक्तात्मज्ञानसाधनविकल्पानाह ध्यानेनेति द्वाभ्यां ध्यानेनात्माकारप्रत्ययावृत्त्या आत्मनि देह एव आत्मना मनसा एवमात्मानं केचित् पश्यन्ति अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्यालोचनेन योगेनाष्टाङ्गेनापरे च कर्मयोगेन पश्यन्तीति सर्वत्रानुषङ्गः एतेषाञ्च ध्यानादीनां यथायोगं क्रमसमुच्चये सत्यपि तत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः ॥ २४ ॥

### भाषा अनुवाद ।

ऐसी जो प्रकृति तिससे भिन्न जो आत्मा तिसके ज्ञान होनेके विषयमें अनेक अनेक कल्पनारूप साधन दो श्लोकसे कहते हैं कि कोई तो ध्यान कहे आत्माकाराकारित ज्ञानरूप धारावाहिक अन्तःकरणकी वृत्तिसे इसी

अन्ये त्वेव मजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

शाङ्करभाष्यम् ।

अन्ये त्विति अन्ये त्वेतेषु विकल्पेषु अन्यतरेणाप्येवं यथोक्तमात्मानं मजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वा इदमेव चिन्तयेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युयुक्तं संसारमित्येतत् श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्तीत्यभिप्रायः ॥ २५ ॥

आनन्दगिरिकृतटीका ।

अधमतमानधिकारिणो मोक्षमार्गे प्रवृत्तिंप्रतिलम्भयति अन्येत्विति आचार्याधीनां श्रुतिमेवाभिनयति इदमिति उपासनमेव विवृणोति श्रद्दधाना इति परोपदेशात् प्रवृत्तानामपि प्रवृत्तेः साफल्यमाह तेपीति तेषां मुख्याधिकारित्वं व्यावर्त्तयति श्रुतीति तेऽपीत्यादिना सूचितमर्थमाह किमिति ॥ २५ ॥

स्वामिकृतटीका ।

अतिमन्दाधिकारिणां निस्तारोपायमाह अन्येत्विति अन्ये तु सांख्ययोगादिमार्गेण एवमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्त्तुमजानन्तोऽन्येभ्य आचार्येभ्य उपदेशतः

भाषा अनुवाद ।

शरीरमें मनके द्वारा आत्माका दर्शन करते हैं और कोई सांख्य अर्थात् प्रकृति पुरुषका भेद आलोकन के द्वारा देखते हैं कोई यम नियम आसन प्राणायाम प्रत्याहार धारणा ध्यान समाधिरूप अष्टाङ्ग योगके क्रमसे जानते हैं और कितने एक निःकाम कर्मरूप भक्तियोग अनुष्ठान करके शुद्ध सतोगुण होय तत्त्वज्ञानके द्वारा आत्माको देखते रहते हैं यद्यपि ध्यानादि यथायोग क्रमसे एकही हैं तौभी तीन तीन निष्ठाके भेदसे भिन्न नाना मत कहा है ॥ २४ ॥

यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्र क्षेत्रज्ञ संयोगा त्तद्विद्धि भरतर्षभ ॥ २६ ॥

### शाङ्करभाष्यम् ।

अथ क्षेत्रक्षेत्रज्ञैकत्वविषयं ज्ञानं मोक्षसाधनं यत् ज्ञात्वाऽमृतमश्नुत इत्युक्तं तत् कस्माद्धेतोरिति तद्धेतुदर्शनार्थं श्लोक आरभ्यते यावदिति यावत् यत् किञ्चित् सञ्जायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरं जङ्गमं स्थावरं जङ्गमञ्च क्षेत्रक्षेत्रज्ञसंयोगात् तज्जायते इत्येवं विद्धि जानीहि हे भरतर्षभ कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतो न तावत् रज्ज्वेव घटस्याव-यवसंश्लेषद्वारकः सम्बन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य सम्भवति आकाशव-

### आनन्दगिरिकृतटीका ।

ऐक्यधीर्मुक्तिहेतुरिति प्रागुक्तमनूद्य प्रश्नपूर्वकं जिज्ञासितहेतुपरत्वेन श्लोकमवतारयति क्षेत्रेति सर्वस्य प्राणिजातस्य क्षेत्रक्षेत्रज्ञसम्बन्धाधीना यस्मादुत्पत्तिस्तस्मात् क्षेत्रज्ञात्मकपर-मात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेव मुक्तिरित्याह कस्मादिति क्षेत्रक्षेत्रज्ञ-सम्बन्धमाक्षिपति कः पुनरिति क्षेत्रज्ञस्य क्षेत्रेण सम्बन्धः संयोगो वा समवायो वेति विकल्पमाद्यं दूषयति न तावदिति द्वितीयं निरस्यति नापीति वास्तवसम्बन्धाभावेऽपि तयो-रध्यासरूपः सोऽस्तीति परिहरति उच्यत इति भिन्नस्वभावत्वे हेतुमाह विषमेति इतरे-तरस्य क्षेत्रे क्षेत्रज्ञे वा तद्धर्मस्य क्षेत्राधिकरणस्य क्षेत्रज्ञगतस्य चैतन्यस्य क्षेत्रज्ञानाधारस्य च

### स्वामिकृतटीका ।

श्रुत्वा उपासते ध्यायन्ति तेऽपि च श्रद्धया उपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं अतितरन्त्येव ॥ २५ ॥

### भाषा अनुवाद ।

और अब अति मन्द अधिकारियों को उपाय कहते हैं कि सांख्य योग आदि मार्गसे ऐसे उपद्रष्टारूप आत्माको साक्षात्कार करनेमें असमर्थ होकर भी केवल ... और किसी आचार्य का उपदेश श्रवण करिके ध्यानमात्र करते हैं ते भी श्रद्धापूर्वक उपदेशके श्रवणमें तत्पर होके क्रमसे मृत्युयुक्त संसारसे अवश्य मुक्त होते हैं यह जानो ॥ २५ ॥

शाङ्करभाष्यम्।

निरवयवत्वाच्चापि समवायलक्षणः तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्य-
कारणभावानभ्युपगमादित्युच्यते क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वरूपयो-
रितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो
रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपित सर्परजतादि संयोगवत्
सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणो यथाशास्त्रं क्षेत्र-
क्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राक् दर्शितरूपात् क्षेत्रात् मुञ्जादिवेषीकां
यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यते इत्यनेन निरस्तसर्वोपाधि-
विशेषं ज्ञेयं ब्रह्मस्वरूपेण यः पश्यति क्षेत्रञ्च मायानिर्मितहस्तिस्वप्नदृष्टवस्तु
गन्धर्वनगरादिवदसदेव सदिवावभासते इति एवं निश्चितविज्ञानो यस्तस्य
यथोक्तसम्यक्दर्शनविरोधादपगच्छति मिथ्याज्ञानं तस्य जन्महेतोरपगमात्
य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह इत्यनेन विद्वान् भूयो नाभिजायत
इति यदुक्तं तदुपपन्नमुक्तं न स भूयोऽभिजायत इति सम्यक्दर्शनफलमविद्या-
या निवर्त्तकं सम्यक्दर्शनं फलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्मा-
भाव उक्तः जन्मकारणञ्चाविद्यानिमित्तः क्षेत्रक्षेत्रज्ञसंयोग उक्तः ॥ २६ ॥

आनन्दगिरिकृतटीका।

क्षेत्रनिष्ठस्य जाड्यादेरारोपरूपो योगस्तयोरित्याह इतरेति तत्र निमित्तमाह क्षेत्रेति
अविवेकादारोपितसंयोगे दृष्टान्तमाह रज्ज्विति उक्तं सम्बन्धं निगमयति सोऽयमिति
तस्य निवृत्तियोग्यत्वं सूचयति मिथ्येति कथं तर्हि मिथ्याज्ञानस्य निवृत्तिरित्याशङ्क्याह
यथेति योऽयं विज्ञानमयः प्राणेष्वित्यादि त्वंपदार्थविषयं शास्त्रमनुसृत्य विवेकज्ञानमापाद्य
महाभूतादि इत्यन्तात् क्षेत्रादुपद्रष्टृत्वादिलक्षणं प्रागुक्तं क्षेत्रज्ञं मुञ्जेषीकान्यायेन विविच्य
सर्वोपाधिविनिर्मुक्तमब्रह्मस्वरूपेण ज्ञेय याऽनुभवात् तस्य मिथ्याज्ञानमपगच्छतीति सम्बन्धः
कथमस्य निर्विशेषवत्त्वं क्षेत्रस्य सविशेषत्वहेतोः सत्त्वादित्याशङ्क्याह क्षेत्रञ्चेति बहु-
दृष्टान्तोक्तिर्बहुविधत्वं क्षेत्रस्य द्योत्यते उक्तज्ञानान्मिथ्याज्ञानापगमे हेतुमाह यथोक्तेति
तथापि कथं पुरुषार्थसिद्धिः कालान्तरे तुल्यजातीयमिथ्याज्ञानोदयसम्भवादित्याशङ्क्याह
तस्येति सम्यग्ज्ञानादज्ञानकार्यनिवृत्त्या मुक्तिरिति स्थिते फलितमाह य एवमिति उत्तर
ग्रन्थमवतारयितुं व्यवहितं वृत्तं कीर्त्तयति नेत्यादिना अविद्यानाद्यनिर्वाच्यमज्ञानं
मिथ्याज्ञानं तत्संस्कारश्चादिशब्दार्थः स्वर्गकृतमनूद्याव्यवहितमनुवदति जन्मेति ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

## शाङ्करभाष्यम्

अतस्तस्या अविद्याया निवर्त्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते समं सर्वेष्वित्यादि सममिति समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं कः सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु कम्परमेश्वरं देहेन्द्रियमनोबुद्धग्व्यक्तात्मनोऽपेक्ष्य परं परमश्चासावीश्वरश्च ईशनशीलश्चेति परमेश्वरस्तं

### आनन्दगिरिकृतटीका ।

व्यवधानाव्यवधानाभ्यां सर्वानर्थमूलत्वादज्ञानस्य तन्निवर्तकं सम्यग्ज्ञानं वक्तव्यमित्याह अत इति तस्याप्रागुक्तत्वात् तदुक्तार्थप्रवृत्तिर्व्यर्थेत्याशङ्क्यातिसूक्ष्मार्थस्य शब्दभेदेन पुनः पुनर्वचनमधिकारिभेदानुग्रहायेति मत्वाह उक्तमिति सर्वत्र परस्यैकत्वात् नोत्कर्षापकर्षवत्त्वमित्याह सममिति परमत्वमीश्वरत्वञ्चोपपादयति देहेति आत्माजीवस्तमित्यादिनान्वयोक्तिः आश्रयनाशादाश्रितस्यापि नाशमाशङ्क्याह तञ्चेति अविनश्यन्तमिति विशिनष्टि इति सम्बन्धः

### स्वामिकृतटीका ।

तत्र कर्मयोगस्य तृतीय चतुर्थ पञ्चमेषु प्रपञ्चितत्वात् ध्यानयोगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च सांख्यविविक्तात्मविषयत्वात् सांख्यमेव प्रपञ्चयन्नाह यावदिति यावद्ध्यायसमाप्ति यावत् यत्किञ्चित् वस्तुमात्रं सम्भवत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगादविवेककृतादात्माध्यासाद्भवतीति जानीहि ॥ २६ ॥

### भाषा अनुवाद ।

अब तृतीय चतुर्थ पञ्चम अध्यायसे कर्मयोगको विस्तारसे कहा औ छठयें अठयें अध्यायमे ध्यानयोगका विस्तार कहा औ सांख्यके द्वारा भिन्न किया जो आत्मा सोई ध्यान आदिका विषय है इस हेतु सांख्यही को अध्याय समाप्ति पर्यन्त विस्तार करिके भगवान् वासुदेव कहते हैं कि हे भरतर्षभ अर्जुन जो कुछ स्थावर जङ्गम आदि वस्तु उत्पन्न है सो सब क्षेत्र क्षेत्रज्ञ दोनोके योगसे है अर्थात् अविवेककृत जो आत्माका अध्यास काहै प्रतीति तिसहेतुसे उत्पन्नमान है यह निश्चयसे जानो ॥ २६ ॥

## शाङ्करभाष्यम्

सर्वेषु समन्तिष्ठन्तं तानि विशिनष्टि विनश्यत्स्विति तञ्च परमेश्वरमविनश्यन्तं इति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थः कथं सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ता विनाशात् परो न कश्चिदस्ति भावविकारः भावाभावात् सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकारानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः तस्मात् सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वञ्च कथञ्च य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति ननु सर्वोऽपि लोकः पश्यति किं विशेषेणेति सत्यं पश्यति किन्तु विपरीतं पश्यत्यतो विशिनष्टि स एव पश्यतीति यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथेहाप्येकमविभक्तं यथोक्तमात्मानं पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति इतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥ २७ ॥

### आनन्दगिरिकृतटीका ।

उभयत्र विशेषणद्वयस्य तात्पर्यमाह भूतानामिति नाशानाशाभ्यां वैलक्षण्येऽपि कथमत्यन्तवैलक्षण्यं सविशेषत्वभिन्नत्वयोस्तुल्यत्वादिति शङ्कते कथमिति भूतानां सविशेषत्वादिभावेऽपि परस्य तदभावादत्यन्तवैलक्षण्यमिति वक्तुं जन्मनो भावविकारे सादित्वमाह सर्वेषामिति तत्र हेतुमाह जन्मेति जन्मान्तरेणोत्तरे विकारा युज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः विनाशानन्तरभाविनोऽपि विकारस्य कस्यचिदुपपत्तेर्न तस्यान्त्यविकारत्वमित्याशङ्क्याह विनाशादिति तस्यान्त्यविकारत्वे सिद्धे फलितमाह अत इति तेषां जन्मादीनां कार्याणि कादाचित्कसत्त्वानि तदधिकरणानि तैः सहेति यावत् परमेश्वरस्य भूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरति तस्मादिति निर्विशेषत्वं सर्वभावविकारविरहित्वं कूटस्थत्वमेकत्वमद्वितीयत्वं यः पश्यतीत्यादि व्याचष्टे य एवमिति उक्तविशेषणमीश्वरं पश्यन्नेव पश्यतीत्युक्तमाक्षिपति नन्विति ईश्वरपराङ्मुखस्यानात्मनिष्ठस्य तद्दर्शित्वेऽपि विपरीतदर्शित्वादीश्वरप्रवणस्यैव सम्यग्दर्शित्वमिति विवक्षित्वा विशेषणमिति परिहरति सत्यमिति उक्तमेव दृष्टान्तेन विवृणोति यथेत्यादिना यः पश्यतीत्यादेरर्थमुपसंहरति इतर इति परवस्तुनिष्ठेभ्यो व्यतिरिक्ता इत्यर्थः ॥ २७ ॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

शाङ्करभाष्यम् ।

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिकर्त्तव्येति श्लोक आरभ्यते समं पश्यन्नीति समं पश्यन्नुपलभमानो हि तस्मात् सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरं अतीतानन्तरश्लोकोपलक्षणमित्यर्थः समं पश्यन् किञ्च हिनस्ति हिंसां न करोति आत्मना स्वेनैव स्वमात्मानं ततस्तस्मात् अहिंसनात् याति परां प्रकृष्टां गतिं मोक्षाख्यां ननु नैव कश्चित्

आनन्दगिरिकृतटीका ।

प्रकृतसम्यक्ज्ञानेन किमित्यपेक्षायां तत्फलोक्त्या तस्यैव स्तुत्वा तद्धेतौ पुरुषं प्रवर्तयितुं श्लोकान्तरमित्याह यथोक्तस्येति यस्मादित्यस्य ततःशब्देन सम्बन्धः सर्वभूतेषु तुल्यतया स्थितं पूर्वोक्तलक्षणमीश्वरं निर्विशेषं पश्यन्नात्मानमात्मना यस्मान्न हिनस्ति ततस्तस्मान्मोक्षाख्यां परां गतिं याति इति योजना तत्र पादत्रयेण ज्ञानाद्ध्यानध्वस्तध्वस्तानर्थस्तोक्ताज्ञानमिथ्या ज्ञानावरणयोर्नाशे सर्वोत्कृष्टां गतिं परमपुरुषार्थं परमानन्दमनुभवति विद्वानिति चतुर्थपादार्थः न हिनस्त्यात्मनात्मानमिति यथाश्रुतमादाय चोदयति

स्वामिकृतटीका ।

अविवेककृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह समभिति स्थावरजङ्गमात्मकेषु भूतेषु निर्विशेषसद्रूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति अतएव तेषु विनश्यत्स्वविनश्यन्तं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः ॥ २७ ॥

भाषा अनुवाद ।

अविवेकसे संसारकी उत्पत्ति कहिकर अब संसारकी निवृत्तिके अर्थ प्रकृतिसे भिन्न स्वरूप जो आत्मा उसका शोभन दर्शन कहते हैं कि स्थावरजंगमात्मक सर्वभूतमे निर्विशेष कहे समान सत्स्वरूप समभावसे स्थायी परमात्माको जो मनुष्य देखते हैं और भूतोंके विनाशमे आत्माको अविनाशी रूप देखते हैं तेई शोभन देखते हैं और कोई नहीं ॥ २७ ॥

## शाङ्करभाष्यम् ।

प्राणी स्वयं स्वमात्मानं न हिनस्ति कथमुच्यतेऽप्राप्तं हिनस्तीति यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्ष इत्यादिनैष दोषः अज्ञानामात्मतिरस्करणोपपत्तेः सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मैः कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते न चैवन्तश्चैवं हत्वा नाशेवन्तमपि हत्वान्यमित्येवं नवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञो यस्तु परमार्थात्मा असावपि सर्वदाऽविद्ययाहत इव विद्यमानफलाभावादिति सर्वे आत्महना एवाविद्वांसो यस्त्वितरो यथोक्तात्मदर्शी स तु उभयथाप्यात्मनात्मानं न हिनस्ति ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः ॥ २८ ॥

### आनन्दगिरिकृतटीका ।

नन्विति न पृथिव्यामिति प्राप्तिद्वारा निषेधवचनान्तरिक्षेण दिवीति प्राप्त्यभावाच्च प्रतिषेधो मुख्यो नेष्यते तथेहापि प्राप्तिं विना निषेधो न युक्तिमानित्याह यथेति अज्ञानामात्मनैवात्महिंसा सम्भवाद्विदुषां तद्भावोक्तिर्युक्तेति समाधत्ते नैष दोष इति संगृहीतं व्याचष्टेति सर्वो हीति अनात्मशब्दो देहादिविषयः अविदुषामारोपितात्महन्तृत्वं निगमयति इत्यात्मेति तथापि पारमार्थिकस्यात्मनो हननाभावात् तेषां सर्वेषाम् आत्महन्तृत्वमित्याशङ्क्याह यस्त्विति उक्तरीत्या सर्वेषामविदुषामात्महन्तृत्वं सिद्धं इत्युपसंहरति सर्व इति आत्मनैवात्महननमविदुषां दृष्टं तदिह विद्वद्विषये शक्यं निषेद्धुमित्याह यस्त्वितर इति उभयथापीत्यारोपानारोपाभ्यामित्यर्थः ज्ञानादनर्थभ्रमभ्रंशे पूर्वोक्तपरमानन्दप्राप्त्या परिच्छिन्नत्वं युक्तमित्याह तत इति ॥ २८ ॥

### स्वामीकृतटीका ।

कुत इत्यत आह समं पश्यन्निति सर्वत्र भूतमात्रे समं सम्यक् स प्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् नहि यस्मादात्मना स्वेनैवात्मानं न हिनस्ति अविद्यया सच्चिदानन्दरूपमात्मानं तिरस्कृत्य न विनाशयति ततश्च परां गतिं मोक्षं प्राप्नोति यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति तथाच श्रुतिः असूर्या नाम ते लोका अन्धेन तमसा वृताः तां स्ते प्रेत्याभिगच्छन्ति ये केचित् आत्महनो जना इति ॥ २८ ॥

## प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
## यः पश्यति तथाऽत्मान मकर्त्तारं स पश्यति ॥ २९ ॥

### शाङ्करभाष्यम्।

सर्वभूतस्थमीशं समम्पश्यन् नहिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मसु इत्येतदाशङ्क्याह प्रकृत्यैवेति प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका मायान्तु प्रकृतिं विद्यादिति मन्त्रवर्णात्तया प्रकृत्यैव च नान्येन महदादिकार्य्यकारणाकारपरिणततया तान्येव कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निवर्त्तमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभ्यते तथात्मानं क्षेत्रज्ञमकर्त्तारं सर्वोपाधिविवर्ज्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः निर्गुणस्याकर्त्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥ २९ ॥

### आनन्दगिरिकृतटीका।

श्लोकान्तरं शङ्कोत्तरत्वेनावतारयितुमनुवदति सर्वेति प्रतिदेहं धर्माधर्मादिमत्त्वेनात्मनो भेदभानाच्च सम्यक्दर्शनमिति शङ्कते तदिति स्वगुणैः सुखदुःखादिभिः स्वकर्मभिश्च धर्माधर्माख्यैर्वैलक्षण्यात् प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु कथं साम्येन दर्शनमित्येतदाशङ्क्य परिहरतीत्याह एतदिति प्रकृतिशब्दस्य स्वभाववाचित्वं व्यावर्तयति प्रकृतिरिति माया-

### भाषा अनुवाद।

और उस शोभन दर्शन होनेका कारण क्या हैं इसपर कहते हैं कि सोई शोभन देखनेवाला मनुष्य यावत् भूतमात्रमे सम्यक प्रकारसे अक्षरस्वरूप अवस्थित परमात्मा का दर्शन करिके आप अपनेको नष्ट नहीं कर्त्ता अर्थात् सच्चिदानन्द आत्मास्वरूप को अविद्या अज्ञानसे आवरण करिके नाश नहीं करता है तिससे श्रेष्ठगति मुक्तिरूप को प्राप्त होता है और जो इस पूर्वोक्तरूपसे नहो देखता है सो शरीरहीको आत्मा करिके देखनेवाला शरीरके सहित अपनेको अवश्यही नष्ट कर्त्ता है सोई श्रुति कहती हैं कि जो उक्तप्रकार से आत्महा होता है सोई मरणके अनन्तर प्रकाशशून्य अन्धकारसे आवृत जो स्थान तहां को जाता है ॥ २८ ॥

**यदा भूतपृथग्भाव मेकस्थ मनुपश्यति।**
**अतएव च विस्तारं ब्रह्म सम्पद्यते तदा॥ ३०॥**

शाङ्करभाष्यम्।

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयते यदेति यदा यस्मिन् काले भूतपृथक्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्थमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशतो मत्वात्मानं प्रत्यक्षत्वेन पश्य-

आनन्दगिरिकृतटीका।

शब्दस्य सम्वित्पर्य्यायत्वं मत्वाह त्रिगुणेति उक्तपरस्य शक्तिर्मायेत्यत्र श्रुतिसंमतिमाह मायान्त्विति अन्येन केनचित् क्रियमाणानि न भवन्ति कर्माणीत्येवकारार्थमाह नान्ये-नेति किन्त्वदन्यद्विपेक्ष्यमित्युक्ते सांख्याभिप्रेता प्रधानाख्या प्रकृतिरित्याह महदादीति सर्वप्रकारत्वं कार्य्यत्वनिमित्तत्वादिना प्रकारबाहुल्यमात्मानमकर्त्तृविशेषणं सः पश्यतीति पूर्वेण सम्बन्धः स पश्यतीत्ययुक्तं पुनरुक्तेरित्याशङ्क्याह स परमार्थेति आत्मानं प्रतिदेहं भिन्नत्वे तेषु समदर्शनमयुक्तमित्युक्तस्य कः समाधिरित्याशङ्क्याह निर्गुणत्वेति॥ २९॥

स्वामिकृतटीका।

ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनः समत्वमित्याशङ्क्याह प्रकृत्यैवेति प्रकृत्यैव देहेन्द्रियाकारेण परिणतया सर्वशः सर्वैः प्रकारैः क्रियमाणानि कर्माणि यः पश्यति तथात्मानञ्चाकर्त्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वत इत्येवं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः॥ २९॥

भाषा अनुवाद।

जो कहा कि शुभ अशुभ कर्मके कर्त्तृत्व हेतुसे वैषम्य देखपड़ती है फेरि आत्माका समत्व कैसे है इस पर कहते हैं कि जो देह इन्द्रिय आकारमे रूपान्तर को अर्थात् भिन्नरूप को प्राप्त प्रकृति के द्वारा नाना प्रकार क्रियमाण कर्म होते हैं ऐसे जो मनुष्य देखते है औ अपने को अकर्त्ता देखे है अर्थात् स्थूलशरीरमे अहं बुद्धिसे आत्मा कर्त्ता होता हैं और स्वरूपसे उस को कर्त्तृत्व नहीं है ऐसे जो मनुष्य देखे है सो सम्यक् देखे है सोई कहा है कि यः पश्यति स पश्यति इति॥ २९॥

## शाङ्करभाष्यम् ।

त्यात्मैव इदं सर्वमिति अतएव च तस्मादेव च विस्तारमुत्पत्तिमनुपश्यति आत्मनः प्राण आत्मन आशा आत्मनः स्वर आत्मन आकाश आत्मनस्तेज आत्मन आप आत्मन आविर्भाव तिरोभावौ आत्मनो भूरात्मनोऽन्नमित्येवमादिप्रकारैर्विस्तारं यदा पश्यति तदा ब्रह्म सम्पद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः ॥ ३० ॥

### आनन्दगिरिकृतटीका ।

प्रकृतेर्विकाराणाञ्च सांख्यवत् पुरुषादन्यत्वप्रसक्तौ प्रत्याह पुनरपीति उपदेशजनितं शास्त्रदृष्टिमनुवदति आत्मैवेति भूतानां विकाराणां नानात्वं प्रकृत्या सहात्ममात्रतया प्रवीनं पश्यति नहि भूतपृथक्त्वं सत्यां प्रकृतौ केवले परस्मिन्विलापयितुं शक्यत इत्यर्थः परिपूर्णादात्मन एव प्रकृत्यादेर्विशेषान्तस्य स्वरूपलाभमुपलभ्य तन्मात्रतां पश्यतीत्याह अतएवेति उक्तमेव विस्तारं श्रुत्यवष्टम्भेन स्पष्टयति आत्मन इति ब्रह्मसंपत्तिर्नामपूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्वस्यात्मसात्कृतत्वादित्याह ब्रह्मैवेति ज्ञानसमानकाले मुक्तिरिति सूचयति तदेति ॥ ३० ॥

### स्वामिकृतटीका ।

इदानीं भूतानामपि प्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनो भेदमपश्यन् ब्रह्मत्वमुपैतीत्याह यदेति यदा भूतानां स्थावरजङ्गमानां पृथग्भावं भेदं एकस्थं एकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ प्रलये स्थितमनुपश्यति आलोचयति अतएव तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमये अनुपश्यति तदा प्रकृतितावन्मात्रत्वेन भूतानामप्यभेदं पश्यन् परिपूर्णं ब्रह्म संपद्यते ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥

### भाषा अनुवाद ।

अब प्रकृतिके सकल कार्यभूत औ तिनकी कारण स्वरूप प्रकृतिमात्र इस भेदके अभाव हेतुसे जो मनुष्य भूतगत भेदजनित आत्माका भेद नहीं देखे हैं ऐसे मनुष्यों को ब्रह्मभाव प्राप्ति कहते हैं कि जब स्थावर जङ्गम भूतोंका पृथक्भाव कहे भेदको असे देखते हैं कि एक यही परमेश्वरकी शक्तिरूप प्रकृतिसे सृष्टि स्थिति प्रलय कालमे भूतोंकी उत्पत्ति पालन नाश निरन्तर देखते हैं और तत्तत्कालमे प्रकृतिस्वरूपमात्र देखते भूतोंके अभेददर्शी लोग परिपूर्णस्वरूप ब्रह्महीं हैं ॥ ३० ॥

## अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
## शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

शाङ्करभाष्यम् ।

एकस्यात्मनः सर्वदेहात्मत्वे तद्दोषसम्बन्धे प्राप्तमिदमुच्यते अनादीति अनादित्वादनादेर्भावोऽनादित्वमादिः कारणं यस्य नास्ति तदनादि- यद्ध्यादिमत् तत् स्वेनात्मना व्येत्ययन्त्वनादित्वान्निरवयव इति कृत्वा न व्येति तथा निर्गुणत्वात् सगुणो हि गुणव्ययादात्मव्ययन्तु निर्गुणत्वाच्च न व्येतीति परमात्मायमव्ययो नास्य व्ययो विद्यत इत्यव्ययो यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति तदकरणादेव तत्फलेन न लिप्यते यो हि कर्त्ता स कर्मफलेन लिप्यते अयन्त्वकर्ताऽतो आत्मा न लिप्यते इत्यर्थः कः पुनर्देहेषु करोति लिप्यते च यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इद- मनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञञ्चापि मां विद्धीत्याद्यथनास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा नास्तीति सर्वथा दुर्वि- ज्ञेयं दुर्वाच्यञ्चेति भगवत् प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः

आनन्दगिरिकृतटीका ।

परिपूर्णत्वेन सर्वात्मत्वे प्राप्तमात्मनो देहादिगतेन कर्तृत्वादिना तद्वत्त्वं दृष्टं हि पवित्रस्यापि पञ्चगव्यादेरपवित्रसंसर्गात् तद्दोषेण दुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमव- तारयति एकस्येति अनादित्वमेव साधयति आदिरिति तथापि किं स्यादित्याशङ्क्य कार्यत्वकृतव्ययाभावः सिध्यतीत्याह यद्धीति तथापि गुणापकर्षद्वारको व्ययो भविष्यति नेत्याह तथेति निरवयवत्वादेव अवयवद्वारकस्य निर्गुणत्वादगुणद्वारकस्य च व्ययस्याभावेऽपि स्वभावतो व्ययः स्यादित्याशङ्क्याह परमात्मेति परमात्मनः स्वतः परतो वा व्ययाभावे फलितमाह यत इति स्वमहिम्नि प्रतिष्ठस्य कथं शरीरस्थत्वं तत्राह शरीरेष्विति सर्वगत- त्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहाद्यात्मना वा न करोति कूटस्थत्वाद्दे- हादेश्च कल्पितत्वादित्यर्थः कर्तृत्वाभावेऽपि भोक्तृत्वं स्यादित्याशङ्क्याह तदकरणादिति तदेवोपपादयति यो हीति परस्य कर्तृत्वादेरभावे कस्य तदिष्टमिति पृच्छति कः पुनरिति परस्मादन्यस्य कस्यचिज्जीवस्य कर्तृत्वादीत्याशङ्कामनुवदति यदीति तस्मिन् पक्षे प्रक्रमभङ्गः

## शाङ्करभाष्यम्।

सांख्यार्हतबौद्धैश्च तत्रायं परिहारो भगवता स्वेनैवोक्तः स्वभावस्तु प्रवर्तत इत्यविद्यामात्रे स्वभावो हि करोति लिप्यत इति व्यवहारो भवति न तु परमार्थत एकस्मिन् परमात्मनि तदस्त्यत एकस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥३१॥

### आनन्दगिरिकृतटीका।

स्यादिति दूषयति तत्र इति ईश्वरातिरिक्तजीवानङ्गीकारान्नोपक्रमविरोधोऽस्तीति शङ्कते अथेति तर्हि प्रतीतकर्तृत्वादेरधिकरणं वक्तव्यमिति पूर्ववाद्याह क इति परस्यैव कर्तृत्वाद्याधारत्वान्नास्ति वक्तव्यमित्याशङ्क्याह परो वेति नास्तीति वाच्यमिति पूर्वेण सम्बन्धः नहि कर्तृत्वादिभाक्त्वं परस्यास्मदादिवदीश्वरत्वमिति भावः परस्यान्यस्य वा कर्तृत्वाद्यविशिष्टे शरीरस्थोऽपीत्यादिश्रुतिमूलमपि ज्ञातुं वक्तुञ्चाशक्यत्वात् त्याज्यमेवेति परोक्तसंमत्योपसंहरति सर्वथेति परस्य वस्तुनो कर्तुरभोक्तुश्चाविद्यया तदारोपादादेयमेव अभ्यनुज्ञातमिति परिहरति तत्रेति तमेव परिहारं प्रपञ्चयति अविद्येति व्यवहारिके कर्तृत्वाद्यविशिष्टे पारमार्थिकमेव किं नेष्यते तत्राह नत्विति वास्तवकर्तृत्वाद्यभावे लिङ्गमुपन्यस्यति अत इति ॥ ३१ ॥

### स्वामिकृतटीका।

तथापि संसारावस्थायां देहसम्बन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्वैषम्यं दुःपरिहारमिति कुतः समदर्शनं तत्राह अनादित्वादिति यदुत्पत्तिमत् तदेव हि सादिमत् गुणवाश्च व्ययी भवति अयन्तु परमात्मा अनादिर्निर्गुणश्च अतोऽव्ययः अविकारी-स्वभावः तस्मात् शरीरे स्थितोऽपि न किञ्चित् करोति नच कर्मफलैर्लिप्यते ॥ ३१ ॥

## भाषा अनुवाद।

और जो कहो कि पूर्वोक्त रूप आत्माके भेदका अभाव होनेसे भी संसारावस्था में देहसंबन्धसे जो कर्म और उन्ही कर्मोंका फलरूप जो सुख दुःख आदि तिनके द्वारा वैषम्यभाव तो नहीं दूर हो सके है इस से वैसे आत्माका सम्यक् दर्शन कैसे संभव होय इस शङ्कापर कहते हैं कि जिसकी उत्पत्ति होती उसका अवश्य आदि है और जो गुणयुक्त वस्तु है

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते॥ ३२॥**

शाङ्करभाष्यम्।

किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह यथा सर्वगतमिति यथा सर्वगतं सर्वव्याप्यपि सत् सौक्ष्म्यात् सूक्ष्मभावादाकाशं नोपलिप्यते न सम्बध्यते सर्वत्र अवस्थितो देहे तथात्मा नोपलिप्यते॥ ३२॥

आनन्दगिरिकृतटीका।

सूक्ष्मभावादप्रतिहतस्वभावत्वादित्यर्थः न सम्बध्यते पङ्कादिभिरिति शेषः॥ ३२॥

स्वामिकृतटीका।

तत्र हेतुं सदृष्टान्तमाह यथेति यथा सर्वगतपङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसङ्गत्वात् पङ्कादिभिर्नोपलिप्यते तथा सर्वत्र उत्तमे मध्यमे अधमे वा देहे स्थितोऽप्यात्मा नोपलिप्यते दैहिकैर्दोषगुणैर्न युज्यत इत्यर्थः॥ ३२॥

भाषा अनुवाद।

उसीको गुणनाश होनेसे रूपान्तर को प्राप्तिरूप विकार भी होता है किन्तु जिस हेतु यह जीव परमात्मा औ अनादि तथा निर्गुण हेतुसे अव्यय अर्थात् अविकारी है इससे हेकौन्तेय शरीरमे रहिके भी कोई कर्म नहीं कर्ता और कर्मफलसे भी लिप्त नहीं हो ता अर्थात् इसको कोई कर्म नहीं लगते हैं॥ ३१॥

अब आत्माके कर्म न करने औ कर्मफलमे लिप्त न होनेमे दृष्टान्त देतेहुये हेतु कहते हैं कि जैसे सूक्ष्मताके हेतुसे सर्वगत आकाश पङ्क आदिमे रहते भी असंगहेतुसे पङ्क आदि उसको नहीं लगते अर्थात् पङ्कसे वह लिप्त नहीं होता है तैसेही यावत् उत्तम मध्यम औ अधम शरीरोंमे रहिकेभी आत्मा लिप्त नहीं होता है अर्थात् शरीर संबन्धी पुण्य पाप-आदिसे युक्त नहीं होता है॥ ३२॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥
क्षेत्रक्षेत्रज्ञयोरेव मन्तरं ज्ञानचक्षुषा।
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमहाभारते भीष्मपर्वणि श्रीभगवद्गीतासूप-
निषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे प्रकृतिपुरुषविवेकयोगो नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

शाङ्करभाष्यम्।

किञ्च यथा प्रकाशयतीति यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सविताऽदित्यः तथा तद्वन्महाभूतादिधृत्यन्तं क्षेत्रमेकः सन् प्रकाशयति कः क्षेत्री परमात्मेत्यर्थः रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत् सर्वक्षेत्रेष्वेकः आत्मा अलेपकश्चेति ॥ ३३ ॥

आनन्दगिरिकृतटीका।

न करोति न लिप्यते चेत्यत्र दृष्टत्वेन दृश्यधर्मशून्यत्वं हेतुमाह किञ्चेति दृष्टान्तेन विवक्षितमर्थन्दर्शयति रवीति उभयविधधर्मार्थमेव स्फुटयति रविवदिति ॥ ३३ ॥

स्वामिकृतटीका।

असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेन दर्शितं प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न युज्यत इति रविदृष्टान्तेनाह यथा प्रकाशयतीति स्पष्टोऽर्थः ॥ ३३ ॥

भाषा अनुवाद।

असंग हेतु से परमात्मा की निर्लेपता आकाश के दृष्टान्तसे दिखाया अब प्रकाश कहिके भी जो प्रकाश्य वस्तुवोंके धर्मसे आत्मा युक्त नहीं है यह सूर्यके दृष्टान्तसे कहते हैं कि हे भारत अर्जुन एक यही सूर्य जैसे समस्त लोक को प्रकाश करते हैं परन्तु प्रकाश्य वस्तुके गुण दोषसे लिप्त

शाङ्करभाष्यम्।

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः क्षेत्रक्षेत्रज्ञयोरिति क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेण अन्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्य्योपदेशजनितमात्मप्रत्यायिकं ज्ञानचक्षुषा भूतप्रकृतिमोक्षञ्च भूतानां प्रकृतिरविद्यालक्षणा व्यक्ताख्यातस्याभूतप्रकृतेर्मोक्षणमभावगमनञ्च ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददति इत्यर्थः॥ ३४॥

इति श्रीभगवद्गीताभाष्ये त्रयोदशोऽध्यायः॥ १३॥

आनन्दगिरिकृतटीका।

अध्यायार्थं सफलमुपसंहरति समस्तेति विशेषकौटस्थ्यपरिणामादिलक्षणन्तद्वैलक्षण्यनित्यादिनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिरिति सिद्धम्॥ ३४॥

इति आनन्दगिरिकृतटीकायां त्रयोदशोऽध्यायः॥ १३॥

स्वामिकृतटीका।

अध्यायार्थमुपसंहरति क्षेत्रक्षेत्रज्ञयोरिति एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः तथा येयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशात् मोक्षं मोक्षोपायं ध्यानादिकञ्च ये विदुस्ते परं पदं यान्ति॥ विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम्॥ ३४॥

इति श्रीधरस्वामिकृतटीकायां त्रयोदशोऽध्यायः॥ १३॥

भाषा अनुवाद।

नहीं होते ऐसेही क्षेत्री जो आत्मा सो क्षेत्र कहे शरीर आदि सब को प्रकाश करते भी देहादिके गुण औ दोषसे लिप्त नहीं होता है यह तुम हमारी बात सत्य करके मानो हे भारत अर्जुन॥ ३३॥

अब अध्यायके अर्थका उपसंहार करते हैं कि इस प्रकारसे उक्त जो क्षेत्र औ क्षेत्रज्ञ तिनका भेद जो मनुष्य विवेक ज्ञानरूप चक्षुके द्वारा देखते हैं और यही पूर्व कही हुई जो प्रकृति तिससे मोक्ष अर्थात् मुक्तिका

भाषा अनुवाद ।

उपायरूप ध्यान धारणा आदि जो मनुष्य जानते हैं तेई परमपदको जाते हैं ॥ ३४ ॥

अध्यास वशते अर्थात् निकट तथा संगहेतुसे एकभाव को प्राप्त जो प्रकृति औ पुरुष तिन दोनो को जिसने स्वरूपके भेदसे पृथक्रूप प्रतिपन्न किया अर्थात् निश्चय कर जाना सोई परमानन्द स्वरूप नन्दनन्दन श्रीकृष्ण भगवानको मैं जगन्नाथ सुकुल नामा प्रणाम करता हूं ॥

इति जगन्नाथसुक्ल विरचित मनभावनी भाषाटीकायां
त्रयोदशोऽध्यायः ॥ १३ ॥

---

## श्रीमद्भगवद्गीता ।

## चतुर्दशोऽध्यायः ।

---

### श्रीभगवानुवाच ।

**परं भूयः प्रवक्ष्यामि ज्ञानिनां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

शाङ्करभाष्यम् ।

सर्वमुत्पाद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इति उक्तं तत् कथमिति तत्प्रदर्शनार्थं परं भूय इत्यादिरध्याय आरभ्यते अथवा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन् गुणे कथं संगः के वा गुणाः कथं वा बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यात् मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थञ्च श्रीभगवानुवाच परमिति परं ज्ञानमिति व्यवहितेन सम्बन्धः भूयः पुनः पूर्वेषु सर्वेषु अध्यायेषु असकृदुक्तमपि प्रवक्ष्यामि तच्च परं परवस्तुविषयत्वात् किं तत् ज्ञानं सर्वेषां ज्ञानानामुत्तमं उत्तमफलत्वात् ज्ञानानामिति नामानि त्वादीनां किं तर्हि यज्ञादि ज्ञेयवस्तुविषयाणां इति तानि न मोक्षायेदन्तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थं यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यां इतोऽस्माद्देहबन्धनादूर्द्ध्वं गताः प्राप्ताः ॥ १ ॥

आनन्दगिरिकृतटीका ।

क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्यायश्चोरुत्पाद्योत्पादकत्वरूपां सङ्गतिमाह सर्वमिति विधान्तरेणाध्यायारम्भं सूचयति अथ

आनन्दगिरिकृतटीका।

ईति तदेव वस्तुकृत्समनुवदति ईश्वरेति प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासः तस्यैव हुत्वेतु सङ्गोऽभिनिवेशः वक्ष्यमाणाकाङ्क्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भं पूर्ववदेव पूर्वाध्यायान्वयसिद्धिरित्याह कस्मिन्निति पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः परमित्यादि भाविकाजार्थत्वं व्यावर्तयितुं सङ्गतिमाह परमिति भूयःशब्दस्याधिकार्थत्व-मिष्ट सतीत्याह पुनरिति पुनःशब्दार्थमेव बिवृणोति पूर्वेष्विति पुनरुक्तिस्तर्हीत्याशङ्क्य सूक्ष्मत्वेन दुर्बोधत्वात् पुनर्वचनमर्थवदित्याह तस्येति विशेष्यं प्रश्नद्वारा निर्दिशति किन्तदिति निर्द्धारणार्थां षष्ठीमादाय तत्र प्रकर्षं दर्शयति सर्वेषामिति परमुत्तम-मिति पुनरुक्तिमाशङ्क्य विषयफलभेदान्नैवमित्याह उत्तमेति ज्ञानं ज्ञेयमित्यादौ ज्ञान-शब्देनामानित्वादीनामुक्तत्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य ज्ञानिनामिति साध्यत्वेनोक्त-त्वान्न तस्य वक्तव्यतेत्याशङ्क्याह ज्ञानिनामिति नामानित्वादीनां ग्रहणमिति शेषः इति शब्दादूर्ध्वं पूर्ववदेव शेषो द्रष्टव्यः यथोक्तज्ञानापेक्षया कुतस्तज्ज्ञानस्य प्रकर्षस्तत्राह तान्नीति फलमाह श्रोतृबुद्धीति ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमाद्वक्ष्येत्याशङ्क्याह प्राप्येति मुनिशब्दस्य चतुर्थाश्रमविषयत्वे तस्मात्तदेव ज्ञानयोगात् कुतस्तेषां मुक्तिरित्याशङ्क्याह मननेति सिद्धेर्ज्ञानत्वं परामिति विशेषणात् व्यावर्त्य मुक्तित्वमाह मोक्षा-ख्यामिति देहाख्यस्य बन्धनस्याध्यत्वमाह अस्मादिति ॥ १ ॥

स्वामिकृतटीका।

पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे यावत् संजायते किञ्चित् सत्वं स्थावरजङ्गमं क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धीत्युक्तं स च क्षेत्र-क्षेत्रज्ञयोः संयोगो निरीश्वरसांख्यानामिव न स्वातन्त्र्येण किन्त्वीश्वरेच्छयैवेति कथन-पूर्वकं कारणं गुणसंगोऽस्य सदसद्योनिजन्मस्वित्यनेनोक्तं सत्वादिगुण[illegible]वैचित्र्यं प्रपञ्चयिष्यन्नेवं भूतं वक्ष्यमाणमर्थं स्तौति परं भूय इति द्वाभ्यां परं [illegible] ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि तुभ्यं प्रकर्षेण वक्ष्यामि कथं भूतं ज्ञानिनां तपः कर्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात् तदेवाह यज्ज्ञात्वा मुनयो मननशीलाः सर्वे इतो देहबन्धनात् परां सिद्धिं मोक्षं प्राप्ताः ॥ १ ॥

भाषा अनुवाद।

तेरहें अध्यायके छब्बीसयें श्लोकसे जो कहा कि प्रकृति औ पुरुषके संयोगसे संसारकी उत्पत्ति होती है निरीश्वरवादी सांख्यमतके अवल-म्बियोंको ऐसी निश्चयके अनुसार संसारको स्वाधीनता नही है किन्तु

## इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
## सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

### शाङ्करभाष्यम्

तस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति इदमिति इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतन्मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो नतु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात् गीताशास्त्रे फलवादश्चायं स्तुत्यर्थमुच्यते सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्तिच व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः ॥ २ ॥

### आनन्दगिरिकृतटीका ।

ज्ञानफलस्य कर्मफलवैलक्षण्यमाह तस्याश्चेति कथं ज्ञानाश्रयणं तद्धेतुश्रवणादिसम्पत्तिद्वारेत्याह ज्ञानेति साधर्म्ये गोगवयोरिव विद्वदीश्वरयोरपि भेदः स्यादित्याशङ्क्याह मत्स्वरूपतामिति साधर्म्येऽस्य मुख्यत्वे भेद ध्रौव्याद्गीताशास्त्र विरोधः स्यादित्याह न त्विति ज्ञानस्तुतये तत्फलस्य विवक्षितत्वान्न नात्र साङ्ख्यमिष्टमित्याह फलेति साङ्ख्यं

### भाषा अनुवाद ।

ईश्वरकी इच्छाके क्रमहीसे संसारकी विचित्रता होती यह कहतेहुये भगवान् श्रीकृष्णचन्द्र जीने प्रकृति पुरुषको स्वाधीनताके निवारणपूर्वक सत्त्व आदि गुणोंके संगसे संसारकी विचित्रता होती और तरहें अध्यायके एकइसयें श्लोकमे कहा जो सत्त्वादि गुणोंसे संसारकी विचित्रता सो अब चौदहें अध्याय मे विस्तारसे भगवान् कहते हैं कि और जो कहेंगे उसकी प्रशंसा दो श्लोकसे कहते हैं कि परम जो परमार्थ जिसके द्वारा जानाजाय ऐसा जो ज्ञान उपदेश सो फेरि तुमसे कहूंगा सो ज्ञान किस प्रकारका है इस अपेक्षापर कहते हैं कि यह ज्ञान मोक्षका हेतु है इससे तप औ कर्म आदि विषयक सकल ज्ञानोंके बीच यह उत्तम है जिसको जानिके मुनिजन स्थूल सूक्ष्म शरीरबन्धनसे छूटि कर श्रेष्ठ सिद्धिरूप मुक्तिको प्राप्त भये हैं इससे ज्ञानीयों का यह उत्तम ज्ञान है यह जानो ॥ १ ॥

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

शाङ्करभाष्यम् ।

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह ममेति मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्वकार्य्येभ्यो महत्त्वात् भरणाच्च स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते तस्मिन् महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतजन्मकारणं बीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्या-कामकर्म्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः सम्भव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्मात् योनि-मूलकारणाद्गर्भाधानात् भवति ॥ ३ ॥

आनन्दगिरिकृतटीका ।

श्रीफलं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येतेत्यर्थः ईश्वरात्मतां गतानामेव अवान्तरसर्गादौ जन्माद्यभावेऽपि महासर्गादौ तद्भविष्यतीत्याशङ्क्याह सर्गेऽपीति ॥ २ ॥

ज्ञानस्तुत्या तदभिमुखाय व्यवहितचेतसे विवक्षितमर्थमाह क्षेत्रेति स्वरूपत्वेन

स्वामिकृतटीका ।

किञ्च इदमिति इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य ज्ञानसाधनमनुष्ठाय मम साधर्म्यं मद्रू-पत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते तथा प्रलयेऽपि न व्यथन्ति प्रलयदुःखं नानुभवन्ति पुनर्नावर्त्तन्त इत्यर्थः ॥ २ ॥

भाषा अनुवाद ।

और यही ज्ञान अर्थात् ज्ञानका साधन जो अब तुमसे कहूँगा तिसका अनुष्ठान करिके कहे आश्रय लेके सारूप्य मुक्तिको प्राप्त सकल मुनिजन सर्ग कहे ब्रह्मादिक की उत्पत्ति होनेसे भी उतपन्न नहीं होते हैं और प्रलयकाल मे भी प्रलयके दुःखको नहीं भोगते है अर्थात् पुनराग-मन से रहित होजाते हैं ॥ २ ॥

आनन्दगिरिकृतटीका।

त्वभूतत्वं धारयति मदीयेति ईश्वरी चिच्छक्तिं व्यावर्त्तयति त्रिगुणात्मिकेति सांख्यीय-प्रकृतिरपि मदीयेति आवर्त्तिता योनिशब्देन सर्वाणि भजनयोग्यानि कार्याणि प्रत्यु-पादानत्वाभिप्रेतमित्याह सर्वभूतानामिति प्रकृतेर्महत्त्वं साधयति सर्वेति सर्वकार्यव्याप्ति-मादाय योनावेव ब्रह्मशब्दः न लिङ्गैरस्मादूर्ध्वमन्यदर्थान्तरं किञ्चिदित्याशङ्क्याह योनि-रिति तस्मिन्नित्यादि व्याचष्टे तस्मिन्निति देहस्य क्षेत्रक्षेत्रज्ञसंयोगस्य भूतकारणत्वमिति वक्तुमुपक्रम्य किमिदमन्यदादर्शितमित्याशङ्क्याह चेतनेति गर्भशब्देनोक्तसंयोगस्य फलं दर्शयति सम्भव इति आदिकर्त्ता सर्वभूतानां इति स्तुत्वा हिरण्यगर्भकार्यत्वावगमाद्भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याह हिरण्यगर्भेति ॥ ३ ॥

स्वामिकृतटीका।

तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं नतु स्वतन्त्रयोरितीमं विवक्षितमर्थं कथयति ममेति देशतः कालतश्चापरि-च्छिन्नत्वान्महत्तदुच्छिनत्वात् स्वकार्याणां वृद्धिहेतुत्वाद्वा ब्रह्मप्रकृतिरित्यर्थः तन्महद्

भाषा अनुवाद।

उसी ज्ञानके साधनकी प्रशंसा करि श्रोता अर्जुनको श्रवणकी अभिलाष वढ़ाय परमेश्वरके आधीन जो प्रकृति औ पुरुष दोनो सकल भूतमात्र की उत्पत्तिके कारण हैं परन्तु स्वाधीन प्रकृति पुरुष को कारणत्व नहीं है यही तात्पर्य अब कहते हैं कि प्रकृति देशकालसे अपरिच्छिन्न अर्थात् सबसे भिन्न महत् कहे अनन्त समस्त कार्यकी हेतुरूप ब्रह्म है सो यही महत् ब्रह्मनाम जो प्रकृति सो परमेश्वर स्वरूप हमारी जोनि है अर्थात् गर्भधा-रण का स्थान है सो इसी प्रकृतिमे मै गर्भकहे जगत्के विस्तारका हेतु चिदाभास कहे चेतन अंश वीजरूप को स्थापन करता हूं औ प्रलयकालमे हमारेही मे लीन होय है और अविद्यासे उत्पन्न जो काम्य कर्म्म तिनके संस्कारसे युक्त क्षेत्रज्ञ आत्माकी सृष्टिकाल मे भोग्य जो क्षेत्र कहे नानाप्र-कार देह तिनमे सम्यक् प्रकारसे योग करता हूं और वही गर्भ आधान से ब्रह्मः आदि समस्त भूतको उत्पत्ति होती है हे भारत अर्जुन श्रवण करो ॥ ३ ॥

सर्वयोनिषु कौन्तेय मूर्त्तयः सम्भवन्ति याः।
तासां ब्रह्म महद्योनि रहं बीजप्रदः पिता ॥ ४ ॥

## शाङ्करभाष्यम्।

सर्वयोनिष्विति देव पितृ मनुष्य पशु मृगादि सर्वयोनिषु कौन्तेय मूर्तयो देहसंस्थानलक्षणा मूर्च्छिताङ्गावयवा मूर्त्तयः सम्भवन्ति यास्तासां मूर्त्तीनां ब्रह्म महत् सर्वावस्थं योनिः कारणमहमीश्वरो बीजप्रदो गर्भाधानस्य कर्त्ता पिता ॥ ४ ॥

### आनन्दगिरिकृतटीका।

ननु कथमुक्तकारणानुरोधेन हिरण्यगर्भोद्भवमभ्युपेत्य भूतानामुत्पत्तिरुच्यते देवादि-जातिविशेषेषु देहविशेषाणां कारणान्तरसम्भवात्तत्राह सर्वयोनिष्विति तत्र तत्र हेत्व-न्तरप्रतिभासे कुतोऽस्य हेतुत्वमित्याशङ्क्य न तद्रूपेणास्यैवावस्थानादित्याह सर्वावस्थ-मिति ॥ ४ ॥

### स्वामीकृतटीका।

ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानं तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि निःक्षिपामि प्रलये मयि लीनं सन्तमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः ततो गर्भाधानात् सर्वभूतानां ब्रह्मादीनां सम्भव उत्पत्तिर्भव-तीति ॥३॥ न केवलं सृष्ट्युपक्रम एव मदधिष्ठानेनाभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारो-ऽपि तु सर्वदैवेत्याह सर्वेति सर्वासु योनिषु मनुष्याद्यासु या मूर्त्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते तासां मूर्त्तीनां महद्ब्रह्म प्रकृतिर्योनिर्मातृस्थानीया अहञ्च बीजप्रदः पिता गर्भा-धानकर्त्ता पिता ॥ ४ ॥

## भाषा अनुवाद।

केवल सृष्टिकालही मे प्रकृति पुरुषके द्वारा भूतों का जन्म होता है ऐसा न जानो परन्तु सदा सर्वदा प्रकृति पुरुष से प्राणी प्रगट हुआकरते यह कहते हैं कि हे कौन्तेय अर्जुन जितने मनुष्य आदि योनि स्थावर-जंगम स्वरूप उत्पन्न होते हैं उनको निरन्तर बढावनेवाली प्रकृति योनि है अर्थात् मातारूप है औ बीजप्रदाता पितारूप गर्भाधानका कर्त्ता पुरुष-रूप मैं ही ॥ ४ ॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

शाङ्करभाष्यम् ।

के गुणाः कथं बध्नन्तीत्युच्यते सत्त्वमिति सत्त्वं रजस्तम इत्येव नामानो गुणा इति पारिभाषिकः शब्दो न रूपादिवत् द्रव्याश्रिताः नच गुणगुणिनोरन्यत्वमत्र विवक्षितं तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रति लभत इति निबध्नन्तीत्युच्यते ते च प्रकृतिसम्भवा भगवन्मायासम्भवा निबध्नन्तीव हे महाबाहो महान्तौ समर्थतरावाजानुप्रलम्बौ बाहू यस्य स महाबाहुः हे महाबाहो देहे शरीरे देहिनं देहवन्तं अव्ययमव्ययत्वञ्चोक्तमनादित्वादिश्लोके ॥ ५ ॥

आनन्दगिरिकृतटीका ।

एवं क्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिं दर्शयता ब्रह्मैवाविद्यया संसरतीत्युक्तम् इदानीमध्यायादावुक्तमाकाङ्क्षाद्वयं पूर्वमनूद्यानन्तरश्लोकेनोत्तरमाह के गुणा इति सत्त्वादिषु कथं गुणशब्दप्रवृत्तिरित्याशङ्क्य परतन्त्रत्वादित्याह गुणा इति रूपादिष्विव गुणशब्दः सत्त्वादिषु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्यादित्याशङ्क्याह पारिभाषिक इति प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वान्नैवमित्याह न रूपादिवदिति गुणानां प्रकृतेश्च पृथगुक्तेरन्यत्वे कुतस्तेषां प्रकृत्यात्मत्वमित्याशङ्क्याह नच गुणेति अत्यन्तभेदे गवाश्ववत्तद्भावासम्भवादित्यर्थः भेदाभेदे च तद्भावासम्भवाद्विशेषात् कुतस्तेषु गुणपरिभाषेत्याशङ्क्याह तस्मादिति क्षेत्रज्ञम् प्रति नित्यपारतन्त्र्यहेतुनाह अविद्येति के गुणा इत्यस्योत्तरमुक्तं कथं बध्नन्तीत्यस्योत्तरमाह क्षेत्रज्ञमिति तदेवोपपादयति तमास्पदीकृत्येति सम्भवत्यस्मादिति सम्भवः प्रकृतिः सम्भवो येषां ते तथेति प्राकृतानां गुणानां प्रकृत्यात्मकत्वमाह ते चेति सांख्यीयां प्रकृतिं प्रधानाख्यां व्यावर्तयति भगवदिति इवकारानुबन्धेन नितरां बध्नन्ति स्वविकारवत्तयोपदर्शयन्तीति क्रियापदं व्याख्याय महाबाहुशब्दं व्याचष्टे महान्ताविति देहवन्तं देहमात्मानं मन्यमानं देहस्वामिनमित्यर्थः कूटस्थस्य कथं बध्यमानत्वमित्याशङ्क्य कुर्यात्से रावणधियमिति न्यायेन माहात्म्यमिदमित्याह अव्ययमिति स्वतो धर्मतो वा व्ययो राहित्यापेक्षायामाह अव्ययत्वञ्चेति ॥ ५ ॥

स्वामिकृतटीका ।

तदेवं परमेश्वराधीनाभ्यां प्रकृतिपुरुषाभ्यां सर्वभूतोत्पत्तिं निरूप्येदानीं प्रकृतिसंगेन पुरुषस्य संसारं प्रपञ्चयति सत्त्वमित्यादि चतुर्भिः सत्त्वं रजस्तम इत्येवं संज्ञकास्त्रयो

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥ ६॥

शाङ्करभाष्यम्।

ननु न देही लिप्यते इत्युक्तं तत् कथमिह निबध्नन्तीत्यन्यथा उच्यते परिहृतं अस्माभिरिव शब्देन न निबध्नन्तीवेति तत्र सत्त्वमिति तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते निर्म्मलत्वात् स्फटिक इव मणिः प्रकाशकमनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति कथं सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषैव सुखेन संजननमिति सैषा अविद्या नहि विषयधर्मो विषयिणो भवति इच्छादि च धृत्यन्तं चेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता अतोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे संजयतीवासक्तमिव करोत्य-

स्वामिकृतटीका।

गुणाः प्रकृतिसम्भवाः प्रकृतेः सम्भव उद्भवो येषां ते तथोक्ताः गुणसाम्यं प्रकृतिस्तस्याः सकाशात् पृथक्त्वेनाभिव्यक्ताः सन्तः प्रकृतिकार्य्ये देहे तादात्म्येन स्थितं देहिमं चिदंशं वस्तुतोऽव्ययं निर्विकारमेव सन्तं निबध्नन्ति स्वकार्य्यैः सुखदुःखमोहादिभिः संयोजयन्तीत्यर्थः॥ ५॥

भाषा अनुवाद।

परमेश्वरके आधीन प्रकृति पुरुषके द्वारा प्राणियों की उत्पत्ति निरूपण-करिके अब प्रकृतिके संयोगसे पुरुषकी संसार अवस्था इस श्लोकसे लेकर चारि श्लोक पर्यन्त क्रमसे विस्तार करिके कहते हैं कि हे महाबाहो अर्जुन सत्त्वरज औ तम ये तीन गुणोंकी समान अवस्था रखनेवाली जो प्रकृति तिससे जिसकी उत्पत्ति हैं उसमे गुणों के धर्म अवश्य आवेंगे देखो प्रकृति से गुणोंके अनुसार भिन्न भिन्न प्रगट होय प्रकृतिके कार्यरूप शरीरमे अहं बुद्धियुक्त स्थित देहरूप चिदंश आत्मा जो सचमुच अव्यय निर्विकाररूप है उसको भी गुण अच्छीतरह से बद्ध करते हैं अर्थात् अपने कार्य सुख दुःख मोह आदि से युक्त करदेते हैं॥ ५॥

शाङ्करभाष्यम्।

सुखिनं सुखिनमिव तथा ज्ञानसंज्ञेन च देहिनं ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैवान्तःकरणस्य धर्मो नात्मनः आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च सुख इव ज्ञानादौ सङ्गो मन्तव्यः अनघ अव्यसन ॥ ६ ॥

आनन्दगिरिकृतटीका।

लिप्यते न स पापेनेत्यनेन विरुद्धमिदं निबध्नातीति वचनमिति शङ्कते नन्विति इव-कारानुबन्धेन क्रियापदं व्याचक्षाणैरस्माभिरस्य चोद्यस्य परिहृतत्वान्नैवमित्याह परिहृतमिति किं लक्षणो गुणः केन बध्नातीत्यपेक्षायामाह तत्रेति निर्द्धारणार्थतया सप्तमीं व्याचष्टे तत्र सत्त्वादीनामिति पुनस्तत्रेत्यनुवादमात्रं निर्मलत्वं स्वच्छत्वमावरणक्षमत्वं तस्मात् प्रकाशकं चैतन्याभिव्यञ्जकं निरुपद्रवमिति निर्मलं सत् सुखस्याभिव्यञ्जकमित्यर्थः केन द्वारेण तदात्मानं निबध्नातीति पृच्छति कथमिति सुखसङ्गेन बध्नातीत्युत्तरन्तदेव विवृणोति सुख्यहमित्यादिना सुखं सुखस्याभिव्यञ्जकसत्त्वपरिणामोऽत्र विषयभूतं सुखमुच्यते संश्लेषा-पादनमेव विशदयति स्वेनेति किमिति स्वेनेति विशेषणं सङ्गस्य वस्तुत्वसम्भवादित्याशङ्क्याह सैषेति नन्विच्छासङ्गोऽभिनिवेशश्चेत्येकोऽर्थस्तत्रेच्छादेरात्मधर्मत्वात् किमविद्ययेत्याशङ्क्य मनोधर्मत्वादिच्छादेर्नात्मधर्मतेत्याह नहीति इच्छादेरनात्मधर्मत्वे किं प्रमाणमित्याशङ्क्याह इच्छादि चेति तस्यात्मधर्मत्वासम्भवे फलितमाह अत इति सञ्जयतीव सत्त्वमिति शेषः इव-कारप्रयोगे हेतुमाह अविद्ययेति तस्या वस्तुतो नात्मसम्बन्धस्तथापि सम्बन्धान्तराभावादस्वा-तन्त्र्याच्च आत्मधर्मत्वमापाद्य इत्याचष्टे स्वकीयेति कृतिमदन्तःकरणस्य विषयत्वादात्मनः साधकत्वेन तद्विषयत्वेऽपि तदविवेकरूपा विद्येति तत्स्वरूपमाह विषयेति यथोक्ताविद्या-माहात्म्यमिदं यदस्वरूपे तद्धर्मे च सक्तिसम्पादनमित्याह असेति तदेव स्फुटयति असक्त-मिवेति प्रकारान्तरेण सत्त्वस्य निबन्धत्वमाह तथेति ज्ञायतेऽनेनेति सत्वपरिणामो ज्ञानं ज्ञेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नातीत्याह ज्ञानमित्यादिना विपक्षे दोषमाह आत्मेति स्वाभाविकत्वेन प्राप्तत्वात्तत्र स्वतः संयोगात्तद्वारा बन्धे च तन्निवृत्त्यनुपपत्तेर्नात्मधर्मत्वमित्यर्थः ज्ञानैश्वर्यादावपि क्षेत्रधर्मे सङ्गस्य पूर्ववदाविद्यकत्वं सूचयति सुख इवेति पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयति अन-घेति ॥ ६ ॥

स्वामिकृतटीका।

तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारञ्चाह तत्रेति तत्र तेषां गुणानां मध्ये सत्त्वं निर्मलत्वात् स्वच्छत्वात् स्फटिकमणिरिव प्रकाशकं भास्वरं अनामयञ्च निरुपद्रवं शान्त-

रजो रागात्मकं विद्धि तृष्णा सङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

शाङ्करभाष्यम् ।

रजो रागात्मकं इति रजोरागात्मकं रञ्जनाद्रागो गैरिकादिवद्रागात्मकं विद्धि जानीहि तृष्णासङ्गसमुद्भवं तृष्णा प्राप्ताभिलाषः आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणं संश्लेषः तृष्णासंगसमुद्भवं तृष्णासंगयोः समुद्भवं तृष्णासंगसमुद्भवं तन्निबध्नाति तद्रजः कौन्तेय कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु संगमनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥

आनन्दगिरिकृतटीका ।

रजसाऽपि किं लक्षणं कथं वा पुरुषं निबध्नातीत्याशङ्क्याह रज इति रज्यते संश्लिष्यतेऽनेन पुरुषो दृश्यैरिति रागोऽस्यात्मास्वरूपमिति रागात्मकं रजो जानीहीत्याह रञ्जनादिति समुद्भवत्यस्मादिति समुद्भवः तृष्णा चासङ्गश्च तृष्णासङ्गौ तयोः समुद्भवः तमिति विग्रहं

स्वामिकृतटीका ।

मित्यर्थः अतः शान्तत्वात् स्वकार्य्येण सुखेन यः सङ्गस्तेन बध्नाति प्रकाशकत्वाच्च स्वकार्य्येण ज्ञानेन यः सङ्गस्तेन च बध्नाति हे अनघ अपाप अहं सुखी ज्ञानी चेति मनोधर्म्मास्तदभिमानिनि क्षेत्रज्ञे संयोजयतीत्यर्थः ॥ ६ ॥

भाषा अनुवाद ।

तीन गुणों के बीच मे सतोगुण का स्वरूप और उसके बन्धकत्व की प्रकारता कहते हैं कि सतोगुण निर्मलताके हेतुसे फटिकके समान प्रकाशक कहे दीप्तियुक्त और अनामय अर्थात् निरुपद्रव शान्त स्वरूप है इसी से हे अनघ निःपाप अर्जुन शान्त स्वरू सतोगुण अपने कार्यरूप सुखमे जो आशक्ति के द्वारा बन्ध करता है और प्रकाशक है इस हेतुसे अपने कार्यरूप ज्ञान मे जो आशक्ति उसमे भी बद्ध करता है अर्थात् हम सुखी हम ज्ञानी इत्यादि मनके सकल धर्मका तिसके अभिमानी देही क्षेत्रज्ञरूप आत्माके साथ सम्पूर्णरूप से योग करदेता है अनघ पदसे जनाया कि गीता शास्त्र का अधिकारी पुण्यात्मा पुरुष है ॥ ६ ॥

## तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
## प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

### शाङ्करभाष्यम्।

तमस्त्विति तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां प्रमादालस्यनिद्राभिः प्रमादश्चालस्यञ्च निद्रा च प्रमादालस्यनिद्रास्ताभिस्तमो निबध्नाति भारत ॥ ८ ॥

### आनन्दगिरिकृतटीका।

गृहीत्वा कार्य्यद्वारा रजो विवक्षुस्तृष्णासङ्गयोरर्थभेदमाह तृष्णेत्यादिना रजसो लक्षणमुक्त्वा निबन्धनप्रकारमाह तद्रज इति कर्मसङ्गं विभजते दृष्टेति अकर्त्तारमेव पुरुषं करोमि इत्यभिमानेन प्रवर्त्तयतीत्यर्थः ॥ ७ ॥

तमस्तर्हि किं लक्षणं कथं वा पुरुषं निबध्नाति तत्राह तमस्त्विति गुणानां प्रकृतिसम्भवत्वाविशेषेऽपि तमसोऽज्ञानजत्वविशेषणं तद्विपरीतस्वभावापत्तेरिति मत्वाह अज्ञानादिति मुह्यति हिताहितेन विविच्यतेत्यनेन इति मोहनं विवेकप्रतिबन्धकमिति

### स्वामिकृतटीका।

रजसो लक्षणं बन्धकत्वञ्चाह रज इति रजः संज्ञकं गुणं रागात्मकमनुरञ्जनरूपं विद्धि अत एव तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः सङ्गः प्राप्तेऽर्थे प्रीतिविशेषेणासक्तिस्तयोस्तृष्णासङ्गयोः समुद्भवो यस्मात् तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु संगेनासक्त्याभिवर्तं बध्नाति तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति इत्यर्थः ॥ ७ ॥

### भाषा अनुवाद।

अब रजोगुण का स्वरूप और बन्धकत्व कहते हैं कि हे कौन्तेय अर्जुन रजोगुण को रागात्मक कहे अनुराग स्वरूप जानो इससे तृष्णा जो अप्राप्त वस्तुमे अभिलाष औ संग कहे प्राप्तविषय मे जो सम्पूर्ण आशक्ति इन दोनो का रजोगुण से उद्भव होता है सोई रजोगुण देही जीवको दृष्ट औ अदृष्ट अर्थरूप कर्मोकी आशक्तिमे निश्चय बन्धन करे हैं क्योंकि तृष्णा औ संगके द्वारा समस्त कर्ममे आशक्ति होती है ॥ ७ ॥

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

## शाङ्करभाष्यम् ।

पुनर्गुणानां व्यापारः संक्षेपत उच्यते सत्त्वमिति सत्त्वं सुखे संजयति संश्लेषयति रजः कर्मणि हे भारत संजयतीति वर्त्तते ज्ञानं सत्त्वकृतं विवेकमावृत्याच्छाद्य तु तमः स्वेनावरणात्मना प्रमादे संजयत्युत प्रमादो नाम प्राप्तकर्त्तव्याकरणम् ॥ ९ ॥

### आनन्दगिरिकृतटीका ।

कार्यद्वारा तमो निर्दिशति मोहनमित्यादिना बन्धनमुक्त्वा तमसो बन्धनकरत्वं दर्शयति प्रमादेति कार्य्यान्तरासक्ततया चिकीर्षितस्य कर्त्तव्यस्याकरणं प्रमादः निरीहतयोत्साहप्रतिबन्धस्त्वालस्यं स्वापो निद्रा ताभिरात्मानमविकारमेव तमोऽपि विकारयतीत्यर्थः ॥८॥

उक्तानां मध्ये कस्मिन् कार्य्ये कस्य गुणस्योत्कर्षस्तत्राह पुनरिति सुखसाध्ये विषये सत्त्वमुत्कृष्यते सत्त्वमित्याह सत्त्वमिति सञ्जयतीत्यस्यार्थमाह संश्लेषयतीति कर्मणि साध्ये रजः समुत्कृष्यत इत्याह रज इति प्रमादे प्राधान्यस्तमसो इति दर्शयति ज्ञानमिति ॥ ९ ॥

### स्वामिकृतटीका ।

तमसो लक्षणं बन्धकत्वञ्चाह तम इति तमस्त्वज्ञानाज्जातं आवरणशक्तिप्रधानात् प्रकृत्यंशादुद्भूतं विद्धीत्यर्थः अतः सर्वेषां देहिनां मोहनं भ्रान्तिजनकं अत एव प्रमादेनालस्येन निद्रया च तत्तमो देहिनं निबध्नाति तत्र प्रमादोऽनवधानं आलस्यमनुद्यमः निद्रा चित्तस्यावसादः लयः ॥ ८ ॥

सत्त्वादीनामेव स्वस्वकार्य्यकरणे सामर्थ्यातिशयमाह सत्त्वमिति सत्त्वं सुखे सञ्जयति संश्लेषयति दुःखशोकादिकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः एवं सुखादि-

## भाषा अनुवाद ।

अब तमोगुण का स्वरूप औ बन्धकत्व कहते हैं कि तमोगुण अज्ञान से प्रगट है अर्थात् आवरणशक्ति प्रधान प्रकृति के अंशसे प्रगट जानो इससे हे भारत अर्जुन यावत् जीवका मोहकारी अर्थात् भ्रम को उत्पन्न करता है तो फिर कौन यह तमोगुण प्रमाद आलस्य औ निद्रा आदि दोष विशिष्ट जीव को कैसा अनर्थ नहीं करेगा ॥ ८ ॥

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥ १०॥**

शाङ्करभाष्यम्।

उक्तकार्यं कदा कुर्वन्ति गुणा इत्युच्यते रज इति रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्द्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभत्ते हे भारत तत्तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभिभूय वर्द्धते यदा तदा कर्म तृष्णादि स्वकार्यमारभते तम आख्यो गुणः सत्त्वं रजश्चोभावप्यभिभूय तथैव वर्द्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते॥१०॥

आनन्दगिरिकृतटीका।

इतरेतराविरोधेन वा सत्त्वादयो गुणा युगपदुत्क्रष्यन्ते विरोधेन वा क्रमेण वेति सन्देहात् पृच्छति उक्तमिति सत्त्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्योत्तरमाह उच्यते इति सत्त्वाभिवृद्धिमेव विवृणोति तदेति रजस्तमसोस्तिरोधानदशायामिति यावत्

स्वामिकृतटीका।

कारणे सत्यपि रजः कर्मण्येव सञ्जयति तमस्तु महत्सङ्गेनोत्पद्यमानमपि ज्ञानमानमपि ज्ञानमावृत्याच्छाद्य प्रमादे संचयति महद्भिरुपदिश्यमानस्यार्थस्याऽनवधाने योजयति उत अपि आलस्यादावपि संयोजयतीत्यर्थः॥ ९॥

भाषा अनुवाद।

सत्त्व आदि तीनो गुणोंके स्वकार्य करने मे सामर्थ्यकी आधिक्य कहते हैं कि हे भारत अर्जुन सतोगुण सुखमे युक्त करता है अर्थात् यद्यपि विषयोंका सुख ईर्षा असूया के योगसे प्रगट सुख दुःख शोक आदिका कारण स्वरूप है तौभी जीव को सुखही की ओर उन्मुख करता है और तमोगुण आदि का कारण होके भी सर्वकर्मो मे युक्त करता है और तमोगुण महात्माओं के संगसे उत्पन्न ज्ञान को आवरण करिके असावधान करदेय है अर्थात् महात्माओं के उत्तम उपदेश को नही समझने देता है और आलस्य आदिमे अच्छी तरह युक्त कर देता है॥ ९॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

शाङ्करभाष्यम्।

यदा यो गुणः समुद्भूतो भवति तदा तस्य किं लिङ्गं उच्यते सर्वद्वारेषु इति सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु अन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन् प्रकाशशब्दवाच्यः सर्वद्वारेषु उपजायते तदेव ज्ञानं यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धं उद्भूतं सत्त्वमित्युतापि ॥ ११ ॥

आनन्दगिरिकृतटीका।

रजसो वृद्धिप्रकारस्तत्कार्यञ्च कथयति तथेति तमसोऽपि वृद्धिस्तत्कार्यञ्च निर्दिशति तम इति ॥ १० ॥

उत्तरश्लोकत्रयस्याकाङ्क्षां दर्शयति यदेति सत्त्वोद्भवलिङ्गदर्शनार्थमनन्तरं श्लोकमुत्थापयति उच्यत इति सर्वद्वारेष्वित्यादि सप्तमी निमित्ते नेतव्या उत शब्दोऽपि शब्दपर्यायोऽप्यतिशयार्थः ॥ ११ ॥

स्वामिकृतटीका।

तत्र हेतुमाह रज इति रजश्च तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवति अदृष्टवशादुद्भवति अतः स्वकार्ये सुखादौ सञ्जयतीत्यर्थः एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति अतः स्वकार्ये तृष्णासंगादौ सञ्जयति एवं तमोऽपि सत्त्वं रजश्चोभावपि गुणावभिभूयोद्भवति अतः स्वकार्ये प्रमादालस्यादौ सञ्जयतीत्यर्थः ॥ १० ॥

भाषा अनुवाद।

अब सत्वादि तीनो गुणों की प्रवृत्ति होने की रीति कहते हैं कि रजोगुण तमोगुण को तिरस्कार कहि पराभव करिके सतो गुण प्रगट होय है अर्थात् जीवके अदृष्टवशते सत्व जन्मै है और अपने कार्य सुख आदि मे जीव को युक्त करै है ऐसे ही सत्व औ तमोगुण का पराभव करिके रजो गुण जन्मै है और अपने कार्य तृष्णा आदिमे युक्त करता है तैसेही सत्व-रजको पराभव करिके तमोगुण प्रगट होय है और अपने कार्य प्रमाद आलस्य मे युक्त करि देता है ॥ १० ॥

## लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
## रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

शाङ्करभाष्यम् ।

**रजस उद्भूतस्येदं चिह्नं लोभ इति लोभः परद्रव्यादित्सा प्रवृत्तिः प्रवर्त्तनं सामान्यचेष्टा आरंभः उद्यमः कस्य कर्मणामशमः अनुपशमः हर्षः रागादिप्रवृत्तिः स्पृहा सर्वसामान्यवस्तुविषया तृष्णा रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥ १२ ॥**

आनन्दगिरिकृतटीका ।

अतिशयेनोद्भूतस्य रजसो लिङ्गमाह रजस इति उपक्रमपर्य्यायस्यारम्भस्य विषयं पृच्छति कस्येति कान्यन्यानि निषिद्धानि च लौकिकानि कर्माणि विषयत्वेन निर्दिशति कर्मणामिति अनुपशमो वाह्यान्तःकरणानामिति शेषः लोभाद्युपलम्भाद्रजोवृद्धिर्बोद्धव्येति भावः ॥ १२ ॥

स्वामिकृतटीका ।

इदानीं सत्वादीनां विवृद्धानां लिङ्गान्याह सर्वद्वारेष्विति त्रिभिः अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु श्रोत्रादिषु यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते उत्पद्यते तदाऽनेन प्रकाशलिङ्गेन सत्वं विवृद्धं विद्यात् जानीयात् उत शब्दात् सुखादिलिङ्गेनापि जानीयादित्युक्तम् ॥ ११ ॥

किञ्च लोभ इति लोभो धनाद्यागमे बहुधा जायमानेऽपि यः पुनः पुनर्वर्द्धमानोऽभिलाषः प्रवृत्तिर्नित्यं कुर्वद्रूपता कर्मणामारम्भो महागृहादि निर्माणोद्यमः अशमः इदं

भाषा अनुवाद ।

**अब विशेषसे बढे हुये सत्व आदि तीनों गुणों के लक्षण कहे चिह्न तीन श्लोकसे कहते हैं कि इस भोगायतन कहे भोगभाण्ड शरीर में श्रोत्र आदि समस्त द्वार मे जिस समय शब्द आदि ज्ञानस्वरूप उत्पन्न होता हैं उस समय प्रकाशरूप चिह्नके द्वारा सतो गुण को विशेष वढ़ा जानो औ सुख आदि चिह्नसे भी सत्वकी वृद्धि जानो तात्पर्य्य यह कि इन्द्रियोंके द्वारा जो ज्ञान होता सो सतो गुणहीसे होय है ॥ ११ ॥**

अप्रकाशो प्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

### शाङ्करभाष्यम् ।

अप्रकाश इति अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावः तत्कार्यं प्रमादो मोह एव च अविवेको मूढतेत्यर्थः तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥ १३ ॥

### आनन्दगिरिकृतटीका ।

उद्भूतस्य तमसो लिङ्गमाह अप्रकाश इति सर्वत्रैव ज्ञानकर्मणोरभावो विशेषणाभ्यामुक्तस्तत्कार्यमिति तच्छब्दो दर्शिताविवेकार्थः प्रमादो व्याख्यातः मोहो वेदितव्यस्तान्यथावेदनं तस्यैव मोहान्तरमाह अविवेक इति अविवेकातिशयादिना प्रवृद्धन्तमो ज्ञेयमिति भावः ॥ १३ ॥

### स्वामीकृतटीका ।

इत्येदं करिष्यामित्यादि सङ्कल्पविकल्पानुपरमः स्पृहा उच्चावचेषु दृष्टमात्रेषु वस्तुषु इतस्ततो जिघृक्षा रजसि विवृद्धे सति एतानि लिङ्गानि जायन्ते एभिर्लिङ्गैरजोगुणस्य विवृद्धिं जानीयादित्यर्थः ॥ १२ ॥

किञ्च अप्रकाश इति अप्रकाशो विवेकभ्रंशः अप्रवृत्तिरनुद्यमः प्रमादः कर्त्तव्यार्थानुसन्धानराहित्यं मोहो मिथ्याभिनिवेशः तमसि प्रवृद्धे सत्येतानि लिङ्गानि जायन्ते एतैस्तमसो वृद्धिं जानीयादित्यर्थः ॥ १३ ॥

### भाषा अनुवाद ।

और हे भरतर्षभ अर्जुन लोभ कहे बहुत धन रहते और पैदा होते भी धनकी बार बार वृद्धि करने को लाष लाष अभिलाष औ प्रवृत्ति कहे सदा हीं व्यापार मे मन दिये रहना औ आरम्भ अर्थात् कर्मोंका आरम्भ घर बगीचा अभूषणादि बनाने मे उद्यम और अशम कहे मैं यह कर्मकरिके फेरि वह कर्म करूंगा यह जो संकल्पसे मनका असन्तोष औ स्पृहा कहे उत्तम अधम वस्तु देखने ही से जिस तरहहो तिस तरह लेने की इच्छा ये सब चिह्न रजो गुणके बढ़ने से होते हैं अर्थात् इन लक्षणोंसे रजो गुणकी वृद्धि जानो हे भरतर्षभ अर्जुन यह श्रीकृष्णने कहा ॥ १२ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

शाङ्करभाष्यम्।

मरणद्वारेणापि यत् फलं प्राप्यते तदपि संगरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह यदेति यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदा उत्तमविदां महदादितत्त्वविदामित्येतल्लोकानमलान् मलरहितान् प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥

आनन्दगिरिकृतटीका।

सात्त्विकादीनां भावानां पारलौकिकं फलविभागमुदाहरति मरणेति सङ्गः सक्तो रागः तृष्णा तद्बलादनुष्ठानद्वारा लभ्यमानमित्यर्थः गौणं सत्त्वादिगुणप्रयुक्तमिति यावत् तत्र सत्त्वगुणवृद्धिकृतफलविशेषमाह यदेति मलरहितान् रजस्तमसोरन्यतरस्तोद्भवो मलं तेन रहितानामलमित्यान् ब्रह्मलोकादीनित्यर्थः ॥ १४ ॥

स्वामिकृतटीका।

मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह यदेति द्वाभ्यां सत्त्वे विवृद्धे सति यदा जीवो मृत्युं प्राप्नोति तदा उत्तमान् हिरण्यगर्भादीन् विन्दति उपासत इत्युत्तमविदस्तेषां ये अमलाः प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥

भाषा अनुवाद।

और अप्रकाश कहे विचारका नाश औ अप्रवृत्ति कहे निरुद्यम औ प्रमाद कहे हरकाम हरबात मे बेखबर औ मोह कहे मिथ्या अभिनिवेश अर्थात् दुचितई या झूठे कारखाने मे मन देना ये सब चिह्न तमोगुणसे होते हैं और इन लक्षणोंसे तमोगुण की वृद्धि जानो ॥ १३ ॥

अब मरणकाल मे विशेषसे वर्द्धमान सत्व आदि गुणोंका फलविशेष दो श्लोकसे कहते हैं कि जो सतोगुण की वृद्धिके समय मे देहधारी जीव शरीर को छोड़ैं तो हिरण्यगर्भ आदि की उपासना करनेवाले मनुष्योंके प्रकाशमय सुख उपभोग करनेके जो स्थान हैं उन स्थानविशेषों को प्राप्त होते हैं ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥
कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःख मज्ञानं तमसः फलम् ॥ १६ ॥

शाङ्करभाष्यम् ।

रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसंगिषु स्वकर्मासक्तियुक्तेषु मनुष्येषु जायते तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥ १५ ॥

अतीतश्लोकार्थस्यैव संक्षेप उच्यते कर्मणः सुकृतस्य सात्विकस्येत्यर्थः आहुः शिष्टाः सात्विकमेव निर्मलं फलमिति रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः कर्मानुकारात् फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव तथा ज्ञानन्तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥ १६ ॥

आनन्दगिरिकृतटीका ।

रजःसमुद्रेके मृतस्य फलविशेषं दर्शयति रजसीति जायते शरीरं गृह्णातीत्यर्थः यथा सत्वे रजसि च प्रवृद्धे मृतो ब्रह्मलोकादिषु मनुष्यलोके च जायते देवादिषु मनुष्येषु च जायते तथेत्याह तद्वदिति ॥ १५ ॥

भावानां फलमुक्त्वा सात्विकादीनां कर्मणां फलमाह अतीतेति सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः सात्विकस्याशुद्धिरहितस्येति यावत् सात्विकं सत्वेन निर्वृत्तं निर्मलं

स्वामिकृतटीका ।

किञ्च रजसीति रजसि विवृद्धे सति मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते तथा तमसि विवृद्धे सति प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥

भाषा अनुवाद ।

और रजोगुण की वृद्धिके समय मे मृत्यु प्राप्त होनेसे कर्ममे आसक्त जो मनुष्यलोक तिसमे जीवों का जन्म होता है और तमोगुणके वृद्धिकाल में देह छुटनेसे पशु पक्षी आदि मूढ़योनि मे जन्म पावते हैं ॥ १५ ॥

**सत्वात् संजायते ज्ञानं रजसो लोभ एव च।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥ १७॥**

शाङ्करभाष्यम्।

किञ्च गुणेभ्यो भवति सत्वादिति सत्वात् लब्धात्मकात् सञ्जायते समुत्पद्यते ज्ञानं रजसो लोभ एव च प्रमादमोहौ चोभौ तमसोभवतोऽज्ञानमेव भवति॥ १७॥

आनन्दगिरिकृतटीका।

रजस्तमः समुद्भवान्मनान्निष्क्रान्तं रजःशब्दस्य राजसे कर्मणि कुतो वृत्तिस्तत्राह कर्मेति दुःखमेव दुःखबहुलं गुणमेवेत्यर्थः कथमित्थं व्याख्यायते तत्राह कारणेति पापमिश्रस्य पुण्यस्य रजोनिमित्तस्य कारणत्वात् तदनुरोधात् फलमपि रजोनिमित्तं यथोक्तं युक्तमित्यर्थः अज्ञानमविवेक प्रायं दुःखं तामसाद्धर्मफलमित्याह तथेति॥ १६॥

विहितप्रतिषिद्धज्ञानकर्माणि सत्वादीनां लक्षणानि संक्षिप्य दर्शयति किञ्चेति ज्ञानं सर्वकरणद्वारकं अज्ञानं विवेकाभावः॥ १७॥

स्वामिकृतटीका।

इदानीं सत्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह कर्मण इति सुकृतस्य सात्विकस्य कर्मणः सात्विकं सत्वप्रधानं निर्मलं प्रकाशबहुलं सुखं फलमाहुः कपिलादयः रजस इति राजसस्य कर्मण इत्यर्थः कर्मफलकथनस्य प्रकृतत्वात् तस्य दुःखं फलमाहुः तमस इति तामसस्य कर्मण इत्यर्थः तस्याज्ञानं मूढत्वं फलमाहुः सात्विकादिकर्मलक्षणञ्च नियतं सङ्गरहितमित्यादिनाष्टादशेऽध्याये वक्ष्यति॥ १६॥

भाषा अनुवाद।

अब सत्व आदि गुणत्रयके अनुरूप कर्मोंके द्वारा विचित्र फलप्राप्ति में गुणोंको हेतु कहते हैं कि कपिल आदि ऋषि सुकृत कहे सात्विक कर्म का फल सत्वप्रधान प्रकाशमय सुख फल कहते हैं और राजस्यकर्म का फल दुःख कहते हैं और तामस कर्मका फल अज्ञान अर्थात् मूढ़ता कहते हैं किन्तु सात्विक आदि कर्मका स्वरूप भगवान् श्रीकृष्ण अठारहें अध्याय के तेईसयें श्लोकमे कहैंगे॥ १६॥

ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ १८॥

शाङ्करभाष्यम्।

किञ्च ऊर्ध्वमिति ऊर्ध्वं गच्छन्ति देवलोकादिषु उत्पद्यन्ते सत्वस्थाः सत्वगुणवृत्तिस्था मध्ये तिष्ठन्ति मनुष्येषु उत्पद्यन्ते राजसाः जघन्यगुणवृत्तिस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तिं निद्रालस्यादि तस्मिन् स्थिता जघन्यगुणवृत्तिस्था मूढ़ा अधो गच्छन्ति पश्वादिषु उत्पद्यन्ते तामसाः॥ १८॥

आनन्दगिरिकृतटीका।

सात्विकादिज्ञानकर्मफलानियुक्तान्युक्तसंग्रहार्थं सामान्येनोपसंहरति किञ्चेति वक्ष्यमाणफलद्वारादि सत्वादिषु ज्ञानमित्यर्थः सत्वगुणस्य वृत्तं शोभनं ज्ञानं कर्म वा तत्र तिष्ठन्तीति तथा राजसा रजोगुणनिमित्ते ज्ञाने कर्मणि वा निरताः॥ १८॥

स्वामिकृतटीका।

तत्रैव हेतुमाह सत्वादिति सत्वात् ज्ञानं संजायते अतः सात्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति रजसो लोभो जायते तस्य च दुःखहेतुत्वात्तत्पूर्वकस्य कर्मणो दुःखफलं भवति तमसस्तु प्रमादमोहाज्ञानानि भवन्ति अतस्तामसस्य कर्मणोऽज्ञानमात्रप्रायः फलं भवतीति युक्तमेवेत्यर्थः॥ १७॥

इदानीं सत्वादिवृत्तिशीलानां फलभेदमाह ऊर्ध्वमिति सत्वस्थाः सत्ववृत्तिप्रधाना ऊर्ध्वं गच्छन्ति सत्वोत्कर्षादुत्तरतारतम्यादुत्तरोत्तरगतगुणानन्दान् मनुष्यगन्धर्वपितृदेवादिलोकान् सत्यलोकपर्यन्तान् प्राप्नुवन्तीत्यर्थः राजसास्तु तृष्णाद्याकुला मध्ये तिष्ठन्ति मनुष्य-

भाषा अनुवाद।

अब पूर्वोक्त सत्वादि गुणके फलस्वरूप सुख आदिका हेतु कहते हैं कि सतोगुणसे ज्ञान उत्पन्न होता है इससे सात्विक कर्मका प्रकाश जो सुख सोई होता है औ रजोगुणसे लोभ जन्मे हैं इनसे लोभपूर्वक सर्व कर्मका दुःख ही फल होता है औ तमोगुणसे प्रमाद मोह तथा अज्ञान प्रगटे हैं इससे अज्ञान जड़ता यही फल होना उचित है॥ १७॥

**नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टाऽनुपश्यति।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति॥ १९॥**

शाङ्करभाष्यम्।

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत् कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह सत्त्वं रज स्तम इति गुणाः प्रकृतिसम्भवा इत्यत आरभ्य गुणस्वरूपं गुणवृत्तित्वं स्ववृत्तेन च गुणानां बन्धकत्वं गुण-वृत्तिबद्धस्य च पुरुषस्य या गतिरित्येतत् सर्वं मिथ्याज्ञानमज्ञानमूलं च

आनन्दगिरिकृतटीका।

कस्मिन् गुणे कथमित्यादिप्रश्नान् प्रत्याख्याय गुणेभ्यो मोक्षणं कथमिति प्रत्याख्या-नार्थं वृत्तानुवादपूर्वकं मिथ्याज्ञाननिवर्त्तकं सम्यग्ज्ञानं प्रस्तौति पुरुषस्येत्यादिना पुरुषस्य या गतिः साचेति शेषः मोक्षो गुणेभ्यो विश्लेषपूर्वको ब्रह्मभावः सम्यग्ज्ञानोक्तिपरं

स्वामिकृतटीका।

लोक एवोत्पद्यन्ते जघन्यो निकृष्टस्तमोगुणस्तस्य वृत्तिः प्रमादमोहादिः तत्र स्थिता अधो गच्छन्ति तमसो वृत्तितारतम्यात्तामिस्रादिषु निरयेषूत्पद्यन्ते॥ १८॥

भाषा अनुवाद।

अब सतोगुण आदि आचरणशील लोगोंके फलभेद कहते है कि सत्वस्थ कहे सतोगुण प्रधान पुरुषोंको ऊर्द्ध्वलोकप्राप्त होते अर्थात् सत्वके प्रतापसे पुण्यकी आधिक्य होती है उत्तरोत्तर सौगुन आनन्द स्वरूप होते हुये मनुष्यलोक गन्धर्वलोक पितृलोक पर्य्यन्त प्राप्त होते हैं और रजोगुणप्रधान मनुष्य लोभग्रस्त मध्यलोक मे रहते हैं अर्थात् मनुष्यलोक मे जन्मे हैं और जघन्य कहे निकृष्ट जो तमोगुणी मनुष्य प्रमाद मोहसे भरे पूरे उनकी अधोगती होती है अर्थात् तमोगुण उनको कृपाकर के अन्धतम नरक मैं पहुंचाय देता है॥ १८॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

## शाङ्करभाष्यम् ।

बन्धकारणं विस्तरेणोक्ताऽधुना सम्यक्दर्शनात् मोक्षो वक्तव्य इत्याह भगवान्नान्यमिति नान्यं कार्यकारणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्त्तारमन्यं यदा द्रष्टा विद्वान् सन्नानुपश्यति गुणा एव सर्वावस्थाः सर्वकर्मणां कर्त्तार इत्येवं पश्यति गुणेभ्यश्च परं गुणव्यापारसाक्षीभूतञ्चेति मद्भावं मम भावं वासुदेवत्वं वासुदेवः सर्वमित्येवं पश्यन् स द्रष्टाधिगच्छति ॥ १९ ॥

## आनन्दगिरिकृतटीका ।

श्लोकं व्याख्यातुं प्रतीकमादत्ते नान्यमिति सत्त्वादिकार्यविषयस्य गुणशब्दस्य विवक्षितमर्थमाह कार्येति विद्यानन्तर्यमनुशब्दार्थं अक्षरार्थमुक्त्वा पूर्वार्द्धस्यार्थिकमर्थमाह गुणाएवेति सर्वावस्थास्तत्कार्यकरणाकारपरिणता इति यावत् सर्वकर्मणां कायिकवाचिकमानसानां विहितप्रतिषिद्धानामित्यर्थः परं व्यतिरिक्तं व्यतिरेकमेव स्फोरयति गुणेति निर्गुणं ब्रह्मात्मानमित्यर्थः मद्भावं ब्रह्मतामसौ प्राप्नोति ब्रह्मभावस्याभिव्यज्यत इत्यर्थः ॥ १९ ॥

## स्वामिकृतटीका ।

तदेवं प्रकृतिगुणसङ्गकृतं संसारप्रपञ्चमुक्त्वा इदानीं तद्व्यतिरेकेण मोक्षं दर्शयति नान्यमिति यदा तु द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्त्तारं नानुपश्यति अपि तु गुणा एव कर्माणि कुर्वन्तीति पश्यति गुणेभ्यश्च परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥

## भाषा अनुवाद ।

पूर्वोक्त प्रकार प्रकृतिके गुणसंगसे संसार की बाहुल्य कहिके अब प्रकृतिसे पुरुष का विवेक करनेहीसे मोक्ष होती है यह देखावते हैं कि जिसकाल मे द्रष्टा जीव विवेकी होके बुद्धि आदि स्वरूपको प्राप्त सत्व आदि गुणोंको छोड़ दूसरे किसीको नहीं कर्त्ता नहीं देखता बल्की गुण हीं सब कर्म करते हैं यही देखता है और सत्त्व आदि गुणोंसे पर कहे भिन्नस्वरूप सोई गुणादिकों का कामार्थ आप अपने को जाने तब सो जीव मद्भाव को प्राप्त होय अर्थात् ब्रह्मपद पावे ॥ १९ ॥

## अर्जुन उवाच ।

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानवर्त्तते ॥ २१ ॥**

### शाङ्करभाष्यम् ।

कथमधिगच्छतीत्युच्यते गुणेति गुणानेतान् यथोक्तानतीत्य जीवन्नेव वातिक्रम्य मायोपाधिभूतांस्त्रीन् देही देहसमुद्भवान् देहोत्पत्तिवीजभूतान् जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव मुक्तः सन् विद्वानमृतमश्नुते एवं मद्भावमधिगच्छतीत्यर्थः ॥ २० ॥

### आनन्दगिरिकृतटीका ।

अनर्थव्रातरूपमपोह्य विद्वान् ब्रह्मत्वं प्राप्नोत्येतत् प्रश्नद्वारा विवृणोति कथमित्यादिना यथोक्तानीत्येतदेव व्याचष्टे मायेति मायैवोपाधिस्तद्भूतान् तदात्मनः सत्त्वादीननर्थरूपानित्यर्थः समुद्भवन्तीति समुद्भवा देहस्य समुद्भावा देहसमुद्भवाः तानिति व्युत्पत्तिं गृहीत्वा व्याचष्टे देहोत्पत्तीति यो विद्वान् अविद्यामयान् गुणान् जीवन्नेवातिक्रम्य स्थितस्तमेविशिनष्टि जन्मेति पुरस्ताद्विस्तरेणोक्तस्य प्रसङ्गादत्र संक्षिप्तस्य सम्यक्ज्ञानस्य फलमुपसंहरति एवमिति ॥ २० ॥

### स्वामिकृतटीका ।

ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह गुणानिति देहाद्याकारः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतान् त्रीनपि गुणानतीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्विमुक्तः सन्नमृतं परमानन्दं प्राप्नोति ॥ २० ॥

### भाषा अनुवाद ।

तिसके अनन्तर सत्व आदि गुणकृत सम्पूर्ण अनर्थ निवृत्त होनेहींसे जो कृतार्थ होता है सोई कहते हैं कि सम्यक् प्रकारसे जिसका देहादि रूपमे उद्भव अर्थात् देहरूप परिणाम को प्राप्त हैं सोई देहसमुद्भव कहावे हैं इस से देही जो जीवात्मा सो देहरूप परिणाम को प्राप्त यही सत्वादि तीन गुणों के अतिक्रमण करने से पर है अर्थात् गुणकृत जन्म मरण जरा दुःख आदि से अच्छी प्रकार मुक्त हो अमृत जो परम आनन्द सो लाभ करता है ॥ २० ॥

## शाङ्करभाष्यम्।

जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच कैरिति कैर्लिङ्गैश्चिह्नैस्त्रीनेतान् व्याख्यातान् गुणानतीतोऽतिक्रान्तो भवति प्रभो किमाचारः कोऽस्याचार इति किमाचारः कथं केन च प्रकारेण एतां स्त्रीन् गुणान् अतिवर्त्तते ॥ २१ ॥

### आनन्दगिरिकृतटीका।

सम्यग्धीफलं गुणातिक्रमणपूर्वकममृतत्वमुक्तं श्रुत्वा मुक्तस्य लक्षणं वक्तव्यमिति प्रकृतं विवक्षितत्वात् प्रश्नमुत्थापयति जीवन्नेवेति ये व्याख्याताः सत्वादयो गुणास्तत्परिणामभूतानध्यासानतिक्रान्तः सन् कैर्लिङ्गैर्ज्ञातो भवति इति तानि वक्तव्यानि सिद्धार्थं पूर्वमनुष्ठेयानि पश्चाद्यत्नलभ्यानि लिङ्गानि कानि तानीति पृच्छति कैरिति यथेष्टचेष्टाव्यावृत्त्यर्थं प्रश्नान्तरं किमाचार इति ज्ञानस्य गुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासया प्रश्नान्तरं कथमिति ॥ २१ ॥

### स्वामिकृतटीका।

गुणानेतानतीत्यामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं तदाचारञ्च गुणात्ययोपायञ्च सम्यग्बुभुत्सुरर्जुन उवाच कैरिति हे प्रभो कैर्लिङ्गैः कीदृशैरात्मचिह्नैर्गुणातीते देही भवतीति लक्षणः प्रश्नः क आचारोऽस्येति किमाचारः कथं वर्त्तत इत्यर्थः कथञ्च केनोपायेनैतां स्त्रीनपि गुणानतीत्य वर्त्तते तत् कथयेत्यर्थः ॥ २१ ॥

## भाषा अनुवाद।

जीव गुणत्रय से अतिक्रान्त कहे अलग होने से मुक्ति पावता है यह भगवान् कृष्ण के मुख से श्रवण करि के गुणातीत मनुष्य के लक्षण औ उन मनुष्यों का आचरण औ गुणों के अतिक्रम की उपाय सम्यक् प्रकार से जानने की इच्छा करि अर्जुन भगवान से कहते हैं कि हे प्रभो देही जो जीव सो किस प्रकार आपसे उत्पन्न लक्षण के द्वारा गुणातीत हो यह लक्षण पूछा और किमाचार कहे उसके आचरण कैसे अर्थात् किस प्रकार के व्यवहार मे वर्त्तमान रहता है और किस उपाय से इन गुणोंको अतिक्रमण करिके स्थिर होय है सो सब कृपाकरि के कहिये सो मेरो सन्देह जाय ॥ २१ ॥

श्रीभगवानुवाच।

प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

शाङ्करभाष्यम्।

गुणातीतस्य लक्षणं गुणातीतत्वोपायश्चार्जुनेन पृष्टोऽस्मिन् श्लोके प्रश्न-द्वयार्थं प्रतिवचनं भगवान् यत्तावत् कैर्लिङ्गैर्युक्तो गुणातीतो भवति तच्छृणु प्रकाशमिति प्रकाशञ्च सत्त्वकार्य्यं प्रवृत्तिञ्च रजःकार्य्यं मोहमेव च तमःकार्य्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि मम तामसः प्रत्ययोजातस्तेनाहं मूढस्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्त्तितः प्रचलितः स्वरूपात् कष्टं मम वर्त्तते योऽयं यत् स्वरूपावस्थानात् भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च संजनयन् मां बध्नातीति तानि द्वेष्टाऽसम्यग्दर्शित्वेन तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि यथा च सात्त्विकादिपुरुषः सात्त्विकादिकार्य्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः ॥ २२ ॥

आनन्दगिरिकृतटीका।

प्रश्नस्वरूपमनूद्य तदुत्तरं दर्शयति गुणातीतस्येति पृष्टो भगवानिति सम्बन्धः किंलक्षण इति द्विधा प्रयोगदर्शनात् प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थमिति द्रष्टव्यं उत्तरमवतार्य्यानन्तरश्लोकतात्पर्यमाह यत्तावदिति तानि सम्यग्दर्शी न द्वेष्टि इत्युक्तमेव स्पष्टयितुं निषेध्यमसम्यग्दर्शिनो द्वेषं तेषु प्रकटयति ममेत्यादिना सम्यग्दर्शिनः संप्रवृत्तेषु प्रकाशादिषु द्वेषाभावमुपसंहरति तदेवमिति न निवृत्तानि इत्यादि व्याचष्टे यथा चेति तेषामनात्मीयत्वं सम्यक् पश्यन्नात्मानुकूलप्रतिकूलतारोपणेन नोद्विजते, तेभ्यश्च नस्पृहयतीत्यर्थः ॥ २२ ॥

स्वामिकृतटीका।

स्थितप्रज्ञस्य का भाषा इत्यादिना द्वितीयाध्याये पृष्टमेव इत्योत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं श्रीभगवानुवाच प्रकाशञ्चेत्यादि-

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते ॥ २३ ॥

शाङ्करभाष्यम् ।

एतन्न परप्रत्यक्षं लिङ्गं किन्तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेव एतत् लक्षणं न हि स्वात्मविषयं द्वेषं आकाङ्क्षां वापरः पश्यति अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह उदासीनेति उदासीनवद्यथोदासीनो न कस्यचित् पक्षं भजते न तथाऽयं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः समासीनः विचाल्यते विवेकदर्शनावस्थातः

स्वामीकृतटीका ।

सम्प्रमिस्तत्रैकेन लक्षणमाह प्रकाशमिति प्रकाशञ्च सर्वद्वारेषु देहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्यं प्रवृत्तिश्च रजःकार्यं मोहश्च तमःकार्यं उपलक्षणार्थमेतत् सत्त्वादीनां सर्वाण्यपि कार्याणि यथायथं संप्रवृत्तानि स्वतः प्रवृत्तानि सन्ति दुःख बुद्ध्या यो न द्वेष्टि निवृत्तानि च सन्ति सुखबुद्ध्या यो न कांक्षति गुणातीतः स उच्यत इति चतुर्थेनान्वयः ॥ २२ ॥

भाषा अनुवाद ।

चौविस पचीस श्लोक आदि से यही वात अर्जुनने पूछा भी था और उस का उत्तर भी भगवान् देचुके हैं तौभी फेरि विशेषरूप से जानने की इच्छा से अर्जुन पूछते हैं यही विचार करि भगवान् दूसरे प्रकार से उनका लक्षण आदि इस श्लोक से लेकर छश्लोक से कहते हैं और उनके वीच यह एक श्लोकके द्वारा उनके लक्षण जनावते हैं कि सत्व आदि गुणों को उपलक्ष करिके कहा जो प्रकाश अर्थात् सर्वद्वारेषु देहेऽस्मिन् यह इस अध्याय के एकादश श्लोक से कहा जो सतो गुणका कार्य और प्रवृत्ति जो रजोगुणका कार्य तथा मोहादि जो तमोगुणका कार्य ये समस्त कार्य यथा क्रमसे आपसे प्रवृत्त होने पर दुःख विचारि के जो पुरुष द्वेषहेतु से औ निवृत्ति होनेसे सुख जानि इच्छा न करै सोई गुणातीत मनुष्य है यह जानो ॥ २२ ॥

## शाङ्करभाष्यम् ।

तदेतत् स्फुटीकरोति गुणाः कार्य्यकारणविषयाकारपरिणता अन्योन्यस्मिन् वर्त्तन्त इति योऽवतिष्ठति छन्दोभंगभयात् परस्मैपदप्रयोगः योऽनुतिष्ठतीति पाठनन्तरं नेंगतेन चलति स्वरूपावस्थ एव भवतीत्यर्थः ॥ २३ ॥

### आनन्दगिरिकृतटीका ।

स्वानुभवसिद्धं गुणातीतस्य लक्षणमुक्तमित्याह एतच्चेति परप्रत्यक्षत्वाभावं प्रपञ्चयति नह्यीति आश्रयो विषयः कैर्लिङ्गैरित्यादि परिहृत्य द्वितीयं प्रश्नं परिहरति अथेति दृष्टान्तं व्याचष्टे यथेति उपेक्षकस्य पक्षपातत्वायोगादित्यर्थः आत्मविदात्मनः कौटस्थ्यज्ञानेनासीनो निवृत्तकर्त्तृत्वाभिमानो ऽप्रयतमानो भवतीति दार्ष्टान्तिकमाह तथेति गुणातीतत्वोपायमार्गो ज्ञानमेव शब्दादिभिर्विषयैरस्य कूटस्थत्वज्ञानात् प्रच्यवनमाशङ्क्याह गुणैरिति उपनतानां विषयाणां रागद्वेषद्वारा प्रवर्त्तकत्वमित्येतत् प्रपञ्चयति तदेतदिति योऽवतिष्ठति स गुणातीत इत्युत्तरत्र सम्बन्धः आपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये कथं परस्मैपदमित्याशङ्क्याह छन्दोभंगेति पाठान्तरे तु वाचितानुवर्त्ति मात्मज्ञानं करणाकारपरिणतानां गुणानां विषयाकारपरिणतेषु तेषु प्रवृत्तिर्न ममेति पश्यन् अचलतया कूटस्थदृष्टिमात्मनो न जहातीत्याह नेङ्गत इति ॥ २३ ॥

### स्वामिकृतटीका ।

तदेवं सुसंवेद्यं गुणातीतस्य लक्षणमुक्त्वा द्वितीयप्रश्नस्य किमाचार इत्यस्योत्तरमाह उदासीन इति त्रिभिः उदासीनवत् साक्षितया आसीनः सन् गुणैर्गुणकार्य्यैः सुखदुःखादिभिर्न यो विचाल्यते स्वरूपात्र प्रच्याव्यते अपि तु गुणा एव स्वकार्य्येषु वर्त्तन्ते एतैर्मम सम्बन्ध एव नास्तीति विवेकज्ञानेन यस्तूष्णीमवतिष्ठति परस्मै पदमार्षं नेङ्गते न चलति ॥ २३ ॥

## भाषा अनुवाद ।

उक्त रूप अनायास बोध से गम्य जो गुणातीत की लक्षण सो कहि के गुणातीतका आचरण कैसा है इस दूसरे प्रश्नका उत्तर तीन श्लोक से कहते हैं कि उदासीनके समान साक्षीरूप स्थित हो सत्व आदि गुण के कार्य्य सुख दुःख आदि से जो मनुष्य अविचलित है अर्थात् अपने द्रष्टास्वरूप से चुत न होय वलु सत्त्वादि गुण अपने अपने काम में

**समदुःखसुखः स्वस्थः समलोष्ठाश्मकाञ्चनः ।
तुल्यप्रियाप्रियोधीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**

शाङ्करभाष्यम् ।

किञ्च समदुःखेति समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः स्वस्थः स्वात्मनि स्थितः प्रसन्नः अविक्रियः समलोष्टाश्मकाञ्चनः लोष्ठञ्च अश्म च काञ्चनञ्च समानि यस्य स समलोष्ठाश्मकाञ्चनः तुल्यप्रियाप्रियः प्रियञ्चाप्रियञ्च प्रियाप्रिये समे यस्य सोऽयं तुल्यप्रियाप्रियो धीरो धीमान् तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

आनन्दगिरिकृतटीका ।

गुणातीतस्य लिंगान्तरमाह किञ्चेति तयोः समत्वं रागद्वेषानुत्पादकतया स्वकीयत्वाभिमानाभावत्वं प्रसन्नत्वं स्वास्थ्यात्प्रच्युतिरविक्रियत्वं विद्वद्दृष्ट्या प्रियाप्रिययोरसंभवेऽपि लोकदृष्टिमाश्रित्याह प्रियञ्चेति प्रियाप्रियग्रहणेन म्लेच्छीतानां काञ्चनादीनां ब्राह्मणपरिव्राजकवत् पृथक्करणं निन्दादौषोक्तिरात्मनो गुणकीर्तनं ॥ २४ ॥

स्वामिकृतटीका ।

अपि च समेति समे दुःखसुखे यस्य यतः स्वस्थः स्वरूप एव स्थितः अत एव समानि लोष्ठाश्मकाञ्चनानि यस्य तुल्ये प्रियाप्रिये सुखदुःखहेतुभूते यस्य धीरो धीमान् तुल्या निन्दा च आत्मनः स्तुतिश्च यस्य ॥ २४ ॥

भाषा अनुवाद ।

वर्तमान हैं इन से हम से कुछ भी सम्बन्ध नहीं है ऐसे विवेकज्ञान से जो पुरुषचुप चाप मौन होय स्थित रहै औ इस वातसे विचलित न होय सो गुणातीत पुरुष है ॥ २३ ॥

और जो मनुष्य सुखदुःख मे समान और माटी पाथर सोना आदि भी जिसके निकट समान हैं और सुखदुःख के हेतु स्वरूप अप्रिय विषमे जिसकी बुद्धि तुल्य कहे समान है और धीर धीमान् जो है तथा अपनी स्तुति औ निन्दा मे भी तुल्य बुद्धि है ॥ २४ ॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥
माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

शाङ्करभाष्यम्।

किञ्च मानापमानयोरिति मानापमानयोस्तुल्यः समो निर्विकारः तुल्यो मित्रारिपक्षयोः यद्यप्युदासीना भवन्ति केचित् स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति अयन्तु तुल्यो मित्रारिपक्षयो-रित्याह सर्वारम्भपरित्यागी दृष्टार्थानि कर्म्माण्यारभते इत्यारम्भाः सर्वाना-रम्भान् परित्यक्तुं शीलं अस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्त-व्यतिरेकेण सर्वकर्म्मपरित्यागीत्यर्थः गुणातीतः स उच्यते ॥ २५ ॥

उदासीनवदित्यादिगुणातीतः स उच्यते इत्येतदन्तमुक्तं याव द्यत्नसाध्यं

आनन्दगिरिकृतटीका।

इतश्च गुणातीतः शक्यो ज्ञातुमित्याह किञ्चेति मानः सत्कारस्तिरस्कारोऽपमानः परहृष्टा यौ मखियत्व तयोः पक्षयोर्निर्विशेषो न कस्यचित् पक्षे तिष्ठतीत्याह तुल्य इति विदुषो मित्रादिबुद्धभावात्तुल्यमित्रारिपक्षयोरित्ययुक्तमित्याशङ्क्याह यद्यपीति सर्वकर्म-त्यागे देहधारणमपि निमित्ताभावान्न स्यादित्याशङ्क्याह देहेति उक्तविशेषणो गुणातीतो ज्ञातव्य इत्याह गुणेति ॥ २५ ॥

स्वामिकृतटीका।

अपि च मानेति माने अपमाने च तुल्यः मित्रपक्षे अरिपक्षे च तुल्यः सर्वान् दृष्टा-दृष्टार्थानारम्भानुद्यमान् परित्यक्तुं शीलं यस्य स एवंभूताचारयुक्तो गुणातीत उच्यते ॥२५॥

भाषा अनुवाद।

और जो मनुष्य मान अपमान मे एक भाव औ मित्र शत्रुपक्ष मे समबुद्धि तथा जो दृष्ट अदृष्ट संपूर्ण अर्थ के उद्यम को त्याग करने मे समर्थ है ऐसे आचरण युक्त पुरुष को गुणातीत कहते हैं यह जानो ॥ २५ ॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति श्रीमद्भगवद्गीतायां गुणत्रयविभाग योगो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

### शाङ्करभाष्यम् ।

तावत् संन्यासिनानुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतन्तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति अधुना कथञ्च त्रीन् गुणान् अतिवर्त्तत इति प्रश्नस्य प्रतिवचनमाह माञ्चेति माञ्चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्म्मी वा अव्यभिचारेण कदाचित् यो व्यभिचरति न भक्तियोगः भजनं भक्तिः सैव योगस्तेन विवेकज्ञानात्मकेन भक्तियोगेन ज्ञानसमुद्भवेन सेवते स गुणान् समतीत्य एतान् यथोक्तान् ब्रह्मभूयाय भवनं भूयः ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥

### आनन्दगिरिकृतटीका ।

यदुक्तमुपेक्षकत्वादि तद्विद्योदयात् पूर्वं यत्नसाध्यं विद्याधिकारिणा ज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायान्तु विद्यायां जीवन्मुक्तस्योक्तधर्म्मजातं स्थिरीभूतं स्वानुभवसिद्धं लक्षणत्वेन तिष्ठतीत्युक्ते धर्म्मजाते विभागं दर्शयति उदासीनवदित्यादिना प्रश्नद्वयमेवं परिहृत्य तृतीयं प्रश्नं परिहरति कथमिति मच्छब्दस्य संसारिविषयत्वं व्यावर्त्तयति ईश्वरमिति तत्रैव नारायणशब्दात् मूर्त्तिभेदो व्यावर्त्त्यते तस्य ताटस्थ्यं व्यवच्छिनत्ति सर्वेति मुख्यामुख्याधिकारिभेदेन विकल्पः भक्तियोगस्य याद्दच्छिकत्वं व्यवच्छेत्तुमव्यभिचारेणेत्युक्तं तद्व्याचष्टे नेति भजनं परमप्रेम स एव युज्यतेऽनेनेति योगः तेन सेवते पराक् चित्ततां विना सदानुसन्दधातीत्यर्थः स भगवदनुग्रहकृतसम्यग्धीसम्पन्नो विद्वान् जीवन्नेवेत्यर्थः ॥ २६ ॥

### स्वामिकृतटीका ।

कथञ्चैतांस्त्रीन् गुणानतिवर्त्तत इत्यस्य प्रश्नस्योत्तरमाह माञ्चेति च शब्दोऽवधारणार्थः मामेव परमेश्वरमव्यभिचारेण एकान्तेन भक्तियोगेन यः सेवते स एतान् गुणान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते समर्थो भवति ॥ २६ ॥

### भाषा अनुवाद ।

किसप्रकार सत्वादिगुणों का अतिक्रम करि के वर्त्तमानरहैं इस

शाङ्करभाष्यम् ।

कुत एतदित्युच्यते ब्रह्मणः परमात्मनः हि यस्मात् प्रतिष्ठा यस्मिन्निति प्रतिष्ठाऽहं प्रत्यगात्मा कीदृशस्य ब्रह्मणः अमृतस्याविनाशिन अव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्यानन्दरूपस्यैकान्तिकस्याव्यभिचारिणः अमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यक्ज्ञानेन परमात्मतया निश्चीयते इति तदेतद् ब्रह्मभूयाय कल्पते उक्तं यया चेश्वरशक्त्या भक्तानुग्रहादि प्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्त्तते सा शक्तिः ब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायोऽथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः किंविशिष्टस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य किञ्चशाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तद्जनितस्यैकान्तनियतस्य प्रतिष्ठाहमिति वर्त्तते ॥ २७ ॥

इति श्री शाङ्करभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

आनन्दगिरिकृतटीका ।

विद्वान् ब्रह्मैवेत्यत्र हेतुं पृच्छति कुत इति तत्रोत्तरमाह उच्यत इति ब्रह्मशब्दस्यासति बाधके मुख्यार्थग्रहणमभिप्रेत्याह परमात्मन इति तं प्रति प्रत्यगात्मनो यत् प्रतिष्ठात्वं तदुपपादयति प्रतितिष्ठतीति यद् ब्रह्म प्रत्यगात्मनि प्रतितिष्ठतीति तत् किं विशेषणमित्यपेक्षायामुक्तममृतस्येत्यादि तत्रामृतशब्देनाव्ययशब्दस्य पुनरुक्तिं परिहरति अविकारिण इति नित्यत्वमपक्षयराहित्यं तेन पूर्वाभ्यामपौनरुक्त्यं प्रतिषिद्धार्थस्य धर्मशब्दस्य ब्रह्मण्यनुपपत्तिमाशङ्क्याह ज्ञानेति अर्थेन्द्रियसम्बन्धोत्थं सुखं व्यावर्त्तयितुमैकान्तिकस्येत्युक्तं अक्षरार्थमुक्त्वा वाक्यार्थमाह अमृतादिति प्रतिष्ठा यस्मादिति पूर्वेण सम्बन्धः तस्मात् प्रत्यगात्मा परमात्मतया निश्चीयते सम्यक्ज्ञानेनेति योजना अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह तदेतदिति विवक्षितं वाक्यार्थं प्रपञ्चयति ययेति आसक्तिः ब्रह्मैवेति कथं सामानाधिकरण्यं तत्राह शक्तीति व्याख्यानान्तरमाह अथ वेति विशेषणानि पूर्ववदपौनरुक्त्यानि नेतव्यानि तदनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं पञ्च प्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्त्तकत्वमित्येतत् उपपादयता मुमुक्षोर्यत्नसाध्यं गुणौराचाल्यत्वादि मुक्तस्यायत्नसिद्धं लक्षणमिति निर्द्धारितः ॥ २७ ॥

इति आनन्दगिरिकृतटीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

स्वामिकृतटीका ।

तत्र हेतुमाह ब्रह्मणो हीति हि यस्माद् ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्यमण्डलं तद्वदित्यर्थः तथा अव्ययस्य नित्यस्य अमृतस्य च मोक्षस्य नित्यमुक्तत्वात् तथा तत्साधनस्य शाश्वतस्य धर्मस्य च शुद्धसत्वात्मकत्वात् तथा ऐकान्तिकस्य अखण्डितस्य सुखस्य च प्रतिष्ठाहं परमानन्दस्वरूपत्वात् अतो मत्सेविनो मद्भावस्यावश्यम्भावित्वाद् युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति अध्यात्मीनगुणासङ्गप्रसञ्चितभावमुक्तिं सुखं तरति मद्भक्त इत्यभाणि चतुर्दशे ॥ २७ ॥

इति श्रीधरस्वामिकृत टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

## भाषा अनुवाद ।

प्रश्नका उत्तर करते हैं कि परमेश्वर स्वरूप हमारीही सेवा अव्यभिचारिणी ऐकान्तिक भक्तिके द्वारा जो मनुष्य करता है सोई मनुष्य गुणत्रयको अच्छीतरहसे अतिक्रम करि के मुक्तिप्राप्ति के योग्य होता है ॥ २६ ॥

अवपूर्वोक्त भगवद्भक्त को मोक्षप्राप्ति के विषय मे हेतु कहते हैं कि जिस हेतु ब्रह्मकी प्रतिष्ठा जो प्रतिमा सो मैं हूं अर्थात् घनीभूत प्रकाश मात्र जैसे सूर्यमण्डल तद्रूप हम घनीभूत ब्रह्म हैं और नित्यमुक्त अव्यय अमृत जो मुक्ति तिस के भी प्रतिमा हम हैं औ शुद्धसत्व मुक्ति के साधन-स्वरूप सनातन धर्म के भी प्रतिमा मूर्त्ति हम हैं औ परमानन्द सुख के भी मूर्त्ति हमें जानो इससे मेरे सेवक को मद्भावरूप ब्रह्मत्व प्राप्तिकी अ-वश्य सम्भावना है जिसके आश्रय हेतुसे असत जो सतके समान प्रतीय-मान यह संसार तिससे हमारे भक्त अनायासही तर हैं यही चौदहें अध्यायमे भगवान् ने कहा है ॥ २७ ॥

इति श्रीजगन्नाथ शुक्ल विरचित भाषा मनभावनी टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

# पञ्चदशोऽध्यायः ।

## श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

### शाङ्करभाष्यम् ।

यस्मान्मदधीनं कर्म्मिणां कर्मफलं ज्ञानिनाञ्च ज्ञानयोगधर्मप्राप्यं सुखं च ज्ञानफलमतोभक्तियोगेन मां ये सेवन्ते मत्प्रसादात् ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वं सम्यक् विजानन्त इत्यतो भगवानर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच ऊर्द्ध्वमूलमित्यादि तत्र ताव द्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसारात् भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति ऊर्द्ध्वमूलमिति ऊर्द्ध्वं मूलं कालतः सूक्ष्मत्वात् नित्यत्वान्महत्त्वाच्चोर्ध्वमुच्यते ब्रह्माव्यक्तमायाशक्तिमत्तन्मूलमस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः श्रुतेश्च ऊर्ध्वमूलोऽवाकशाख इतिपुराणेचाव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः महा

### आनन्दगिरिकृतटीका ।

ज्ञानेन गुणात्यये दर्शितेनाशित्वेनैषां विज्ञानेनात्ययादनाशित्वे तेनापि तद्योग्यत्वाद्ध ज्ञानं गुणात्ययहेतुरित्याशङ्कां निरस्य साक्षादेव श्रवणादिहेतुं संन्यासं विधित्सुः तज्ज्ञत्वस्य परमपुरुषार्थताञ्च विवक्षुरध्यायान्तरमारभ्यते यस्मादिति कर्म्मिणो ज्ञानिनश्च शास्त्रेऽधिकृताः तत्र कर्मिणां कर्मानुकूलं फलमीश्वरायत्तं फलमत उपपत्तेरिति न्यायात् ज्ञानिनामपि तत्फलमीश्वरायत्तमेव ततो ज्ञानस्य वर्णविपर्ययेणानिवृत्तत्वात् तस्मादेवं तदाधो

शाङ्करभाष्यम् ।

भूतप्रशाखश्च विषयैः पल्लवांस्तथा धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः आजीव्यः सर्व्वभूतानां ब्रह्मवृक्षः सनातनः एतद् ब्रह्मवनञ्चैव ब्रह्माचरति नित्यशः एतत् छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ततश्चात्मरतिं प्राप्य यस्मान्नावर्त्तते पुनः इत्यादिस्तमूर्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं न श्वोऽपि स्थास्यति इत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति श्रुतिमादा इत्यव्ययं संसारं मायामयं अनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षोऽव्ययः अनाद्यनन्तदेहादिसन्तानाश्रयो हि सुप्रसिद्धस्तमव्ययं तस्यैव संसारवृक्षस्य इदमन्यद्विशेषणान्तरं छन्दांसि यस्य पर्णानि छन्दांसि छादनादृग् यजुः साम लक्षणानि यस्य संसारवृक्षस्य पर्णानि यथा वृक्षस्य रक्षणार्थानि तथा पर्णानि वेदाः संसारवृक्षपरिरक्षणार्था धर्मतद्धेतुफलप्रकाशनार्थत्वात् यथा व्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदवित् वेदार्थविदित्यर्थः ॥ १ ॥

आनन्दगिरिकृतटीका ।

भक्तराख्येन योगेन मामेव सेवते ते भक्तयाद्द्वारा ज्ञानं प्राप्यते न गुणातीता मुक्ता भवन्तीति स्थितमित्यर्थः ये त्वात्मनस्तत्त्वमेव शब्दे ज्ञाद्यपोहेन जानन्ति तेन ज्ञानेन गुणातीताः सन्तो मुक्तिं गच्छन्तीति किमुवक्तव्यमित्यर्थः सिद्धमर्थमाह किम वक्तव्यमिति आत्मतत्त्वज्ञानं यतः संसारहेतुः ज्ञानं मोक्षानुकूलमतोऽर्जुनेन किन्तदित्यपृष्टमपि तत्त्वं भगवानुक्तवान् प्रश्नाभावेऽपि तस्य तद्व्युत्पादनाभिभाषादित्याह अत इति तस्येति वक्ष्यते किमिति संसारो वर्ण्यते तत्राह तत्रेति अध्यायादिः सन्नर्थः वैराग्यमपि किमिति उच्यते तत्राह विरक्तस्येति इति वैराग्याय संसारवर्णनमिति शेषः नाशसम्भावनावैशेषकं बन्धहेतोर्दर्शयति ऊर्ध्वं मूलमिति कथं कालतः सूक्ष्मत्वं तदाह कारणत्वादिति तदेव कथं कार्य्यापेक्षया नियतपूर्वभावित्वादनादित्वादित्याह नित्यत्वादिति सर्वव्यापित्वाच्चोत् कथं सम्भावयति महत्त्वाच्चेति ऊर्ध्वमुच्छ्रितमुत्कृष्टमिति यावत् तस्य कूटस्थस्य कथं मूलत्वमित्याशङ्क्याह अव्यक्तेति स्मृतिमूलत्वेन श्रुतिमुदाहरति श्रुतेश्चेति अर्वाचीनो निकृष्टाः शाखा इव महदाद्या यस्य स तथा प्रकृते संसारवृक्षे पुराणसम्मतिमाह अव्यक्तेति अव्यक्तमव्याकृतं तदेव मूलं तस्मात् प्रभवनं प्रभवो यस्य स तथा तस्यैव

## आनन्दगिरिकृतटीका ।

मूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः संवर्द्धितः तस्य लौकिकवृक्षसाधर्म्यमाह बुद्धीत्यादिना वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति संसारस्य च बुद्धेः सकाशाज्ज्ञानपरिणामा जायन्ते तेन बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयं संसारतरुः इन्द्रियाणामन्तराणि छिद्राणि कोटराणि यस्य स तथा महान्ति भूतानि पृथिव्यादीन्याकाशान्तानि विशाखस्तम्भो यस्य तथा आजीव्यत्वमुपजीव्यत्वं ब्रह्मणाधिष्ठितो वृक्षो ब्रह्मवृक्षस्तथापि ज्ञानं विना च्छेत्तुमशक्यतया सनातनः चिरन्तनः एतच्च ब्रह्मणः परस्यात्मनो वनं वननीयं सम्भजनीयमत्र हि ब्रह्म-प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव ब्रह्मसारभूतं अथवास्य ब्रह्मवृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेतद् ब्रह्मवनमिव वनं वननीयं सम्भजनीयं नहि ब्रह्मातिरिक्तं संसारस्यास्पदमस्ति ब्रह्मैवाविद्यया संसरतीत्यभ्युपगमादित्यर्थः अहं ब्रह्मेति दृढज्ञानेनोक्तं संसारवृक्षं छित्त्वा प्रतिबन्धकाभावादात्मनिष्ठो भूत्वा पुनरावृत्तिरहितं कैवल्यं प्राप्नोतीत्याह एनदिति अधःशाखमित्येतद्व्याचष्टे महदिति आदिशब्देनेन्द्रियादिसंग्रहः संसारवृक्षस्यातिचञ्चलत्वे प्रमाणमाह प्राहुरिति क्षणध्वंसिनोऽव्ययत्वं विरुद्धमित्याशङ्क्याह संसारेति तदेवोपपादयति अनादीति छादनं रक्षणं प्रावरणं वा कर्मकाण्डानि स्वर्गारोहावरोह-फलानि नानाविधार्थवादयुक्तानि संसारवृक्षं रक्षन्ति तन्निष्ठं दोषञ्चाछादयन्ति तेन तानि छन्दांसि पर्णानीव भवन्तीत्यर्थः तदेव प्रपञ्चयति यथेति उक्तेऽर्थे हेतुमाह धर्मेति कर्म-काण्डानां वेदानामिति शेषः कर्म ब्रह्माख्यसर्ववेदार्थस्य तत्रान्तर्भावमुपेत्य व्याचष्टे-वेदार्थेति ॥ १ ॥

## स्वामिकृतटीका ।

वैराग्येण विना ज्ञानं नच भक्तिरतः स्फुटं, वैराग्योपस्कृतं ज्ञानमीशः पञ्चदशेऽदि-शत् पूर्वाध्यायान्ते ॥ माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते इत्यादिना परमेश्वरमेकान्त-भक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवति इत्युक्तं नचैकान्तभक्तिर्ज्ञानं वा अविरक्तस्य सम्भवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत् सार्द्धश्लोकाभ्यां संसारस्वरूपं वृक्षं रूपकालङ्कारेण वर्णयन् श्रीभगवानुवाच ऊर्ध्वमूलमिति ऊर्ध्वमुत्तमः क्षराक्षराभ्या-मुत्कृष्टः पुरुषोत्तमो मूलं यस्य तं अध इति ततोऽर्वाचीनाः कार्य्योपाधयो हिरण्यगर्भादयो गृह्यन्ते ते तु शाखा इव शाखा यस्य तं विनश्वरत्वेन श्वःप्रभातपर्य्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः प्रवाहरूपेणाविच्छेदादव्ययञ्च प्राहुः ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातन इत्याद्याः श्रुतयः छन्दांसि वेदा यस्य पर्णानि धर्म्माधर्म्मप्रतिपादनद्वारेण छायास्थानीयैः कर्म्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वप्रतिपादनात् पर्णस्थानीया वेदाः यस्तमेवम्भूतमश्वत्थं वेद स एव वेदार्थवित् संसारप्रपञ्चवृक्षस्य मूलमीश्वरो ब्रह्मादयः

स्वामिकृतटीका ।

एतदंशाः शाखास्थानीयाः स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्मभिः सेव्यतामापादितश्च इत्येतावानेव हि पदार्थः अत एवं विद्वान् वेदविदिति स्तूयते ॥ १ ॥

## भाषा अनुवाद ।

वैराग्य के विना ज्ञान औ भक्ति दुर्लभ है इसलिये पंद्रहवें अध्यायमें भगवान् ने वैराग्यसहित ज्ञानका उपदेश अर्जुनको दिया और पूर्व चौदहवें अध्यायके अन्तमें जो कहा कि मां च योऽव्यभिचारेण भक्तियोगेन सेवते इत्यादि छविंशवें श्लोकादिसे कि एकान्त भक्तिसे परमेश्वर का भजनकारी मनुष्य भगवतकी कृपासे ज्ञानलाभ के द्वारा मुक्त होता है सो विषयोंसे विरागरहित पुरुषको एकान्त भक्ति अथवा ज्ञान नहीं होता इसी हेतुसे वैराग्य कथनपूर्वक ज्ञान उपदेश करनेके मनोरथसे प्रथम डेढ़ श्लोक करिके संसार स्वरूपको वृक्षरूप रूपक अलङ्कारसे वर्णन करते हुये भगवान् श्रीकृष्ण अर्जुनसे कहते हैं कि ऊर्ध्वमूल कहे उत्तम अर्थात् क्षर अक्षरसेभी उत्कृष्ट जो पुरुषोत्तम परमेश्वर सो संसारके मूल कारण हैं इसीसे संसार ऊर्ध्वमूल है और अधःशाख कहे परमेश्वरकी अपेक्षा अधः अर्थात् कार्यरूप उपाधियुक्त हिरण्यगर्भ आदि जो संसारकी शाखा स्वरूप सोई संसारको अधःशाख कहा और यह संसार विनश्वर हेतुसे पर दिन प्रभातलौं रहैगा ऐसो विश्वासके योग्य नहीं है इससे अश्वत्थ कहा और आठवें अध्यायके उनीशवें श्लोककी उक्त अभिप्रायसे यह संसार प्रलयके अनन्तर पुनः पुनः उत्पन्न होता है तो होनाजाना इम हेरफेर लगे रहनेसे धारा वाहिक वृक्षिरूप इस संसारका विच्छेद नहीं है अर्थात् सदा ही बना-रहता इससे अव्यय औ अनादिभी है और ऐसेही श्रुतियोंमें भी कहा है और छन्द कहे सकल वेद इस संसारवृक्षके पत्र हैं अर्थात् धर्म अधर्म का प्रतिपादन करिके छायाके तुल्य हैं और कर्मफलके हेतु संसार-वृक्षके आश्रित जीवसमूह है यह कहते हुये वेद पत्रसमान हैं जो

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

शाङ्करभाष्यम् ।

नहि संसारवृक्षादस्मात् समूलात् ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्व्वज्ञः स यो वेद स वेदार्थविदिति यस्मात् संसारवृक्षे समूले सर्व्वं ज्ञेयं अन्तर्भवतीति तस्मात् समूलवृक्षज्ञानं स्तौति तस्यैव संसारवृक्षस्यापरावयवा व्यापारकल्पनोच्यते अधो मनुष्यादिभ्यो यावत् स्थावरमूर्ध्वञ्च यावद्ब्रह्मा विश्वसृजो धर्म इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगता गुणप्रवृद्धाः गुणैः सत्वरजस्तमोभिः प्रवृद्धाः स्थूलकृता उपादानभूतैर्विषयप्रवालाः विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्यः अंकुरीभवन्तीव तेनाऽविषयप्रवालाः शाखाः

आनन्दगिरिकृतटीका ।

समूलसंसारवृक्षज्ञाने तु फलं हित्वा मूलमेव निःकृष्य ज्ञातुं शक्यमिति तत्ज्ञानार्थं प्रयतितव्यमितिमत्वा तत्ज्ञानस्तुतिरत्र विवक्षितेत्याह नहीति अवयवसम्बन्धिन्यापरा प्रागुक्तादतिरिक्ता कल्पना इति यावत् आमनुष्यलोकादाविरिञ्चे रित्यधःशब्दार्थमाह मनुष्यादिभ्य इति तस्मादेवारभ्यासत्यलोकादित्यूर्ध्वशब्दार्थमाह यावदिति शाखाशब्दार्थं

भाषा अनुवाद ।

मनुष्य ऐसे करके संसार वृक्ष अश्वत्थ रूपको जानते हैं सोई वेदके अर्थवित् हैं तात्पर्य यह कि प्रपंचरूप संसारवृक्षके मूल परमेश्वर औरऔर परमेश्वरके अंशस्वरूप जो ब्रह्मादिक सो सव शाखासमान हैं सोई वृक्ष विनश्वर औ प्रवाहरूपसे नित्यभी है और वेदविहित कर्मोंके द्वारा संसारवृक्षकी सेवा करनाभी कहा है इतनाही वेदोंका निश्चित अर्थ है इससे इस वृक्षके ज्ञानी पुरुष को वेदवित् कहना चाहिये ॥ १ ॥

शाङ्करभाष्यम्।

संसारवृक्षस्य परममूलमुपादानं पूर्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसन्ततानि अनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुभवन्तीति तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणां धर्माधिकारः प्रसिद्धः॥ २॥

आनन्दगिरिकृतटीका।

दर्शयति शाखेति तेषां हेतुत्रिगुणत्वेन बहुविधत्वं सूचयति यथेति प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वं अंकुरत्वं स्फोरयति देहादीति ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राह संसारेति अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया सन्ततत्वमविच्छिन्नत्वं रागादीनाञ्च कर्मफलजन्यत्वं प्रकटयति कर्मेति कर्मणां रागादीनां मिथो हेतुहेतुमत्त्वं तेषां तथात्वेनाव्यवच्छिन्नतया प्रवृत्तिः विशेषतो मनुष्यलोके भवतीत्यत्र हेतुमाह अत्र हीति कर्मव्युत्पत्त्या प्राणिनिकायो लोकः मनुष्यश्चासौ लोकश्चेत्यभिमतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः॥ २॥

स्वामिकृतटीका।

किञ्च अधश्चेति हिरण्यगर्भादयः कार्य्योपाधयो जीवाः शाखास्थानीयत्वेनोक्तास्तेषु च ये दुःकृतिनस्तेऽधः पश्वादियोनिषु प्रसृता विस्तारं गताः सुकृतिनश्चोर्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः किञ्च गुणैः सत्त्वादिवृत्तिभिर्जलसेचनैरिव यथायथं प्रवृद्धा वृद्धिं प्राप्ताः किञ्च विषया रूपादयः प्रवालाः पल्लवस्थानीया यासां शाखाग्रस्थानीयाभिरिन्द्रियवृत्तिभिः संयुक्तत्वात् किञ्च अधश्च ब्रह्मलोकादूर्ध्वञ्च मूलानि अनुसन्ततानि विरूढानि मुख्यं मूलमीश्वर एव इमानि त्ववान्तराणि मूलानि तत्तद्भोगवासनालक्षणानि तेषां कार्यमाह मनुष्यलोके कर्मानुबन्धीनि इति कर्म्म एव अनुबन्धि उत्तरभावि येषां तानि ऊर्ध्वाधोलोकेषूपभुक्ततत्तद्भोगवासनादिभिर्हि कर्म्मक्षये मनुष्यलोकं प्राप्तानां तत्तदनुरूपेषु कर्म्मसु प्रवृत्तिर्भवति तस्मिन्नेव हि कर्माधिकारो नान्येषु लोकेषु अतो मनुष्यलोक इत्युक्तं॥ २॥

भाषा अनुवाद।

और कार्यरूप उपाधिविशिष्ट हिरण्यगर्भ आदि जो सकल जीव सोई शाखारूप पूर्वश्लोकमें कहा है तिनके मध्यमें जो अकर्म्मकारी

**न रूपमस्येह तथोपलभ्यते**
**नान्तो नचादिर्नच संप्रतिष्ठा।**
**अश्वत्थमेनं सुविरूढमूल-**
**मसङ्गशस्त्रेण दृढ़ेन छित्वा ॥ ३ ॥**

शाङ्करभाष्यम्।

समूलसंसारवृक्षज्ञाने तु फलं छित्वा मूलमेव निःक्रम्य ज्ञातुं शक्य मिति तत्ज्ञानार्थं प्रयतितव्यमिति मत्वा तत्ज्ञानस्तुतिरत्र विवक्षितेत्याह नहीति अवयवसम्बन्धिन्यपरा प्रागुक्तादतिरिक्ता कल्पना इति यावत्

भाषा अनुवाद।

अर्थात् कुत्सित कर्म करते हैं ते अधः अर्थात् पशु आदि योनिमे जाते हैं और जो सत्कर्म करते वे ऊर्ध्व कहे देवयोनिमे प्राप्त होते हैं येई संसार-वृक्षके शाखारूप सत्त्व आदि गुणोंकी वृत्तिसे जलसेचनके समान यथा योग बढ़ते हैं और शाखाके अग्रतुल्य इन्द्रिय औ इन्द्रियोंके विषय जो रूप रस आदि पांच सोई प्रधान अर्थात् पत्रतुल्य हैं और अधोभाग ऊर्ध्व भागमे औ समस्त मूलमे परमेश्वरही मुख्यमूल हैं और तद्भोगवासनारूप अवान्तर वासना सब अवान्तरमूल हैं और अवान्तर वासनाके कार्य कहते कि कर्ममात्र ही सकल वासनाके अनुबन्ध अर्थात् उत्तरभावो कहे होन-हार सोई वासना समस्त मनुष्यलोकमे कर्म अनुबन्धी होती है अर्थात् ऊर्ध्व अधोलोकमे भुक्ति जो नना प्रकारके भोग सोई सोई भोगकी भोगवासना के द्वाराही कर्मचय होनेसे मनुष्यलोकमे प्राप्त लोगोंको सोई सोई वासना के अनुरूप सकल कर्मोंमे प्रवृत्ति होती है और जिस हेतु मनुष्यलोकही मे कर्मका अधिकार है और कोई लोकमे नहीं है इससे मनुष्यलोकही मे वा-सनारूप मूलको कर्मका अनुबन्धी कहाहै शोचहै कि क्षणभङ्ग सकल की साधनरूप मनुष्यदेह को पायके न कुछ कर सके इस भूलको भी भूल गये किसीको देख या किसीके उपदेशमे आंख अंधी औ कान बहरेही रहे ॥२॥

शाङ्करभाष्यम् ।

आमनुष्यलोकाद्‌ाविरिञ्चेरित्यधः शब्दार्थमाह मनुष्यादिभ्य इति तस्मादि-वारभ्यामनन्तोकादित्यूर्ध्वशब्दार्थमाह यावदिति शाखाशब्दार्थं दर्शयति ज्ञानेति तेषां हेतुगुणत्वेन बहुविधत्वं सूचयति यथेति प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वं अंकुरत्वं स्फोरयति देहादीति ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राह संसारेति अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया सन्ततत्वम-विच्छिन्नत्वं रागादीनाञ्च कर्मफलजन्यत्वं प्रकटयति कर्मेति कर्मणां रागा-दीनां मिथो हेतुहेतुमत्वं तेषां तथात्वेनानवच्छिन्नतयस्त्वयं वर्णितः संसार वृक्षः न रूपेति न रूपमस्य इह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरी-च्युदकमायागन्धर्वनगरसमत्वात् दृष्टनष्टस्वरूपो हि स इत्यत एवानन्तो न पर्यन्तो निष्ठासमाप्तिर्वा विद्यते तथा नचादिरित आरभ्यायं प्रवृत्त इति न केनचिद्गम्यते नच संप्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यते अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्टुविरूढानि विरोहं गतानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेण असंगः असंगता पुत्रवित्तलोकैषणा-दिभ्यो व्युत्थानन्तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुखनिश्चयदृढो कृतेन पुनः पुनर्विवेकाभ्यासाश्मनिश्चितेन च्छित्त्वा संसारवृक्षं सबीजमुद्धृत्य ॥ ३ ॥

आनन्दगिरिकृतटीका ।

पुनः पुनः रागादिना प्रवृत्तत्वेनानादित्वाच्च संसारवृक्षः स्वयमुच्छिद्यते नचोच्छेत्तुं शक्यते केनापीत्याशङ्क्याह यस्त्विति यथा पूर्वं वर्णितं यथाच लोके प्रसिद्धं तथा रूपमिह शास्त्रेऽनुश्रूयते तथाचास्य ज्ञानापनोद्यत्वं युक्तमित्याह यथेति तस्याप्रमितत्वे हेतुमाह स्वप्नेति तस्य स्वप्नादिसमत्वे दृष्टनष्टस्वरूपत्वं हेतुं करोति दृष्टेति इत्यमेयतेति शेषः तस्यैवामेयत्वं हेतुं कृत्वाथमानमपि तस्य न भातीत्याह अतएवेति ज्ञानं विना आन्ति-वासना कर्मणामन्योन्यनिमित्तत्वात्प्रवाहरूपेणानन्तोऽस्त्वित्यर्थः इदं प्रथमत्वमपि नास्य परिच्छेत्तुं शक्यमित्याह तथेति आद्यन्तयोर्मध्यमपि नास्य प्रामाणिकमित्याह मध्यमिति संसार-वृक्षस्याप्रामाणिकत्वात्तस्य क्षणभङ्गुरस्य स्वयमेवोच्छेदसम्भवात्तदुच्छेदार्थं न प्रयतितव्यमित्या-शङ्क्याह अश्वत्थमिति व्युत्थानं वैराग्यपूर्वकं पारिव्राज्यं दृढीकृतत्वमेव विवेकपूर्वकत्वेन निश्चितमिति पुनः पुनरिति ॥ ३ ॥

ततः पदं तत् परिमार्गितव्य
यस्मिन् गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

शाङ्करभाष्यम् ।

तत इति ततः पश्चात् यत् पदं वैष्णवं तत् परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः यस्मिन् पदे गताः प्रविष्टा न निवर्त्तन्ति नावर्त्तन्ते भूयः पुनः संसाराय कथं परिमार्गितव्यमित्याह तमेव च यः पदशब्देनोक्त आद्यमादौ भवं आद्यं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यं

स्वामिकृतटीका ।

किञ्च न रूपमिति इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य तथा ऊर्ध्वमूलत्वादिप्रकारेण रूपं नोपलभ्यते नचान्तोऽवसानमपर्यन्तत्वात् नचादिरनादित्वात् नच संप्रतिष्ठा स्थितिः कथं तिष्ठतीति नोपलभ्यते यस्मादेवम्भूतोऽयं संसारवृक्षो दुरवच्छेदोऽनर्थकरश्च तस्मादेनं दृढेन वैराग्येण शस्त्रेण छित्त्वा तत्त्वज्ञाने यतेतेत्याह अश्वत्थमेनमिति सार्द्धेन एनमश्वत्थं सुविरूढमूलमत्यन्तवद्धमूलं सन्तं असङ्गोऽहं ममतात्यागस्तेन शस्त्रेण दृढेन सम्यग्विचारेण छित्त्वा पृथक्कृत्य ॥ ३ ॥

भाषा अनुवाद ।

इस संसारमे वर्त्तमान जो प्राणी हैं वे संसार वृक्षका ऊर्ध्व मूल आदि भेद नहीं जानते हैं और अत्यन्त वड़ेपनके हेतुसे इसका अन्तभी नहीं जाना जाय है तथा अनादि हेतुसे आदिभी नहीं कोई जानिसके है और स्थिति अर्थात् यह संसार किसतरह स्थित औ कैसा है सोभी खबर किसीको नहीं है इससे यह संसारवृक्ष दुरच्छेद्य कहे इसका काटना अति कठिन है औ अनर्थकारी है इसी हेतु इस संसारको दृढ़ वैराग्यरूप शस्त्रसे छेदन करके तत्त्वज्ञानकी यत्न करना चाहिये यह डेढ़ श्लोकसे भगवान कहते हैं कि यह अश्वत्थरूप दृढ़मूल संसारको अहं ममता त्यागरूप दृढ़ अस्त्रस्वरूप सम्यक् विचारसे छेदन अर्थात् पृथक् करके ॥ ३ ॥

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

## शाङ्करभाष्यम् ।

गच्छ शरणमित्यर्थः कोऽसौ पुरुष इत्युच्यते यतो यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिव मायो पुराणी चिरन्तनी ॥४॥

कथंभूतास्तत् पदं गच्छन्तीत्युच्यते निर्मानेति निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहाः मानमोहवर्जिताः

### आनन्दगिरिकृतटीका ।

अवृत्य किं कर्त्तव्यं तदाह तत इति पश्चादश्वत्थादूर्ध्वं व्यवस्थितमित्यर्थः किन्तत् पदं यदन्विष्य ज्ञातव्यं तदाह यस्मिन्निति येन सर्वं पूरणं पुरि शु वा शयानं पुरुषं प्रपद्ये शरणं गतोऽस्मीत्यर्थः विवर्त्तवादानुरोधिनं दृष्टान्तमाह ऐन्द्रेति ॥ ४ ॥

### स्वामिकृतटीका ।

तत इति ततस्तस्य मूलभूतं तत्पदं वस्तु परिमार्गितव्यं अन्वेष्टव्यं कीदृशं यस्मिन् गता यत् पदं प्राप्ताः सन्तो भूयो न निवर्त्तन्ति नावर्तन्त इत्यर्थः अन्वेषणप्रकारमेवाह तमेवेति यत यथा पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विस्तृता तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामि इत्येवमेकान्तभक्त्या अन्वेष्टव्यमित्यर्थः ॥ ४ ॥

### भाषा अनुवाद ।

तदनन्तर संसार के मूल कारणस्वरूप तत्पद से कहे जाते भये जिस ईश्वरपद को अन्वेषण करना उचित है सो पद कैसा है इस अपेक्षापर कहते हैं कि जहां जायकर फेर घोर संसार आवर्त्तन कहे आवागमन होता नहीं और भगवत्पद ढूढ़ने को रीति कहते हैं कि जिससे इस पुरातनी संसार की प्रवृत्ति भई है उसी आदिपुरुषके शरणागत होते हैं इसी तरह एकान्तभाव के द्वारा ढूंढे ॥ ४ ॥

**न तद्भासयते सूर्यो न शशाङ्को न पावकः।**
**यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम ॥ ६ ॥**

### शाङ्करभाष्यम्।

जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः जितः सङ्गदोषो यैस्ते जितसङ्गदोषा अध्यात्मनित्याः परमात्मस्वरूपालोचने नित्यास्तत्परा निवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते विनिवृत्तकामा यतयः संन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढ़ा मोहवर्जिताः पदमव्ययं तद्यथोक्तं ॥ ५ ॥

### आनन्दगिरिकृतटीका।

परिमार्गणापूर्वकं वैष्णवं पदं गच्छतां संप्रात्तरप्याकांक्षापूर्वकं कथयति कथमित्यादिना मानोऽहङ्कारः मोहस्त्वविवेकः जितसङ्गदोषाः शत्रुमित्रसन्निधावपि द्वेषप्रीतिवर्जिता इत्यर्थः तत्परत्वं श्रवणादिनिष्ठत्वं संन्यासिनो वैराग्यद्वारा त्यक्तसर्वकर्म्माण इत्यर्थः आदिशब्देन तद्धेतुपरिग्रहः मोहवर्जितत्वमुक्तहेतुतः संजातसम्यग्धीत्वं ॥ ५ ॥

### स्वामिकृतटीका।

तत्प्राप्तौ साधनान्तराणि दर्शयन्नाह निर्मानेति निर्गतौ मानमोहौ अहङ्कारमिथ्याभिनिवेशौ येभ्यस्ते जितः पुत्रादिसङ्गरूपो दोषो यैस्ते अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः विशेषेण निवृत्त कामो येभ्यस्ते सुखदुःखहेतुत्वात् सुखदुःख संज्ञानि शीतोष्णादीनि द्वन्द्वानि तैर्विमुक्ता अतएवामूढ़ा निवृत्ताविद्याः सन्तस्तदव्ययं पदं गच्छन्ति ॥ ५ ॥

### भाषा अनुवाद।

सोई परमेश्वरकी प्राप्तिके विषयमे दूसरी उपाय देखावते हुये कहते हैं कि जिन मनुष्योंके मान अहंकार औ मिथ्यावस्तुमे रुचि नहीं है अर्थात् मानादि दूर होगये हैं और जिनके पुत्र स्त्री धन आदिसे आसक्तिरूप दोष निवृत्त भये हैं और जिनको आत्मज्ञानमे भली प्रकारसे निष्ठा है और जिनकी वासना अच्छीतरह निवृत्त होगई हैं और सुख दुःखके हेतुरूप शीत उष्ण हानि लाभ आदि द्वन्दसे अच्छी तरह छूट गये हैं ऐसे जो निवृत्त अविद्य कहे ज्ञानी जन हैं तेई अव्ययरूप को प्राप्त होते हैं ॥ ५ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति॥ ७॥

शाङ्करभाष्यम्।

तदेव पदं पुनर्विशिष्यते नेति तद्धामेति व्यवहितेन धाम्ना सम्बन्धः धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति तथा न शशाङ्कश्चन्द्रो नच पावको नाग्निरपि यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्त्तन्ते यच्च सूर्यादिभिर्न भासयते तद्धाम पदं परमं विष्णोर्मम पदं यत् गत्वा न निवर्त्तन्त इत्युक्तं॥ ६॥

ननु सर्वा हि गतिरागत्यन्ता संयोगा विप्रयोगान्ताः इति प्रसिद्धं हि कथमुच्यते तद्धाम गतानां नास्ति निवृत्तिरिति शृणु तत्र कारणं ममैवेति ममैव परमात्मनो नारायणस्यांशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीवलोके जीवानां लोके संसारे जीवभूतः भोक्ता कर्त्तेति प्रसिद्धः सनातनः पुरातनः यथा जलसूर्यकः सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते

आनन्दगिरिकृतटीका।

तद्वेत् परं वेद्यं कर्त्तुरन्यत् कर्मेति तु नापाश्यतोऽवेद्यं वेद्यमसत्त्वात् प्रेप्सित-त्वाविद्विरित्याशङ्क्याह तदेवेति उक्तमनूद्याक्षिपति नन्वित्यादिना॥ ६॥

स्वामिकृतटीका।

तदेवं गन्तव्यं पदं विशिनष्टि न तदिति तत् पदं सूर्यादयो न प्रकाशयन्ति यत् प्राप्य न निवर्त्तन्ते योगिनस्तद्धाम स्वरूपं परमं मम अनेन सूर्यादिप्रकाशाविषयत्वेन जडत्वशीतोष्णादिदोषप्रसङ्गो निरस्तः॥ ६॥

भाषा अनुवाद।

अब उसी अव्यय पदको विशेष रूप से कहते हैं कि उस पदको सूर्य चन्द्र अग्निभी प्रकाश नहीं कर सकते हैं और योगी जन जिस पदको प्राप्त होके फिरि संसारमें आवर्त्तन कहे आगमनागमन नहीं करते हैं सोई धाम कहे तेज रूप हमारा स्वरूप है जहां सूर्यादिको भी गति नहीं तहां दुःख द्वन्द्व जडता का कौन प्रसङ्ग है॥ ६॥

## शाङ्करभाष्यम्।

तथा अयमप्यंशः तेनैवात्मना सङ्गच्छत्येवमेव यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं यद्गत्वा न निवर्तन्त इति ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोऽंश इति सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागान्नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोऽंश इव कल्पितो दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः स च जीवो मदंशत्वेन कल्पितः कथं संसरतीत्युक्तमिति चेदुच्यते मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥ ७ ॥

### आनन्दगिरिकृतटीका।

तत्र प्रसिद्धिं प्रमाणयति संयोगा इति गमनस्यागमनान्तत्वप्रसिद्धेरप्युक्तं यद्गत्वेत्यादि इत्युपसंहरति कथमिति आक्षेपं परिहरति शृण्विति भगवत्प्राप्तेर्निष्ठत्वं तत्त्वाभावः सप्तम्यर्थः जीवस्य परांशत्वेऽपि कथमुक्तदोषसमाधिरित्याशङ्क्य प्रतिबिम्बपक्षमादाय दृष्टान्तेन प्रत्याचष्टे यथेति अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरेणोक्तदोषसमाधिं दर्शयति यथा वेति आक्षेपसमाधिमुपसंहरति अत इति परस्य निरवयवत्वात्तदंशत्वं जीवस्यायुक्तमिति शङ्कते नन्विति तस्य निरवयत्वं साधयति सावयवत्वे चेति वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोऽंशो भविष्यतीति परिहरति नैषदोष इति वस्तुतस्तु जीवस्य नांशत्वं परमात्मतावच्छान्ततया दर्शितत्वादित्याह दर्शितश्चेति यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतस्तदात्मैव न तर्हि तस्य संसारित्वं उत्क्रान्तिर्वेति शङ्कते कथमिति जीवस्य संसरणमुत्क्रमणञ्चोपपादयितुमुपक्रमते उच्यत इति ॥ ७ ॥

### स्वामिकृतटीका।

ननु च त्वदीयं धाम प्राप्ताः सन्तो यदि न निवर्तन्ते तर्हि सति संपद्य न विदुः सति संपद्यामह इत्यादिश्रुतेः सुषुप्तिः सर्वेषामस्तीति को नाम संसारी स्यादित्याशङ्क्य संसारिणं दर्शयति ममैवेति पञ्चभिः ममैवांशोऽयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः असौ सुषुप्तिप्रलययोः प्रकृतौ लीनतया स्थितानि मनःषष्ठं येषां तानीन्द्रियाणि पुनर्जीवलोके संसारोपभोगार्थमाकर्षति एतञ्च कर्मेन्द्रियाणां प्राणस्य चोपलक्षणार्थमयमभावः सत्यं सुषुप्तिप्रलययोरपि मदंशत्वात् सर्वस्यापि जीवमात्रस्य मयि लयादस्त्येव मत्प्राप्तिस्तथाप्यविद्यावृतस्य सानुशयस्य सप्रकृतिके मयि लयो नतु शुद्धे तदुक्तं

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

शाङ्करभाष्यम् ।

कस्मिन् काले शरीरमिति यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसंघातस्वामी जीवस्तदाकर्षतीति श्लोकस्य द्वितीयपादार्थवशात् प्राथम्येन सम्बध्यते यदा च पूर्वस्मात् शरीरात् शरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनः षष्ठानीन्द्रियाणि संयाति सम्यक् याति गच्छति किमिवेत्याह वायुः पवनो गन्धानिव आशयात् पुष्पादेः ॥ ८ ॥

आनन्दगिरिकृतटीका ।

स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाकर्षणस्य कालं पृच्छति कस्मिन्निति जीवस्योत्क्रान्तिर्नेश्वरस्येत्याशङ्क्येश्वरशब्दार्थमाह देहादीति उत्क्रान्त्यनन्तरभाविनो गतिरित्येतद्दर्शयन्नादिमुक्तं व्यवशिष्टानि श्लोकाक्षराण्याचष्टे यदा चेति ॥ ८ ॥

स्वामिकृतटीका ।

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्तीत्यादिना अतः पुनः संसाराय निर्गच्छन्नविद्वान् प्रकृतौ लीनतया स्थितानि स्वोपाधिभूतानीन्द्रियाण्याकर्षति विद्वांस्तु शुद्धस्वरूपमाप्नोतीति निष्टत्तिरिति ॥ ७ ॥

भाषा अनुवाद ।

जो कहो कि तुमारे धामको प्राप्त हो फेरि संसार नहीं होता सो सत्य है सकल जीव सत्त्व स्वरूप सम्पन्न होके ह तद्दृष्टि नहीं करते हैं और सुषुप्ति समयमें हम ब्रह्मभाव को प्राप्त होते हैं ऐसे श्रुति विधान करें हैं औ प्रलयकालमें भी सब जीव तिस धामको प्राप्त होते हैं तो फेरि संसारी और किसका नाम है इस आशङ्कापर पाच श्लोकसे संसारी स्वरूप देखावते हैं कि हमारा अंश जीव अविद्यासे सुषुप्ति तथा प्रलयके समय प्रकृतिमें लीन होके रहते हैं और मनसमेत इन्द्रिय इन सबोको मेरेही अंश सनातन जीवभूत संसारके उपभोगार्थ फेरभी मनुष्यलोक मे खेंचते हैं यहां यह जानना चाहिये कि इन्द्रिय शब्दसे ज्ञान कर्म इन्द्री औ पञ्च प्राण लेते हैं इसीसे संसारी होते हैं ॥ ७ ॥

**श्रोत्रञ्चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

शाङ्करभाष्यम् ।

कानि पुनस्तानीति श्रोत्रमिति श्रोत्रं चक्षुः स्पर्शनञ्च त्वगिन्द्रियं रसनं जिह्वा घ्राणमेव च मनश्च षष्ठं प्रत्येकं इन्द्रियेण सहाधिष्ठाय देहस्थो विषयान् शब्दादीनुपसेवते ॥ ९ ॥

आनन्दगिरिकृतटीका ।

मनःषष्ठानीन्द्रियाण्युक्त्वैव प्रश्नद्वारा विशेषतो दर्शयति कानीति ॥ ९ ॥

स्वामिकृतटीका ।

तान्याकृष्य किं करोतीत्याह शरीरमिति यत् यदा शरीरान्तरं कर्मवशादवाप्नोति यतश्च शरीरादुत्क्रामति ईश्वरो देहादीनां स्वामी तदा पूर्वस्मात् शरीरादेतानि गृहीत्वा तच्छरीरान्तरं सम्यग्याति शरीरे [सत्यपि इन्द्रियग्रहणे दृष्टान्तः आशयात् स्वस्थानात् कुसुमादेः सकाशात् गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा वायुर्यथा-गच्छति तद्वत् ॥ ८ ॥

तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वा गच्छति तदाह श्रोत्रमिति श्रोत्रादीनि बाह्येन्द्रियाणि मनश्चान्तःकरणमधिष्ठायाश्रित्य शब्दादीन् विषयानयं जीव उपभुङ्क्ते ॥९॥

**भाषा अनुवाद ।**

और सोई इन्द्रियोंको आकर्षण करिके जीव क्या करतेहैं जो यह शङ्का करो तो सुनो कि जब ईश्वर नाम देह आदिका स्वामीरूप व्यावहारिक जीव कर्मवशते दूसरी शरीरको प्राप्त होतेहैं अथवा जब शरीरको छोड़िके गमन करते हैं तब पूर्वशरीरसे इन्द्रियादिकों को ग्रहण करिके गमन करें हैं इसमें दृष्टान्त यह कि जैसे वायु फूलों के स्थानसे सुगन्धरूप सूक्ष्म अंश परमाणु ग्रहण कर गमन करै है तैसे ही यह भी जानो ॥ ८ ॥

इन्द्रियों के समाचार कहके अब जिसलिये उन इन्द्रियोंको ग्रहण करिकै गमन करते हैं सो कहते हैं कि ये जीव श्रोत्र चक्षु स्पर्श जिह्वा और घ्राणसे बाह्य इन्द्रिय और अन्तःकरण को आश्रय करिके शब्द आदि विषयों का उपभोग करें हैं ॥ ९ ॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितं।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः॥ १०॥

शाङ्करभाष्यम्।

एवं देहगतं देहात् उत्क्रामन्तमिति उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्तं स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैः गुणैरन्वितमनुगतं संयुक्तमित्यर्थः एवम्भूतमप्येनमत्यन्तं दर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयाऽनेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्तन्त इत्यनुक्रोशति च भगवान् ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः॥ १०॥

आनन्दगिरिकृतटीका।

शरीरमित्यादिश्लोके देहादात्मनोऽतिरेकमुक्त्वा श्रोत्रं चक्षुरित्यादौ स्वामित्वमिति विषये यथायथं करणानां प्रवर्तकत्वात् तेभ्योऽतिरिक्तमात्मानमुक्तं तर्हि तमुत्क्रान्त्यादि कुर्वन्तं स्वरूपत्वात् किमिति सर्वे न पश्यन्तीत्याशङ्क्याह एवमिति सन्निहिततमत्वेन दर्शनयोग्यमपि विषयपरवशादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति एवम्भूतमिति तर्हि केषामात्मदर्शनं तत्राह ये तु पुनरिति॥ १०॥

श्रीधरकृतटीका।

ननु कार्यकारणसंघातव्यतिरेकेणैवम्भूतमात्मानं सर्वेऽपि किं न पश्यन्ति तत्राह उत्क्रामन्तमिति उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं तस्मिन्नेव देहे स्थितं वा विषयान् भुञ्जानं गुणान्वितमिन्द्रियादियुक्तं जीवं विमूढा नालोकयन्ति ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति॥ १०॥

भाषा अनुवाद।

जो कहो कि ऐसे आत्माको कार्य कारण समूहसे भिन्नरूप सब कोई क्यों नहीं देखते इसपर कहते हैं कि देहान्तरगामी अथवा उसी देहमे स्थित वा विषयभोगी किंवा इन्द्रियादियुक्त जीव को विशेष मूढ़ बुद्धि सब नहीं देखते हैं परन्तु ज्ञानही जिसके चक्षु हैं ऐसे विवेकी मनुष्य ही देखते हैं॥ १०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितं ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

### शाङ्करभाष्यम् ।

केचित्तु यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृत-मात्मानं पश्यन्त्ययमस्मीति उपलभन्ते आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानः तपसेन्द्रियजये न च दुश्चरितादनुपरता अशान्तदर्पाः प्रयत्नं कुर्वन्तो नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥११॥

### आनन्दगिरिकृतटीका ।

ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत् किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनात्मानं पश्यन्ति नेत्याह केचित्त्विति प्रयत्नः श्रवणमननात्मकः शास्त्रादिप्रमाणैर्यतन्तोऽपीति सम्बन्धः असंस्कृतात्मत्वं प्रकटयति तपसेति दुश्चरिताद्विरतिफलं कथयति अशान्तेति अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाह प्रयत्नमिति ॥ ११

### स्वामिकृतटीका ।

दुर्विज्ञेयश्चायं यतो विवेकिष्वपि केचित् पश्यन्ति केचिन्न पश्यन्तीत्याह यतन्त इति यतन्तो ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानमात्मनि देहेऽवस्थितं विविक्तं पश्यन्ति शास्त्राभ्यासादिभिर्यत्नं कुर्वाणा अकृतात्मानोऽविशुद्धचित्ता अतएवाचेतसो मन्दमतय एनं न पश्यन्ति ॥ ११ ॥

### भाषा अनुवाद ।

और यह आत्मा दुर्विज्ञेय है क्योंकि विवेकियों के बीच भी कोई देखते और कोई नहीं देख सकते हैं सोई कहते हैं कि ध्यान आदिके द्वारा यत्नकारी योगी जन अपनी शरीरमे इस आत्माको क्षयकरूपसे देखते हैं और शास्त्र अभ्याससे यत्न करकें भी अकृतात्मा अशुद्धचित्त मन्दमति लोग इस आत्माको नहीं देखते हैं ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलं ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं ॥ १२ ॥**

शाङ्करभाष्यम् ।

यत् पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते यत् प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्त्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वञ्च विवक्षुश्चतुर्भिः श्लोकैः विभूतिसंक्षेपमाह भगवान् यदेति, यदादित्यगतमादित्याश्रयं किन्तत् तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि यच्च शशभृति तत्तेजोऽवभासकं वर्त्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तत् ज्योतिरित्यादि ननु स्थावरेषु जङ्गमेषु च तत् समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि नैष दोषः सत्त्वाधिक्यादाधिक्योपपत्तेरादित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरां ज्योतिरिति तद्विशिष्यते ननु तत्रैव तदधिकमिति यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति आदर्शादौ तु स्वच्छे स्वच्छतरे तारतम्येनाविर्भवति तद्वत् ॥१२॥

आनन्दगिरिकृतटीका ।

अनन्तरश्लोकचतुष्टयस्य वृत्तानुवादद्वारा तात्पर्य्यार्थमाह तत्पदमिति जीवात्मत्वेन चिद्रूपत्वशङ्का तदीयचैतन्येनादित्यादीनामवभासकत्वाच्च ब्रह्मणश्चिद्रूपत्वमित्याह यदादित्येति चिद्रूपत्वेन ब्रह्मणः सर्वात्मकत्वप्रतिपादकत्वेन श्लोकं व्याचष्टे यदित्यादिना आदित्यादौ तत्र तत्र स्थितं ब्रह्म चैतन्यज्योतिः सर्वावभासकमित्यर्थः ब्रह्मणः सर्वगतत्वेन चिद्रूपत्वमत्र विवक्षितमिति व्याख्यान्तरमाह अथवेति चैतन्यज्योतिषः सर्वत्राविशेषादादित्यादिगत-विशेषणमयुक्तमिति शङ्कते नन्विति सर्वत्र सत्त्वेऽपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति नैष दोष इति तदेव प्रपञ्चयति आदित्यादिष्विति सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेऽपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति यथा हीति ॥ १२ ॥

गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्व्वाः सोमो भूत्वा रसात्मकः ॥१३॥

शाङ्करभाष्यम्।

किञ्च गामिति गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधःपतति न विशीर्य्यते तथाच मन्त्रवर्णः येन द्यौरुग्रा पृथिवी च दृढेति सदाधारपृथिवीत्याद्यीशातो गामाविश्य भूतानि चराचराणि धारयामीति युक्तमुक्तं किञ्च पृथिव्यां जाता हि ओषधीः सर्व्वा ब्रीहियवाद्याः पुष्णामि पुष्टिमती रसास्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सर्वरसात्मको रसस्वभावः सर्वे रसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥

स्वामिकृतटीका।

तदेवं न तद्भासयते सूर्य इत्यादिना पारमेश्वरं परं धामोक्तं तत्प्राप्तानाञ्चापुनरावृत्तिरुक्ता तत्र संसारिणोऽभावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितं इदानीं तदेव पारमेश्वरं रूपमनन्तशक्तित्वेन निरूपयति यदित्यादि चतुर्भिः आदित्यादिषु स्थितं यदनेकप्रकारं तेजो विश्वं प्रकाशयति तत् सर्वं तेजो मदीयमेव जानीहि ॥ १२ ॥

भाषा अनुवाद।

इससे न तद्भासयते सूर्यं इत्यादि इसी अध्याय के सप्तम आदि श्लोक के द्वारा परमेश्वर का जो परम धाम सो कहा गया है औ तद्धामप्राप्त जीवोंकी अपुनरावृत्ति कही गई है औ तद्विषयक संसारी के अभाव आशङ्कापर देह से भिन्न संसारी स्वरूप को भी देखाया है अब सोई परमेश्वर सम्बन्धी रूप इहां से लेकर चार श्लोक से अनन्तशक्ति क्रमसे निरूपण करते हैं कि सूर्यादि मे स्थित अनेकप्रकार तेज जो विश्व को प्रकाश करे हैं ऐसे ही चन्द्र मे स्थित जो तेज अखिल संसार को प्रकाश करते हैं तैसेही अग्निस्थ कहे अग्नि मे टिका हुवा तेज ब्रह्माण्ड को दीप्त करे है सो सब तेज हमाराही है यह जानो ॥ १२ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं ॥ १४ ॥**

### शाङ्करभाष्यम् ।

किञ्च अहमिति अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा यमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते इत्यादिश्रुतेर्वैश्वानरः सन् प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापनसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि अन्नं चतुर्विधं चतुःप्रकारं भक्ष्यमन्नं भोज्यञ्चोष्यं लेह्यञ्च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥१४॥

### आनन्दगिरिकृतटीका ।

इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह किञ्चेति ईश्वरो हि पृथिवीदेवतारूपेण पृथिवीं प्रविश्य भूतग्रामं जगदैश्वरेणैव बलेन बिभर्ति ततो गुर्व्यपि पृथिवी विदीर्णा न पततीत्यत्र प्रमाणमाह तथा चेति परस्यैव हिरण्यगर्भात्मनावस्थानाच्च मन्त्रवर्णोऽपि तत्परतेति भावः देवतात्मना द्यावापृथिव्योरुग्रत्वदृढत्वसामर्थ्यं तथापीश्वरायत्तमेव तद्धारणं तदपेक्षया दृढं तत्वादिति द्रष्टव्यं ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति रसात्मकसोमरूपतापत्त्यापि कथमोषधीरीश्वरः सर्वाः पुष्णातीत्याशङ्क्याह सर्वेति ॥ १३ ॥

किञ्च अहमिति वैश्वानरो जाठराग्निर्भूत्वा प्राणिनां देहस्यान्तः प्रविश्य प्राणापानाभ्याम् तदुद्दीपकाभ्यां सहितः प्राणिभिर्भुक्तं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि तत्र यद्दन्तैरवखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्यं यत्तु केवलं जिह्वया विलोड्य

### स्वामिकृतटीका ।

किञ्च गामिति गां पृथ्वीमोजसा बलेनाधिष्ठायाहमेव चराचराणि भूतानि धारयामि अहमेव च रसमयः सोमो भूत्वा व्रीह्याद्योषधीः सर्वाः संवर्द्धयामि ॥ १३ ॥

### भाषा अनुवाद ।

और पृथिवीको अपने बलके द्वारा स्थित करके मैं चराचरात्मक सकल भूतोंको धारणकर्त्ता हूँ और अमृतात्मक चन्द्रस्वरूप हो वृक्ष आदि सम्पूर्ण सबको भी बढ़ावता हूँ ॥ १३ ॥

**सर्वस्य चाहं हृदि सन्निविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनञ्च।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम्॥ १५॥**

आनन्दगिरिकृतटीका।

भगवतः सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति अहमेवेत्यहंशब्देन परो गृह्यते भूत्वा पचामीति सम्बन्धः परस्यैव जाठरात्मना स्थितौ श्रुतिः प्रमाणयति अयमिति वाह्यं भौमाग्निं व्यावर्त्तयति योऽयमिति देहान्तरारम्भकत्वेनेयं भूतं व्यवच्छिनत्ति येनेति जाठरात्मना परः स्थितश्चेत्तस्य देहाश्रितत्वं सिद्धमिति नष्टश्वबृक्कव्यमित्याशङ्क्य पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति श्रुतिमाश्रित्याह प्रविष्ट इति परस्य जाठरात्मनोऽन्नपाके सहकारि कारणमाह प्राणेति संयुक्तत्वं संधुक्षितत्वं अन्नस्य चातुर्विध्यं प्रकटयति भोज्यमिति भोक्तरि वैश्वानरमिति दृष्टिर्भोज्ये सोमदृष्टिरेवं भोक्तृभोज्यरूपं सर्वं जगदग्निसोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो नेति प्रासंगिकं सफलं ध्यानं दर्शयति भोक्तेति॥ १४॥

स्वामिकृतटीका।

निगीर्यते पायसादि तद्भोज्यं यज्जिह्वायां निःक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुड़ादि तल्लेह्यं यत्तु दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्य्यावशिष्टं त्यजते इक्षुदण्डादि तच्चोष्यमिति चतुर्विधस्य भेदः॥ १४॥

**भाषा अनुवाद।**

**और मैं वैश्वानरनाम जठराग्नि स्वरूप होके प्राणियों की शरीर के मध्य मे प्रवेश करके प्राण अपान वायु के साथ हो जीवोंका भुक्त जो भक्ष्य भोज्य लेह्य चोष्य चतुर्विध अन्न तिसको परिपाक करता हूं भक्ष्य वह है जो दांतों से पीसकर खायाजाय दाल भात चर्वण आदि और भोज्य जो जिह्वाके इसारेसे निगलाजाय खीर हलुआ आदि और लेह्य वह है द्रवरूप आस्वादन पूर्वक पान कियाजाय सहत सरबत दुग्ध घी आदि चोष्य कहे जो चूसकर घूंटलियाजाय आख वगैर यह चार प्रकार अन्न को जानो॥ १४॥**

## शाङ्करभाष्यम् ।

किञ्च सर्वेति सर्वस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ सन्निविष्टोऽतोमत्तः आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानञ्च तदपोहनञ्च पुण्यकर्मिणाञ्च येषां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्म्मिणां पापकर्मानुरूपेण स्मृतिज्ञान यौरपोहनञ्च अपोहनमपगमनञ्च वेदैश्च सर्वैरहमेव च वेद्यो वेदितव्यः परमात्मा वेदान्तकृत् वेदान्तार्थसम्प्रदायकृदित्यर्थःवेदविद्वेदःर्थविदेवचाहं ॥१५॥

### आनन्दगिरिकृतटीका ।

इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वमीश्वरस्येत्याह किञ्चेति प्राणिजातं ब्रह्मादिपुत्तिकान्तमात्मतया बुद्धौ सन्निविष्टत्वं तद्वद्योषाभावमपि च द्रष्टृत्वमत्ततो बुद्धिमध्यस्थगुणदोषद्रष्टृत्वादिति यावत् मत्तः सर्वकर्माध्यक्षात्मनहृदयस्थस्थानधारादित्यर्थः प्राणिनां स्मृतिज्ञानयो स्तदपायस्य च भगवदधीनत्वे भगवतो वैषम्यं स्यादित्याशङ्क्याह येषामिति स्मृतिर्जन्मान्तराद्यनुभूतस्य परामर्शः देशकालस्वभावविप्रकृष्टस्यापि ज्ञानमनुभवः धर्माधर्माभ्यां विचित्रकार्यं कुर्वतो नेश्वरस्य वैषम्यमिति भावः वेदवेद्यं परं ब्रह्म भगवतोऽन्यदिति शङ्कां वारयति वेदैरिति वेदात्मनां पौरुषेयत्वं परिहरति वेदेति तदर्थसम्प्रदायवर्त्तकत्वार्थं तदर्थयाथात्म्यज्ञानवत्त्वमाह वेदार्थेति ॥ १५ ॥

### स्वामिकृतटीका ।

किञ्च सर्वस्येति सर्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहमतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति ज्ञानञ्च विषयेन्द्रियसंयोगजं भवति अपोहनञ्च तयोः प्रमोषो भवति वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृत् तत्सम्प्रदायप्रवर्त्तको ज्ञानदो गुरुरहमित्यर्थः वेदविदेव च वेदार्थविदप्यहमेव ॥ १५ ॥

### भाषा अनुवाद ।

और मैंही यावत् प्राणी के हृदय मे अन्तर्यामी रूप से प्रवेश करता हूं इसी से सब प्राणीयोंका पूर्वकृत अर्थविषयका स्मरण होता है और इन्द्रियों के संयोग से जो रूपादि विषयों का ज्ञान सो हमी से होय है और वेदों मे कहे हुये तीन तीन देवता रूप भी हम हैं और वेदान्तकृत् अर्थात् शिष्यप्रशिष्य रूप से सम्प्रदाय के प्रवर्त्तक कहे ज्ञानदाता गुरुरूप भी मे ही हों औ वेदार्थवित् भी मेंहीं हूं ॥ १५ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

### शाङ्करभाष्यम् ।

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतः यदादित्यगतं तेजइत्यादिना तथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषयोत्तर श्लोका आरभ्यन्ते तत्र सर्वमेवातीतानागतान्तराध्ययार्थजातं त्रिधा राशीकृत्वाह द्वाविमाविति द्वौ इमौ पृथग्राशीकृतौ पुरुषौ इत्युच्यते लोके संसारेऽक्षरश्च क्षरतीति क्षरः विनाशिको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षरा॰ख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्म्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते कौ तौ पुरुषावित्याह स्वयमेव भगवान् क्षरं सर्व्वाणि भूतानि समस्तं विकारजातमित्यर्थः कूटस्थः कूटो राशिरिव स्थितः अथवा कूटमाया वञ्चना जिह्मं कूटिलता वेति पर्य्याया: अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्नक्षरतीत्य क्षर उच्यते ॥ १६ ॥

### आनन्दगिरिकृतटीका ।

उत्तरश्लोकानां तात्पर्य्यं वक्तुं वृत्तं कीर्त्तयति भगवत इति विशिष्टोपाधिरादित्यादि संप्रत्यध्यायसमाप्तेरुत्तरसन्दर्भस्य तात्पर्य्यमाह अथेति न केवलं निरुपाधिकात्मस्वरूपं निर्द्धारणायोत्तरग्रन्थः किन्तु सर्वस्यैव गीताशास्त्रस्य अर्थनिर्णयार्थमित्याह तत्रेति क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयमुक्तेन सर्वात्मत्वेनाशुद्धादिदोषप्रसक्तावुक्तं द्वाविमौ इति पुरुषोपाधित्वात् पुरुषत्वं न साक्षादिति विवक्षित्वाह पुरुषाविति परपुरुषं व्यावर्त्तयति भगवत इति तत्र कार्य्यलिङ्गकमनुमानं सूचयति क्षराख्यस्येति मायाशक्तिं विना भोक्तृणां कर्मादिसंस्कारादेवोक्तकार्य्योत्पत्तिरित्याशंक्य तस्य निमित्तत्वेऽपि माया-शक्तिरुपादानमिति मत्वाह अनेकेति कामकर्मादीत्यादिशब्देन ज्ञानं गृह्यते प्रकृतिं पुरुषं चैवेति प्रकृतयोरिह ग्रहणमिति शंकामाकांक्षाद्वारा निवारयति कौ ताविति कूट-शब्दार्थमुक्त्वा तेन स्थितस्य कूटस्थतेति संपिण्डितमर्थमाह अनेकेति तस्य कथमक्षरत्वं विना ब्रह्मज्ञानमनाशादित्याह संसारेति ॥ १६ ॥

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥ १७॥**

शाङ्करभाष्यम्।

आभ्यां क्षराऽक्षराभ्यां विलक्षणः क्षराऽक्षरोपाधिद्वयदोषेणास्पृष्टो नित्य-शुद्धबुद्धमुक्तस्वभावः उत्तम इति उत्तमः उत्कृष्टतमः पुरुषस्त्वन्यः अत्यन्त-विलक्षणः आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्याकृतात्मभ्यः अन्नम-यादिभ्यः पञ्चकोशेभ्यः आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मे-त्युदाहृतः उक्तो वेदान्तेषु स एव विशिष्यते यो लोकत्रयं भूर्भुवः स्वराख्यं स्वकीयया चैतन्यबलशक्त्या विश्य विभर्त्ति स्वरूपसद्भावमात्रेण विभर्त्ति धारयत्यव्ययो न व्ययो विद्यत इत्यव्यय ईश्वरः सर्वज्ञो नारायणाख्य ईशन-शीलः तथा व्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धं॥ १७॥

स्वामिकृतटीका।

इदानीं तन्नाम परमं ममेति यदुक्तं स्वकीयसर्वोत्तमत्वं तत् दर्शयति द्वाविति त्रिभिः क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रसिद्धौ तावेवाह तत्र क्षरः पुरुषो नाम सर्वाणि भूतानि ब्रह्मादि स्थावरान्तानि शरीराणि अविवेकिलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः कूटो राशिः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स त्वक्षरः पुरुष उच्यते विवेकिभिः॥ १६॥

भाषा अनुवाद।

अब तन्नाम परमं मम यह जो इस अध्यायके सप्तम श्लोक मे कहा अपना जो सर्वोत्तमत्व सो तीन श्लोकसे देखावते हैं कि जो क्षर औ अक्षर स्वरूप दो पुरुष लोक मे प्रसिद्ध हैं इनका विशेष यह है कि ब्रह्मा आदि स्थावर पर्य्यन्त जो देह धारी तिनका नाम क्षर पुरुष क्योंकि अविवेकियों को स्थूल शरीरमे पुरुषत्व प्रसिद्ध है औ कूटस्थ कहे शिलाराशि पर्वतके समान देह नाश भये भी निर्विकाररूप स्थिति करै ऐसा जो चैतन्यस्वरूप भोक्ता है देखो विवेकी जनोंके विचारसे सोई अक्षर पुरुष है॥ १६॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

शाङ्करभाष्यम् ।

तस्य नाम निर्वचनप्रसिद्धार्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान् यस्मादिति यस्मात् क्षरमतीतोऽहं संसारमाया

आनन्दगिरिकृतटीका ।

कार्य्यकारणाख्यौ राशीदर्शयित्वा राश्यन्तरं दर्शयति आभ्यामिति वैलक्षण्यफलमाह क्षरेति उपाधिद्वयकृतगुणदोषास्पर्शं फलितमाह नित्येति आभ्यां क्षराक्षराभ्यामिति यावत् उत्तमोऽन्य इति पदद्वयं वस्तुनः सर्व्वथं क्षराक्षरात्मत्वाभावद्ध्वर्थं जड़वर्गस्यान्यत्वकृतं स्वातन्त्र्यं निरस्यति स एवेति लोकत्रयमित्युपलक्षणं सर्वं जगदपि विवक्षितैस्तन्त्रमेव बलं तत्र शक्तिर्माया तयेति यावद् जगद्धारणे परस्य व्यापारान्तरं वारयति स्वरूपेति न चास्यान्यो धारयिता स्वतोऽचलत्वादित्याह अव्यय इति संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीश इति श्रुत्यर्थं गृहीत्वाह ईश्वर इति किञ्च लोकवेदयोर्भगवतो नाम प्रसिद्धप्रसिद्धमप्रपञ्चत्वमित्याह यथेति ॥ १७ ॥

स्वामीकृतटीका ।

यदर्थमेतौ लक्षितौ तदाह उत्तम इति एताभ्यां क्षराक्षराभ्यामन्यो विलक्षणस्तूत्तमः पुरुषः वैलक्षण्यमेवाह परमश्चासावात्मा चेति उदाहृत उक्तः श्रुतिभिः आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराच्च भोक्तुर्विलक्षण इत्यर्थः परमात्मत्वमेव दर्शयति यो लोकत्रयमिति य ईश्वर ईशनशीलः अव्ययश्च निर्विकार एव सन् लोकत्रयहृदयमाविश्य विभर्त्ति पालयति ॥ १७ ॥

भाषा अनुवाद ।

जिस हेतु क्षर औ अक्षर दोनो पुरुष लक्षित भये हैं इससे जो उत्तम पुरुष सो इन दोनोसे भिन्न है उसकी विलक्षणता कहते हैं कि सो परमात्मा स्वरूप है यह श्रुतियों मे कहा है और आत्मा अचेतनरूप क्षर से तथा परमात्मा अक्षररूप भोक्तासे भी भिन्न हैं अब उनका परमात्मत्व देखावते हैं कि सो ईश्वर पदवाच्य नियन्ता औ अव्यय कहे निर्विकार स्वरूप होके भी त्रैलोक्यके हृदय मे प्रवेश करि प्राणी मात्रका प्रतिपालन करते हैं ॥ १७ ॥

इति गुह्यतमं शास्त्र मिद मुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

शाङ्करभाष्यम् ।

सन् जानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित् सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचिन्तया हे भारत ॥ १९ ॥
अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्ताऽथेदानीं तत् स्तौति इति

आनन्दगिरिकृतटीका ।

आत्मनोऽप्रपञ्चत्वं ज्ञानफलोक्त्या स्तौति अथेति यथोक्तविशेषणं सर्वात्मत्वादिविशेषणोपेतमिति यावत् चराचरातीतत्वं यथोक्तप्रकारः संमोहवर्जितः संमोहेन देहादिष्वात्मात्मीयबुद्ध्या रहित इत्यर्थः भगवन्तं जानतः सर्ववित्त्वं तस्यैव सर्वात्मना ज्ञेयत्वादित्याह स सर्वविदिति सर्वात्मनि मय्येवासक्तचित्तेनेत्यर्थः ॥ १९ ॥

स्वामिकृतटीका ।

एवं भूतेश्वरज्ञातः फलमाह य इति एवं नियुक्तप्रकारेणासम्मूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति ततश्च सर्वज्ञो भवति ॥ १९ ॥

भाषा अनुवाद ।

ऐसे ईश्वर का जानने द्वारा ज्ञानी पुरुष के ज्ञानका फल कहते हैं कि हे भारत अर्जुन इस तरह पूर्वोक्त निश्चित प्रकारसे असंमूढ़ कहे निश्चित मति होके जो पुरुषोत्तम स्वरूप हम को जानि सकै है सोई मनुष्य सम्यक् प्रकारसे हम को भजै है तिस के अनन्तर सर्वज्ञ होता है यह जानो ॥ १९ ॥

शाङ्करभाष्यम् ।

गुह्यतममिति इत्येतत् गुह्यतमं गोप्यतमं अत्यन्तं रहस्यमित्येतत् किन्तच्छास्त्रं यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाप्ययमेवाध्यायः इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं सर्वश्च वेदार्थ इह परि समाप्तो यस्तं वेद स वेदवित् वेदैश्च सर्वैरहमेव वेद्य इति चोक्तमिदमुक्तं कथितं मया हे अनघ एतच्छास्त्रं यथा दर्शितार्थं बुद्ध्वा बुद्धिमान् स्याद्भवेत् नान्यथा कृतकृत्यश्च भारत कृतं कृत्यं कर्त्तव्यं येन स कृतकृत्यः विशिष्टजन्म प्रसूतेन ब्राह्मणेन यत्कर्त्तव्यं तत् सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः नचान्यथा कर्त्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते इति चोक्तं एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा इति च मानवं वचनं यत एतत् परमार्थतत्त्वमतः श्रुतवानसि अतः कृतार्थस्त्वं भारतेति । २० ॥

इति शाङ्करभाष्ये पञ्चदशोऽध्यायः । १५ ॥

आनन्दगिरिकृतटीका ।

अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति एवमिति सर्वस्यां गीतायां शास्त्रशब्दे वक्तव्ये कथमस्मिन्नध्याये तत्प्रयोगः स्यादित्याशङ्क्याह यद्यपीति सन्दिग्धमध्यायं स्तोतुमपि कुतस्तत्र शास्त्रशब्दस्तदर्थाभावात्तत्राह सर्वो हीति गीताशास्त्रार्थस्य सर्वस्यात्र संक्षिप्तत्वादेव केवलं शास्त्रशब्दो न भवति किन्तु वेदार्थस्यापि सर्वस्यात्र समाप्तेर्युक्तः शास्त्रशब्द इत्याह नेति तत्र गमकमाह यस्तमिति भगवत्तत्त्वज्ञाने कृतकृत्यतेत्येतदुपपादयति विशिष्टेति साध्याहारमुक्तं प्रपञ्चयति नचेति सत्यपि तत्त्वज्ञाने कर्मणां कर्त्तव्यत्वात् कर्त्तव्यसमाप्तिरित्याशङ्क्याह सर्वमिति तत्त्वज्ञाने कृतार्थतेति तत्र मनोरपि सम्मतिमाह एतद्धीति भारतेति सम्बोधनतात्पर्यमाह यत इति तदनेनात्मना देहाद्यतिरिक्तत्वं चिद्रूपत्वं सर्वात्मत्वं कार्यकारणविनिर्मुक्तत्वेनाप्रपञ्चत्वं तस्यावगतेः करणसंहृतत्वज्ञानाद्धेयोपादेयपरिसमाप्तिरित्युक्तं ॥ २० ॥

इति आनन्दगिरिकृतटीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

स्वामिकृतटीका ।

अध्यायार्थमुपसंहरति इतीति इत्यनेन संक्षेपप्रकारेण गुह्यतममतिरहस्यं संपूर्णं शास्त्रमेव मयोक्तं नतु पुनर्विंशति श्लोकमध्यायमात्रं हे अनघ व्यसनशून्य अतएवं तन्मदुक्तं बुद्ध्वा बुद्धिमान् सम्यक् ज्ञानी स्यात् कृतकृत्यश्च स्यात् योऽपि कोऽपि हे भारत त्वं कृतकृत्योऽसीति किं वक्तव्यमिति भावः संसारशाखिनं भित्त्वा स्पष्टं पञ्चदशे विभुः पुरुषोत्तमयोगाख्ये परं पदमुपादिशत् ॥ २० ॥

इति श्रीधरस्वामिकृतटीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

भाषा अनुवाद ।

अब अध्यायके अर्थका उपसंहार करते हैं कि हे अनघ निःपाप अर्जुन यह संक्षेपसे अतिरहस्य स्वरूप जो संपूर्ण शास्त्रोंका सारांश सो मैने कहा केवल वीश श्लोकयुक्त एक अध्याय नहीं कहा इसमे जो कोई होय इस मेरो कही वाक्यको वोध करि के बुद्धिमान् कहावता औ ज्ञानी हो चरितार्थ कृतार्थ होता है तो हे भरतवंशी अर्जुन तुम जो चरितार्थ होउगे इसमे और कुछ कहना वाकी है सर्वत्र परिपूर्ण परमात्मारूप श्रीकृष्णजी संसार वृक्ष को भिन्न करके पुरुषोत्तम योग नाम इस पंद्रहें अध्याय मे अपना परम पद अर्जुन को उपदेश किया है ॥ २० ॥

इति श्रीजगन्नाथ शुक्लविरचित्त मनभावनी टीकायां
पञ्चदशोऽध्यायः ॥ १५ ॥

---

---

# षोडशोऽध्यायः ।

## श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवं ॥ १ ॥

### शाङ्करभाष्यम् ।

दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचितास्तासां विस्तारप्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते तत्र संसारमोक्षाय दैवी प्रकृतिर्निबन्धनायासुरी राक्षसी चेति दैव्यादानाय प्रदर्शनं क्रियते इतरयोः परिवर्जनाय श्रीभगवानुवाच अभयमिति अभयमभीरुता सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादि परिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिः व्यवस्थानं तन्निष्ठता एषा प्रधाना दैवी सात्त्विकी संपत् यत्र च येषामधिकृतानां या प्रकृतिः सम्भवति

### आनन्दगिरिकृतटीका ।

अतीतेन सम्बन्धं वदन्नध्यायान्तरमवतारयति दैवीति दैवी सूचिता राक्षसीमासुरीं चैव प्रकृतिं मोहिनीमित्यादाविति शेषः प्रकृतीनां विस्तरेण दर्शनं कुत्रोपयोगीत्याशङ्क्य विभज्योपयोगमाह संसारेति अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसन्ततानीत्यत्र कर्मव्यंग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्रागभवीयकर्मानुसारेणा-व्यज्यमानाः सात्त्विकादिभेदेन दैव्यादिप्रकृतित्रयत्वेन विभक्ता आविष्कर्त्तुं भगवानुक्तवानि-

## शाङ्करभाष्यम्।

सात्त्विकी सोच्यते दानं यथाशक्ति संविभागोऽन्नादीनां दमश्च बाह्यकरणानां उपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति यज्ञश्च श्रौतोऽग्निहोत्रादिः स्मार्त्तश्च देवयज्ञादिः स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं तपो वक्ष्यमाणं शारीरादि आर्जवमृजुत्वं सर्वदा ॥ १ ॥

### आनन्दगिरिकृतटीका।

त्वाह भगवानिति अभीरुता शास्त्रोपदिष्टेऽर्थे सन्देहं हित्वानुष्ठाननिष्ठत्वं परवञ्चना परस्य व्याजेन वशीकरणं माया हृदयेऽन्यथा कृत्वा वहिरन्यथा व्यवहरणं अन्ततमयथादृष्टं कथनमादिपदेन विप्रलम्भविभ्रमादिग्रहः उक्तमर्थं संक्षिप्याह शुद्धेति एषेत्यभयाद्युक्तानादिश्य-त्यन्ता निर्धोक्तेति यावत् तामेव सात्त्विकीं प्रकृतिं प्रकटयति यत्रेति ज्ञाने कर्मणि वाधि-कृतानामभीरुताद्या या प्रकृतिः सा तेषान्तत्र सात्त्विकी सम्पदित्यर्थः महाभाष्यानामल्पु-त्तमा दैवी सम्पदुक्ता सम्प्रति सर्वेषां यथासम्भवं सम्पदं व्यपदिशति दानमिति वाह्यकरण-विशेषणे कारणमाह अन्तःकरणस्येति देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति यज्ञत्रयमुक्तम् ॥ १ ॥

### स्वामिकृतटीका।

आसुरीं सम्पदं त्यक्त्वा दैवीमेवाश्रिता नराः। मुच्यन्त इति निर्णीतं तद्विवेकोऽथ षोडशे ॥

पूर्वाध्यायान्ते एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेत्युक्तं तत्र क एतत्तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवेकार्थं षोड-शाध्यायस्यारम्भः निरूप्यते हि कार्य्यार्थे चाधिकारिजिज्ञासा भवति तदुक्तं भट्टैः भारो यो येन वोढव्यः स प्रागान्दोलितो यदा तदा कस्तस्य वोढेति शङ्का कर्त्तुं निरूपणमिति तत्राधिकारिविशेषणभूतां दैवीं सम्पदमाह अभयमिति त्रिभिः अभयं भयाभावः सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता ज्ञानयोगे आत्मज्ञानोपाये व्यवस्थितिः परिनिष्ठा दानं स्वभोज्यस्यान्नादेर्यथोचितसंविभागः दमो वाह्येन्द्रियसंयमः यज्ञो यथाधिकारं दर्शपौर्णमासादि स्वाध्यायो ब्रह्मयज्ञादिः तप उत्तराध्याये वक्ष्यमाणं शारीरादि आर्जवमवक्रता ॥ १ ॥

## भाषा अनुवाद।

अब इस आध्यायका तात्पर्य्य कहते हैं कि आसुरी सम्पत् त्याग कर के दैवी सम्पत् के आश्रय लेनेवाले मनुष्य मुक्त होते हैं इसी की निर्णय

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनं।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलं ॥ २ ॥

शाङ्करभाष्यम्।

किञ्च अहिंसेति अहिंसा अहिंसनं प्राणिनां पीड़ावर्जनं सत्यमप्रियानृतवर्जनं यथाभूतार्थवचनं अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं त्यागः संन्यासः पूर्व्वं दानस्योक्तत्वात् शान्तिरन्तःकरणस्योपशमः अपैशुनमपि पिशुनता परस्मैपररन्ध्रप्रकटीकरणं पैशुनन्तदभावाऽपैशुनं दया भूतेषु दुःखितेषु अलोलुप्त्वमिन्द्रियाणां विषयसन्निधावविक्रिया मार्दवं मृ-

भाषा अनुवाद।

करनेके अर्थ सोरहें अध्याय मे उसका विस्तार करते हैं कि हे अर्जुन सकल शास्त्रके अनुरूप मेरे कहे हुये इस वृत्तान्तके जानने से लोग सम्यक् ज्ञानी औ कृतार्थ होते हैं यह भगवान ने पन्द्रहे अध्याय के अन्तमे कहा है तो कौन मनुष्य वह तत्त्व समझ सकते हैं और कौन नहीं इस अपेक्षा पर तत्त्वज्ञानके अधिकारी औ अनधिकारी को निर्णय करने के लिये सोरहे अध्याय का आरम्भ होता है क्योंकि जिसमे जिसका अधिकार है वह उसी से पूरा परता है इस से अब तत्त्व के अधिकारी पुरुषका गुणस्वरूप सम्पूर्ण औ देवी संपतको इस श्लोकसे ले तीन श्लोकसे कहते हैं कि अभय औ सत्त्व संशुद्धि कहे बुद्धि को प्रसन्नता औ ज्ञान योग जो आत्मज्ञान की उपायमे व्यवस्थिति कहे परिनिष्ठा औ दान कहे अपने भोजन की वस्तु अन्न आदि का भी यथाउचित देना तथा दम अर्थात् वाह्य इन्द्रियों का संयम करना औ यज्ञ कहे यथाविधि से दर्श पौर्णमास आदि याग करना औ स्वाध्याय कहे ब्रह्म यज्ञ औ तप जो सत्र हें अध्याय के चौदहें श्लोकमे कहेंगे देव द्विज गुरु पण्डित ज्ञानी का पूजन तथा शौच औ आर्जव कहे सीधा स्वभाव ॥ १ ॥

**तेजः क्षमा धृतिः शौच मद्रोहो नातिमानिता।**
**भवन्ति सम्पदं दैवी मभिजातस्य भारत ॥ ३ ॥**

शाङ्करभाष्यम्।

हृता अक्रौर्यं ह्रीर्लज्जा अचापलमसति प्रयोजने वाक्पाणिपादादीनाम-व्यापारयितृत्वं ॥ २ ॥

किञ्च तेज इति तेजः प्रागल्भ्यं न त्वक्गता दीप्तिः क्षमा आक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिः उत्पन्नायां विक्रियायां प्रशमन अक्रोधः इत्यवोचाम इत्थं क्षमाया अक्रोधस्य च विशेषः धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु

आनन्दगिरिकृतटीका।

ब्रह्मयज्ञस्य स्वाध्यायेन पृथक्करणाद्दैवीं सम्पदमभिजातस्य विशेषणान्तराणि दर्शयति किञ्चेति त्याग शब्देन आगदानं कस्मान्नोच्यते तत्राह पूर्वमिति लज्जाकार्यनिवृत्तिहेतु-र्ह्रीर्निमित्ता मनोवृत्तिः ॥ २ ॥

स्वामिकृतटीका।

किञ्च अहिंसेति अहिंसा परपीडावर्जनं सत्यं यथादृष्टार्थभाषणं अक्रोधस्ताडितस्यापि चित्ते क्रोधानुत्पत्तिः त्याग औदार्यं शान्तिश्चित्तोपरतिः पैशुनं परोक्षे परदोष-प्रकाशनं तद्वर्जनमपैशुनं भूतेषु दीनेषु दया अलोलुप्त्वं लोभाभावः अवर्णलोपस्त्वार्षः मार्दवं मृदुत्वं अक्रूरता ह्रीरकार्यप्रवृत्तौ लोकलज्जा अचापलं व्यर्थक्रियाराहित्यम् ॥ २ ॥

भाषा अनुवाद।

अहिंसा कहे पर पीड़ाका त्याग औ सत्य अर्थात् देखा शुना ज्यों-कात्यों कहना औ अक्रोध कहे कोई मारे या कुवाच्य कहै तौभी चित्त क्रोधवश न होने देना तथा त्याग कहे प्रिय अप्रिय वस्तु मे उदासीनता औ शान्ति अर्थात् विषयों से चित्त की निवृत्ति औ अपैशुन्य कहे पर निन्दा वर्जन पीठिपीछे निन्दाकरने को पैशुन्य कहते हैं औ दीन दरिद्र पर दया तथा अलोलुपत्व कहे निर्लोभता औ मार्दव कोमलता औ ह्री कहे कुकर्मकरने मे लोक लाज तथा अचापल अर्थात् वृथा बोलना या वृथा कुछ करना जो चञ्चलताई सो न होय ॥ २ ॥

### शाङ्करभाष्यम्।

तस्य प्रतिबन्धकोऽन्तःकरणशक्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति शौचं द्विविधं मृज्जलाभ्यां कृतं बाह्यमाभ्यन्तरञ्च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः एवं द्विविधं शौचं अद्रोहः परजिघांसाभावोऽहिंसनं नातिमानिता अत्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः भवन्त्यभयादीन्येतदन्तानि सम्पदमभिजातस्य किंविशिष्टां सम्पदं दैवीं देवानां सम्पदं तामभिलक्ष्य जातस्य दैवीविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ॥ ३ ॥

### आनन्दगिरिकृतटीका।

दैवीसम्पदं प्राप्तस्य विशेषणान्तराण्यपि सन्तीत्याह किञ्चेति व्याख्यातं कीर्त्तयति मेति अध्यात्माधिकारादिति शेषः क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति उत्पन्नायामिति तयोरेव विशेषात् पौनरुक्त्यं फलतीत्याह इत्यमिति धृतिविशेषणमेव विशदयति येनेति शौचस्य द्वैविध्यमेव प्रकटयति मृज्जलेत्यादिना नैर्मल्यमेव स्फोरयति मायेति उक्तमुपसंहरति एवमिति अतिमानिताभावमेव व्यनक्ति आत्मन इति कस्यैव तानीत्यपेक्षायामाह भवन्तीति साधकस्य मनुष्यदेहस्यस्यैव कथं दैवीं सम्पदमभिलक्ष्य जातत्वमित्याशङ्क्याह दैवीमिति ॥ २ ॥

### स्वामिकृतटीका।

किञ्च तेज इति तेजः प्रागल्भ्यं क्षमा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः धृतिः दुःखादिभिरवसादे चित्तस्य स्थिरीकरणं शौचं बाह्याभ्यन्तरशुद्धिः अद्रोहो जिघांसाराहित्यं अतिमानिता आत्मन्यतिपूज्यत्वाभिमानस्तदभावो नातिमानिता एतान्यभयादीनि षड्विंशति प्रकाराणि दैवीसम्पदमभिजातस्य भवन्ति देवयोग्यां सात्त्विकीं सम्पदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ॥ २ ॥

### भाषा अनुवाद।

और तेज कहे ढिठाई औ क्षमा औ धृति कहे हानि तथा दुःख मे धीरज रखना औ शौच अर्थात् बाहिर भीतर सुद्दता अद्रोह कहे हिंसा ईर्षा रहित होना अति मानिता कहे अपनी पूजा मान प्रशंसाका अभाव

## दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
## अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४ ॥

### शाङ्करभाष्यम् ।

अथेदानीमासुरी सम्पदुच्यते दम्भो धर्मध्वजित्वं दर्पो धनस्वजनादिनिमित्त उत्सेकोऽभिमानः पूर्वोक्तः क्रोधश्च पारुष्यमेव परुषवचनं यथा काणञ्च-क्षुषान्विरूपं रूपवान् हीनाभिजनमुत्तमाभिजन इत्यादि अज्ञानञ्चाविवेकज्ञानं मिथ्याज्ञानं कर्तव्याकर्तव्यादि मित्थ्याप्रत्ययविषयं अभिजातस्य पार्थ किमभिजातस्येत्याह असुराणां सम्पदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥

### आनन्दगिरिकृतटीका ।

उपादेयत्वेन दैवीं सम्पदमुक्त्वा हेयत्वेनासुरीं सम्पदमाह अथेति उत्सेको मदो महद्वधीरणे हेतुः आत्मन्युत्कृष्टत्वाध्यारोपोऽतिमानः क्रोधस्तु कोपापरपर्य्यायः स्वपरापकारप्रकृतिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणवृत्तिविशेषः परुषो निष्ठुरः प्रत्यक्षरूक्षवाक् तस्य भावः पारुष्यन्तदुदाहरति यथेति तामभिजातस्य दम्भादीन्यज्ञानान्तानि भवन्ति इत्यनुषज्यते ॥ ४ ॥

### स्वामिकृतटीका ।

आसुरीं सम्पदमाह दम्भ इति दम्भो धर्मध्वजित्वं दर्पो धनविद्यादिनिमित्तं चित्तस्यौत्सुक्यं अभिमानो व्याख्यात एव क्रोधः प्रसिद्धः पारुष्यं निष्ठुरत्वं अज्ञानमविवेकः आसुरीमित्युपलक्षणं असुराणां राक्षसानाञ्च या सम्पत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्ति ॥ ४ ॥

### भाषा अनुवाद ।

येई अभय आदि जो छबीस प्रकारकी दैवी सम्पत् हैं सो उसी को होती हैं जिस को कल्याण भावी है अर्थात् आगे भला होनहार है ॥ ३ ॥

अब आसुरी सम्पत् कहते हैं कि दम्भ कहे लोगों के सामने अपनी धार्म्मिकता प्रकाश के हेतु मनभावते कल्पित धर्मोंकी ध्वजा देखलाना औ दर्प कहे धन उपार्जन तथा विद्या आदि मे चित्त को उत्साह कहे उंचाई औ अभिमान कहे अपने हरतरह के महत्त्व से दूसरे को न कुछ

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

शाङ्करभाष्यम् ।

अनयोः सम्पदोः कार्यमुच्यते दैवीति दैवी सम्पत् या सा विमोक्षाय संसारबन्धनात् निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी सम्पन्मताभिप्रेता तथा राक्षसी तत्रैव मुक्ते सत्यर्जुनस्यान्तर्गतं भावं किमहमासुरसम्पद्युक्तः किंवा दैवी संपत् युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान् मा शुचः शोकं मा कार्षीः सम्पदं दैवीमभिजातोऽसि हे पाण्डव अभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थः ॥ ५ ॥

आनन्दगिरिकृतटीका ।

अनयोरिति कार्यफलविभागः आसुरीत्युपलक्षणं राक्षसी चेति द्रष्टव्यमित्याह तथेति फलविभागे सम्पदोरात्मके प्रतीत्यार्जुनस्याभिप्रायं भगवतो वचनमित्याह तत्रेति तत्राभिजात्यं चेतः करोति पाण्डवेति ॥ ५ ॥

स्वामिकृतटीका ।

एतयोः सम्पदोः कार्यं दर्शयन्नाह दैवीति दैवी या सम्पत्तया युक्तो मयोपदिष्टे तत्त्वज्ञानेऽधिकारी आसुर्या सम्पदा युक्तस्तु नित्यं संसारीत्यर्थः एतच्छ्रुत्वा किमहमत्राधिकारी न वेति सन्देहाकुलमर्जुनमाश्वासयति हे भारत मा शुचः शोकं मा कार्षीः यतस्त्वं दैवीं सम्पदमभिजातोऽसि ॥ ५ ॥

भाषा अनुवाद ।

समझना औ क्रोध तथा पारुष्य कहे कठोरता निष्ठुरता औ अज्ञान कहे अविवेक ये आसुरी कहे असुर औ राक्षसोंकी जो संपत् इन मे रुचि जिन की है वे असुर राक्षस हैं ॥ ४ ॥

अब इन दोनों संपदों के काज आचार देखावते हुये कहते हैं कि दैवी संपद से युक्त मनुष्यही मेरे कहे तत्त्वज्ञान के अधिकारी हैं और जो मनुष्य आसुरी संपद से युक्त हैं ते सदाही संसारी होते हैं अब ये

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

शाङ्करभाष्यम्।

द्वौ भूतेति द्वौ द्विःसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टि भूतसर्गौ सृजेते इति सर्गौ भूतान्येवसृज्यमानानि दैवासुरसम्पद्युक्तानि द्वौ भूतसर्गावित्युच्येते द्वयाह प्रजापत्यादेवाश्चासुराश्चेति श्रुतेः लोकेऽस्मिन् संसारे इत्यर्थः सर्वेषां द्वैविध्योपपत्तेः कौतौ भूतसर्गौ इत्युच्येते प्रकृतावेव दैव आसुर एव च उक्तयोरेव पुनरनुवादप्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशोविस्तरप्रकारैः प्रोक्तः कथितो नत्वासुरो विस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थ मे मम वचनादुच्यमानं विस्तरशः शृणु अवधारय ॥ ६ ॥

आनन्दगिरिकृतटीका।

निर्दिष्टयाणां रचसां सम्पत्तृतीयास्ति सा कस्मान्नोक्तेत्याशङ्क्यासुर्यामन्तर्भावादित्याह द्वाविति भूतानां द्वैविध्ये मानत्वेनोक्तोथब्राह्मणमुदाहरति द्वयाहेति सम्पद्द्वययुतेभ्योऽतिरिक्तानामपि प्राणिभेदानां सम्भवात् कुतो भूतानां द्वित्वनियतिरित्याशङ्क्याह सर्वेषामिति ॥ ६ ॥

स्वामिकृतटीका।

आसुरी सम्पत् सर्वात्मना वर्जयितव्येत्येतदर्थमासुरीं सम्पदं प्रपञ्चयितुमाह द्वाविति द्वौ द्विःप्रकारौ भूतानां सर्गौ मे वचनाच्छृणु आसुरराचसप्रकृत्योरेकीकरणेन द्वावित्युक्तं अतो राचसीमासुरीञ्चैव प्रकृतिं मोहनीं श्रिता इत्यादिना नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः स्पष्टमन्यत् ॥ ६ ॥

भाषा अनुवाद।

वचन भगवान् के श्रवण करके मैं तत्त्वज्ञान का अधिकारी हों कि नहीं इस सन्देह से व्यग्रचित्त अर्जुन को समझावते हुये भगवान् कहते हैं कि हे परन्तप तुम शोच न करो क्योंकि तुम दैवी समपद के अभिमुख जन्मे हो और दैवी सम्पद से संयुक्त हो यह तुमारे आचरणों से प्रसिद्ध देख पड़े है ॥ ५ ॥

प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

शाङ्करभाष्यम् ।

अध्यायपरिसमाप्तेरासुरी सम्पत् प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च ग्रह्यते अस्याः परिवर्जनं कर्त्तुमिति प्रवृत्तिमिति प्रवृत्तिञ्च प्रवर्त्तनं यस्मिन् पुरुषार्थसाधने कर्त्तव्ये प्रवृत्तिस्तां निवृत्तिञ्च तद्विपरीतां यस्मादनर्थहेतोर्निवर्त्तितव्यं सा निवृत्तिस्ताञ्च जना आसुरा न विदुः न जानन्ति न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यन्तेषु विद्यत अशौचानाचारमायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

आनन्दगिरिकृतटीका ।

नन्वध्यायशेषेणासुरीसम्पद्दर्शनमयुक्तं तस्यास्त्याज्यत्वेन पञ्चप्रत्याख्यानन्यायायततारादित्याशङ्क्याह प्रत्यक्षीकरणेनेति वर्ज्जनीयामासुरीं सम्पदं विवृणोति प्रवृत्तिञ्चेति तां विहितां प्रवृत्तिं न जानन्तीत्यर्थः ताञ्च निषिद्धां क्रियां न जानन्तीति सम्बन्धः न शौचमित्यादेस्तात्पर्य्यमाह अनाचारेति शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथक् उपादानं ॥ ७ ॥

स्वामिकृतटीका ।

आसुरीं विस्तरेण निरूपयति प्रवृत्तिञ्चेत्यादि द्वादशभिः धर्मे प्रवृत्तिमधर्मान्निवृत्तिञ्चासुरस्वभावा जना न जानन्ति अतः शौचमाचारः सत्यञ्च तेषु नास्ति एव ॥ ७ ॥

भाषा अनुवाद ।

आसुरी सम्पद अच्छी प्रकार से वर्णन करना ही कर्त्तव्य हैं इससे आसुरी सम्पद को विस्तार करि कहते हैं कि जो दो प्रकारकी भूतोंकी सृष्टि है सो मेरे मुख से श्रवण करो इस जगह असुर राक्षस सम्बन्धी दोनो प्रकृतिकी एकता करके देवप्रकृति के साथ दोनो मतको कहा है इससे नवयें अध्याय के बारहें श्लोक मे आसुरीं राक्षसीं चैव इत्यादि त्रिविध प्रकृति के साथ विरोध नहीं है हे अर्जुन इस श्लोक मे देव सम्पद औ असुर सम्पद से युक्त जो दोप्रकार भूतोंकी सृष्टि तिसके मध्य दैवी सम्पद से युक्त सृष्टि कैसे पूर्वही विस्तार से कहा है अब आसुरी संपद से युक्त जो सृष्टि सो हमसे सुनो ॥ ६ ॥

## असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।
## अपरस्परसम्भूतं किमन्यत् कामहैतुकम्॥ ८॥

### शाङ्करभाष्यम्।

किञ्च असत्येति असत्यं यथा वयमनृतप्रायास्तथेदं जगत् सर्वं असत्यमप्रतिष्ठञ्च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठञ्चेति ते आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मं सव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इति अतोऽनीश्वरं जगदाहुः किञ्च अपरस्परसम्भूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगात् जगत् सर्वं सम्भूतं किमन्यत् कामहैतुकं कामहैतुकमेव कामहैतुकमन्यज्जगतः कारणं न किञ्चित् अदृष्टं धर्माधर्मादिकारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियं॥ ८॥

### आनन्दगिरिकृतटीका।

असुराणां जनानां विशेषणान्तराण्यपि सन्तीत्याह किञ्चेति विद्यत इत्याहुरिति पूर्वेण सम्बन्धः शास्त्रैकगम्यमदृष्टं निमित्तीकृत्याधिष्ठात्रात्मकेन ब्रह्मणा रहितं जगदिष्यते चेत् कथन्तदुत्पत्तिरित्याशङ्क्याह किञ्चेति किमन्यदित्यादेराक्षेपस्य तात्पर्यमाहकिञ्चिदिति॥ ८॥

### स्वामिकृतटीका।

ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिं निवृत्तिञ्च कथं न विदुः कुतो वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात् कथं वा शौचाचारादिविषयामीश्वराज्ञामतिवर्त्तेरन् ईश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादत आह असत्यमिति नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिंस्तादृशं जगदाहुः वेदादीनां प्रामाण्यं न मन्यन्त इत्यर्थः तदुक्तं त्रयो वेदस्य कर्त्तारो मुनि भण्ड निशाचरा इत्यादि अतएव नास्ति धर्माधर्मरूपा प्रतिष्ठा

### भाषा अनुवाद।

आसुरी संपद् इस श्लोक से ले बारह श्लोकतक दया करि निरूपण करते हैं कि असुरस्वभाववाले मनुष्य सकल धर्म मे प्रवृत्ति औ अधर्म से निवृत्ति कैसी होती है सो जानते ही नहीं इसीसे इन लोगों मे शौच आचार औ सत्यता का लेशमात्र भी नहीं रहता है यह जानो॥ ७॥

स्वामिकृतटीका।

व्यवस्था हेतुर्यस्य तत् स्वाभाविकं जगद्वैचित्र्यमाहुरित्यर्थः अतएव नास्तीश्वरः कर्त्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत आह अपरस्परसम्भूतमिति अपरश्चपरश्चेति अपरस्परं अपरस्परतोऽन्योन्यतः स्त्रीपुंसयोर्मिथुनात् सम्भूतं जगत् किमन्यत् कारणमस्य नास्त्यन्यत् किञ्चित् किन्तु कामहेतुकमेव स्त्रीपुंसयोरुभयोः काम एव प्रवाहरूपेण हेतुरस्येत्यर्थः॥ ८॥

भाषा अनुवाद।

वेदविहित जो धर्म अधर्म तिससे प्रवृत्ति जो असुरस्वभाव सो मनुष्य कों नही जानते और धर्म अधर्म को अङ्गीकार न करने से संसारिक सुख औ दुःख आदि होना किसप्रकार निरूपण किया जाय और शौच तथा आचार आदि मे ईश्वर की आज्ञाको वा कैसे लङ्घन करते हैं और ईश्वर को नमानिके जगत की उत्पत्ति किस से कहते हैं सोई कहते हैं जो वेद पुराण इतिहास को प्रमाण नहीं मानते औ कहते हैं कि मुनि औ भांड तथा राक्षस येई तीनोने वेदको बनाया है और जिन को धर्म अधर्म को प्रतिष्ठा अर्थात् व्यवस्था नहीं है तेई अप्रतिष्ठ कहे नास्तिक लोग अपनो पूर्वोक्त वाक्यको पुष्ट करने के लिये इस जगत को अप्रतिष्ठ कहते हैं अर्थात् यह जगत् की विचित्रता स्वभावसिद्ध●व कहते हैं और जिनके मतमे इस जगत्का ईश्वर नहीं है इससे यह संसार अनीश्वर है ऐसे नास्तीक लोग अपनी बातका पक्ष करके जगत् को अनीश्वर कहते हैं जो पूछो कि तो फेरि वे लोग इस जगत को उत्पत्ति किससे मानते हैं इसपर उनकी कहावत कहते हैं कि अपरस्पर कहे पर अपर से भिन्न जो स्त्री पुरुष इन दोनो के संयोग से संसार की उत्पत्ति हो तो है इसका और कोई कारण नहीं है यह जगत् कामहेतुक अर्थात् स्त्रीपुरुष इन दोनोका जो काम सोई धारप्रवाह क्रमसे इस संसारका कारणस्वरूप चलाआवता है नास्तीक लोग ऐसे ही कहते हैं पर कार्य्य विना कारण के नहीं होता है॥ ८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥
काममाश्रित्य दुःपूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥१०॥

शाङ्करभाष्यम् ।

एतामिति एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधनाः अल्पबुद्धयो विषयविषया अल्पैव बुद्धिर्येषान्ते अल्पबुद्धयः प्रभवन्त्युद्भवन्ति उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति सम्बन्धः जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥

ते च कामिति कामं इच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विताः दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विताः मोहा-

आनन्दगिरिकृतटीका ।

यथोक्ता दृष्टिश्च हृष्टिवद्दिष्टैवेत्याशङ्क्याह एतामिति प्रागुपदिष्टामेतां लोकायतिकदृष्टिमवलम्ब्येति यावत् नष्टस्वभावत्वमेव स्फुटयति विभ्रष्टेति विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देश्येन प्रवृत्तत्वं जगतः प्राणिजातस्येति यावत् ॥ ९ ॥

स्वामिकृतटीका ।

किञ्च एतामिति एतां लोकायतिकानां दृष्टिं दर्शनमाश्रित्य नष्टात्मानो मलीमसचित्ताः सन्तोऽल्पबुद्धयो दृष्टार्थमात्रमतयः अतएवोग्रं हिंस्रं कर्म येषां ते अहिता वैरिणो भूत्वा जगतः क्षयाय प्रभवन्ति उद्भवन्तीत्यर्थः ॥ ९ ॥

भाषा अनुवाद ।

देखो निरीश्वर वादीयोंकी दृष्टि कहे तजवीज और कल्पना से कल्पित बातों और उन के दर्शन कहे मतग्रन्थोंका आश्रयण करके मलिनचित्त अल्पबुद्धि अर्थात् जो देखें सुनै उसपर तुर्त्त वेविचार बिश्वासकारी मनुष्य जिनकी हिंसाही करनामात्र काम है वे शत्रुस्वरूप होके संसार के नाश हेतु प्रगट होते हैं ॥ ९ ॥

चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

शाङ्करभाष्यम् ।

दविवेकतः गृहीत्वोपादाय असद्ग्राहानशुभनिश्चयान् प्रवर्त्तन्ते लोकेऽशुचिव्रताः अशुचीनि व्रतानि येषान्ते अशुचिव्रताः ॥ १० ॥

किञ्च चिन्तेति चिन्तामपरिमेयाञ्च न परिमातुं शक्यते अस्याःचिन्ताया इयत्ता सा अपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदाचिन्तापरा इत्यर्थः कामोपभोगपरमाः काम्यन्त इति कामाः शब्दादय-स्तदुपभोगपरमाः अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं निश्चितात्मान एतावदिति निश्चिताः ॥ ११ ॥

आनन्दगिरिकृतटीका ।

तानेव दुराचारानुगतान् प्रकारान्तरेण विशिनष्टि ते चेति ॥ १० ॥

तानेव प्रकारान्तरेण विशिनष्टि किञ्चेति चिन्तामात्मयोगक्षेमोपायालोचनात्मिकाम-

स्वामिकृतटीका ।

अपि च काममाश्रित्येति दुष्पूरं पूरयितुं अशक्यं काममाश्रित्य दम्भादिभिर्युक्ताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्त्तन्ते कथं असद्ग्राहान् गृहीत्वा अनेन मन्त्रेणैतां देवतामाराध्य महानिधीन् साधयाम इत्यादीन् दुराग्रहान् मोहमात्रेण स्वीकृत्य प्रवर्त्तन्ते अशुचिव्रता अशुचीनि मद्यमांसादि विषयाणि व्रतानि येषां ते ॥ १० ॥

भाषा अनुवाद ।

और जो कामना भोगादि करने से भी कभी पूरी नहीं होती ऐसी कामना को अवलम्बन करके दम्भ पाषण्ड से युक्त हो क्षुद्र देवत भूत प्रेत आदि की आराधना में प्रवृत्त होते हैं सोई कहते हैं कि असद्ग्राह ग्रहण अर्थात् इस मन्त्र के द्वारा इस देवताकी आराधना में बहुत धन प्राप्त होगा ऐसा दुराग्रह मोह वशते जो मनुष्य अङ्गीकार करलेते हैं अशुद्धियों के अशुचि कहे मदिरा मांस आदि युक्त व्रत होते हैं तेई मनुष्य इन [illegible] कर्मों में प्रवृत्त होते हैं ॥ १० ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥**

शाङ्करभाष्यम् ।

आशापाशेति आशापाशशतैः आशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वतः आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं पर आश्रयो येषान्ते कामक्रोधपरायणाः ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसञ्चयानर्थप्रचयान् परः स्वापहरणादिनेत्यर्थः ॥ १२ ॥

आनन्दगिरिकृतटीका ।

परिमेयविषयत्वात् परिमातुमशक्यमाश्रिता इति सम्बन्धः एष कामोपभोगः परमयनं सुखस्येतावत् पारत्रिकं तु नास्ति सुखमिति निश्चयवन्त इत्याह एतावदितीति ॥ ११ ॥

स्वामिकृतटीका ।

किञ्च चिन्तामिति प्रलयो मरणमेवान्तो यस्यास्तामपरिमेयां परिमातुमशक्यां चिन्तामाश्रिता नित्यचिन्तापरा इत्यर्थः कामोपभोग एव परमो येषां ते एतावदिति कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चया अर्थसञ्चयानीहन्त इत्युत्तरेणान्वयः तथाच बार्हस्पत्यसूत्रं काम एवैकः पुरुषार्थ इति चैतन्यविशिष्टः कामः पुरुष इति च ॥ ११ ॥

भाषा अनुवाद ।

और प्रलय कहे मरण काल पर्य्यन्त है जिसका अन्त ऐसी जो अपरिमेय चिन्ता अर्थात् कितनी है इसका ठिकाना नहीं तिसके आश्रित कहे चिन्ताके परायण मनुष्य जिनको कामभोग करनाही परम प्रयोजन है औ कामभोग छोड़ दूसरा और कोई परम पुरुषार्थ नहीं है इतनोही किये है निश्चय जो लोग ते कुकर्म्म के द्वारा धनसञ्चय करने की इच्छा करते हैं इसको पर श्लोक के साथ अन्वय होती है बृहस्पतिका सूत्र प्रमाण देते हैं काम एवैकः पुरुषार्थ इति इसका अर्थ यह है कि चैतन्य विशिष्ट जो काम उसीको पुरुषपद से कहते हैं ॥ ११ ॥

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथं ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनं ॥ १३ ॥**

शाङ्करभाष्यम् ।

ईदृशश्च तेषामभिप्रायः इदमिति इदं द्रव्यं अद्य इदानीं मया लब्धं इदञ्च अन्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरं इदञ्चास्ति इदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

आनन्दगिरिकृतटीका ।

आसुरानेव पुनः विशिनष्टि आशेति अशक्योपायार्थविषया अनवगतोपायार्थविषया प्रार्थना आशास्ताः पाशा इव पाशास्तेषां शतैर्बद्धा इव श्रेयसः प्रच्याव्यन्ते ततो नीयमाना इत्याह आशा एवेति ॥ १२ ॥

तेषामभिप्रायोऽपि विवेकविरोधीत्याह ईहनश्चेति द्रव्यञ्च हिरण्यादि इदमन्यदपुनः प्राप्यमाणत्वेन विपरिवर्तमानमित्येतत् ॥ १३ ॥

स्वामिकृतटीका ।

अतएव आशेति आशा एव पाशास्तेषां शतैर्बद्धा इतस्ततः आकृष्यमाणाः काम-क्रोधपरायणाः कामक्रोधौ परमयनमाश्रयो येषां ते कामभोगार्थमना तेन चौर्य्यादि-नार्थानां सञ्चयान् राशीभीकृत्य ईहन्ते ॥ १२ ॥

तेषां मनोरथं कथयन् नरकप्राप्तिमाह इदमद्येति चतुर्भिः प्राप्स्ये प्राप्स्यामि मनोरथं मनसः प्रियं स्पष्टमन्यत् एतेषाञ्च त्रयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः ॥ १३ ॥ किञ्च असाविति सिद्धः कृतकृत्यः स्पष्टमन्यत् ॥१४॥

भाषा अनुवाद ।

इनो मे आशारूप सैकड़ों रस्सीयों से बन्धे इधर उधर खैंचे जाते हुये लोग काम क्रोध के आश्रय स्वरूप भूत काम उपभोग के अर्थ अन्याय कहे चोरी लबारी दगाबाजी ठगी बटपारी से धन बटोरने की इच्छा करते हैं इसी से वह धन कुकर्म छोड़ सुकर्म मे नहीं लगे है देखो अज्ञानी आप अपने हाथ गले मे सैकड़ों फांसी लगाय लेते हैं ॥ १२ ॥

अब ऐसे लोगों के मनोरथ कहिकर उनकी नरकप्राप्तिका वृत्तान्त

## असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
## ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

### शाङ्करभाष्यम् ।

असौ मयेति असौ देवदत्तनामा मया हतः दुर्जयः शत्रुः हनिष्ये चान्यान्वराकान् परानपि किमेते करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं सम्पन्नः पुत्रैः पौत्रैर्नप्तृभि र्न केवलं मानुषोऽहं बलवान् सुखी चाहमेव अन्ये तु भूमिभारायावतीर्णाः ॥ १४ ॥

### आनन्दगिरिकृतटीका ।

यथोक्तं मदभिप्राये प्रतिबन्धकः शत्रुरपि न सम्भवतीत्याह असावितित्वत्तो विहीनानां त्वथा परिभवेऽपि त्वत्तुल्यानां शत्रूणां परिभवो निश्चितो न भवतीत्याशङ्क्याह सर्वथेति ऐश्वर्यातिरेकेऽपि कुतस्तेषां भोगसामर्थ्यमित्याशङ्क्याह अहमिति सिद्धत्वमेव स्फुटयति सम्पन्न इति बलवानोजस्वी सुखी रोगरहितः ॥ १४ ॥

### भाषा अनुवाद ।

इस श्लोक से लेकर चार श्लोक से कहते हैं कि इसी अज्ञान से विशेष मोह को प्राप्त होके नरक मे पडते हैं देखो उनकी रुचि औ मनोरथ ये हैं कि आज हमको यह लाभ भया और यह मनभावती प्यारी वस्तु परे कहे आगे को पावेंगे और यह धन हमारा है जन हमारे हैं और फेरभी तजवीज लगाये हैं कि वह धन भी हमारा होगा परन्तु यह नहीं शोचते कि हम किसके हवाले होंगे औ किस गतिको जांय गे ॥ १३ ॥

और इस शत्रु को हम मार डालेंगे औ इस को मारलिया है और हम जो चाहैं सो करें हम कर्त्ता औ हम भोगी हैं हम सिद्ध है जो कुछ करना था करचुके हैं हम बलवान् हम सुखी हैं इन सब बातों का स्मरणतो क्षणभरभी नहीं भूलते परन्तु काल बलवान् की सुधको तो एकबारगीही भूलगये हैं कि वह क्या करे गा ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

शाङ्करभाष्यम् ।

आढ्य इति आढ्यो धनेनाभिजनवान् सप्तपुरुषं श्रोत्रियत्वादि सम्पन्नस्तेनापि न मम तुल्योऽस्ति कश्चित् कोऽन्योऽस्ति सदृशस्तुल्यो मया किञ्च यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यः मोदिष्ये हर्षातिशयं प्राप्स्यामीत्येवं अज्ञानेन विमोहिताः अविवेकभावमापन्नाः ॥ १५ ॥

अनेकेति अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता

आनन्दगिरिकृतटीका ।

विद्याकुलधनाभिजनैः मत्तुल्यो नास्तीत्याह आढ्य इति तथापि यागदानाभ्यान्तत्फलेन वा कश्चिदधिको भविष्यतीत्याशङ्क्याह किञ्चेति न च तेषामेषोऽभिप्रायः साधीयानित्याह इत्येवमिति ॥ १५ ॥

स्वामिकृतटीका ।

किञ्च आढ्य इति आढ्यो धनादिसम्पन्नः अभिजनवान् कुलीनः यक्ष्ये यागादिषु दानेनापि दीक्षितान्तरेभ्यः सकाशात् प्रतिष्ठां प्राप्स्यामि दास्यामि स्तावकेभ्यश्च मोदिष्ये हर्षं प्राप्स्यामि इत्येवमज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

भाषा अनुवाद ।

और हम धनी हैं हम अभिजनवान् अर्थात् कुलीन तथा यज्ञ दान आदि जो कभी किया तो समझते हैं कि हमारी बराबर और किसीने नहीं किया लोगों में हम बड़ी प्रतिष्ठा पावेंगे अर्थात् प्रशंसा होगी और जो कोई हमारी स्तुति करेगा उसको हम धन वस्त्र आदि देंयगे औ उसपर प्रसन्न होंयगें इसप्रकार के मनुष्य अज्ञान से विमोहित मिथ्या अभिनिवेश को प्राप्त कहे झूठे मनोरथों में डूबे हैं ॥ १५ ॥

**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

## शाङ्करभाष्यम् ।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः मोहोऽविवेकोऽज्ञानन्तदेव जालमिवावरणात्मकत्वेन समावृताः प्रसक्ताः कामभोगेषु काम्यन्त इति कामाः विषयास्तेषामुपभोगेषु तत्रैव निषण्णाः सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

आत्मेति आत्मसम्भाविताः सर्वगुणविशिष्टतयात्मनैवात्मनि सम्भाविताः आत्मसम्भाविताः साधुभिः स्तब्धा अप्रणतात्मानो धनमानमदान्विता धननिमित्तोमानमदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्तेदम्भेन धर्मध्वजितया अविधिपूर्वकं विहिताङ्गेति कर्तव्यतारहितैः ॥ १७ ॥

### आनन्दगिरिकृतटीका ।

उक्तप्रकारविपर्ययेण कार्याकार्यविवेकविकलानां किं स्यादित्यपेक्षायामाह अनेकेति कामा विषयास्तेषां भोगेषु तत्प्रयुक्तेषूपभोगेष्विति यावत् ॥ १६ ॥

### स्वामिकृतटीका ।

एवम्भूता यत् प्राप्नुवन्ति तच्छृणु अनेकेति अनेकेषु प्रवृत्तं चित्तं तेन विभ्रान्ता विक्षिप्ताः तेनैव मोहमयेन जालेन समावृता मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः एवं कामभोगेषु प्रसक्ता अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १६ ॥

## भाषा अनुवाद ।

ऐसे मनुष्य जिसप्रकार का फल पावते हैं सो शुनो कि अनेकचित्त कहे मनकी लाषों अभिलाषों मे प्रवृत्त जो चित्त तिस से विक्षेपको प्राप्त ये लोग सोई सोई मोहजाल से घिरे हुये अर्थात् सूत के जाल से बद्ध मत्स्य के समान बन्धे हैं और कामभोग मे आसक्त हो अशुचि जो क्लेश युक्त नरक तिस मे ही पडते हैं ॥ १६ ॥

**अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः ।**
**ममात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

आनन्दगिरिकृतटीका ।

ननु तेषामपि केषाञ्चिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिप्रतीतेरयुक्तं वैतरण्यादौ पतनमिति चेत्तत्राह आत्मेति आसुरीसम्पदमभिजातैरधर्म्म जातमेव क्रियते प्रवृत्तेरपि वैदिके कर्म्मणि नैव पुण्यमित्युक्तं ॥ १७ ॥

स्वामिकृतटीका ।

यक्ष्य इति च यस्तेषां मनोरथ उक्तः स केवलं दम्भाहङ्कारादिप्रधान एव न तु सात्त्विक इत्यभिप्रायेणाह आत्मेति द्वाभ्यां आत्मनैव सम्भाविताः पूज्यतां नीताः न तु साधुभिः कैश्चित् अतएव स्तब्धा अनम्राः धनेन यो मानो मदश्च ताभ्यां समन्विताः सन्तः ते नाममात्रेण ये यज्ञास्ते नामयज्ञाः यद्वा दीक्षितः सोमयाजीत्येवमादिनाममात्रप्रसिद्ध्यै ये यज्ञास्तैर्यजन्ते कथं दम्भेन न तु श्रद्धया अविधिपूर्वकञ्च यथा भवति तथा ॥१७॥

भाषा अनुवाद ।

यज्ञ करि के औरों से हम बड़ी प्रतिष्ठा पावें ऐसे जो उन के मनोरथ जो पीछे पंद्रहें श्लोक मे कहा वह अभिलाष केवल दम्भ अहंकार आदि प्रधान है सतोगुण प्रधान नहीं हैं इस अभिप्रायपर दो श्लोक से कहते हैं कि आप अपने मनसे सम्भावित कहे महात्मा बनेहैं पर कोई साधु उनकी प्रतिष्ठा नहीं करते हैं इसी से वे शुष्क अर्थात् अनम्रस्वभाव कहे कठोरचित्त मनुष्य धनादि से जो मान औ अहङ्कार तिस मे युक्त होय यज्ञ दान आदिका तो केवल नाममात्रही है पर करते हैं इसवास्ते कि फलाना आदमी बड़ा पूजा करने वाला औ दानी है हमार नाम इसलोकमे ऐसे प्रसिद्ध होय इस वासना से यज्ञ दान करते हैं वह यज्ञ करना कैसा है सो कहते है कि वे केवल अपनी ख्याति लाभ को छोड और कुछ श्रद्धा से नहीं करते हैं तो अविधिपूर्वक यज्ञ दान जैसे हैं यह भी तैसे ही निःफल है यह जानो ॥ १७ ॥

## शाङ्करभाष्यम् ।

अहमिति अहङ्कारमहङ्करणमहङ्कारः विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहङ्कारोऽविद्याख्यः कष्टतमः सर्व्वदोषाणां मूलं सर्व्वानर्थप्रवृत्तीनाञ्च मूलं तं परिच्छिद्य तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामतीति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयं एतानन्यांश्च महतो दोषान् संश्रिताः किञ्च तेमामीश्वरं आत्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षीभूतं मां प्रद्विषन्तो मच्छासनातिवर्त्तित्वं प्रद्वेषस्तं कुर्व्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेषु असहमानाः ॥ १८ ॥

## आनन्दगिरिकृतटीका ।

अक्षमत्वात् पुनरासुरा दूरादेवोद्विजन्त इत्याह अहङ्कारमिति अहङ्कारमेव स्फोरयति विद्यमानैरिति अध्यारोपितवैशिष्ट्यविषयत्वादहङ्कारस्याविद्यामूलत्वेनाविद्यात्मत्वमाह अविद्याख्य इति विवेकिभिस्तस्यातियत्नादेव हेयत्वं सूचयति कष्टतम इति तदेव स्पष्टयति सर्व्वेति तं संश्रिता इति सम्बन्धः कार्यकारणसामर्थ्ययुक्तविशेषणं बलं अहङ्कार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति दर्पो नामेत्यादिना अन्यांश्च दोषान्मात्सर्यादीन्न केवलं उक्तमेव तेषां विशेषणं किन्तु कष्टतममस्ति विशेषणान्तरमित्याह किञ्चेति यद्यपीश्वरं प्रतिद्वेषस्तेषां सम्भाव्यते तथापि कथं स्वदेहे परदेहेषु च तं प्रतिद्वेषः नहि तत्र भोक्तारमन्तरेणेश्वरस्यावस्थानमित्याशङ्क्याह तद्बुद्धीति तेषामीश्वरं प्रति द्वेषमेव प्रकटयति मच्छासनेति ईश्वरस्य शासनं श्रुतिस्मृतिरूपन्तदतिवर्त्तित्वं तदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वं ॥ १८ ॥

## स्वामिकृतटीका ।

अविधिपूर्वकत्वमेव प्रपञ्चयति अहङ्कारमिति अहङ्कारादीन् संश्रिताः सन्त आत्मपरदेहेषु आत्मदेहे परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते दम्भयज्ञेषु श्रद्धाया अभावादात्मनो वृथैव पीडा भवति तथा पश्वादीनामप्यविधिना हिंसायां चैतन्यद्रोह एवावशिष्यत इति प्रद्विषन्त इत्युक्तं अभ्यसूयकाः सन्मार्गवर्त्तिनां गुणेषु दोषारोपकाः ॥ १८ ॥

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १८ ॥**

शाङ्करभाष्यम् ।

तानहमिति तानहं सर्व्वान् सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषतश्च मां क्रूरान् संसारेष्वेव नरकसंसरणमार्गेषु नराधमान् अधर्मदोषवत्त्वात् क्षिपामि प्रक्षिपामि अजस्रं सन्ततमशुभान् अशुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन सम्बन्धः ॥१८॥

आनन्दगिरिकृतटीका ।

तेषामुक्तविशेषणवतामासुराणां किं स्यादिति तदाह तामिति भगवतो नैर्घृण्य-मत्युग्रं प्रसक्तमिति अधर्मेति ॥ १८ ॥

स्वामिकृतटीका ।

तेषां च कदाचिदप्यासुरस्वभावपरित्यागो न भवतीत्याह तानीति द्वाभ्यां तानहं मां द्विषतः क्रूरान् संसारेषु जन्ममृत्युमार्गेषु तत्राप्यासुरीष्वेवातिक्रूरासु व्याघ्रसर्पादियोनिष्वजस्रमनवरतं क्षिपामि तेषां पापकर्मणां तादृशं फलं ददामीत्यर्थः ॥ १८ ॥

भाषा अनुवाद ।

अब अविधिपूर्वक को प्रकाश करते हैं कि अभ्यसूयक कहे निन्दा करने वाले मनुष्य अर्थात् भगवान् कहते हैं कि मेरे पथ के अवलम्बी पुरुषों के गुणों मे दोष लगानेहारे मनुष्य अहङ्कार बल औ प्रगल्भता औ ढीठापन तथा काम औ क्रोधको आश्रय कर अर्थात् वशहोय अपनी देह औ परकी देह मे चेतन ज्ञानरूप से टिका जो मै हूं सो सम्पूर्ण रूप से मेरे प्रति द्रोहकारो यज्ञ आदि करते रहते हैं परन्तु मारेदम्भ के यज्ञादि मे श्रद्धा के विना अपने को वृथा क्लेश देते हैं और पशु आदि कों को भी अविधिपूर्वक हिंसा करने से चैतन्य जीव का द्रोहमात्र ही फल उत्पन्न होता है और तो कुछ होय नहीं लगता इसीसे ये मनुष्य मेरे द्रोह करनेवाले मेरे शत्रु कों तुल्य हैं इससे इन हत्यारों को जो फल मिलेगा वह इस से जानलो ॥ १८ ॥

## आसुरीं योनिमापन्ना मूढ़ा जन्मनि जन्मनि।
## मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

### शाङ्करभाष्यम्।

आसुरीमिति आसुरीं योनिमापन्नाः प्रतिपन्ना मूढ़ा जन्मनि जन्मनि अविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधिगच्छन्ति ते मूढ़ा मामीश्वरं अप्राप्य अनासाद्यैव हे कौन्तेय ततस्तस्मादपि यान्ति अधमां निकृष्टतमाङ्गतिं मामप्राप्येति न मत्प्राप्तौ काचिदप्याशङ्का ततो मच्छिचित साधुमार्गप्राप्तिमप्राप्येत्यर्थः ॥ २० ॥

### आनन्दगिरिकृतटीका।

ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह आसुरीमिति तेषामीश्वरप्राप्तिशङ्काभावे कथन्तद्विशेषः स्यादित्याशङ्क्याह मामित्यादिना यस्मादासुरी सम्पदनर्थपरम्परया सर्वपुरुषार्थपरिपन्थिनी तस्माद्यावत् पुरुषः स्वतन्त्रो न काञ्चित् पारवश्यकरीं योनिमापन्नस्तावदेव तेनासौ परिहरणीयेति समुदायार्थः ॥ २० ॥

### स्वामिकृतटीका।

किञ्च आसुरीमिति ते च मामप्राप्यैवेत्येवकारेण मत्प्राप्तिशङ्कापि न कुतस्तेषां मत्प्राप्त्युपायं सन्मार्गमप्राप्य ततोऽप्यधमां कृमिकीटादिगतिं यान्तीत्युक्तं शेषं स्पष्टम् ॥२०॥

### भाषा अनुवाद।

औ उनका आसुरी स्वभाव कभी जाता नहीं यह दो श्लोकसे कहते हैं कि हमसे द्वेष करनेवाले क्रूरस्वरूप नराधमोको मै जन्म मृत्युकी मार्गरूप संसारमे आसुरी कहे अतिक्रूर व्याघ्र सर्प आदि दुष्टयोनिमे हमेमाफेंका करता हूं अर्थात् उनको वही निषिद्ध योनि मिला करती हैं ॥१९॥

और एव कहनेसे इस श्लोकमे यह कहा कि हे कौन्तेय अर्जुन बहुत जन्म आसुरी योनिमे प्राप्त जो मूढ़ जन उनको मेरी प्राप्तिकी शङ्का कहां है वलु मेरी प्राप्तिकी उपाय जो सन्मार्ग उसको भी न पायके असुरादि योनिसे भी अधम जो कृमि कीटादि गति तिस दुर्गतिको वे जातेहैं ॥२०॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

शाङ्करभाष्यम् ।

सर्वस्याः आसुर्याः सम्पदः संक्षेपोऽयमुच्यते यस्मिंस्त्रिविधे सर्वासुरी-सम्पदन्तर्भवति यत्परिहारेण परिहृता भवति यन्मूलं सर्व-स्यानर्थस्य तदेतदुच्यते त्रिविधमिति त्रिविधं नरकद्वारं त्रिःप्रकारं नरकस्य प्राप्तिद्वारं नाशनमात्मनः यद्द्वारं प्रविशन्नेव नश्यति आत्मा कस्मैचित् पुरुषार्थाय योग्यो न भवतीत्येतदुच्यते द्वारं नाशनमात्मन इति किं तत् कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् यत एतद्द्वारं नाशनमात्मन स्तस्मात् कामादित्रयमेतत् त्यजेत् त्यागस्तुतिरियं ॥ २१ ॥

आनन्दगिरिकृतटीका ।

कथमासुरी सम्पदनन्तभेदवती पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्याह सर्वस्या इति संक्षेपोऽभिनयमाह यस्मिन्निति कामादौ त्रिविधे सर्वस्यासुरसम्पद्भेदस्यान्तर्भावेऽपि कथमसौ परिह्रियते तत्राह यत्परिहारेणेति कामादिपरिहारेणासुरीसम्पद्भेदपरिहारेऽपि कथं सर्वानर्थपरिहारसिद्धिस्तत्राह यन्मूलमिति कामादिमतो नित्यस्य नाशा-शङ्केति तत्राह कथं विशिनष्टि त्रिविधमिति सामान्येनोक्तं नरकस्य द्वारं विशेषतो दर्शयति किं तदिति तस्मादिति व्याचष्टे यत इति कामादित्यागे सति अनर्थपरम्परायाः प्रतिबन्धनिवृत्ती स्यातामिति भावः ॥ २१ ॥

स्वामिकृतटीका ।

उक्तानामासुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह त्रिविधमिति कामः क्रोधो लोभश्च इतीदं त्रिविधं नरकस्य द्वारं अत एवात्मनो नाशनं नीचयोनिप्रापकं तस्मादेतत् त्रयं सर्वात्मना त्यजेत् ॥ २१ ॥

भाषा अनुवाद ।

पूर्व्व कहे हुए सब आसुरी दोषोंके मध्यमें सकल दोषके कारण रूप जो तीन दोष तिनको सदाही त्याग करना योग्य है सोई कहते हैं कि काम क्रोध औ लोभ ये तीन दोष नरकके द्वार स्वरूप हैं तो क्यों न नीच

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥
यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

शाङ्करभाष्यम् ।

एतैरिति एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःख मोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति किमात्मनः श्रेयो यत् प्रतिबद्धः पूर्व्वं नाचरति तदपगमादाचरति ततस्तदाचरणतया याति परां गतिं मोक्षमपि इति ॥ २२ ॥

सर्वस्यैतस्यासुरीसम्पत्परिवर्जनस्य श्रेय आचरणस्य शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्त्तुं नान्यथा अतः यः शास्त्रेति यः शास्त्रविधिं

आनन्दगिरिकृतटीका ।

न केवलं श्रेयः समाचरन्नासुरीं च सम्पदं वर्जयन्मोक्षमेव सम्यग्धीद्वारा लभते किन्तु लौकिकमपि सुखमाप्नोति नित्यमित्यपेरर्थः ॥ २२ ॥

स्वामिकृतटीका ।

त्यागे विशिष्टं फलमाह एतैरिति तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नर आत्मनः श्रेयःसाधनं तपो योगादिकमाचरति ततश्च मोक्षं प्राप्नोति ॥२२॥

भाषा अनुवाद ।

योनि प्राप्तिके करनेवाले होंय इसीसे मुमुक्षु कहे मुक्तिकी इच्छा रखनेवाले इन तीन दोषोंको सबतरह से त्याग करते हैं क्योंकि ये अनर्थके मूल हैं और देखो कैसे दुःख दाई हैं ॥ २१ ॥

अब इन तीन दोषोंके त्याग करनेसे विशेष फल कहते हैं कि हे कौन्तेय अर्जुन तम कहे नरकके द्वार स्वरूप काम आदि तीन दोषसे अच्छीतरह मुक्त पुरुष अपने कल्याण के साधन स्वरूप तप योग आदि आचरण सदा करतेहैं और तिसके अनन्तर मुक्ति पद को पावते हैं ॥२२॥

तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्त्तुमिहार्हसि ॥ २४ ॥

## इति दैवासुरसम्पद्विभागयोगो नाम षोड़शोऽध्यायः ॥ १६ ॥

### शाङ्करभाष्यम्।

शास्त्रं वेदः तस्य विधिं कर्त्तव्याकर्त्तव्यज्ञान कारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्त्तते कामकारतः कामप्रयुक्तः सन् न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति नाप्यस्मिन् लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा प्राप्नोति ॥ २३ ॥

### आनन्दगिरिकृतटीका।

आसुर्याः सम्पदो वर्जने श्रेयसः करणे किं कारणं तदाह यः शास्त्रेति तस्य कारणत्वं साधयति शास्त्रेति उक्तमपवर्गाख्यानाय श्लोकं प्रवर्त्तयति अत इति शिष्यते बोध्यतेऽनेनापूर्वार्थ इति शास्त्रं तस्य विधिनिषेधात्मकमित्युपेत्य व्याचष्टे कर्त्तव्येति कामस्य करणं कामकारः तस्मादितोऽपीत्युपेत्य कामाधीना शास्त्रविमुखस्य प्रवृत्तिरित्याह कामेति कामाधीनप्रवृत्तः सदा पुरुषार्थायोग्यस्य सर्वपुरुषार्थसिद्धिरित्याह नाप्नोतीति ॥ २३ ॥

### स्वामिकृतटीका।

कामादित्यागश्च स्वधर्माचरणं विना न सम्भवतीत्याह य इति शास्त्रविधिं वेदविहितं धर्ममुत्सृज्य यः कामचारतो यथेष्टं वर्त्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति न च सुखमुपशमं न च परां गतिं मोक्षं प्राप्नोति ॥ २३ ॥

### भाषा अनुवाद।

कामादि त्याग करना भी स्वधर्म आचरण के विना नहीं होसके है यही कहते हैं कि शास्त्र की विधि कहे वेद मे विहित धर्मका त्याग करके जो मनुष्य अपनी इच्छाके अनुसार कर्म करते हैं वे सिद्धि कहे तत्त्वज्ञान को नहीं पावते हैं और उपशम अर्थात् शान्तिरूप सुख भी नहीं पावते और न उत्तम गति वा मुक्ति तिसको पावते हैं। २३ ॥

## शाङ्करभाष्यम्।

तस्मादिति तस्मात् शास्त्रं प्रमाणं ज्ञानं साधनन्ते तव कार्य्याकार्य्यव्यवस्थितौ कर्त्तव्याकर्त्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं शास्त्रमेव विधानं शास्त्रविधानं कुर्य्यान्न कुर्य्यादित्येवं लक्षणं तेनोक्तस्वकर्म्म यत्तत् कर्त्तुमिहार्हसि इह इति कर्म्माधिकार भूमिप्रदर्शनार्थं इति। ॥ २४॥

इति शाङ्करभाष्ये षोड़शोऽध्यायः।

## आनन्दगिरिकृतटीका।

शास्त्राहते कर्म्मणो निष्फलत्वे फलितमाह तस्मादिति कर्तव्याकर्तव्यौ धर्म्माधर्म्मौ तत्र शास्त्रस्य प्रमाणत्वेऽपि मम किं कर्तव्यमित्याशङ्क्याह अत इति स्वकर्म चक्षिय युद्धादि इति शब्दोऽध्यायसमाप्त्यर्थः तदनेनाध्यायेन प्राग्भवीयकर्म्मवासनानुसारेणाभिव्यज्यमान-सात्त्विकादि प्रकृतित्रयविभागेन दैव्यासुरीतिसम्पद्द्वयमादानहानाभ्यामुपदिश्य कामक्रोध-लोभानपहाय पुरुषार्थिना शास्त्रप्रवणेन तदुक्तकारिणा भवितव्यमिति निर्द्धारितम् ॥२४॥

इति आनन्दगिरिकृतटीकायां षोड़शोऽध्यायः ॥ १६ ॥

## स्वामिकृतटीका।

फलितमाह तस्मादिति इदं कार्य्यमिदमकार्य्यञ्चेत्यस्यां व्यवस्थायां ते तव शास्त्रश्रुतिस्मृति-पुराणादिकमेव प्रमाणं अतः शास्त्रविधिनोक्तं कर्म ज्ञात्वा इह कर्म्माधिकारे वर्त्तमानः यथाधिकारं कर्म कर्त्तुमर्हसि तन्मूलत्वात् सत्त्वशुद्धिसम्यग्ज्ञानसक्तीनामित्यर्थः दैवदैतेय-सम्पत्तिसंविभागेन षोड़शे तत्त्वज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम् ॥ २४ ॥

इति स्वामीकृतटीकायां षोड़शोऽध्यायः ॥ १६ ॥

## भाषा अनुवाद।

अब तात्पर्य्य कहते हैं कि यह काज औ यह अकाज इसकी व्यवस्था कहे निर्णयमे तुमको शास्त्र औ वेद स्मृति कहे धर्मशास्त्र औ पुराण प्र-माणस्वरूप हैं इससे शास्त्रको विधिमे कहे जो कर्म तिनको जानिकर इस कर्म अधिकार मे वर्त्तमान तुम अपने अधिकार के अनुरूप कर्म करने को योग्यहोउ जिस हेतु सत्त्वशुद्धि औ सम्यक् ज्ञान औ मुक्ति के विषयमे भी कर्म ही मूल कहे कारणस्वरूप है ॥ २४ ॥

इति श्रीजगन्नाथ शुक्लकृत मनभावनी नाम भाषाटीकायां षोड़शोऽध्यायः ॥ १६ ॥

# श्रीमद्भगवद्गीता।

## सप्तदशोऽध्यायः।

---

### अर्जुन उवाच।

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः॥ १॥**

#### शाङ्करभाष्यम्।

तस्माच्छास्त्रं प्रमाणन्ते इति भगवद्वाक्यात् लब्धप्रश्नबीजो अर्जुन उवाच ये शास्त्रेति ये केचित् अविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयान्विताः श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिस्मृतिलक्षणं वा कञ्चित् शास्त्रविधिं अपश्यन्तो वृद्धव्यवहारदर्शनादेव श्रद्दधानतया देवादीन् पूजयन्ति ते इह शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः इत्येवं गृह्यन्ते ये पुनः कञ्चित् शास्त्रविधिमुपलभमाना एव तमुत्सृज्य अयथाविधि देवादीन् पूजयन्ति ते इह ये शास्त्रविधिमुत्सृज्य यजन्त इति न परिगृह्यन्ते कस्मात् श्रद्धयान्वितत्वविशेषणात् देवादिपूजाविधिपरं किञ्चित् शास्त्रं पश्यन्त एव तदुत्सृज्य

#### आनन्दगिरिकृतटीका।

आस्तिकानां नास्तिकानाञ्च शास्त्रैकचक्षुषां गतिरुक्ता सम्प्रत्यास्तिकानामेव शास्त्रानभिज्ञानां गतिं जिज्ञासमानः पृच्छतीत्याह तस्मादिति यजन्त इति यागग्रहणं दानादेरुपलक्षणं यदि वेदोक्तं विधिमपश्यन्तस्तमुत्सृजन्ति कथं तर्हि श्रद्दधाना यागादि कुर्वन्ति नहि मानं विना श्रद्धया यागादि कर्तुं शक्यमित्याशङ्क्याह श्रुतीति ननु शास्त्रीयं विधिं पश्यन्तोऽपि केचिदालस्येन स्वोत्प्रेक्षया यागादि कुर्वन्तो दृश्यन्ते तेषामिह ये शास्त्रविधिमुत्सृज्येति प्रश्नो भविष्यति नेत्याह ये पुनरिति तेषामत्रापरिग्रहे प्रश्नपूर्वकं हेतु-

## शाङ्करभाष्यम् ।

अश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्त्तन्ते इति न शक्यं परिकल्पयितुं यस्मात्तस्मात् पूर्व्वोक्ता एव ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः इत्यत्र गृह्यन्ते तेषामेवम्भूतानां निष्ठा तु अवस्थानं का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वनिष्ठावस्थानमाहोस्वित् रजोऽथवा तम इति ॥ १ ॥

### आनन्दगिरिकृतटीका ।

कस्मादिति शास्त्रज्ञानात्तदुपेक्षावतां श्रद्धेऽपि विशेषणमविरुद्धमित्याशङ्क्याऽव्याख्यानान्मैवमित्याह देवादीति अश्रद्दधानतया तदुत्सृज्येति सम्बन्धः शास्त्रोक्तविधिपरिज्ञानमपि तदनादृत्य स्वेच्छया देवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावो यस्मादनन्तराध्याये निरूपणादास्तिकाधिकारे तेषां प्रसङ्गो नास्ति इत्युपसंहरति यस्मादिति पूर्व्वोक्ता, शास्त्रानभिज्ञा वृद्धव्यवहारानुसारिण इति यावत् तैः श्रद्धया क्रियमाणं कर्म कुत्र पर्य्यवस्यतीति पृच्छति तेषामिति का निष्ठेत्येतद्विवृणोति सत्त्वमिति ॥ १ ॥

### स्वामिकृतटीका ।

उक्ताधिकारहेतूनां श्रद्धा मुख्या च सात्त्विकी इति दर्शयितुं गौणश्रद्धाभेदविशेषोच्यते पूर्वाध्यायान्ते यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः न स सिद्धिमवाप्नोतीत्यनेन शास्त्रोक्तविधिमुत्सृज्य कामचारेण वर्त्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तं तत्र शास्त्रविधिमुत्सृज्य कामचारं विना श्रद्धया वर्त्तमानानां किमधिकारोऽस्ति नास्ति वेति बुभुत्सया अर्जुन उवाच य इति अत्र च शास्त्रविधिमुत्सृज्य यजन्त इत्यनेन शास्त्रार्थं बुद्ध्वा तमुल्लंघ्य वर्त्तमानो न गृह्यन्ते तेषां श्रद्धया यजनानुपपत्तेः आस्तिक्यबुद्धिर्हि श्रद्धा न चासौ शास्त्रविरुद्धेऽर्थे शास्त्रज्ञानवतां सम्भवति तानेवाधिकृत्य त्रिविधा भवति श्रद्धेति यजन्ते सात्त्विका देवानित्याद्युत्तरानुपपत्तेश्च अतो नात्र शास्त्रलंघिनो गृह्यन्ते अपितु क्लेशबुद्ध्या वा आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरम्परावशेन श्रद्धया क्वचिद्देवताराधनादौ प्रवर्त्तमाना गृह्यन्ते अतोऽयमर्थः ये शास्त्रविधिमुत्सृज्य दुःखबुद्ध्या आलस्याद्वा अनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते तेषान्तु का निष्ठा का स्थितिः क आश्रयः तामेव विशेषेण पृच्छति किं सत्त्वं आहो किं रजः अथवा तम इति तेषां तादृशी देवपूजादिप्रवृत्तिः किं सत्त्वसंश्रिता रजःसंश्रिता तमःसंश्रिता वेत्यर्थः श्रद्धायाः सात्त्विकत्वात् क्लेशबुद्ध्या आलस्येन च शास्त्रानादरस्य राजसतामसत्वात् त्रिधा सन्देहः यद्

## श्रीभगवानुवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

शाङ्करभाष्यम् ।

एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विकाऽहो स्विद्राजस्युत तामसीति सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचन-

श्रीधरस्वामिकृतटीका ।

सत्त्वसंश्रिता चेत्तेषामपि सात्त्विकत्वाद् यथोक्तात्मज्ञानेऽधिकारः स्यादन्यथा नेति तात्पर्यार्थः ॥ १ ॥

भाषा अनुवाद ।

तत्त्वज्ञान के अधिकारी होने मे जो सात्त्विकी श्रद्धा है सोई मुख्य कारण है यह पूर्व कहा हैं इसमे अब सतरहें अध्याय मे भगवान श्रद्धा के तीनि भेद कहेंगे और जो सोरहें अध्याय मे यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः इस तेईसवें श्लोक से कहा कि वेद वा शास्त्रकी विधि छोड़ि अपनी इच्छा के अनुसार कर्म करने वाले को तत्त्वज्ञान नहीं होता है तो विधि त्याग करिके श्रद्धा से कर्म मे वर्त्तमान जनो को तत्त्वज्ञान का अधिकार है कि नहीं यही ज्ञात होने को इच्छा से अर्जुन कहते हैं कि जो मनुष्य वेदशास्त्र को विधि को दुःख समझकर अथवा आलस्य से त्याग करि के केवल लोकाचार के अनुसार श्रद्धायुक्त होय यज्ञ दान आदि कर्म करते हैं उनकी निष्ठा कहे स्थिति कैसी होती है इसी को पूछते हैं कि हे कृष्ण उनकी जो देवपूजा अथवा यज्ञ आदि है सो सात्त्विकी राजसी किंवा तामसी है यह तीन प्रकार की शंका होती है जो ये पूर्वोक्त कर्मकारी लोग सतोगुणी होयं तो सात्त्विक हेतु से तत्त्वज्ञान मे उनका अधिकार होसके है और जो सतोगुणसे युक्त न होंय तो वह अधिकार नहीं होसकता है यह अर्जुन के पूछने का तात्पर्य है ॥ १ ॥

## शाङ्करभाष्यम्।

मर्हतीति त्रिविधेति श्रीभगवानुवाच त्रिविधा त्रि:प्रकारा भवति श्रद्धा यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा स्वभावजा जन्मान्तरकृतो धर्मादि-संस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा सात्त्वि-की सत्त्वनिर्वृता देवपूजादिविषया राजसी रजोनिर्वृता यक्षरक्षःपूजा-दिविषया तामसी तमोनिर्वृता प्रेतपिशाचादिपूजाविषयैवं त्रिविधान्ता-मुच्यमानां श्रद्धां शृणु सैवं त्रिविधा भवति ॥ २ ॥

### आनन्दगिरिकृतटीका।

कार्य्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्यमाह एतदिति विशेषनिष्ठमुत्तरं सामान्येन वक्तुं न शक्यमित्याशयेन परिहरति सामान्येति किमिति श्रद्धात्रैविध्यं प्रश्नानुपयुक्तमुच्यते तत्राह यस्यामिति श्रद्धापूर्विकायां क्रियायामिति यावत् श्रद्धात्रैविध्ये हेतुमाह स्व-भावजेति स्वभावशब्दार्थं प्रकृतोपयोगितया कथयति जन्मान्तरेति कथं त्रिविधेत्यपेक्षाया-माह सात्त्विकीत्यादिना कथमुक्ता श्रद्धा स्वभावजेति तत्राह तामिति ॥ २ ॥

### स्वामिकृतटीका।

अत्रोत्तरं श्रीभगवानुवाच त्रिविधेति अयमर्थः शास्त्रतत्त्वज्ञानतः प्रवर्त्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव भवति श्रद्धा लोकाचारमात्रेण प्रवर्त्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी राजसी तामसी चेति त्रिविधा भवति तत्र हेतुः स्वभावजा स्वभावः पूर्वसंस्कारस्तस्माज्जाता स्वभावस्यान्यथाकर्त्तुं सामर्थ्यं हि शास्त्रोत्थं विवेकज्ञानं तेषां नास्ति अतः केवलं पूर्वस्वभावेन भवन्ती श्रद्धा त्रिविधा भवति तामिमां त्रिविधां श्रद्धां शृणु इति तदुक्तं व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दनेत्यादिना ॥ २ ॥

## भाषा अनुवाद।

इसका उत्तर भगवान् श्रीकृष्ण कहते हैं कि यह जो वेदशास्त्र के क्रम से भगवद्दर्शन करने वालों की सात्विकी श्रद्धा एकही प्रकार की है पर हां लोकाचार अनुसार कर्म अनुष्ठान करने वालों को जो जो श्रद्धा सोई सात्विकी राजसी तामसी तीन प्रकारकी होती हैं तिस का कारण यह कि स्वभाव कहे पूर्वकर्म्म के संस्कारवशते उत्पन्न जो श्रद्धा उसको स्वभावजा कहते हैं इससे स्वभावको अन्यथा करने में निश्चित

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

## शाङ्करभाष्यम् ।

सत्त्वेति सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्व्वस्य प्राणिजातस्य श्रद्धा भवति भारत यद्येवन्ततः किं स्यादित्युच्यते श्रद्धामयः श्रद्धाप्रायः अयं पुरुषः संसारी जीवः कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स तच्छ्रद्धः स एव तत् श्रद्धानुरूप स एव स जीवः ॥ ३ ॥

## आनन्दगिरिकृतटीका ।

प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धाया निमित्तमित्युक्तमिदानीमुपादानान्तरमाह सत्त्वेति [illegible] श्रद्धा सत्त्वविकारी [illegible] त्रिविधेति सात्त्विकत्वादिः कथं त्रिधायां सात्त्विकादिप्रकारा श्रद्धाया [illegible] अनुरूपफलमिति मन्वानः [illegible] मन्वानः परिहरति [illegible] इति श्रद्धामयत्वं [illegible] भिमते पुरुषे प्रादुर्भाव प्रत्यक्षेऽपि स्वयं श्रद्धामयत्वाभिधानमित्यर्थः ॥ ३ ॥

## स्वामिकृतटीका ।

ननु श्रद्धा सात्त्विक्येव सत्त्वकार्यत्वेन तथैव श्रीभागवते उद्धवं प्रति निर्दिष्टत्वात् यदुक्तं शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः इत्येताः सत्त्वस्य वृत्तय इति अतः कथं तस्यास्त्रैविध्यमुच्यते सत्यं तथापि रजस्तमोमिश्रितत्वेन सत्त्वस्य त्रैविध्यात् श्रद्धाया अपि त्रैविध्यं घटत

## भाषा अनुवाद ।

समर्थ जो शास्त्रोक्त विवेक का ज्ञान औ लोकाचार कर्म करनेवाली जो नहीं है इससे शुद्ध पूर्वस्वभाव के क्रमसे उत्पन्न जो श्रद्धा सो तीन प्रकारकी होती है सो तीन भेद हम से सुनो परन्तु भगवत् भजनविषयक सात्त्विकी श्रद्धा जो एकही प्रकार की है सोभी व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन इस दूसरे अध्याय के एकतालीसवें श्लोक में कही गई है सब जानो ॥ २ ॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

स्वामिकृतटीका ।

इत्याह सत्त्वेति सत्त्वानुरूपा सत्त्वतारतम्यानुसारिणी सर्वस्य विवेकिनो वा लोकस्य श्रद्धा भवति तस्मादयं पुरुषो लौकिकः श्रद्धाविकारः त्रिविधया श्रद्धया विक्रियत इत्यर्थः तदेवाह यो यच्छ्रद्धः यादृशी श्रद्धा यस्य स एव सः तादृशश्रद्धायुक्तः स एव इति यः पूर्वं सत्त्वोत्कर्षेण सात्त्विकश्रद्धायुक्तः पुरुषः स पुनस्तत् संस्कारेण सात्त्विकश्रद्धायुक्त एव भवति यस्तु रजस उत्कर्षेण राजसश्रद्धायुक्तः स पुनस्तादृश एव भवति यस्तु तमस उत्कर्षेण तामसश्रद्धया युक्तः स पुनस्तादृश एव भवतीति लोकाचारमात्रेण प्रवर्त्तमाने एवं सात्त्विक राजस तामस श्रद्धा व्यवस्था शास्त्रजनितविवेकज्ञानयुक्तानान्तु स्वभावविजयेन सात्त्विकी एकैव श्रद्धेति प्रकरणार्थः ॥ ३ ॥

भाषा अनुवाद ।

पूर्वपक्ष कहते हैं कि हां श्रद्धा सात्त्विकी है क्योंकि श्रीभगवान्ने एकादश स्कन्धमें पचीशयें अध्यायके द्वितीय श्लोकसे सत्त्वकार्य्यरूप ही उद्धवके प्रति निर्द्देश किया है कि शम दम तितिक्षा ज्ञान तप सत्य दया स्मृति तुष्टि त्याग अनिच्छा श्रद्धा लज्जा औ आत्मनिर्वृत्ति कहे आत्मसुख ये सब इती सत्तोगुण ही की हैं इससे श्रद्धा तीन प्रकार कैसे कहते हैं जो ऐसा कहो तो शुनो कि हां सत्य कहते हो पर तथापि रजो गुण औ तमोगुणके संयोगसे सत्त्वगुणकी तीन प्रकारता हेतुक सात्त्विक श्रद्धाभी जो तीन प्रकार होती है सोई कहते हैं कि जो पूर्व्वसात्त्विक स्वभाव था सो उसके संस्कार से फिरभी सात्त्विक श्रद्धायुक्त होता है और जो रजोगुण प्रकाश था सो रजोगुण स्वभाव होता है औ तमोगुण वालोंकी तमोगुणी श्रद्धा होती अर्थात् तामसयुक्त होते हैं इस कारण लोकाचार कर्मकारी ऐसे सात्त्विक राजस तामसस्वरूप तीन प्रकार श्रद्धाका निर्द्देशमात्र कहे देखाया है परन्तु जो लोग शास्त्रके ज्ञान या प्रगट विवेक ज्ञानसे युक्त हैं तिनका स्वभाव सर्वोत्तम होनेके वास्ते एकही प्रकारकी श्रद्धा होती है इतनाही इस प्रकरणका तात्पर्य्यार्थ है ॥ ३ ॥

**अशास्त्रविहितं घोरं तप्यन्ते ये तपोजनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

## शाङ्करभाष्यम् ।

ततश्च कार्य्येण लिंगेन देवादिपूजया सत्त्वादिनिष्ठाऽनुमेयेत्याह यजन्त इति यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान् यक्षरक्षांसि राजसाः प्रेतान् भूतगणांश्च सप्तमातृकादींश्च अन्ये यजन्ते तामसा जनाः ॥ ४ ॥

एवं कार्य्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु पूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठाः तमोनिष्ठाश्चैव प्राणिनो भवन्ति कथं अशास्त्रेति अशास्त्रविहितं न शास्त्रविहितं अशास्त्रविहितं घोरं पीड़ाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्त्तयन्ति ये तपो जनास्ते च दम्भाहङ्कारसंयुक्ता दम्भश्चाहङ्कारश्च दम्भाहङ्कारौ ताभ्यां

## आनन्दगिरिकृतटीका ।

तथापि कथं सत्त्वादिनिष्ठा यथोक्तस्य पुरुषस्य स्यादित्याशङ्क्याह ततश्चेति अधिकृतस्य श्रद्धाप्रधानत्वादिति यावत् देवा वस्वादयो यक्षाः कुबेरादयो रक्षांसि नैर्ऋता-दयः अधर्मात् प्रच्युता विप्रादयो देहपातादूर्ध्वं वायुदेहमापन्नाः प्रेताः एभ्यश्च यथायथ-माराध्य देवादयः सात्त्विकराजसतामसान् कामान् प्रयच्छन्तीति सामर्थ्यादवगन्तव्यम् ॥ ४ ॥

## श्रीधरीकृतटीका ।

सात्त्विकादिभेदमेव कार्य्यभेदेन प्रपञ्चयति यजन्त इति सात्त्विका जनाः सत्त्वप्रकृतीन् देवानेव यजन्ते पूजयन्ति राजसास्तु रजःप्रकृतीन् यक्षान् राक्षसांश्च यजन्ते एते-भ्योऽन्ये विलक्षणास्तामसा जनास्तामसानेव प्रेतान् भूतगणांश्च यजन्ते सत्त्वादिप्रकृतीनां तत्तद्देवादीनां पूजादर्शनात्तत्तत्पूजकानां सात्त्विकादित्वं ज्ञातव्यमित्यर्थः ॥ ४ ॥

## भाषा अनुवाद ।

सात्विक आदि जो गुणके भेदहैं उनको कार्यके भेदसे विस्तारकर कहते हैं कि सात्विक स्वभाव के जन सत्त्वप्रकृति वाले देवतों को पूजते हैं वैसेही राजस स्वभाव रजःप्रकृति देवता जो यक्ष राक्षस आदिकों को पूजते और तामसी तमोगुणी भूत प्रेत पिशाचोंको पूजते हैं ॥ ४ ॥

**कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
माञ्चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

शाङ्करभाष्यम् ।

संयुक्ताः कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलङ्काम-रागबलन्तेनान्विताः कामरागबलैर्वान्विताः ॥ ५ ॥

आनन्दगिरिकृतटीका ।

ननु सत्त्वादिनिष्ठाः शास्त्रेण ज्ञातुं शक्यन्ते कुतः कार्यलिङ्गकानुमानेनेति तत्राह एवमिति सत्त्वादिनिष्ठानां जन्तूनामवान्तरविशेषं प्रचुरत्वाप्रचुरत्वरूपं दर्शयति तत्रेत्या-दिना राजसानाञ्च प्राचुर्यं प्रश्नद्वारा विवृणोति कथमित्यादिना कामश्च काम्यमानविषयो रागश्च तद्विषयभोगाभिलाषः तत्कृतं तन्निमित्तमिति यावत् ॥ ५ ॥

स्वामिकृतटीका ।

राजस तामसेष्वपि पुनर्विशेषान्तरमाह अशास्त्रविहितमिति द्वाभ्यां शास्त्रविधिमजान-न्तोऽपि केचित् प्राचीनपुण्यसंस्कारेणोत्तमाः सात्त्विका एव भवन्ति केचिन्मध्यमा राजसा भवन्ति अधमास्तु तामसा भवन्ति ये पुनरत्यन्तं मन्दभाग्यास्ते गतानुगत्या पाषण्डसङ्गेन च तदाचाराऽनुवर्त्तिनः सन्तोऽशास्त्रविहितं घोरं भूतभयङ्करं तपस्तप्यन्ते कुर्वन्ति तत्र हेतवः दम्भाहङ्काराभ्यां संयुक्ताः तथा कामोऽभिलाषः राग आसक्तिर्बलमाग्रहः एतै-रन्विताः सन्तस्तानासुरनिश्चयान् विद्धीत्युत्तरेणान्वयः ॥ ५ ॥

भाषा अनुवाद ।

**और राजस तामस के मध्य मे भी जो विशेष है सो फेर दो श्लोक से कहते हैं कि शास्त्रके विना जाने भी पूर्वसंस्कारके बलसे कोई कोई उत्तम पुरुष सात्त्विक स्वभाव होते हैं कोई मध्यम जन राजस स्वभाव औ कोई अधम लोग तामस स्वभाव होते हैं और जो अत्यन्त मन्दभाग्य लोग अन्धपरम्परा मे पाषण्डियों के सङ्गसे पाषण्ड आचार के अनुवर्त्ती होय शास्त्रके विधान से भिन्न लोकभयङ्कररूप तपस्या करते हैं तिन के विषय मे हेतुस्वरूप दम्भ औ अहङ्कार से संयुक्त तथा काम कहे अभिलाष और राग कहे अभिलषित वस्तु मे चित्तरञ्जन के अनुरूप जो अधिक आशक्ति औ बल कहे विषयों का आग्रह इस सब से युक्त होय इस श्लोक का अर्थ दूसरे श्लोक के साथ है ॥ ५ ॥**

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु॥ ७॥

शाङ्करभाष्यम्।

कर्षयन्त इति कर्षयन्तः कृशीं कुर्व्वन्तः शरीरस्थम्भूतग्रामङ्करणसमुदाय-मचेतसोऽविवेकिनो माञ्चैव तत् कर्म्म बुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्षयन्तः मदनुशासनाकरणमेव मत्कर्षणं तान्विद्ध्यासुरनिश्चयान् आसुरो निश्चयो येषान्ते आसुरनिश्चयास्तान् परिहरणार्थं विद्धि इत्युपदेशः॥ ६॥

आहाराणाञ्च रस्यस्निग्धादित्रिवर्गत्रयरूपेण भिन्नानां यथाक्रमं न सात्त्वि-कराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते यतो रस्यस्निग्धादिष्वाहारवि-शेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वन्तामसत्वञ्च बुद्ध्वा

आनन्दगिरिकृतटीका।

रजोनिष्ठान् प्राधान्येन प्रदर्श्य तमोनिष्ठान् प्राधान्येन दर्शयति कर्षयन्त इति कथं शरीरादिसाक्षिणमीश्वरं प्रति कृशीकरणं प्राणिनां प्रकल्पते तत्राह मदनुशासनेति तेषां विपर्य्यासनिश्चयवतां परिज्ञानं कुत्रोपयुज्यते तत्राह परिहरणार्थमिति॥ ६॥

स्वामीकृतटीका।

किञ्च कर्षयन्त इति शरीरस्थं आरम्भकत्वेन देहे स्थितं भूतानां पृथिव्यादीनां ग्रामं समूहं कर्षयन्तो व्यर्थैरोपवासादिभिः कृशं कुर्व्वन्तोऽचेतसोऽविवेकिनः माञ्चान्तर्यामि-तया अन्तःशरीरस्थं देहमध्ये स्थितं मदाज्ञालङ्घनेनैव कर्षयन्तो ये तपश्चरन्ति तानासुर-निश्चयान् आसुरोऽतिक्रूरो निश्चयो येषां तान् विद्धि॥ ६॥

भाषा अनुवाद।

शरीरस्थ कहे शरीर के कारण रूप देह मे वर्त्तमान जो पृथीवी अप तेज वायु आकाश पंच भूत तिनको वृथा उपास करने से दुर्बलकर औ अन्तर्यामीरूप देह के बीच टिके हुये मेरे को भी लङ्घनकर दुःखदाई होय जो अविवेकी लोग तप करते हैं तिनको आसुर निश्चय कहे अति-क्रूरबुद्धि जानो तात्पर्य यह कि मेरी आज्ञा का उलङ्घन करनाही मुझे दुःख देना है॥ ६॥

**आयुः सत्व बलाऽरोग्य सुख प्रीति विवर्द्धनाः ।**
**रस्याः स्निग्धाः स्थिराः हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**

शाङ्करभाष्यम् ।

रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानाञ्चोपादानार्थंतया यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान् बुद्ध्वा कथं नु नाम परित्यजेत् सात्त्विकानेवानुतिष्ठेदित्येवमर्थमाह आहारस्त्विति आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टस्तथा यज्ञस्तपस्तथा दानं तेषामाहारादीनाम्भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥

आनन्दगिरिकृतटीका ।

उत्तरश्लोकपूर्वार्द्धतात्पर्यमाह आहारास्त्विति रस्यादिवर्गस्य सात्त्विकपुरुषप्रियत्वं कट्वादिवर्गस्य राजसप्रियत्वं यातयामादिवर्गस्य तामसप्रियत्वमिति दर्शनं कुतोपयुज्यते तत्राह रज इति श्लोकोत्तरार्द्धतात्पर्यमाह तथेति आहारत्रैविध्यवदिति यावत् कथमेतेषां प्रत्येकं त्रैविध्यन्तत्राह तेषामिति ॥ ७ ॥

स्वामिकृतटीका ।

आहारादिभेदादपि सात्त्विकादिभेदं दर्शयितुमाह आहारस्त्वित्यादि त्रयोदशभिः सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति तथा यज्ञतपोदानानि त्रिविधानि भवन्ति तेषां वक्ष्यमाणं भेदमिमं शृणु एतच्च राजसतामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्त्तव्य इत्येतदर्थं कथ्यते ॥ ७ ॥

भाषा अनुवाद ।

और आहार आदिभेद से भी सात्त्विकादि गुणभेद देखावने का मनोरथ कर इस श्लोक से लेकर त्रयोदश श्लोकपर्यन्त कहते हैं कि सकल मनुष्यों का आहार जो अन्न आदि सो भी यथायोग तीन प्रकार से प्रिय लगता है औ यज्ञ तप तथा दानादि भी तीन प्रकार के होते हैं सो सब भेद शुनो कि राजस तामस आहार औ यज्ञ दानादि परित्याग करके सतोगुण की वृद्धि के निमित्त सात्त्विक आहार औ यज्ञादि के विषय मे तो यत्न करना कर्त्तव्य है यह भगवान् कहते हैं ॥ ७ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

शाङ्करभाष्यम् ।

आयुरिति आयुश्च सत्त्वञ्च बलञ्च आरोग्यञ्च सुखञ्च प्रीतिश्च तासां विवर्द्धनाः आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः रस्याः स्निग्धाः ते च रस्या रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराश्चिरकालस्थायिनो देहे हृद्या हृदयप्रिया आहाराः सात्त्विकस्येष्टाः भवन्ति ॥ ८ ॥

आनन्दगिरिकृतटीका ।

सात्त्विकप्रीतिविषयमाहारविशेषमुदाहरति आयुरिति आयुर्जीवनं सत्त्वञ्चित्तस्थैर्यं वीर्यं वा बलं कार्यकारणसामर्थ्यं आरोग्यन्नीरोगता सुखं अन्तराह्लादः प्रीतिः परेषामपि सम्पन्नानां दर्शनात् परमो हर्षस्तासां विवर्द्धनाः विवर्द्धयन्तीति व्युत्पत्तेः रसोपेता रसयितव्याः सरसाः देहे चिरकालस्थायित्वं चिरशरीरोपकारहेतुत्वम् ॥ ८ ॥

स्वामिकृतटीका ।

तत्राहारत्रैविध्यमाह आयुरिति त्रिभिः आयुर्जीवनं सत्त्वमुत्साहः बलं शक्तिः आरोग्यं रोगराहित्यं सुखं चित्तप्रसादः प्रीतिरभिरुचिः आयुरादीनां विवर्द्धनाः विशेषेण वृद्धिकराः ते च रस्या रसवन्तः स्निग्धाः स्नेहयुक्ताः स्थिरा देहे सारांशेन चिरकालावस्थायिनः हृद्याः दृष्टिमात्रादेव हृदयङ्गमा एवम्भूता आहारा भक्ष्यभोज्यादयः सात्त्विकप्रियाः ॥ ८ ॥

भाषा अनुवाद ।

अब पूर्वोक्त सात्त्विकादि आहार के तीन प्रकारके भेद तीन श्लोक से कहते हैं कि आयु कहे जीवन सत्व कहे उत्साह बल कहे शक्ति औ आरोग्य सुख कहे चित्तकी प्रसन्नता प्रीति कहे अभिरुचि इससे यह आया कि आयु सत्व आदि के बढ़ावने वाले औ रस्य कहे रसयुक्त औ स्निग्ध कहे चिकने घृतयुक्त औ स्थिर कहे रसांश के द्वारा चिर काल देह मे रहने वाले औ हृद्य कहे देखते मात्रही भोजन की इच्छा हो उठे ऐसे सुन्दरस्वरूप आहार भक्ष्य भोज्य आदि सात्विकरूप सात्विक स्वभाव पुरुषों को प्रिय होते हैं ॥ ८ ॥

**यातयामं गतरसं पूतिपर्य्युषितञ्च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियं ॥ १० ॥**

शाङ्करभाष्यम् ।

कट्विति कटु अम्ल लवण अत्युष्ण अतिशब्दः कट्वादिषु सर्वत्र योज्योऽति-कटुरतितीक्ष्ण इत्येवं कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः एवंविधा आहारा राजसस्येष्टा दुःखशोकामयप्रदा दुःखञ्च शोकञ्च आमयञ्च प्रयच्छ-न्तीति दुःखशोकामयप्रदाः ॥ ९ ॥

यातयाममिति यातयामं मन्दपक्कं निर्वीर्यस्य गतरसेनोक्तत्वात् गत

आनन्दगिरिकृतटीका ।

राजसप्रीतिविषयमाहारविशेषं दर्शयति कट्विति कटुकान्तिक्तः कटुकस्य तीक्ष्णशब्देनो-क्तत्वात् रूक्षो विस्नेहः विदाही सन्तापकः अतिशब्दस्य सर्वत्र योजनामेवाभिनयति अति-कटुरिति दुःखं तात्कालिकी पीड़ा इष्टवियोगजं दुःखं शोकः आमयो रोगः ॥ ९ ॥

स्वामिकृतटीका ।

तथा कटु इति अतिशब्दः कट्वादिषु सप्तस्वपि सम्बध्यते तेन अतिकटुर्निम्बादिः अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः अतितीक्ष्णो मरिचादिः अतिरूक्षः कंगुकोद्र-वादिः अतिविदाही सर्षपादिः अतिकट्वादय आहारा राजसस्येष्टाः प्रियाः दुःखं तात्कालिकहृदयसन्तापादि शोकः पश्चाद्भावि दौर्मनस्यं आमयो रोगः एतान् प्रददति प्रयच्छन्तीति तथा ॥ ९ ॥

भाषा अनुवाद ।

और अति कटु नींव आदि औ अति अम्ल औ अति लवण औ अति-उष्ण कहे गरम औ अति तीक्ष्ण मरिचादि औ अति रूक्ष औ अति उग्र सरसों आदि ये सब राजस स्वभाव मनुष्य को प्रिय होते हैं परन्तु ये सब वस्तु दुःख कहे भोजनके समय में हृदय को सन्ताप आदि औ शोक कहे भोजन के अनन्तर अप्रसन्नता औ आमय कहे रोग ये सब खाने वालेको देते हैं क्योंकि ये सब दुःख औ शोकमय हैं ॥ ९ ॥

अफलाकांक्षिभिर्यज्ञो विधिदिष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

शाङ्करभाष्यम् ।

रसं रसवियुक्तं पूतिदुर्गन्धि पर्युषितञ्च पक्वं सत् रात्रान्तरितञ्च यत् उच्छिष्टमपि च भुक्तशिष्टमप्यमेध्यमयज्ञार्हं भोजनमीदृशन्तामसप्रियं ॥ १० ॥

अथेदानीं यज्ञस्त्रिविध उच्यते अफलेति अफलाकांक्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञ इज्यते निर्वर्त्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्त्तनमेव कार्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्त्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥

आनन्दगिरिकृतटीका ।

तामसप्रियमाहारमुदाहरति यातयाममिति ननु निर्वीर्यं यातयाममुच्यते न पुनः त्वामिपक्वमिति नेत्याह निर्वीर्य्येति ॥ १० ॥

ज्ञानादानार्थं आहारत्रैविध्यमेवं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं कथयति अथेति तत्र सात्त्विकं यज्ञं ज्ञापयति अफलेति फलाभिसन्धिं विना यज्ञस्वरूपमेव भाव्यमिति बुद्ध्या शास्त्रतोऽनुष्ठीयमानो यज्ञः सात्त्विक इत्यर्थः ॥ ११ ॥

स्वामिकृतटीका ।

यातयाममिति यातो यामः प्रहरो यस्य पक्वस्यौदनादेः तद्यातयामं शैत्यावस्थां प्राप्तमित्यर्थः गतरसं निष्पीडितसारं पूतिदुर्गन्धं पर्युषितं दिनान्तरपक्वं उच्छिष्टं अन्यभुक्तावशिष्टं अमेध्यं अभक्ष्यं कलञ्जादि एवम्भूतं भोजनं भोज्यं तामसस्य प्रियं ॥ १० ॥

भाषा अनुवाद ।

और जो अन्न यातयाम कहे जिसको एक पहर बीत गया औ ठंढा होगया औ गतरस कहे जिसका रस सूख गया औ पूति कहे दुर्गन्धयुक्त जो है औ पर्य्युषित कहे बासी अन्न औ उच्छिष्ट कहे दूसरे का जूठा औ अमेध्य कहे अपवित्र अभक्ष्य जो मांस आदि ऐसे आहार तामस स्वभाव मनुष्योंको प्रिय लगते हैं ॥ १० ॥

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं॥ १२॥**

## शाङ्करभाष्यम्।

अभिसन्धायेति-अभिसन्धायोद्दिश्य फलं दम्भार्थमपि चैव यत् इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसं॥ १२॥

### आनन्दगिरिकृतटीका।

राजसं यज्ञं ह्यानार्थं दर्शयति अभिसन्धायेति स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थञ्च यद्यजनं क्रियते तद्यज्ञं रजसा निर्वृत्तं त्याज्यमवगच्छेत्यर्थः॥ १२॥ तामसं यज्ञं ह्यानार्थ-मेवोदाहरति विधीति॥ १३॥

### स्वामिकृतटीका।

यज्ञोऽपि त्रिविधस्तत्र सात्त्विकं यज्ञमाह अफलाकांक्षिभिरिति त्रिभिः फलाकांक्षारहितैः पुरुषैर्विधानादिष्ट आवश्यकतया विहितो यो यज्ञ इज्यते अनुष्ठीयते स सात्त्विको यज्ञः कथमिज्यते यष्टव्यमेवेति यज्ञानुष्ठानमेव कार्यं नान्यत् फलं साधनीय-मित्येवं मनः समाधायैकाग्रं कृत्वेत्यर्थः॥ ११॥

राजसं यज्ञमाह अभिसन्धायेति फलमभिसन्धाय उद्दिश्य यस्त्विज्यते यज्ञः क्रियते दम्भार्थञ्च स्वमहत्त्वख्यापनाय तं यज्ञं राजसं विद्धि॥ १२॥

## भाषा अनुवाद।

यज्ञ भी तीन प्रकार की हैं तिन के बीच में सात्विक जो यज्ञ सो तीन श्लोक से कहते हैं कि जो पुरुष फलकी आकांक्षा रहित अवश्य कर्त्तव्य है यह जानि यज्ञ करते सो सात्विक कहावते हैं औ वे मनुष्य किस कारण से यज्ञ अनुष्ठान करते इसपर कहते हैं कि यज्ञ कर्म करनाही चाहिये और कोई फल के अर्थ कर्त्तव्य नहीं है ऐसा विचारि मनको एकाग्र करके यज्ञ करते हैं॥ ११॥

राजस यज्ञ कहते हैं कि हे भरतश्रेष्ठ अर्जुन फलकी कामना पूर्वक अपने महत्व को जनावने के अर्थ जो यज्ञकी इई जाती है सो राजस यज्ञ जानो॥ १२॥

विधिहीन मसृष्टान्नं मन्त्रहीन मदक्षिणं ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥
देव द्विज गुरुप्राज्ञ पूजनं शौच मार्जवं ।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

शाङ्करभाष्यम् ।

विधिहीनमिति विधिहीनं यथाचोदितविधिविपरीतं असृष्टान्नं ब्राह्मणेभ्यो न सृष्टमन्नं यस्मिन् यज्ञे सोऽसृष्टान्नं मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनं अदक्षिणमुक्तदक्षिणारहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

अथेदानीं तपस्त्रिविधमुच्यते देवेति देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं शौच आर्जवं ऋजुत्वं ब्रह्मचर्य्यमहिंसा च शरीर निर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकारणैः कर्त्रादिभिः साध्यं शारीरन्तप उच्यते ॥ १४ ॥

आनन्दगिरिकृतटीका ।

सात्त्विकादिभावं निरूपयितुं सर्वस्य तपसः स्वरूपं त्रिविधं निरूपयति अथेति तत्र शारीरन्तपो निर्दिशति देवेति देवा ब्रह्मविष्णुशिवादयः द्विजाः पूज्यत्वात् द्विजोत्तमाः

स्वामिकृतटीका ।

तामसं यज्ञमाह विधीति विधिहीनं शास्त्रोक्तविधिशून्यं असृष्टान्नं ब्राह्मणादिभ्योऽसृष्टं न निष्पादितमन्नं यस्मिंस्तं मन्त्रैर्हीनं यथोक्तदक्षिणारहितं श्रद्धाशून्यञ्च यज्ञं तामसं परिचक्षते कथयन्ति शिष्टाः ॥ १३ ॥

भाषा अनुवाद ।

अब तामस यज्ञ कहते हैं कि विधिहीन औ असृष्टान्न कहे जो यज्ञ के अर्थ अन्न ब्राह्मण क्षत्रिय वैश्य से नहीं मिला होय सो अन्न औ मन्त्र, हीन औ दक्षिणा दानरहित होय तथा श्रद्धावर्जित यज्ञको तामस यज्ञ कहते हैं ॥ १३ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

शाङ्करभाष्यम् ।

पञ्चैते तस्य हेतव इति हि वक्ष्यति अनुद्वेगेति अनुद्वेगकरं प्राणिनां अदुःखकरं वाक्यं सत्यं प्रियं हितञ्च यत् प्रियहिते दृष्टादृष्टार्थे अनुद्वेगकरत्वादिभिर्धर्म्मैर्वाक्यं विशिष्यते विशेषणधर्म्मसमुच्चयार्थश्चशब्दः परप्रत्ययनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियाहितानुद्वेगकरत्वादीनामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्यात् यदि न तद्वाङ्मयन्तपस्तन्तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयं तपस्तं तथा प्रिय वाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्हीनस्य न वाङ्मयतपस्तन्तथाहि न वाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयत-

आनन्दगिरिकृतटीका ।

गुरवः पित्रादयः प्राज्ञाः पण्डिता विदितवेदितव्यास्तेषां पूजनं प्रणामशुश्रूषादि शौचं मृज्जलाभ्यां शरीरशोधनं आर्ज्जवमृजुत्वं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्त्व ब्रह्मचर्य्यं मैथुनासमाचरणं अहिंसा प्राणिनामपीड़नं शरीरमात्रस्य निर्वर्त्त्यत्वमस्य तपसो न सम्भवतीति मत्वा विशिनष्टि शारीरेति ॥ १४ ॥

स्वामीकृतटीका ।

तपसः सात्त्विकादिभेदं दर्शयितुं प्रथमं तावच्छारीरादिभेदेन तस्य त्रैविध्यमाह देवेत्यादि त्रिभिः तत्र शारीरमाह देवेति प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदः देवब्राह्मणादिपूजनशौचादिकञ्च शारीरं शरीरनिर्वर्त्त्यं तप उच्यते ॥ १४ ॥

भाषा अनुवाद ।

तपस्याको भी सात्त्विकादि भेद दिखानेके मानससे प्रथम शरीरादिके भेद क्रमसे त्रिविध हैं सो तीन श्लोकसे कहते हैं कि प्राज्ञ कहे गुरुजन से भिन्न और और तत्त्वज्ञानी औ ब्राह्मण तथा गुरुजन की पूजा औ शौच आदि क्रिया इन सबको शिष्ट पुरुष शरीर सम्पादित तपस्या कहते हैं ॥ १४ ॥

## शाङ्करभाष्यम् ।

यस्त्वं किं पुनस्तत्तपो यत् सत्यं वाक्यमनुद्वेगकरं प्रियं हितञ्च यत् तत् परमतपो वाङ्मयं यथा शान्तो भगवत्सस्वाध्यायं योगं वानुतिष्ठ तथा ते श्रेयोभविष्यति स्वाध्यायाभ्यसनञ्चैव यथाविधि वाङ्मयं तप उच्यते ॥ १५ ॥

### आनन्दगिरिकृतटीका ।

कथं कर्त्रादिसाध्यत्वे तपसः शरीरत्वे वा कथं कर्त्रादिसाध्यत्वमित्याशंक्याह यश्चेति सम्प्रति वाङ्मयं तपो व्यपदिशति अनुद्वेगकरमिति सत्यं यथादृष्टार्थवचनं प्रियं श्रुति-सुखं हितं परिणामपथ्यं प्रियहितयोर्विधान्तरेण विभागमाह प्रियेति कथमत्र विशेषण-विशेष्यत्वं तदाह अनुद्वेगेति विशेषणानां धर्माणामनुद्वेगकरत्वादीनां विशेषणवाक्येन समु-दितानां परस्परमपि समुच्चयद्योती चकार इत्याह विशेषणेति किमिति वाक्यमेते विशेष्यते किमिति वा तेषां मिथः समुच्चयस्तत्राह परेति यद्यपि विधायकवाक्यमात्रस्याविशेषितस्य वाङ्मयतपस्त्वानुपपत्तिस्तथापि सत्यवाक्यस्य वाक्यविशेषणान्तराभावेऽपि वाङ्मयतपस्त्व-मित्याशंक्याह तथेति तथापि प्रियवाक्यमात्रस्य तथात्वं स्यादित्याशंक्याह तथेति तथापि परिणामपथ्यंत्र वाक्यमात्रन्तथा भविष्यति नेत्याह तथा हितेति कीदृक् तर्हि तयोर्वा ङ्मयत्वमिति प्रश्नपूर्वकं निगदयति किं पुनरिति विशिष्टे वाङ्मये तपसि दृष्टान्तमाह यथेति प्राङ्मुखत्वं पवित्रपाणित्वमित्यादि विधानमनतिक्रम्य स्वाध्यायस्यावर्त्तनमपि वाङ्मये तपस्यान्तर्भवतीत्याह स्वाध्यायेति वाक् प्राचुर्येण प्रस्तुतास्मिन्निति वाङ्मयं वाक्प्रधान मित्यर्थः ॥ १५ ॥

### स्वामिकृतटीका ।

वाचिकं तप आह अनुद्वेगकरमिति उद्वेगं भयं न करोतीत्यनुद्वेगकरं वाक्यं सत्यं श्रोतुः प्रियं हितञ्च परिणामे सुखकरं स्वाध्यायमभ्यसनं वेदाभ्यासश्च वाङ्मयं वाचा निर्वर्त्यं तपः ॥ १५ ॥

## भाषा अनुवाद ।

और वचनसम्बन्धी तपस्या कहते हैं कि कोई मनुष्य जिनसे भय न होय ऐसे अनुद्वेग करने वाले वचन औ सत्य तथा श्रोताको प्रिय लगें औ परिणाम कहे अन्तको सुखदाई होंय और वेदके अभ्यास करनेवाले वचनो को भी वाङ्मय तपस्या कहते हैं ॥ १५ ॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

## शाङ्करभाष्यम् ।

मानसन्तपः मनइति मनःप्रसादो मनसःप्रशान्तिः स्वच्छतापादानं मनसः प्रसादःसौम्यत्वं यत् सौमनस्यमाहुर्मुखादिप्रसादकार्य्यान्तःकरणस्य वृत्तिः मौनं वाक्संयमोऽपि मनःसंयमपूर्व्वको भवति इति कार्य्येण कारणमुच्यते मनःसंयमो मौनमिति आत्मविनिग्रहो मनोनिरोधः सर्व्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

### आनन्दगिरिकृतटीका ।

मानसन्तपः संक्षिपति मन इति प्रशान्तिफलमेव व्यनक्ति स्वच्छतेति मनसः स्वाच्छ्यमनाकुलता नैर्म्मल्यमित्यर्थः सौमनस्यं सर्व्वेष्वो हितैषित्वमहिताचिन्तनञ्च तत्कथं गम्यते तत्राह मुखादीति तस्य स्वरूपमाह अन्तःकरणस्येति ननु मौनं वाङ्नियमनं वाङ्मये तपस्यन्तर्भवति तत्कथं मानसे तपसि व्यपदिश्यते तत्र वाचःसंयमस्य कार्य्यत्वान्मनःसंयमस्य कारणत्वात् कार्य्येण कारणग्रहणात् मानसे तपसि मौनमुक्तमित्याह वागिति यद्वा मौनं मुनिभावो मननं आत्मनो मनसो विनिग्रहो निरोधः नन्वेवं मौनस्य मनोनिग्रहस्य च मनःसंयमत्वेनैकत्वात् पौनरुक्त्यं नेत्याह सर्व्वत इति भावस्य हृदयस्य संशुद्धी रागादिमलविकलतेति व्याचष्टे परैरिति मानसं मनसः प्राधान्येन निर्वर्त्त्यमित्यर्थः ॥ १६ ॥

### श्रीधरकृतटीका ।

मानसं तप आह मन इति मनःप्रसादः स्वच्छता सौम्यत्वमक्रूरता मौनं मुनेर्भावो मननमित्यर्थः आत्मनो मनसो विनिग्रहो विषयेभ्यः प्रत्याहारः भावसंशुद्धिर्व्यवहारे मायाराहित्यमित्येतन्मानसं तपः ॥ १६ ॥

## भाषा अनुवाद ।

अब मानसिक तपस्या कहते हैं कि मनकी निर्म्मलता औ सौम्यत्व कहे अक्रूरता औ मौन कहे मुनिधर्म्म जो मनन करना आत्मविनिग्रह कहे विषयोंसे इन्द्रियोंको निग्रह जो रोकना औ भाव संशुद्धि कहे व्यवहारसे निष्कपट रहना ये सब मानसिक तपस्या स्वरूप कहे जाते हैं ॥१६॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवं ॥ १८ ॥

शाङ्करभाष्यम्।

यथोक्तं कायिकं वाचिकं मानसञ्च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधम्भवतीत्युच्यते श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत्प्रकृतं त्रिविधं त्रिःप्रकारं अधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकांक्षारहितैर्युक्तैः समाहितैर्यदीदृशन्तपस्तत् सात्त्विकं सत्त्वनिर्वृत्त परिचक्षते कथयन्ति शिष्टाः ॥ १७ ॥

सत्कारेति सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मणः इत्येवमर्थ

आनन्दगिरिकृतटीका।

त्रिविधस्य तपसो यथासम्भवं सात्त्विकादिभावेन तत् त्रैविध्यमाकांक्षाद्वारा निक्षिपति तपोकर्मिति तत्रैव अधिष्ठानं देहे वाङ्मनोभिर्निर्वर्त्यमित्यर्थः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत् ॥ १७ ॥

स्वामिकृतटीका।

तदेवं शरीरवाङ्मनोभिर्निर्वर्त्यं त्रिविधं तपो दर्शितं तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह श्रद्धयेत्यादि त्रिभिः तत् त्रिविधमपि तपः श्रेष्ठया श्रद्धया फलाकांक्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तं सात्त्विकं कथयन्ति ॥ १७ ॥

भाषा अनुवाद।

शरीर वचन मनके द्वारा तीन प्रकार तप देखाया सोई तीन प्रकार तप जो सात्त्विकादि गुणभेदसे भी तीनप्रकार है सो तीन श्लोकसे कहते हैं कि जो उत्कृष्ट श्रद्धासे फलकी कामनारहित औ एकाग्रचित्त होय मनुष्यलोग त्रिविधप्रकार करते हैं तिनको पण्डितलोग सात्त्विक तप कहते हैं ॥ १७ ॥

**मूढ़ग्राहेणात्मनो यत् पीड़या क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामस मुदाहृतम् ॥ १९ ॥**

शाङ्करभाष्यम् ।

मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्च्चनाशयितृत्वादि तदर्थञ्च तपःसत्कारमानपूजार्थं दम्भेनैव च क्रियते तपस्तदिह प्रोक्तं कथितं राजसञ्च तु कादाचित्कफलत्वेनाध्रुवं ॥ १८ ॥

मूढेति मूढग्राहेण विवेकनिश्चयेनात्मनः पीडया क्रियते तत्तपः परस्य उत्सादनार्थं विनाशार्थं वा तत्तामसन्तप उदाहृतं ॥ १९ ॥

आनन्दगिरिकृतटीका ।

राजसं तपो निर्दिशति सत्कारेति साधुकारमेव स्फोरयति साधुरिति दम्भेन चैं नास्तिक्येन केवलधर्मध्वजित्वेनेत्यर्थः तदिह प्रोक्तमस्मिन्नेव लोके फलप्रदमित्यर्थः कादाचित्कफलत्वं क्षणिकफलत्वमध्रुवमनियतमनैकान्तिकफलमिति यावत् ॥ १८ ॥

तामसन्तपः संगृह्णाति मूढेति मूढोऽत्यन्ताविवेकी तस्य ग्रहो नामाग्रहाभिनिवेशस्तेनेत्याह अविवेकेति आत्मनः स्वस्य देहादेरित्यर्थः ॥ १९ ॥

स्वामिकृतटीका ।

राजसमाह सत्कारेति सत्कारः साधुकारः साधुरयमिति तापसोऽयमित्यादिवाक् पूजा मानः अभ्युत्थानाभिवादनादि दैहिकी पूजा पूजा अर्थलाभादिः एतदर्थं दम्भेन च तपश्च क्रियते अतएव चलमनियतं अध्रुवञ्च क्षणिकं यदेवम्भूतं तपस्तदिह राजसं प्रोक्तं ॥ १८ ॥

भाषा अनुवाद ।

राजस कहते हैं कि जो सत्कार अर्थात् यह पुरुष साधु औ यह तपस्वी ऐसे प्रतिष्ठा वचनोंसे जो पूजा औ मान कहे उनको देख उठखडे होना औ प्रणाम करना आदि जो दैहिक पूजा औ पूजा कहे अर्थलाभादि इन सबके निमित्त औ अपने महत्त्वके प्रकाशके अर्थ की जाय जो अनित्य औ क्षणिकरूप तपस्या उसीको इस लोकमे शिष्ट लोग राजस तप कहते हैं ॥ १८ ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

शाङ्करभाष्यम्।

यत्त्विति यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वाऽस्य दानस्य मे भविष्यत्युद्दिष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतं ॥ २१ ॥

अदेशेति अदेशकाले अपुण्यदेशे म्लेच्छाशुचयादिसङ्कीर्णे अकालेऽपुण्यहेतुत्वेनाऽप्रख्याते संक्रान्त्यादिविशेषरहिते अपात्रेभ्यश्च मूर्खतस्करादिभ्यो

आनन्दगिरिकृतटीका।

विहितानां कर्मणां प्रमादयुक्तं वैगुण्यं कथं परिहारः स्यादित्याशङ्क्याह यज्ञेति ओमिति ब्रह्मेत्यादिश्रुतेः ओमिति तावद्ब्रह्मणो नामनिर्देशः तत्त्वमसीति श्रुतेः तदित्यपि ब्रह्मणो नामनिर्देशः सदेव सौम्येदमिति श्रुतेः सदित्यपि तस्य नामेति मत्वाह ओमिति

स्वामिकृतटीका।

राजसं दानमाह यत्त्विति कालान्तरेऽयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वा स्वर्गादिकमुद्दिश्य यत् पुनर्दानं दीयते परिक्लिष्टं चित्तक्लेशयुक्तं यथाभवत्येवंभूतं तत् दानं राजसमुदाहृतं कथितम् ॥ २१ ॥

## भाषा अनुवाद।

संक्रान्ति पर्व आदिमे और वेद शास्त्र युक्त ब्राह्मणोंको अथवा यह पात्र सकल आपदोंसे दाताकी रक्षा करै एवंभूत पात्र कहे पात्रकों जो दान दिया जाय उसीको पण्डित जन सात्त्विक दान कहते हैं ॥ २० ॥

राजस दान कहते हैं कि समयके अनुसार यह मेरा प्रत्युपकार करेगा इससे अथवा स्वर्गफलभोगके अर्थ चित्तक्लेशयुक्त कहे देते समय कष्ट होय ऐसा जो दान तिसको शिष्ट लोग राजस कहते हैं ॥ २१ ॥

ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताःपुरा २३॥

शाङ्करभाष्यम्।

देशादिसंपत्तौ वा असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तञ्च तद्दानं तामसमुदाहृतं॥ २२॥

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते ओं तत् सदिति एष निर्देशः निर्दिश्यतेऽनेनेति निर्देशः त्रिविधो नाम निर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिर्ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्म्मिताः पुरा पूर्व्वमिति॥ २३॥

आनन्दगिरिकृतटीका।

कथं निर्देशेन तेषां विधानमित्याशङ्क्याह निर्देशेति यज्ञादीनां वैगुण्यप्रतीतिकाले यथोक्तानामन्यतमोच्चारणाद्वैगुण्यासिध्यतीति भावः कर्म साद्गुण्यकारणं त्रिविधनाम स्तौति ब्राह्मणा इति॥ २२॥ यज्ञदानतपःप्रभृतीनामिति॥ २३॥

स्वामिकृतटीका।

तामसं दानमाह अदेशेति अदेशे अशुचिस्थाने अकाले अशौचादिसमये अपात्रेभ्योऽविधनटादिभ्यो यद्दानं दीयते तत् देशकालपात्रसम्पत्तावपि असत्कृतं पादप्रक्षालनादिसत्कारशून्यं अवज्ञातं पात्रतिरस्कारयुक्तं एवंभूतं तामसमुदाहृतम्॥ २२॥

नन्वेवं विचार्य्यमाणे सर्वमपि यज्ञतपोदानादि राजसतामसप्रायमेवेति व्यर्थो यज्ञादिप्रयास इत्याशङ्क्य तथाविधस्यापि सात्त्विकत्वोपपादनप्रकारं दर्शयितुमाह ओमिति ओं

भाषा अनुवाद।

अब तामस दान कहते हैं कि अदेश कहे अपवित्र स्थानमे अकाल कहे अशौचादि समयमे औ अपात्र कहे चोर लवार नाचने गावने नकल करनेवालों को जो दान अथवा देश काल विद्यावान् के रहते भी असत्कृत कहे पादप्रक्षालन आदि सत्कार रहित या अनादरसे जो दान सुपात्रको भी दिया जाय तिसको शिष्ट लोग तामस दान कहते हैं॥ २२॥

स्वामिकृतटीका।

तत्सदिति त्रिविधो ब्रह्मणः परमात्मनो निर्देशो नाम्ना व्यपदेशः स्मृतः शिष्टैः तत्र तावदोमिति त्रिष्टुब्ब्रह्मेत्यादिश्रुतिप्रसिद्धेरोमिति ब्रह्मणो नाम जगत्कारणत्वेनातिप्रसिद्धत्वात् विदुषां अपरोक्षत्वाच्च तच्छब्दोऽपि ब्रह्मणो नाम परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दोऽपि ब्रह्मणो नाम स देव सौम्येदमग्र आसीदित्यादिश्रुतेः अयं त्रिविधोऽपि नामनिर्देशो विगुणमपि सगुणं कर्तुं समर्थ इत्याशयेन स्तौति तेन त्रिविधेन ब्रह्मणो निर्देशेन ब्राह्मणाश्च वेदाश्च यज्ञाश्च पुरा सृष्ट्यादौ विहिता विधात्रा निर्मिताः सगुणीकृता इति वा यद्वा यस्मायं त्रिविधो निर्देशस्तेन परमात्मना ब्राह्मणादयः पवित्रतमाः सृष्टाश्च तस्मात्तस्यायं निर्देशोऽतिप्रशस्त इत्यर्थः॥ २३॥

## भाषा अनुवाद।

जो कहो कि ऐसा विचार करनेसे प्राय सब यज्ञ औ तप तथा दान आदि राजस औ तामस मात्र होते हैं इस कारण यज्ञ आदि कर्म्ममे यत्न करना वृथा है इस शङ्का पर पूर्वोक्त यज्ञ दान आदि बहुधा राजस तामस होनेसे भी सात्विकत्व प्रतिपादनको उपाय देखाय कर कहते हैं कि ओं तत् सत् ये जो तीन शब्द सो परमात्मा के नाम के अनुरूप निर्दिष्ट हैं इनके मध्यमे अकार उकार औ मकार का स्वरूप जो ओंकार सो ब्रह्म है यह श्रुतियोंमे प्रसिद्ध है सो ओंशब्द ब्रह्महींका नाम है और जगत्कारण हेतुसे ज्ञानीको अपरोक्षहै तत् भी ब्रह्म परमार्थ औ विद्यमानत्व साधुत्व औ प्रसस्तत्वादि प्रयुक्त और हे सौम्य इस जगत्की सृष्टिके पूर्व्व सत्स्वरूप मै था ऐसे श्रुतियोंके कहनेसे सत्शब्दभी ब्रह्महीं का नाम है और यह त्रिविध नाम कहनेसे निकृष्टको भी उत्कृष्ट करनेको नाम समर्थ है इस अभिप्रायसे प्रशंसा करते हैं कि विधाताने सृष्टिके प्रथम इस परमात्माके त्रिविध नामका उद्देशकर ब्राह्मण औ वेद औ यज्ञका निर्माण किया है अथवा जो परमात्मा का यह तीन प्रकार निर्देश किया सोई परमात्माने ब्राह्मण अति पवित्रको सृष्टि किया अर्थात् उत्पन्न किया इससे ओं तत् सत् यह कहना अतिप्रसस्त कहे अतिउत्तम है॥ २३॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

शाङ्करभाष्यम् ।

निर्देशस्तुत्यर्थमुच्यते तस्मादोमित्युदाहृत्योच्चार्य्य यज्ञदानतपःक्रियाः यज्ञादिस्वरूपाः क्रियाः प्रवर्त्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानां ॥ २४ ॥

तदिति तदित्यनभिसन्धाय तदिति ब्रह्माभिधानमुच्चार्य्य अनभिसन्धाय च कर्म्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियास्तपःक्रियाश्च यज्ञतपःक्रियाश्च दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्तन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

आनन्दगिरिकृतटीका ।

पूर्वं सर्गादौ निर्मातृत्व प्रजापतिकर्त्तृकं यस्मात् ब्राह्मणादीनां कारणं यस्मात् ब्रह्मणो निर्देशस्तस्मादित्युपसंहरति तस्मादिति ब्रह्मवादिनामित्यत्र ब्रह्मवेदः ॥ २४ ॥

स्वामिकृतटीका ।

इदानीं प्रत्येकमोङ्कारादीनां प्राशस्त्यं दर्शयिष्यन्नोंकारस्य तदेवाह तस्मादिति यस्मादेवं ब्रह्मणो निर्देशः प्रशस्तस्तस्मादोमित्युदाहृत्य तदुच्चार्य्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताश्च क्रियाः सततं सर्वदा अङ्गवैकल्येऽपि प्रकर्षेण वर्त्तन्ते सगुणा भवन्तीत्यर्थः ॥२४॥

भाषा अनुवाद ।

अब ओंकार आदि शब्दोंकी प्रशस्तता देखावनेके मनोरथमें ओंकारका प्रशस्तत्व कहते हैं कि जिस हेतु परमात्माका निर्देश इसी रूपसे प्रशस्त है इससे ओंमात्र उच्चारण पूर्वक वेदादिकृत यज्ञ दान औ तपस्या आदि शास्त्रोक्त सकल क्रिया यथावत् संपूर्ण न होनेसे अर्थात् हीन होनेसे भी अच्छीतरह गुण संपन्न सर्वाङ्गपूर्ण होती हैं ॥ २४ ॥

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

## शाङ्करभाष्यम् ।

ओं तच्छब्दयोर्विनियोग उक्तोऽथेदानीं सच्छब्दस्य विनियोगः कथ्यते सद्भाव इति सतः सद्भावे यथा अविद्यमानस्य पुत्रस्य जन्मनि तथा साधुभावे असद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते प्रशस्ते कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥

### आनन्दगिरिकृतटीका ।

ओं शब्दस्य विनियोगमुक्त्वा तच्छब्दस्य विनियोगमाह तदित्यादिना ॥ २५ ॥
इत्तमनूद्यानन्तर श्लोकतात्पर्यमाह ओं तच्छब्दयोरिति ॥ २६ ॥

### स्वामिकृतटीका ।

द्वितीयं नाम स्तौति तदिति उदाहृत्येति पूर्वस्यानुषङ्गः तदित्युदाहृत्य उच्चार्य्य शुद्धचित्तैर्मोक्षाकांक्षिभिः पुरुषैः फलाभिसन्धिमकृत्वा यज्ञाद्याः क्रियाः क्रियन्ते अतश्चित्तशोधनद्वारा फलसंकल्पत्यजनेन मुमुक्षुत्वसम्पादकत्वात्तच्छब्दनिर्देशः प्रशस्त इत्यर्थः ॥ २५ ॥

सच्छब्दस्य प्राशस्त्यमाह सद्भाव इति द्वाभ्यां सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादिम्र्ष्टोऽभित्यस्मिन्नर्थे सदित्येतत् पदं प्रयुज्यते प्रशस्ते माङ्गलिके विवाहादिकर्मणि च सदिदं कर्मेति सच्छब्दो युज्यते प्रयुज्यते सङ्गच्छत इति वा ॥ २६ ॥

## भाषा अनुवाद ।

दूसरे नामकी प्रशंसा करते हैं कि इस स्थलमे पूर्व्वोक्त ओं शब्द के साथ तत्पदका सम्बन्ध है शुद्धचित्त मुमुक्षु पुरुषोंकी अकृत फलरूप कामना ब्रह्मरूप यज्ञ आदि क्रिया ततशब्द उच्चारणपूर्व्वक की जाती हैं इसीसे चित्त शुद्धिके द्वारा फलसङ्कल्प त्यागपूर्वक मुमुक्षुत्व सम्पादकत्व हेतुसे तत्शब्दका निर्देश करना भी प्रशस्त है ॥ २५ ॥

सत्शब्द जो प्रशस्त है यह दो श्लोक से कहते हैं कि सत्भाव कहे

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते॥ २७॥

शाङ्करभाष्यम्।

यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थिति र्दाने च या स्थितिः सा च सदित्युच्यते विद्वद्भिः कर्म च एव तदर्थीयं यज्ञदानतपोर्थीयमथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत् सदित्येवाभिधीयते तदेतत् यज्ञदानतप आदि कर्म असात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं सम्पादितम्भवति॥ २७॥

आनन्दगिरिकृतटीका।

प्रकारान्तरेण सच्छब्दस्य विनियोगमाह यज्ञ इति नामत्रयोच्चारणेन साद्गुण्यं सिध्यतीति प्रकरणार्थं उपसंहरति तदेतदिति॥ २७॥

स्वामिकृतटीका।

किञ्च यज्ञ इति यज्ञादिषु या स्थितिस्तात्पर्येणावस्थानं तदपि सदित्युच्यते यस्य चैदं नामत्रयं स एव परमात्मा अर्थः फलं यस्य तत्तदर्थं कर्मपूजोपहारम्टहाङ्गणपरिमार्जनोपलेपनरङ्गमाङ्गलिकादिक्रिया तत्सिद्धये यदन्यत् कर्म क्रियते उद्यानशालिक्षेत्रधनार्जनादिविषयं तत् कर्म तदर्थीयं तच्चातिव्यवहितमपि सदित्येवाभिधीयते यस्मादेवमतिप्रशस्तमेतन्नामायं तस्मादेतत् सर्वं कर्म साद्गुण्यार्थं सङ्कीर्त्तयेदिति तात्पर्य्यार्थः अत्र चार्थवादानुपपत्त्या विधिः कल्प्यते विधेयं स्तूयते वस्त्विति न्यायात् अपरे तु प्रवर्त्तन्ते विधानोक्ताः क्रियते सोत्वकाङ्क्षिभिरित्यादिवर्त्तमानोपदेशः समिधो यजतीत्यादिवद्विधितया परिणमनीय इत्याहुस्तत् सद्भावे साधुभावे चेत्यादिषु प्राप्तार्थत्वान्न संगच्छत इति पूर्वोक्तक्रमेण विधिकल्पनैव ज्यायसी॥ २७॥

भाषा अनुवाद।

अस्तित्व औ साधुभाव कहे साधुत्व इन दोनो अर्थको सत्शब्द कहता है और हे अर्जुन प्रशस्त कहे माङ्गलिक विवाहादि कर्ममे भी यह औ सत्कर्म इन विषयोंमे सत् शब्दका प्रयोग करना योग्य है औ मङ्गलादि अर्थको भी कहता है॥ २६॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् ।
असदित्युच्यते पार्थ नच तत् प्रेत्य नो इह ॥ २८ ॥

इति श्रीभगवद्गीतायां ब्रह्मविद्यायां श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

## शाङ्करभाष्यम् ।

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं सम्पाद्यते यस्मात् अश्रद्धयेति तस्मात् अश्रद्धया हुतं हवनं कृतं दत्तञ्च ब्राह्मणेभ्योऽश्रद्धया तपस्तप्तमनुष्ठितमश्रद्धया तथाऽश्रद्धयैव कृतं यत् स्तुतिनमस्कारादि तत् सर्वमसदित्युच्यते मत्प्राप्ति-साधनमार्गवाह्यत्वात् पार्थ नच तद्बहुआयासमपि प्रेत्य फलाय नाऽपीहार्थं साधुभिर्निन्दितत्वादिति ॥ २८ ॥

इति श्रीशाङ्करभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

### आनन्दगिरिकृतटीका ।

अश्रद्धान्वितस्यापि कर्मणो नामत्रयोच्चारणादवैगुण्ये श्रद्धाप्राधान्यं न स्यादित्या-शंक्याह तत्र चेति सप्तमीभ्यां प्रकृतं यज्ञादि गृह्यते सर्वयज्ञादि सगुणमिति शेषः तस्यासत्वं साधयति मत्प्राप्तीति ऐहिकामुष्मिकं वा फलमश्रद्धितेनापि कर्मणा सम्पत्स्यते कुतोऽस्या-सत्वमित्याशङ्क्याह नचेति तस्य स्योभयविधफलाहेतुत्वे हेतुमाह साधुभि रिति निन्दन्ति हि साधवः श्रद्धारहितं कर्म अतो नैतदुभयफलौपयिकमित्यर्थः तदनेन शास्त्रानभिज्ञानामपि

## भाषा अनुवाद ।

और यज्ञ तप दानमें जो स्थिति कहे इनका तात्पर्य्य जो निज अव-स्थान है उसको भी विद्वान् जन सत् कहते हें औ परमात्माके अर्थ अ-थवा यज्ञ तप दानके अर्थ जो कर्म कियेजांवे भी सत् कहे जाते हैं जो यज्ञ दान तप आदि कर्म परमात्मा की सेवाके अर्थ औ जो कर्म सब असात्त्विक किम्वा विगुण अङ्गहीन भी होंय पर श्रद्धा पूर्वक गये किये हों औ ब्रह्मके नाम जो ओं तत् सत् इनसे युक्त किये होंय तो सगुण सात्त्विक होते हे ॥ २७

आनन्दगिरिकृतटीका ।

श्रद्धावतां श्रद्धया सात्त्विकत्वादि त्रैविध्यभाजां राजसतामसाहारादि त्यागेन सात्त्विकाहारादि सेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिसामग्री सञ्जाततत्त्वसाक्षात्कारवतां मोक्षोपपत्तिरिति स्थितं ॥२८॥

इति आनन्दगिरिकृतटीकायां सप्तदशोऽध्यायः १७ ॥

स्वामीकृतटीका ।

इदानीं सर्वकर्मसु श्रद्धयैव प्रवृत्त्यर्थमश्रद्धया कृतं सर्वं निन्दति अश्रद्धयेति अश्रद्धया कृतं हवनं दत्तं दानं तपस्तप्तं निकृष्टं तं यच्चान्यदपि कृतं तत् सर्वमसदित्युच्यते यतस्तत् प्रेत्य लोकान्तरे न फलति विगुणत्वात् नो इह नचास्मिन् लोके फलति अयशस्करत्वात् । रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः । तत्त्वज्ञानेऽधिकारी स्यादिति सप्तदशे स्थितं ॥ २८ ॥

इति स्वामिकृतटीकायां सप्तदशोऽध्यायः ॥ १७ ॥

## भाषा अनुवाद ।

अब मनुष्य श्रद्धापूर्वक कर्ममें प्रवृत्त होंय इस लिये अश्रद्धाकृत कर्मकी निन्दाकरते हैं कि अश्रद्धासे होम तप दान औ पूजा आदि कर्म जो कियेजाते हैं उनको ज्ञानी शिष्ट कहे भले लोग असत् मात्र कहते हैं क्योंकि अङ्गविकल होनेसे इन कर्मोंका फल परलोकमें भी नहीं होता है और अयश करनेवाले हैं इससे इह लोक में भी कुछ फल नहीं है तो शरीरका क्लेश औ धन की खराबी करनेसे भी क्या फल है अयश तो करके न करके भी मिलेहीगा जो इस फलकी इच्छा तुमको होय ॥ २८ ॥

इति श्रीजगन्नाथ शुक्ल विरचित मनभावनी नाम भाषाटीकायां सप्तदशोऽध्यायः ॥ १७ ॥

# श्रीमद्भगवद्गीता ।

## अष्टादशोऽध्यायः ।

---

### अर्जुन उवाच ।

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुं ।**
**त्यागस्य च हृषीकेश पृथक् केशिनिसूदन ॥ १ ॥**

शाङ्करभाष्यम् ।

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते सर्वेषु ह्यतीतेष्वध्यायेषु उक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यतेऽर्जुनस्तु सन्न्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच सन्न्यासस्येति सन्न्यासशब्दार्थस्य इत्येतद्धे महाबाहो तत्त्वन्तस्य भावस्तत्त्वं याथात्म्यमित्येतत् इच्छामि वेदितुं ज्ञातुं त्यागस्य च त्यागशब्दार्थस्येत्येतत् हृषीकेश पृथक् इतरेतरविभागं केशिनिसूदन केशिनामा कश्चित् असुरस्तन्निसूदितवान् भगवान् वासुदेवस्तेन तन्नाम्ना सम्बोध्यतेऽर्जुनेन ॥ १ ॥

आनन्दगिरिकृतटीका ।

पूर्वैरध्यायैर्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोपसंहृत्याभिध्यातुमध्यायान्तरमवतारयति सर्वस्यैवेति उपसंहृत्य वक्तव्य इति सम्बन्धः किञ्चोपनिषत्सु यतस्ततो विप्रकृतस्यार्थस्य बुद्धिसौकर्यार्थमस्मिन्नध्याये संक्षिप्ताभिधानं कर्त्तव्यमुपनिषदां गीताङ्गैकार्थत्वादित्याह सर्वश्चेति कथं सर्वोऽपि शास्त्रार्थोऽस्मिन्नध्याये संक्षिप्योपसंह्रियते तत्राह सर्वेषु हीति ननु वेदार्थस्य दर्शयितोऽत्र सञ्जिहीर्षितस्तर्हि किमिति त्यागेनैकसंन्यासयोगादिति च वेदार्थैकदेशविषयं प्रश्नप्रतिवचनमत्राह अर्जुनस्त्विति पृथगनयोस्तत्त्वं वेदितुमिच्छामीति विशेषणादपृथगर्थस्तयोरस्तीति गम्यते बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तदभावादुक्तप्रश्नोपपत्तिरिति भावः ॥ १ ॥

स्वामिकृतटीका ।

न्यासत्यागविभागेन सर्वगीतार्थसंग्रहं स्पष्टमष्टादशे प्राह परमार्थविनिर्णये अत्र च सर्वकर्माणि मनसा संन्यास्यास्ते सुखं वशी संन्यासयोगयुक्तात्मेत्यादिषु कर्मसंन्यास उपदिष्टस्तथा त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः सर्वकर्मफलत्यागं ततः कुरु यतात्मवानित्यादिषु च फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टं नच परस्परविरुद्धं सर्वज्ञः परमकारुणिको भगवानुपदिशेत् अतः कर्मसंन्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं बुभुत्सुरर्जुन उवाच संन्यासस्येति भो हृषीकेश सर्वेन्द्रियनियामक हे केशिनिसूदन केशिनाम्नो महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षितुमिच्छतोऽत्यन्तं व्यात्तमुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत्तं विदार्य्य निसूदितवानतएव हे महाबाहो इति सम्बोधनं संन्यासस्य त्यागस्य च तत्त्वं पृथग् विवेकेन वेदितुमिच्छामि ॥ १ ॥

## भाषा अनुवाद ।

अब प्रथम समग्र अष्टादश अध्यायका तात्पर्य संक्षेप से श्रीधरस्वामी कहते हैं कि भगवान् श्रीकृष्णने समग्र गीताशास्त्रका जो संग्रहार्थ सोई परमार्थ है यह निर्णय करने के अर्थ अठारहें अध्याय मे न्यास औ त्याग भिन्न भिन्न करके स्पष्ट रूप से कहा है औ सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी यह ५ अध्यायका १३ श्लोक औ शुभाशुभ फलैरेवं मोक्ष्य से कर्म बन्धनैः संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि यह ९ अध्याय का २८ श्लोक औ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः यह ४ अध्याय का २० श्लोक औ सर्वफलत्यागं ततः कुरु यतात्मवान् यह १२ अध्याय का ११ श्लोक इनसब श्लोकोंसे औरऔर अध्यायमे भी तीन तीन श्लोकों से फलमात्र का त्यागकरके निष्काम समस्त कर्म करने का उपदेश दिया है परन्तु परम करुणामय सर्वज्ञ जो भगवान् श्रीकृष्ण सो परस्पर विरुद्ध वचनका कभीभी उपदेश नकरैंगे इसीसे कर्मों के त्याग औ के करने के विषय मे जिस प्रकार से विरोध न पडे सोई जानने की इच्छा करि के अर्जुन कहते हैं कि हे हृषीकेश अर्थात् इन्द्रियों के नियामक प्रवर्त्तक औ हे केशिनिषूदन केशीनाम दैत्य व्रजलीला के समै अश्वका रूप धारण कर आया तौं भगवान् उसके मुखसे अपना बायां हाथडाल ककसी

## श्रीभगवानुवाच ।

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

### शाङ्करभाष्यम् ।

तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्याये-ष्वतोऽर्जुनाय पृष्टवते तन्निर्णयाय भगवानुवाच काम्येति काम्यानां अश्व-मेधादीनां कर्मणां न्यासम्परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्त-स्यानुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति नित्यनैमित्तिकानामनुष्ठीय-मानानां सर्वकर्मणामात्मसम्बन्धितया प्राप्तस्य फलस्य त्यागः सर्वकर्मफल त्यागः तमाहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः ॥ २ ॥

### आनन्दगिरिकृतटीका ।

ननु पूर्वेष्वध्यायेषु तत्र सन्न्यासत्यागयोरुक्तत्वात् किमिति पुनस्तौ पृच्छ्येते तत्राने तदयो-गात् तत्राह तत्र तत्रेति न निर्लुण्ठितार्थौ न निकृष्टार्थौ न विविक्तार्थावित्यर्थः बुभुत्सया प्रश्नस्य प्रवृत्तत्वात् प्रष्टुरभिप्रायं प्रश्नेन प्रतिपद्य भगवानुत्तरमुक्तवानित्याह अत इति पक्ष-द्वयोपन्यासेन सन्न्यासत्यागशब्दयोरर्थभेदं कथयति काम्यानामिति ॥ २ ॥

### स्वामिकृतटीका ।

अत्रोत्तरं श्रीभगवानुवाच काम्यानामिति काम्यानां पुत्रकामो यजेत स्वर्गकामो यजेते-त्यादिकामोपबन्धेन विहितानां कर्मणां न्यासं परित्यागं सन्न्यासं कवयो विदुः सम्यक्फलैः सह कर्मणामपि न्यासं सन्न्यासं पण्डिता जानन्तीत्यर्थः सर्वेषां काम्यानां नित्यनैमित्ति-कानां च कर्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणा निपुणाः न तु स्वरूपतः कर्मत्यागं ननु नित्यनैमित्तिकानां फलाश्रवणादविद्यमानस्य फलस्य कथं त्यागःस्यात् नहि वन्ध्यायाः पुत्रत्यागः संभवति उच्यते यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् अहरहः सन्ध्यामुपा-

### भाषा अनुवाद ।

के समान चीरके डालदिया था सोई कहा कि हे महाबाहो श्रीकृष्ण सन्न्यास औ त्यागशब्द का तत्त्व अर्थ मैं भिन्न भिन्न कर के जाना चाहताहूं सो दयालु आप दया कर के कहिये ॥ १ ॥

स्वामिकृतटीका ।

सीत यावज्जीवमग्निहोत्रं जुहोतीत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्त्तयितुमशक्नुवन् विधिर्विश्वजिता यजेतेत्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव नचातीवगुरुमतश्रद्धया स्वसिद्धिरेव विधेः प्रयोजनं मन्तव्यं पुरुषप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात् श्रूयते च नित्यादावपि परं सर्वे एते पुण्यलोका भवन्तीति कर्मणा पितृलोक इति धर्मेण पापमपनुदतीत्यादिषु तस्माद्युक्तमुक्तं सर्वं कर्मफलत्यागं प्राहुस्त्यागं विचक्षणा इति ननु फलत्यागे पुनरतिनिष्फलेषु कर्मसु प्रवृत्तिरेव न स्यात् तन्न सर्वेषां कर्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात् तथाच श्रुतिः तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति ततश्च श्रुतिपदोक्तं सर्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्वकर्मानुष्ठानं घटत एव विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्तदेहाद्यभिमानतया बुद्धेः प्रत्यक् प्रवणता तावत्पर्यन्तञ्च सत्त्वशुद्ध्यर्थं ज्ञानविरुद्धं यथोचितमावश्यकं कर्म कुर्वतस्तत्फलत्याग एव कर्मत्यागो नाम न स्वरूपेण तथाच श्रुतिः कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति ततः परन्तु सर्वकर्मनिवृत्तिः स्वत एव भवति तदुक्तं नैष्कर्म्यसिद्धौ प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव उक्तञ्च भगवता यस्त्वात्मरतिरेव स्यादित्यादि वशिष्ठेन चोक्तं न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसाविति ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा तदुक्तं श्रीभागवते तावत् कर्माणि कुर्वीत न निर्विद्येत यावता मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायते ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः सलिङ्गानाश्रमांस्त्यक्त्वा चरेद्विधिगोचर इत्यादि अलमतिप्रसङ्गेन प्रकृतमनुसरामः अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्मत्याग इति ॥ २ ॥

## भाषा अनुवाद ।

**इस अर्जुन की प्रश्नका उत्तर भगवान् कहते हैं कि देखो पुत्रकी कामना करिके पुत्रइष्टि यज्ञ करे औ स्वर्गकी कामना करि अश्वमेध यज्ञ करे तथा औरऔर कामना करि जो जो कर्म विहित हैं ऐसे जो काम्य कर्म तिन सब के परित्याग करने को भी पण्डित लोग संन्यास जानते हैं अर्थात् फलसहित सकल कर्म के त्याग को संन्यास ज्ञान करते हैं और जितने कर्म अकर्म कहे कुत्सित् कर्म औ नित्य नैमित्तिक कर्मों के फलमात्र त्याग को विचक्षण कहे निपुण लोग त्याग कहते हैं**

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३॥**

### शाङ्करभाष्यम्।

यदि काम्यकर्मपरित्यागः फलपरित्यागो वाऽर्थो वक्तव्यः सर्वथा परित्यागमात्रः सन्यासत्यागशब्दयोरेकोऽर्थः स्यात् तद्वटपटशब्दादिव जात्यन्तरभूतार्थौ ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्यागः यथा वन्ध्यायाः पुत्रत्यागो नैष दोषः नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात् वक्ष्यति भगवान् अनिष्टमिति न तु सन्यासिनामेव हि केवलं कर्मफलासम्बन्धं दर्शयन् नसन्यासिनां नित्यकर्मफलप्राप्तिर्भवत्यत्यागिनां प्रेत्येति दर्शयति त्याज्यं दोषेति त्याज्यन्त्यक्तव्यं दोषवत् दोषोऽस्यास्तीति दोषवत् किं तत् कर्मबन्धहेतुत्वात् सर्वमेव अथवा दोषो

### आनन्दगिरिकृतटीका।

तद् किमिदानीं संन्यासत्यागशब्दयो रात्यन्तिकं भिन्नार्थत्वन्तथाच प्रसिद्धिविरोधः स्यादित्याशंक्यावान्तरभेदेऽपि नात्यन्तिकभेदोऽस्तीत्याह यदीति पुत्राभावाद् वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तिककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते नन्विति नित्यनैमित्तिककर्मफलस्य वन्ध्यापुत्रसादृश्याभावात्तत्त्यागसंभवादुक्तस्त्यागशब्दार्थः सम्भवतीति समाधत्ते नैष दोष इति भगवता तेषां फलवत्त्वमिष्टमित्यत्र वाक्यशेषमनु-

### भाषा अनुवाद।

परन्तु विचार से तो कर्मत्याग करने को त्याग नहीं कहते हैं फलका त्याग वत्तु त्याग होसके है क्योंकि बहुतेरे कर्म ऐसे हैं कि जिनका शरीर रहते त्याग नहीं होसकता है तो शास्त्रोक्त कर्म नित्यनैमित्तिक उपासना आदि जिन से बुद्धि की शुद्धि औ ज्ञानकी वृद्धि तथा योग्यता होती है उनका त्याग लोक विरुद्ध अर्थात् संसार की अवस्था मे अनुचित है परन्तु जिसको तत्वज्ञान नहीं भया है उसको कर्मफल के त्याग करने ही को त्याग जानो और जिसको तत्वज्ञान है उसीको समस्त कर्मका संन्यास होसता और उचित है यह भगवान्ने अर्जुनसे कहा॥ २॥

शाङ्करभाष्यम् ।

यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डिताः सांख्यादिदृष्टिमाश्रिताः अधिकृतानान्तु कर्म्मिणामपीति तत्रैव यज्ञदानतपः कर्म न त्याज्यमिति चापरे कर्म्मिण एवाधिकृतास्तानपेक्ष्यैते विकल्पाः नतु ज्ञाननिष्ठान् व्युत्थायिनः सन्यासिनोऽपेक्ष्य ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्ता इति कर्माधिकारादपावृत्ता ये तान् प्रतिविहिता चिन्ता नतु कर्मयोगेन योगिनामिति अधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति न तेषां मोहनिमित्तदुःखनिमित्तत्यागानुपपत्तेर्न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्ति इच्छादीनां चेत्रधर्मत्वेनैव दर्शितत्वात् अतस्ते न कायक्लेश दुःखभयात् कर्म परित्यजन्ति नापि ते कर्माण्यात्मनि पश्यन्ति ये न नियतं कर्म मोहात् परित्यजेयु र्गुणानां कर्मैव किञ्चित्करोमीति हि ते सन्यस्यन्ति सर्वकर्माणि मनसा सन्यस्येत्यादिभिर्हि तत्त्व-

आनन्दगिरिकृतटीका ।

कूलयति वक्ष्यतीति तर्हि संन्यासिनामसंन्यासिनाञ्च नित्याद्यनुष्ठायिनामविशेषेण तत् फलं स्यादिति चेन्नैवेत्याह नत्विति वक्ष्यतीत्यनुकर्षणञ्चकारार्थः प्रसक्तस्य वचसोऽर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति संन्यासिनामिति काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिलाषादृते कर्त्तव्यानीत्युक्तं पक्षं प्रतिपक्षनिरासेन दृढयितुं विप्रतिपत्तिमाह त्याज्यमिति कर्मणः सर्वस्य दोषवत्त्वे हेतुमाह बन्धेति दोषवदित्येतद्दृष्टान्तत्वेन व्याचष्टे अथवेति कर्मण्यनधिकृतानामकर्म्मिणामेव कर्म त्याज्यं कर्म्मिणान्तत्त्यागे प्रत्यवायादित्याशंक्याह अधिकृतानामिति नहि तेषामपि कर्म त्यजतां प्रत्यवायो हिंसादियुक्तस्य कर्मणोऽनुष्ठाने परं प्रत्यवायादिति भावः सांख्यादिपक्षसमाप्त्यर्थापितिशब्दः मीमांसकपक्षमाह तत्रैवेति कर्माधिकृतेष्वेवेति यावत् कर्म नित्यनैमित्तिकञ्च काम्यानां कर्मणामित्यारभ्य स्लोकाभ्यां कर्म्मिणोऽधिकृतानधिकृतांश्चापेक्ष्य दर्शितविकल्पानां प्रवृत्तिरित्याशंक्याह कर्म्मिण इति एवकारव्यवच्छेद्यमाह नत्विति तदेव स्फुटयति ज्ञानेति कर्माधिकृतानां ज्ञाननिष्ठातोविभक्तनिष्ठावत्त्वेन पूर्वोक्तानामपि शास्त्रार्थोपसंहारे पुनर्विचार्यत्ववज्ज्ञातनिष्ठानामपि विचार्यत्वसम्भावितत्वमिति शङ्कते नन्विति सांख्यानां परमार्थज्ञाननिष्ठानां नात्र विचार्यते उत्तरमाह न तेषामिति ननु तेषामपि स्वात्मनि क्लेशदुःखादि पश्यतान्तद्दुरोभेन राजसकर्मत्याग-

शाङ्करभाष्यम् ।

विदा संन्यासप्रकार उक्तस्तस्मात्त्वेऽधिकृताः कर्मण्यनात्मविदो येषाञ्च मोहात् त्यागः सम्भवति कायक्लेशभयाच्च त एव तामसा स्त्यागिनो राजसाश्चेति निन्द्यते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं सर्वारम्भपरित्यागी मौना सन्तुष्टो येन केनचिदनिकेतः स्थिरमतिरिति परमार्थसंन्यासिनो विशेषितत्वात् वक्ष्यति च ज्ञानस्य या परा निष्ठेति तस्मात् ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते न मुख्यः सर्वकर्मसंन्यासः सर्वकर्मसंन्यासासम्भवे च नहि देहभृतेति हेतुवचनान्मुख्य एवेति चेन्न हेतुवचनस्य स्तुत्यर्थत्वात् यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तं अर्जुनं प्रति विधानात् तथेदमपि नहि देहभृता शक्यमिति

आनन्दगिरिकृतटीका ।

सिद्धेर्विचार्यत्वं नेत्याह न कार्येति तत्र चेताध्यायोक्तं हेतुं करोति इच्छादीनामिति स्वात्मनि सांख्यादीनां क्लेशाद्यप्रतिपत्तौ फलितमाह अत इति ननु तेषां क्लेशाद्यदर्शनेऽपि स्वात्मनि कर्माणि पश्यतान्तस्त्यागो युक्तस्तेषां कायक्लेशादिकरत्वाच्चेत्याह नापीति अज्ञानान्मोहमाहात्म्यात् नियतमपि कर्म त्यक्तुं शक्यं न तत्त्वविदां स्वात्मनि कर्मादर्शने तत्त्यागे हेत्वभावादि मत्वाह मोहादिति कथं तर्हि तेषामात्मनि कर्माण्यपश्यतां प्राप्त्यभावे तत्त्यागः सन्न्यासत्वाह गुणानामिति अविवेकप्राप्तानां कर्मणां त्यागस्तत्त्वविदामित्युक्तं स्वारस्यप्राप्तप्रतिषेधं मत्वादिशति सर्वेति तत्त्वविदामत्वाविचार्यत्वे फलितमाह तस्मादिति येनात्मविदस्त एवेत्युत्तरत्र सम्बन्धः कर्मण्यधिकृतानामनात्मविदां कर्मत्यागसम्भावनां दर्शयति येषाञ्चेति तन्निन्दा कृतोपयुक्तेत्याशङ्क्याह कर्मिणामिति किञ्च परमार्थसन्न्यासिनां प्रशस्तत्वोपलम्भान्न निन्दार्हत्वमित्याह सर्वेति किञ्चात्रापि सिद्धिं प्राप्तो यथेत्यादिना ज्ञाननिष्ठाया वक्ष्यमाणत्वात्तद्वता नेह विचार्यतेत्याह वक्ष्यतीति कर्माधिकृतानामेवात्र विवक्षितत्वम्च ज्ञाननिष्ठानामित्युपसंहरति तस्मादिति ननु सन्न्यासशब्देन सर्वकर्मसन्न्यासस्य प्राप्तत्वात्तथाविधसंन्यासिनामिह विवक्षितत्वं प्रतिभाति तत्राह कर्मेति सन्न्यासशब्देन मुख्यस्यैव सन्न्यासस्य ग्रहणं गौणमुख्ययोर्मुख्ये सम्प्रत्ययादन्यथा तदसम्भवे हेतूक्तिवैयर्थ्यादप्राप्तप्रतिषेधादिति शंकते सर्वेति नेदं हेतुवचनं सर्वकर्मसन्न्यासासम्भवसाधकं कर्मफलत्यागस्तुतिपरत्वादिति परिहरति नेत्यादिना एतदेव दृष्टान्तेन स्पष्टयति

## शाङ्करभाष्यम् ।

कर्मफलत्यागस्तुत्यर्थं न सर्वाणि कर्माणि मनसा संन्यस्य नैव कुर्वन्नकारयन्नास्ते इत्यस्य पक्षस्याऽपवादः केनचिद्दर्शयितुं शक्यः तस्मात् कर्मस्वधिकृतान् प्रत्येवैष संन्यासत्यागविकल्पः ये तु परमार्थदर्शिनः सांख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हास्तथोपपादितमस्माभिर्वेदाविनाशिनमित्यस्मिन् प्रदेशे तृतीयादौ च ॥ ३ ॥

### आनन्दगिरिकृतटीका ।

यथेति दृष्टान्तेऽपि यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याह यथोक्तेति नहि फलत्यागादेव ज्ञानं विना मुक्तिर्युक्ता मुक्तेर्ज्ञानैकाधीनत्वसाधकश्रुतिस्मृतिविरोधादद्वेष्टेत्यादिना चानन्तरमेव ज्ञानसाधनविधानानर्थक्यात् त्यागस्तुतिरेवात्र युक्तेत्यर्थः दृष्टान्तगतमर्थं दार्ष्टान्तिके योजयति तथेति प्रागुक्तपक्षापवादविवक्षया हेतूक्तेर्मुख्यार्थत्वमेव किं न स्यादित्याशङ्क्य तदपवादे हेत्वभावान्मैवमित्याह न सर्वेति नचेयमेव हेतूक्तिस्तदपवादिकान्यथासिद्धेरुक्तत्वादिति भावः मुख्यसंन्यासापवादासम्भवे संन्यासत्यागविकल्पस्य कथं सावकाशतेत्याशङ्क्याह तस्मादिति ज्ञाननिष्ठान् प्रत्युक्तविकल्पानुपपत्तौ कुत्र तेषामधिकारस्तत्राह ये त्विति संन्यासिनां विकल्पानर्हत्वेन ज्ञाननिष्ठायामेवाधिकारस्य भूयः सुप्रदेशेषु साधितत्वाच्च साधनीयत्वापेक्षेत्याह तथेति ॥ ३ ॥

### स्वामिकृतटीका ।

त्याज्यमिति दोषवत् हिंसादिदोषवत्त्वेन बन्धकमिति हेतोः सर्वमपि कर्म त्याज्यमित्येके सांख्याः प्राहुर्मनीषिण इति अस्यायं भावः मा हिंस्यात् सर्वा भूतानीति निषेधः पुरुषस्यानर्थहेतुर्हिंसेत्याह अग्नीषोमीयं पशुमालभेतेत्यादि प्राकरणिको विधिस्तु हिंसायाः क्रतूपकारकत्वमाह अतो भिन्नविषयत्वेन सामान्यविशेषन्यायागोचरत्वात् क्रतुसाध्येषु सर्वेष्वपि कर्मसु हिंसादेः सम्भवात् सर्वमपि कर्म त्याज्यमेवेति तदुक्तं दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्त इति अपरे तु मीमांसका यज्ञादिकं कर्म न त्याज्यमेवेति प्राहुः अयं भावः क्रत्वर्थापि सतीयं हिंसा पुरुषेण कर्त्तव्या सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव तथाहि विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यस्य तल्लक्षणत्वात्तच्छेषस्य न त्वेवं निषेधस्य तादर्थ्यमपेक्षते प्राप्तिमात्रापेक्षकत्वात् अन्यथा अज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात् तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषेण बाधा नास्ति दोषवत्त्वं अतो नित्यं यज्ञादि कर्म न त्याज्यमिति ॥ ३ ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्त्तितः ॥ ४ ॥

शाङ्करभाष्यम् ।

तत्र तेषु विकल्पभेदेषु निश्चयमिति निश्चयं शृणु अवधारय मे मम वचनात् तत्र त्यागे त्यागसंन्यासविकल्पे यथा दर्शिते भरतसत्तम भरतानां साधुतमत्यागो हि, त्यागसंन्यासशब्दवाच्यो हि योऽर्थः स एक एवेत्यभिप्रेत्याह त्यागोहीति पुरुषव्याघ्र त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैः संप्रकीर्त्तितः शास्त्रेषु सम्यक् कथितः यस्मात्तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य त्रिविधः सम्भवति न परमार्थदर्शिन इत्ययमर्थो दुर्ज्ञानस्तस्मात् अत्र तत्त्वंनान्यो वक्तुं समर्थस्तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं मे मम शृणु ॥ ४ ॥

भाषा अनुवाद ।

एतदेव मतान्तरनिरासेन द्रढीकर्त्तुं मतभेदं दर्शयति इसीको दृढ़करने की इच्छासे मतभेदको देखावते हैं कि हिंसादि कर्म दोषयुक्त औ अनर्थके हेतुसे बन्धनस्वरूप हैं इसलिये सब कर्मका त्याग करना उचित यह सांख्यमतवाले विवेकी माहिंस्यात्सर्वभूतानि इससे कहते हैं और अग्नीषोमीयं पशु मालभेत इस श्रुति से अग्निष्टोम यज्ञ मे पशुहिंसा को यज्ञक्रिया का अङ्ग विधान किया है और सकल कर्मों के करने मे जीव हिंसा ज्ञान अज्ञान पूर्वक होती ही है इससे कर्ममात्रका त्याग कहा है औ कर्मकाण्डी मीमांसामतवाले अग्नीषोमीयं पशुमालभेत् इस विधि से कहते हैं कि यज्ञ कर्म मे हिंसा हिंसा नहीं है तो करनीही चाये औ यज्ञ छोड कर हिंसा करने से पुरुष को पाप होता है इस अभिप्राय पर भगवान् कहते हैं कि कोई बुद्धिमान् तो कहते हैं कि दोषवत् कहे दोषयुक्त कर्मका त्याग अवश्य करना चाहिये औ कोई यज्ञदान तप कर्मका त्याग नहीं कहते, हैं क्योंकि विधिकृत हिंसा से दोष नहीं होता है परन्तु अहिंसा परम धर्म है ॥ ३ ॥

यज्ञदानतपःकर्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

शाङ्करभाष्यम् ।

कः पुनरसौ निश्चय इत्याह यज्ञ इति यज्ञो दानन्तप इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं कार्यं करणीयमेव तत् यस्मात् यज्ञो दानं तप-

आनन्दगिरिकृतटीका

कर्माधिकृतान् प्रत्येवोक्तविकल्पप्रस्तावमपि कुतो निर्द्धारणसिद्धिस्तत्राह तत्रेति तमेव निश्चयं दर्शयितुमादौ त्यागगतमवान्तरविभागमाह त्यागो हीति ननु त्यागसंन्यासयोरुभयो-रपि प्रकृतत्वाविशेषे त्यागस्यैवावान्तरविभागाभिधाने सन्न्यासस्योपेक्षितत्वमापद्येत नेत्याह त्यागो हीति सात्त्विको राजसस्तामसश्चेत्युक्तोऽर्थस्त्रैविध्येऽपि स्वयमेव निश्चयसम्भवोक्ति-मत्र भागवते न निश्चयेनेत्याशङ्क्याह यस्मादिति भगवतोऽन्येनोक्तविभागे तत्त्वानिश्चया-द्भागवतनिश्चयस्य श्रोतव्यतेति निगमयति तस्मादिति ॥ ४ ॥

स्वामिकृतटीका ।

एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह निश्चयं शृणु इति तत्रैवं विप्रतिपत्तौ त्यागे निश्चयं मे वचनाच्छृणु त्यागस्य लोकप्रसिद्धत्वात् किमत्र श्रोतव्यमिति मावमंस्था इत्याह हे पुरुषव्याघ्र पुरुषश्रेष्ठ त्यागो हि दुर्बोधः हि यस्मादयं कर्मत्यागस्तत्त्वविद्भिस्ताम-सादिभेदेन त्रिविधः सम्यक्विवेकेन प्रकीर्त्तितः त्रैविध्यञ्च नियतस्य तु संन्यासः कर्मण इत्यादिना वक्ष्यति ॥ ४ ॥

भाषा अनुवाद ।

इस प्रकारसे अन्यकों मत कहि कर अब अपने मतके कहने की इच्छासे भगवान् कहते हैं कि हे भरतसत्तम भरतवंशी अर्जुन इस पूर्वोक्त परस्पर विरुद्ध मत के विषयमें निश्चय रूप जो मेरे वचन सो सुनो और त्याग की लोकमें प्रसिद्धि है तो उसके विषयमें और क्या हम सुनें ऐसा अनादर न करना यही कहते हैं कि हे पुरुषव्याघ्र कहे पुरुषश्रेष्ठ अर्जुन त्याग पदार्थ बड़ा कठिन औ दुर्बोध है जिस हेतु इस काम्य कर्मका त्याग तत्त्वदर्शी लोगोंने अच्छीतरहसे विचार कर तामसादि भेद से त्रिविध कहे तीन प्रकार कहा है सो त्यागविषयक तीन प्रकार इसी अध्याय के सतयें श्लोक से कहेंगे कि नियतस्य तु संन्यास इति ॥ ४ ॥

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

शाङ्करभाष्यम्।

त्रीव पावनानि विशुद्धिकारणानि मनीषिणां फलानभिसन्धीनामित्येतत् ॥ ५ ॥

एतान्यपीति एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि सङ्गमासक्तिन्तेषु त्यक्त्वा फलानि च तेषां परित्यज्य कर्त्तव्यानीति अनुष्ठेयानीति मे मम निश्चितं मतमुत्तमं निश्चयं शृणु मे तत्रेति प्रतिज्ञाय पावनत्वं च सहेतुमुक्त्वा एतान्यपि कर्माणि कर्त्तव्यानीत्येतन्निश्चितं मतं अनुत्तममिति प्रतिज्ञातार्थोपसंहार एव नापूर्वार्थं वचनमेतान्यपीति प्रकृतसन्निकृष्टार्थतोपपत्तेः सासङ्गस्य फलार्थिनो बन्धहेतून्येतान्यपि कर्माणि मुमुक्षोः कर्त्तव्यानीति अपिशब्दस्यार्थः न त्वन्यानि कर्माण्यपेक्ष्यैतान्यपीत्युच्यन्ते अन्ये वर्णयन्ति नित्यानां कर्मणां फलाभावात् सङ्गं त्यक्त्वा फलानि

आनन्दगिरिकृतटीका।

तमेव भगवतो निश्चयं विशेषतो निर्द्धारयितुं प्रश्नपूर्वकमनन्तरश्लोकप्रवृत्तिं दर्शयति कः पुनरिति यज्ञादीनां कर्त्तव्यत्वे हेतुमाह यज्ञ इति न केवलं न त्याज्यं किन्तु कर्त्तव्यमेवेत्याह कार्यमिति प्रतिज्ञामेवं विभज्य हेतुं विभजते कस्मादिति ॥ ५ ॥

स्वामिकृतटीका।

प्रथमं तावन्निश्चयमाह यज्ञेति द्वाभ्यां मनीषिणां विवेकिनां पावनानि चित्तशुद्धिकराणि ॥ ५ ॥

भाषा अनुवाद।

अब प्रथम अपने निश्चित वचन को दो श्लोकसे कहते हैं कि यज्ञ दान औ तप रूप कर्म त्याग करने योग नहीं हैं वरन अवश्यही कर्त्तव्य हैं क्योंकि ये यज्ञ दान यप पूजन आदि सत्कर्म विवेकी पुरुषों को पावन करते हैं अर्थात् चित्त के शुद्धि करने वाले हैं ॥ ५ ॥

## शाङ्करभाष्यम्।

चेति नोपपद्यते एतान्यपीति यानि काम्यानि कर्माणि नित्येभ्योऽन्यानि एतानि अपि कर्त्तव्यानि किमुत यज्ञदानतपांसि नित्यानि इति तदसत् नित्यानामपि कर्मणां फलवत्त्वस्योपपादितत्वात् यज्ञो दानं तपश्चैव पावनानीत्यादिवचनेन नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः दूरेण ह्यवरं कर्मेति च निन्दितत्वात् यज्ञार्थात् कर्मणोऽन्यत्रेति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात् त्रैगुण्यविषया वेदास्त्रैविद्या मां सोमपाः क्षीणे पुण्ये मर्त्यलोकं विशन्तीति च दूरव्यवहितत्वाच्च न काम्येष्वेतान्यपीति व्यपदेशः ॥ ६ ॥

### आनन्दगिरिकृतटीका।

प्रतिज्ञातमर्थमुपसंहरति एतान्यपीति उपसंहारश्लोकाक्षराणि व्याकरोति एतानीत्यादिना अक्षरार्थमुक्त्वा तात्पर्यार्थमाह निश्चयमिति प्रकृतार्थोपसंहारे गमकमाह एतान्यपीति अपिशब्दस्य विवक्षितमर्थं दर्शयति साशङ्कयेति व्यावर्त्तं कीर्त्तयति नत्विति एतान्यपीत्यादिवाक्यं न नित्यकर्मविषयमिति मतमुपन्यस्यति अन्य इति न चेदिदं नित्यकर्मविषयं तर्हि कुत्राशंक्य वाक्यमवतार्य व्याकरोति एतानीत्यादिना नित्यानामफलत्वमुपेत्य यच्चोद्यं तदयुक्तमिति दूषयति तदसदिति यत्तु काम्यान्यपि कर्त्तव्यानीति तन्निरस्यति नित्यान्यपीति किञ्च काम्यानां भगवता निन्दितत्वाच्च तेषु मुमुक्षोरनुष्ठानमित्याह दूरेणेति किञ्च मुमुक्षोरपेक्षितमोक्षापेक्षया विरुद्धफलवत्त्वात् काम्यकर्मणां च तेषु तस्यानुष्ठानमित्याह यज्ञार्थादिति काम्यानां बन्धहेतुत्वं निश्चितमित्यत्रैव पूर्वोत्तरवाक्यानुकूल्यं दर्शयति त्रैगुण्येति किञ्च पूर्वश्लोके यज्ञादिनित्यकर्मणां प्रकृतत्वादेतच्छब्देन सन्निहितवाचिना परामर्शात् काम्यकर्मणाञ्च काम्यानां कर्मणामिति व्यवहितानां सन्निहितपरामर्शकैतच्छब्दाविषयत्वाच्च काम्यकर्मस्वेतान्यपीति व्यपदेशमर्हन्तीत्याह दूरेति ॥ ६ ॥

### स्वामिकृतटीका।

येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तत्प्रकारं दर्शयन्नाह एतान्यपीति यानि यज्ञादीनि कर्माणि मया पावनानीत्युक्तान्येतान्यप्येवं कर्त्तव्यानि कथं सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराधीनतया कर्त्तव्यानि फलानि च त्यक्त्वा कर्त्तव्यानीति मे मतं निश्चितं अत एवोत्तमं ॥ ६ ॥

**नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥ ७॥**

शाङ्करभाष्यम् ।

तस्मादज्ञस्याधिकृतस्य मुमुक्षोः नियतस्येति नियतस्य तु नित्यस्य संन्यासः परित्यागः कर्म्मणोपपद्यते अज्ञस्य पावनत्वस्येष्टत्वात् मोहादज्ञानात्तस्य नियतस्य परित्यागो नियतञ्चावश्यं कर्त्तव्यं त्यजते चेति विप्रतिषिद्धमतो मोहनिमित्तः परित्यागस्तामसः परिकीर्त्तितो मोहश्च तम इति ॥ ७ ॥

आनन्दगिरिकृतटीका ।

नित्यकर्मणामवश्यकर्त्तव्यत्वमुक्तमुपजीव्यापेक्षितं पूरयन्ननन्तरश्लोकमवतारयति तस्मादिति ननु कश्चिन्नियतमपि कर्म त्यजन्नुपलभ्यते तत्राह मोहादिति अज्ञानं पावनत्वापरिज्ञानं अज्ञस्य नित्यकर्मत्यागो मोहादित्येतदुपपादयति नियतञ्चेति नित्यकर्मत्यागस्य मोहकृतत्वे कुतस्तामसत्वमित्याशङ्क्याह मोहश्चेति ॥ ७ ॥

स्वामिकृतटीका ।

प्रतिज्ञातं त्यागस्य त्रैविध्यमिदानीं दर्शयति नियतस्येति त्रिभिः काम्यस्य कर्मणो बन्धकत्वात् सन्न्यासो युक्तः नियतस्य तु नित्यस्य पुनः कर्मणः सन्न्यासस्त्यागो नोपपद्यते सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात् अतस्तस्य परित्याग उपादेयत्वेऽपि त्याज्यमित्येवं लक्षणान्मोहादेव भवेत् स च मोहस्तामसत्वात्तामसः परिकीर्त्तितः ॥ ७ ॥

भाषा अनुवाद ।

जिस प्रकार से कियेगये कर्म विवेकी जनों के चित्त को शुद्ध करते हैं उसी प्रकार से इन कर्मोंका अनुष्ठान देखावते हुये कहते हैं कि हे पार्थ अर्जुन सङ्ग कहे कर्तृत्वाभिनिवेश अर्थात् हम कर्त्ता इस कर्म्म को करते हैं इस अहङ्कार को छोड़कर केवल ईश्वर के आधीन रूप से कर्म्मका अनुष्ठान करना उचित है और फल की कामना को भी त्याग करके जो कर्म का करना है इतनाही हमारा नियत अभिमत सिद्धान्त है इसी से वह कर्म उत्तम हैं यह भगवान् अर्जुन से कहा है ॥ ६ ॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।**
**स कृत्वा राजसं त्यागं नैवत्यागफलं लभेत् ॥ ८ ॥**

शाङ्करभाष्यम्।

किञ्च दुःखमिति दुःखमित्येव यत् कर्म कायक्लेशभयात् शरीरदुःख भयात्त्यजेत् स कृत्वा राजसं रजोनिर्वर्त्यं त्यागं नैव त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं नलभेन्नैव लभते ॥ ८ ॥

आनन्दगिरिकृतटीका।

इतश्च नित्यकर्मत्यागो नाज्ञस्य सम्भवतीत्याह किञ्चेति ननु मोक्षं विनैव दुःखात्मकं कर्म कायक्लेशभयात्त्यजति करणानि हि कार्यं जनयन्ति श्राम्यन्ति तथाच न तत्त्यागस्तामसो युक्तस्तत्राह दुःखमित्येवेति यत् कर्म दुःखात्मकमशक्यसाध्यमित्येवालोच्य तच्चिन्तेर्देहेन्द्रियाणाञ्च क्लेशात्मनो भयात्त्यजति स तत्त्यक्त्वा रजोनिमित्तं त्यागं कृत्वापि न तत् फलं मोक्षं लभते किन्तु कृतैव राजसेन त्यागेन तदनुरूप नरकं प्रतिपद्यतेत्याह दुःखमित्येवेत्यादिना कर्मत्यागस्तामसो राजसश्चेति द्विविधो दर्शितः ॥ ८ ॥

स्वामिकृतटीका।

राजसं त्यागमाह दुःखमिति यः कर्त्तात्मबोधं विना केवलं दुःखमित्येवं मत्वा शरीरायासभयान्नित्यं कर्म त्यजेदिति यस्तादृशस्त्यागो राजसो दुःखस्य राजसत्वात् अतस्तं राजसं त्यागं कृत्वा सराजसः पुरुषस्त्यागफलं ज्ञाननिष्ठा लक्षणं नैव लभत इत्यर्थः ॥ ८ ॥

भाषा अनुवाद।

अब इस श्लोक से दिखावते हैं कि सकल काम्यकर्मोंकी बन्धकत्व है अर्थात् कामना करि के किये कर्म बन्धन करते हैं इस हेतु से उनका त्याग करनाहीं कर्त्तव्य है परन्तु नियत कहे नित्य कर्मों का त्याग करना योग्य नहीं है क्योंकि नित्य कर्म सत्त्वशुद्धि के द्वारा मोक्ष के साधन स्वरूप हैं इससे यद्यपि कर्मका परित्याग करना ठीक है तौभी नित्य कर्मका त्याग मोह ही से होता अर्थात् तामस है क्योंकि मोह तमोगुण से होता तो उस के त्याग को शिष्ट लोग तामस त्याग कहते हैं ॥ ७ ॥

कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः॥ ६॥

शाङ्करभाष्यम्।

कः पुनःसात्त्विकस्त्यागः कार्य्यमिति कार्य्यं कर्त्तव्यमित्येव यत् कर्म्म नियतं नित्यं क्रियते निर्वर्त्त्यते हेऽर्जुन सङ्गफलञ्च एव नित्यानां कर्म्मणो फलवत्त्वे भगवद्वचनं प्र-माणमवोचाम अथवा यद्यपि फलं नश्रूयते नित्यस्य कर्म्मणस्तथापि नित्यकर्म्मकृतमात्मसंस्कारं प्रत्यवायपरिहारं वा फलं करो-त्यात्मन इति कल्पयत्येवाज्ञस्तत्र तामपि कल्पनां निवारयति फलं त्यक्त्वेत्य-नेनातः साधूक्तं सङ्गं त्यक्त्वा फलञ्चेति स त्यागोनित्य कर्म्मसु सङ्गफलपरि-त्यागः सात्त्विकः सत्त्वनिर्वृत्तो मतोऽभिमतः॥ ६॥

आनन्दगिरिकृतटीका।

सम्प्रति सात्त्विकं त्यागं प्रश्नपूर्वकं वर्णयति कः पुनरिति कर्त्तव्यमित्येवेत्येवकारेण नित्यस्य भाव्यान्तरं निषिध्यते नित्यानां विध्युद्देशे फलाश्रवणात् तेषां फलं त्यक्त्वेत्ययुक्त-मित्याशङ्क्याह नित्यानामिति फलं त्यक्त्वेत्यस्य विधान्तरेण तात्पर्यमाह अथवेति नहि विधानकृतं कर्म अनर्थकं विध्यानर्थक्यात्तेन श्रौतफलाभावेऽपि नित्यं कर्म विधितोऽनुति-ष्ठन्नात्मानमज्ञानमनुपहतमनस्कोऽन्तरा तस्मिन् कर्मण्यात्मसंस्कारं फलं कल्पयति तदकरणे प्रत्यवायस्मृत्या तदकरणं कर्त्तुरात्मनस्तन्निवृत्तिं करोतीति वा नित्यकर्मण्युक्तां कल्पनामनु-निष्पादितफलकल्पनाञ्च फलं त्यक्त्वेत्यनेन भगवान्निवारयतीत्यर्थः नित्यकर्मसु फलत्यागोक्तेः सम्भवे फलितमाह अत इति॥ ६॥

भाषा अनुवाद।

राजसत्यागको कहते हैं कि जो मनुष्य आत्मज्ञान के विना केवल कर्म करना दुःखमात्र विचारि के शरीर क्लेशके भयसे नित्य कर्म का त्याग करता है सो त्याग राजस है क्योंकि दुःख रजोगुण का धर्म्म है इसी से राजस त्यागकारी रजोगुणी पुरुष को ज्ञान मे निष्ठा जो त्याग का फल सो कभुं नहीं मिले है॥ ८॥

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

शाङ्करभाष्यम् ।

ननु कर्मपरित्यागस्त्रिविधः संन्यास इति च प्रकृतस्तत्र तामसोराजसश्चोक्तस्त्यागः कथमिह सङ्गफलत्यागस्तृतीयत्वेनोच्यते यथा च ये ब्राह्मणा आगता स्तत्र षडङ्गविदौ द्वौ चत्रियस्तृतीय इति तद्वत् नैष दोषस्त्यागसामान्येन स्तुत्यर्थत्वादस्ति हि कर्मसंन्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वसामान्यन्तत्र राजसतामसत्वेन कर्मत्यागान्निन्दया कर्मफलाभिसन्धित्याग सात्त्विकत्वेन स्तूयते स त्यागः सात्त्विकोमत इति यस्त्वधिकृतः सङ्गं त्यक्त्वा फलाभिसन्धिञ्च नित्यं कर्म करोति तस्य फलरागादिना कलुषीक्रियमाण-

आनन्दगिरिकृतटीका ।

कर्म तत्फलत्यागस्य त्यागसन्यासशब्दाभ्यां प्रकृतस्य त्यागो हीति त्रैविध्यं प्रतिज्ञाय प्रतिज्ञानुरोधेन द्विविधे व्युत्पाद्य तृतीयां विधान्तविरोधेन व्युत्पादयतो भगवतोऽकौशलमापतितमिति शङ्कते नन्विति प्रकृतप्रतिकूलमुपसंहारवचनमनुचितमित्यत्र दृष्टान्तमाह यथेति पूर्वोत्तरविरोधेन प्राप्तमकौशलं प्रत्यादिशति नैषदोष इति कर्मत्यागफलत्यागयोस्त्यागत्वेन साद्दश्यात् कर्मत्यागनिन्दया तत्फलत्यागस्तुत्यर्थमिदं वचनमित्युपगमात् न विरोधोऽस्तित्युक्तमेव व्यक्तीकुर्वन्नादौ त्यागसामान्यं विशदयति अस्तीति सति सामान्ये निर्दे-

स्वामिकृतटीका ।

सात्त्विकं त्यागमाह कार्यमिति कार्यमित्येव बुद्ध्वा नियतमवश्यं कर्त्तव्यतया विहितं कर्म सङ्गं फलञ्च त्यक्त्वा क्रियत इति यत्तादृशस्त्यागः स सात्त्विको मतः ॥ ९ ॥

भाषा अनुवाद ।

अब सात्त्विक त्याग कहते हैं कि हे अर्जुन कर्म सब कर्त्तव्य हैं ऐसे विचार से नियत कहे अवश्य कर्त्तव्य रूप विहित कर्मों को कर्तृत्व अभिनिवेश कहे अहंबुद्धि औ फलकी कामना रहित जो त्याग करना सो सात्त्विक त्याग कहे उत्तम त्याग है ॥ ९ ॥

शाङ्करभाष्यम् ।

मन्तःकरणं नित्यैश्च कर्म्मभिः संक्रियमाणं विशुध्यति तत् विशुद्धं प्रसन्नमात्मालोचनक्षमम्भवति तस्यैव नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठस्यात्तद्वक्तव्यमित्याह न द्वेष्टि अकुशलं अशोभनं काम्यं कर्म्म शरीरारम्भद्वारेण संसारकारणं किमनेनेत्येवं कुशले शोभने नित्यकर्म्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकारणमिदमित्येवं नानुषज्जते तत्रापि प्रयोजनमपश्यन्ननु सङ्गं प्रीतिं न करोतीत्येतत् कः पुनरसौ त्यागी पूर्वोक्तेन सङ्गफलपरित्यागेन तद्वांस्त्यागी यः कर्म्मणि सङ्गं त्यक्त्वा तत्फले च नित्यकर्मानुष्ठायी स त्यागी कदा पुनरसावकुशलं कर्म न द्वेष्टि कुशले च नानुषज्जत इत्युच्यते सत्त्वसमाविष्टो यदा सत्त्वेनात्मविवेकविज्ञानहेतुना समाविष्टः संव्याप्तः संयुक्त इत्येतत् अतएव मेधावी मेधयात्मज्ञानलक्षणया प्रज्ञया संयुक्तस्तदा मेधावी मेधावित्वादेव च्छिन्नसंशयः च्छिन्नोऽविद्याकृतः संशयो यस्य आत्मस्वरूपावस्थानमेव परं निःश्रेयससाधनं नान्यत् किञ्चिदित्येवं निश्चयेन च्छिन्नसंशयः ॥ १० ॥

आनन्दगिरिकृतटीका ।

शस्य स्तुत्यर्थत्वं समर्थयते तत्रेति एवं पूर्वापरविरोधं पराकृत्य अनन्तरश्लोकतात्पर्यमाह यस्त्विति फलरागादिनेत्यादिशब्देन कर्मस्वरूपासङ्गो गृह्यते अन्तःकरणमकलुषीक्रियमाणमिति क्षेदः विशुद्धेऽन्तःकरणे किं स्यादित्याशङ्क्याह विशुद्धमिति मलविकलत्वं विशुद्धत्वं संस्कारत्वं प्रसन्नत्वमिति भेदः क्रमेण श्रवणाद्यावृत्तिद्वारेणेत्यर्थः तन्निष्ठत्यात्मज्ञाननिष्ठोक्ता काम्यकर्मणि त्याज्यत्वेन द्वेषमभिनयति किमिति उभयत्रद्वेषं प्रीतिञ्च न करोतीति सामान्येनोक्तं कर्त्तारं प्रश्नपूर्वकं विशेषतो निर्दिशति कः पुनरिति त्यागीत्युक्तं त्यागिनमभिव्यनक्ति पूर्वोक्तेनेति कर्मणि सङ्गस्य तत्फलस्य च त्यागेनेति यावत् उक्तमेव त्यागिनं विवृणोति यः कर्मणीति तत्फलं त्यक्त्वेति सम्बन्धः काम्ये निषिद्धे च कर्मणि बन्धहेतुरिति न द्वेष्टी नित्यनैमित्तिके च मोक्षहेतुरिति न प्रीयते तत्र कालविशेषं पृच्छति कदेति नित्यादिकर्मणा फलाभिसन्धिवर्जितेन क्षयितकल्मषमसम्पन्नत्वं यथार्थग्रहणसमर्थमुद्बुध्यते तेन समावेशदशायामसक्तप्रीतिद्वेषयोरभावो भवतीत्याह उच्यत इति चतुर्थपादं व्याकरोति अत एवेति समुद्बुद्धयथार्थग्रहणसामर्थ्यो समाविष्टत्वादित्यर्थः छिन्नसंशयत्वमेव विशदयति आत्मेति परनिःश्रेयसन्तस्य च साधनं सम्यग्ज्ञानमेवेति योजना ॥ १० ॥

नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ११ ॥

शाङ्करभाष्यम् ।

योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निःक्रियमात्मानमात्मत्वेन सम्बुद्धः स सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीन्न नैष्कर्म्यलक्षणां ज्ञाननिष्ठामश्नुत इत्येतत् पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तं यः पुनरधिकृतः सन्देहात्माभिमानित्वेन देहभृदज्ञो बाधितात्मकर्त्तृत्व-

स्वामिकृतटीका ।

एवंभूतस्य सात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह न द्वेष्टीत्यादि सत्त्वसमाविष्टः सत्त्वेन व्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि कुशले च सुखकरे कर्मणि निदाघे मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति तत्र हेतुः मेधावी स्थिरबुद्धिः परपरिभवादिमहदपि दुःखं सहते स्वर्गादिसुखञ्च त्यजति तत्र कियदेतत्तत्कालिकं सुखं दुःखञ्चेत्येवमनुसन्धानवानित्यर्थः अतएव छिन्नः संशयो मिथ्याज्ञानदैहिकसुखदुःखयोरुपादित्सा परिजिहीर्षा लक्षणं यस्य सः ॥ १० ॥

भाषा अनुवाद ।

एवम्भूत सात्त्विक त्याग मे प्रकृष्ट निष्ठायुक्त पुरुषके लक्षण कहते हैं कि सतोगुण से सात्त्विक त्यागी पुरुष अकुशल कहे दुःखदायी अर्थात् शिशिर कहे जाडे मे प्रातःस्नान आदि कर्म से द्वेष नहीं करते औ कुशल कहे ग्रीष्मकाल के मध्याह्नस्नान आदि कर्म मे प्रीति नही रखते इसका कारण यह कि वे लोग स्थिरबुद्धि अर्थात् विवेक से अन्यकृत पराभव अनादर आदि महादुःख भी सहते हैं औ स्वर्गादि सुख को भी त्याग करते हैं फेरि सुख औ दुःख जो क्षणिक कहे क्षणमात्र रहने वाला है यह निश्चय जानते हैं औ जिसका दैहिक सुख दुःखका ग्रहण औ त्याग का इच्छारूप जो मिथ्याज्ञान सो नष्ट होगया वही छिन्नसंशय पुरुष हैं ॥ १० ॥

**अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्मणः फलं।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥ १२॥**

शाङ्करभाष्यम्।

विज्ञानतयाहं कर्त्तेति निश्चितबुद्धिस्तस्याशेषकर्म्मपरित्यागस्याशक्यत्वात् कर्म्मफलत्यागेन चोदितकर्मानुष्ठान एवाधिकारो न त्याग इत्येतमर्थं दर्शयितुमाह नहीति नहि यस्माद्देहभृता देहं बिभर्त्तीति देहभृद्देहात्माभिमानवान् देहभृदुच्यते नहि विवेकी स हि वेदाविनाशिनमित्यादिना कर्त्तृत्वाधिकारान्निवर्त्तितोऽतस्तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं संन्यसितुं कर्माण्यशेषतो निःशेषेण तस्माद्यस्त्वज्ञोऽधिकृतो नित्यानि कर्माणि कुर्वन् कर्म्मफलत्यागी कर्मफलाभिसन्धिमात्रसंन्यासी स त्यागीत्यभिधीयते कर्माण्यपि सन्निति स्तुत्यभिप्रायेण तस्मात् परमार्थदर्शिनैव देहभृता देहात्मभावरहितेनाशेषकर्म संन्यासः शक्यते कर्त्तुं॥ ११॥

आनन्दगिरिकृतटीका।

न हि देहीत्यादिना श्लोकेनोक्तमर्थं सङ्क्षिप्यानुवदति योऽधिकृत इति पूर्वोक्तप्रकारेणेति कर्मणि तत्फले च सङ्गत्यागेनेत्यर्थः कर्मात्मयोगस्यानुष्ठानेन संस्कृतात्मा सन् क्रमेण श्रवणाद्यनुष्ठानद्वारेण कूटस्थं ब्रह्म प्रत्यक्त्वेन सम्बुद्ध इति सम्बन्धः परस्य निःक्रियत्वे हेतुमाह जन्मादीति उक्तज्ञानवतः सर्वकर्मत्यागद्वारा मुक्तिभाक्त्वं दर्शयति स सर्वेति आत्मज्ञानवतः सर्वकर्मत्यागसम्भावनासुक्त्वा तद्धीनस्य तदसम्भवे हेतुवचनत्वेन अनन्तरश्लोकमवतारयति यः पुनरिति न बाधितमात्मनि कर्तृत्वविज्ञानमस्येत्यज्ञस्तथा तस्य भावस्तत्ता तयेति यावत् एतमर्थं दर्शयितुमज्ञस्य सर्वकर्मसन्न्यासासम्भवे हेतुमाहेति योजना यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः विवेकिनोऽपि देहधारितया देहभृत्त्वाविशेषे कर्माधिकारः स्यादित्याशङ्क्याह न हीति कर्तृत्वाधिकारस्तत्पूर्वकं कर्मानुष्ठानं तस्मादिति यावत् ज्ञानवतो देहधारणेऽपि तदभिमानित्वाभावोऽतः शब्दार्थः अज्ञस्य सर्वकर्मत्यागायोगमुक्तं हेतूकृत्य फलितमाह तस्मादिति कर्मानुष्ठायिनस्त्यागित्वोक्तिरयुक्तेत्याशङ्क्याह कर्मणीति कर्मिणोऽपि फलत्यागेन त्यागित्ववचनं फलत्यागस्तुत्यर्थमित्यर्थः कस्य तर्हि सर्वकर्मत्यागः सम्भवतीत्याशङ्क्य विवेकवैराग्यादिमतो देहाभिमानहीनस्येत्युक्तं निगमयति तस्मादिति॥ ११॥

पञ्चैमानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणां ॥ १३ ॥

शाङ्करभाष्यम् ।

किं पुनस्तत् प्रयोजनं यत् सर्वकर्मपरित्यागात् स्यादित्युच्यते अनिष्टं नरकतिर्यगादिलक्षणं इष्टं देवादिलक्षणं मिश्रं इष्टानिष्टसंयुक्तं मनुष्यलक्षणञ्चैवं त्रिविधं त्रिःप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं वाह्यानेककारकरूपं व्यापारनिष्पन्नं सदविद्याकृतमिन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पीव फल्गुतया लयमदर्शनं गच्छतीति फलनिर्वचनं तदेतदेव लक्षणं फलं भवत्यत्यागिनामज्ञानां कर्मिणामपरमार्थसंन्यासिनां प्रेत्य शरीरपातादूर्द्ध्वं न तु परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचिन्नहि केवलं सम्यक्दर्शननिष्ठाऽविद्यादिसंसारवीजं नोन्मूलयन्ति कदाचिदित्यर्थः ॥ १२ ॥

स्वामिकृतटीका ।

नन्वेवंभूतात् कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपाभावेन ज्ञाननिष्ठासुखं संपद्यते तत्राह नहीति देहभृता देहाभिमानवता निःशेषेण सर्वाणि कर्माणि त्यक्तुं नहि शक्यानि तदुक्तं नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदित्यादिना तस्माद्यस्तु कर्माणि कुर्वन्नपि कर्मफलत्यागी स एव मुख्यः त्यागीत्यभिधीयते ॥ ११ ॥

भाषा अनुवाद ।

जो कहो कि पूर्वोक्त कर्मों के फल त्याग से कर्महीं का त्याग कर्ना श्रेष्ठ क्यों न होय जिस हेतु विक्षेप करने वाले कर्म दूर होने से अविक्षेप क्रमसे ज्ञाननिष्ठा रूप जो सुख सो सम्पन्न होगा इसपर कहते हैं कि देह अभिमान युक्त मनुष्य तावत् सर्वकर्मों का सम्पूर्ण त्याग नहीं कर सकते हैं इसमे प्रमाण तीसरे अध्यायके पञ्चये श्लोकादिसे कहा है कि न कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् इति इससे जो सकल कर्मोंका अनुष्ठान करके भी फलके त्यागी हैं वेइ पुरुष प्रधान त्यागी हैं ॥११॥

आनन्दगिरिकृतटीका ।

उक्ताधिकारिणः सर्वकर्मसन्न्यासासम्भवेऽपि फलाभावे कुतस्तस्य कर्त्तव्यतेति शङ्कते किं पुनरिति गौणस्य मुख्यस्य वा सन्न्यासस्य फलं पिपृच्छिषित मिति विकल्पयति उच्यत इति सर्वकर्मत्यागो नाम तदनुष्ठानेऽपि तत्फलाभिसन्धित्यागः स चामुख्यसन्न्यासस्तस्य फलमाह अनिष्टमिति मुख्ये तु सन्न्यासे सर्वकर्मत्यागे सम्यग्धीद्वारा सर्वसंसारोच्छित्तिरेव फलमित्याह नत्विति पादत्रयं व्याकरोति अनिष्टमित्यादिना तिर्य्यगादीत्यादिपदमवशिष्टनिकृष्टयोनिसंग्रहार्थं देवादीत्यादिपदं विशिष्टोत्कृष्टयोनिसङ्ग्रहार्थेति विभागः फलशब्दं व्युत्पादयति बाह्येति कारणद्वारकमनेकविधत्वमुक्त्वा मिथ्यात्वमाह अविद्येति तत्कृतत्वेन दृष्टिमात्रदेहत्वे दृष्टान्तमाह इन्द्रेति प्रतीतितो रमणीयत्वं सूचयति महामोहेति अविद्योत्थत्वादविद्याश्रितत्वादात्माश्रितत्वं वस्तुतो नास्तीत्याह प्रत्यगिति उक्तं फलं कर्मिणामिष्यते चेदमुख्यसन्न्यासफलोक्तिपरत्वं पादत्रयस्य कथमिष्टमित्याशङ्क्याह अपरमार्थेति फलाभिसन्धिविकलानां कर्मिणां देहपातादूर्ध्वं कर्मानुरोधिफलमावश्यकमित्यर्थः कर्मिणामेव सतामफलाभिसन्धीनाममुख्यसन्न्यासित्वात्तदीयामुख्यसन्न्यासस्य फलमुक्त्वा चतुर्थपादं व्याचष्टे नत्विति अमुख्यसन्न्यासमनन्तरप्रकृतं व्यवच्छिनत्ति परमार्थेति तेषां प्राधान्यं धर्ममुपदिशति केवलेति क्वचिद्देशे काले वा नास्ति यथोक्तं फलं तेषामिति सम्बन्धः तर्हि परमार्थसन्न्यासोऽफलत्वात् नानुष्ठीयेतेत्याशङ्क्य तस्य मोक्षावसायित्वान्मैवमित्याह नहीति ॥ १२ ॥

स्वामिकृतटीका ।

एवंभूतस्य कर्मफलत्यागस्य फलमाह अनिष्टमिति अनिष्टं नारकित्वं इष्टं देवत्वं मिश्रं मनुष्यत्वं एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत् फलं प्रसिद्धं तत् सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्मसम्भवात् नतु सन्न्यासिनां क्वचिदपि भवति सन्न्यासिशब्देनात्र फलत्यागसाम्यात् प्रकृतः कर्मफलत्यागिनो गृह्यन्ते अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः स सन्न्यासी च योगी चेत्येवमादौ कर्मफलत्यागिषु सन्न्यासिशब्दप्रयोगदर्शनात् तेषां सात्त्विकानां पापासम्भवादीश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थः ॥ १२ ॥

भाषा अनुवाद ।

अब पूर्वोक्त त्यागको फल कहते हैं कि अनिष्ट कहे नरक औ इष्ट कहे देवत्व तथा मिश्र कहे मनुष्यत्व येई पाप पुण्य मिले हुये कर्मोंके फल हैं सो काम्य कर्म करनेवालों को देहान्त होनेपर प्राप्त होते हैं क्योंकि सकाम

## शाङ्करभाष्यम् ।

अतः परमार्थदर्शिन एवाशेषकर्मसंन्यासित्वं सम्भवत्यविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां न त्वज्ञस्याधिष्ठानादीनि क्रियाकर्त्तॄणि कारकान्यात्मत्वेन पश्यतोऽशेषकर्मसंन्यासः सम्भवति तदेतदुत्तरैः श्लोकैर्दर्शयति पञ्चेति पञ्च इमानि वक्ष्यमाणानि हे महाबाहो कारणानि निर्वर्त्तकानि निबोध मे मम इत्युत्तरत्र चेतःसमाधानार्थं वस्तुवैषम्यप्रदर्शनार्थं च तानि च कारणानि ज्ञातव्यतया स्तौति सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिन् शास्त्रे तत् सांख्यं वेदान्तः कृतान्त इति तस्यैव विशेषणं कृतमिति कर्मोच्यते तस्यान्तः परिसमाप्तिर्यत्र स कृतान्त इत्येतत् यावानर्थ उदपाने सर्वकर्माऽखिलं पार्थ ज्ञाने परिसमाप्यत इत्यात्मज्ञाने सञ्जाते सर्वकर्मणां निवृत्तिं दर्शयति अतस्तस्मिन्नात्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणां ॥ १२ ॥

### आनन्दगिरिकृतटीका ।

ननु अपरमार्थसन्न्यासनदविशेषादत्तानां परमार्थसन्न्यासोऽपि किं न स्यात्त्यागस्य सुकरत्वात्तत्राह अतः परमार्थेति तस्य सम्यग्दर्शनादविद्यानिवृत्तौ तदारोपितक्रियाकारकादिनिवृत्तेरिति हेत्वर्थः विद्यावतः सर्वकर्मसन्न्यासित्वसम्भावनायुक्ता एवकारव्यावर्त्त्यं दर्शयति नत्विति अविदुषोऽशेषकर्मणां तद्धेतूनाञ्च रागादीनां त्यागा योगे कारकेष्वभि-

## भाषा अनुवाद ।

मनुष्योंको पाप पुन्य औ दोनोसे मिले त्रिविध कर्म्म सम्भव हैं परन्तु ये कर्म्म संन्यासी पुरुषको किसी तरह सम्भव नहीं होते औ संन्यासी इस प्रसङ्गमें कर्म्म फलका त्यागी ही लेते हैं यहां प्रमाण सुनो कि अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः स संन्यासी च योगी च इति छठें अध्याय के प्रथम श्लोकसे लेकर कहा है औ कर्म्मफलके त्यागी पुरुषको सब जगह संन्यासी कहा इससे यह फलत्यागी सात्विक मनुष्य को पापकी असम्भव हेतु भगवत् को अर्पण करनेसे पुण्यफल के त्याग होनेसे त्रिविध जो कर्म फल वे किसी प्रकारसे भी नहीं होते हैं ॥ १२ ॥

### आनन्दगिरिकृतटीका।

ज्ञानादित्यात्मदर्शनं हेतुमाह क्रियेति कथमधिष्ठानादीनां क्रियाकर्तृत्वं कथं वा विदुषस्ते-ष्वात्मत्वधीरित्याशङ्क्यानन्तरश्लोकचतुष्टयस्य तात्पर्यमाह तदेतदिति कर्माधिष्ठानादीनाम-प्रामाणिकत्वाशङ्कामादावुद्धरति पञ्चेति उत्तरत्वेत्यधिष्ठानादिषु वक्ष्यमाणेष्वित्यर्थः वस्तूनां तेषामेव वैषम्यं निर्दिदर्शयिषितं नहि चेतः समाधानादृते ज्ञातुं शक्यं तत् सांख्यशब्दं व्युत्पादयति ज्ञातव्येति आत्मा त्वं पदार्थस्तत्पदार्थौ मन्नतयोरैक्यधीस्तदुपयोगिनश्च श्रवणादयः पदार्थास्ते संख्यायन्ते व्युत्पाद्यन्ते कृतान्तशब्दस्य वेदान्तविषयत्वं विभजते कृतमित्यादिना वेदान्तस्य तत्त्वधीद्वारा कर्मावसानभूमित्वे वाक्योपक्रमानुकूल्यं दर्शयति यावानिति उदपाने कूपादौ यावानर्थः स्नानादिः तावानर्थः समुद्रे सम्पद्यतेऽतो यथा कूपादिकृतं कार्यं सर्वं समुद्रेऽन्तर्भवति तथा सर्वेषु वेदेषु कर्मार्थेषु यावत् फलं तावत् ज्ञान-वतो ब्राह्मणस्य ज्ञानेऽन्तर्भवति ज्ञानं प्राप्तस्य कर्तव्यानवशेषादित्यर्थः तत्रैव वाक्यान्तर-मनुक्रामति सर्वमिति उदाहृतवाक्ययोस्तात्पर्यमाह आत्मेति आत्मज्ञाने सति सर्वकर्म-निवृत्तावपि कथं वेदान्तस्य कृतान्तत्वमित्याशङ्क्याह अत इति तानि मद्वचनतो निबोधेति पूर्वेण सम्बन्धः॥ १३॥

### स्वामिकृतटीका।

ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशंक्य सङ्गत्यागिनो निरहङ्कारस्य कर्मलेपो नास्तीत्युपपादयितुमाह पञ्चेति पञ्चभिः सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमेवाह सांख्य इति सम्यक् ख्यायते ज्ञायते परमात्मा अनेनेति सांख्यं तत्त्वज्ञानं तस्मिन् प्रकाशमान आत्मावबोधः सांख्यः तस्मिन् कृतं कर्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन् वेदान्तसिद्धान्त इत्यर्थः यद्वा संख्यायन्ते गण्यन्ते तत्त्वान्यस्मिन्निति सांख्यं कृतोऽन्तो निर्णयोऽस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन् प्रोक्तानि अतः सम्यङ्निबोधेत्यर्थः॥ १३॥

## भाषा अनुवाद।

जो कहो कि कर्मी पुरुषको कर्मफल क्यों न होंगे इस शङ्का पर सङ्ग त्यागी विद्वान् मनुष्यको जो कर्मबन्ध नहीं वह सिद्ध करनेकी इच्छासे यहां पांच श्लोकसे कहते हैं कि हे महाबाहो कर्मोंकी निष्पत्तिमें ये पांच कारण मेरे वचनसे जानो औ अपने कर्तृत्व रूप अभिमान की निवृ-

**अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवञ्चैवात्र पञ्चमम् ॥ १४ ॥**

### शाङ्करभाष्यम् ।

कानि तानीत्युच्यते अधिष्ठानमिति अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरन्तथा कर्त्ता उपाधिलक्षणो भोक्ता करणञ्च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं द्वादशसंख्यं विविधाश्च पृथक्चेष्टा वायवीयाः प्राणापानाद्या दैवञ्चैव दैवमेवात्र एतेषु चतुर्षु पञ्चमं पञ्चानां पूरणमादित्यादि चक्षुराद्यनुग्राहं ॥ १४ ॥

### आनन्दगिरिकृतटीका ।

कर्माण्यव्यधिष्ठानादीनि मानमूलत्वात् ज्ञेयानीत्युक्तमिदानीं प्रश्नपूर्वकं विशेषतस्तानि निर्दिशति कानीत्यादिना प्रतीकमादाय व्याकरोति अधिष्ठानमिति उपाधिलक्षणो बुद्ध्यादिरुपाधिस्तल्लक्षणात् स्वभावो बुद्ध्याद्यनुविधायी तद्धर्मात्मनि पक्षानुरहितस्तत्प्रधान इत्यर्थः तत्र कार्यलिङ्गकमनुमानं सूचयति शब्दादीति ज्ञानेन्द्रियाणि पञ्च पञ्च कर्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशसंख्यात्वं चेष्टाया विविधत्वं नानाप्रकारत्वं तद्देन स्फुटयति वायवीया इति पृथक्त्वमसङ्कीर्णत्वं नहि प्राणापानादि चेष्टानां मिथः सङ्करोऽस्ति दैवं विशदयति आदित्यादीति ॥ १४ ॥

### भाषा अनुवाद ।

जिसके अर्थ इन कारणोंको अवश्य जानना चाहिये कि इस प्रकार परमात्मा सम्यक् रूपसे प्रसिद्ध अर्थात् ज्ञानका विषय होता है इस अर्थका सूचन करनेवाला जो सांख्यका भावार्थ यह कि तत्वज्ञानसे प्रकाशमान आत्मबोध ही को सांख्य कहतेहैं और ऐसे कर्मोंका अन्त कहे समाप्ति इसमे है इस अर्थका सूचक जो कृतान्त अर्थात् सांख्य कृतान्त कहे वेदान्त सिद्धान्तमे अथवा इसमे सब तत्त्व गनेहैं इस अर्थका सूचक सांख्य इस तरहसे किया है अन्त अर्थात् सकल निर्णय इसमेहै इस अर्थका सूचक जो कृतान्त पद इन दोनो पदार्थोंको सांख्य कहते हैं सोई सांख्यमे ये पांचो कारण अच्छी प्रकारसे कहा है इससे तुम सम्यक् प्रकार इन कारणोंको जानो ॥ १३ ॥

शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

## शाङ्करभाष्यम् ।

शरीरेति शरीरवाङ्मनोभिर्यत् कर्म त्रिभिरेतैः प्रारभते निर्वर्त्तयति नरः न्याय्यं वा धर्म्यं शास्त्रीयं विपरीतं वा अशास्त्रीयं अधर्म्यं यच्चापि निमिषितचेष्टादिजीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्य्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतं पञ्चैते यथोक्तास्तस्य सर्व्वस्यैव कर्मणो हेतवः कारणानि ननु अधिष्ठानादीनि सर्वकर्मणां कारणानि कथमुच्यते शरीरवाङ्मनोभिः प्रारभ्यत इति नैष दोषः विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरारभ्यत इति फलकालेऽपि तत्प्रधानैर्भुज्यते इति पञ्चानामेव हेतुत्वं न विरुध्यते ॥ १५ ॥

## स्वामिकृतटीका ।

तान्येवाह अधिष्ठानमिति अधिष्ठानं शरीरं कर्त्ता चिदचिद्ग्रन्थिरहङ्कारः पृथग्विधमनेकप्रकारं करणं चक्षुः श्रोत्रादि विविधाः कार्य्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापाराः अत्र एतेष्वेव पञ्चमं दैवं चक्षुराद्यनुग्राहकमादित्यादि सर्वप्रेरकोऽन्तर्यामी वा ॥ १४ ॥

## भाषा अनुवाद ।

सोई सर्व कर्मसम्पत्ति के विषय मे कारण कहते हैं कि अधिष्ठान कहे शरीर औ कर्त्ता कहे चित औ जड़को ग्रन्थिरूप अहङ्कार औ भिन्न भिन्न अनेक प्रकार करणस्वरूप चक्षु आदि इन्द्री औ विविध कहे कार्य से या स्वरूप से भिन्न भिन्न चेष्टा अर्थात् प्राण अपानादि वायु के व्यापार समूह औ अत्र कहे अधिष्ठान शरीर आदि सब के मध्य मे पञ्चम स्वरूप दैव अन्तर्यामी सर्वनियन्ता अथवा चक्षु आदि इन्द्रियों के अनुकूलकारी सूर्य आदि देवता जानो अथवा अन्तर्यामी इहां तिनका अर्थ ज्ञान है ॥१४॥

तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

शाङ्करभाष्यम् ।

तत्रेति तत्रेति प्रकृतेन सम्बध्यते एवं सति एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ते सति कर्मणि तत्रैवं सतीति दुर्मतित्वस्य हेतुत्वेन सम्बध्यते

आनन्दगिरिकृतटीका ।

पञ्चानामधिष्ठानादीनामुक्तानां सर्वकर्मविद्यार्थत्वं स्फुटयति शरीरेति ननु जीवनकृतं निमेषोन्मेषादिकर्मान्तरं साधारणमस्ति तत् कथं राशिद्वयकरणमिति तत्राह यद्वेति अधिष्ठानादीनां कर्ममात्रहेतुत्वं प्रतिज्ञाय शारीरादि त्रिविधकर्महेतुत्वोक्तिरयुक्तेति शङ्कते नन्विति पूर्वापरविरोधं परिहरति नैष दोष इति ननु जीवनकृतानि स्वाभाविकानि कर्माणि दर्शनादीनि विधिनिषेधवाह्यत्वाच्च देहादि निर्वर्त्त्यानीत्याशङ्क्याह तदङ्गतयेति तस्य देहादित्रयस्य प्रधानस्याङ्गञ्चक्षुरादि तन्निष्पाद्यत्वेन जीवनकृतं दर्शनादिप्रधानकर्मण्यन्तर्भूतमिति त्रैविध्यमविरुद्धमित्यर्थः देहाद्यारब्धे त्रिविधे कर्मणि सर्वकर्मान्तरभावेऽपि कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वं फलोपभोगकाले करणान्तरापेक्षासम्भवादित्याशङ्क्य यन्मकालभाविनो भोगकालभाविनश्च सर्वस्य कारणस्य तेष्वेवान्तर्भावान्नैवमित्याह फलेति ॥ १५ ॥

स्वामिकृतटीका ।

एतेषामेव सर्वकर्महेतुत्वमाह शरीरेति यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्य शरीरवाङ्मनोभिरित्युक्तं शारीरं वाचिकं मानसञ्च त्रिविधं कर्मेति प्रसिद्धं शरीरादिभिर्यत् कर्म धर्म्यमधर्म्यं वा करोति नरस्तस्य सर्वस्य कर्मण एते पञ्च हेतवः ॥ १५ ॥

भाषा अनुवाद ।

इन्ही पांचों को सर्व कर्म मे कारणत्व कहते हैं कि इन्ही पांचों के कारण से प्रारब्ध किये जाते जो सकल कर्म तिन को शरीरादि मे अन्तर्गत करके मानिके इस श्लोक मे कहा है कि जिस हेतु कर्म मात्र जो शारीरिक औ वाचनिक तथा मानसिक होते हैं ये प्रसिद्ध हैं श्लोक का अर्थ यह है कि शरीर वचन औ मन के द्वारा सब मनुष्य जो कोई धर्म या अधर्म के कारण है येई अधिष्ठान करके शरीर आदि पांच कर्मों के हेतु हैं ॥ १५ ॥

## शाङ्करभाष्यम् ।

तत्रैतेषामात्मानमन्यत्वेनाविद्यया परिकल्पितैः क्रियमाणस्य कर्मणोऽहमेव कर्त्तेति कर्त्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान् कस्माद्वेदान्ताचार्य्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्योऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्त्तारं पश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्मणो वेत्यर्थोऽतो दुर्मतिः कुत्सिता विपरीता दुष्टाजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः स पश्यन्नपि न पश्यति यथा तैमिरिकोऽनेकचन्द्रं यथा वाभ्रेषु धावत्सु चन्द्रं धावन्तं यथा वाहन उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तं पश्यति ॥ १६ ॥

### आनन्दगिरिकृतटीका ।

क्रियाकर्तृत्वमधिष्ठानादीनामापाद्य विदुषस्तेष्वात्मदृष्टिमनुवदति तत्रेति तत्पदपरामर्शयोग्यं प्रकृतं सर्वं कर्म प्रतीकमादाय पूर्वेण सम्बन्धार्थं कथयति एवमिति अधिष्ठानादीनामुक्तरीत्या कर्तृत्वे सत्यन्यगतं कर्तृत्वमात्मनोऽध्यारोप्य पश्यतो दुर्मतिरित्यात्मनि कर्तृत्वं पश्यन्नित्याह तत्रैवमिति कर्तारमित्यादि व्याचष्टे तत्रेत्यादिना तेष्वधिष्ठानादिषु तैरधिष्ठानादिभिरारोपितात्मभावैरित्यर्थः अकर्त्तारमात्मानं कर्त्तारं पश्यतीत्यत्र प्रश्नद्वारा हेतुमाह कस्मादिति ननु शास्त्रसंस्कृतबुद्धिरेवातिरिक्तात्मवादी कर्तृत्वं तस्यानुमन्यते नासौ कर्तृत्वमात्मनि पश्यन्नपि भवत्यकृतबुद्धिस्तत्राह योऽपीति तस्यापि शास्त्रपूर्वकमाचार्य्योपदेशेन तदनुसारिन्यायैश्चानाहितबुद्धित्वादकृतबुद्धित्वं सिद्धमित्यर्थः कौटस्थ्यमात्मनस्तत्त्वं याथात्म्यं कर्मणोऽपि तत्त्वमविद्याकृताधिष्ठानादिकृतत्वेनात्मस्पर्शित्वकर्मणोस्तत्त्वदर्शनाभावोऽतः शब्दार्थः दुष्टत्वं स्फुटीकर्तुं दुर्मतित्वं विवृणोति जननेति अहं कर्त्तेत्यात्मदर्शनवतोऽपि नाविदुषस्तद्दर्शनमस्तीत्यत्र दृष्टान्तमाह यथेति तिमिरोपहतचक्षुरनेकचन्द्रं पश्यन्नपि तत्त्वतो न तं पश्यत्येवमविद्वानात्मानं कर्त्तारं पश्यन्नपि तत्त्वतो न तं पश्यतीत्यर्थः अधिष्ठानादिष्वविद्ययासम्बद्धात्मनः स्वात्मनि तद्गतक्रियारोपे दृष्टान्तमाह यथावेति अन्येषु वाहकेषु पुरुषेषु धावनकर्तृषु वाहने स्थितः स्वात्मानं प्रधावनकर्त्तारमविवेकादभिमन्यते तथाधिष्ठानादिषु क्रियाकर्तृषु तद्गतं स्वात्मानं कर्त्तारं मन्यमानो दुर्मतिरित्यर्थः ॥ १६ ॥

### स्वामिकृतटीका ।

ततः किमत आह तत्रेति तत्र सर्वस्मिन् कर्मणि एते पञ्च हेतव इत्येवं सति केवलं निरुपाधिमसङ्गमात्मानं यः कर्त्तारं पश्यति शास्त्राचार्य्योपदेशाभ्यामसंस्कृतबुद्धित्वात् दुर्मतिरसौ सम्यक् न पश्यति ॥ १६ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

## शाङ्करभाष्यम् ।

कः पुनः सुमतिर्यः सम्यक् पश्यतीत्युच्यते यस्य शास्त्राचार्य्योपदेश-न्यायसंस्कृतात्मनो न भवत्यहं कृतो अहं कर्त्तेत्येवंलक्षणो भावनाप्रत्यय अतएव पञ्चाधिष्ठानाद्योऽविद्ययात्मनि कल्पिताः सर्वकर्मणां कर्त्तारो नाहमहन्तु तद्व्यापाराणां साक्षिभूतः अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः केवलो विक्रिय इत्येव पश्यतीति एव बुद्धिरन्तःकरणं यस्या-त्मन उपाधिभूता न लिप्यते नानुशयिनी भवतीदमहमकार्षन्तेनाहं नरकं गमिष्यामीत्येवं यस्य बुद्धिर्न लिप्यते स सुमतिः स पश्यति हत्वापि स इमान् लोकान् सर्वान् प्राणिन इत्यर्थः न हन्ति हननक्रियां न करोति न निबध्यते नापि तत्कार्य्येणाधर्मफलेन सम्बध्यते ननु हत्वापि न हन्तीति

## आनन्दगिरिकृतटीका ।

विपरीतदृष्टेर्दुर्मतित्वं दृष्ट्वा सम्यग्दृष्टेः सुमतित्वं प्रश्नपूर्वकमाह कः पुनरित्यादिना अहं कर्त्तेत्यात्मनि कर्तृत्वप्रत्ययाभावे कुत्र कर्तृत्वधीरित्याशङ्क्याह एत इति कथं तर्हि अकर्तृत्वधीरात्मनीत्याशङ्क्याधिष्ठानादीनां तद्व्यापाराणाञ्च साक्षित्वादित्याशङ्क्याह अहं त्विति आत्मनो न स्वतोऽस्ति क्रियाशक्तिमत्त्वमित्यत्र प्रमाणमाह अप्राणो हीति नापि-तस्य स्वतो ज्ञानशक्तित्वमित्याह अमना इति उपाधिद्वयासम्बन्धे शुद्धत्वं फलितमाह शुभ्र इति कारणसम्बन्धादशुद्धिमाशङ्क्योक्तम् अक्षरादिति कार्यकारणयोरात्मस्पर्शितत्वेन पार्थक्ये सद्वितीयत्वमाशङ्क्य तयोराविद्यकपारवश्यत्वान्नैवमित्याह केवल इति जन्मादि सर्वविक्रिया-

## भाषा अनुवाद ।

इस से फेरि क्या होता है इस अपेक्षापर कहते हैं कि उन कर्मों के हेतु जो अधिष्ठानादि पांच मात्र हैं और कोई हेतु नहीं है सो होने से भी शास्त्र औ आचार्य के उपदेश से नहीं शोधी गई बुद्धि इस कारण जो दुर्मति मनुष्य उपाधिरहित असङ्गरूप आत्माको कर्त्ता रूप देखते हैं इससे ये दुर्मति मनुष्य सम्यक्दर्शी नहीं हैं ॥ १६ ॥

## शाङ्करभाष्यम् ।

विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः नैष दोषः लौकिकपारमार्थिकदृष्ट्यपेक्षया-तदुपपत्तेः देहाद्यात्मबुद्ध्या हन्ताहमिति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य न हन्ति न निबध्यत इति तदुभयमुपपद्यत एव नन्वधिष्ठानादिभिः सम्भूय करोत्येवात्मा कर्त्तारमात्मानं केवलं त्विति केवलशब्दप्रयोगान्नैष दोषः आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः विक्रियावतो ह्यन्यैः संहननं सम्भवामि संहत्यैवाकर्त्तृत्वं स्यान्न त्वविक्रियस्यात्मनः केनचित् संहननमस्ति इति न सम्भूय कर्त्तृत्वमुपपद्यते अतः केवलत्वं आत्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रं अविक्रियत्वञ्चात्मनः श्रुतिन्यायप्रसिद्धं अविकार्योऽयमुच्यते गुणैरेव कर्माणि क्रियन्ते शरीरस्थोऽपि न करोतीत्याद्यसकृदुपपादितं गीतास्वेव तावत् श्रुतिषु च ध्यायतीव लेलायतीवेत्येवमाद्यासु यानि वाक्यानि दर्शितं न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया यस्य भवितुमर्हति नाधिष्ठानादीनां कर्माण्यात्मकर्त्तृकाणि स्युर्नहि परस्य कर्म परेणाकृतमागन्तुमर्हति यत्त्वविद्यया गमितं न तत्तस्य

### आनन्दगिरिकृतटीका ।

रहितत्वेन कौटस्थ्यमाह अविक्रिय इति बुद्धिर्यस्येत्यादि व्याचष्टे बुद्धिरिति नानुशायिनी नानुशयवती न क्लेशशालिनीत्यर्थः द्वितीयपादस्याचरार्थमुक्त्वा वाक्यार्थमाह इदमिति पापं कर्म इदमापराद्धयते लोकानां प्राणसम्बन्धाभावे कुतो हिंसेत्याशङ्क्याह प्राणिन इति विरुद्धार्थोक्ता स्तुतिरपि न युक्तेति शङ्कते नन्विति विरोधं परिहरति नैष दोष इति लौकिकदृष्टिमवष्टभ्याह हत्वापीति निर्देशं विशदयति देहादीति तात्त्विकीं दृष्टिमास्थाय न हन्तीति निर्देशमुपपादयति यथेति नाहं कर्त्ता किन्तु कर्तृतद्व्यापारयोः साक्षी क्रिया ज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धः सन् कार्यकारणासम्बद्धो द्वितीयोविक्रिय इत्येवं पारमार्थिकदृष्टेर्यथादर्शितत्वं द्रष्टव्यं हत्वापीत्येतच्च हन्तीत्यादि चोभयं दृष्टिद्वयावष्टम्भादुपपन्नमित्युपसंहरति तदुभयमिति केवलमेवात्मानं कर्त्तारं पश्यन् दुर्मतिरित्यत्रात्मविशेषणसमर्पककेवलशब्दसामर्थ्यादात्मनो विशिष्टस्य कर्तृत्वमिति शंकते नन्विति आत्मनोवै शिष्ट्यायोगान्नविशिष्ट-

## शाङ्करभाष्यम् ।

यथा रजतत्वं न शुक्तिकायां यथा वा तलमलवत्त्वं बालैर्गमितमविद्यया नाकाशस्य तथाधिष्ठानादिविक्रियापि तेषामेवेति नात्मनः तस्मात् युक्तमुक्तं अहं कृतत्वबुद्धिलेपाभावात् विद्वान्न हन्ति न निबध्यत इति नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादि हेतुवचनेनाविक्रियत्वमात्मन उक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिशास्त्रादौ सङ्क्षेपत उक्त्वा मध्ये प्रसारितञ्च तत्र तत्र प्रसङ्गं कृत्वा इहोपसंहरति शास्त्रार्थ-पिण्डीकरणाय विद्वान्न हन्ति न निबध्यत इति एवञ्च सति देहभृत्त्वाभि-मानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादि-त्रिविधं कर्मणः फलं न भवतीत्युपपन्नं तद्विपर्ययाच्चेतरेषां भवतीत्येतच्चा-परिहार्य्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः स एष सर्ववेदार्थसारो निपुणमतिभिः पण्डितैर्विचार्य्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभिः शास्त्रन्यायानुसारेण ॥ १७ ॥

## आनन्दगिरिकृतटीका ।

स्यापि कर्त्तृत्वमिति दूषयति नैष दोष इति अविक्रियस्वाभाव्येऽपि कथमात्मनोऽसंहतत्वमि-त्याशङ्क्याह अविक्रियेति अधिष्ठानादिभिरात्मनः संहननेऽपि न कर्तृत्वमविक्रियस्य क्रियान्वय-व्याघातादित्याह संहत्येति संहतत्वानुपपत्तिं व्यक्तीकरोति नत्विति असंहतत्वे फलित-माह इति नेति कथं तर्हि केवलत्वमात्मनि केवलशब्दादुक्तं तदाह तत इति कर्तृत्वमा-त्मनोऽभ्युपपन्नं नास्याविक्रियत्वमुपैतीत्याशङ्क्याह अविक्रियत्वञ्चेति तत्र स्मृतिवाक्यान्युदा-हरति अविकार्योऽयमिति नायं हन्ति न हन्यत इत्यादिवाक्यमादिशब्दार्थः उक्तवाक्यानामा-त्माविक्रियत्वे तात्पर्यं सूचयति असकृदिति निःकलं निःक्रियं शान्तमित्यादिवाक्यं श्रुता-वादिशब्दार्थः यानि वाक्यानि तैरात्मनो विक्रियत्वं दर्शितमिति योजना न्यायतश्च तद्दर्शितमिति पूर्वेण सम्बन्धः न्यायमेव दर्शयति निरवयवमिति न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवन्नापि परतोऽसङ्गस्याकार्यस्य पराधीनत्वायोगादित्यर्थः किंवा-त्मनःस्वनिष्ठावा विक्रियाधिष्ठानादिनिष्ठावानाद्यः स्वनिष्ठाविक्रियानुपपत्तेरात्मनो दर्शित-त्वादित्याशयेनाह विक्रियावत्त्वेति सा चायुक्तेत्युक्तमिति शेषः द्वितीयं दूषयति नेत्यादिना अधिष्ठानादिकृतमपि कर्म तद्योगादात्मन्यागच्छतीत्याशङ्क्य तदागमनं वास्तवमाविद्यं वेति विकल्पाद्यं दूषयति न हीति द्वितीयं निरस्यति यत्त्विति आत्मन्यविद्या-

आनन्दगिरिकृतटीका।

प्रापितं कर्म नात्मीयमित्येतद्दृष्टान्ताभ्यामुपपादयति यथेत्यादिना आत्मनो विक्रियत्वेन कर्तृत्वाभावे फलितमाह तस्मादिति ननु प्रागेवात्मनो विक्रियत्वं प्रतिपादितं तदिह कस्मादुच्यते तत्राह नायमिति शास्त्रादौ प्रतिज्ञातहेतुपूर्वकं संक्षिप्योक्त्वा मध्ये तत्प्रसङ्गं कृत्वा प्रसारितां कर्माधिकारनिवृत्तिमिहोपसंहरतीति सम्बन्धः प्रतिज्ञातस्य हेतुनोपपादितस्यान्ते निगमनं किमर्थमित्याशङ्क्याह शास्त्रार्थेति कर्माधिकारो विदुषो नेति स्थिते तस्य देहाभिमानाभावे सत्यविद्योत्थसर्वकर्मत्यागसिद्धेरनिष्टमिष्टं मिश्रञ्चेति त्रिविधं कर्मफलं सन्न्यासिनां नेति प्रागुक्तं युक्तमेवेति परमप्रकृतमुपसंहरति एवञ्चेति ये पुनरविद्वांसो देहाभिमानिनस्तेषां त्रिविधं कर्मफलमप्रत्यवेति हेतुवचनमिदमर्थं निगमयति तद्विपर्ययाच्चेति अधिष्ठानादिकृतं कर्म नात्मकृतमविदुषामेव कर्माधिकारो देहाभिमानित्वेन तत्त्यागायोगाद्देहाभिमानाभावात्तु विदुषां कर्माधिकारनिवृत्तिरित्युपसंहृतमर्थं संक्षिप्याह इत्येष इति उक्तस्य गीतार्थवेदार्थत्वादुपादेय इत्याह स एष इति कथमयमर्थो वेदार्थोऽपि प्रतिपत्तुं शक्यते तत्राह निपुणेति भाष्यकृता न्यायशक्तिभ्यां विभज्यानुक्तत्वाच्छास्त्रार्थस्योपादेयत्वमित्याशङ्क्याह तत्रेति ॥ १७ ॥

स्वामिकृतटीका।

कस्तर्हि सुमतिर्यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह यस्येति अहमिति कर्तोऽहङ्कृतेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति यद्वा अहंकृतोऽहङ्कारस्य भावः स्वभावः कर्तृत्वाभिनिवेशो यस्य नास्ति शरीरादीनामेव कर्मकर्तृत्वालोचनादित्यर्थः अतएव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवम्भूतो देहादिव्यतिरिक्तात्मदर्शी इमान् लोकान् सर्वानपि प्राणिनो लोकदृष्ट्या हत्वापि विविक्ततया स्वदृष्ट्या न हन्ति नच तत्फलैर्निबध्यते बन्धनं प्राप्नोति किं पुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिस्तस्य बन्धाशङ्केत्यर्थः तदुक्तं। ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति भगवदुक्तत्वादित्यर्थः ॥ १७ ॥

## भाषा अनुवाद।

जिस को कर्मका लेप नहीं है ऐसा सुमति कौन है इस अपेक्षा से कहते हैं कि मैंने यह कर्म किया औ मैं इसका कर्ता हूं ऐसी वासना जिस के नहीं है अथवा शरीर और इन्द्रीमात्र को कर्तृत्व देखने से अहङ्कार स्वभावरूप कर्तृत्वका भी लेश जिसको नहीं है इस हेतु से

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्त्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

शाङ्करभाष्यम् ।

अथेदानीं तेषां कर्म्मणां प्रवर्त्तकमुच्यते ज्ञानमिति ज्ञानं ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते तथा ज्ञेयं ज्ञातव्यं यदापि सामान्येनैव सर्वमुच्यते तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता इत्येतत् त्रयमेषामविशेषेण सर्वकर्म्मणां प्रवर्त्तिका त्रिविधा त्रिःप्रकारा कर्मचोदना ज्ञानादीनां हि त्रयाणां सन्निपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात्ततः पञ्चभिरधिष्ठानादिभि रारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतन्त्रिषु करणादिषु संगृह्यते इत्येतदुच्यते करणं क्रियतेऽनेनेति बाह्यं श्रोत्राद्यन्तस्थम्बुध्यादि धर्म्मप्सिततमं कर्त्तुः क्रियया व्याप्यमानं कर्त्ता करणानां व्यापारयितोपाधिलक्षण इति त्रिविधः त्रिप्रकारः कर्म्मसंग्रहः संगृह्यते अस्मिन्निति संग्रहः कर्म्मणः संग्रहः कर्म्मसंग्रहः कर्म्म एषु हि त्रिषु समवैति तेनायं त्रिविधः कर्म्म संग्रहः ॥ १८ ॥

भाषा अनुवाद ।

जिसकी बुद्धि इष्ट अनिष्ट विचार से सकल कर्म मे आसक्त नहीं होती है ऐसा जो देहादि से भिन्नरूप आत्मदर्शी पुरुष सो प्राणियों को लोकदृष्टि से हनन कर के भी सब मे अभिन्नरूप आत्मदृष्टिहेतु से किसी का भी हनन नहीं करता औ कर्म फल से बन्ध को नहीं पावता है सत्त्वशुद्धि के द्वारा अपरोक्ष कहे प्रत्यक्ष ज्ञान उत्पन्न हेतु से निष्काम कर्म के द्वारा उसको बन्धनकी शङ्का और क्या है यह ५ अध्याय के १० श्लोक मे कहचुकेहैं कि जो कर्मफलकी आसक्ति छोड़ भगवदर्पणपूर्वक कर्म अनुष्ठान करते हैं ते मनुष्य जल के बीच वर्त्तमान पद्मपत्र के समान पुण्य पाप समस्त कर्म से अलग रहते उनसे लिप्त नहीं होते हैं अर्थात् पुण्य औ पाप उनको कभी नहीं लगता है ॥ १७ ॥

आनन्दगिरिकृतटीका।

शास्त्रार्थोपसंहारादनन्तरमर्थमवेत्युक्तमिदानीमिति प्रवर्त्तकोपदेशापेक्षावस्थोक्ता कर्मणां येषु विदुषां नाधिकारोऽविदुषामधिकारस्तेषामित्यर्थः ज्ञानशब्दस्य करणव्युत्पत्त्या ज्ञानमात्रार्थत्वमाह ज्ञानमिति ज्ञेयशब्दस्यापितद्वदेव ज्ञातव्यमात्रार्थत्वमाह तथेति उपाधिलक्षणत्वं तत्प्रधानत्वसुषम्हितत्वं तस्यावस्तुत्वार्थमविद्याकल्पितविशेषणमेतदेव त्रयं सर्वकर्मप्रवर्त्तकमित्याह इत्येतदिति सर्वकर्मणां प्रवर्त्तकमित्यध्याहर्त्तव्यं चोदनेति क्रियायाः प्रवर्त्तकं वचनमिति भाष्यानुसारेण चोदनाशब्दार्थमाह प्रवर्त्तिकेति सर्वकर्मणामिति पूर्वेण सम्बन्धः त्रैविध्यं ज्ञानादीनां प्रागुक्तं कर्मणां चोदनेति विग्रहः तेषां सर्वकर्मप्रवर्त्तकत्वमनुभवेन साधयति ज्ञानादीनामिति हानोपादानादीत्यादिपदेनोपेक्षा विवक्षिता करणमित्यादेस्तात्पर्यमाह तत इति ज्ञानादीनां प्रवर्त्तकत्वादित्यर्थः उक्तेऽर्थे श्लोकभागमवतारयति इत्येतदिति वाक्यमनन्तरस्य द्विविधं करणव्युत्पत्त्या कथयति करणमिति उक्तलक्षणं कर्मैव स्फुटयति कर्त्तुरिति स्वतन्त्रो हि कर्त्ता स्वातन्त्र्यञ्च कारकप्रयोक्तृत्वं तत्प्रयोक्तृत्वमित्याह कर्त्तेति कथमुक्तं त्रिविधं कर्म संगृह्यते तत्राह कर्मेति कर्मणो हि प्रसिद्धं कारकाश्रयत्वमिति भावः ॥ १८ ॥

स्वामिकृतटीका।

हत्वापि न हन्ति न निबध्यत इत्येतदेवोपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलादीनाञ्च त्रिगुणात्मकत्वान्निर्गुणस्य आत्मनस्तत्सम्बन्धो नास्तीत्यभिप्रायेण कर्मचोदनां कर्माश्रयञ्चाह ज्ञानमिति ज्ञानमिष्टसाधनमेतदिति बोधः ज्ञेयमिष्टसाधनं कर्म परिज्ञाता एतज्ज्ञानाश्रयः एवं त्रिविधा कर्मचोदना चोद्यते प्रवर्त्ततेऽनयेति चोदनाज्ञानादित्रयं कर्मप्रवृत्तिहेतुरित्यर्थः यद्वा चोदनेति विधिरुच्यते तदुक्तं भट्टैः चोदना चोपदेशश्च विधिश्चैकार्थवाचिन इति ततश्चायमर्थः उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्त्तत इति तदुक्तं त्रैगुण्यविषया वेदा इति तथा करणं साधकतमं कर्म च कर्त्तुरीप्सिततमं कर्त्ता क्रियानिर्वर्त्तकः कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः करणादि त्रिविधं कारकं क्रियाश्रय इत्यर्थः संप्रदानादीनि कारकत्वन्तु परम्परया क्रियाप्रवर्त्तनमेव केवलं न तु साक्षात् क्रियाया आश्रयः अतः करणादित्रयमेव क्रियाश्रय इत्युक्तं ॥ १८ ॥

भाषा अनुवाद।

कर्मसे अभिनिवेश जो इच्छा औ आसक्ति कहे तनमन से लगेरहना इन दोनो से रहित पुरुष हननकरके भी हनन नही करते औ बन्ध को नहीं प्राप्त होते इस पूर्वोक्त वाक्यमात्र को कहने के लिये कर्म की विधि

ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि॥ १९॥

शाङ्करभाष्यम्।

अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात् सत्त्वरजस्तम गुणभेदतः त्रिविधो भेदो वक्तव्य इत्यारभ्यते ज्ञानं कर्म चेति ज्ञानं ज्ञायतेऽनेनेति कर्म च कर्मक्रिया न कारकं पारिभाषिकमीप्सिततमं कर्म कर्त्ता च निवर्त्तकः क्रियाणां त्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्श-

भाष्य अनुवाद।

है औ कर्मश्रेय कहे कल्याणकर है औ कर्मफल आदि सबको त्रिगुणात्मकत्व हेतुसे गुणातीत कहे गुणसे भिन्न जो आत्मा तिसको इस कर्मविधि आदिके साथ कुछ सम्बन्ध नहीं है इस कहने की अभिप्रायसे कर्मविधि औ कर्मश्रेय कहते हैं कि ज्ञान कहे यही इष्टका साधन है ऐसा जो बोध औ ज्ञेय कहे इष्टके साधनस्वरूप जो कर्म औ परिज्ञाता कहे ऐसे ज्ञानका आश्रयभूत जो मनुष्य यही त्रिविध कर्मविधि कहे प्रेरणा है अर्थात् इसी प्रेरणासे लोग कर्ममें प्रवृत्त होते हैं श्लोकार्थ यह है कि कर्म-विषयक जो विधि सो उक्तरूप त्रिगुणात्मक ज्ञान आदिको अवलम्बन करके प्रवृत्त होते हैं यह दूसरे अध्यायके ४५ श्लोकमे कहा है कि हे अर्जुन त्रिगुणात्मक सकाम अधिकारी के सम्बन्धसे फलसम्बन्ध वेदमे कहा है और करण कहे साधन औ कर्म कहे कर्त्ताको अत्यन्त इच्छाको अधिका ईसे किया जाय जो व्यापार औ कर्त्ता कहे क्रियाका करने हारा और सब कर्म सम्पूर्णरूपसे इसीमे गृहीत होते हैं इस अर्थके सूचन करनेवाले पदको कर्मसंग्रह कहते हैं करण कर्म कर्त्तारूप तीन कारक ये क्रियाके आश्रय हैं और संप्रदान अपादान औ अधिकरण ये तीन केवल परस्पर आक्रमणसे क्रियाके प्रवर्त्तक हैं साक्षात् क्रियाके आश्रयस्वरूप नहीं हैं इसीसे पूर्वोक्त तीन कारणोंको क्रियाके आश्रय स्वरूप कहा है॥ १८॥

## शाङ्करभाष्यम् ।

नार्थं गुणभेदतः सत्त्वादिभेदेनेत्यर्थः प्रोच्यते कथ्यते गुणसंख्याने कापिले शास्त्रे कापिलमपि गुणसंख्यानं शास्त्रन्तदपि गुणभोक्तृविषये प्रमाणमेव परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते तथापि ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनादीयत इति न विरोधः यथावद्यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु वक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः ॥ १९ ॥

### आनन्दगिरिकृतटीका ।

अनन्तरश्लोकनवकतात्पर्यमाह अथेति ज्ञानादिप्रस्तावानन्तर्यमर्थशब्दार्थः इदानीं प्रस्तुतज्ञानाद्यवान्तरभेदापेक्षायामित्यर्थः तेषां गुणभेदानां त्रैविध्ये हेतुमाह गुणात्मकत्वादिति वक्तव्यो वक्ष्यमाणश्लोकं न केनेति शेषः एवं स्थिते प्रथममवान्तरभेदप्रतिज्ञा क्रियत इत्याह इत्यारभ्यत इति कर्तुरीप्सिततमं कर्मेति तत्तत्परिभाष्यते तत्रात्र कर्मशब्दवाच्यमित्याह नेति गुणातिरेकेण विधान्तरं ज्ञानादिषु नेति निर्द्धारयितुमवधारणमित्याह गुणेति ज्ञानादीनां प्रत्येकं गुणभेदप्रयुक्तं त्रैविध्यं प्रमाणमाह प्रोच्यत इति ननु कापिलं पातञ्जलमित्यादिशास्त्रं विरुद्धार्थत्वादप्रमाणं कथमिह प्रमाणीक्रियते तत्राह तथापीति विषयविशेषविरोधेऽपि प्रकृतेऽर्थे प्रामाण्यमविरुद्धमित्यर्थः यद्यपि कापिलादयो गुणवृत्तिविचारे गौणव्यापारस्य भोगादेर्निरूपणे च निपुणास्तथापि कथं तदीयं शास्त्रमत्र प्रमाणीकृतमित्याशङ्क्याह ते हीति ज्ञानादिषु प्रत्येकमवान्तरभेदो वक्ष्यमाणोऽर्थस्तस्य तन्त्रान्तरेऽपि प्रसिद्धकथनं स्तुतिस्तादर्थ्येन कापिलादिमतोपादानमिहोपयोगीत्यर्थः तृतीयपादस्याविरुद्धार्थत्वं निगमयति नेति यथावदित्यादि व्याचष्टे यथान्यायमिति ॥१९॥

### स्वामिकृतटीका ।

ततः किमत आह ज्ञानं कर्म चेति गुणाः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन् ज्ञानञ्च कर्म च कर्त्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतः कर्मादिप्रतिषेधार्थः चतुर्दशाऽध्याये तत्र सत्त्वं निर्मलत्वादिना गुणानां बन्धत्वप्रकारो निरूपितः सप्तदशाध्याये यजन्ते सात्त्विका देवानित्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया सात्त्विक-

सर्वभूतेषु येनैकं भाव मव्यय मीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकं ॥ २० ॥

शाङ्करभाष्यम् ।

ज्ञानस्य तु तावत् त्रिविधत्वमुच्यते सर्वेति सर्वभूतेषु अव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावं वस्तुभावशब्दो वस्तुवाची एकमात्मवस्त्वित्यर्थः अव्ययं नव्येति स्वात्मना तद्धर्मेण वा कूटस्थं नित्यमित्यर्थः ईक्षते येन ज्ञानेन पश्यति तञ्च भावमविभक्तं प्रति देहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः तत् ज्ञानं अद्वैतात्मदर्शनं सात्त्विकं सम्यक्दर्शनं विद्धीति ॥ २० ॥

आनन्दगिरिकृतटीका ।

ज्ञानादीनां प्रत्येकं त्रैविध्यं ज्ञातव्यं प्रतिज्ञाय ज्ञानत्रैविध्यार्थं श्लोकत्रयमवतारयति ज्ञानस्येति तत्र सात्त्विकं ज्ञानमुपन्यस्यति सर्वेति भूतानि कार्यकारणात्मकान्युपाधिजातानि अद्वितीयमखण्डैकरसं प्रत्यगात्मभूतमबाधितन्तत्त्वं ज्ञेयत्वेन विवक्षितमित्याह एकमिति विवक्षितमव्ययत्वं सङ्गिपति कूटस्थेति प्रतिदेहमविभक्तमित्युक्तं व्यनक्ति विभक्तेष्विति तत् ज्ञानमित्यादि व्याकरोति अद्वैतेति ॥ २० ॥

स्वामिकृतटीका ।

स्वभावः सम्पादनीय इत्युक्तं इह तु क्रियाकारकफलादीनामात्मसम्बन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १८ ॥

भाषा अनुवाद ।

अब क्रिया कारक औ फलको गुणात्मतासे सत्त्व रज तमकृत त्रिविध भेद कहा चाहते हैं इस अपेक्षापर कहते हैं कि इसीमे गुणोंके कार्यभेदसे सम्पूर्ण प्रतिपादन करके कहते हैं इस अर्थका सूचन करनेवला संख्यान कहे सांख्यशास्त्र तिसमे सात्त्विक आदि गुणभेदके क्रमसे तथा कायकेद्वारा ज्ञान औ कर्म तथा कर्त्ता ये प्रत्येक त्रिविध स्वरूप कहे गये हैं सोई मै यथावत् कहता हूं तिनको भी तुम सम्यक् श्रवण करो ॥ १८ ॥

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसं॥ २१॥**

### शाङ्करभाष्यम्।

यानि द्वैतदर्शनान्यसम्यक् तानि राजसानि तामसानि चेति न साक्षात् संसारोच्छित्तये भवन्ति पृथक्त्वेनेति पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यत् ज्ञानं नानाभावान् भिन्नमात्मनः पृथक्विधान् पृथक्प्रकारान् भिन्नलक्षणानित्यर्थः वेत्ति विजानाति यत्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्त्तृत्वासम्भवाद्येन ज्ञानेन वेत्तीत्यर्थः॥ २१॥

### आनन्दगिरिकृतटीका।

द्वैतदर्शनान्यपि कानि विद्धवन्ति सत्त्वनिर्द्दिष्टानि सम्यग्भीत्याशङ्क्याह यानीति तेषामसत्त्वे हेतुमाह राजसानीति प्रतिदेहमन्यत्वेन भिन्नात्मनो येन ज्ञानेन जानाति तत् ज्ञानं राजसमिति व्याचष्टे भेदेनेति पृथक्त्वं पृथग्विधत्वञ्च पुनरुक्तमित्याशङ्क्य हेतुहेतुमत्त्वेन विभागं विवक्षित्वाह भिन्नेति ज्ञानस्य ज्ञानकर्त्तृत्वमयुक्तमित्याशङ्क्याह येनेति॥ २१॥

### स्वामिकृतटीका।

तत्र ज्ञानस्य सात्त्विकादित्रैविध्यमाह सर्वेति त्रिभिः सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतं एकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तत् ज्ञानं सात्त्विकं विद्धि॥ २०॥

### भाषा अनुवाद।

इस श्लोकसे लेकर तीन श्लोकसे इस ज्ञानका सात्त्विक आदि भेदसे तीन प्रकार कहते हैं कि ब्रह्मादि स्थावरपर्यन्त परस्पर भिन्नभिन्न सकल वस्तुमे प्राप्त एक निर्विकार स्वरूप अव्यय परमात्मतत्त्व का जिस ज्ञानसे आलोचन किया जाय उस ज्ञानको सात्त्विक ज्ञान जानो॥ २०॥

इस श्लोकमे राजस ज्ञान कहते हैं कि भूत कहे देहधारीमात्रमे नाना भाव अर्थात् सबकी शरीरमे क्षेत्रज्ञ आत्मा पृथक् पृथक् सुखी दुःखी रूपसे भिन्न भिन्न भी जानाजाय जिस ज्ञानसे सो ज्ञान राजस जानो२१

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्।
अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम्॥ २२॥

शाङ्करभाष्यम्।

यत्त्विति यत्तुज्ञानं कृत्स्नवत् समस्तवत् सर्वविषयमिव एकस्मिन् कार्ये-देहे वहिर्वा प्रतिमादौ सक्तं एतावानेवात्मेश्वरो वा नातः परमस्तीति यथा नग्नक्षपणकादीनां शरीरान्तर्वर्त्ति देहपरिमाणो जीव ईश्वरो वा पाषाणादावर्चादिमात्रं इत्येवं एकस्मिन् कार्ये सक्तमहैतुकं हेतुवर्जितं अयुक्तिकं निःप्रमाणकमतत्त्वार्थवत् अयथाभूतोऽर्थः तत्त्वार्थःसोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवदतत्त्वार्थवदहैतुकत्वादेवाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतं तामसानां हि प्राणिनामविवेकिनामीदृशं ज्ञानं दृश्यते॥ २२॥

आनन्दगिरिकृतटीका।

यत्त्विति सक्तत्वमेव व्यनक्ति एतावानिति एकस्मिन् कार्ये ज्ञानस्य सक्तत्वमेव दृष्टान्तेन साधयति यथेत्यादिना यन्निर्युक्तिकन्तदेव ज्ञानस्याभासत्वे कारणमित्याह अहैतुकत्वादिति स्वरूपतो विषयतश्चाभासत्वं फलतो वेत्याह अल्पमिति तामसं ज्ञानमुक्तलक्षणमित्यज्ञानानुभवं प्रमाणयति तामसानां हीति॥ २२॥ त्रिविधं कर्म वक्तुमनन्तरश्लोकत्रय-मित्याह अथेति तत्र सात्त्विकं कर्म निरूपयति नियतमिति॥ २३॥

स्वामिकृतटीका।

राजसं ज्ञानमाह पृथक्त्वेनेति पृथक्त्वेन तु यत् ज्ञानमित्यस्यैव विवरणं सर्वेषु भूतेषु देहेषु नानाभावान् वस्तुत एवानेकान् चेत्रज्ञानपृथग्विधान् सुखदुःखत्वादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तत् ज्ञानं राजसं विद्धि॥ २१॥

तामसं ज्ञानमाह यत्त्विति एकस्मिन् कार्ये देहे प्रतिमादौ वा कृत्स्नवत् परिपूर्णवत् सक्तं एतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तं अहैतुकं निरूपपत्तिकं अतत्त्वार्थवत् पर-मार्थावलम्बनशून्यं अतएवाल्पं तुच्छं अल्पविषयत्वात् अल्पफलत्वाच्च यदेवंभूतं ज्ञानं तत्ता-मसमुदाहृतं॥ २२॥

भाषा अनुवाद।

तामस ज्ञान कहते हैं कि एक कार्यमें अर्थात् स्थूल शरीरमें अथवा प्रतिमा आदिमें सक्त कहे शरीरही आत्मा औ प्रतिमाही ईश्वर है ऐसे

नियतं सङ्गरहित मरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृम् ॥ २४ ॥

शाङ्करभाष्यम् ।

अथकर्मणां त्रैविध्यमुच्यते नियतमिति नियतं नित्यं सङ्गरहितमासक्तिवर्जितमरागद्वेषतःकृतं रागप्रयुक्तेन च कृतं तद्विपरीतं कृतमरागद्वेषतः कृतमफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णास्तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृतं कर्म यत्तत् सात्त्विकमुच्यते ॥ २३ ॥

स्वामिकृतटीका ।

इदानीं त्रिविधं कर्माह नियतमिति त्रिभिः नियतं नित्यतया विहितं सङ्गरहितमभिनिवेशशून्यं अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रु द्वेषेण वा यत् कृतं न भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निःकामेन कर्त्रा यत् कृतं कर्म तत् सात्त्विकमुच्यते ॥ २३ ॥

भाषा अनुवाद ।

निश्चयसे युक्त औ अहेतुक कहे युक्तिविरुद्ध औ परमार्थ अवलम्बन रहित जो ज्ञान उक्त-कारणोंसे अल्पविषय अल्पफलहेतुसे तुच्छ है उस ज्ञानको शिष्ट जनो ने तामसरूप निरूपण किया है ॥ २२ ॥

अब इस श्लोकसे लेकर तीन श्लोकके द्वारा सकल कर्म्मको त्रिविध कहते हैं कि फलप्राप्तिकी इच्छा करते हैं ऐसे जो फलके लोभी जनोंसे किये जाते हैं उनसे भिन्नरूप निःकाम कर्म्मके अनुष्ठान करनेवालोंमे नियत कहे नित्यरूपसे विहित औ अभिनिवेश आसक्तिशून्य जो कर्म्म कियेजायं और जो पुत्र आदिके प्रीत्यर्थ अथवा शत्रुपर क्रोधक्रमसे किये न होंय ऐसे कर्म्म सात्त्विक हैं ॥ २३ ॥

शाङ्करभाष्यम् ।

यत्विति यत्तु कामेप्सुना कर्मफलप्रेप्सुनेत्यर्थः कर्म साहङ्कारेणेति न तत्त्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहङ्कारापेक्षया योहि परमार्थनिरहङ्कार आत्मवित्र तस्य कामेप्सुत्वबहुलायासकर्त्तृत्वप्राप्तिरस्ति सात्विकस्यापि कर्मणोऽनात्मवित् साहङ्कारः कर्त्ता किमुत राजसतामसयोर्लोकेऽनात्मविदपि श्रोत्रिय निरहङ्कारः उच्यते निरहङ्कारो योऽयं ब्राह्मण इति तस्मात्तदपेक्षयैव साहङ्कारेण वेत्युक्तं पुनःशब्दः पादपूरणार्थः क्रियते बहुलायासं कर्म महतायासेन निर्वर्त्यते तत् कर्म राजसमुदाहृतं ॥ २४ ॥

आनन्दगिरिकृतटीका ।

राजसं कर्म निर्दिशति यत्त्विति फलप्रेप्सुना कर्त्ता यत् कर्म क्रियते तद्राजसमित्युत्तरत्र सम्बन्धः तत्त्वज्ञानवता निरहङ्कारेण साहङ्कारेणातत्त्वज्ञेन क्रियते कर्मेति विवक्षां वारयति साहङ्कारेणेति तत्त्वज्ञानवता निरहङ्कारेण कृतं कर्मापेक्ष्य साहङ्कारेणाज्ञेन कृतमेतत् कर्मेति न विवक्ष्यते चेत्तर्हि किमत्र विवक्षितमिति पृच्छति किं तर्हीति यो हि दुरितरहितः श्रोत्रियो लोकादनपेतस्तस्य यदहङ्कारवर्जितं कर्म तदपेक्षयेदं साहङ्कारेण कृतं कर्मेत्युक्तमित्याह लौकिकेति ननु तत्त्वज्ञानवतो निरहङ्कारस्य कर्मकर्तृत्वमपेक्ष्य साहङ्कारेणेत्यादि किं नेष्यते तत्राह यो हीति विशेषणान्तरबशादेतत्तत्त्वविदो निवारितत्वाच्च तदपेक्षमिदं विशेषणमित्यर्थः साहङ्कारस्यैव राजसे कर्मणि कर्तृत्वमित्येतत् कैमुतिकन्यायेन साधयति सात्विकस्येति नन्वात्मविदोऽन्यस्य निरहङ्कारस्यायोगात् कथं तदपेक्षया साहङ्कारेणेत्युक्तं तत्राह लोक इति ॥ २४ ॥

स्वामिकृतटीका ।

राजसं कर्माह यत्विति यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता साहङ्कारेण वा-मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहङ्कारयुक्तेन च क्रियते तच्च पुनर्बहुलायासं-मतिक्लेशयुक्तं तत् कर्मराजसमुदाहृतं ॥ २४ ॥

भाषा अनुवाद ।

और कर्म्मफलकी प्राप्तिका इच्छुक अथवा अहङ्कारी कहें जो अपने समान और को नही मानता है ऐसे अहङ्कारयुक्त मनुष्यसे कियेगये अथवा

अनुबन्धं क्षयं हिंसा मनवेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म यत्तत्तामस मुच्यते ॥ २५ ॥
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥ २६ ॥

शाङ्करभाष्यम्।

अनुबन्धमिति अनुबन्धः पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते तञ्चानुबन्धं क्षयं यस्मिन् कर्म्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं हिंसां प्राणिपीडाञ्चानपेक्ष्य च पौरुषं पुरुषकारं शक्नोमीदं कर्मसमापयितुमित्येव-मात्मसामर्थ्यमित्येतान्यनुबन्धादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत् तत् तामसन्तमोनिर्वृत्तिमुच्यते ॥ २५ ॥

मुक्तेति मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गोऽनहम्वादी नाहं वदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साहमुद्यमस्ताभ्यां समन्वितः

आनन्दगिरिकृतटीका।

सम्प्रति तामसं कर्मोदाहरति अनुबन्धमित्यादिना ॥ २५ ॥

स्वामिकृतटीका।

तामसं कर्माह अनुबन्धमिति अनुबध्यत इत्यनुबन्धं पश्चाद्भावि शुभाशुभं क्षयं वित्तक्षयं हिंसां परपीड़ां पौरुषञ्च स्वसामर्थ्यमनपेक्ष्यापर्य्यालोच्य केवलं मोहादेव यत् कर्मारभ्यते तत्तामसमुदाहृतं ॥ २५ ॥

भाषा अनुवाद।

जो कर्म्म अतिक्लेशयुक्त होय उन्होंको शिष्ट जन अर्थात् महात्मा पुरुष राजस स्वरूप कहते हैं ॥ २४ ॥

अब तामस कर्म्म कहते हैं कि पश्चात् बन्धकारै ऐसे अनुबन्ध कहे पश्चात् भावी शुभ अशुभ औ धनकी व्यय औ अपनी सामर्थ्य न विचारि केवल मोहसे जो कर्म्म आरम्भ किये जायं वेई तामस कर्म्म है ॥ २५ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः ॥ २७ ॥

शाङ्करभाष्यम् ।

संयुक्तो धृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योः निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तफलरागादिना युक्तो यः स निर्विकार उच्यते एवम्भूतः कर्त्ता यः स सात्त्विक उच्यते ॥ २६ ॥

रागीति रागी रागो यस्यास्तीति रागी कर्मफलप्रेप्सुः कर्मफलार्थलुब्धः परद्रव्येषु सञ्जाततृष्णः तीर्थादौ च स्वद्रव्यापरित्यागी हिंसात्मकः परपीडकस्वभावः अशुचिर्वाह्यान्तःशौचवर्जितो हर्षशोकान्वितः इष्टप्राप्तौ हर्षोऽनिष्टप्राप्ताविष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यां समन्वितः संयुक्तः

आनन्दगिरिकृतटीका ।

इदानीं कर्तृत्रैविध्यं प्रस्तावादौ सात्त्विकं कर्त्तारं दर्शयति मुक्तेति सङ्गो नाम फलाभिसन्धिर्वा कर्तृत्वाभिमानो वा नाहंवदनशीलः कर्त्ताहमिति वदनशीलो न भवतीत्यर्थः धारणं धैर्यं क्रियमाणस्य कर्मणो यदि फलासिद्धिस्तर्हि नानुष्ठानविश्रम्भः सम्भवेदित्याशङ्क्याह केवलमिति फलरागादिनेत्यादिशब्देन कर्मरागो गृह्यते अयुक्त इति छेदः ॥२६॥

स्वामिकृतटीका ।

कर्त्तारं त्रिविधमाह मुक्तसङ्ग इति त्रिभिः मुक्तसङ्गस्त्यक्ताभिनिवेशः अनहंवादी गर्वोक्तिरहितः धृतिर्धैर्यं उत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तः आरब्धस्य कर्मणः सिद्धअसिद्धौ च निर्विकारो हर्षविषादशून्यः स एवम्भूतः कर्त्ता सात्त्विक उच्यते ॥ २६ ॥

भाषा अनुवाद ।

इस श्लोकसे ले तीन श्लोकसे कर्म्म कर्त्ता सबको त्रिविध करके कहते हैं कि कर्म्म अनुष्ठाई पुरुष कर्त्तृत्व अभिनिवेश बुद्धिरहित औ गर्ववचनरहित औ धैर्य उत्साह जो उद्यम इन दोनोके द्वारा युक्त समस्त कर्म्मने सिद्धि असिद्धि की अपेक्षा हर्षविषाद से शून्य होयं ऐसे कर्त्ता पुरुषोंको सात्त्विक स्वरूप कहते हैं ॥ २६ ॥

**अयुक्तः प्राकृतस्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ॥ २८ ॥**

शाङ्करभाष्यम् ।

तस्यैव च कर्मणः सम्पत्तिविपत्त्योर्हर्षशोकौ स्यातां ताभ्यां समन्वितः संयुक्तो यः कर्त्ता स राजसः परिकीर्त्तितः ॥ २७ ॥

अयुक्त इति अयुक्तोऽसमाहितः प्राकृतोऽत्यन्तासंस्कृतबुद्धिः प्रकृतिपरवशो वालिशः स्तब्धो दण्डवत् न नमति कस्मैचिच्छठः मायावी शक्तिगूहनकारी मायावान्नैःकृतिकः परवृत्तिच्छेदनपरः अलसोऽप्रवृत्तिशील: कर्त्तव्येष्वपि विषादी सर्वदा अवसन्नस्वभावः दीर्घसूत्री च कर्त्तव्यानां दीर्घप्रसारणः सर्वदानन्दस्वभावः यदद्य श्वो वा कर्त्तव्यं तन्मासेनापि न करोति यश्चैवम्भूतः स कर्त्ता तामस उच्यते ॥ २८ ॥

आनन्दगिरिकृतटीका ।

राजसं कर्त्तारं कथयति रागीति कर्मविषयो रागः कर्मफलप्रेप्सुरिति फलरागस्य पृथक् कथनात् स्वाभिप्रायाप्रकटीकरणपूर्वकं परपीडनं परवृत्तिविच्छेदनं तेन स्वार्थपर इत्यर्थः ॥ २७ ॥

दीर्घं सूत्रयितुं शीलमस्येति व्युत्पत्तिं गृहीत्वा विवक्षितार्थमाह कर्त्तव्यानामिति एवं क्रियमाणे सति अनिष्टमिदं कथञ्चिदापद्येत यदा पुनरेवं क्रियते तदा त्वनिष्टमेव

स्वामिकृतटीका ।

राजसं कर्त्तारमाह रागीति रागी पुत्रादिप्रीतिमान् कर्मफलप्रेप्सुः कर्मफलकामी लुब्धः परस्वाभिलाषी हिंसात्मको मारकस्वभावः अशुचिः विहितशौचशून्यः लाभालाभयोर्हर्षशोकाभ्यां समन्वितः कर्त्ता राजसः ॥ २७ ॥

भाषा अनुवाद ।

**और पुत्र आदिमे स्नेहयुक्त औ कर्म्मफलका कामी औ परधनका अभिलाषी औ निर्दय स्वभाव औ शौचरहित औ हानि लाभमे शोक हर्षयुक्त कर्म्मकारी मनुष्य राजस स्वरूप कहे रजोगुणी हैं ॥ २७ ॥**

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय॥ २९॥**

## शाङ्करभाष्यम्।

बुद्धेर्भेदमिति बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतः त्रिविधं शृणु इति सूत्रोपन्यासः प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत् पृथक्त्वेन विवेकतो धनञ्जय दिग्विजये मानुषं दैवञ्च प्रभूतं धनं जयते तेनासौ धनञ्जयोऽर्जुनः॥ २९॥

## आनन्दगिरिकृतटीका।

सम्भावनोपनीतमिति चिन्तापरम्परायां मन्तरवृत्तिरित्यर्थः तदेव स्पष्टयति यदृच्येति॥२८॥

ज्ञानादीनां प्रत्येकं त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेस्तद्वृत्तेश्च धृत्याख्यायास्त्रैविध्यं सूचयति बुद्धेरिति सूत्रविवरणं प्रतिजानीते प्रोच्यमानमिति अर्जुनस्य धनञ्जयत्वं व्युत्पादयति दिगिति॥ २९॥

## स्वामिकृतटीका।

तामसं कर्त्तारमाह अयुक्त इति अयुक्तोऽनभिहितः प्राकृतो विवेकशून्यः स्तब्धोऽनम्रः शठः शक्तिगूहनकारी नैष्कृतिकः परापमानी अलसोऽनुद्यमशीलः विषादी शोकशीलः यदृच्छ श्व वा कर्त्तव्यं तन्मासेनापि न सम्पादयति यः स दीर्घसूत्री एवंभूतः कर्त्ता तामसः कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं कर्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यमुक्तं ज्ञातव्यं बुद्धेस्त्रैविध्येन च करणस्याप्युक्तं भविष्यति॥ २८॥

## भाषा अनुवाद।

और अयुक्त कहे असावधान औ प्राकृत कहे विवेकरहित औ स्तब्ध जो अनम्र स्वभाव औ शठ कहे कर्म्मचोर औ नैःकृतिक कहे परका अपमान करनेवाला तथा आलसी औ विषादी जो सदा शोगी औ दीर्घसूत्री कहे जो कर्म्म तुर्त करनेका होय उसे महीनों टाले ऐसे मनुष्य तामस कर्त्ता कहावते हैं ऐसेही कर्त्ताको त्रैविध्यसे ज्ञाताभी तीनप्रकार हें औ कर्म्मकी त्रैविध्यसे ज्ञेयमात्रको त्रैविध्य कहा औ बुद्धि त्रिविध कहनेसे कारणभी तीन प्रकारके हैं॥ २८॥

**प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाऽभये।**
**बन्धं मोक्षञ्च यो वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥३०॥**

## शाङ्करभाष्यम्।

प्रवृत्तिञ्चेति प्रवृत्तिञ्च प्रवृत्तिः प्रवर्त्तनं बन्धहेतुः कर्ममार्गः निवृत्तिञ्च निवृत्तिर्मोक्षहेतुः संन्यासमार्गः बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ति कर्म्म संन्यासमार्गाविल्यवगम्यते अथवा कार्य्याकार्य्ये विहितप्रतिषिद्धे लौकिके वा शास्त्रबुद्धेर्वा कर्त्तव्याकर्त्तव्ये कारणाकारणे इत्येतत् कस्य देशकालाद्यपेक्षया विजानाति दृष्टादृष्टार्थानां कर्मणां भयाभये बिभेत्यस्मादिति भयं तद्विपरीतमभयं भयञ्चाभयञ्च भयाभये दृष्टादृष्टयोर्भयाभययोः कारणे इत्यर्थः बन्धं सहेतुकं मोक्षञ्च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती धृतिरपि वृत्तिविशेष एव बुद्धेः ॥ ३० ॥

### आनन्दगिरिकृतटीका।

तत्रादौ सात्त्विकीं बुद्धिं निर्दिशति प्रवृत्तिञ्चेति प्रवृत्तिराचरणमात्रं अनाचरणमात्रञ्च निवृत्तिरिति किं नेष्यते तत्राह बन्धेति यस्मिन् वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वाच्च सन्यासमार्गस्य तावेवात्र ग्राह्याविल्यर्थः करणाकरणयोर्निर्विषयत्वायोगाद्विषयापेक्षामवतार्य्य योग्यं विषयं निर्दिशति कस्येति अनिष्टसाधनं भयमिष्टसाधनमभयमिति विभजते भयेति वास्त्यादिज्ञानमात्रस्य बुद्ध्यन्तरेऽपि सम्भवाद्विशेषणे न बुद्धिशब्दितस्य ज्ञानस्य प्रागेव त्रैविध्यप्रतिपादनात् किमिति

### स्वामिकृतटीका।

इदानीं बुद्धेर्धृतेश्च त्रैविध्यं प्रतिजानीते बुद्धेर्भेदमिति स्पष्टोऽर्थः ॥ २९ ॥

## भाषा अनुवाद।

अब बुद्धि औ धृति कहे धैर्य्य को त्रैविध्य कहेने को प्रतिज्ञा करते हैं कि हे धनञ्जय अर्जुन बुद्धि औ धैर्य्य के सत्त्व आदि गुण क्रमसे तीन भेद जो हैं उनको मै भिन्नभिन्न कहता हूं तुम सावधानहोय सुनो। २९॥

यया धर्ममधर्मं च कार्य्यञ्चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

शाङ्करभाष्यम् ।

ययेति यया धर्मं शास्त्रचोदितं अधर्मञ्च प्रतिषिद्धं कार्य्यञ्चाकार्य्यमेव च पूर्वोक्ते एव कार्य्याकार्य्ये अयथावत्सर्वतो निर्णयेन न प्रजानाति या बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

आनन्दगिरिकृतटीका ।

बुद्धेरिदानीं त्रैविध्यं प्रतिज्ञाय व्युत्पाद्यते तत्राह ज्ञानमिति तर्हि ज्ञानेन गतत्वान्न पुनर्धृतिव्युत्पादनीयेत्याशङ्क्याह इतिरपीति विशेषशब्देन ज्ञानाद्यादेतिरिष्टा ॥ ३० ॥

कार्य्याकार्य्ययोर्धर्माधर्माभ्यां पौनरुक्त्यं परिहरति पूर्वोक्ते इति पूर्वश्लोके कार्य्याकार्य्यशब्दाभ्यां दृष्टादृष्टार्थानां कर्मणां करणाकरणे निर्दिष्टेतयोरेवात्रापि ग्रहान्न धर्माधर्माभ्यां पूर्वपर्य्यायाभ्यागतार्थतेत्यर्थः या बुद्धिर्यया बुद्ध्या बोद्धा निर्णयेन न जानातीत्यर्थः ॥ ३१ ॥

स्वामिकृतटीका ।

तत्र बुद्धेस्त्रैविध्यमाह प्रवृत्तिमिति त्रिभिः प्रवृत्तिं धर्मे निवृत्तिमधर्मे यस्मिन् देशे काले च यत् कार्य्यमकार्य्यञ्च भयाभये कार्य्याकार्य्यनिमित्तौ अर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति सा सात्त्विकी यया पुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥ राजसीं बुद्धिमाह ययेति अयथावत् सन्देहास्पदत्वेनेत्यर्थः स्पष्टमन्यत् ॥ ३१ ॥

भाषा अनुवाद ।

अब इस श्लोक से ले तीन श्लोक पर्य्यन्त बुद्धि की त्रैविध्य कहते हैं कि धर्म में प्रवृत्ति औ अधर्म से निवृत्ति औ देश कालके अनुसार जो कर्त्तव्य औ अकर्त्तव्य काज अकाज जानि अर्थ अनर्थ का ज्ञान तथा बन्ध औ मोक्षही वा कैसे होती है इस विचार से भय अभय ये सब बुद्धि कहे अन्तःकरण जानि सके ऐसी जो बुद्धि सात्त्विकी है इस जगह बुद्धि के द्वारा पुरुष सब जानता है यह कहने को थे पर वह रीति छोड़कर इसी तरह से कहा तो करणहीको कर्त्ता करके ठहराया है ॥ ३० ॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

शाङ्करभाष्यम् ।

अधर्ममिति अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसा वृताऽसती सर्वार्थान् सर्वानेव ज्ञेयपदार्थान्विपरीतानेव जानाति-बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

आनन्दगिरिकृतटीका ।

धर्मशब्दो नपुंसकलिङ्गोऽपीत्यभिप्रेत्य धर्ममित्युक्तं तमसा वृताऽविवेकेन वेष्टितेत्यर्थः कार्याकार्यादीन्ताननुक्तांश्च संग्रहीतुं सर्वार्थानित्युक्तं तद्व्याचष्टे सर्वानेवेति विपरीतांश्चेति चकारमवधारणे गृहीत्वा विपरीतानेवेत्युक्तम् ॥ ३२ ॥

स्वामिकृतटीका ।

तामसीं बुद्धिमाह अधर्ममिति विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः बुद्धिरन्तःकरणं पूर्वोक्तं ज्ञानन्तद्वृत्तिं धृतिरपि तद्वृत्तिरेव यद्वा अन्तःकरणस्य धर्मिणो बुद्धिरध्यवसाय-लक्षणा वृत्तिरेव इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तं उपलक्षणमेतदन्यासां ॥ ३२ ॥

भाषा अनुवाद ।

और हे पार्थ अर्जुन जिस बुद्धि से धर्म अधर्म्म औ काज अकाज अय-थावत् कहे ठीक ठीक न जाना जाय सो बुद्धि राजसी है ॥ ३१ ॥

और तमोगुण से आवृत कहे घेरी जो बुद्धि अधर्मको भी जानि धर्म के सकल विषय को विपरीत कहे उलटा जाने ऐसी विपरीत ग्रहण करनेवाली बुद्धि तामसी है यहां भी कारणता बुद्धिको उचित थी पर कर्ता रूप से कहा है अथवा धर्मरूप अन्तःकरण की वृत्ति बुद्धि औ निश्चय तथा इच्छा द्वेष आदिरूप अन्तःकरण की वृत्ति बहुतभी रहते धर्म अधर्म औ भय अभय की साधन रूप बुद्धि को प्रधान किया है वाकी और सब उपलक्षण रूपसे त्रिविध कहे गये हैं ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रिय क्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

### शाङ्करभाष्यम् ।

धृत्येति धृत्या यथाऽव्यभिचारिण्येति व्यवहितेन सम्बन्धः धारयते किं मनः प्राणेन्द्रियक्रियाः मनश्च प्राणाश्चेन्द्रियाणि तेषां क्रियास्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयति धृत्या हि धार्य्यमाणानुच्छास्त्रमार्गविषया भवन्ति योगेनेति योगेन समाधानेनाव्यभिचारिण्या नित्यसमाधानाऽनुगतयेत्यर्थ एतदुक्तं भवत्यव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रियाः धार्य्यमाणाः योगेन धारयतीति येवंलक्षणा धृतिःसा पार्थ सात्त्विकी ॥ ३३ ॥

### आनन्दगिरिकृतटीका ।

इदानीं धृतेस्त्रैविध्यं व्युत्पिपादयिषुरादौ सात्त्विकीं धृतिं व्युत्पादयति धृत्येति निर्दिष्टानाञ्चेष्टानां कथं धृत्या धारणं तत्राह ता इति तदेवानुभवेन साधयति धृत्या हीति ध्रियतेऽनयेति धृतिर्यत्नविशेषः तया धृत्वा धार्यमाणा यथोपदिष्टाश्चेष्टाः शास्त्रमतिक्रम्य नार्थान्तरावगाहिन्यो भवन्तीत्यर्थः धृतिमेव समाध्यविनाभूतत्वेन विशिनष्टि योगेनेति ननु धृतेर्नियमेन समाध्यनुगतत्वं कथमुक्तक्रियाधारणोपयोगीत्याशङ्क्याह एतदिति उक्तक्रियाधार्यमाणा योगेन ब्रह्मणि समाधानेनैकाग्र्येणाव्यभिचारिण्याऽविनाभूतया धृत्या धारयत्वम् तदविनाभावाभावे नियमेन तद्धारणासिद्धेरित्यर्थः ॥ ३३ ॥

### स्वामिकृतटीका ।

इदानीं धृतेस्त्रैविध्यमाह धृत्येति त्रिभिः योगेन चित्तैकाग्र्येण हेतुनाऽव्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्य इन्द्रियाणाञ्च क्रिया धारयते नियच्छति सा धृतिःसात्त्विकी ॥ ३३ ॥

### भाषा अनुवाद ।

अब इस श्लोक को अवधि करके तीन श्लोक से धृति की त्रैविध्य कहते हैं कि हे अर्जुन योग कहे चित्तकी एकाग्रता से औरऔर विषयको धारण न करके जो धैर्य से मन औ प्राण तथा सब इन्द्रियों की सकल क्रिया की हुई जाय वही सतोगुणी है ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
नविमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥३५॥

शाङ्करभाष्यम् ।

ययेति यया तु धर्मकामार्थान् धर्मश्च कामश्चार्थश्च ते धर्मकामार्थाः तान् धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यकर्त्तव्यरूपानेव धारयति हे अर्जुन प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकांक्षी च भवति यः पुरुषः तस्य धृतिर्या सा पार्थ राजसी ॥ ३४ ॥

ययेति यया स्वप्नं निद्राम्भयन्त्रासं शोकं सन्तापं विषादमवसादं विषन्नवदनतां मदं विषयसेवां आत्मनो बहु मन्यमानो मत्त इव मदमेव च मनसि नित्यमेव कर्त्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषो यस्तस्य धृतिर्या सा तामसी मता ॥ ३५ ॥

आनन्दगिरिकृतटीका ।

राजसीं धृतिं दर्शयति यया त्विति तेषां धारणप्रकारमभिनयति मनसीति फलाकाङ्क्षीति कस्य विशेषणं तत्राह यः पुरुष इति ॥ ३४ ॥
तामसीं धृतिं व्याचष्टे ययेति शोकं प्रियवियोगनिमित्तं सन्तापं विषन्नता-

स्वामिकृतटीका ।

राजसीं धृतिमाह यया त्विति यया तु धृत्या धर्मार्थकामान् प्राधान्येन धारयते न विमुञ्चति तत्प्रसङ्गेन तत्फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

भाषा अनुवाद ।

अब राजसी धृति कहते हैं कि हे अर्जुन तिससे भिन्न जो धृति कि जिससे धर्म अर्थ औ काम सब श्रेष्ठ रूप से धारण किये जायं परित्यक्त न होंय औ उनके सङ्गम से धर्मादि के फलकी आकांक्षा भी होय ऐसी धृति का नाम राजसी हैं ॥ ३४ ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति ॥ ३६ ॥

शाङ्करभाष्यम् ।

गुणभेदेन क्रियाणां कारकाणाञ्च त्रिविधा भेद उक्तोऽथेदानीं फलस्य सुखस्य त्रिविधो भेद उच्यते सुखमिति सुखन्तु इदानीं त्रिविधं शृणु समाधानं कुर्वित्येतन्मे मम भरतर्षभ अभ्यासात् परिचयादावृत्ते रमते रतिं प्रतिपद्यते यत्र यस्मिन् सुखानुभवे दुःखान्तञ्च दुःखावसानं दुःखोपशमञ्च निश्चयेन प्राप्नोति ॥ ३६ ॥

आनन्दगिरिकृतटीका ।

मिन्द्रियाणां ग्लानिः विषयसेवा कुमार्गप्रवृत्तेरूपलक्षणमुक्तं स्वप्नादिमदान्तं सर्वमेव कर्त्तव्यतयात्मनो बहु मन्यमानो धनर्थ नित्यमेव कुर्वन्दुर्मेधाः न मुञ्चति किन्तु धारयत्येवेति योजना ॥ ३५ ॥

इतिमनूद्यानन्तरश्लोकतात्पर्यमाह गुणेत्यादिना क्रियमाणं कारकाणां गुणतस्त्रैविध्य-कृतनन्तरं फलस्य सुखस्य त्रैविध्योक्त्यवसरे सतीत्याह इदानीमिति हेयोपादेयभेदार्थं त्रैविध्यं समाधानमैकाग्र्यं मम वचनादिति शेषः यत्र त्वभयत्र सम्बध्यते तत् त्रिविधं सुखमिति पूर्वेण सम्बन्धः ॥ ३६ ॥

स्वामिकृतटीका ।

तामसीं धृतिमाह ययेति दुष्टा अविवेकबहुला मेधा यस्य स दुर्मेधाः पुरुषो यया धृत्या स्वप्नादीन्न विमुञ्चति पुनः पुनरावर्त्तयति स्वप्नोऽत्र निद्रा सा धृतिस्तामसी ॥ ३५ ॥
इदानीं सुखस्य त्रैविध्यं प्रतिजानीते सुखन्त्विति स्पष्टोऽर्थः ॥ ३६ ॥

भाषा अनुवाद ।

अब तामसी धृति कहते हैं कि हे अर्जुन जिस मनुष्यकी दुर्मेधा कहे अविवेकिनी नीच बुद्धि है और वह बुद्धि और मनुष्य जिस धृति कहे धैर्य से निद्रा औ भय शोक तथा विषाद कहे दुःख औ मद इनको नहीं छोडता है वह धृति तामसी है ॥ ३५ ॥

अब सुख भी तीन प्रकार का है यह प्रतिज्ञा आधे श्लोक से कहते

# यत्तदग्रे विषमिव परिणामेऽमृतोपमम्।
# तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

## शाङ्करभाष्यम्।

तदिति यत् सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमन्तत् सुखं सात्त्विकं प्रोक्तं विद्वद्भिरात्मनो बुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सलिलवत् स्वच्छता ततो जातमात्मबुद्धिप्रसादजमात्मविषया वात्मावलम्बना बुद्धिरात्मबुद्धिस्तत्प्रसादे प्रकर्षाद्वा जातमित्येतत्तस्मात् सात्त्विकं तन्मतं ॥ ३७ ॥

### आनन्दगिरिकृतटीका।

तत्र सात्त्विकं सुखमादेयत्वेन दर्शयति यत्तदिति प्रथमसन्निपातं विभजते ज्ञानेति कुतस्तस्य दुःखात्मकत्वं तत्राह अत्यन्तेति दुःखात्मकत्वे दृष्टान्तमाह विषमिवेति ज्ञानादिपरिपाकावस्थापरिणामस्तस्मिन् सति ततो जातमिति योजना तत्रैव हेत्वन्तरमाह आत्मन इति आत्मबुद्धिशब्दार्थान्तरमाह आत्मविषयेति अन्तःकरणनैर्मल्याद्वा सम्यग् ज्ञानप्रकर्षाद्वा जातत्वादिति तच्छब्दार्थः ॥ ३७ ॥

### स्वामीकृतटीका।

तत्र सात्त्विकं सुखमाह अभ्यासादिति सार्द्धेन यत्र यस्मिन् सुखे अभ्यासाद्रमते न तु विषयसुख इव सहसा रतिं प्राप्नोति यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति कीदृशं यत्तत् किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वात् दुःखावहमिव भवति परिणामे त्वमृतसदृशं आत्मविषया बुद्धिस्तस्याःप्रसादो रजस्तमोमयत्यागेन स्वच्छतयावस्थानं ततो जातं यत् सुखं तत् सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

## भाषा अनुवाद।

हे कि हे भरतवंशी अर्जुन अब त्रिविध सुख भी हम से सुनो कि जो पुरुष नित्य अभ्यास के हेतु से सुख भोग करता है और विषयी लोगों के समान विषय की वासना से अति हठ धरके सुखभोग नहीं करता प्रीतिको नहीं प्राप्त होता है ऐसा जो सुख भोगी पुरुष सो हठात् दुःख के अन्तको प्राप्त होता अर्थात् दुःख से छूट जाता है। ३६॥

**विषयेन्द्रिय संयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८ ॥**

### शाङ्करभाष्यम् ।

विषयेति विषयेन्द्रियसंयोगाद्यत् सुखं जायते प्रथमं प्रथमक्षणेऽमृतोपमम-मृततमं परिणामे विषमिव बलवीर्य्यरूपप्रज्ञामेधाधन नोत्साहहानिहेतुत्वाद-धर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत् सुखं राजसं स्मृतं ॥ ३८ ॥

आनन्दगिरिकृतटीका ।

राजसं सुखं हेयत्वाय कथयति विषयेति बलं सङ्घातसामर्थ्यं वीर्यं पराक्रमकृतं यशोरूपं शरीरसौन्दर्य्यं प्रज्ञा श्रुतार्थग्रहणसामर्थ्यं मेधा गृहीतार्थस्याविस्मरणेन धारण-शक्तिः धनं गोहिरण्यादि उत्साहस्तु कार्यं प्रत्युपक्रमादिः एतेषां नाशकत्वाद्वैषयिकं सुखं विषमित्यर्थः तत्रैव हेत्वन्तरमाह अधर्मेति ॥ ३८ ॥

स्वामिकृतटीका ।

राजसं सुखमाह विषयेति विषयाणामिन्द्रियाणाञ्च संयोगात् यत्तत् प्रसिद्धं स्त्रीसंसर्गादिसुखं अमृतमुपमा यस्य तादृशं भवति अग्रे प्रथमं परिणामे च विषतुल्यं इहामुत्र च दुःखहेतुत्वात् तत् सुखं राजसं स्मृतं ॥ ३८ ॥

### भाषा अनुवाद ।

और वह सुख कैसा है इसपर कहते हैं कि जो सुख अग्र कहे प्रथम विष के तुल्य है औ अन्तको अमृत समान होताहै वह सुख सात्विक है औ आत्मा तथा बुद्धि की प्रसन्नतासे उत्पन्न है अर्थात् मलरूप रजोगुण तमोगुण तिनको सतोगुण दूर करै है तब वह सुख प्रगटै है ॥ ३७ ॥

अब राजस सुख कहते हैं कि विषय वासना सहित इन्द्रियोंके संयोग से जो प्रियसङ्गम आदि सुख होता है और पहिले तो अमृतके तुल्य लगता है औ अन्तको दुःखदाई हेतुसे विष समान होता सोई सुख राजस है ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतं ॥ ३९ ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

शाङ्करभाष्यम् ।

यदग्रे चेति यदग्रे चानुबन्धे चावसानोत्तरकाले च सुखं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा चालस्यञ्च प्रमादश्च तेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थन्तत्तामससमुदाहृतं ॥ ३९ ॥

अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते नेति न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादिसत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत् स्याद्भवेन्न तदस्तीति पूर्वेण सम्बन्धः सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थ उक्तः वृक्षरूपपरिकल्पनतया चोर्ध्वमूलमित्यादिना तञ्चासङ्गशस्त्रेण दृढ़ेन छित्वा

आनन्दगिरिकृतटीका ।

तामसं सुखं त्यागार्थमेवोदाहरति यदग्रे चेति अनुबन्धशब्दार्थमाह अवसानेति मोहनं मोहकरन्तदुत्पत्तिहेतुमाह निद्रेति ॥ ३९ ॥

स्वामिकृतटीका ।

तामसं सुखमाह यदिति अग्रे च प्रथमक्षणे अनुबन्धे च पश्चादपि यत् सुखमात्मनो मोहकरं तदेवाह निद्रा च आलस्यञ्च प्रमादश्च कर्त्तव्यावधारणराहित्येन मनोग्राह्यमेतेभ्य उत्तिष्ठति यत् सुखन्तं तत्तामसमुदाहृतं ॥ ३९ ॥

भाषा अनुवाद ।

तामस सुख कहते हैं कि अग्रे कहे पहिले औ अनुबन्ध कहे पीछेभी जो सुख मोहकारी विशेषसे निद्रा औ आलस्य तथा प्रमाद कहे चित्तकी असावधानी औ मनकी जडतासे जोसुख होय सोई तामस सुख है ॥ ३९ ॥

**ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

आनन्दगिरिकृतटीका ।

क्रियाकारकफलात्मनः संसारस्य प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा संसारान्तर्भूतमेव किञ्चित् गुणत्रयासम्बन्धमपि कश्चिद्भविष्यतीत्याशङ्क्याह अथेति संसारस्य सर्वस्यैव गुणत्रयस्य संस्पृष्टत्वं प्रकरणं अन्यद्वाऽप्राणीत्यत्राप्राणिशब्देन प्रसिद्धा स्थावरादि गृह्यन्ते प्रकरणार्थमुपसंहृतमनुवदति सर्वं इति तस्यानेकात्मकत्वेन हेयत्वं सूचयति क्रियेति निर्गुणादात्मनो वैलक्षण्याच्च हेयतेत्याह सत्त्वेति अनर्थत्वाच्च तस्य त्याज्यत्वमनर्थत्वञ्चाविद्याकल्पितत्वेनावस्तुत्वादित्याह अविद्येति न केवलमष्टादशे संसारो दर्शितः किन्तु मध्यदशेऽपीत्याह वृक्षेति चकारात् सर्वः संसारः इत्युच्यते संसारध्वस्तिसाधनं सम्यक्ज्ञानञ्च तत्रैवोक्तमित्याह असङ्गेति वृत्तमनूद्यानन्तरसन्दर्भतात्पर्यमाह तत्र चेति उक्तो विनिवर्त्तयिषितः संसारः सति सप्तम्या परामृश्यते सर्वो हि संसारो गुणत्रयात्मको न च गुणानां प्रकृत्यात्मकानां संसारकारणीभूतानां निवृत्तिर्युक्ता प्रकृतेर्नित्यत्वादित्याशङ्कायां स्वधर्मानुष्ठानात्तत्त्वज्ञानोत्पन्ना गुणानामज्ञानात्मकानां निवृत्तिर्यथा भवति तथा स्वधर्मजातं वक्तव्यमित्युत्तरग्रन्थप्रवृत्तिरित्यर्थः तत्तद्वर्णप्रयुक्तधर्मजातमुपदेशे चोपसंहारप्रकरणप्रकोपः स्यादित्याह सर्वस्येति उपसंहृते गीताशास्त्रार्थे यद्यपि सर्वो वेदार्थः स्मृत्यर्थश्च सर्व उपसंहृतस्तथापि मुमुक्षुभिरनुष्ठेयमस्ति वक्तव्यमवशिष्टमित्याशङ्क्याह एतावानिति अनुष्ठेयपरिमाणनिर्द्धारणवदुक्तशङ्कानिवर्त्तनं शास्त्रार्थोपसंहारस्येत्येतदुभयञ्चकारार्थः ॥ ४० ॥

स्वामिकृतटीका ।

अनुक्तमपि संग्रहन् प्रकरणार्थमुपसंहरति न तदिति त्रिभिः एभिः प्रकृतिसंभवैः सत्त्वादिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातं अन्यद्वा यत् स्यात्तत् पृथिव्यां मनुष्यादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः ॥ ४० ॥

भाषा अनुवाद ।

**अब जो पूर्व अध्यायोंमे कहीं नहीं कहा सो इस श्लोकमे कहते हैं कि इन सतोगुण आदि प्रकृतिके गुणोंसे मुक्त अर्थात् छूटा हुआ सत्त्व कहे प्राणीमात्र नहीं है अथवा और कोई वस्तु क्या पृथिवी मे मनुष्य आदि क्या स्वर्गमे देवता आदिमे कोई भी गुनसेरहित नहीं है ॥ ४० ॥**

शाङ्करभाष्यम्।

ततः पदं तत् परिमार्गितव्यमिति चोक्तं तत्र च सर्वस्य त्रिगुणात्मकत्वात् संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं सर्वश्च गीताशास्त्रार्थ उपसंहर्त्तव्य एतावानेव च सर्वो वेदः स्मृत्यर्थश्च॥ ४०॥

पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते ब्राह्मणेति ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियविशां शूद्राणाञ्च शूद्राणामसमासकरणमेकजातित्वे सति वेदेऽनधिकारात् हे परन्तप कर्माणि प्रविभक्तानीतरेतरविभागेन व्यवस्थापितानि केन स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिः त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभावास्तैः शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनामथवा ब्राह्मणस्वभावस्य सत्त्वगुणप्रभवः कारणं तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजःप्रभवः वैश्यस्वभावस्य तम उपसर्जनं रजःप्रभवः शूद्रस्वभावस्य रज उपर्जनं तमःप्रभवः प्रशान्त्यैश्वर्येहामूढस्वभावदर्शनाच्चतुर्णां अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्त्तमानजन्मनि स्वकार्य्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानान्ते स्वभावप्रभवा गुणाः गुणप्रादुर्भावस्य निःकारणत्वानुपपत्तेः स्वभावः कारणमिति कारणविशेषोपादानं एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्य्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति नैष दोषः शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि न गुणाननपेक्षयेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यते॥ ४१॥

आनन्दगिरिकृतटीका।

सम्प्रति वर्णचतुष्टयस्य अनुष्ठेयं धर्मजातं संकीर्णमिति सूत्रमुपन्यस्यति ब्राह्मणेति उपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं समानमिति त्रयाणां समासकरणमितरेषामसमासे हेतुमाह शूद्राणामिति एकजातित्वमुपनयनवर्जितत्वं कर्मणामसंकीर्णत्वेन व्यवस्था-

आनन्दगिरिकृतटीका ।

प्रश्नं प्रश्नपूर्वकं प्रकटयति केनेत्यादिना स्वभावप्रभवैर्गुणैरित्यस्यार्थान्तरमाह अथवेति उक्तव्यवस्थायां कार्यदर्शनं प्रमाणयति प्रशान्तैरिति स्वभावशब्दस्यार्थान्तरमाह अथवेति त्रिविधेति गुणाभिव्यक्तेरुक्तवासनाधीनत्वं तत्राह गुणेति ननु नास्ति गुणप्रादुर्भावस्य निर्कारणत्वं प्रकृतिजैर्गुणैरिति प्रकृतेर्गुणकारणत्वाभिधानादत आह स्वभाव इति वासनाकारणमिति गुणाव्यक्तेर्निमित्तकारणत्वं विवक्षितं प्रकृतिस्तु उपादानमिति भावः उक्तमुपसंहरति एवमिति स्वभावप्रभवैः सत्त्वादिगुणैः ब्राह्मणादीनां कर्माणि प्रविभक्तानीत्युक्तमाक्षिपति नन्विति शास्त्रस्य धर्मविभागहेतोः सत्त्वादिविशेषापेक्षयैव विभागस्यापकत्वादुभयत्र विभागहेतुत्वोक्तिरविरुद्धेति परिहरति नैष दोष इति ॥ ४१ ॥

स्वामिकृतटीका ।

ननु यद्येवं सर्वमपि क्रिया कारक फलादिकं प्राणिजातञ्च त्रिगुणात्मकमेव तर्हि कथमस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारेण विहितैः कर्मभिः परमेश्वरस्य आराधनातत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं संगृह्य दर्शयितुं प्रकारान्तरमारभते ब्राह्मणेत्यादि यावदध्यायसमाप्ति हे परन्तप हे शत्रुतापन ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्राणाञ्च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि शूद्राणां समासात् पृथक्करणं द्विजत्वाभावेन वैलक्षण्यं विभागोपलक्षणमाह स्वभावः सात्त्विकराजसादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः यद्वा स्वभावप्रभवैः पूर्वजन्मसंस्कारप्रादुर्भूतैरित्यर्थः तत्र सत्त्वप्रधाना ब्राह्मणाः सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः तम उपसर्जनरजःप्रधाना वैश्याः रजउपसर्जनतमः प्रधानाः शूद्राः ॥ ४१ ॥

## भाषा अनुवाद ।

**जो समस्त क्रिया औ कारक कहे क्रियोंके साधन तथा फल आदि औ प्राणीमात्र सबभी त्रिगुणात्मक कहे त्रिगुणमय भये हैं तो इनलोगोंकी मुक्ति कैसेघटे कसे होसके है इस शङ्कानिवारण के अर्थ अपने अपने अधिकार अनुसार कर्म अनुष्ठानके द्वारा भगवत आराधनसे भई भगवतकी कृपा की प्राप्तिमे प्रगट भया जो तत्वज्ञान तिसके द्वाराही जो मुक्तिहोगी यह जो गीताका सारसंग्रह सोदेखावनेका मानसकर इस श्लोकसे ले अध्याय समाप्तितक प्रकारान्तर कहे दूसरी रीति के कहनेका आरम्भ करते हैं कि हेपरन्तप शत्रु नाशक अर्जुन ब्राह्मण क्षत्री वैश्य औ शूद्र इनके**

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

### शाङ्करभाष्यम् ।

कानि पुनस्तानि कर्माणीत्युच्यते शम इति शमदमौ च यथाव्याख्यातार्थौ तपो यथोक्तं शारीरादि शौचं व्याख्यातं क्षान्तिः क्षमा आर्जवं ऋजुतैव च ज्ञानं विज्ञानं आस्तिक्यं अस्तिभावः श्रद्दधानता परमार्थेषु आगमार्थेषु ब्रह्मकर्म ब्राह्मणजातेः कर्म ब्रह्मकर्म स्वभावजं यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥ ४२ ॥

### आनन्दगिरिकृतटीका ।

प्रविभक्तानि कर्माण्येव प्रश्नद्वारा विविच्य दर्शयति कानीत्यादिना अन्तःकरणोपशमः शमो दमो बाह्यकरणोपरतिरित्युक्तं स्मारयति यथेति त्रिविधस्तपः सप्तदशे दर्शितमित्याह तप इति शौचमपि बाह्यान्तरभेदेन प्रागेवोक्तमित्याह शौचमिति क्षमा नामाक्रुष्टस्य ताडितस्य वा मनसि विकाराराहित्यं ज्ञानं शास्त्रीयं पदार्थज्ञानं विज्ञानं शास्त्रार्थस्य स्वानुभवपर्यन्ततापादनं त्रिधाव्याख्यातं स्वभावशब्दार्थमुपेत्याह यदुक्तमिति ॥ ४२ ॥

### भाषा अनुवाद ।

कर्म प्रविभक्त कहे प्रकृष्ट रूपसे भिन्न भिन्न विहित हैं और द्विज इस पदसे शास्त्रमे ब्राह्मण आदि तीन वर्ण कहेजाते हैं इससे शूद्रको अलग करके कहा हैं सोई लक्षण कहते हैं कि स्वभाव कहे सतोगुण आदि जिनसे सबका प्रभव कहे उत्पत्ति है उन्हींके अनुसार ब्राह्मण आदि के कर्म्म पृथक् पृथक् विहित हैं अथवा स्वभाव कहे पूर्वजन्मका संस्कार उसके अनुसार जो ब्राह्मण आदिकी गुणक्रमसे कर्मोंमे प्रवृत्ति है विशेष यह कि ब्राह्मण तो सतोगुण प्रधान है औ क्षत्री कुछसतोगुण सहित रजोगुण प्रधान है और वैश्य कुछ सतोगुण तमोगुण लेकर रजोगुण प्रधान है और शूद्र कुछ रजोगुण युक्त तमोगुण प्रधान है इससे शास्त्रने उनको वैसेही कर्मका अधिकार कहा यह जानो ॥ ४१ ॥

शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रकर्म स्वभावजम् ॥ ४३ ॥

### शाङ्करभाष्यम् ।

शौर्यमिति शौर्यं शूरस्य भावस्तेजः प्रागल्भ्यं धृतिर्धारणं सर्वावस्थास्वनवसादो भवति यथा धृत्योत्तम्भितस्य दाक्ष्यं दक्षस्य भावः सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिर्युद्धे चाप्यपलायनमपराङ्मुखीभावः शत्रुभ्यः दानं देयेषु मुक्तहस्तता ईश्वरभावः ईश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीशितव्यान् प्रति क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रं कर्म स्वभावजं ॥ ४३ ॥

### आनन्दगिरिकृतटीका ।

शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्त्तुं प्रवृत्तिः प्रागल्भ्यं परैरधर्षणीयत्वं महत्यामपि विपदि देहेन्द्रियोत्तम्भनी चित्तवृत्तिर्धृतिरिति व्याचष्टे सर्वावस्थास्विति दक्षस्य भावमेव विभजते सहसेति ॥ ४३ ॥ वैश्यशूद्रयोः कर्म विवक्षयाऽनुवदति कृषिवाणिज्यगोरक्ष्येति स्पष्टार्थः ॥ ४४ ॥

### स्वामिकृतटीका ।

तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह शम इति शमश्चित्तोपरमः दमो वाह्येन्द्रियोपरमः तपः पूर्वोक्तं शारीरादि शौचं वाह्याभ्यन्तरं क्षान्तिः क्षमा आर्जवमवक्रता ज्ञानं शास्त्रीयं विज्ञानमनुभवः आस्तिक्यमस्ति परलोक इति निश्चयः एतच्छमादि ब्राह्मणस्य भावाज्जातं कर्म ॥ ४२ ॥

### भाषा अनुवाद ।

सो वे स्वाभाविक कौन कर्म हैं सोई कहते हैं कि शम कहे चित्तकी शान्ति औ दम कहे वाह्य इन्द्रियोंकी शान्ति औ तप जो १७ अध्यायके १४ श्लोकमे शरीरकी तपस्या कहा है तथा शौच अर्थात् वाहर भीतरकी शुद्धि औ क्षान्ति कहे क्षमा आर्जव कहे सीधापन औ ज्ञान कहे शास्त्रके अर्थका वोध औ विज्ञान कहे अनुभव अर्थात् मनमे पूर्वकर्मके अनुसार ज्ञानका प्रगट होना तथा आस्तिक्य कहे परलो कहै ऐसी निश्चयरूप बुधि ये सव ब्राह्मणोंके स्वभावसिद्ध कर्म हैं सो जानो ॥ ४२ ॥

कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

शाङ्करभाष्यम्।

कृषीति कृषि गोरक्ष्य वाणिज्यं गोरक्ष्यञ्च वाणिज्यञ्च कृषिगोरक्ष्यवाणिज्यं कृषिर्भूमेर्विलेखनं गां रक्षतीति गोरक्षस्तद्भावो गोरक्ष्यं पाशुपाल्यं वाणिज्यं वणिक्कर्म्म क्रयविक्रियादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजं परिचर्य्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजं ॥ ४४ ॥

स्वामिकृतटीका।

क्षत्रियस्य स्वाभाविकं कर्माह शौर्य्यमिति शौर्य्यं पराक्रमः तेजः प्रागल्भ्यं धृतिर्धैर्य्यं दाक्ष्यं कौशलं युद्धे चाप्यपलायनं अपराङ्मुखता दानमौदार्य्यं ईश्वरभावो नियमनशक्तिः एतत् क्षत्रियस्य स्वाभाविकं कर्म ॥ ४३ ॥

वैश्यशूद्रयोः कर्माह कृषीति कृषिः कर्षणं गां रक्षतीति गोरक्षस्तस्य भावो गोरक्ष्यं पाशुपाल्यमित्यर्थः वाणिज्यं क्रयविक्रयादि एतद्वैश्यस्य स्वाभाविकं कर्म त्रैवर्णिकपरिचर्य्यात्मकं शूद्रस्यापि स्वभावजं कर्म ॥ ४४ ॥

भाषा अनुवाद।

अब क्षत्रियके स्वभावज जो कर्म उनको कहते हैं कि शौर्य्य कहे पराक्रम औ तेजः कहे ढीठापन धृति कहे धैर्य्य औ दाक्ष्य कहे निपुणता औ संग्राम आनपड़नेसे पीठि देकर न भागना तथा दान कहे उदारता औ ईश्वरभाव अर्थात् विषयोंका सम्बन्धी नियम न आदि कहे रोकनेकी शक्ति ये सब क्षत्रियके स्वभावही से उत्पन्न कर्म हैं ॥ ४३ ॥

अब वैश्यके स्वभावज कहे स्वभावसे सिद्ध कर्म कहते हैं कि कृषी कहे खेती औ गोरक्षा जो दो प्रकारकी है एकतो गउ का रक्षण दूसरा अपने आश्रितका पालन करना औ वाणिज्य जो व्यापार अर्थात् खरीदना बेचना तथा ब्राह्मण औ देवतामे श्रद्धा औ भक्ति रखना ये सब वैश्यवंशके स्वाभाविक कर्म हैं अब शूद्रका कर्म सुनो कि इन तीनो वर्णकी

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

शाङ्करभाष्यम् ।

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः वर्णा आश्रमादयश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुः श्रुतवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते इत्यादिस्मृतिभ्यः पुराणे च वर्णानामाश्रमाणाञ्च लोकफलभेदविशेषस्मरणात् कारणान्तरात्त्विदं वक्ष्यमाणं फलं शृणु स्वे स्वे इति स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरोऽधिकृतः पुरुषः किं स्वकर्मानुष्ठानादेव साक्षात् संसिद्धिं न कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ॥ ४५ ॥

आनन्दगिरिकृतटीका ।

स्वभावस्तु पूर्ववच्छमादिपरिचर्यान्तकर्मणां विभज्योक्तानामभ्युदयं फलमादावुपन्यस्यति एतेषामिति स्वभावतो विहितत्वादेव मोक्षापेक्षामन्तरेणानुष्ठानादित्यर्थः तत्र प्रमाणमाह वर्णा इति शेषशब्देन भुक्तकर्मणोऽतिरिक्तं कर्मानुशयशब्दितमुच्यते प्रत्येकं देशादिभिर्विशिष्टशब्दः सम्बध्यते आदिशब्देन तद्यथा आम्रफलार्थे निर्मिते छायागन्धाद्यनूत्पद्यते एवं धर्मं चर्यमाणमर्था अनुत्पद्यन्ते न धर्महानिर्भवतीति स्मृतिर्गृह्यते इतश्चोक्तानां कर्मणां स्वर्गफलत्वं युक्तमित्याह पुराणे चेति उक्तं हि यस्तु सम्यक् करोत्येवं गृहस्थः परमं विधिमास्थितवर्णबन्धमुक्तोऽसौ लोकानाप्नोत्यनुत्तमानिति यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेद् मुनिः संहृत्याग्निवद्दोषान् जयेल्लोकांश्च शाश्वतान् इति मोक्षाश्रयश्चरते यथोक्तं शुचिःसु संकल्पितबुद्धियुक्तः अनिन्धनज्योतिरिव प्रशान्तं स ब्रह्मलोकान् श्रयते द्विजातिरिति च सर्वे एते पुण्यलोका भवन्तीति श्रुतिश्चकारार्थः यदि पुनर्मोक्षापेक्षयोक्तानि कर्माण्यनुष्ठीयेरंस्तदा मोक्षफलत्वं तेषां सेत्स्यतीत्याह कारणान्तरादिति तदेव कारणा-

**भाषा अनुवाद ।**

**सेवारूप व्यापार शूद्रका स्वभावज कर्म है शूद्रको सेवा छोड़ और कोई भी कर्म नहीं कहा है ॥ ४४ ॥**

## यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
## स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

### शाङ्करभाष्यम् ।

यत इति यतो यस्मात् प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वरात् भूतानां प्राणिनां स्यात् येनेश्वरेण सर्वमिदं ततं जगद्व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णन्तमीश्वरमभ्यर्च्य पूजयित्वाऽऽराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः ॥ ४६ ॥

### आनन्दगिरिकृतटीका ।

न्तरं यन्मोक्षापेक्षया तेषामनुष्ठानं मोक्षोपायेषु सात्त्विकेषु ब्राह्मणधर्मेषु क्षत्रियादीनामनधिकारात् ब्राह्मणानामेव मोक्षो न क्षत्रियादीनामित्याशङ्क्याह स्वे स्वे इति यथा स्वे कर्मण्यभिरतस्य बुद्धिशुद्धिद्वारा ज्ञाननिष्ठायोग्यता प्राप्ता प्राप्तज्ञानस्य मोक्षोपपत्ते-र्ब्राह्मणातिरिक्तस्यापि ज्ञानवतो मुक्तिरिति मत्वा पूर्वार्द्धं व्याचष्टे स्वे स्वे इत्यादिना संसिद्धिशब्दस्य मोक्षार्थत्वं गृहीत्वा स्वधर्मनिष्ठत्वमात्रेण तल्लाभे तादर्थ्येन सन्न्यासादि-विधानानर्थक्यमिति मन्वानः शङ्कते किमिति न तावन्मात्रेण साक्षान्मोक्षो ज्ञाननिष्ठा-योग्यता चेति परिहरति नेति तर्हि कथं स्वधर्मनिष्ठस्य संसिद्धिरिति पृच्छति कथं तर्हीति उत्तरार्द्धेनोत्तरमाह स्वकर्मेति तच्छृणु तं प्रकारमेकाग्रचेतो भूत्वा श्रुत्वावधारय इत्यर्थः ॥ ४५ ॥

### स्वामिकृतटीका ।

एवंभूतस्यापि ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह स्वे स्वे इति स्वस्वाधिकारविहिते कर्मण्यभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते ॥ ४५ ॥

### भाषा अनुवाद ।

ब्राह्मण आदि वर्णोके इन सब कर्मोको ज्ञानका हेतुत्व कहते हैं कि अपने अपने अधिकारके अनुसार विहित कर्ममे निरत कहे निष्ठासे लगे हुये मनुष्य संसिद्ध कहे ज्ञानकी योग्यता लाभ करते हैं औ कर्मके द्वारा ज्ञानप्राप्तिकी प्रकार इस स्रोकसे कहते हैं कि अपने कर्ममे सब तरह निष्ठायुक्त पुरुष जिस प्रकारसे तत्त्वज्ञानका लाभ करते हैं सोई प्रकार हमसे तुम श्रवण करो ॥ ४५ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥ ४७॥

शाङ्करभाष्यम्।

यत एवमतः श्रेयानिति श्रेयान् प्रशस्यतरः स्वधर्मः विगुणोऽपीत्यपि-शब्दो द्रष्टव्यः परधर्मात् स्वनुष्ठितात् स्वभावनियतं स्वभावेन नियतं यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति यथा विषजातस्य इव कृमेः विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापं भाव-नियतं कर्म कुर्वाणो विषजात इव कृमिः किल्बिषं नाप्नोतीत्युक्तं॥ ४७॥

आनन्दगिरिकृतटीका।

तमेव प्रकारं स्फुटयति यत इति यतः शब्दार्थं यस्मादित्युक्तं व्यक्तीकरोति यस्मा-दिति प्राणिनामुत्पत्तिर्यस्मादीश्वरात्तेषां चेष्टा च यस्मादन्तर्यामिणो येन च सर्वं व्याप्तं मृदेव घटादिकार्यस्य कारणातिरिक्तस्वरूपाभावात्तं स्वकर्मणाभ्यर्च्य मानवः संसिद्धिं विन्दतीति सम्बन्धः नहि ब्राह्मणादीनां यथोक्तधर्मनिष्ठया साक्षान्मोक्ष उपलभ्यते तस्य ज्ञानैकलभ्यत्वात् किन्तु तन्निष्ठानां शुद्धबुद्धीनां कर्मसु फलमपश्यतामीश्वरप्रसादासादित-विवेकवैराग्यवतां सन्न्यासिनां ज्ञाननिष्ठायोग्यतावतां ज्ञानप्राप्त्या मुक्तिरित्यभिप्रेत्याह मोक्षकमिति॥ ४६॥

स्वामिकृतटीका।

कर्मणा ज्ञानप्राप्तिप्रकारमाह स्वकर्मेति सार्द्धेन स्वकर्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु तमेवाह यत इति यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति येनात्मना सर्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वकर्मणाऽ-भ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः॥ ४६॥

भाषा अनुवाद।

अब कर्मसे ज्ञानप्राप्तिका प्रकार कहते हैं कि अन्तर्यामी रूप जो परमेश्वर जिससे प्राणीमात्र चेष्टा करते हैं औ कारण स्वरूप जो ईश्वर जिस ईश्वरसे यह समस्त जगत् व्याप्त है उस ईश्वरको समस्त कर्मके द्वारा अभ्यर्च्य कहे पूजन करके मनुष्य सम्पूर्ण ज्ञानकी अर्थात् ईश्वरार्थ सकल कर्मकरने से योग्यता स्वरूप सिद्धिको प्राप्त होते हैं॥ ४६॥

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृतः ॥ ४८ ॥**

## शाङ्करभाष्यम् ।

परधर्मश्च भयावह इत्यनात्मज्ञश्च नहि कश्चित् क्षणमप्यकर्मकृत्तिष्ठती- त्यतः सहजमिति सहजं सहजन्मनैवोत्पन्नं किं सहजं तत् कर्म कौन्तेय

## आनन्दगिरिकृतटीका ।

स्वधर्मानुष्ठानस्य बुद्धिशुद्ध्यादिद्वारा मोक्षावसायित्वात्तदनुष्ठानमावश्यकमित्याह यत इति ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसाधीनं पापं प्राप्नोति तत् कथं स्वधर्मः श्रेयानिति तत्राह स्वभावेति स्वकीयं वर्णाश्रमं निमित्तीकृत्य विहितं स्वभावजमित्यधस्ता- दुक्तमित्याह यदुक्तमिति नियमात्मकमपि विहितं कर्म कुर्वन् पापं नाप्नोतीत्यत्र दृष्टान्त- माह यथेति इतश्च विहितं कर्म दोषवदपि कर्त्तव्यं प्रकारान्तरासम्भवादित्युक्तानुवाद- पूर्वकं कथयति स्वभावेत्यादिना नहि कृमिर्विषजो विषनिमित्तं मरणं प्रतिपद्यते तथा पापाधिकृतः पुरुषो दोषवदपि विहितं कर्म कुर्वन् पापं नाप्नोतीत्युक्तमित्यर्थः ॥ ४७ ॥

## स्वामिकृतटीका ।

स्वकर्मणेति विशेषणस्य फलमाह श्रेयानिति विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि परधर्मात् श्रेष्ठः न च बन्धुवधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादि परधर्मः श्रेष्ठ इति मन्तव्यं यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन् किल्बिषं नाप्नोति ॥ ३७

## भाषा अनुवाद ।

और पूर्व श्लोकमें कहा जो स्वकर्मणा तमभ्यर्च्य उसी स्वकर्म विशेषण- वचनका फल कहते हैं कि स्वनुष्ठित कहे अच्छी तरहसे किये हुये परायेके- धर्मकी अपेक्षासे स्वधर्म कहे अपना धर्म विगुण अर्थात् अङ्गहीन भी श्रेय कहे अति उत्तम है इस हेतुसे बन्धु वध आदिसे युक्तभी क्षत्रीका धर्म जो युद्ध तिससे भिक्षाटनरूप अर्थात् भीखमागना परधर्म श्रेष्ठ नहीं है औ पूर्वोक्त स्वभावक्रमसे नियत कहे नियमस्वरूप शास्त्रोक्त स्वधर्मका अनुष्ठान कर्त्ता हुआ कोई भी पुरुष किल्बिष जो पाप तिसको नहीं प्राप्त होता है सो अर्जुन तुम किस बिचारके बखेडेमें पडे हो अपने कामको देखो इस चिन्तासे कुछ फल नहीं है ॥ ४७ ॥

शाङ्करभाष्यम् ।

सदोषमपि त्रिगुणत्वान्न त्यजेत् सर्वारम्भा आरभ्यन्त इत्यारम्भाः सर्वकर्माणीत्येतत्प्रकरणात् यः कश्चिदारम्भः स्वधर्मः परधर्मश्च ते सर्वे सदोषाः हि यस्मात् त्रिगुणात्मकत्वमत्र हेतुः त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषात् नैव मुच्यते भयावहश्च परधर्मः नच शक्यतेऽशेषतस्त्यक्तुमज्ञेन कर्मवता तस्मान्न त्यजेदित्यर्थः किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत् किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति किञ्चातो यदि तावदशेषस्त्यक्तु-मशक्यमिति न त्याज्यं सहजं कर्म एवन्तर्ह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति सत्यमेवमशेषतस्त्याग एव नोपपद्यते इति चेत् किं नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः किंवा क्रियैव कारकं यथा बौद्धानां पञ्च स्कन्धाः क्षणप्रध्वंसिनः उभयथापि कर्मणोऽशेषतस्त्यागो न भवत्यथ तृतीयोऽपि पक्षो यदा करोति तदा सक्रियं वस्तु यदा न करोति तदा निःक्रियं वस्तु तदेव तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुं अयं त्वस्मिन् तृतीये पक्षे विशेषो न नित्यप्रचलितं वस्तु नापि क्रियैव कारकं किं तर्हि व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते विद्यमाना च विनश्यति शुद्धं

आनन्दगिरिकृतटीका ।

तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयतामतो न पापप्राप्तिरित्याशङ्क्याह सहजमिति उक्तमित्यनुवर्त्तने तर्हि पापप्राप्तिशङ्कां परिहर्त्तुमकर्मनिष्ठत्वमेव सर्वेषां स्यादित्याशङ्क्य ज्ञानाभावान्नैवमित्याह अनात्मज्ञ इति पूर्ववदत्रापि सम्बन्धः प्रकारान्तरासम्भवकृतं फलमाह अत इति सह जायत इति सहजं स्वभावनियतं नित्यं कर्म तद्विहितत्वान्नि-र्दोषमपि हिंसात्मकतया सदोषमित्यत्र हेतुमाह त्रिगुणेति सत्त्वादिगुणत्रयारब्धतया हिंसादिदोषवदपि कर्म विहितमत्याज्यमित्यर्थः कर्मणां दोषवत्त्वं प्रपञ्चयति सर्वेति आरम्भशब्दस्य कर्म व्युत्पत्त्या स्वपरसर्वकर्मार्थत्वे कर्मणां स्वकृतत्वं हेतुमाह प्रकरणादिति दोषेणेत्यादि व्याचष्टे यः कश्चिदिति ते सर्वे दोषेणावृता इति सम्बन्धः सर्वकर्मणां दोषा-वृतत्वे हिंसाद्युपात्तं सत्त्वादित्युक्तं हेतुमेवाभिनयति त्रिगुणात्मकत्वमिति स्वभावनियतस्य कर्मणो दोषवत्त्वात्तत्त्यागद्वारा परधर्ममातिष्ठमानस्यापि नैव दोषाद्विमोकः सम्भवति नच

## शाङ्करभाष्यम् ।

द्रव्यं शक्तिमदवतिष्ठत इति एवमाहुः काणादास्तदेव च कारकमित्यस्मिन् पक्षे को दोष इत्ययमेव तु दोषो यतस्त्वभागवतं मतमिदं कथं ज्ञायते यत आह भगवान्नासतो विद्यते भाव इत्यादि काणादादीनां ह्यसतो भावः सतश्चाभाव इतीदं मतमभागवतत्वेऽपि न्यायत्वे को दोष इति चेदुच्यते दोषवत्त्विदं सर्वप्रमाणविरोधात् कथं यदि तावत् द्व्यणुकादिद्रव्यं प्रागुत्पत्तेरत्यन्तमेवासदुत्पन्नञ्च स्थितं कञ्चित् कालं पुनरत्यन्तमेवासत्त्वमापद्यते तथाच सत्यसदेव सज्जातं अभावो भावो भवति भावश्चाभाव इति तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति नचैव भाव उत्पद्यते कारणञ्चापेक्षत इति शक्यं

## आनन्दगिरिकृतटीका ।

परधर्मोऽनुष्ठातुं शक्यते भयावहत्वाच्च तर्हि कर्मणोऽशेषतोऽनुष्ठानमेवास्त्वशेषकर्मत्यागायोगादतः सहजं कर्म सदोषमपि न त्याज्यमिति वाक्यार्थमाह सहजमिति सहजं कर्म सदोषमपि न त्यजेदित्यत्र विचारमवतारयति किमिति नहि कश्चिदिति न्यायादिति शेषः दोषो विहितनित्यत्यागे प्रत्यवायः सन्दिग्धस्य सप्रयोजनस्य विचार्यत्वादुक्तसन्देहे प्रयोजनं पृच्छति किञ्चात इति तत्राद्यमनूद्य फलं दर्शयति यदीति अशक्यानुष्ठानस्य गुणत्वेन प्रसिद्धत्वात् प्रसिद्धं हि महोदधिमगस्त्यस्य चुलकीकृत्य पिबतो गुणवत्त्वन्तदाह शक्यन्तर्हीति अशेषकर्मत्यागस्य गुणवत्यपि प्रागुक्तन्यायेन तदयोगात्तस्याशक्यानुष्ठानतेति शङ्कते सत्यमिति चोद्यमेव विघ्नकृदाद्यं भिनत्ति किमिति सत्त्वादिगुणवदात्मनो नित्यप्रचलितत्वेनाशेषतस्तेन न कर्म त्यक्तुं शक्यम् ।

नापि रूपविज्ञानवेदनासंस्कारसंज्ञानां क्षणध्वंसिनां स्कन्धानामिव क्रियाकारकभेदाभावात् कारकस्यैवात्मनः क्रियात्वमित्युक्ते कर्माशेषतस्त्यक्तुं शक्यमुभयथापि स्वभावसङ्गादित्याह उभयथेति पक्षद्वयानुरोधेनाशेषकर्मत्यागायोगे वैशेषिकश्चोदयति अथेति कदाचिदात्मा सक्रियो निःक्रियश्च कदाचिदिति स्थिते फलितमाह तत्रेति उक्तमेव पक्षं पूर्वोक्तपक्षद्वयाद्विशेषदर्शनेन विशदयति अयं त्विति आगमापायित्वे क्रियायास्तद्वतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याह शुद्धमिति क्रियाशक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियां कुर्वन् हि कारणं कारकमित्यभ्युपगमादित्याशङ्क्याह तदेवेति क्रियाशक्तिमदेव कारकं न क्रियाधिकरणं परस्पराश्रया-

शाङ्करभाष्यम्।

वक्तुमभिमतां शशविषाणादीनामदर्शनाद्भावात्मकाश्चेत् घटादय उत्पद्यमानाः किञ्चिदभिव्यक्तिमात्रे कारणमपेक्ष्योत्पद्यन्त इति शक्यं प्रतिपत्तुं किञ्च असतश्च सद्भावे सतश्चासद्भावे न क्वचित् प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित् स्यात् सत् सदेवासदसदेवेति निश्चयानुपपत्तेः किञ्चोत्पद्यत इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासम्बन्धमाहुः प्रागुत्पत्तेः स्वात्पश्चात्-स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन सम्बन्धेन सम्बध्यते सम्बद्धं सत् कारणसमवेतं सत् भवति तत्र वक्तव्यं कथमसतः सत्कारणं भवेत् सम्बन्धो वा केनचित् नहि वन्ध्यापुत्रस्य सत्तासम्बन्धो वा कारणं वा केनचित् प्रमाणतः कल्पयितुं शक्यं ननु नैवं वैशेषिकैरभावस्य सम्बन्धः कल्प्यते द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन

आनन्दगिरिकृतटीका।

दित्यर्थः वैशेषिकपक्षे दोषाभावादस्ति सर्वैः स्वीकार्यतेत्युपसंहरति इत्यकिञ्चिति भगवन्मतानुसारित्वाभावादस्य पक्षस्य त्याज्यतेति दूषयति अयमेवेति भगवन्मतानुसारित्व-मस्याप्रामाणिकमिति शङ्कते कथमिति भगवद्वचनमुदाहरणचरमपक्षस्य तदनुगुणत्वा गावनाह यत इति परेषामपि तमेतदनुगुणमेव किं न स्यादित्याशङ्क्याह कारणवादिनां चेति भगवन्मतानुगुणत्वाभावेऽपि न्यायानुगुणत्वेन दोषरहितं काणादादीनां मतमुपादेयमेव नहि काणादमतं विरोधादुपेक्षणीयमिति शङ्कते अभागवतत्वेऽपीति न्यायवत्त्वमसिद्धमिति दूषयति उच्यत इति सर्वप्रमाणानुसारिणो मतस्य न तद्विरोधितेत्याक्षिपति कथमिति वैशेषिकमतस्य सर्वप्रमाणविरोधं प्रकटयन्नादौ तन्मतमनुवदति यदीति असतो जन्म सतश्च नाश इति स्थिते फलितमाह तथाचेति उक्तमेव वाक्यं व्याकरोति अभाव इति सदेवासत्त्वमापद्यत इत्युक्तं व्याचष्टे भावश्चेति इति मतमिति शेषः तत्रैवाभ्युपगमान्तरमाह तत्रेति प्रकृतं मतं सप्तम्यर्थः इत्यभ्युपगम्यत इति शेषः परकीयमभ्युपगमं दूषयति अपेति एतमिति पर परिभाषानुसारेणेत्यर्थः अदर्शनादुत्पत्तेरपेक्षायाश्चेति शेषः।

कथन्तर्हि त्वन्मतेऽपि घटादीनां कारणापेक्षाणामुत्पत्तिर्नहि भावानां कारणापेक्षोत्पत्तिर्वा युक्तेति तत्राह भावेति घटादीनामसत्पक्षे प्रागपि कारणात्मना सतामेवाव्यक्तनामरूपा-णामभिव्यक्तिसामग्रीमपेक्ष्य पृथगभिव्यक्तिसम्भवान्न किञ्चिदनवद्यमित्यर्थः असत्कार्यवादे दोषान्तरमाह किञ्चेति परमते मानमेयव्यवहारे क्वचिदपि विश्वासो न कस्यचिदित्यत्र हेतु-

## शाङ्करभाष्यम्।

समवायलक्षणः सम्बन्धः सतामेवोच्यते इति न सम्बन्धात् प्राक् सत्त्वानभ्युपगमान्नहि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात् प्राक् घटादीनामस्तित्वमिष्यते नच मृद एव घटाद्याकारप्राप्तिमिच्छन्ति ततश्चासत एव सम्बन्धः परिशेषादिष्टो भवति नन्वसतोऽपि समवायलक्षणः सम्बन्धो न विरुद्धः न बन्ध्यापुत्रादीनामदर्शनात् घटादेरेव प्रागभावस्य स्वकारणसम्बन्धो भवति न बन्ध्यापुत्रादेरभावस्य तुल्यत्वेऽपीति विशेषोऽभावस्य वक्तव्यः एकस्याभावो द्वयोरभावः सर्वस्याभावः प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः असति

## आनन्दगिरिकृतटीका।

माह सत्त्वदेवेति नहि स तथैवेति निश्चितं तथैव पुनरसत्त्वप्राप्तेरिष्टत्वान्न वा स तथैवेति निश्चयः तथैव सत्त्वप्राप्तेरुपगमादतो यन्मानेन सदसद्वा निश्चितं तत्तथेति विश्वासाभावात् मानवैफल्यमित्यर्थः इतश्चासत्कार्यवादो न युक्तिमानित्याह किञ्चेति तदेव हेत्वन्तरं स्फोरयितुं परमतमनुवदति उत्पद्यत इतीति परकीयं वचनमेव व्याचष्टे प्रागिति सम्बन्धं सदित्यनेन कारणासम्बन्धे सति कार्यस्य सम्बन्धो भवतीत्युक्तं तदेव स्फुटयति कारणेति परमतमेवमनुभाष्य दूषयति तत्रेति कार्यस्यासतोऽपि कारणं सम्भवति तस्य च कार्येण सम्बन्धः सिद्धतीत्याशङ्क्याह न हीति असत्त्वादेवासतः सम्बन्धाभावे कारणस्य सतोऽपि न तेन सम्बन्धानुमातुं शक्यते सदसतोः सम्बन्धासम्भवादित्यर्थः कार्यस्यात्यन्तासत्त्वानभ्युपगमात् कारणसम्बन्धः स्यादिति शङ्कते नन्विति सतामेव द्व्यणुकादीनां कारणसम्बन्धं शङ्कित्वा दूषयति न सम्बन्धादिति अनभ्युपगममेव विशदयति न हीति सदेव कारणं कार्याकारमापद्य कार्यव्यवहारं निर्वर्त्तयतीत्यभ्युपगमाभावास्ति सम्बन्धानुपपत्तिरित्याशङ्क्याप्यसिद्धान्तात्मैवमित्याह नचेति कार्यस्य कारणसम्बन्धात् पूर्वं सत्त्वाभावे परिशेषसिद्धमर्थं दर्शयति ततश्चेति तत्र चानुपपत्तिरुक्तेति शेषः सम्बन्धिनोः सदसतोरसंयोगेऽपि समवायः सदसतोः भवेदिति तस्य नित्यत्वादन्यतरसम्बन्धाभावेऽपि स्थितेरावश्यकत्वादिति शङ्कते नन्विति सदसतोर्मिथः सम्बन्धस्यादृष्टत्वान्नेति निराचष्टे न वन्ध्येति घटादिप्रागभावस्यात्यन्ताभावत्वाभावाद् वन्ध्यापुत्रादिविलक्षणतया स्वकारणसम्बन्धः सिध्यतीत्याशङ्क्याह घटादेरिति उभयत्राभावस्वभावाविशेषेऽपि कस्यचित् कारणसम्बन्धो नेतरस्येति विशेषे हेत्वभावान्न प्रागभावस्य कारणसम्बन्धः सम्भवतीत्यर्थः।

## शाङ्करभाष्यम् ।

च विशेषे घटस्य प्रागभाव एव कुलालादिभिर्घटभावमापद्यते सम्बध्यते च भावेन कपालाख्येन कारणेन सर्वव्यवहारयोग्यश्च भवति ननु घटस्यैव प्रध्वंसाभावोऽभावत्वे सत्यपीतिप्रध्वंसाद्यभावानां न कश्चिद्व्यवहारयोग्यत्वं प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्योत्पादिव्यवहारार्हत्वमित्येतदसमञ्जसमभावत्वाविशेषादत्यन्तप्रध्वंसाभावयोरिव ननु नैवास्माभिः प्रागभावस्य भावापत्तिरुच्यते किं तर्हि भावस्यैव हि भावापत्तिर्यथा घटस्य घटापत्तिः घटस्यपटापत्तिः एतदप्यभावस्य भावापत्तिवदेव प्रमाणविरुद्धं सांख्यस्यापि यः परिणामपक्षः सोऽप्यपूर्वधर्मोत्पत्तिविनाशाङ्गीकरणाद्वैशेषिकपक्षान्न विशिष्यतेऽभिव्यक्तितिरोभावाङ्गीकरणेऽप्यभिव्यक्तितिरोभावयोर्विद्यमाननिरूपणे पूर्ववदेव प्रमाणविरोधः एतेन कारणस्यैव संस्थानमुत्पत्त्यादित्येतदप्ययुक्तं परिशेषात् सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैरनेकधाविकल्प्यत

## आनन्दगिरिकृतटीका ।

घटादिप्रागभावस्य सप्रतियोगिकत्वं बन्ध्यापुत्रादेर्नैवमिति विशेषमाशङ्क्य दूषयति एकस्येति प्रागभावस्येव प्रध्वंसाभावादेरपि सप्रतियोगिकत्वाविशेषे स्वकारणेन सम्बन्धाविशेषः स्यादित्यर्थः प्रागभावप्रध्वंसाभावयोर्विशेषाभावे फलितमाह असति चेति कपालशब्दो घटकारणीभूतस्वद्रवयवविषयः सर्वो व्यवहारो घटाश्रितो जन्मनाशादिव्यवहारः प्रध्वंसाभावस्तु घटस्यैवाभावत्वे सत्यपि न घटत्वमापद्यते नापि कारणेन सम्बध्यते नचोत्पत्त्यादिव्यवहारयोग्यो भवतीत्येतदयुक्तं प्रागभावेनास्य विशेषाभावादित्याह नन्विति असमञ्जसमित्यनेनेति शब्दः सम्बध्यते असमञ्जसान्तरमाह प्रध्वंसादीति अन्योन्याभावात्यन्ताभावावादिपदार्थौ कश्चिदिति देशकालयोर्ग्रहणं व्यवहारो जन्मादिरेव प्रागभावो नोत्पत्त्यादिव्यवहारयोग्योऽभावत्वात् प्रध्वंसादिवदित्यर्थः प्रागभावस्य घटभावानभ्युपगमादनुमानं सिद्धसाधनमिति शङ्कते नन्विति अभावस्य भावापत्त्यनभ्युपगमे भावस्यैव भावापत्तिरित्यनिष्टं स्यादिति दूषयति भावस्यैवेति तस्य तदापत्तेरयोग्यत्वे दृष्टान्तमाह यथेति भावस्य भावापत्तिरनिष्टेति दार्ष्टान्तिकं स्पष्टयति एतदपीति आरम्भवादोक्तदोषं परिणामवादेऽपि सञ्चारयति सांख्यस्येति धर्मः परिणामः असतोऽपूर्वपरिणामस्योत्पत्तेः सतश्च पूर्वपूर्वपरिणामस्य नाशादसदेव सत् सदेवेति व्यवस्थातापि दुर्घटेत्यर्थः ननु कार्यकारणात्मना

## शाङ्करभाष्यम्

इतीदं भागवतं मतमुक्तं नासतो विद्यते भाव इत्यस्मिन् श्लोके सत्प्रत्ययस्याव्यभिचारात् व्यभिचाराच्चेतरेषामिति कथं तर्हि आत्मनोऽविक्रियत्वेनाशेषतः कर्मणस्त्यागो नोपपद्यत इति यदि वस्तुभूता गुणाः यदि वा अविद्याकल्पितास्तद्धर्मकर्म तदात्मन्यविद्याध्यारोपितमेवेत्यविद्वान् हि कश्चित् क्षणमप्यशेषतस्त्यक्तुं शक्नोतीत्युक्तं विद्वांस्तु पुनर्विद्यया अविद्यायां निवृत्तायां शक्नोत्येवाशेषतः कर्म परित्यक्तुं अविद्याऽध्यारोपितस्य शेषानुपपत्तेः नहि तैमिरिकदृष्ट्याऽध्यारोपितस्य द्विचन्द्रादेस्तिमिरापगमे शेषोऽवतिष्ठते एवञ्च सतीदं वचनमुपपन्नं सर्वकर्माणि मनसेत्यादि स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति च ॥ ४८ ॥

### आनन्दगिरिकृतटीका ।

प्रागपि सदेवाव्यक्तं कारकव्यापाराद्व्यज्यते तेन व्यक्ताव्यक्तयोर्भिन्नकालत्वात् तद्विशेषसिद्धिस्तत्राह अभिव्यक्तेति कारकव्यापारात् प्रागनभिव्यक्तिवदभिव्यक्तेः सत्त्वमसत्त्वं वा सत्त्वे कारकव्यापारवैयर्थ्यात्तद्विषयप्रमाणविरोधः ।

द्वितीये पक्षान्तरवदत्यन्तासतः तन्निर्वर्त्यत्वायोगे स एव दोषः कारकव्यापारादूर्ध्वं व्यक्तिवदव्यक्तेरपि सत्त्वे स एव दोषः असत्त्वेऽपि सतोऽसत्त्वाङ्गीकारात् मानमेयव्यवहारे न क्वापि विश्वासः सत्यदेव असदसदेवेत्यनिर्द्धारणादित्यर्थः सांख्यपक्षप्रतीक्षोपन्यासेन पक्षान्तरमपि प्रतिक्षिप्तमित्याह एतेनेति कारणस्यैव कार्यरूपापत्तेरुत्पत्तिस्तस्यैव तद्रूपत्यागेन स्वरूपापत्तिर्नाश इत्येतदपि न पूर्वरूपे नष्टे च परस्य पररूपापत्तेरनुपपत्तेर्नैच प्राप्तिरूपं स्थितेन नष्टेन वा त्यक्तुं शक्यमित्यर्थः आरम्भवादे परिणामवादे च उत्पत्त्यादिव्यवहारानुपपत्तौ परिशेषायातं दर्शयति पारिशेष्यादिति एकस्यानेकविधविकल्पानुपपत्तिमाशङ्क्याह अविद्ययेति अस्यापि मतस्य भगवन्मतानुरोधित्वाभावादविशिष्टात् त्यज्यतेत्याशङ्क्याह इतीदमिति उक्तमेव भगवन्मतं विशदयति सत्प्रत्ययस्येति सदेकमेव वस्तु स्यादिति शेषः इतरेषां विकारप्रत्ययानां रजतादिधीवदर्थव्यभिचारादविद्यया तदेव सद्वस्त्वनेकधा विकल्प्यत इत्याह व्यभिचाराच्चेति इति मतं श्लोके दर्शितमिति सम्बन्धः आत्मनस्तर्हि अविक्रियत्वं भगवतेष्टं तर्हि सर्वकर्मपरित्यागोपपत्तेः सहजस्यापि कर्मणस्त्यागसिद्धिरिति शङ्कते कथमिति किं कार्यकरणात्मनां गुणानामकल्पितानां

आनन्दगिरिकृतटीका ।

कल्पितानां वा कर्मधर्मत्वेनेष्टं द्विधापि निःशेषकर्मत्यागो विदुषोऽविदुषो वा नाद्य इत्याह यद्दोषादिना अविद्यारोपितमेव गुणशब्दितकार्यकारणारोपद्वारा कर्मेति शेषः द्वितीयं प्रत्याह विद्वांस्त्विति आरोपशेषवशाद्विदुषोऽपि नाशेषकर्मत्यागसिद्धिरित्याशङ्क्याह अविद्येति तामेवानुपपत्तिं दृष्टान्तेन स्पष्टयति न हीति विदुषोऽशेषकर्मत्यागे पाश्चमिकमपि वचोऽनुकूलमित्याह एवञ्चेति अविदुषः सर्वकर्मत्यागायोगे च प्रकृताध्यायस्यैव वाक्यमनुगुणमित्याह स्वे स्वे इति वाक्यान्तरमपि तत्रैवार्थे युक्तार्थमित्याह स्वकर्मणेति ॥ ४८ ॥

स्वामिकृतटीका ।

यदि पुनः सांख्यदृष्ट्या स्वधर्मं हिंसालक्षणं दोषं मत्वा परधर्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह सहजमिति सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् हि यस्मात् सर्वेप्यारम्भा दृष्टादृष्टानि सर्वाण्यपि कर्माणि दोषेण केनचिदावृता व्याप्ता एव यथा सहजेन धूमेनाग्निरावृतस्तद्वत् अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमः शीतादि निवृत्तये सेव्यते तथा कर्मणोऽपि दोषांशं विहाय गुणांश एव शुद्धये सेव्यत इत्यर्थः ॥ ४८ ॥

## भाषा अनुवाद ।

परन्तु स्वधर्म मे जो सांख्यमतके अनुसार हिंसाकी दोषरूप जानिके औ अहिंसा हेतुसे परधर्म श्रेष्ठ यह जो विचार करो तो परधर्मके आचरण मे भी दोष है इस अभिप्रायपर कहते हैं कि हे कौन्तेय अर्जुन मनुष्योंको सहज कहे स्वभावसिद्ध और शास्त्रविहित जो स्वधर्म सो दोषयुक्त होने से भी त्यागकरने योग्य नहीं है क्योंकि समस्त आरम्भ अर्थात् दृष्ट अदृष्ट कर्ममात्र सब दोष युक्त हैं तो जैसे स्वाभाविक धूमसे आवृत अग्निको दोषयुक्त रहते भी लोग धूमरूप दोष परित्याग करके केवल अन्धकार औ शीत वारण के अर्थ सेवन करते हैं तैसेही स्वकर्म भी दोष अंश छोड़ के गुण अंशमात्र सत्त्वबुद्धि के अर्थ सेवन करने योग्य है सोई कहाकि हे अर्जुन सहज कहे स्वाभाविक दोषयुक्त भी अपना कर्म छोड़ना न चाहिये क्योंकि सब आरम्भ कहे कर्म सदोष हैं जैसे धूमदोष से युक्त अग्निको कौन छोड़े है ॥ ४८ ॥

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

शाङ्करभाष्यम् ।

या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा तस्याः फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा वक्तव्येति श्लोक आरभ्यते असक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य सोऽसक्तबुद्धिः सर्वत्र पुत्रदारादिषु आसक्तिनिमित्तेषु जितात्मा जितो वशीकृत आत्मा अन्तःकरणं यस्य स जितात्मा विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात् स विगतस्पृहो य एवम्भूत आत्मज्ञः स नैःकर्म्यसिद्धिं गतानि कर्माणि यस्मान्निःक्रियब्रह्मात्मसम्बोधात् स निःकर्मा तस्य भावो नैःकर्म्यं नैःकर्म्यञ्च तत्सिद्धिश्च वा नैःकर्म्यसिद्धिः नैःकर्म्यस्य वा सिद्धिः निःक्रियात्मस्वरूपावस्थालक्षणस्य सिद्धिर्निष्पत्तिस्तां नैःकर्म्यसिद्धिं परमां प्रकृष्टां कर्मजासिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यक्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेनाधिगच्छति प्राप्नोति ॥ ४९ ॥

आनन्दगिरिकृतटीका ।

विदुषः सर्वकर्मत्यागो नाविदुषस्तथेत्युक्तं इदानीमुक्तमनूद्यानन्तरश्लोकतात्पर्यमाह याचकर्मजेति चोऽवधारणार्थो भिन्नक्रमो वक्तव्य इत्यत्र सम्बध्यते साधनान्युपदिशन्नैःकर्म्यसिद्धिं व्यपदिशति असक्तेति पुत्रादि विषये चेतसः सङ्गाभावेऽपि तस्याः स्वाधीनत्वमाशंक्याह जितात्मेति आसक्तिसत्त्वा स्पृहाभावं तत्र पुनरुक्तिरिष्टेत्याशंक्याह देहेति उक्तमनूद्य तत्फलं लम्भयति यएवमिति कर्मणां निर्गतौ हेतुमाह निष्क्रियेति सम्यक्ज्ञानार्थत्वेन नैःकर्म्यसिद्धिशब्दं व्याख्यायार्थान्तरमाह नैःकर्म्यस्येति प्रकर्षमेव प्रकटयति कर्मजेति संन्यासस्य श्रुतिस्मृत्योः सम्यग्दर्शनसाधनत्वप्रसिद्धेरयुक्तान्तादात्म्यमित्याशंक्य पक्षान्तरमाह तत्पूर्वकेणेति ॥ ४९ ॥

स्वामिकृतटीका ।

ननु कर्मणि क्रियमाणे तत् कथं दोषांशप्रहाणेन गुणांश एव संपद्यत इत्य पेक्षायामाह असक्त बुद्धिरिति असक्ता संगशून्याबुद्धिर्यस्य जितात्मा निरहङ्कारः विगतस्पृहो

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

शाङ्करभाष्यम् ।

तथाचोक्तं सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्त इति पूर्वोक्तेन स्वकर्मानुष्ठानेन ईश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैःकर्म्य

आनन्दगिरिकृतटीका ।

सन्न्यासान्नैःकर्म्यप्राप्तिरित्यत्र वाक्योपक्रमानुकूल्यमाह तथाचेति ज्ञानस्य प्राप्ति योग्यतावतो जातसम्यग्धियस्तत्फलप्राप्तौ मुक्तायुक्तायाम् वक्तव्यशेषो नास्तीत्याशङ्क्याह पूर्वोक्तेनेति प्रकारं वस्तुतदित्युच्यते सिद्धिंप्राप्त इत्युक्तमेव कस्मादनूद्यते तत्राह तद्-

स्वामिकृतटीका ।

फलविषया यस्मात् स एवम्भूतः सङ्गं त्यक्त्वा फलं चैव सत्यागः सात्त्विको मत इत्येतत् पूर्वोक्तेन कर्मासक्तिफलयोस्त्यागलक्षणेन सन्न्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणः सत्त्वशुद्धिमधिगच्छति यद्यपि सङ्गफलयोस्त्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव कर्तृत्वाभिनिवेशाभावात् तदुक्तं नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्वविदित्यादि श्लोकचतुष्टयेन तथाप्यनेनोक्तलक्षणेन सन्न्यासेन परमां नैष्कर्म्यसिद्धिं सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशीत्येवं लक्षणां पारमहंस्य चर्यामाप्नोति ॥ ४९ ॥

भाषा अनुवाद ।

जो कहो कि दोषछोडिके गुणमात्रहीं ग्रहण करिके कर्म किस-प्रकार किये जाय सकेंगे इस अपेक्षापर कहतेहैं कि जिनकी बुद्धि असङ्ग कहे आसक्तिरहित है औ जितात्मा अर्थात् जो निरहङ्कार हैं और जिनकी इच्छा कर्म के फल से दूर होगई ऐसे पुरुष सङ्ग जो आसक्ति औ फल इन दोनको भी छोडकर इस अध्याय के नवम श्लोक मे कहे हुये के अनुसार जो आसक्ति औ फलत्यागरूप संन्यास के द्वारा परम नैःकर्म्यसिद्धि कहे सर्वकर्मकी निवृत्तिरूप जो सत्त्वशुद्धि सो पावते हैं ॥ ४९ ॥

शाङ्करभाष्यम्।

लक्षणा सिद्धिर्येन क्रमेण भवति तद्वक्तव्यमित्याह सिद्धिमिति सिद्धिं प्राप्तः स्वकर्मणेश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यता लक्षणां सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः किन्तदुत्तरं यदर्थोऽनुवाद इत्युच्यते यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्मपरमात्मानमाप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारये-त्येतत् किं विस्तरेण नेत्याह समासेनैव संक्षेपेणैव हे कौन्तेय यथा ब्रह्म प्राप्नोति तथा निबोधेति अनेन प्रकारेण या प्रतिज्ञाता ब्रह्मप्राप्तिस्ता-मिदन्तया दर्शयितुमाह निष्ठा ज्ञानस्य या परेति निष्ठापर्यवसानं परिस-माप्तिरित्येतत् कस्य ब्रह्मज्ञानस्य या परा परिसमाप्तिः कीदृशी सा यादृश-मात्मज्ञानं कीदृक् तत् यादृश आत्मा कीदृशोऽसौ यादृशो भगवतोक्त उप-निषद्वाक्यैश्च न्यायतश्च ननु विषयाकारं ज्ञानं न विषयो नाप्याकारवा-नात्मेष्यते क्वचित् नन्वादित्यवर्णो भारूपः स्वयं ज्योतिरित्याकारवत्त्व-मात्मनः श्रूयते न तमोरूपत्वप्रतिषेधार्थत्वात्तेषां वाक्यानां द्रव्यगुणाद्याकार प्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधनार्थान्यादित्यवर्णमित्यादि-

आनन्दगिरिकृतटीका।

त्नुवाद इति उत्तरमेव प्रश्नपूर्वकं स्फोरयति किं तदित्यादिना ज्ञाननिष्ठाप्राप्तिक्रमस्य विस्तरेणोक्तौ दुर्बोधत्वमाशङ्क्य परिहरति किमिति चतुर्थपादस्य पूर्वेणासङ्गतिमाशंक्याह यथेति निष्ठायाः सापेक्षत्वात् प्रतिसम्बन्धि निर्देष्टव्यमित्याह कस्येति या ब्रह्मज्ञानस्य परा निष्ठा सा प्रकृतस्य ज्ञानस्य निष्ठेत्याह ब्रह्मेति तस्य परा निष्ठा न प्रसिद्धेति कृत्वा साधनानुष्ठानाधीनतया साध्येति मत्वा पृच्छति कीदृशीति प्रसिद्धमात्मज्ञानमनुरुध्य ब्रह्मज्ञाननिष्ठा सुज्ञातेत्याह यादृशमिति तत्रापि प्रसिद्धिरसिद्धेति शङ्कते कीदृगिति अर्थे-नैव विशेषो हीति न्यायेनोत्तरमाह यादृश इति तस्मिन्नपि विप्रतिपत्तेरप्रसिद्धमभि-सन्धाय पृच्छति कीदृश इति भगवद्वाक्यान्युपनिषद्वाक्यानि वाश्रित्य परिहरति यादृश इति न जायते म्रियते वेत्यादीनि वाक्यानि कूटस्थत्वमसङ्गमित्यादिन्यायः ज्ञानस्य विषया-कारत्वादात्मनश्चाविषयत्वादनाकारत्वाच्च तदा कारकज्ञानायोगादात्मप्रसिद्धावपि नात्मज्ञान-प्रसिद्धिरिति शङ्कते नन्विति आकारवत्त्वमात्मनः श्रुतिसिद्धमिति सिद्धान्ती शङ्कते नन्वादि-

## शाङ्करभाष्यम् ।

वाक्यानि अरूपमिति च विशेषतो रूपप्रतिषेधो द्रव्यगतत्वाच्च न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं अशब्दमस्पर्शमित्याद्यैस्तस्मादात्माकारं ज्ञानमित्यनुपपन्नं कथं तर्ह्यात्मनो ज्ञानं सर्वं हि यद्विषयं ज्ञानं तत्तदाकारं भवति निराकारश्च आत्मेत्युक्तं ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावना निष्ठेति नात्यन्तनिर्मलत्वस्वच्छत्वसूक्ष्मत्वोपपत्तेरात्मनो बुद्धेश्चात्मसमनैर्मल्याद्युपपत्तेरात्मचैतन्याकारभासत्वोपपत्तिः बुद्ध्याभासं मनस्तदाभासानीन्द्रियाणि इन्द्रियाभासश्च देहोऽतो लौकिकैर्देहमात्र एवात्मदृष्टिः क्रियते देहचैतन्यवादिनश्च लोकायतिकाश्चैतन्यविशिष्टः कायः पुरुषः इत्याहुः तथान्ये इन्द्रियचैतन्यवादिनोऽन्ये मनश्चैतन्यवादिनोऽन्ये बुद्धिचैतन्यवादिनस्ततोऽप्यन्तरमव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः

## आनन्दगिरिकृतटीका ।

स्येति उक्तवाक्यानामन्यार्थत्वदर्शनेन पूर्ववादी परिहरति नित्यादिना संग्रहवाक्यं प्रपञ्चयति द्रव्येति इतश्चाकारवत्त्वमात्मनो नास्तीत्याह अरूपमिति यदात्मनो विषयत्वाभावात्तद्विषयं ज्ञानं न सम्भवतीत्युक्तं तदुपपादयति अविषयत्वाच्चेति आत्मनो विषयत्वे श्रुतिमुदाहरति नेत्यादिना संदृशे सम्यग्दर्शनविषयत्वाय यस्यात्मनोऽरूपं न तिष्ठतीत्यर्थः तदेव करणागोचरत्वेनोपपादयति नेति शब्दादिशून्यत्वाच्चात्मा विषयो न भवतीत्याह अशब्द इति आत्मनो विषयत्वाकारवत्त्वयोरभावे फलितमाह तस्मादिति ज्ञानस्यात्माकारत्वाभावे सत्यात्मज्ञानमिति व्यपदेशासिद्धिरित्येकदेशी शङ्कते कथं तर्हि इति ज्ञानानुपपत्तिरित्याशङ्क्याह सर्वं हीति आत्मनोऽपि तर्हि विषयत्वेन ज्ञानस्य तदाकारत्वं स्यादित्याशङ्क्याह निराकारश्चेति आत्मनो विषयराहित्यं चकारार्थः आत्मवत्तज्ज्ञानस्यापि तर्हि निराकारत्वम्भविष्यतीत्यत्राह ज्ञानेति तच्छब्देनात्मज्ञानं गृह्यते तस्य भावना पौनःपुन्येनानुसन्धानं तस्य निष्ठासमाप्तिरात्मनि साक्षात्कारदार्ढ्येन वैतत् सर्वमात्मनो ज्ञानस्य वा निराकारत्वे सिध्यतीत्यर्थः ज्ञानात्मनोः साम्योपन्यासेन सिद्धान्ती समाधत्ते नेत्यादिना यथोक्तसाम्यानुसारात्मचैतन्याभासव्याप्ता ज्ञानपरिणामवती बुद्धिः साभासबुद्धिः व्याप्तं मनः साभासमनो व्याप्तानीन्द्रियाणि साभासेन्द्रियव्याप्तः स्थूलदेहस्तत्र लौकिकभ्रान्तिं प्रमाणयति अत इति आत्मदृष्टेर्देहमात्रे दृष्टत्वात्तत्र चैतन्याभासव्याप्त्येन्द्रियद्वारा कल्पते इन्द्रियेषु च तद्दृष्टिदर्शनाच्चैतन्याभासवत्त्वं मनोद्वारा सिध्यति मनसि चात्मदृष्टेश्चैतन्याभासवत्त्वं बुद्धिद्वारा

शाङ्करभाष्यम् ।

केचित् प्रकृतिचैतन्यवादिनः सर्वत्र हि बुद्ध्यादि देहान्ते आत्मचैतन्याभासतात्मभ्रान्तिः कारणमित्यतश्चात्मविषयं ज्ञानं न विधातव्यं किं तर्हि नामरूपाद्यनात्माध्यारोपेण निवृत्तिरेव कार्या नात्मचैतन्यविज्ञानं सर्वैरभ्युपगम्यते अविद्याध्यारोपितसर्वपदार्थाकारैरेव विशिष्टतया गृह्यमाणत्वात् अतएव विज्ञानवादिनो बौद्धाः विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः प्रमाणान्तरनिरपेक्षताञ्च स्वसंविदितत्वाभ्युपगमेन तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्त्तव्यं नतु ब्रह्मविज्ञाने यत्नोऽत्यन्तप्रसिद्धत्वादविद्याकल्पित नामरूपविशेषाकारप्रकृतबुद्धित्वादत्यन्तसिद्धं सुविज्ञेयमासन्नतरमात्मतत्त्वमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरं अन्यदिव च प्रतिभाति अविवेकिनां वाह्याकारनिवृत्तबुद्धीनान्तु लब्धगुर्वात्मप्रसादानां नातःपरं सुखं सुप्रसिद्धं सुविज्ञेयमासन्नमस्ति तथाचोक्तं प्रत्यक्षावगमं धर्म्ममित्यादि केचित्तु

आनन्दगिरिकृतटीका ।

लभ्यते बुद्धौ यात्मदृष्टेरज्ञानद्वारा चैतन्याभाससिद्धिरित्यर्थः देहे लौकिकसात्मत्वदर्शनं न्यायाभावादुपेक्षितमित्याशङ्क्याह देहेति तथापि मनसो यदात्मत्वं तत् न्यायशून्यमित्याशङ्क्याह अन्य इति बुद्धेरात्मत्वमिति न्यायोपेतमिति सूचयति अन्ये बुद्धीति देहादौ बुध्यन्तेऽपसमात्मत्वबुद्धिर्नान्यत्रेति नियमं वारयति ततोऽपीति तत्रहि साभासेऽन्तर्यामिणि करणोपासकानामात्मधीरस्तीत्यर्थः बुद्ध्यादौ देहान्ते लौकिकपरीक्षकाणामात्मत्वभ्रान्तौ साधारणकारणमाह सर्वत्रेति आत्मज्ञानस्य लौकिकपरीक्षकप्रसिद्धत्वादेव विधिविषयत्वमपि परेष्टं परास्तमित्याह इत्यत इति ज्ञानस्य विधेयत्वाभावे किं कर्त्तव्यं द्रष्टव्यादिवाक्यैरित्याशङ्क्याह किं तर्हीति आत्मज्ञानस्याविधेयत्वे प्रागुक्तमतःशब्दितं हेतुं विवृणोति अविद्येति देहेन्द्रियमनो बुद्ध्यव्यक्तैरुपलभ्यमानैः सहोपलभ्यमाने चैतन्यं नान्यथा तेषामनुपलम्भो जड़त्वादित्यत्र विज्ञानवादिभ्रान्तिं प्रमाणयति अतएवेति सर्वं ज्ञेयं ज्ञानव्याप्तमेव ज्ञायते तेन ज्ञानातिरिक्तं नास्त्येव वस्तु सम्मतं हि स्वप्नदृष्टं वस्तु ज्ञानातिरिक्तं नास्तीति ते भ्राम्यन्तीत्यर्थः ज्ञानस्यापि ज्ञेयत्वात् ज्ञातृवस्त्वन्तरमेष्टव्यमित्याशङ्क्याह प्रमाणान्तरेति ज्ञानस्य स्वे नैव ज्ञेयत्वोपगमनेनातिरिक्तं प्रमाणनिरपेक्षताञ्च प्रतिपन्ना इति सम्बन्धः ब्रह्मात्मविज्ञानस्य सिद्धत्वेनाविधेयत्वे फलितमाह तस्मादिति यत आत्मभावं नाब्रह्मणस्तत् ज्ञानस्य चात्यन्तप्रसिद्धत्वे कथं ब्रह्मण्यन्यथा प्रथा लौकिकानामित्यतआह अवि-

पण्डितंमन्या निराकारत्वादात्मवस्तुनोपैति बुद्धिरतो दुःसाध्या सम्यक्ज्ञाननिष्ठेत्याहुः सत्यमेवं गुरुसंप्रदायरहितानामश्रुतवेदान्तानामत्यन्तवहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेष्वकृतश्रमाणां तद्विपरीतानान्तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसम्पाद्या आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः यथाचैतदेवमेव नान्यथेत्यवोचाम उक्तञ्च भगवता यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेरिति तस्माद्बाह्याकारभेदबुद्धिनिवृत्तिरेवात्मस्वरूपालम्बने कारणं नह्यात्मा नाम कस्यचित् कदाचिदप्रसिद्धः प्राप्यो हेय उपादेयो वा अप्रसिद्धे हि तस्मिन्नात्मनि स्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्येरन् नच देहाद्यचेतनार्थत्वं शक्यं कल्पयितुं नच सुखार्थं दुःखार्थं वा दुःखमात्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य तस्माद्यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा ततोऽप्यात्मनोऽन्तरतमत्वात्तदवगतिं प्रति न प्रमाणान्तरापेक्षेत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धेति सिद्धं येषामपि निराकारं ज्ञानमप्रत्यक्षन्तेषामपि ज्ञानवशेनैव ज्ञेयाव-

आनन्दगिरिकृतटीका ।

द्धेति यथा प्रतिमासु दुर्विज्ञेयत्वादिरूपमेव ब्रह्म किं नस्यात्तत्राह वाढ़मिति गुरुप्रसादं शुश्रूषया तोषितबुद्धेराचार्यस्य करुणातिरेकात्तत्त्वं बुध्यतामिति निरवग्रहोऽनुग्रहः आत्मप्रमादस्त्वधिगतपदशक्तितात्पर्य्यवाक्यस्य श्रौतयुक्तत्रसुसन्धानादात्मनो मनसो विषयव्यावृतस्य प्रत्यगेकाग्रतया तत् प्रावण्यमिति विवेकः आत्मज्ञानस्यात्मद्वारा प्रसिद्धत्वे वाक्योपक्रमं प्रमाणयति तथाचेति आत्मनो निराकारत्वात्तस्मिन् बुद्धेरप्रवृत्तेः सम्यक् ज्ञाननिष्ठा न सम्पाद्येति मतमुत्थापयति केचित्त्विति वहिर्मुखानामन्तर्मुखानां वा ब्रह्मणि सम्यग् ज्ञाननिष्ठा दुःसाध्येति विकल्पाद्यं अङ्गीकरोति सत्यमिति पूर्वविशेषणमुत्तरोत्तरविशेषणे हेतुत्वेन योजनीयं द्वितीयं दूषयति तद्विपरीतानामिति अन्तर्निष्ठानां द्वैतविषये सम्यग्बुद्धेरतिशयेन दुःसम्पाद्यत्वे हेतुमाह आत्मेति तद्व्यतिरेकेण वस्त्वन्तरस्यासत्वं कथमित्याशङ्क्याह यथाचेति अद्वैतमेव वस्तु द्वैतं त्वाविद्यकं नान्यथा तात्त्विकमित्येतदेव यथा स्यात्तथोक्तवन्तो वयं तत्र तत्राध्यायेष्विति योजना अन्तर्निष्ठानामद्वैतदर्शिनां द्वैतेनास्तिसद्बुद्धिरित्यत्र भगवतोऽपि सम्मतिमाह उक्तञ्चेति परमतं निराकृत्य प्रकृतमुपसंहरन्नात्मनो निराकारत्वे ज्ञानस्य तदालम्बनत्वे किं कारणमित्याशङ्क्याह तस्मादिति नन्वात्मा कथञ्चित् ज्ञानक्रिया साध्यश्चेत्तस्य हेयोपादेयान्यतर कोटिनिवेशात् प्राप्यं स्वर्गादिवत् क्रियासाध्यत्वे-

शाङ्करभाष्यम्।

गतिरिति ज्ञानमत्यन्तं प्रसिद्धं सुखादिवदेवेत्यभ्युपगन्तव्यं जिज्ञासानुपपत्तेश्चाप्रसिद्धश्चेत् ज्ञानं ज्ञेयवज्जिज्ञास्येत यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञातव्याप्तुमिच्छति तथा ज्ञानमपि ज्ञानान्तरेण ज्ञातव्याप्तुमिच्छेन्न चैतदस्ति अतोऽत्यन्तप्रसिद्धं ज्ञानं ज्ञाताप्यतएव प्रसिद्ध इति तस्मात् ज्ञाने यत्नो न कर्त्तव्यः किंत्वनात्मबुद्धिनिवृत्तावेव तस्मात् ज्ञाननिष्ठा सुसम्पाद्या ॥ ५० ॥

आनन्दगिरिकृतटीका।

नासिद्धत्वं नेत्याह न हीति आत्मत्वादेव प्रसिद्धत्वेन प्राप्तत्वादनात्मवस्तुनो हेयोपादेयत्वयोरयोगाच्च क्रियासाध्यतेत्यर्थः आत्मनश्चेद्दृष्टे क्रियासिद्धत्वात्तदा सर्वप्रवृत्तीनामभ्युदयनिःश्रेयसार्थानां आत्मार्थत्वायोगादर्थिनो भावेऽर्थत्वमप्रामाणिकं स्यादित्याह अप्रसिद्धे हीति न प्रवृत्तीनां स्वार्थत्वं देहादीनां अन्यतरस्यार्थित्वेन तादर्थ्यादित्याशङ्क्य घटादिवदचेतनस्यार्थित्वायोगान्मैवमित्याह नचेति ननु प्रवृत्तीनां फलावसायितया सुखदुःखयोरन्यतरान्यतरार्थत्वान्न स्वार्थत्वमत आह नचेति प्रवृत्तीनां सुखदुःखार्थत्वेऽपि तयोः स्वार्थत्वासिद्धेरर्थित्वेनात्मा सिध्यतीत्यर्थः किञ्च सर्वापेक्षान्यायादात्मावगत्यवसानः सर्वो व्यवहारः नचात्मन्यप्रसिद्धे यज्ञादिव्यवहारस्य तद् ज्ञानार्थत्वेनात्मप्रसिद्धिरेष्टव्येत्याह आत्मेति नन्वात्मा प्रसिद्धोऽपि प्रमाणद्वारा प्रसिध्यति तत्प्रमाणादेवेति न्यायात्तत्राह तस्मादिति मानमेयादि सर्वव्यवहारस्यात्मावगत्यन्तत्वोपगमात् प्रागेव प्रमाणप्रवृत्तेरात्मप्रसिद्धेरेष्टव्यत्वादित्यर्थः आत्मावगतेरेवं स्वाभाविकत्वे विवेकवतामारोपनिवृत्त्या ज्ञाननिष्ठा सुप्रसिद्धेत्युपसंहरति इत्यात्मेति नन्वाकारान्वेवानुमिमीमहे बुद्धिमिति वदतान्मनाकारमप्रत्यक्षमिच्छतां प्रागर्थावगतेरप्रसिद्धमेव ज्ञानं नेत्याह येषामिति सुखादिवन्नित्यानुभवमस्य ज्ञानं नानुमेयं विषयावगत्या तदनुमितावितरेतराश्रयादिति भावः इतश्च ज्ञानं प्रसिद्धमन्यथा तत्र जिज्ञासाप्रसङ्गान्नच ज्ञाने जिज्ञासाप्रसिद्धाप्रसिद्धा च तदयोगादित्याह जिज्ञासेति तदेव प्रपञ्चयति अप्रसिद्धश्चेदिति दृष्टान्तमेव व्याचष्टे यथेति दार्ष्टान्तिकं विवृणोति तथेति इष्टापत्तिं निराचष्टे नचेति ज्ञानस्य ज्ञानान्तरेण ज्ञेयत्वमेतच्छब्दार्थः अनवस्थापत्तेरित्यर्थः ज्ञाने जिज्ञासानुपपत्तौ फलितमाह अत इति प्रसिद्धेऽपि ज्ञाने ज्ञातर्यात्मनि किमायातन्तदाह ज्ञातापीति ज्ञानस्य विना ज्ञातारमपर्यवसानादित्यर्थः ज्ञानस्य प्रसिद्धत्वे तत्र भावनापर्यायो विधिर्नास्तीत्याह तस्मादिति कुत्र तर्हि प्रयत्नाख्याभावेनेत्याशङ्क्याह किं त्विति अविषये निराकारे चात्मनि ज्ञाननिष्ठायाः दुःसम्पाद्यत्वभावे फलितं निगमयति तस्मादिति ॥ ५० ॥

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

शाङ्करभाष्यम् ।

सेयं ज्ञानस्य परा निष्ठोच्यते कथं कार्येति बुद्ध्याध्यवसायात्मिकया विशुद्धया मायारहितया युक्तः सम्पन्नो धृत्या धैर्य्येण आत्मानं कार्यकरणसंघातं नियम्य च नियमनं कृत्वा वशीकृत्य शब्दादीन् शब्द आदिर्येषान्ते शब्दादयस्तान् विषयांस्त्यक्त्वा सामर्थ्यात् शरीरस्थितिमात्रात् केवलान् मुक्त्वा ततोऽधिकान् त्यक्त्वेत्यर्थः शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य च परित्यज्य ॥ ५१ ॥

आनन्दगिरिकृतटीका ।

ब्रह्मज्ञानस्य परां निष्ठां प्रतिष्ठापितामनूद्य श्लोकान्तरमवतारयितुं पृच्छति सेयमिति सेयं ब्रह्मज्ञानस्य परा निष्ठा समारोपितातद्धर्मनिवृत्तिद्वारा ब्रह्मणि परिसमाप्तिर्ज्ञानसन्तानरूपोच्यते सा कार्य्या सुसम्पाद्येति यदुक्तं तत् कथं केनोपायेनेति प्रश्नार्थः पृष्टमुपायभेदमुदाहरति बुद्ध्येति अध्यवसायो ब्रह्मात्मनिश्चयः मायारहितत्वं संशयविपर्यय-

स्वामिकृतटीका ।

एवम्भूतस्य पारमहंस्यज्ञाननिष्ठया ब्रह्मभावप्रकारमाह सिद्धिं प्राप्त इति षड्भिः नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वचनान्निबोध प्रतिष्ठिताया ब्रह्मप्राप्तिस्तामिमां तथा दर्शयितुमाह निष्ठाज्ञानस्य या परेति निष्ठापर्यवसानं परिसमाप्तिरित्यर्थः ॥ ५० ॥

भाषा अनुवाद ।

पूर्वोक्त ऐसे परमहंस पुरुषको ज्ञाननिष्टाक्रमसे ब्रह्मभावको प्राप्तिका प्रकार इस श्लोक से ले साठि के श्लोकतक कहते हैं कि हे कौन्तेय अर्जुन नैकर्म्य सिद्धिको पाय करके ज्ञानविषयक प्रकृष्टनिष्ठासे जैसे पुरुष ब्रह्मको प्राप्त होते हैं सो प्रकार संक्षेपरूप हमसे श्रवण करो अर्थात् ज्ञानकी जो श्रेष्ठ निष्ठा है सो शुनो ॥ ५० ॥

विविक्तसेवी लघ्वाशी यत वाक्कायमानसः।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ ५२॥

## शाङ्करभाष्यम्।

ततः विविक्तसेवी अरण्य नदीपुलिन गिरि गुहादीन् देशान् सेवितुं शीलमस्येति विविक्तसेवी लघ्वाशीलघ्वशनशीलो विविक्तसेवालघ्वशनयोर्निद्रादिदोषनिवर्त्तकत्वेन चित्तप्रसादहेतुत्वात् ग्रहणं यतवाक्कायमानसो वाक् च कायश्च मानसञ्च यतानि नियतानि संतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसः स्यादेवमुपरतकरणः सन् ध्यानयोगपरो ध्यानमात्मस्वरूपचिन्तनं योग आत्मस्वरूपविषय एवैकाग्रीकरणं तौ ध्यानयोगौ परत्वेन कर्त्तव्यौ यस्य स ध्यानयोगपरो नित्यं नित्यग्रहणं मन्त्रजपाद्य-

## आनन्दगिरिकृतटीका।

शून्यत्व शब्दादिसमस्तविषयत्यागे देहस्थितिरपि दुःस्था स्यादित्याशङ्क्याह सामर्थ्यादिति विषयमात्रत्यागे देहस्थित्यनुपपत्तेर्ज्ञाननिष्ठासिद्धिप्रसङ्गादित्यर्थः देहस्थित्यर्थत्वेनाथानुज्ञाते-ष्वर्थेषु प्रागारागादिज्ञाननिष्ठाप्रतिबन्धकं व्युदस्यति शरीरेति परित्यज्य विविक्तसेवी स्यादिति सम्बन्धः॥ ५१॥

## स्वामिकृतटीका।

तदेवाह बुद्धेति उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विकया बुद्ध्या युक्तस्तया सात्त्विकया आत्मानं तामेव बुद्धिं नियम्य निश्चलां कृत्वा शब्दादीन् विषयांस्त्यक्त्वा तन्निमित्तौ रागद्वेषौ व्युदस्य बुद्ध्या विशुद्धया युक्त इत्यादीनां ब्रह्मभूयायकल्पत इति तृतीयेनान्वयः॥५१॥

## भाषा अनुवाद।

सोई निष्ठा कहते हैं कि उक्तप्रकार क्रमसे पूर्वोक्त विशुद्धस्वरूप सात्त्विक बुद्धियुक्त पुरुष सात्त्विकी धृतिसे आत्मा कहे इस बुद्धिको नियम्य कहे निश्चल करके शब्द आदि सर्वविषय त्याग करने के अनन्तर औ विषय प्रयुक्त राग द्वेष भी दूर करके ब्रह्मभावको प्राप्त होते हैं इस श्लोक से ले तीन श्लोक का अर्थ एकसाथ होता है॥ ५१॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहं।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

शाङ्करभाष्यम्।

न्यकर्तव्याभावदर्शनार्थं वैराग्यं विरागाभावो दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितो नित्यमेवेत्यर्थः ॥ ५२ ॥

आनन्दगिरिकृतटीका।

बुद्धेर्वैशारद्यं यत्नेन कार्यकरणनियमनन्देहस्थितिहेतुतिरिक्तविषयत्यागः देहस्थित्यर्थेष्वपि तेषु रागद्वेषवर्जनमित्युपायभेदे सिद्धे सत्युपायान्तराण्यपि यत्नसाध्यानीत्याह तत इति चित्तैकाग्र्यप्रसादार्थं विविक्तसेवित्वं व्याकरोति अरण्येति निद्रादिदोषनिवृत्त्यर्थं लघ्वाशित्वं विशदयति लघ्विति लघुपरिमितं हितं मेध्यं चाशितुं शीलमस्येति तथोच्यते विशेषणयोस्तात्पर्यं विवृणोति विविक्तेति निद्रादीत्यादिशब्दादालस्यप्रमादादयो बुद्धिविक्षेपका विवक्षिताः वक्ष्यमाणध्यानयोगयोरुपायत्वेन विशेषणान्तरं विभजते वाक् चेति वागादिसंयमस्यावश्यकत्वद्योतनार्थं स्यादित्युक्तं संयतवागादिकरणग्रामस्यानायासेन कर्त्तव्यमुपदिशति एवमिति मन्त्रजपादीत्यादिपदेन प्रदक्षिणप्रणामादयो ध्यानयोगप्रतिबन्धका गृहीताः उक्तयोरेव ध्यानयोगयोरुपायत्वेनोक्तं विरागभावं विभजते दृष्टेति सम्यक्त्वमेव व्यनक्ति नित्यमिति ॥ ५२ ॥

स्वामिकृतटीका।

किञ्च विविक्तेति विविक्तसेवी शुचिदेशस्थायी लघ्वाशी मितभोजी एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन् ध्यानाविच्छेदार्थं पुनः पुनर्दृढं वैराग्यं सम्यगाश्रितो भूत्वा ॥ ५२ ॥

भाषा अनुवाद।

विविक्तसेवी कहे पवित्रदेशवासी औ लघ्वासी कहे परिमित आहारकारी होय और इन उपायों से यतवाक् काय मानस अर्थात् वचन देह औ मनको वशकरके सदा ध्यानक्रमसे जो योग कहे अविद्या अज्ञाननिवृत्ति रूप ब्रह्मसाक्षात्कार तिसमें तत्परहो अपने ध्यानके अविच्छेद के लिये सम्पूर्ण रूप से वारंवार दृढ़वैराग्य का आश्रय लेकर ॥ ५२ ॥

## शाङ्करभाष्यम् ।

किञ्च अहंकरणमहङ्कारो देहेन्द्रियादिषु तं बलं सामर्थ्यं कामरागादियुक्तं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन त्यागस्याशक्यत्वात् दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः हृष्टः दृप्यति दृप्तो धर्ममतिक्रामतीति स्मरणात् तञ्च काममिच्छां क्रोधं द्वेषञ्च परिग्रहमिन्द्रियमनोगतदोषपरित्यागे शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तस्तञ्च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावो निर्ममोऽतएव शान्त उपरतः यः संहृतायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥ ५३ ॥

## आनन्दगिरिकृतटीका ।

ज्ञाननिष्ठस्य यतेर्विशेषणान्तरं समुच्चिनोति किञ्चेति नित्यध्यानयोगपरत्वे समुच्चितं कारणान्तरं विष्टणोति अहङ्करणमिति सामर्थ्यमात्रे बलशब्दादुपलभ्यमाने किमिति-विशेषवचनमित्याशङ्क्याह स्वाभाविकत्वेनेति उक्ते दर्पे मानमाह हृष्ट इति वैराग्यशब्देन लब्धस्यापि कामत्यागस्य पुनर्वचनं प्रकृष्टत्वख्यापनार्थमहङ्कारादित्यागे परिग्रहप्राप्तभावात्तत्त्यागोक्तिरयुक्तेत्याशङ्क्याह इन्द्रियेति परिग्रहाभावे ममत्वविषयाभावान्निर्ममत्वं कथमित्याशङ्क्याह देहेति अहङ्कारममकारयोरभावेन प्राप्तमन्तःकरणोपरतिमनुवदति अत एवेति उक्तमनूद्य जीवन्नेवाऽसौ ब्रह्मो भवतीति फलितमाह यः संहृतेति ज्ञाननिष्ठापदादूर्ध्वं स शब्दो द्रष्टव्यः ब्रह्मणो भवनमनुसन्धानपरिपाकपर्य्यन्तं साक्षात्करणं तदर्थमिति यावत् ॥ ५३ ॥

## स्वामिकृतटीका ।

ततश्च अहङ्कारमिति विरक्तोऽहमित्याद्यहङ्कारं बलं दुराग्रहं दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणं प्रारब्धवशात् अप्राप्यमानेष्वपि विषयेषु कामं क्रोधं परिग्रहञ्च विमुच्य-विशेषेण त्यक्त्वा बलादापन्नेषु निर्ममः सन् शान्तः परमोपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैश्चल्येनावस्थानाय कल्पते योगस्यो भवति ॥ ५३ ॥

## भाषा अनुवाद ।

और अंहङ्कार औ बल कहे निन्दा वस्तुकी इच्छा औ दर्प कहे योग बलसे आकाश गमन रूप आदि माया मे प्रवृत्ति औ प्रारब्धवशते अप्राप्य-

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते परां ॥ ५४ ॥

शाङ्करभाष्यम् ।

अनेन क्रमेण ब्रह्मभूतो ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावो न शोचति किञ्चिदर्थवैकल्यं आत्मनो वा वैगुण्यमुद्दिश्य न शोचति न सन्तप्यते न कांक्षति न प्राप्तविषयाकांक्षा ब्रह्मविद उपपद्यते अतो ब्रह्मभूतस्यायं स्वभावोऽनूद्यते न शोचति न कांक्षतीति न हृष्यतीति वा पाठः समः सर्वेषु आत्मौपम्येन सर्वेषु भूतेषु सुखदुःखं वा सममेव पश्यतीत्यर्थो नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वात् भक्त्या मामभिजानातीति च एवंभूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं परामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते चतुर्विधा भजन्ते मामित्युक्तं ॥ ५४ ॥

आनन्दगिरिकृतटीका ।

अपेक्षितं पूरयन्नुत्तरश्लोकमवतारयति अनेनेति बुद्ध्या विशुद्धयेत्यादिरत्र क्रमः ब्रह्मप्राप्तो जीवन्नेव निवृत्ताशेषार्थो निरतिशयानन्दब्रह्मात्मत्वेन भवन्नित्यर्थः अध्यात्मं प्रत्यगात्मा तस्मिन् प्रसादः सर्वानर्थनिवृत्त्या परमानन्दाविर्भावः स लब्धो येन जीवन्मुक्तेन स तथा न शोचतीत्यादौ तात्पर्यमाह नहीति प्राप्तव्यपरिहार्य्याभावनिश्चयादित्यर्थः स्वभावानुवादमुपपादयति ब्रह्मभूतस्येति तस्याप्राप्तविषयाभावान्नापि परिहार्य्यापरिहारप्रयुक्तः शोकपरिहार्य्यस्यैवाभावादित्यर्थः पाठान्तरे तु रमणीयं प्राप्य प्रमोदते तदभावादित्यर्थः विवक्षितं समदर्शनं विशदयति आत्मेति ननु सर्वेषु भूतेष्वात्मनः समस्य निर्विशेषस्य दर्शनमत्राभिप्रेतं किं नेष्यते तत्राह नात्मेति उक्तविशेषणवतो जीवन्मुक्तस्य ज्ञाननिष्ठाप्रागुक्तक्रमेण प्राप्ता सुप्रतिष्ठिता भवतीत्याह एवम्भूत इति श्रवणमननिदिध्यासनाभ्यासवतः शमादियुक्तस्याभ्यस्तैः श्रवणादिभिः ब्रह्मात्मन्यपरोक्षं मोक्षफलं ज्ञानं सिध्यतीत्यर्थः आर्त्तादिभक्तित्रयापेक्षया ज्ञानलक्षणां भक्तिं चतुर्थीमित्युक्तां तत्र सप्तमस्थवाक्यमनुकूलयति चतुर्विधा इति ॥ ५४ ॥

भाषा अनुवाद ।

वस्तु मे जो काम क्रोध का रोकना औ अदृष्टवशते हठात् प्राप्तवस्तु मे भी ममतारहित होके शान्तिको प्राप्तपुरुष ब्रह्म के साथ रता अर्थात् अहं ब्रह्म ऐसा अचलरूप अवस्थान करने के योग्य है ॥ ५३ ॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

शाङ्करभाष्यम् ।

ततो ज्ञानलक्षणया भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदः यश्चाऽहं विध्वस्तसर्वोपाधिभेदोऽभिमत उत्तमपुरुष आकाशकल्पस्तं मामद्वैतं चैतन्यमात्रैकरसमजमजरममरमभयमनिधनन्तत्त्वतोऽभिजानाति ततो मामेवन्तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति किं तर्हि फलान्तराभावात् ज्ञानमात्रमेव क्षेत्रज्ञञ्चापि मां विद्धीत्युक्तत्वात् ननु

आनन्दगिरिकृतटीका ।

ननु समाधिसाध्येन परमभक्त्यात्मकेन ज्ञानेन किं अपूर्वमवाप्यते तत्राह तत इति भक्त्या समाधिजन्यया मां ब्रह्माभिमुख्येन प्रत्यक्तया जानाति व्याप्नोतीत्यर्थः तदेव ज्ञानं भक्तिपराधीनं विवृणोति यावानिति आकाशकल्पत्वमनवच्छिन्नत्वमसङ्गत्वञ्च चैतन्यस्य विषय-

स्वामिकृतटीका ।

ब्रह्माहमिति नैश्चल्येनावस्थानस्य फलमाह ब्रह्मेति ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तः नष्टं न शोचति नचाप्राप्तं काङ्क्षति देहाद्यभिमानाभावात् अतएव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात् सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

भाषा अनुवाद ।

अहं ब्रह्म ऐसी निश्चयरूप अवस्थितिका फल कहते हैं कि ब्रह्मभूत कहे ब्रह्मभाव को प्राप्त प्रसन्नचित्त पुरुष देह आदि मे अभिमानके अभाव से नष्ट जो संसारी विषय तिनका शोच नहीं करते है और अप्राप्तविषय की भी आकांक्षा नहीं करते हैं इसीसे रागद्वेषादिकृत विक्षेप के अभाव से भूतमात्र मे समभावयुक्त होनेके अनन्तर वे पुरुष सकल प्राणीयों मे मद्भावरूप जो मेरी उत्तमभक्ति तिसको प्राप्त होते हैं ॥ ५४ ॥

शाङ्करभाष्यम् ।

विरुद्धमिदमुक्तं ज्ञानस्य या परा निष्ठा तया मामभिजानातीति कथं विरुद्धमिति चेदुच्यते यदैव यस्मिन् विषये ज्ञानमुत्पद्यते ज्ञातुस्तदैव तं विषयमभिजानाति ज्ञातेति न ज्ञाननिष्ठां ज्ञानवृत्तिलक्षणामपेक्षत इति ततश्च ज्ञानेन नाभिजानाति ज्ञानवृत्त्या तु ज्ञाननिष्ठयाऽभिजानातीति नैष दोषो ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावमानत्वन्तस्य निष्ठाशब्दाभिलापात् शास्त्राचार्योपदेशेन ज्ञानोत्पत्तिपरिपाकहेतुसहकारिकारणं बुद्धिविशुद्धात्वमानित्वादिगुणं चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्त्रादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानं सा परा ज्ञाननिष्ठेत्युच्यते सेयं ज्ञाननिष्ठा आर्त्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्त्तते अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचनं न विरुध्यते अत्र च सर्वं निवृत्तिविधायिशास्त्र-

आनन्दगिरिकृतटीका ।

सापेक्षत्वं प्रतिक्षिपति अद्वैतमिति ये तु द्रव्यबोधात्मत्वमात्मनो मन्यन्ते तान् प्रत्युक्तं चैतन्यमात्रेति आत्मनि तन्मात्रेऽपि धर्मान्तरमुपेत्य धर्मधर्मित्वं प्रत्याह एकरसमिति सर्वविक्रियाराहित्योक्त्या कौटस्थ्यमात्मनो व्यवस्थापयति अजरमिति उक्तविक्रियाभावे तद्वेत्त्रज्ञानासम्बन्धे हेतुमाह अभयमिति तत्त्वज्ञानमनूद्य तत्फलं विदेहकैवल्यं लक्षयति तत इति तत्त्वज्ञानस्य तस्मादनन्तरप्रवेशक्रियायाश्च भिन्नत्वं प्राप्तं प्रत्याह नात्रेति भिन्नत्वाभावे का गतिर्भेदोक्तेरित्याशंक्यौपचारिकत्वमाह किं तर्हीति प्रवेश इति शेषः ब्रह्मप्राप्तेरेव फलान्तरमित्याशङ्क्य ब्रह्मात्मनोर्भेदाभावान्न ज्ञानातिरिक्ता तत्प्राप्तिरित्याह ज्ञेत्रज्ञेति ज्ञाननिष्ठया परया भक्त्या मामभिजानातीत्युक्तमाक्षिपति नन्विति विरुद्धत्वं स्फोतयितुं पृच्छति कथमिति विरोधस्फुटीकरणं प्रतिजानीते उच्यत इति तत्र ज्ञानस्योत्पत्तिरेव विषयाभिव्यक्तिरित्याह यदेति एवकारनिरस्यं दर्शयति न ज्ञानेति उत्थावयोः सिद्धमिति शेषः ज्ञानस्योत्पत्तेरेव विषयाभिव्यक्तत्वेऽपि कथं भक्ते विरोधीत्याशङ्क्याह ततश्चेति विरुद्धमिति शेषः शंकितं विरोधं निरस्यति नैष दोष इति उक्तमेव हेतुं प्रपञ्चयति शास्त्रेति यो

## शाङ्करभाष्यम्।

वेदान्तेतिहासपुराणस्मृतिलक्षणं प्रसिद्धमर्थवद्भवति विदित्वा व्युत्थायाथ भिक्षाचर्यं चरन्ति तस्मात् न्यासमेषान्तपसामतिरिक्तमाहुर्न्यास एवात्यरेचयदिति संन्यासः कर्मणां न्यासो वेदानिमञ्च लोकममुञ्च परित्यज्य त्यज धर्ममधर्मञ्चेत्यादि इह च दर्शितानि वाक्यानि नच तेषां वाक्यानां आनर्थक्यं युक्तं चार्थवादत्वं स्वप्रकरणस्थत्वात् प्रत्यगात्मा विक्रियस्वरूपनित्यत्वाच्च मोक्षस्य नहि पूर्वसमुद्रं जिगमिषो प्रातिलोम्येन प्रत्यक्समुद्रजिगमिषुणा समानमार्गत्वं सम्भवति प्रत्यगात्मविषयप्रत्ययसन्तानकरणाभिनिवेशश्च ज्ञाननिष्ठा सा च प्रत्यक् समुद्रगमनवत् कर्मणा सह भावित्वेन विरुध्यते पर्वतसर्षपयोरिवान्तरवान्विरोधः प्रमाणविदां निश्चितस्तस्मात् सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्येतिसिद्धं ॥ ५५ ॥

### आनन्दगिरिकृतटीका।

हि शास्त्रानुसार्याचार्योपदेशस्तेन ज्ञानोत्पत्तिः आचार्यवान् पुरुषो वेदेति श्रुतेः तस्याश्च परिपाकः संशयादिप्रतिबन्धध्वंसस्तत्र हेतुभूतमुपदेशस्यैव सहकारिकारणं यद्बुद्धिशुद्ध्यादि तदपेक्ष्य तस्मादेवोपदेशाज्जनितं यदैक्यज्ञानं तस्य कारकभेदबुद्धिनिबन्धनानि यानि सर्वाणि कर्माणि तेषां संन्यासेन सहितस्य फलरूपेण स्वात्मन्येव सर्वप्रकल्पनारहिते यदवस्थानं सा ज्ञानस्य परा निष्ठेति व्यवह्रियते प्रामाणिकैरित्यर्थः यदि यथोक्ता परा ज्ञाननिष्ठा कथं तर्हि सा चतुर्थी भक्तिरित्युक्तेति तत्राह सेयमिति यथोक्तया भक्त्या भगवत्तत्त्वज्ञानं सिध्यतीत्याह तयेति तत्त्वज्ञानस्य फलमाह यदनन्तरमिति ज्ञाननिष्ठारूपाया भगवद्भक्तेस्तत्त्वज्ञानातिरेकात्तत्फलस्य चाज्ञाननिवृत्तेस्तन्मात्रत्वात् वेदोक्तेरौपचारिकत्वात् प्रकृतं वाक्यमविरुद्धमुपसंहरति अत इति औपदेशिकैक्यज्ञानस्य सर्वकर्मसंन्याससहितस्य स्वरूपावस्थानात्मकस्य परमपुरुषार्थोपयिकत्वमित्यस्मिन्नर्थे मानमाह अत्र चेति तदेव शास्त्रमुदाहरति विदित्वेत्यादिना दर्शितानि वाक्यानि सर्वकर्माणि मनसेत्यादीनि नन्वेषां वाक्यानामविज्ञातार्थत्वान्नास्ति सार्थं प्रामाण्यमित्याशङ्क्याध्ययनविध्युपात्तत्वात् वेदवाक्यानान्तदनुरोधित्वान्नेतरेषां नैवमित्याह नचेति तथापि सरोदीदित्यादिवन्नस्वार्थे मानतेत्याशङ्क्याह नचार्थवादत्वमिति इतश्च मुमुक्षोरपेक्षितमोक्षौपयिकज्ञाननिष्ठस्य संन्यासेऽधिकारो न कर्मनिष्ठायामित्याह प्रत्यगिति ज्ञाननिष्ठस्य कर्मनिष्ठाविरुद्धेत्यत्र दृष्टान्तमाह नहीति ज्ञाननिष्ठास्वरूपानुवादपूर्वकं कर्मनिष्ठया तस्याः सहभावित्वं विरुद्धमिति दार्ष्टान्तिकमाह

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

## शाङ्करभाष्यम् ।

स्वकर्मणा भगवतोऽर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना स भगवद्भक्तियोगोऽधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय सर्वकर्माणि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन् मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मस्वभाव इत्यर्थः सोऽपि मत्प्रसादान्ममेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णवं पदमव्ययं ॥ ५६ ॥

### आनन्दगिरिकृतटीका ।

मत्प्रत्यगात्मेति कथं ज्ञानकर्मणोर्विरोधधीरित्याशंक्य कर्मणां ज्ञाननिर्वर्त्यत्वस्य श्रुतिस्मृतिसिद्धत्वादित्याह पर्यन्तेति अन्तरवानुभयोरेकधर्मिनिष्ठत्वेन सांसार्यभावसम्पादकभेदवागित्यर्थः ज्ञानकर्मणोरसमुच्चये फलितमुपसंहरति तस्मादिति ॥ ५५ ॥

### स्वामिकृतटीका ।

ततश्च भक्त्येति तया च परया भक्त्या तत्त्वतो मामभिजानाति कथं भूतं यावान् सर्वव्यापी यश्चास्मि सच्चिदानन्दघनस्तथाभूतं ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्योपरमे सति मां विशते परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

## भाषा अनुवाद ।

तिसके अनन्तर वही उत्तम भक्ति के द्वारा हमको यथार्थरूप से जानते हैं और मैं कैसा हूं इस अपेक्षापर कहते हैं कि जिस रूपसे हम सर्वव्यापी औ घनचिदानन्द स्वरूप हैं तैसा हमको जानते हैं औ तिसके अनन्तर हमको ऐसेयथार्थरूप से जानिके फेर उस ज्ञानके उपर मकहे शान्तहोनेपर हमारेहोमे प्रवेशकरते अर्थात् परमानन्द स्वरूप होते हैं ॥ ५५ ॥

आनन्दगिरिकृतटीका।

तर्हि ज्ञाननिष्ठयैव मोक्षसम्भवाच्च कर्मानुष्ठानसिद्धिरित्याशंक्याह स्वकर्मणेति तामेव सिद्धिप्राप्तिं विशिनष्टि ज्ञानेति ज्ञाननिष्ठायोग्यतायै स्वकर्मानुष्ठानं भगवदर्चनरूपे कर्त्तव्यमित्यर्थः ज्ञाननिष्ठायोग्यतापि किमर्थेत्याशंक्य ज्ञाननिष्ठासिद्ध्यर्थेत्याह यन्निमित्तेति ज्ञाननिष्ठापि कुत्रोपयुक्तेत्यत आह मोक्षेति स्वकर्मणा भगवदर्चनात्मनो भक्तियोगस्य परम्परया मोक्षफलस्य कार्यत्वेन विधेयत्वं विध्यपेक्षितां स्तुतिमवतारयति स भगवदिति ज्ञाननिष्ठा कर्मनिष्ठेत्युभयं प्रतिज्ञाय तत्र विभागेन प्रतिपादिते किमितीदानीं कर्मनिष्ठा पुनःस्तुत्या कर्त्तव्यतयोच्यते तत्राह शास्त्रार्थेति तत्र तत्रोक्तस्यैव कर्मानुष्ठानस्य प्रकरणवशादिहोपसंहारः सर्वशास्त्रार्थनिश्चयस्य दृढतां द्योतयतीत्यर्थः यद्यपि कस्यचित् कर्मानुष्ठायिनो बुद्धिशुद्धिद्वारा कैवल्यं सिध्यति तथापि पापबाहुल्यादकर्मानुष्ठायिनोऽपि कस्यचिद् बुद्धिशुद्ध्यभावे कैवल्यासिद्धिरित्यत आह सर्वकर्माणीति सर्वशब्दानुरोधादीश्वराराधनस्तुतिपरत्वेन श्लोकं व्याचष्टे प्रतिषिद्धान्यपीति नित्यनैमित्तिकवदित्यपेरर्थः निषिद्धाचरणस्य प्रामाणिकत्वं व्यावर्त्तयति सदेति अनुतिष्ठन् वैष्णवं पदमाप्नोतीति सम्बन्धः पापकर्मकारिणो यथोक्तपदप्राप्तौ पापस्यापि मोक्षफलत्वमुपगतं स्यादित्यत आह मद्व्यपाश्रय इति तस्यैव तात्पर्यमाह मयीति तर्हि ज्ञानस्य मोक्षहेतुत्वमुपेक्षितं स्यादित्यत आह सोऽपीति ॥ ५६ ॥

स्वामिकृतटीका।

स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति सर्वकर्माणीति सर्वाणि नित्यानि नैमित्तिकानि च कर्माणि पूर्वोक्तक्रमेण सर्वदा कुर्वाणः मद्व्यपाश्रयः अहमेव व्यापाश्रय आश्रयणीयो नतु स्वर्गादिफलं यस्य स मत्प्रसादात् शाश्वतमनादिमव्ययं नित्यं सर्वोत्कृष्टं पदं प्राप्नोति ॥ ५६ ॥

भाषा अनुवाद।

अपने अधिकार अनुसार कर्मकी क्रमसे भगवत्की आराधना हेतु से कहा जो मुक्तिका प्रकार सो कहते हैं कि नित्य औ नैमित्तिक पूर्व कहे हुये सर्व कर्मका निरन्तर अनुष्ठानकारी औ मत्व्यपाश्रय कहे जिस का मै हीं आश्रयणीय हों और स्वर्ग आदि फल आश्रयणीय नहीं है ऐसा पुरुष मेरी अनुग्रह से शाश्वत अर्थात् अनादि औ अव्यय कहे नित्य जो सर्वश्रेष्ठ ब्रह्मपद तिसको प्राप्त होते हैं ॥ ५६ ॥

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥**

## शाङ्करभाष्यम् ।

यस्मादेवन्तस्मात् चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य यत् करोषि यदश्नासीत्युक्तन्यायेन मत्परोऽहं वासुदेवः परो यस्य तव स त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः बुद्धियोगमपि समाहित बुद्धित्वं बुद्धियोगस्तं बुद्धियोगमुपाश्रित्य आश्रयोऽनन्यशरणत्वं मच्चित्त मय्येव चित्तं यस्य स मच्चित्तः सततं सर्वदा भव ॥ ५७ ॥

### आनन्दगिरिकृतटीका ।

प्रसादोऽनुग्रहः सम्यक्ज्ञानोदयः पदं पदनीयं उपनिषत्तात्पर्यगम्यमव्ययमपक्षयरहितं परमेश्वरप्रसादस्यैवं माहात्म्यं यतः सिद्धन्तस्मात्तत्प्रसादार्थं भवता प्रयतितव्यमित्याह यस्मादिति भगवत्प्रसादाद्दासादितसम्यक्ज्ञानादेव मुक्तिर्न कर्ममात्रादिति मानं विवेकबुद्धिः आश्रयशब्दार्थमाह अनन्येति किमतो भवति तदाह मच्चित्त इति ॥ ५७ ॥

### स्वामिकृतटीका ।

यस्मादेवं तस्मात् चेतसेति सर्वाणि कर्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य स व्यवसायात्मिकया बुद्ध्या योगमुपाश्रित्य सततं कर्मानुष्ठानकालेऽपि ब्रह्मार्पणं ब्रह्महविरिति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥ ५७ ॥

## भाषा अनुवाद ।

जिस हेतु नित्य आदि कर्मके अनुष्ठान से ब्रह्मप्राप्ति होती है इससे सर्वकर्म बुद्धिके द्वारा हमको समर्पण करिके मत्पर कहे मही हो परम प्रार्थनीय प्राप्य परम पुरुषार्थ सर्वस्वरूप जिस के अथवा व्यवसायात्मिका बुद्धिके द्वारा कर्मयोगको आश्रय करके सतत कहे कर्म के अनुष्ठानकाल मे भी मद्गतचित्त पुरुष ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतं इसी अध्याय के २४ श्लोक से कहे हुये ज्ञान के द्वारा मेरेमें चित्त समर्पित होता है सो अर्जुन तुम बुद्धियोग से तद्रूप हो मतचित्त होउ ॥ ५७ ॥

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनंक्ष्यसि॥ ५८॥**
**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे।**
**मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥ ५९॥**

### शाङ्करभाष्यम्।

मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यसि अतिक्रमिष्यसि अथ चेत् यदि त्वं मे मदुक्तमहङ्कारात् पण्डितोऽहमिति न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनंक्ष्यसि विनाशङ्गमिष्यसि ५८॥

इदञ्च त्वया न मन्तव्यं स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति यदि चेतत्त्वमहङ्कारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिन्त-

### आनन्दगिरिकृतटीका।

भीत्यापि प्रवर्त्तेत इति मन्वानो विपर्य्यये दोषमाह अथचेदिति॥ ५८॥ स्वातन्त्र्ये सति भीतेरवकाशो नास्तीत्याशंक्याह इदञ्चेति इतश्च त्वया युद्धाच्च वैमुख्यं कर्त्तुमुचित-

### स्वामिकृतटीका।

ततो यद्भविष्यति तच्छृणु मच्चित्त इति मच्चित्तः सन् मत्प्रसादात् सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकदुःखानि तरिष्यसि विपक्षे दोषमाह अथ चेत् यदि पुनस्त्वमहङ्कारात् ज्ञातृत्वाभिमानात् मदुक्तमेवं न श्रोष्यसि तर्हि विनंक्ष्यसि पुरुषार्थात् भ्रष्टोभविष्यसि॥५८॥

### भाषा अनुवाद।

और मम चित्त होने से जो होगा सो शुनो तात्पर्य्य यह कि मद्गत चित्त होके मेरी कृपा से तावत् दुर्ग अर्थात् दुस्तर सांसारिक दुःखसमूह से तरिजावगे और इसके विपरीत आचरण में दोष कहते हैं कि और जो इस प्रकार कहने परभी तुम अपने अहंकार अर्थात् हम बडे ज्ञानी इस अभिमान से हमारे कहनेपर कान न करोगे तो पुरुष को उचित औ हित करनेवाला जो धर्म तिससे नष्ट होउगे अर्थात् विनष्ट हो यावगे औ दुर्गति भी भोगना पडेगा॥ ५८॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्त्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

शाङ्करभाष्यम् ।

यदि निश्चयं करोषि मिथ्यैव व्यवसायो निश्चयस्ते तव यस्मात् प्रकृतिः क्षत्रस्वभावस्त्वां नियोक्ष्यति ॥ ५९ ॥

यस्माच्च स्वभावजेन शौर्यादिना कौन्तेय यथोक्तेन निबद्धनिश्चयेन बद्धः स्वेनात्मीयेन कर्म्मणा कर्त्तुं नेच्छसि यत् कर्म मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत् कर्म यस्मात् ॥ ६० ॥

आनन्दगिरिकृतटीका ।

मिथ्याह मिथ्येति ॥ ५९ ॥ यस्माच्चेति स्वभावजेन कर्मणा निबद्धस्त्वमिति सम्बन्धः कृतोऽपि त्वया युद्धं कर्त्तव्यमेवेत्याह यस्मादिति ॥ ६० ॥

स्वामिकृतस्वटीका ।

कार्म विनंक्ष्यामि ननु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह यदहङ्कारमिति मदुक्त-मनादृत्य केवलमहङ्कारमवलम्ब्य युद्धं न करिष्यामीति यन्मन्यसे त्वमध्यवस्यसि एष तव व्यवसायो मिथ्यैवास्वतन्त्रत्वात्तव तदेवाह प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियो-क्ष्यति युद्धे प्रवर्त्तयिष्यत्येव ॥ ५९ ॥

भाषा अनुवाद ।

और जो कहो कि अच्छा हम धर्म से भ्रष्ट होंय परन्तु तौभी भाई औ बन्धुवों के साथ युद्ध न करेंगे तिसपर कहते हैं कि मेरी कही सब बातोंको अनादर पूर्वक अहङ्कार के भरोसेसे जो कहो कि मैं युद्ध न करूंगा ऐसो जो तुम मनमें निश्चय करते हो तो तुमारा यह निश्चय करना स्वाधीनताके अभाव हेतुसे है अर्थात् तुम स्वाधीन नहीं हो मिथ्या कहे झुठमूठ मानते हो सोई कहते हैं कि जो तुमारी प्रकृति कहे क्षत्रीको रजोगुणकी अधिकाई सो तुमको अवश्यही युद्धमे प्रवृत्त करेगी अन्तको झखमारोगे औ लडोगे और इस पीटना के पीटनेसे केवल जगत मे दुर्यश छोड़ और कुछ हाथ लगना नहीं है ५९ ॥

## ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
## भ्रामयन् सर्वभूतानि यन्त्रारूढ़ानि मायया ॥ ६१ ॥

### शाङ्करभाष्यम् ।

ईश्वरः ईशनशीलो नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशेऽर्जुन शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरण इति अहश्च कृष्णमहरर्जुनञ्चेति दर्शनात् तिष्ठति स्थितिं लभते स कथन्तिष्ठतीत्याह भ्रामयन् भ्रमणङ्कारयन् सर्वभूतानि यन्त्रारूढ़ानीव यन्त्राण्यारूढ़ान्यधिष्ठितानीवेति इवशब्दोऽत्र द्रष्टव्यो यथा दारुकृत् पुरुषादीनि यन्त्रारूढ़ानि कश्चित् मायया छद्मना भ्रामयन् तिष्ठतीति सम्बन्धः ॥ ६१ ॥

### आनन्दगिरिकृतटीका ।

अर्जुनशब्दस्योक्तार्थत्वे श्रुतिमुदाहरति अहश्चेति अहश्च कृष्णमहरर्जुनञ्च विवर्त्तेते रजसीवेद्याभिः इत्यत्र किञ्चिदहस्तावत् कृष्णमच्छकलुषितमिव लक्ष्यते किञ्चित् पुनरहरर्जुनमतिस्वच्छं शुद्धभावमुपलभ्यते एवमर्जुनशब्दस्य शुक्लशब्दपर्यायतया प्रयोगदर्शनादुक्तार्थत्वमुचितमित्यर्थः यन्त्रारूढ़ानीवेति कथमुच्यते तत्राह इवशब्द इति तदेव प्रपञ्चयति यथेति दारुमयानि यन्त्राणि यथा लौकिको मायावी मायया भ्रामयन् वर्त्तते तथेश्वरोऽपि सर्वाणि भूतानि भ्रामयन्नेव हृदये तिष्ठतीत्यर्थः ॥ ६१ ॥

### स्वामिकृतटीका ।

किञ्च स्वभावजेनेति स्वभावः क्षत्रियत्वहेतुः पूर्वसंस्कारस्तस्माज्जातेन स्वीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहात् यत् कर्म युद्धलक्षणं कर्त्तुं नेच्छसि अवशः संस्तत् कर्म करिष्यस्येव ॥ ६० ॥

### भाषा अनुवाद ।

और हे कौन्तेय कुन्तीनन्दन अर्जुन स्वभाव कहे जो पूर्वकर्मका संस्कार जिससे रजोगुणविशिष्ट क्षत्रीके जामा को प्राप्त हो औ शूरता आदि गुणकर्मोंसे निबद्ध कहे वशीभूत तुम मोहके मारे जो इस क्षणमे युद्धकर्म करनेकी इच्छा नहीं करते हो पर इसके वाद अवशहोय यही कर्म अवश्यही करोगे इसमे कुछ झूठ न मानो ॥ ६० ॥

**तमेव शरणं गच्छ सर्वभावेन भारत।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥**

स्वामिकृतटीका।

तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं चोक्तं इदानीं स्वमतमाह ईश्वर इति द्वाभ्यां सर्वभूतानां हृन्मध्ये ईश्वरोऽन्तर्यामी तिष्ठति किं कुर्वन् सर्वाणि भूतानि मायया निजशक्त्या भ्रामयंस्तत्तत्कर्मसु प्रवर्त्तयन् यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः यद्वा यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः तथाच श्वेताश्वतराणां मन्त्रः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति अन्तर्यामिब्राह्मणश्च य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यं आत्मा न वेद यस्यात्मा शरीरं एष ते अन्तर्याम्यमृत इत्यादि ॥ ६१ ॥

भाषा अनुवाद।

इससे पिछिले दोनो श्लोकमे सांख्य आदि मतानुसारी मनुष्योंकी प्रकृति पारतन्त्र कहे स्वभावाधीनता कहीगई अब दो श्लोकसे निज कहे अपना मत कहते हैं कि हे अर्जुन सकल भूतोंके हृदयमे नियामक रूपसे अन्तर्य्यामी ईश्वर स्थिति करते हैं तो किस प्रकारसे टिके हैं इस आकांक्षापर कहते हैं कि भूतमात्रको माया जो अपनी शक्ति तिसके जोरसे भ्रमण कहे उपस्थित समस्त कर्मोंमे प्रवृत्तकरावते भये सबमे टिके हैं जैसे कठपुतली को सूत्रधार बाजीगर लोगोंके सामने नचावे है अथवा यन्त्र कहे शरीर आरूढ़ कहे जीवको भ्रमण करावते स्थिति करते हैं इसपर श्वेताश्वतर उपनिषद् के मन्त्रका प्रमाण देते हैं कि एक स्वयंप्रकाश जो परमात्मा सो भूतोंमे निगूढ़ भावसे स्थित औ सर्वव्यापी सबके अन्तर्य्यामी औ कर्मोंके नियन्ता औ भूतोंके आधाररूप औ द्रष्टा देखनेवाले औ भूतमात्रको चेतनकारी अद्वितीय औ गुणातीत हैं और अन्तर्यामी जो बुद्धिमे स्थिति करके बुद्धिका नियम करते हैं और जिसको बुद्धि नहीं जानती औ बुद्धिही जिसकी उपाधि है सोई परमात्मा हमारे आत्मा औ अन्तर्य्यामीतथा कैवल्य मोक्ष स्वरूप हैं ॥ ६१ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

शाङ्करभाष्यम् ।

तमेवेश्वरं शरणमाश्रयं संसारार्त्तिहरणार्थं गच्छ आश्रय सर्वभावेन सर्वात्मना हे भारत ततस्तत्प्रसादादीश्वरानुग्रहात् परां प्रकृष्टां शान्तिं परामुपरतिं स्थानञ्च मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यम् ॥ ६२॥

इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्यात् गोप्यात् गुह्यतरं अतिशयेन गुह्यं रहस्यमित्यर्थः मया सर्वज्ञेनेश्वरेण विमृश्य विमर्शनमालोचनं कृत्वेतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥ ६३ ॥

आनन्दगिरिकृतटीका ।

ईश्वरः सर्वाणि भूतानि प्रेरयति चेत् प्राप्तं कैवल्यार्थस्यापि पुरुषकारस्यानर्थक्यमित्याशङ्क्याह तमेवेति सर्वात्मना मनोवृत्त्या वाचा कर्मणा चेत्यर्थः ईश्वरस्यानुग्रहात्तत्त्वज्ञानोत्पत्तिपर्यन्तादिति शेषः मुक्तास्तिष्ठन्त्यस्मिन्निति स्थानम् ॥ ६२ ॥

स्वामीकृतटीका ।

तमिति यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहङ्कारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ ततश्च तस्यैव प्रसादात् परामुत्तमामुपशान्तिं स्थानञ्च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

भाषा अनुवाद ।

जबकि ईश्वरही सर्वभूतमात्रका प्रेरक है औ उसीकी प्रेरणासे सकल कर्म प्राणी करते हैं तो फेरि अपना पुरुषार्थ करना वृथा है इस अभिप्रायसे कहते हैं कि जिस हेतुसे जीवमात्र परमेश्वरके वशीभूत हैं इससे हे भारत अर्जुन तुम अहङ्कारको परित्याग करके सम्यक् प्रकारसे उसी ईश्वरकी शरण ग्रहण करो तदनन्तर तिनकी कृपासे परा कहे उत्तम शान्ति औ परमेश्वरसम्बन्धी नित्य जो स्थान सो पावोगे यह भगवान् ने अर्जुनसे कहा ॥ ६२ ॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥ ६४॥

शाङ्करभाष्यम्।

तथा भूयोऽपि अवोच्यमानं शृणु सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तगुह्यतमं रहस्यं उक्तमप्यसकृद्भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यं न भयात् नाप्यर्थकारणाद्वा वक्ष्यामि तर्हि इष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते तव हितं परं ज्ञानप्राप्तिसाधनं॥ ६४॥

आनन्दगिरिकृतटीका।

शास्त्रमुपसंहर्त्तुमिच्छन्नाह इति ते ज्ञानमिति ज्ञानं करणव्युत्पत्त्या गीताशास्त्रं यथेच्छसि तथा कुरु ज्ञानं कर्माप्युपदिष्टं तदनु तिष्ठेत्यर्थः॥ ६३॥ गीताशास्त्रस्य पौर्वापर्य्येण विमर्शनद्वारा तात्पर्य्यार्थं प्रतिपत्तुमसमर्थं प्रत्याह भूयोऽपीति किमर्थमिच्छन् पुनःपुनरभिदधासीत्याशंक्याह न भयादिति॥ ६४॥

स्वामिकृतटीका।

सर्वगीतार्थमुपसंहरन्नाह इतीति इत्यनेन प्रकारेण ते तुभ्यं सर्वज्ञेन परमकारुणिकेन मयाज्ञानमाख्यातमुपदिष्टं कथंभूतं गुह्यात् गोप्यात् रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरं एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्य्यालोच्य पश्चाद्यथेच्छसि तथा कुरु एतस्मिन् पर्य्यालोचिते सति तव मोहो निवर्त्तिष्यत इति भावः॥ ६३॥

भाषा अनुवाद।

अब समस्त भगवद्गीताका अर्थ कहे तात्पर्य कहते हैं कि इस प्रकारसे मैंने दया करके तुमको ज्ञान उपदेश दिया और सो ज्ञान कैसा है इस अपेक्षासे कहते हैं कि गुह्य कहे गोपन करने योग्य तथा मन्त्रयगी आदिसेभी जो ज्ञान गुह्यतर अति रहस्य है सोई मैंने कहा इससे तुम गीताशास्त्रको अच्छीतरह आलोचन करके फिर तुमारी जैसी इच्छा होय तैसा करो भावार्थ यह कि इस गीताके अर्थका विचार करनेसे अवश्यही तुमारा मोह निवृत्त होजायगा यह भगवान् ने कहा॥ ६३॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

शाङ्करभाष्यम् ।

तद्धि सर्वहितानां हिततमस्थ्मित्याह मन्मना भव मच्चित्तो भव मद्भक्तो भव मद्भजनो भव मद्याजी मयि यजनशीलो भव मां नमस्कुरु नमस्कारं मयि ममैव कुरु तत्रैवं वर्त्तमानो वासुदेवे एव वर्म्मसमर्पित-साध्यसाधनप्रयोजनो मामेवैष्यसि आगमिष्यसि सत्यन्ते तव प्रतिजाने सत्यां प्रतिज्ञां करोम्येतस्मिन् वस्तुनीत्यर्थो यतः प्रियोऽसि मे एवं भगवतः सत्यप्रतिज्ञत्वं बुद्धा भगवद्भक्तेरवश्यम्भावि मोक्षफलमवधार्थ्य भगवच्छरणैकप-रायणो भवेदिति वाक्यार्थः ॥ ६५ ॥

स्वामिकृतटीका ।

अतिगम्भीरं गीताशास्त्रमशेषतः पर्य्यालोचितुमशक्तवतः कृपया स्वयमेव तस्य सारं संगृह्य कथयति सर्वगुह्यतममिति त्रिभिः सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचस्तत्र तत्रोक्तमपि भूयः पुनरपि वच्यमाणं शृणु पुनः पुनः कथने हेतुमाह दृढ़मत्यन्तमिष्टः प्रियोऽसीति मत्वा तत एव हेतोस्ते हितं वच्यामि यद्वा मम त्वमिष्टोऽसि मया वच्यमाणं दृढ़ं सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वच्यमीत्यर्थः दृढ़ामतिरिति क्वचित् पाठः ॥ ६४ ॥

भाषा अनुवाद ।

अति गूढ़ अर्थसे युक्त जो गीताशास्त्र तिसकी सम्यक् आलोचना कर-नेको असमर्थ जो अर्जुन तिनसे अनुग्रह करके श्रीभगवान् आपही गीताका सारसंग्रह करिके इस श्लोकसे ले तीन श्लोकके द्वारा कहते हैं कि उस सब गोपनीयसे भी अति गुह्यतम जो हमारे वचन यद्यपि प्रसंग प्रसंग-पर कहेभी गये हैं पर तौभी फेर कहता हूं सो तुम सुनो और वार वार कहनेमे हेतु कहते हैं कि तुम हमारे दृढ़ कहे अत्यन्त प्रिय हो इसीसे तुमारी प्रीति औ हितके अर्थ अनर्थ वारनके लिये फेरभी कहूंगा अथवा मेरी वाक्यको तुमने दृढ़प्रमाण करके जाना इससे तुम हमे अतिप्रिय हो इससे फेरि तुमारे हितके जो वचन हैं सो अवश्य कहूंगा ॥ ६४ ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥

## शाङ्करभाष्यम्।

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीं कर्मयोगत्यागनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तविहितं वक्तव्यमित्याह सर्वधर्मान् सर्वे च ते धर्माश्च सर्वधर्माः तान् धर्मशब्देनात्राधर्मोऽपि गृह्यते नैःकर्म्यस्य विवक्षितत्वात् नाविरतो दुश्चरितादिति त्यज धर्ममधर्मञ्चेत्यादि

## आनन्दगिरिकृतटीका।

हितमिति साधारणनिर्देशे कथं परमित्यादिविशेषणमित्याशंक्याह तद्धीति तदेव प्रश्नद्वारा विवृणोति किं तदित्यादिना उत्तरार्द्धं व्याचष्टे तत्रेति एवमुक्तया रीत्या वर्त्तमानस्त्वं तस्मिन्नेव वासुदेवे भगवति अर्पितसर्वभावो मामेवागमिष्यसीति सम्बन्धः सत्यप्रतिज्ञाकरणे हेतुमाह यत इति इदानीं वाक्यार्थं श्रेयोऽर्थिनां प्रवृत्त्युपयोगित्वेन संक्षिपति एवमिति ॥ ६५ ॥

## स्वामिकृतटीका।

तदेवाह मन्मना इति मन्मना मच्चित्तो भव मद्भक्तो भजनशीलो भव मद्याजी मद्यजनशीलो भव मामेव नमस्कुरु एवं वर्त्तमानस्त्वं मत्प्रसादलब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि अत्र च संशयं मा कार्षीः त्वं हि मे प्रियोऽसि अतः सत्यं यथा भवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥

## भाषा अनुवाद।

अब समस्त हितोंसे बढ़िके हित क्या है इस शङ्कापर कहनेको अङ्गीकार किये हुये गीताके अर्थसारको कहते हैं कि मन्मना कहे मतचित्त होउ औ मेरेही भक्त कहे आश्रित होउ औ मद्याजी कहे मेरेही पूजाकरो औ हमहीको नमस्कार करो इस प्रकार वर्त्तमान रहनेपर मेरी अनुग्रहसे प्राप्त तत्त्वज्ञानके द्वारा जो हमको प्राप्त होउगे इसमे कुछ संशय न करो क्योंकि तुम हमारे प्रियपात्र हो इसहेतु तुमको सत्य प्रत्यय कहे प्रतीति जिसमें होय इससे तुमको प्रतिज्ञा करके कहते हैं ॥ ६५ ॥

शाङ्करभाष्यम् ।

श्रुतिस्मृतिस्थाः सर्वधर्मान् परित्यज्य संन्यस्य सर्वकर्माणीत्येतन्मामेकं सर्वात्मानं सर्वभूतस्थमीश्वरं अच्युतं गुरुं जन्ममरणविवर्जितमहमेवेत्येवमेकं शरणं व्रज न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः अहं तु त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यो मोचयिष्यामि स्वात्मभावप्रकाशीकरणेन उक्तञ्च नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता इत्यतो मा शुचः शोकं मा कार्षीरित्यर्थः ॥ ६६ ॥

आनन्दगिरिकृतटीका ।

इत्तमनूद्यानन्तरश्लोकतात्पर्यमाह कर्मयोगेति धर्मविशेषणादधर्मानुज्ञां वारयति धर्मेति ज्ञाननिष्ठेन मुमुक्षुणा धर्माधर्मयोस्त्याज्यत्वे श्रुतिस्मृती उदाहरति नाविरत इति मामेकमित्यादेस्तात्पर्यमाह न मत्तोन्यदिति अर्जुनस्य क्षत्रियत्वादुक्तसंन्यासद्वारा ज्ञाननिष्ठायां मुख्यानधिकारेऽपि तं पुरःकृत्याधिकारिभ्यस्तस्योपदिदिक्षुत्वादविरोधमभिप्रेत्याह अहं त्विति उक्तेऽर्थेदार्शमिकं वाक्यमनुकूलयति उक्तञ्चेति ईश्वरस्य त्वदीयबन्धननिरसनद्वारा तत्पालयितृत्वान्न ते शोकावकाशोऽस्तीत्याह अत इति ॥ ६६ ॥

स्वामिकृतटीका ।

ततोऽपि गुह्यतममाह सर्वेति मद्भक्तो सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा मदेकशरणो भव एवं वर्त्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः अतस्त्वां मदेकशरणं सर्वपापेभ्योऽहं मोचयिष्यामि ॥ ६६ ॥

भाषा अनुवाद ।

पूर्वकही गुह्यतम वातसेभी जो गुह्य कहे गोपनीय सो कहते हैं कि हमारी भक्तिहीसे सकल सिद्धि होती है इसप्रकार दृढ़ विश्वास करिके विधि कहे प्रारब्ध औ वेदशास्त्रके विधानका भरोसा छोड़ि एक हमारीही शरण लेउ अर्थात् मेरे कहे पर विश्वास करो तो औसी हमारी शरणागति रूपसे वर्त्तमान तुमारे कर्मयोगसे जो फेरि औरपाप होंयगे औसा शोच न करना क्योंकि एक मेरे शरणमें प्राप्त तुमको मैं यावत् कहे सकल पापसे उद्धार औ मुक्त करूंगा इससे तुम शोकको दूर करो औ अपना काम मन देकर देखो ॥ ६६ ॥

**इदन्ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

शाङ्करभाष्यम् ।

अस्मिन् हि गीताशास्त्रे परं निःश्रेयससाधनं निश्चितं किं ज्ञानं किं कर्म्म वा आहोस्विदुभयमिति कुतः सन्देहः यत् ज्ञात्वाऽमृतमश्नुते ततो मान्तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादीनि वाक्यानि केवलात् ज्ञानात्-निःश्रेयसप्राप्तिं दर्शयन्ति कर्मण्येवाधिकारस्ते कुरु कर्मैवेत्येवमादीनि कर्म्मणां अवश्यकर्त्तव्यतां दर्शयन्ति एवं ज्ञानकर्मणोः कर्त्तव्यतोपदेशात् समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवेत् संशयः किं पुनरत्र मीमांसा-फलं नन्वेतदेव एषामन्यतमस्य परम निःश्रेयससाधनत्वावधारणमतो विस्तीर्णतरं मीमांस्यमेतत् आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्य-यनिवर्त्तकत्वेन कैवल्यफलावसानत्वात् क्रियाकारकफलभेदबुद्धिरविद्य-यात्मनि नित्यप्रवृत्ता मम कर्माहं कर्त्ताऽमुष्मै फलायेदं कर्म करिष्यामीतीय-

आनन्दगिरिकृतटीका ।

पूर्वापरालोचनातो गीताशास्त्रं व्याख्यायोपसंहृत्य तत्तात्पर्य्यार्थं निर्द्धारितमपि विचारद्वारा निर्द्धारयितुं विचारमवतारयति अस्मिन्निति किंशब्दार्थमेव त्रेधा विभजते ज्ञानमिति निमित्ताभावे संशयस्याभासत्वान्न निरस्यतामिति मत्वा पृच्छति कुत इति तत्तदर्थविद्योतकानेकवाक्यदर्शनं तन्निमित्तमित्याह यत् ज्ञात्वेति कर्मणामवश्यकर्त्तव्यत्वोप-लम्भात्तेभ्योऽपि निःश्रेयसप्राप्तिर्भातीत्याह कर्मण्येवेति तथापि समुच्चयप्रापकं नास्तीत्या-शङ्क्याह एवमिति सत्यां सामग्र्यां कार्यमवश्यम्भावीत्युपसंहरति इति सवेदिति सन्दिग्धं सफलञ्च विचार्य्यमिति स्थिते सति फलं सन्दिग्धमपि न विचार्य्यमिति बुद्ध्या पृच्छति किं पुनरिति प्रत्येकं ज्ञानकर्मणोः समुच्चितयोर्वा मुक्तिं प्रति परमसाधनतेत्यवधारणमेव विचार-फलमिति परिहरति नन्विति सन्देहप्रयोजनयोर्विचारप्रयोजकयोर्भावात् विचारद्वारा परममुक्तिसाधनं निर्द्धारणीयमिति निगमयति अत इति एवं विचारमवतार्य्य सिद्धान्तं संगृह्णाति आत्मेति संग्रहवाक्यं विवृण्वन् आदावात्मज्ञानापोह्यामविद्यां दर्शयति क्रियेति आश्रयोक्त्या तदनादित्वमाह आत्मनीति तामेवाविद्यामनाद्यविद्योत्थामनर्थात्मिकां प्रपञ्च-यति ममेति अनाद्यविद्याकार्यत्वात् प्रवाहरूपेणानादित्वमस्याविवक्षित्वा विशिनष्टि अना-

शाङ्करभाष्यम् ।

अविद्या अनादिकालप्रवृत्ता अस्या अविद्याया निवर्त्तकमयमहमस्मि केवलोऽकर्त्ताक्रियाफलो न मत्तोऽस्ति कश्चिदित्येवंरूपमात्मविषयं ज्ञानमुत्पद्यमानं कर्म्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्त्तकत्वात् तुशब्दः पक्षद्वयव्यावृत्त्यर्थः न केवलेभ्यः कर्मभ्यः न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिरिति पक्षद्वयं निवर्त्तयति अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः नहि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते केवलज्ञानमपि अनर्थकं तर्हि न अविद्यानिवर्त्तकत्वे सति दृष्टकैवल्यफलावसानत्वादविद्यातमोनिवर्त्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वं रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्त्तकप्रदीपप्रकाशफलवत् विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलं ज्ञानं तथा दृष्टार्थायाश्च छिदिक्रियाग्निमन्थनादीनां व्यापृतः कर्त्तादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा

आनन्दगिरिकृतटीका ।

दीति तत्र कारणाविद्यानिवर्त्तकत्वमात्मज्ञानस्योपन्यस्यति अस्या इति ननु नेदमुत्पन्नं ज्ञानं निवर्त्तयत्यविरोधेनोत्पन्नत्वान्न चानुत्पन्नमलब्धात्मकस्यार्थक्रियाकारित्वाभावात्तत्राह उत्पद्यमानमिति कथं तस्य कारणाविद्यानिवर्त्तकत्वमित्याशङ्क्य कर्माविद्यानिवर्त्तकत्व-दृष्टेरित्याह कर्मेति आत्मज्ञानस्येत्यादिसंग्रहवाक्ये तुशब्दयोग्यविशेषाभावादानर्थक्यमा-शङ्क्याह तुशब्द इति पक्षद्वयव्यावर्त्तकत्वमेवास्य स्फुटयति नेत्यादिना इतश्च कर्मासाध्यता-मुक्तेरित्याह अकार्यत्वाच्चेति एष नित्यो महिमेति श्रुतेः नित्यत्वेन मोक्षस्याकार्यत्वाच्च तत्र हेत्वपेक्षेत्युपपादयति न हीति ज्ञानेनापि मोक्षो न क्रियते चेत्तर्हि केवलमपि ज्ञानं मुक्तावनुपयुक्तमिति कुतस्तस्य तत्र हेतुत्वधीरित्याशङ्क्यते केवलेति ज्ञानानर्थक्यं दूषयति नेति तदेव प्रपञ्चयति अविद्येति यदुक्तमविद्यानिवर्त्तकज्ञानस्य कैवल्यफलावसायित्वं दृष्ट-मिति तत्र दृष्टान्तमाह रज्ज्वादीति उक्ते विषये तमोनिवर्त्तकप्रकाशस्य कस्मिन् फले पर्य-वसानं तत्राह विनिवृत्तेति प्रदीपप्रकाशस्य सर्पभ्रमनिवृत्तिद्वारा रज्जुमात्रे पर्यवसानवदा-त्मज्ञानस्यापि तदविद्यानिवृत्त्यात्मकैवल्यावसानमिति दार्ष्टान्तिकमाह तथेति ज्ञानादीनां ज्ञाननिष्ठाहेतूनां कर्मान्तरे प्रवृत्तिसम्भवात् कर्मसहितैव सा कैवल्यावसायिनीति चेत्तत्राह दृष्टार्थायामिति कर्मसाहित्यं ज्ञाननिष्ठाया दृष्टान्तेन साधयन्नाशङ्क्यते भुजीति भुजि-क्रियाया लौकिक्या वैदिक्याश्चाग्निहोत्रादिक्रियायाः सहानुष्ठानवदग्निहोत्रादिक्रियाया

## शाङ्करभाष्यम्।

व्यापारानुपपत्तिर्यथा तथा ज्ञाननिष्ठाक्रियायां सुदृष्टार्थायां व्यापृतस्य स्नानादिकारकस्यात्मकैवल्यफलादन्यफले कर्मान्तरे वा प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठाकर्मसहितोपपद्यते ज्ञाननिष्ठा भुजिक्रियाग्निहोत्रादिक्रियावत् स्यादिति चेत् न कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः कैवल्यफले हि ज्ञाने प्राप्ते सर्वतः संप्लुतोदके फले कूपतडागादिक्रियाफलार्थित्वाभाववत् फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तिः नहि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयञ्चार्थित्वं तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वं नच ज्ञानकर्मणोः समुच्चितयोर्नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा अविद्यानिवर्त्तकत्वेन च विरोधात् नहि तमस्तमसो निवर्त्तकमतः केवलमेव ज्ञानं निःश्रेयससाधनमिति न नित्याकरणे प्रत्यवायप्राप्तेः कैवल्यस्य च नित्यत्वात् यथावत्

## आनन्दगिरिकृतटीका।

ज्ञाननिष्ठायाश्च साहित्यमित्यर्थः भुजिफले तृष्णाख्ये प्राप्तेऽपि स्वर्गादौ तद्धेतौ चाग्निहोत्रादावर्थित्वदृष्टेर्युक्तं तत्र साहित्यं न तथा मुक्तिफलज्ञाननिष्ठालाभे स्वर्गादौ तद्धेतौ वा कर्मण्यर्थित्वमतो न ज्ञाननिष्ठाकर्मणोर्न साहित्यमिति परिहरति नेत्यादिना संग्रहवाक्यं विवृणोति कैवल्येति ज्ञाने फलवति लब्धे फलान्तरे तद्धेतौ च नार्थितेत्यत्र दृष्टान्तमाह सर्वत इति सर्वत्र संप्लुतं व्याप्तमुदकमिति समुद्रोक्तिस्तत्फलं स्नानादि तस्मिन् प्राप्ते तडागादिनिर्माणक्रियायां तदधीने च स्नानादौ कस्यचिदर्थित्वं तथा प्रकृतेऽपीत्यर्थः निरतिशयफले ज्ञाने लब्धे सातिशयफले कर्मणि नार्थित्वमित्येतद्दृष्टान्तेन स्फुटयति न हीति कर्मणः सातिशयफलत्वमुक्तमुपजीव्य फलितमाह तस्मान्नेति ज्ञानकर्मणोः साहित्यसम्भवमपि पूर्वोक्तं निगमयति नचेति न हि प्रकाशतमसोरिव मिथोविरुद्धयोस्तयोः साक्षादेकस्मिन् फले साहित्यमित्यर्थः ननु ज्ञानमेव मोक्षं साधयदात्मसहायत्वेन कर्मापेक्षते करणस्योपकरणापेक्षत्वात्तत्राह नापीति ज्ञानमुत्पत्तौ यज्ञाद्यपेक्षमपि नोत्पन्नं फले तदपेक्षं सोत्पत्तिनान्तरीयकत्वेन मुक्तेस्तन्मात्रायत्तत्वादित्यर्थः यदुक्तमिति कर्त्तव्यत्वेन ज्ञानं कर्मापेक्षमिति तत्राह अविद्येति ज्ञानस्याज्ञाननिवर्त्तकत्वात्तत्र कर्मणो विरुद्धतया सहकारित्वायोगान्न फले तदपेक्षेत्यर्थः कर्मणोऽपि ज्ञानवदज्ञाननिवर्त्तकत्वे विरुद्धतेत्याशङ्क्याह नहीति केवलस्य समुच्चितस्य वा कर्मणो मोक्षे साक्षादनन्वये फलितमाह अत इति केवलज्ञानं

## शाङ्करभाष्यम् ।

केवलज्ञानात् कैवल्यप्राप्तिरित्येतत्तदसत् यतो नित्यानां कर्मणां श्रुत्युक्तानामकरणे प्रत्यवायो नरकादिप्राप्तिलक्षणः स्यात् नन्वेवं तर्हि कर्मभ्यो मोक्षो नास्ति इत्यनिर्मोक्षप्रसङ्ग एव नैष दोषो नित्यत्वान्मोक्षस्य नित्यानां कर्मणामनुष्ठानात् प्रत्यवायस्याप्राप्तिः प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः काम्यानाञ्च प्रवर्जनादिष्टशरीरानुपपत्तिः वर्त्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतितेऽस्मिन् शरीरे देहान्तरोत्पत्तौ च कारणाभावादात्मनः रागादीनां चाकरणात् स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यमिति अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्यानारब्धकार्यस्योपभोगोपपत्तेः क्षयाभाव इति चेन्न नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थत्वं नित्यकर्मणां आरब्धानाञ्च उपभोगेनैव कर्मणां क्षीणत्वाद् पूर्वाणाञ्च कर्मणामनारम्भेऽयत्नसिद्धं कैवल्यमिति न तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति विद्याया अन्यः पन्था मोक्षाय

### आनन्दगिरिकृतटीका ।

मुक्तिसाधनमित्युक्तं तन्निषेधयन्नाशङ्कते नेत्यादिना निषेध्यमनूद्य नञर्थमाह यत्तावदिति नित्याकरणे प्रत्यवायप्राप्तेरिति हेतुं प्रपञ्चयति यत इति ज्ञानवतोऽपि नित्यानुष्ठानस्यावश्यकत्वान्न केवलज्ञानस्य कैवल्यहेतुतेत्यर्थः कैवल्यस्य च नित्यत्वादित्यस्य व्यावर्त्यं दर्शयति नन्विति यदि नित्यनैमित्तिककर्माणि श्रौतान्यकरणे प्रत्यवायकारीण्यवश्यानुष्ठेयान्येवं तर्हि तेभ्यः समुच्चितेभ्योऽसमुच्चितेभ्यश्च मोक्षो नेत्युक्तत्वात् केवलज्ञानस्य वा तद्धेतुत्वादनिबन्धना मुक्तिर्न सिध्येदित्यर्थः कैवल्यस्य चेत्यादिव्याकुर्वन्न निर्मोक्षप्रसङ्गं प्रत्यादिशति नैष दोष इति मुक्तेर्नित्यत्वेनायत्नसिद्धेर्न तदभावशङ्केत्युक्तं प्रपञ्चयति नित्यानामिति काम्यकर्मवशादिष्टशरीरापत्तिं शङ्कित्वोक्तं काम्यानाञ्चेति आरब्धकर्मवशात्तर्हि देहान्तरं नेत्याह वर्त्तमानेति तर्हि देहान्तरं शेषकर्मणा स्यादित्याशङ्क्य कर्माशयस्यैकभविकत्वान्नेत्याह पतितेऽस्मिन्निति रागादिना कर्मान्तरं ततो देहान्तरञ्च भविष्यतीत्याशङ्क्याह रागादीनाञ्चेति आत्मनः स्वरूपावस्थानमिति सम्बन्धः अतीतासंख्यजन्मभेदेष्वर्जितस्य कर्मणो नानाफलस्यानारब्धस्य भोगेनाक्षयात् ततो देहान्तरारम्भादेकभविकत्वस्याप्रमाणिकत्वान्न मुक्तेरयत्नसिद्धतेति चोद-

## शाङ्करभाष्यम्।

न विद्यत इतिश्रुतेः चर्मवदाकाशवेष्टनासम्भववदविदुषो मोक्षासम्भवश्रुतेः ज्ञानात् कैवल्यमाप्नोति इति च पुराणस्मृतेरनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च यथा पूर्वोपात्तानां दुरितानामनारब्धफलानां सम्भवस्तथा पुण्यानामप्यनारब्धफलानां सम्भवस्तथा पुराणश्रुतेरनारब्धफलानां स्यात् सम्भवश्चैषां च देहान्तरमकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः धर्माधर्महेतूनाञ्च रागद्वेषमोहानामत्युत्पन्नात्मज्ञानादुच्छेदानुपपत्तेः धर्माधर्मोच्छेदानुपपत्तिः नित्यानाञ्च कर्मणां पुण्यलोकफलश्रुतेर्वर्णाश्रमाश्च स्वकर्मनिष्ठाः पुण्यलोका भवन्तीत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः ये त्वाहुर्नित्यानि कर्माणि दुःखरूपत्वात् पूर्वकृतदुरितकर्मणां फलमेव नतु तेषां स्वरूपव्यतिरेकेणान्यत् फलमस्त्यश्रुतत्वात् जीवनादिनिमित्ते च विधानादिति नाप्रवृत्तानाञ्च फलदानासम्भवात् दुःखफलविशेषानुपपत्तिः कर्मणां स्यात् यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति तदसत्त्वहि मरणकाले फलदानायानंकुरीभूतस्य कर्मणः फलमन्य-

### आनन्दगिरिकृतटीका ।

सति अतिक्रान्तेति नोक्तकर्मनिमित्तं देहान्तरं शङ्कितव्यमित्याह नेति नित्यनैमित्तिककर्माणि श्रौतान्यवश्यमनुष्ठेयानि तदनुष्ठाने च महानायासस्ततो दुःखोपभोगस्तस्योक्तानारब्धकर्मफलभोगत्वोपगमाच्च ततो देहान्तरमित्याह नित्येति नित्यादिना दुरितनिवृत्तावप्यविरोधान्न सुकृतनिवृत्तिस्ततो देहान्तरमित्याशङ्क्य सुकृतस्य नत्यादेरन्यत्वेनारब्धत्वे च न्यायविरुद्धस्य तस्यासिद्धत्वात्ततो देहान्तरायोगान्नित्यादेरनन्यत्वे च न तस्य फलान्तरमिति मत्वा यथा प्रायश्चित्तमुपात्तदुरितनिवर्हणार्थं न फलान्तरापेक्षन्तथेदं सर्वमपि नित्यादिकर्मोपात्तपापनिराकरणार्थं तस्मिन्नेव पर्यवस्यन्न देहान्तरारम्भकमिति पक्षान्तरमाह प्रायश्चित्तवदिति तथापि प्रारब्धवशादेव देहान्तरं शंकते नानाजन्मारम्भकाणामपि तेषां यावदधिकारन्यायेन सम्भवादित्याशङ्क्याह आरब्धानाञ्चेति पूर्वार्जितकर्मणामेव क्षीणत्वेऽपि कानिचिदपूर्वकर्माणि देहान्तरमारभेरन्नित्याशंक्याह अपूर्वाणाञ्चेति विना ज्ञानं कर्मणैव मुक्तिरिति पक्षस्त्वयुक्तस्तेन निराचष्टे नेत्यादिना विद्यतेऽयनायेति श्रुतेरिति सम्बन्धः एवकारार्थं विष्टब्धेत्यादिभागं व्याकरोति अन्य इति यदा चर्मवदाकाशं वेष्टयिष्यन्ति

शाङ्करभाष्यम्।

मारब्धे जन्मन्युपभुज्यत इत्युपपत्तिः अन्यथा स्वर्गफलोपभोगायाग्निहोत्रादि-कर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिर्न स्यात्तस्य दुरितदुःखविशेष-फलत्वागानुपपत्तेश्च अनेकेषु हि दुरितेषु सम्भवत् स्वभिन्नदुःखसाधनफलेषु, नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वंद्वरोगादिबाधानि-मित्तं दुःखं नहि शक्यते कल्पयितुं नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्त दुरितफलं न शिरसा पाषाणवहनादिदुःखमिति अप्रकृतञ्चेदमुच्यते नित्यक-र्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलमिति कथमप्रसूतफलस्य हि पूर्व-कृतदुरितस्य क्षयो नोपपद्यत इति प्रकृतं तत्राप्रसूतफलस्य कर्मणः फलं नित्य-कर्मानुष्ठानायासदुःखमाह भवान्न प्रसूतफलस्येत्यर्थः सर्वमेव पूर्वकृतं दुरितं तत् प्रसूतफलमेवेति मन्यते भवांस्ततोनित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्तं नित्यकर्मविध्यानर्थक्यप्रसङ्गश्चोपभोगेनैव प्रसूतफलस्य दुरित-कर्मणः क्षयोपपत्तेः किञ्च श्रुतस्य नित्यस्य दुःखञ्चेत् फलं नित्यकर्मानुष्ठाना-

आनन्दगिरिकृतटीका।

मानवाः तदा देवमविज्ञाय दुःखस्यान्तो भविष्यतीति श्रुतिमर्थतोऽनुवदति वर्णवदिति श्रौतार्थे स्मृतिं संवादयति ज्ञानादिति किञ्च त्वदीयन्यायस्यानुपाह्यमानत्वेनाभासतया पुण्यकर्मणामनारब्धफलानां क्षयाभावे देहान्तरारम्भसम्भवाच्च ज्ञानं विना मुक्तिरित्याह अना-रब्धेति तथाविधानां कर्मणां नास्ति सम्भावनेत्याशङ्क्याह यथेति अनारब्धफलपुण्यकर्मा-भावेऽपि कथं मोक्षानुपपत्तिरिति तत्राह तेषाञ्चेति इतश्च कर्मक्षयानुपपत्त्यमोक्षानुप-पत्तिरिति तत्राह धर्मेति कर्मणा पितृलोक इतिश्रुतिमाश्रित्य कर्माक्षये हेत्वन्तरमाह नित्यानामिति स्मृत्यापि यथोक्तार्थं समर्थयन्ते वर्णा इति प्रेत्य कर्म फलमनुभूय ततः शेषेण विशिष्टजात्यादिभाजो जन्म प्रतिपद्यत इत्येतदादिपदार्थः।

यत्तु नित्यानुष्ठानायासदुःखभोगस्य तत्फलभोगत्वमिति तदिदानीमनुवदति ये त्विति नित्यान्यनुष्ठीयमानान्यायासपर्यन्तानीति शेषः तथापि नित्यानां काम्याना-मिव स्वरूपातिरिक्तं फलमाशङ्क्य विध्युद्देशे तदश्रवणान्नैवमित्याह नन्विति विध्युद्देशे फलाश्रुतौ तत्कामनाया निमित्तस्याभावाच्च नित्यानि विधीयेरन्नित्याशङ्क्याह जीवनेति न नित्यानां विध्यसिद्धिरिति शेषः अनुभाषितं दूषयति नेत्यादिना तदेक

## शाङ्करभाष्यम् ।

यासादेव तत् दृश्यते व्यायामादिवत्तदन्यस्येति कल्पनानुपपत्तिः जीवनादि-
निमित्ते च विधानान्नित्यानां कर्मणां प्रायश्चित्तवत् पूर्वकृतदुरितफलत्वानु-
पपत्तिः यस्मिन् पापकर्मनिमित्ते यद्विहितं प्रायश्चित्तं नतु तस्य पापस्य
तत्फलमथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं जीवनादिनिमित्त-
मपि नित्यकर्मानुष्ठानायासदुःखजीवनादिनिमित्तस्यैव तत्फलं प्रसज्येत
नित्यप्रायश्चित्तयोर्नैमित्तिकत्वाविशेषात् किञ्चान्यन्नित्यस्य काम्यस्य चाग्निहो-
त्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य
फलं नतु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपि पूर्वकृत-
दुरितफलं प्रसज्येत तथाच सति नित्यानां फलाश्रवणात्तद्विधानाऽन्यथानु-
पपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पना चानु-
पपन्ना एवं विधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमा-
नाच्च नित्यानां विरोधाच्च विरुद्धश्चेदमुच्यते नित्यकर्मणाऽनुष्ठीयमानेनान्या-
न्यस्य कर्मणः फलं भुज्यत इत्यभ्युपगम्यमाने सकलोपभोगो नित्यस्य कर्मणः

## आनन्दगिरिकृतटीका ।

विद्वद्वन्निषेध्यमनूद्य नञर्थमाह यदुक्तमिति अप्रवृत्तानामित्यादिहेतुं प्रपञ्चयति
नहीति कर्मान्तरारब्धेऽपि देहे दुरितफलं नित्यानुष्ठानायासदुःखं भुज्यताङ्कानु-
पपत्तिरित्याशङ्क्याह अन्यथेति यदुक्तं दुःखफलविशेषानुपपत्तिश्च स्यादिति तदुप-
पादयति तस्येति सम्भावितानि तावदनन्तातिसञ्चितातिदुरितानि च नानादुःखफलानि
यदि तानि नित्यानुष्ठानायासरूपं दुःखं तन्मात्रफलानि कल्पेरन् तदा तेष्वेवं कल्प्यमानेषु
सकृन्नित्यस्यानुष्ठितस्यायासमासादयतो यो दुरितकृतो दुःखविशेषो न तत्फलं दुरित-
फलानां दुःखानां बहुत्वादतो नित्यं कर्म यथाविशेषं तं दुरितकृतदुःखविशेषफलकमित्ययुक्त-
मित्यर्थः ।

किञ्च नित्यानुष्ठानायासदुःखमात्रफलानि चेत् दुरितानि कल्प्यन्ते तदा ह्यंशपरिच्छि-
तरागादिबाधस्य रोगादिबाधायाश्च दुरितनिमित्तत्वानुपपत्तेः सुकृतफलत्वस्य चासम्भवादनु-
पपत्तिरेवोदीरितबाधायाः स्यादित्याह इन्द्रेति इतश्च नित्यानुष्ठानायासदुःखमेव दुरितफल-
मित्ययुक्तमित्याह नित्येति दुःखमिति न शक्यते कल्पयितुमिति पूर्वेण सम्बन्धः यदि तदेव

## शाङ्करभाष्यम्।

फलमिति नित्यस्य कर्मणः फलाभाव इति विरुद्धमुच्यते किञ्च काम्याग्निहोत्रादावनुष्ठीयमाने नित्यमप्यग्निहोत्रादितन्त्रेणैवानुष्ठितम्भवतीति तदा यासदुःखेनैव काम्याग्निहोत्रादिफलमुपचीर्णं स्यात्तत्तन्त्रत्वात् अथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत नचैतदस्ति दृष्टविरोधात् नहि काम्यानुष्ठानायासदुःखात् केवलनित्यानुष्ठानायासदुःखं भिद्यते किञ्चान्यदविहितमप्रतिषिद्धञ्च कर्म तत्कालफलं नतु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेद्यदि भवेत् तदा स्वर्गादिष्वप्यदृष्टफलशासने चोद्यमो न स्यात् अग्निहोत्रादीनामेव कर्म्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमात्रेणोपक्षयः काम्यानाञ्च स्वर्गादिमहाफलत्वञ्चेति कर्त्तव्यताद्याधिक्ये त्वसति तत्फलकामित्वमात्रेणेति न शक्यं कल्पयितुं तस्मान्न नित्यानां कर्मणामदृष्टफलाभावः कदाचिदप्युपपद्यते-

### आनन्दगिरिकृतटीका।

तत्फलं न तर्हि शिरसा पाषाणवहनादिदुःखं दुरितकृतं नच तत्कारणं सुकृतं दुःखा स्यात्तत्कार्यत्वादतस्तदेकत्वमिति स्यादित्यर्थः नित्यानुष्ठानायासदुःखमुपात्तदुरितफलमित्येतदप्रकृतत्वाच्चायुक्तं वक्तुमित्याह अप्रकृतञ्चेति तदेव प्रपञ्चयितुं पृच्छति कथमिति तत्रादौ प्रकृतमाह अप्रकृतेति तथापि कथमस्माकमप्रकृतवादित्वं तत्राह तत्रेति प्रकृतफलत्वमप्रकृतफलत्वमिति प्राचीनदुरितगतविशेषानुपगमादविशेषेण सर्वस्यैव तस्य प्रकृतफलत्वान्नित्यानुष्ठानायासदुःखफलत्वसम्भवाच्चाप्रकृतवादितेति शंकते अथेति पूर्वोपात्तदुरितस्यापि शेषेणारब्धफलत्वे विशेषणानर्थक्यमिति परिहरति तत इति दुरितमात्रस्यारब्धफलत्वे नानारब्धफलस्य तस्योक्तफलविशेषत्वानुपपत्तेरित्यर्थः पूर्वोपात्तदुरितमारब्धफलञ्चेद्भोगेनैव तत्क्षयसम्भवात्तच्छित्त्यर्थं नित्यं कर्म न विधातव्यमिति दोषान्तरमाह नित्येति इतश्च नित्यानुष्ठानायासदुःखं नोपात्तदुरितफलमित्याह किञ्चेति तदेव स्फोरयति श्रुतत्वेनि यथा व्यायामगमनादिकृतं दुःखं नान्यस्य दुरितस्येष्यते तत्फलत्वसम्भवात्तथा नित्यस्यापि स्वत्युक्तस्यानुष्ठितस्यायासपर्यन्तस्य स्वर्थान्तरानुपगमादनुष्ठानायासदुःखमेव चेत् फलं तर्हि तस्मादेव तद्दर्शनात्तस्य न दुरितफलत्वं कल्प्यं नित्यफलत्वसम्भवादित्यर्थः दुःखफलत्वे नित्यानामननुष्ठानमेव श्रेयः स्यादित्याशङ्क्याह जीवनादिति नित्यानां दुरितफलत्वानुपपत्तौ हेत्वन्तर-

शाङ्करभाष्यम्।

अतश्चाविद्यापूर्वकस्य कर्म्मणो विद्यैव शुभाशुभस्य वा क्षयकारणं अशेषतो न नित्यकर्मानुष्ठानमविद्याकामवीजं हि सर्वमेव कर्म्म तथाचोपपादितं अविद्वद्विषया सर्वकर्म्मसंन्यासपूर्विका ज्ञाननिष्ठा उभौ तौ न विजानीतो वेदाविनाशिनं नित्यं ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनामज्ञानां कर्म्मसङ्गिनां तत्त्ववित्तु गुणागुणेषु वर्त्तन्त इति मत्वा नासज्जते सर्वकर्माणि मनसा संन्यस्यास्ते नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्तथाऽज्ञः करोमीत्यारुरुक्षोः कर्म्म कारणमारूढस्य योगस्थस्य शम एव कारणमुदारा-स्त्रयोऽप्यज्ञा ज्ञानी त्वात्मैव मे मत अज्ञाः कर्म्मिणो गतागतं कामकामा लभन्ते अनन्याश्चिन्तयन्तो मां नित्ययुक्ता यथोक्तमात्मानमाकाशकल्पमुपासते ददामि बुद्धियोगन्तं येन मामुपयान्ति ते अर्थादकर्म्मिणोऽज्ञा उपयान्ति इति भगवत्कर्म्मकारिणो ये युक्ततमा अपि कर्म्मिणोऽज्ञास्ते उत्तरहीनफल-त्यागावसानसाधना अनिर्देश्याऽक्षरोपासकास्त्वद्वेष्टा सर्वभूतानामित्यध्याय-परिसमाप्त्युक्तसाधनाः क्षेत्राध्यायाद्युक्तयोक्तज्ञानसाधनानाञ्चाधिष्ठानादिपञ्च-

आनन्दगिरिकृतटीका।

माह प्रायश्चित्तवदिति दृष्टान्तं प्रपञ्चयति यथेत्यादि तथा जीवनादिनिमित्ते विहितानां नित्यानां दुरितफलत्वासिद्धिरिति शेषः सत्यं प्रायश्चित्तं न निमित्तस्य पापस्य फलं किन्तु तदनुष्ठानायासदुःखं तस्य पापस्य फलमिति शङ्कते अथेति प्रायश्चित्तानुष्ठानायासदुःखस्य निमित्तभूतपापफलत्वे जीवनादिनिमित्तनित्याद्यनुष्ठानायासदुःखमपि जीवनादेरेव फलं-स्यान्नोपात्तदुरितस्येति परिहरति जीवनादीति प्रायश्चित्तदुःखस्य तन्निमित्तपापफलत्व-वज्जीवनादिनिमित्तमित्यादि कर्मजातमपि दुःखं जीवनादिफलमित्यत्र हेतुमाह नित्येति इतश्च नित्यानुष्ठानायासदुःखमेवोपात्तदुरितफलमित्याशङ्क्य वक्तुमित्याह किञ्चेति काम्या-नुष्ठानायासदुःखमपि दुरितफलमित्युपगमात् प्रसङ्गस्येष्टत्वमाशङ्क्याह तथाचेति विहितानि तावन्नित्यानि नच तेषु फलं श्रुतं नच विना फलं विहितानि दुरितनिवर्हणार्थानि नित्यानीत्यर्थापत्त्या तेषु च सा युक्ता काम्यानुष्ठानादपि दुरितनिवृत्तिसम्भवादित्यर्थः किञ्च नित्यान्यनुष्ठानायासदुःखातिरिक्तफलानि विहितत्वात् काम्यवदित्यनुमानात्तेषां दुरितनिवृ-त्त्यर्थत्वात् एवमिति काम्यादिकर्म दृष्टान्तयितुमेवमित्युक्तं स्वोक्तिव्याघाताच्च नित्यानुष्ठा-

## शाङ्करभाष्यम् ।

हैतुकसर्वकर्मसंन्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्त्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफलत्रयं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति भवत्येवमन्येषामज्ञानां कर्मिणां संन्यासिनामिष्टेषु गीताशास्त्रोक्तस्य कर्तव्याकर्त्तव्यार्थस्य विभागः अविद्यापूर्वकत्वं सर्वस्य कर्मणो सिद्धमिति चेन्न ब्रह्महत्यादिलक्षणवत् यद्यपि शास्त्रागतं नित्यं कर्म तथाप्यविद्यावत एव भवति यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणं अविद्याकामादिदोषतो भवति अन्यथा प्रवृत्त्यनुपपत्तेस्तथा नित्यनैमित्तिककाम्यादीन्यपीति व्यतिरिक्तात्मज्ञानप्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेन्न चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्याहंकरोमीति प्रवृत्तिदर्शनात् देहादिसंघाते असंप्रत्ययो गौणो न मिथ्या इति चेत् न तत्कार्येष्वपि गौणत्वोपपत्तेरात्मीये देहादिसंघाते अहंप्रत्ययो गौणो यथात्मीयपुत्रे आत्मा वै पुत्रनामासीति लोके चापि

## आनन्दगिरिकृतटीका ।

नात् दुरितफलभोगोक्तिरयुक्तेत्याह विरोधाच्चेति तदेव प्रपञ्चयति विरुद्धञ्चेति इदं शब्दार्थमेव विशदयति नित्येति अन्यस्य कर्मणो दुरितस्येति यावत् स एवेति यदनन्तरं यद्भवति तत्तस्य कार्यमिति नियमादित्यर्थः इतश्च नित्यानुष्ठाने दुरितफलभोगो न सिध्यतीत्याह किञ्चेति काम्यानुष्ठानस्य नित्यानुष्ठानस्य च यौगपद्यान्नित्यानुष्ठानायासदुःखेन दुरितफलभोगवत् काम्यफलस्यापि भुक्तत्वसम्भवादिति हेतुमाह तन्त्रत्वादिति नित्यकाम्यानुष्ठानयोर्यौगपद्येऽपि नित्यानुष्ठानायासदुःखादन्यदेव काम्यानुष्ठानफलं श्रुतत्वादिति शंकते अथेति काम्यानुष्ठानफलं नित्यानुष्ठानायासदुःखाद्भिन्नञ्चेत्तर्हि काम्यानुष्ठानायासदुःखं नित्यानुष्ठानायासदुःखञ्च मिथोभिन्नं स्यादित्याह तदनुष्ठानेत्विति प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे नचेति दृष्टविरोधमेव स्पष्टयति नहीति आत्मज्ञानवदग्निहोत्रादीनां मोक्षे साक्षादन्वयो नेष्यतेऽन्यदपि कारणमस्तीत्याह किञ्चान्यदिति तदेव कारणं विवृणोति अविहितमिति यत् कर्म मर्दनभोजनादि तत्र शास्त्रे विहितं निषिद्धं वा तदनन्तरफलं तथानुभवादित्यर्थः शास्त्रीयं कर्म तु नानन्तरफलमानन्तर्यस्याचोदितत्वादतो ज्ञाने दृष्टफलकर्म सहकारि भवति नापि स्वयमेव दृष्टफले मोक्षे कर्मप्रवृत्तिः क्षमेति विवक्षित्वाह नत्विति शास्त्रीयस्याग्निहो-

## शाङ्करभाष्यम् ।

मम प्राणः एवायं गौरिति तद्वन्नैवं मिथ्याप्रत्ययो मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरगृह्यमाणविशेषयोर्न गौणप्रत्ययस्य मुख्यकार्य्योऽर्थत्वं अधिकरणस्तुत्यर्थत्वात् सोपमाशब्देन यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्य्यपैङ्गल्यादिसामान्यवत्त्वात् देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव नतु सिंहकार्य्यमग्निकार्य्यं वा गौणशब्दप्रत्ययनिमित्तं किञ्चित् साध्यते मिथ्याप्रत्ययकार्यत्वं त्वनर्थमनुभवति गौणप्रत्ययस्य विषयञ्च जानाति नैवं सिंहो देवदत्तः स्यान्नायमग्निर्माणवक इति तथा गौणेन देहादिसङ्घातेनात्मना कृतं कर्म न मुख्येनाहं प्रत्ययविषयेनात्मना कृतं स्यान्न हि गौणसिंहाग्निभ्यां कृतं कर्म्म मुख्यसिंहाग्निभ्यां कृतं स्यान्नच क्रौर्य्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्यं किञ्चित् क्रियते स्तुत्यर्थेनोपक्षीणत्वात् स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति न सिंहस्य कर्म्म ममाग्नेश्चेति

### आनन्दगिरिकृतटीका ।

त्वादेरपि फलानन्तर्ये स्वर्गादीनामनन्तरमनुपलब्धिर्विरुध्येत ततस्तेष्वपि तथाविधफलापेक्षया प्रवृत्तिरग्निहोत्रादिषु न स्यादित्याह तदेति किञ्च नित्यानामग्निहोत्रादीनामनादृष्टफलं तेषामेव काम्यानां तादृक्फलं नच हेतुं विनायं विभागो भागीत्याह अग्निहोत्रादीनामिति फलकामित्वमात्रेणेति न स्यादिति पूर्वेण सम्बन्धः यानि नित्यान्यग्निहोत्रादीनि यानि च काम्यानि तेषामुभयेषामेव कर्मस्वरूपविशेषाभावेऽपि नित्यानां तेषां अनुष्ठानायासदुःखमात्रेण श्रयो न फलोन्तरमस्ति तेषामेव काम्यानामङ्गाद्याधिक्याभावेऽपि फलकामित्वमधिकारिण्यस्तीत्येतावन्मात्रेण स्वर्गादिमहाफलत्वमित्ययं विभागो न प्रमाणवानित्यर्थः उक्तविभागायोगे फलितमाह तस्माच्चेति ।

काम्यवन्नित्यानामपि पितृलोकाद्यदृष्टफलवत्त्वे दुरितनिवृत्त्यर्थत्वायोगाद्दर्शनात्मविद्धैवाभ्युपगन्तव्येत्याह अतश्चेति शुभाशुभात्मकं कर्म्म सर्वमविद्यापूर्वकञ्चेद्दर्शमतस्तर्हि तस्य क्षयकारणं विद्येत्युपपद्यते न तत् सर्वं कर्माविद्यापूर्वकमिति सिद्धमित्याशङ्क्याह अविद्येति तत्र हिशब्दद्योतितां युक्तिं दर्शयति तथेति इतश्चाविद्वद्विषयं कर्मेत्याह अविद्वदिति अधिकारिभेदेन निष्ठाद्वयमित्यत्र वाक्योपक्रममनुकूलयता आत्मनि कर्तृत्वं कर्मत्वं वा प्रेप्सयन् न जानात्यात्मानमिति वदता कर्माज्ञानमूलमिति दर्शितमित्याह उभाविति आत्मानं

## शाङ्करभाष्यम् ।

तथा न सङ्घातजं कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततरः स्यात् न पुनरहं कर्त्ता मम कर्मेति यच्चाहुरात्मीयैः स्मृतीच्छाप्रयत्नैः कर्म हेतुभिरात्मा करोतीति न तेषां मिथ्याप्रत्ययपूर्वकत्वात् मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयो यथास्मिन् जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च तथातीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतः संसारोऽतीतोऽनागतश्चानुमेयः ततश्च सर्वकर्मसंन्यासात् ज्ञाननिष्ठायां आत्यन्तिकः संसारोपरम इति सिद्धं अविद्यात्मकत्वाच्च देहाभिमानस्य तन्निवृत्तौ देहाद्यनुपपत्तेः संसारानुपपत्तिः देहादिसङ्घाते आत्माभिमानोऽविद्यात्मकः नहि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्यो गवादय इति जानन् तेष्वह-

### आनन्दगिरिकृतटीका ।

याथातथ्येन जानन् कर्तृत्वादिरहितो भवतीति ब्रुवता कर्मसन्न्यासे ज्ञानवतोऽधिकारित्वं सूचितमित्याह वेदेति निष्ठाद्वयस्याधिकारिभेदेन बोद्धव्यमित्यत्रैव वाक्यान्तरमाह ज्ञानेति न बुद्धिभेदं जनयेदित्यत्र चाविद्यामूलत्वं कर्मणः सूचयता कर्मनिष्ठाविद्वद्विषयानुमोदितेत्याह अज्ञानामिति यदुक्तं विद्वद्विषया सन्न्यासपूर्विका ज्ञाननिष्ठेति तत्र तत्त्ववित्तु महाबाहो गुणकर्मविभागयोरित्यादिवाक्यमुदाहरति तत्त्वविच्चिति तत्रैव वाक्यान्तरं पठति सर्वेति विदुषो ज्ञाननिष्ठेत्यत्रैव पाञ्चमिकं वाक्यान्तरमाह नैवेति तत्रैवार्थसिद्धमर्थं कथयति अत्र इति मन्यत इति सम्बन्धः अज्ञस्य चित्तशुद्ध्यर्थं कर्मशुद्धचित्तस्य कर्मसन्न्यासो ज्ञानप्राप्तौ हेतुरित्यत्र वाक्यान्तरमाह आरुरुक्षोरिति यथोक्ते विभागे साप्तमिकं वाक्यमनुगुणमित्याह उदारा इति एवं त्रयो धर्ममित्यादि नावमिकं वाक्यमविद्वद्विषयं कर्मेत्यत्र प्रमाणयति अज्ञा इति विदुषः सन्न्यासपूर्विका ज्ञाननिष्ठेत्यत्रैव नावमिकं वाक्यान्तरमाह अनन्या इति मामित्येतद्व्याचष्टे यथोक्तमिति तेषां सततयुक्तानामित्यादिदाशमिकं वाक्यं तत्रैव प्रमाणयति ददामीति विद्यावतामेव भगवत्प्राप्तिनिर्देशादितरेषां तदप्राप्तिः सूचितेत्यर्थसिद्धमर्थमाह अर्थादिति ननु भगवत्कर्मकारिणां युक्ततमत्वात् कर्मिणोऽपि भगवन्तं यान्तीत्याशङ्क्याह भगवदिति ये मत्कर्मकृदित्यादि न्यायेन भगवत्कर्मकारिणस्ते यद्यपि युक्ततमाः तथापि कर्मिणोऽज्ञाः सन्तो न भगवन्तं सहसा गन्तुमर्हन्तीत्यर्थः तेषामज्ञत्वे गमकं दर्शयति उत्तरोत्तरेति चित्तसमाधानमारभ्य फलत्यागपर्यन्तं पाठक्रमेणो-

## शाङ्करभाष्यम् ।

मिति प्रत्ययं मन्यते कश्चिदजानंस्तु मन्यते स्थाणौ पुरुषविज्ञानवत् अविवेकतो देहादिसङ्घाते कुर्य्यादहमितिप्रत्ययं नहि विवेकतो जानन् यस्त्वात्मा वै पुत्रनामासीति पुत्रेऽहंप्रत्ययः नतु जन्यजनकसम्बन्धनिमित्तो गौणो गौणेन चात्मानाभोजनादिवत् परमार्थकार्य्यं न शक्यते कर्त्तुं गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्य्यवत् अदृष्टविषयचोदनाप्रामाण्यादात्मकर्त्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत इति चेन्न अविद्याकृतात्मकत्वात् तेषां गौणा आत्मानो देहेन्द्रियादयः किं तर्हि मिथ्याप्रत्ययेनैवासङ्गस्यात्मनः सङ्गात्मत्वमापाद्यन्ते तद्भावे भावात्तदभावे च अभावादविवेकिनां ह्यज्ञानकाले बालानां दृश्यते दीर्घोऽहङ्गौरोऽहमिति देहादिसङ्घातेऽहंप्रत्ययो भवति

### आनन्दगिरिकृतटीका ।

तरोत्तरं हीनसाधनोपादानादभ्यासासमर्थस्य भगवत्कर्मकारित्वाभिधानाद्भगवत्कर्मकारिणामज्ञत्वं विज्ञातमित्यर्थः ये त्वक्षरमनिर्देश्यमित्यादिवाक्यावष्टम्भेन विद्वद्विषयत्वं सन्न्यासपूर्व्वकज्ञाननिष्ठाया निर्द्धारयति अनिर्देश्येति उक्तसाधनास्ते सन्न्यासपूर्व्वकज्ञाननिष्ठायामधिक्रियेरन्निति शेषः किञ्च त्रयोदशे यान्यमानित्वादीनि चतुर्दशे च प्रकाशञ्च प्रवृत्तिञ्च इत्यादीनि पञ्चदशे च यानि असंगत्वादीनि उक्तानि तैः सर्व्वैः साधनैः सहिता भवन्त्यनिर्देश्याक्षरोपासकास्ततोऽपि ते ज्ञाननिष्ठायामेवाधिक्रियेरन्नित्याह चेत्येति निष्ठाद्वयमधिकारिभेदेन प्रतिष्ठाप्य ज्ञाननिष्ठानामनिष्टमिष्टं मिश्रितमिति त्रिविधं कर्मफलं न भवति किन्तु मुक्तिरेव कर्मनिष्ठानान्तु त्रिविधं कर्मफलं न मुक्तिरिति शास्त्रार्थविभागमभिप्रेतमुपसंहरति अधिष्ठानादीति यदुक्तमविद्याकामवीजं सर्व्वं कर्मेति तत्र शास्त्रावगतस्य कर्मणोऽविद्यापूर्व्वकत्वानुपपत्तेरित्याक्षिपति अविद्येति दृष्टान्तेन समाधत्ते नेति तत्राभिमतां प्रतिज्ञां विभजते यद्यपीति उक्तं दृष्टान्तं व्याचष्टे यथेति अविद्यादिमतो ब्रह्महत्यादि कर्मेत्यत्र हेतुमाह अन्यथेति दार्ष्टान्तिकं गृह्णाति तथेति तान्यप्यविद्यादिमतो भवन्तीत्यविद्यादिपूर्व्वकत्वं तेषामेषितव्यमित्यर्थः पारलौकिकमसद्देहाद्यतिरिक्तात्मज्ञानं विना प्रवृत्त्ययोगाच्च तेषामविद्यापूर्व्वकत्वेति शङ्कते व्यतिरिक्त इति सत्यपि व्यतिरिक्तात्मज्ञाने पारमार्थिकात्मज्ञानाभावान्मिथ्याज्ञानादेव नित्यादिकर्मसु प्रवृत्तेरविद्यापूर्व्वकत्वं तेषामप्रतिहतमिति परिहरति नेत्यादिना कर्मणश्चलनात्मकत्वाच्चात्मकर्तृत्वं तस्य निःक्रियात्वात् देहादिसंघातस्य तु सक्रियत्वात्तत्कर्तृकं कर्मयुक्तं तथापि संघातेऽहं ममाभिमानद्वाराऽहं करोमीत्यात्मनो मिथ्याधीपूर्व्विका

## शाङ्करभाष्यम् ।

ननु विवेकिनां अन्योऽहं देहादिसङ्घातादिति ज्ञानवतां तत्काले देहादि-सङ्घतेऽहं प्रत्ययो भवति तस्मात् मिथ्याप्रत्ययाभावेऽभावात् तत्कृत एव न गौणः पृथक्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाण-वकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यान्नागृह्यमाणसामान्यविशेषयोः यथा शुक्तिरजतयोर्यत्तूक्तं श्रुतिप्रामाण्यादिति न तत्प्रामाण्यस्यादृष्टविषयत्वात् प्रत्यक्षादिप्रमाणानुपलब्धयोरविषयेऽग्निहोत्रादि साध्यसाधनसम्बन्धः श्रुतेः प्रामाण्यं न प्रत्यक्षादिविषये अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्ययस्य देहादिसङ्घाते गौणत्वं कल्पयितुं शक्यं

### आनन्दगिरिकृतटीका ।

कर्मणि प्रवृत्तिर्दृष्टा तेनाविद्यापूर्वकत्वं तस्य युक्तमित्यर्थः यदुक्तं देहादिसंघातेऽहं ममाभिमानस्य मिथ्याज्ञानत्वं तदाक्षिपति देहादीति अहंधियो गौणत्वे तत्पूर्वककर्मस्वपि गौणत्वापत्तेरात्मनोऽनर्थाभावात्तन्निवृत्त्यर्थं हेत्वन्वेषणं न स्यादिति दूषयति नेति एतदेव प्रपञ्चयन्नादौ चोद्यं प्रपञ्चयति आत्मीयेति तत्र श्रुत्यवष्टम्भेन दृष्टान्तमाह यथेति दर्शित-श्रुतेरात्मीये पुत्रेऽहं प्रत्ययो गौणस्तथा संघातेऽप्यात्मीयेऽहं प्रत्ययस्तथा युक्त इत्यर्थः भेदधी-पूर्वकत्वं गौणधियो लोके प्रसिद्धमित्याह लोके चेति लोकवेदानुरोधेनात्मीये संघातेऽहं धी-रपि गौणी स्यादिति दार्ष्टान्तिकमाह तद्वदिति मिथ्याधियोऽपि भेदधीपूर्वकत्वसम्भवादात्मीय संघातेऽहंधियो मिथ्यात्वमेव किं न स्यादित्याशंक्याह नैवमिति भेदधीपूर्वकत्वाभावे कथं मिथ्याधीरुदेतीत्याशंक्याह मिथ्येति अधिष्ठानारोप्ययोर्विवेकाग्रहात्तदुत्पत्तिरित्यर्थः देहादावहंधियो गौणतेति चोद्यं विवृते तत्कार्येष्वपीत्यादिपरिहारं विवृणोति नेत्यादि हेतुभागं विभजते यथेति सिंहो देवदत्त इति वाक्यं देवदत्तः सिंह इवेत्युपमया देवदत्तं क्रौर्याद्यधिकरणं स्तोतुं प्रवृत्तं अग्निर्माणवक इत्यपि वाक्यं माणवकोऽग्निरिवेत्युपमया माणवकस्य पैङ्गल्याधिकरणस्य स्तुत्यर्थमेव न तथा मनुष्योऽहमिति वाक्यस्य अधिकरणस्तु-त्यर्थता भातीत्यर्थः देवदत्तमाणवकयोरधिकरणत्वं कथमित्याशंक्याह क्रौर्येति किञ्च गौण-शब्दं तत्प्रत्ययञ्च निमित्तं कृत्वा सिंहकार्यं न किञ्चिद्देवदत्ते साध्यते नापि माणवके किञ्चिदग्निकार्यं मिथ्याधीकार्यं त्वनर्थमात्मानुभवत्यतो न देहादावहंधीर्गौणीत्याह नत्विति इतोऽपि देहादौ नाहंधी गौणीत्याह गौणेति यो देवदत्तो माणवको वा गौण्या धियो विषयस्तं परो नैष सिंहो नायमग्निरिति जानाति नैवमविद्यावानात्मनः संघातस्य च सत्यपि

शाङ्करभाष्यम् ।

नहि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवन् प्रामाण्यमुपैति यदि ब्रूयात् शीतोऽग्निरप्रकाशो वेति तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेः नतु प्रमाणान्तरविरुद्धं वा कर्मणो मिथ्याप्रत्ययवत् कर्तृकत्वात् कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत् न ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः कर्मविधिश्रुतिवत् ब्रह्मविधिश्रुतेरप्रामाण्यप्रसङ्ग इति चेन्न बाधकप्रत्ययानुपपत्तेर्यथा ब्रह्मविद्याविधिश्रुत्यात्मन्यवगते देहादिसङ्घातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मप्रतीतिर्न कदाचित् केनचित् कथञ्चिदपि बाधितुं शक्याफलाव्यतिरेकावगतेर्यथाग्निरुष्णः प्रकाशश्चेति नच कर्मविधिश्रुतेरप्रामाण्यं पूर्वापूर्वप्रवृत्तिनिरोधेनोत्तरापूर्वापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्यप्रवृत्त्युत्पा-

आनन्दगिरिकृतटीका ।

भेद सङ्घातस्यानात्मत्वं प्रत्येत्यतो न सङ्घातोऽहंशब्दप्रत्ययौ गौणावित्यर्थः सङ्घाते तयोर्गौणत्वे दोषान्तरं सञ्चिनोति तथेति तथा सत्यात्मनि कर्तृत्वादिप्रतिभासासिद्धिरिति शेषः गौणै कृतं न मुख्येन कृतमित्युदाहरणेन स्फुटयति नहीति यद्यपि देवदत्तमाणवकाभ्यां कृतं कार्यं मुख्याभ्यां सिंहाग्निभ्यां न क्रियते तथापि देवदत्तगतक्रौर्येण मुख्यसिंहस्य माणवकनिष्ठपैङ्गल्येन मुख्याग्निरिव च सङ्घातगतेनापि जडत्वेनात्मनो मुख्यस्य किञ्चित् कार्यं कृतं भविष्यतीत्याशङ्क्याह नचेति देहादावहंधियो गौणत्वायोगे हेत्वन्तरमाह स्तूयमानाविति देवदत्तमाणवकयोः सिंहाग्निभ्यां भेदधीपूर्वकं तद्व्यापारवत्त्वाभावधीवदात्मनोऽपि मुख्यस्य सङ्घाताद्भेदधीद्वारा तदीयव्यापाराहित्यमात्मनि दृष्टं स्यादित्यर्थः व्यावर्त्यं दर्शयति कः पुनरिति सङ्घातेऽहंधियो मिथ्याधीत्वमपि न तत्कृतमात्मनि कर्तृत्वं किन्त्वात्मा यज्ञानेच्छाप्रयत्नैरस्य कर्तृत्वं वास्तवमिति मतमनुवदति यन्नेति ज्ञानादिकृतमपि कर्तृत्वं मिथ्याधीकृतमेव ज्ञानं मिथ्याधीकार्यत्वादिति दूषयति न तेषामिति तदेव प्रपञ्चयति मिथ्येति मिथ्याज्ञानं निमित्तं कृत्वा किञ्चिदिष्टं किञ्चिदनिष्टमित्यारोप्य तद्द्वारानुभूते तस्मिन् प्रेषाजिहासाभ्यां क्रियां निर्वर्त्य तयेष्टमनिष्टफलं भुङ्क्ते तेन संस्कारेण तत्पूर्विकाः स्मृत्यादयः स्वात्मनि क्रियां कुर्वन्तीति युक्तं कर्तृत्वस्य च मिथ्यात्वमित्यर्थः अतीतानागतजन्मनोरिव वर्त्तमानेऽपि जन्मनि कर्तृत्वादिसंसारस्य वस्तुत्वमाशङ्क्याह यथेति विमतौ कालावविद्याकृतसंसारवन्तौ कालत्वाद्वर्त्तमानकालवदित्यर्थः संसारस्याविद्याकृतत्वे फलितमाह ततश्चेति संसाराविद्यकत्वेन विद्यापोह्यत्वेन विद्यापोह्यत्वे हेत्वन्तरमाह अविद्येति कुतोऽस्याविद्याकृतत्वं धर्माधर्मकृतत्वसम्भवादित्याशङ्क्याह देहादीति आत्मनो धर्मादिकर्तृत्वस्याविद्यकत्वाद्धा-

शाङ्करभाष्यम् ।

दनार्थत्वात् मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव स्यादयथानुवादानां विधिशेषाणां लोकेऽपि बालोन्मत्तादीनां पयआदि पाययितव्ये चडावर्द्धनाधिवचनं प्रकारान्तरस्थानाच्च साचादेव प्रामाण्यसिद्धिः प्रागात्मज्ञानात् देहाभिमानप्रत्यक्षादिप्रामाण्यवत् ।

यत्तु मन्यते स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति तदेव च मुख्यं कर्तृत्वमात्मनो यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि सन्निधानादेव जितः पराजितश्चेति तथा सेनापतिर्वा नैव करोति क्रियाफलसम्बन्धश्च राजा सेनापतेश्च दृष्टः यथाच ऋत्विक् कर्म यजमानस्य तथा देहादीनां कर्म आत्मकृतं स्यात् तत्फलस्यात्मगामित्वात् यथा वा भ्रामकस्य लोकभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथाचात्मन इति तदसदकुर्वतः कारकत्वप्रसङ्गात् कारकमनेकप्रकारमिति चेत्र राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् राजा तावत् स्वव्यापारेणापि युध्यते योधानां योधयितृत्वेन धनदानेन च मुख्यमेव कर्तृत्वं तथा जयपराजयफलोपभोगेन तथा यजमानस्यापि धनत्यागेन दक्षिणादानेन च मुख्यमेव कर्तृत्वं तस्मादव्यापृतस्य कर्तृत्वोपचारः यः स गौणः इत्यवगम्यते यदि मुख्यमन्यत् कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां तदा सन्निधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्पेत यथा भ्रामणेन न तथा राजयजमानादीनां स्वव्यापारो

आनन्दगिरिकृतटीका ।

विद्यां विना कर्मिणां देहाभिमानः सम्भवत्यतश्च आत्मनः संघातेऽहमभिमानस्याविद्यया विद्यमानतेत्यर्थः आत्मनो देहाद्यभिमानस्याविद्याकृतत्वमन्वयव्यतिरेकाभ्यां साधयन् व्यतिरेकं दर्शयति नह्नीति अन्वयं दर्शयन् व्यतिरेकमनुवदति अजानन्निति पुत्रे पितरहं धीरनात्मीये देहादावहंधीर्गौणीत्युक्तमनुवदति यत्त्विति तत्र दृष्टान्तश्रुतेर्गौणात्मविषयत्वमुक्तमङ्गीकरोति सत्त्विति तर्हि देहादावपि तथैव स्वकीये स्यादहं धीर्गौणीत्याशङ्क्याह गौणेनेति नहि स्वकीयेन पुत्रादिना गौणात्मना पितृभोजनादिकार्यं क्रियते तथा देहादेरपि गौणात्मत्वे

## शाङ्करभाष्यम् ।

नोपलभ्यते तस्मात् सन्निधिमात्रेणापि कर्त्तृत्वं गौणमेव तथा च सति तत्फलसम्बन्धोऽपि गौण एव स्यान्न गौणेन मुख्यं कार्य्यं निवर्त्त्यते तस्मादसदेवैतदीयते देहादीनां व्यापारेणाव्यापृत आत्मा कर्त्ता भोक्ता च स्यादिति भ्रान्तिनिमित्तन्तु सर्वमुपपद्यते यथास्वप्ने मायायाञ्चैवं नच देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्त्तृत्वभोक्तृत्वाद्यनर्थं उपलभ्यते तस्मात् भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमः न परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धं सर्वं गीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्त इह शास्त्रार्थदाढ्याय संक्षेपत उपसंहारं कृत्वाऽथेदान शास्त्रसम्प्रदायविधिमाह इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन संवध्यते तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्याञ्चिदप्यवस्थायां न वाच्यं भक्तस्तपस्वी अपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यं नच यो

### आनन्दगिरिकृतटीका ।

तेन कर्त्तृत्वादिकार्य्यमात्मनो न वास्तवं सिद्धमित्यर्थः गौनात्मना मुख्यात्मनो नास्ति वास्तवं कार्य्यमित्यत्र दृष्टान्तमाह गौणेति नहि गौणेन सिंहेन देवदत्तेन मुख्यहिंसकार्य्यं क्रियते नापि गौनाग्निना मानवकेन मुख्याग्निकार्य्यं दाहपाकादि तथा देहादिना गौणात्मना मुख्यात्मनो न वास्तवं कार्य्यं कर्त्तृत्वादि कर्त्तुं शक्यमित्यर्थः स्वर्गकामादि वा प्रामाण्यात् आत्मनो देहाद्यतिरेकज्ञानस्य च केवलस्याकर्त्तृत्वात्यत्कर्त्तव्यं कर्म गौणैरेव देहादावात्मभिः सम्पाद्यते नहि सत्येव श्रौतातिरेकज्ञाने देहादावात्मत्वमात्मनो मुख्यं युक्तमिति चोदयति अदृष्टेति न देहादीनामात्मत्वं गौणं तदीयात्मत्वस्याविद्यत्वेन सिद्धत्वादतो न गौणात्मभिरात्मकर्त्तव्यं कर्म क्रियते किन्तु मिथ्यात्मभिरिति परिहरति नाविद्येति तदेव विवृण्वन्नर्थं स्फुटयति गौण इति कथं तर्हि देहादिविषयात्मत्वप्रथेत्याशङ्क्याविद्याकृतेत्यादि हेतुं विभजते किं तर्हीति देहादिनामनात्मनामेव सतामात्मत्वं मिथ्याप्रत्ययकृतमित्यत्रान्वयव्यतिरेकमुदाहरति तद्भाव इति उक्ते न्याये शास्त्रीयसंस्कारशून्यानामनुभवं प्रमाणयति अविवेकिनामिति व्यतिरेकेऽपि दर्शिते शास्त्राभिज्ञानामनुभवकूलयति नत्विति अन्वयव्यतिरेकाभ्यामनुभवानुसारिभ्यां सिद्धमर्थमुपसंहृ-

## शाङ्करभाष्यम् ।

मां वासुदेवं प्राकृतं मनुष्यं मत्वा अभ्यसूयति आत्मप्रशंसादि दोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहते ऽसावप्ययोग्यस्तस्मा अपि न वाच्यं भगवत्यनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे गुरुशुश्रूषवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते तत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पदर्शनात् शुश्रूषान-

## आनन्दगिरिकृतटीका ।

इति तस्मादिति तत्कृत एव देहादावहंप्रत्यय इति शेषः किञ्च व्यवहारभूमौ भेदग्रहस्य गौणत्वव्यापकत्वात्तस्य प्रकृतेऽभावान्न देहादावहंशब्दप्रत्ययौ गौणावित्याह पृथगिति अदृष्टविषयचोदनाप्रामाण्यात् कर्तुरात्मनो व्यतिरेकावधारणात्तस्य देहादावहंममाभिमानस्य गौणतेत्युक्तमनुवदति यत्त्विति श्रुतिप्रामाण्यस्याज्ञातार्थविषयत्वात् मानान्तरसिद्धे व्यतिरिक्तात्मनि चोदनाप्रामाण्याभावान्न तदवष्टम्भेन देहादावात्माभिमानस्य गौणतेत्युत्तरमाह न तदिति श्रुतिप्रामाण्यस्यादृष्टविषयत्वं स्पष्टयति प्रत्यक्षादीति अज्ञातार्थज्ञापकं प्रमाणमिति स्थिते न ज्ञाते श्रुतिप्रामाण्यमित्याह अदृष्टेति अज्ञातसाध्यसाधनसम्बन्धबोधिनः शास्त्रस्यातिरिक्तात्मन्यौदासीन्ये फलितमाह तस्मादिति अन्वयव्यतिरेकाभ्यां दृष्टो मिथ्याज्ञाननिमित्तो देहादिसंघातोऽसंप्रत्ययस्तस्येति यावत् अन्यविषयत्वाच्चोदनाया नातिरिक्तात्मविषयतेत्युक्तमिदानीन्तद्विषयत्वाङ्गीकारेऽपि न तन्निर्णीद्भुं शक्यमध्यक्षविरोधादित्याह नहीति अपौरुषेयस्याः श्रुतेरसम्भावितदोषायाः मानान्तरविरोधेऽपि प्रामाण्यमप्रत्याख्येयमित्यभिप्रेत्याह यदीति स्वार्थं बोधयन्त्याः श्रुतेरविरोधापेक्षत्वाद्विरुद्धार्थवादित्वे तत्परिहाराय विवक्षितमर्थान्तरमविरुद्धं तस्याः स्वीकर्त्तव्यं विरोधे तत्प्रामाण्यानुपपत्तेरित्याह तथापीति अविरोधमवधार्य्य श्रुत्यर्थकल्पना न युक्तेति व्यावर्त्यमाह नन्विति अविद्यावत् कर्तृत्वं कर्म्मेति त्वयोपगमादुत्पन्नायां विद्यायामविद्याभावे तदधीनकर्तुरभावादन्तरेण कर्त्तारमनुष्ठानासिद्धौ कर्म्मकाण्डाप्रामाण्यमित्यध्ययनविधिविरोधः स्यादिति शंकते कर्म्मण इति कर्म्मकाण्डश्रुतेर्विद्योदयात् पूर्वं व्यवहारिकप्रामाण्यस्य तात्त्विकप्रामाण्याभावेऽपि सम्भवाद्ब्रह्मकाण्डश्रुतेश्च तात्विकप्रामाण्यस्य ब्रह्मविद्याजनकत्वेनोपपन्नाध्ययनविधिविरोध इति परिहरति न ब्रह्मेति कर्म्मकाण्डश्रुतेस्तात्त्विकप्रामाण्याभभावे ब्रह्मकाण्डश्रुतेरपि तदसिद्धिरविशेषादिति शंकते कर्मेति उत्पन्नाया ब्रह्मविद्याया बाधकाभावेन प्रमाणत्वात्तद्धेतुश्रुतेस्तात्त्विकं प्रामाण्यमिति दूषयति न बाधकेति ब्रह्मविद्याया बाधकानुपपत्तिं दृष्टान्तेन साधयति यथेति देहादिसङ्घातवदित्यपेरर्थः लौकिकावगतेरिवात्मावगतेरपि फलाव्यतिरेकमुदाहरणेन स्फोरयति यथेति फलमज्ञाननिवृत्तिः कर्मविधिश्रुतिवदित्युक्तं

## शाङ्करभाष्यम्

भियुक्ताय तपस्विने भक्ताय मेधाविने वा वाच्यं शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यं भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यं गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसंप्रदायविधिः ॥ ६७ ॥

### आनन्दगिरिकृतटीका।

दृष्टान्तं विघटयति नचेति अनादिकालप्रवृत्तस्वाभाविकप्रवृत्तिव्यक्तीनां प्रतिबन्धेन योगाद्यलौकिकप्रवृत्तिव्यक्तीर्जनयति कर्मकाण्डश्रुतिस्तज्जननश्च चित्तशुद्धिद्वारा प्रत्यगात्माभिमुख्यप्रवृत्तिमुत्पादयति तथाच कर्मविधिश्रुतीनां पारंपर्येण प्रत्यगात्मज्ञानार्थत्वात्तात्त्विकप्रामाण्यसिद्धिरित्यर्थः नन्वेवमपि श्रुतेर्मिथ्यात्वादाभासवदप्रामाण्यमिति चेन्नेत्याह मिथ्यात्वेऽपीति स्वरूपेणासत्यत्वेऽपि सत्योपेयद्वारा प्रामाण्यमित्यत्र दृष्टान्तमाह यथेति मन्त्रार्थवादेतिहासपुराणानां श्रुतेऽर्थे प्रामाण्याभावेऽपि शेषविध्यनुरोधेन प्रामाण्यवत् प्रकृतेऽपि श्रुतेः स्वरूपेणासत्याया विषयसत्यतया सत्यत्वङ्गतायाः प्रामाण्यमविरुद्धमित्यर्थः वाक्यस्य शेषविध्यनुरोधेन प्रामाण्यं नालौकिकमित्याह लोकेऽपीति कर्मकाण्डश्रुतीनामुक्तरीत्या परम्परया प्रामाण्यमपि साक्षात्प्रामाण्यमुपेक्षितमित्याशङ्क्याह प्रकारान्तरेति आत्मज्ञानोदयात् प्रागयस्याप्रकारान्तरं तत्र स्थितानां कर्मकाण्डश्रुतीनामज्ञातसम्बन्धबोधकत्वेन साक्षादेव प्रामाण्यमिष्टमित्यर्थः ज्ञानात् पूर्वं कर्मश्रुतीनां व्यावहारिकप्रामाण्ये दृष्टान्तमाह प्रागिति प्रतीचिकर्तृत्वस्याविद्यकत्वेऽपि श्रुतिप्रामाण्यमप्रत्यूहमित्युक्तं संप्रति कर्तृत्वस्य प्रकारान्तरेण पारमार्थिकत्वमुत्थापयति यत्त्विति स्वव्यापाराभावे सन्निधिमात्रेण कुतो मुख्यकर्तृत्वमित्याशंक्य दृष्टान्तमाह यथेति स्वयमयुध्यमानत्वे कथं तत्फलवत्त्वमित्याशङ्क्य प्रसिद्धिवशादित्याह जित इति कायिकव्यापाराभावेऽपि कर्तृत्वस्य मुख्यत्वे दृष्टान्तमाह सेनापतिभिरिति तस्यापि फलवत्त्वं राजवद्विशिष्टमित्याह क्रियेति अन्यकर्मणा अन्यस्य सन्निहितस्य मुख्ये कर्तृत्वे वैदिकमुदाहरणमाह यथा चेति कथमृत्विजां कर्म यजमानस्येत्याशङ्क्याह तत्फलस्येति स्वव्यापारादृते सन्निधेरेवान्यव्यापारहेतोर्मुख्यकर्तृत्वे दृष्टान्तमाह यथा चेति क्रियां कुर्वत्कारणं कारकमित्यंगीकारविरोधान्नैतदिति दूषयति तदसदिति कारकविशेषविषयत्वेनाङ्गीकारोपपत्तिरिति शंकते कारकमिति स्वव्यापारमन्तरेण न किञ्चिदपि कारकमिति परिहरति न राजेति दर्शनमेव विशदयति राजेति यथा राज्ञो युद्धे योधयितृत्वेन धनदानेन च मुख्यं कर्तृत्वं तथा फलभोगेऽपि मुख्यमेव तस्य कर्तृत्वमित्याह तथेति यदुक्तमृत्विक्कर्म यजमानस्येति तत्राह यजमानस्यापीति स्वव्यापारादेव मुख्यं कर्तृत्वमिति स्थिते फलितमाह तस्मादिति तदेव प्रपञ्चयति यदीति

आनन्दगिरिकृतटीका ।

तर्हि सन्निधानादेव मुख्यं कर्तृत्वं राजादीनामुपगतमिति नेत्याह न यथेति राजादीनां स्वव्यापारकत्वे पूर्वोक्तं सिद्धमित्याह तस्मादिति राजप्रभृतीनां सन्निधेरेव कर्तृत्वस्य मे,णत्वे जयादिफलवत्त्वस्यापि सिद्धं गौणत्वमित्याह तथाचेति तत्र पूर्वोक्तं हेतुत्वेन स्मारयति नेति अन्यव्यापारेणात्मस्य मुख्यकर्तृत्वाभावे फलितमुपसंहरति तस्मादिति कथं तर्हि त्वयात्मनि कर्तृत्वादि स्वीकृतं नहि बुद्धेस्तदिष्टं कर्ता शास्त्रार्थवत्त्वादिति न्यायात्तत्राह भ्रान्तीति कर्तृत्वाद्यात्मनि भ्रान्तमित्येतदुदाहरणेन स्फोरयति यथेति मिथ्याज्ञानकृतमात्मनि कर्तृत्वादीत्यत्र व्यतिरेकं दर्शयति नचेति उक्तव्यतिरेके फलं कथयति तस्मादिति संसारभ्रमस्याविद्याकृतत्वे सिद्धे परमप्रकृतमुपसंहरति इति सम्यगिति शास्त्रतात्पर्यार्थं विचारद्वारा निर्द्धार्यानन्तरश्लोकमवतारयति सर्वमिति प्रकृते त्वष्टादशाध्याये गीताशास्त्रार्थं सर्वं प्रतिपत्तिसौकर्यार्थमुपसंहृत्यानन्ते च सर्वधर्मान् परित्यज्येत्यादौ विषयतस्तस्य संक्षेपेणोपसंहारं कृत्वा संप्रदायविधिवचनस्यावसरे सतीदानीमिति योजना किमिति विस्तरेणोपसंहृतः शास्त्रार्थः संक्षिप्योपसंह्रियते तत्राह शास्त्रार्थेति संक्षेपविस्ताराभ्यामुक्तोऽर्थे सर्वेषां दृढतया बुद्धिमधिरोहतीत्यर्थः हितायेत्येतदेव व्याचष्टे संसारेति कदाचनेति सर्वैः संबध्यते प्रतिषेधसामर्थ्यसिद्धमर्थं कथयति भगवतीति अर्थसिद्धेऽर्थे सूत्त्वनन्तरमनुक्त्वा मेधाविनमन्तर्भावयति तत्रेति विकल्पदर्शनात्तेषु मेधावित्वमपि प्रविशतीत्यर्थः विकल्पपक्षे कथमधिकारिप्रतिपत्तिरिति तत्राह शुश्रूषेति ताभ्यां युक्ताय भगवत्यसूयारहिताय तपस्विने वाच्यमिति सम्बन्धः तद्युक्ताय शुश्रूषाभक्तियुक्ताय भगवति अनसूयासहितायेत्यर्थः तपस्वित्वं मेधावित्वं वा निरपेक्षमधिकारिविशेषणमिति शङ्कां शातयति शुश्रूषवेति भगवद्विषयाऽसूयाराहित्यतात्पर्यं सूचयति भगवतीति कस्मै तर्हि वाच्यमेतदित्याशङ्क्य पूर्वोक्त सर्वगुणसम्पन्नायेत्याह गुरुशुश्रूषेति अनुक्ततरविशेषणोपलक्षणार्थमुभयग्रहणं मेधाविनस्तपस्वित्वं नातीवापेक्ष्यते सर्वमन्यदधिकारिभावादपेक्षितमेवेति भावः ॥ ६७ ॥

स्वामिकृतटीका ।

एवं गीतार्थतत्त्वमुपदिश्य तत्सम्प्रदायप्रवर्त्तने नियममाह इदमिति इदं गीतार्थतत्त्वं ते त्वया अतपस्काय धर्मानुष्ठानहीनाय न वाच्यं नचाभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचिदपि वाच्यं नचाशुश्रूषवे परिचर्य्यामकुर्वते वाच्यं मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

भाषा अनुवाद ।

इस प्रकार से श्रीभगवत्गीताका तत्त्व अर्थ उपदेशकर अब गीता को संप्रादाय रूप प्रवर्त्तन करने में अर्थात् दुसरे को उपदेश देने मे नियम

## य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
## भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

### शाङ्करभाष्यम् ।

सम्प्रदायस्य कर्त्तुः फलमिदानीमाह य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः सम्वादरूपं ग्रन्थं गुह्यं गुप्यतमं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः यथा त्वयि मया भक्तेः पुनर्ग्रहणात् भक्तिमात्रेण केवलेन शास्त्रसम्प्रदाने पात्रम्भवतीति गम्यते कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोरच्युतस्य शुश्रूषा मया क्रियत इत्येवं कृत्वेत्यर्थः तस्येदं फलं मामेवैष्यति मुच्यत एवात्र संशयो न कर्त्तव्यः ॥ ६८ ॥

### आनन्दगिरिकृतटीका ।

शास्त्रसम्प्रदायप्रवृत्त्यर्थमुत्तरश्लोकप्रवृत्तिं दर्शयति सम्प्रदायेति य इत्यध्यायको निर्दिश्यते परमत्वं ग्रन्थस्य निरतिशयपुरुषार्थसाधनत्वमित्याह परममिति गोप्यत्वमस्य रहस्यार्थविषयत्वाद्यथोक्तसंवादस्य ग्रन्थतोऽर्थतश्च भक्तेषु स्थापने दृष्टान्तमाह यथेति मयि वासुदेवे भगवति अनन्यभक्ते त्वयि यथा मया ग्रन्थोऽर्थतः स्थापितस्तथा मद्भक्तेष्वन्येष्वपि यो ग्रन्थमिमं स्थापयिष्यति तस्येदं फलमित्युत्तरत्र सम्बन्धः नाभक्तायेति भक्तेरधिकारिविशेषणत्वोक्तेर्मद्भक्तेष्विति पुनर्भक्तिग्रहणमनर्थकमित्याशङ्क्याह भक्तेरिति

### भाषा अनुवाद ।

कहते हैं कि हे अर्जुन इसगीतार्थ के तत्त्व को तुम अतपस्क कहे स्वधर्मअनुष्ठानरहित मनुष्यसे न कहना औ न कभी अभक्त कहे ईश्वर गुरू तथा ब्राह्मणकी भक्तिविहीनको कहना औ अशुश्रूषु अर्थात् ब्राह्मण गुरु तथा ईश्वरकी शुश्रूषा सेवा जो नहीं करता अथवा गीताश्रवण करने की जिसको अनिच्छा होय ऐसे मनुष्योंको भी कभी न कहियो और जो परमेश्वर स्वरूप हमारे मे मनुष्य बुद्धि लायकर दोष आरोप करता हुआ निन्दा करै उसको भी न कहना यह तुम से हम प्रत्यपकार चाहते हैं ॥ ६७ ॥

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

## शाङ्करभाष्यम्।

किञ्च न च तस्माच्छास्त्रसम्प्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत्तमोऽन्यः प्रियकृत्तमो नास्त्येवेत्यर्थः वर्त्तमानेषु भविता न च भविष्यत्यपि काले तस्मात् द्वितीयोऽन्यः प्रियकृत्तरो भुवि लोकेऽस्मिन् भविता ॥ ६९ ॥

### आनन्दगिरिकृतटीका।

शुश्रूषादि सहकारिराहित्यं केवलशब्दार्थो यद्यपि मात्रशब्देन सूचितमेतत्तथापीतरेण स्फुटीकृतमिति विशेषः प्रश्नपूर्वकमभिधानप्रकारमभिनयति कथमित्यादिना भगवति भक्तिकरणप्रकारं प्रकटयति भगवत इति यच्छब्दापेक्षितं पूरयति तस्येति मामेवैष्यत्येवेत्यन्वयं गृहीत्वा व्याचष्टे मुच्यत एवेति ॥ ६८ ॥

ननु सर्वेषां मुक्तिसाधनानां ध्यानस्य श्रेष्ठत्वात्तन्निष्ठस्य मुमुक्षोर्नास्ति विद्यासम्प्रदाने प्रवृत्तिरिति तत्राह किञ्चेति इतश्च विद्यासम्प्रदानं मुमुक्षुणा यथोक्तविशेषणवता कर्त्तव्यमित्यर्थः वर्त्तमानेषु मध्ये त्वत्तोऽन्यो भाष्येण प्रियकृत्तमो नाप्यतीतेषु तादृक् कश्चिदासीदिति शेषः तस्माद्विद्यासम्प्रदायकर्त्तुः सकाशादित्यर्थः ध्याननिष्ठस्य श्रेष्ठत्वेऽपि स्वसम्प्रदायप्रवक्तुः श्रेष्ठतमत्वादुचिता विद्या सम्प्रदाने प्रवृत्तिरिति भावः ॥ ६९ ॥

### स्वामिकृतटीका।

एतैर्दोषैर्रहितेभ्यो गीताशास्त्रोपदेष्टुः फलमाह य इममिति मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति स मयि परां भक्तिं करोति ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥

## भाषा अनुवाद।

पूर्व कहे हुये सब दोषों से वर्जित भक्त जनों को गीतार्थ के उपदेश करने वाले पुरुष का फल कहते हैं कि जो यह परम गुह्य गीतार्थ का उपदेश मेरे भक्तों को करैगा सो मनुष्य मेरी पर कहे उत्तम भक्तिकारी होगा और तदनन्तर सो मनुष्य सर्व संशय से रहित हो हमको प्राप्त होगा हे अर्जुन यह सत्य सत्य तुम जानो ॥ ६८ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

## शाङ्करभाष्यम् ।

योऽपि अध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थमावयोः तेनेदं कृतं स्यात् ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसयज्ञाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते फलविधिरेव वा देवतादिविषयज्ञानयज्ञफलतुल्यमस्य फलम्भवतीति तेनाध्ययनेनाहमिष्टः पूजितः स्यामवेयमिति मे मम मतिर्निश्चयः ॥ ७० ॥

### आनन्दगिरिकृतटीका ।

सम्प्रदायप्रवक्तुः सर्वाधिकं फलं स वक्ता सम्प्रदायप्रवक्ता सर्वाधिकं फलं स वक्ता विष्णुरित्युक्तो न स विश्वाधिदैवतमिति न्यायेनोक्ता संप्रत्ययहेतुर्निवक्षितं फलमाह यो-ऽपीति यथोक्तस्य शास्त्रस्य योऽप्यध्येता तेनेदं कृतं स्यादिति सम्बन्धः तदेवाह अध्येष्यत इति तेनेदं कृतमित्यत्रेदं शब्दार्थं विशदयति ज्ञानेति तेनाहमिष्टः स्यामिति सम्बन्धः चतुर्विधानां यज्ञानां मध्ये ज्ञानयज्ञस्य श्रेयान् द्रव्यमयाद् यज्ञाद् ज्ञानयज्ञ इति विशिष्टत्वाभिधानात्तेनाहमिष्टः स्यामित्यध्ययनस्य स्तुतिरभिमतेत्याह विधीति पक्षान्तरमाह फलेति फलविधिमेवं प्रकटयति देवतादीति यद्विज्ञानयज्ञस्य फलं कैवल्यत्वेन तुल्यमस्या-

### स्वामिकृतटीका ।

किञ्च नचेति तस्मान्मद्भक्तेभ्यो गीताशास्त्रव्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्त्ता नास्ति नच कालान्तरे भविष्यति ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति नच कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥

## भाषानुवाद ।

तिससे हे अर्जुन उपदेशकरने औ संप्रदाय चलानेवाले मनुष्यों के मध्यमे मेरा भक्त गीता का उपदेश कारी जो है उसके समान और कोई भी नहीं मेरा अत्यन्त परितोष करनेवाला है औ न होगा और पृथिवी मे उससे अधिक प्रिय हमारे और कोई नहीं है न होगा ॥ ६९ ॥

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः।**
**सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१ ॥**

### शाङ्करभाष्यम्।

अथ श्रोतुरिदं फलं श्रद्धावान् श्रद्दधानोऽनसूयश्चासूयावर्जितः सन् इमं ग्रन्थं शृणुयादपि यो नरोऽपिशब्दात् किमर्थज्ञानवान् सोऽपि पापान्मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्यकर्मिणामग्निहोत्रादिकर्मवतां ॥ ७१ ॥

### आनन्दगिरिकृतटीका।

ध्येतुः सम्पद्यते तच्च देवताद्यात्मत्वमित्यर्थः कथमध्ययनादेव सर्वात्मकं फलं लभ्यते तस्मात्तत् सर्वमभवदिति श्रुतिस्तत्राह तेनेति तेनाध्येत्रा ज्ञानयज्ञतुल्येनाध्ययनेन भगवानिष्टस्तथा च तत् ज्ञानादुक्तं फलमविरुद्धमित्यर्थः ॥ ७० ॥

### स्वामिकृतटीका।

पठतः फलमाह अध्येष्यत इति आवयोः श्रीकृष्णार्जुनयोरिमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मे मतिः यद्यप्यसौ गीतार्थमबुध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवाऽसौ प्रकाशयतीति बुद्धिर्भवति यथा लोके यदृच्छयापि यदा कश्चित् कस्यचिन्नाम गृह्णाति तदाऽसौ मामाह्वयतीति मत्वा तत्पार्श्वमागच्छति तथाहमपि सन्निहितो भवेयं अतो यथा अजामिलस्तत्र बन्धुप्रमुखानां कथञ्चिन्नामोच्चारणमात्रेण प्रसन्नोऽस्मि तथैव तस्यापि प्रसन्नो भवेयमिति भावः ॥ ७० ॥

### भाषा अनुवाद।

अब गीता पाठ करने का फल कहते हैं कि जो मनुष्य हमारा औ तुम्हारा यह धर्मयुक्त संवाद नियम से पाठ करैगा सो पुरुष समस्त यज्ञों में श्रेष्ठ ज्ञानयज्ञ से हमारा पूजन कर चुका यह मेरी निश्चित बुद्धि है भावार्थ यह कि जो अर्थ न जानि के भी जपके समान गीता पढ़े तो उसके श्रोता हम उसपर प्रसन्न होते हैं ज्ञान अज्ञान किसी तरह हमको स्मरण करै हम उसके निकट जायंगे जैसे अजामिल औ व्याध आदिकोंके निकट हम गये हैं ॥ ७० ॥

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।**
**कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय॥ ७२॥**

### शाङ्करभाष्यम्।

शिष्यस्य शास्त्रार्थग्रहणविवेकबुभुत्सया पृच्छति तद्ग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापि इति प्रष्टुरभिप्रायो यत्नान्तरमास्थाय शिष्यः

### आनन्दगिरिकृतटीका।

प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति अथेति आचार्य्येण शिष्याय यावदज्ञानसंशयविपर्य्यासं तावदनेकधोपदेष्टव्यमिति दर्शयितुं भगवानर्जुनं प्रति पृष्टवानित्याह शिष्यस्येति प्रष्टुरभिप्रायं प्रकटयति तद्ग्रहणे इति शिष्यश्चेदुक्तं गृह्णीतु नेष्टे तर्हि तं प्रत्यौदासीन्यमाचार्य्यस्योचितं तस्य मन्दबुद्धित्वादित्याशङ्क्याह यत्नान्तरमिति कच्चिदिति कोमलप्रश्ने तमेव व्याचष्टे किमेतदिति द्वितीयं किं पदं पूर्वस्य व्याख्यानतया सम्बध्यते कच्चिदिति द्वितीयं प्रश्नं विभजते किं प्रश्न इति मोहप्रणाशस्य प्रसङ्गं दर्शयति यदर्थ इति॥ ७२॥

### श्रीधरकृतटीका।

अन्यस्य जपतो योऽन्यः शृणोति तस्यापि फलमाह श्रद्धावानिति यो नरः श्रद्धायुक्तः केवलं शृणुयादपि श्रद्धावानपि यः कश्चित् किमर्थमयमुच्चैर्जपति अबद्धं वा जपतीति दोषदृष्टिं करोति तद्व्यावृत्त्यर्थमाह अनसूयश्चासूयारहितो यः शृणुयात् सोऽपि सर्वैः पापैर्मुक्तः सन्नश्वमेधादिपुण्यकृतां लोकान् प्राप्नुयात्॥ ७१॥

### भाषा अनुवाद।

अब गीता श्रवण करने का फल कहते हैं कि जो कोई मनुष्य श्रद्धा कहे विश्वास युक्त हो केवल गीता पाठ श्रवण करै औ अनसूय कहे यह मनुष्य क्यों चिल्लाय कर पढता है अथवा अशुद्ध निकले तो उसे टोकैं ऐसे दोष न देखैं ऐसे मनुष्य तावत् सकल पाप से मुक्त हो अश्वमेध यज्ञ आदि कर्म करनेवाले जो लोक पावते हैं येभी उसी लोकको प्राप्त होंगे और जो अर्थयुक्त अति प्रीति पूर्वक श्रवण करैं तो वे जीवन्मुक्त हैं औ अन्तको साक्षात् ब्रह्मस्वरूप होयंगे इस मे कुछ सन्देह नहीं है॥ ७१॥

## अर्जुन उवाच ।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

### शाङ्करभाष्यम् ।

कृतार्थः कर्त्तव्य इत्याचार्यधर्मः प्रदर्शितो भवति कच्चित् किमेतत् मयोक्तं श्रुतं श्रवणेनावधारितं पार्थ किं त्वया एकाग्रेण चेतसा एकचित्तेन किंवा प्रमादितं कच्चिदज्ञानसम्मोहोऽज्ञाननिमित्तः सम्मोहो वैचित्त्यभावोऽविवेकतास्वाभाविकः किं प्रनष्टो यदर्थोऽयं शास्त्रश्रवणायासस्तव मम चोपदेष्टृत्वायासः प्रवृत्तिस्ते तुभ्यं धनञ्जय ॥ ७२ ॥

अर्जुनउवाच नष्टमोहोऽज्ञानजं तमः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः स्मृतिश्चात्मतत्त्वविषया लब्धा यस्या लाभात् सर्वग्रन्थीनां विप्रमोक्षः त्वत्प्रसादात्तव प्रसादान्मया त्वत्प्रसादमाश्रितेनाऽच्युत अनेन मोहनाश-

### आनन्दगिरिकृतटीका ।

प्रमोपदिष्टात्मज्ञानस्य अज्ञानसन्देहविपर्य्ययरहितस्य हेतोः भगवदनुग्रहप्राप्तिकथनेन भगवन्तं परितोषयिष्यन्नर्जुनो विज्ञापितवानित्याह अर्जुन इति अज्ञानोत्थस्याविवेकस्य

### स्वामिकृतटीका ।

सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह कच्चिदिति कच्चिदिति प्रश्नार्थे अज्ञान सम्मोहस्त्वत्ताज्ञानकृतो विपर्ययः सष्टमभवत् ॥ ७२ ॥

### भाषा अनुवाद ।

जो सम्यक्प्रकार बोध न भयाहो तो हम फेरभी तुमको उपदेश करैंगे इस आशयसे भगवान् पूछते हैं कि हे पार्थ अर्जुन कहो तो मैंने जो कहा सो सब एकाग्रचित्त हो तुमने शुना औ हे धनञ्जय संमोह कहे तत्त्वज्ञान के विषय मे अज्ञानजनित तुमारी विपरीत बुद्धि नष्ट भई कि नहीं अर्थात् मेरे वचनो से अज्ञान दूर भया कि नहीं यहो भगवान्ने पूछा ॥ ७२ ॥

## शाङ्करभाष्यम्

प्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवतीति यदुक्ताज्ञाऽनसम्मोहनाश आत्मस्मृतिः लाभश्चेति तथाच श्रुतावनात्मवित् शोचामीति उपन्यस्यात्मज्ञाने सर्वग्रन्थिविप्रमोक्षो भिद्यते हृदयग्रन्थिस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति च मन्त्रवर्णः अथेदानीं त्वच्छा-सने स्थितोऽस्मि गतसन्देहो मुक्तसंशयः करिष्ये वचनन्तवाहं त्वत्प्रसादात् कृतार्थो न मे कर्त्तव्यमस्तीत्यभिप्रायः ॥ ७३ ॥

### आनन्दगिरिकृतटीका।

नष्टत्वमेव स्पष्टयति समस्त इति स्वयं ज्योतिषि प्रतीचि मज्ञानविद्याभ्रमं विघातयति नाविदितं प्रकाशयतीति मत्वाह स्मृतिश्चेति स्मृतिलाभे किं स्यादिति चेत्तदाह यस्या इति मोहनाशे स्मृतिप्रतिलम्भे वाऽश्राधारश्वकारणमाह त्वत्प्रसादादिति प्रकृतेन प्रश्नप्रति-वचनेन लब्धमर्थं कथयति अनेनेति यदुक्तं स्मृतिप्रतिलंभादशेषतो हृदयग्रन्थीनां विप्र-मोक्षः स्यादिति तत्र प्रमाणमाह तथाचेति ज्ञानादज्ञानतत्कार्यनिवृत्तौ श्रुत्यन्तरमपि संवादयति भिद्यत इति भगवदनुग्रहादज्ञानकृतमोहहानन्दनन्तरमात्मज्ञाने प्रतिलब्धे त्वदाज्ञाप्रतीतोऽहमित्युत्तरार्द्धं व्याकरोति अथेति तव वचनं करिष्येहमित्यत्र तात्पर्यमाह अहमिति ॥ ७३ ॥

### स्वामिकृतटीका।

कृतार्थः सन्नर्जुन उवाच। नष्टो मोह इति आत्मविषयो मोहो नष्टः यतोऽह-मस्मीति स्वरूपानुसन्धानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा अतः स्थितोऽस्मि गतोऽधर्म-विषयः सन्देहो यस्य सोऽहं तवाज्ञां करिष्यामीति ॥ ७३ ॥

### भाषा अनुवाद।

तबतो भगवत् की वाणी से परम कृतार्थ हो अर्जुन कहने लगे कि हे अच्युत श्रीकृष्ण आपकी कृपासे अब मेरा आत्मज्ञान के विषय में मोह नष्ट होगया और स्मृति जो ज्ञान सो प्राप्तभया औ आत्मस्वरूप के अनुसन्धान में चित्तकी स्थिति भई अर्थात् आत्मस्वरूप का ज्ञान प्रकाश भया औ धर्म के विषय में संदेह मेरे चित्त से चली गई ऐसा जो मैहूं सो अब आपकी आज्ञा प्रतिपालन करूंगा और युद्धकरने के लिये तयार

## सञ्जय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं लोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥ ७५

### शाङ्करभाष्यम् ।

परिसमाप्तः सकलाम्नायशास्त्रार्थोऽथेदानीं कथासम्बन्धप्रदर्शनार्थं सञ्जय उवाच इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानास्मि अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरं ॥ ७४ ॥

### आनन्दगिरिकृतटीका ।

शास्त्रार्थे समाप्ते सत्यस्यामवस्थायां सञ्जयवचनं कुतोपयुक्तमिति तदाह परिसमाप्त इति वासुदेवस्य सर्वज्ञस्य सर्वेश्वरस्य कृतार्थस्य पार्थस्य पृथासुतस्यार्जुनस्य महात्मनोऽक्षुद्रबुद्धेः सर्वाधिकारिगुणसम्पन्नस्य सम्यग्वादं संवादं गुरुशिष्यभावेन प्रश्नप्रतिवचनाभिधानमिममतिक्रान्तमद्भुतं विस्मयकरं रोमाणि हर्षन्ति पुलका भवन्त्यनेनेति रोमहर्षणमाह्लादकरं यथोक्तं श्रुतवानस्मीत्याह इत्येवमिति ॥ ७४ ॥

### स्वामीकृतटीका ।

तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसन्धानः सञ्जय उवाच इत्यहमिति लोमहर्षणं लोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

### भाषा अनुवाद ।

खड़ा हूं जो आज्ञा होय सो करूं यह अर्जुनने सावधान हो श्रीभगवान् से कहा ॥ ७३ ॥ सोई श्रीकृष्ण अर्जुनका संवाद राजा धृतराष्ट्र से सञ्जय कहते हैं कि महात्मा वासुदेव औ अर्जुन का यह अद्भुत संवाद रोमाञ्च करने वाला मैने जो सुना सो आपको ज्योंकातों कह सुनाया है ॥ ७४ ॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतं।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः॥ ७६॥

शाङ्करभाष्यम्।

तच्चेमं श्रीकृष्णार्जुनसम्वादं व्यासप्रसादात्ततो दिव्यचक्षुर्लाभात् श्रुतवान् ज्ञातवानेतं संवादं गुह्यमहं परं योगं योगार्थत्वात् ग्रन्थोऽपि योगस्तं संवादमिमं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयं न परम्परातः॥ ७५॥

हे राजन् धृतराष्ट्र संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणं॥ ७६॥

आनन्दगिरिकृतटीका।

प्रकृष्टं संवादं कथमश्रौषीरिति चेत्तत्राह तच्चेति एतद् पदं संवादपरत्वात्तल्लिङ्गत्वेन नेतव्यमित्याह एतमिति परमपुरुषार्थौपयिकत्वात् परत्वं परं गुह्यमतिशयेन गुह्यं रहस्यमिति वा योगो ज्ञानं कर्म च तदर्थत्वादयं संवादो योगः उक्तः अथवा चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वादयं संवादयोग इत्याह संवादमिति योगानामीश्वरो योगेश्वरस्तदनुष्ठानहेतुत्वाद्योगतत्फलयोः ततः साक्षादव्यवधानेन श्रुतवान् न परम्परयेत्याह योगेश्वरादिति स्वयं स्वं न परमेश्वरैश्वर्यातिरस्कृतज्ञानैश्वर्य्यरूपेण कथयतो व्याचक्षाणादित्यर्थः॥ ७५॥

यथोक्तं संवादं भगवतः श्रुत्वा किमुपेक्ष्यसे नेत्याह राजन्निति पुण्यत्वं साधयति श्रवणादपीति॥ ७६॥

स्वामिकृतटीका।

आत्मनस्तस्य श्रवणे सम्भावनामाह व्यासप्रसादादिति भगवता व्यासेन दिव्यं चक्षुः श्रोत्रादि मह्यं दत्तं ततो व्यासस्य प्रसादादेतच्छ्रुतवानस्मि किं तदित्यपेक्षायामाह परं योगं परावमार्जनकरोति योगेश्वरात् श्रीकृष्णात् स्वयमेव साक्षात् कथयतः श्रुतवानिति॥ ७५॥

भाषा अनुवाद।

अब सञ्जय यह वृत्तान्त अपने श्रवण करने का समाचार कहते हैं कि भगवान् व्यासदेवने हमको दिव्यचक्षु औ कान दिया है कि उनकी कृपासे परम योगरूप जो परम गुह्य अर्जुन के प्रति साक्षात् योगमाया के ईश्वर श्रीकृष्णने आप कहा सो मैंने श्रवण किया सोई अब आपसे कहा॥ ७५॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्री महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षयोगो नाम अष्टादशोऽध्यायः ॥ १८ ॥

### शाङ्करभाष्यम् ।

तच्च संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन् हृष्यामि च पुनः पुनः ॥ ७७ ॥

### आनन्दगिरिकृतटीका ।

यत्तु विश्वरूपाख्यं रूपं सगुणमर्जुनाय भगवान् दर्शितवान् ध्यानार्थं तदिदानीं स्तौति तच्चेति ॥ ७७ ॥ द्वयोरपि कृष्णार्जुनयोः नरनारायणयोः संवादस्य शास्त्रत्वार्थं मरमुत्कर्षं दर्शयति किं बहुनेति कथं सर्वेषां योगानामीश्वरो भगवानिति तत्राह

### स्वामिकृतटीका ।

किञ्च राजन्निति हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा स्पष्टमन्यत् ॥७६॥
किञ्च तच्चेति विश्वरूपं निर्दिशति स्पष्टमन्यत् ॥ ७७ ॥

### भाषा अनुवाद ।

सो हे महाराज धृतराष्ट्र यह परम पवित्र केशव श्री अर्जुनका अद्भुत संवाद स्मरण करके मै वारवार हर्षित होता हुं अथवा वारवार मेरे रोम खडे होते हैं ॥ ७६ ॥

और तत् शब्द से भगवान् के विश्वरूप का निर्देश करते अर्थात् कहते हैं कि हे महाराज हरि श्रीकृष्ण के उस अद्भुत विश्वरूप का स्मरण

शाङ्करभाष्यम्।

किं बहुना यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभवत्वात् सर्वयोगबीजस्य कृष्णो यत्र पार्थो यस्मिन् पक्षे धनुर्द्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन् पाण्डवानां पक्षे विजयस्तत्रैव भूतिः श्रियो विशेषविस्तारो भूतिर्ध्रुवाऽव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति॥ ७८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंस परिव्राजकाचार्यस्य श्रीमच्छङ्करभगवतः कृतौ गीताभाष्येऽष्टादशोऽध्यायः॥ १८॥

आनन्दगिरिकृतटीका।

तत्प्रभवत्वादिति सर्वयोगो ज्ञानं कर्म च तस्य बीजं शास्त्रीयं ज्ञानवैराग्यादि तद्धि भगवदधीनं तदनुग्रहविहीनस्य तदयोगादतो योगतत्फलयोर्भगवदनुग्रहाय तत्त्वाद्भगवतो योगेश्वरत्वमित्यर्थः श्रीर्लक्ष्मीर्विजयः परम उत्कर्षः राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु जयप्राप्तिमैकान्तिकीमुपसंहरति इत्येवमिति उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठापरम्परया ज्ञाननिष्ठाहेतुः ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्त्तुमिनीत्युक्तम्॥ काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम्। आदिमध्यान्तषट्केषु व्याख्यया गोचरीकृतम्॥ संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः। सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवेचितः॥ गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्गतं श्रीकण्ठापरनामव न्मुनिकृतं निष्ठाद्वयद्योति तं निष्ठा यत्र मतिप्रसादजननी साक्षात्कृतं कुर्वती मोक्षे पर्यवसास्यति प्रतिदिनं सेव्यमेतद् बुधाः॥ प्राचामाचार्यपादानां पदवीमनुगच्छता गीताभाष्ये कृता टीका टीका तां पुरुषोत्तमम्॥ ७८॥

इति श्रीमत् परमहंसपरिव्राजकाचार्य्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरिविरचिते श्रीमत्गीताभाष्यविवेचनेऽष्टादशोऽध्यायः॥ १८॥

स्वामिकृतटीका।

अतस्त्वं पुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह यत्रेति यत्र येषां पक्षे योगानामीश्वरः श्रीकृष्णो वर्त्तते यत्र च पार्थो गाण्डीवधनुर्द्धरस्तत्रैव श्री राज्यलक्ष्मीस्तत्रैव च विजयस्तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिः नीतिर्न्यायोऽपि तत्रैव ध्रुवा नीतिः मम मति-

भाषा अनुवाद।

करके हमको अत्यन्त विस्मय होती है अर्थात् आश्चर्य होता है और बारंबार रोमांच भी होता है॥ ७७॥

स्वामिकृतटीका।

निश्चय: अत इदानीमपि तावत् सपुत्रस्त्वं श्रीकृष्णशरणमुपेत्य पाण्डवान् प्रसाद्य सर्वस्वं तेभ्यो निवेद्य पुत्रप्राणरक्षां कुर्विति भाव: भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधत: सुखं बन्धविमुक्ति: स्यादिति गीतार्थसंग्रह: तथाहि पुरुष: स पर: पार्थ भक्त्या लभ्यस्त्वनन्यया भक्त्या त्वनन्यया शक्यमहमेवंविधो र्जुन इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकतमत्वश्रवणात्-देकान्तभक्तिरेव मत्प्रसादोत्थज्ञानावान्तरव्यापारयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते ज्ञानस्य च भक्त्यावान्तरव्यापारत्वमेव तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं ददामि बुद्धियोगं तं येन मामुपयान्ति ते मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते इत्यादिवचनात् नच ज्ञानमेव भक्ति-रितियुक्तं सम: सर्वेषु भूतेषु मद्भक्तिं लभते परां। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत:॥ इत्यादौ भेददर्शनात् नचैवं सति तमेव विदित्वाऽतिमृत्युमेति नान्य: पन्था विद्यतेऽनायेति श्रुतिविरोध: शङ्कनीय: भक्त्यवान्तरव्यापारत्वात् ज्ञानस्य नहि काष्ठै: पचतीत्युक्तेऽनलादिनानासाधकत्वमुक्तं भवति किञ्च यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्था: प्रकाशन्ते महात्मन: देहान्ते देव: परंब्रह्मतारकं व्याचष्टे यमेवैष वृणुते तेन लभ्य इत्यादि श्रुतिस्मृति पुराणवचनान्येवं सति समञ्जसानि भवन्ति तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धं तेनैव दत्तया मत्या तद्गीताविवृति: कृता। स एव परमानन्दस्तया प्रीणातु माधव: परमानन्दश्रीपादरज:श्रीधारिणाधुना श्रीधरस्वामि-यतिना कृता गीता सुबोधिनी॥ स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतां तदन्तर्गतं तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरत्न-मेणीनावर्त्तेषु न किं निमज्जति जन: सत्कर्णधारं विना॥ ७८॥

इति श्रीधरस्वामियतिकृतायां श्रीमद्भगवद्गीताटीकायां सुबोधिन्यां परमार्थनिर्णयो नामाष्टादशोऽध्याय:॥ १८॥ सम्वत् १९४१

## भाषा अनुवाद।

इससे हे महाराज अब तुम अपने पुत्रों के राज्यलाभ की शंकाको परित्याग करो इस आशयपर सञ्जय कहते हैं कि जिसके पक्षपर योगेश्वर श्रीकृष्णजी वर्त्तमान हैं और जहां गांडीव धनुर्द्धारी अर्जुन तयार हैं तहांई श्री कहे राज्यलक्ष्मी श्री विजय तथा भूति कहे उत्तर उत्तर अभिवृद्धि कहे बढती श्री नीति जो न्याय सो सब निश्चय से है ऐसी मेरी मति है इससे अब तुम पुत्रों को साथले श्रीकृष्णजी की शरण मे जाय

भाषा अनुवाद।

कर पाण्डवोंको अपना सर्वस्व दे प्रसन्न करावते हुये अपने पुत्रोंकी प्राण-रक्षा मात्र करो यह सञ्जयने धृतराष्ट्रसे कहा ॥ ७८ ॥ संवत् १९४१ श्रावण

इति श्रीजगन्नाथ शुक्ल विरचित मनभावनी नाम
भाषाटीकायां अष्टादशोऽध्यायः ॥ १८ ॥
सरस्वती यन्त्रे यन्त्रिता समाप्ता चेयं श्रीमद्भगवद्गीता।

